# माधवीया धातुवृत्तिः

सम्पादकः

**स्वामी द्वारिकादासशास्त्री**

# THE MĀDHAVĪYĀ DHĀTUVṚITI

[ *A treatise on Sanskrit Roots based on the Dhātupāṭha of Pāṇini* ]

BY

**SĀYAṆĀCĀRYA**

*Edited by*

Swami DWARIKADAS SHASTRI

*Vyākaraṇa-Pālisāhitya-Bauddhadarśnācārya*

**TARA BOOK AGENCY**

KAMACHHA, VARANASI

**1983**

श्रीसायणाचार्यविरचिता

# माधवीया धातुवृत्तिः

[ पाणिनीयधातुपाठव्याख्यानात्मिका ]

सम्पादकः

स्वामी द्वारिकादासशास्त्री

व्याकरणपालिसाहित्यबौद्धदर्शनाचार्यः

तारा बुक एजेंसी

वाराणसी

१९८३

प्रकाशक:
तारा बुक एजेंसी
कमच्छा, वाराणसी-१
पिन २२१०१०

Published by
Tara Book Agency
Kamaccha, Varanasi
Pin : 221010



द्वितीय संस्करण : १९८३
मूल्य : अस्सी रुपये मात्र

Second Edition
Price : Rs. 80.00
(Rupees eighty only)

मुद्रक :
तारा प्रिंटिंग वर्क्स
वाराणसी

Printed by
Tara Printing Works
Varanasi.

# द्वितीयं संस्करणम्

श्रीमत्सायणाचार्यविरचितस्यास्य महतो माधवीयधातुवृत्तिग्रन्थरत्नस्य पूर्वतनं संस्करणं १९६४तमे ख्रिष्टाब्देऽनेकशास्त्रनिष्णातैर्विद्वद्धौरेयैः स्वामिश्रीद्वारिकादासशास्त्रिभिरसाधारणायासेन, अनेकेषां विदुषां सहयोगेन, नानाविधमातृकाव्याख्यापुस्तकसंयोजनेन चेतरविद्वत्पुनःसंस्करणनिरपेक्षं संशोधितमिति निर्विचिकित्सं तत्संस्करणादवगम्यत एव। तच्च संस्करणं बहुहायनेभ्य आपणे निःशेषतां गतम्।

अतः प्रतिमुद्रणावृत्ति पूर्वशेषदोषापाकरणकं संस्करणमावश्यकमिति मत्वा ग्राहकाणां त्वरां चाभिलक्ष्य शास्त्रिवर्यैः सर्वमपीदं ग्रन्थरत्नं पुनरेकवारं सूक्ष्मेक्षिकया समालोचितम्। ग्रन्थान्ते च धातुवृत्त्यन्तःपातिविशिष्टशब्दानामपूर्वा सूची अपि समायोजिता। एते विशिष्टाः शब्दा आचार्येण धातूनां व्याख्यानावसरे यथाप्रसङ्गं व्युत्पादिता अन्यत्र कोशेषु च सुदुर्लभा इति विदुषां छात्राणां च शब्दव्युत्पत्तिं संवर्धयिष्यन्त्येवेत्याशास्महे।

तदित्थं माधवीयाया धातुवृत्तेः समग्रसामग्रीसम्पन्नमिदं द्वितीय संस्करणं स्वामिवर्याणामादेशेन विदुषां करकमलेषु सादरमुपायनीक्रियते।

—प्रकाशकः

## शब्दशास्त्रप्रशंसेयं पूर्वैः पूर्वतरैः कृता

उपासनीयं यत्नेन, शास्त्रं व्याकरणं महत् ।
प्रदीपभूतं सर्वासां विद्यानां यदवस्थितम् ॥

× × ×

पाणिनीयं शब्दशास्त्रं पदसाधुत्वलक्षणम् ।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन ॥

× × ×

आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।
प्रथमं छन्दसामंगं प्राहुर्व्याकरणं बुधाः ॥

× × ×

तद् द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ॥

× × ×

इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ॥

× × ×

रूपान्तरेण ते देवा विचरन्ति महीतले ।
ये व्याकरणसंस्कारपवित्रितमुखा नराः ॥



## ( प्रथमसंस्करणतः )

पदवाक्यप्रमाणपारावारीणानां सर्वतन्त्रस्वतन्त्राणाम्
पण्डितवर्यश्रीरघुनाथशर्ममहाभागानाम्
अस्मद्गुरुवर्याणां प्राक्कथनरूपाणि

### आशीर्वचांसि

इयं माधवीया धातुवृत्तिः पूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसंगमराजमहामन्त्रिणा मायणपुत्रेण माधवसहोदरेण सायणेन विरचिता इति तत्तद्गणान्ते समाप्तिसूचकैतद्ग्रन्थदर्शनतोऽवसीयते।

अस्याञ्च धात्वर्थाः सहजा उपसर्गनिपातप्रद्योत्याश्च, कृत्सु तिङ्क्षु च धातुप्रयोगा अतिगूढाः धातुप्रयोगसम्बद्धसूत्रार्थाः, धात्वर्थसम्बद्धाः कालाः, धातुसम्बन्धिन आदेशा आगमा विकाराश्च सम्यक् प्रदर्शिताः। धातूनां पदव्यवस्था, प्रत्ययनियमः, सनाद्यन्तधातुभेदाः, नामधातुभेदाः, तत्प्रयोगाश्चात्रोपदर्शिताः।

मन्येऽस्या धातुवृत्तेरध्ययनेन सर्वे धातुविषयविशया ध्रुवं विनङ्क्ष्यन्ति।

अस्याश्च लोके दुर्लभायाः वृत्तेः सम्पादनेन सुलभत्वं सम्पादितवद्भ्यः श्रीस्वामिद्वारिकादासपदवित्तेभ्यो व्याकरणाचार्येभ्यो भूयसः साधुवादान्, मुद्रकेभ्यः प्रकाशकेभ्यश्च प्राच्यभारतीप्रकाशनप्रतिष्ठानाध्यक्षेभ्यो भूयसो धन्यवादान् वितरन् विरमामि—

वा. संस्कृतविश्वविद्यालयः,
वाराणसी
२४।७।६४.

रघुनाथशर्मा
वेदान्तविभागाध्यक्षः

# सम्पादकीयम्

व्याकरणात् पदसिद्धिः पदसिद्धेरर्थनिर्णयो भवति।
अर्थात् तत्त्वज्ञानं तत्त्वज्ञानात् परं श्रेयः॥

इत्यभियुक्तोक्तिप्रामाण्येन निःश्रेयसाधिगमहेतोस्तत्त्वज्ञानस्य पदपदार्थज्ञानमूलकत्वान्मोक्षप्रतिपादकानां भारतीयदर्शनशास्त्राणां प्रायः संस्कृतभाषानिबद्धत्वात् तेषां सम्यक्पदपदार्थज्ञानसम्पादनाय संस्कृतशब्दानुशासनानि अवश्यमध्येतव्यानि भवन्ति। तेषु प्रसिद्धानि नवैव, यथा—

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकलं पाणिनीयकम्[1]॥

एष्वपि नवसु निखिललौकिकवैदिकशब्दानां नितरां व्युत्पादकं पाणिनीयं शब्दानुशासनमेव जगतीदानीं जयति। अन्येष्ववशिष्टेषु शब्दानुशासनेषु लौकिकवैदिकशब्दानां न तथा साधु सर्वांगसम्पन्नं व्युत्पादनं दृष्टिपथमायाति यथा पाणिनीयाष्टके इति तदेव तत्र सर्वतोभावेन श्रैष्ठ्यं भजते इत्यसन्दिग्धम्।

एतच्च भगवता पाणिनिना सूत्रपाठ-गणपाठ-धातुपाठ-लिंगानुशासनभेदेन चतुर्धा विभज्य स्वोपज्ञातम्। अतिसंक्षिप्तस्यैतस्य न्यूनांशपरिपूरणेन, अत्यावश्यकाक्षेपसमाधिप्रदर्शनेन च भगवता भाष्यकारेण पतञ्जलिना सुपरिष्कृतमेतद् विजयतेतराम्।

क्रमेण सम्प्रदायस्यास्य विरलीभावेन, भाष्यस्य च गूढाशयतया तत्रत्यानामभ्युपगमवादानां सिद्धान्तानाञ्च दुरूहतया, मन्दमतीनां ततोऽभीष्टसिद्धावन्तरायमालोच्य सरलान् निबन्धान् निर्मिन्वतामर्वाचां विदुषां विभिन्ना शैली परिलक्ष्यते। तत्र केचन सूत्रपाठक्रमेण व्याचख्युः, यथा—काशिकाकारवामनजयादित्यप्रभृतयः। ततः शब्दसिद्धौ भूयांसमायासमवलोक्यापरे

---

१. एतानि सर्वाण्येवाधिकृत्य पृथग् भूमिकायां यथावसरं विचारयिष्यामः।

भट्टोजिदीक्षितप्रभृतयस्तत्तच्छब्दसाधुत्वोपयोगीनि भिन्नभिन्नप्रकरणपठितान्यपि वचनान्येकत्र संकलय्य व्याचख्युः। इमे उभयेऽप्याचार्या धातुपाठस्य व्यत्यासमसहमानास्तं तथैवोदधाषुः।

वेदभाष्यकारः सकलविद्वन्माननीयो मनीषी अस्या धातुवृत्तेः रचयिता सायणाचार्यस्तु 'शब्दयोनिश्च धातवः' इत्यभियुक्तोक्तिम् 'नाम च धातुजमाह निरुक्ते...व्याकरणे शकटस्य च तोकम्' इति भाष्योक्तिं च मनसिकृत्य सर्वानेव शब्दान् साक्षात् परम्परया वा धातुप्रकृतिकानेव मन्यमानो धातूनेव मुख्यत्वेनांगीकृत्य तेषां तिङन्त-णिजन्त-सनन्त-यङन्त-यङ्लुगन्तरूपाणि कृदन्तरूपाणि च प्रदर्श्य कृदन्तेभ्य एव सुब्विभक्तितद्धितादिप्रत्ययाँश्च प्रदिदर्शयिषुः भाष्यकार-भर्तृहरि-कैयट-काशिकाकार-मैत्रेय-क्षीरस्वामिप्रभृतीनां वचनोपन्यासपुरःसरमिमां धातुवृत्तिं निर्ममे।

तामिमां माधवीयां धातुवृत्तिं सर्वांगसौष्ठवातिशयादनतिविस्तृतत्वाच्च पाणिनीयव्याकरणस्य निखिलविषयानल्पेनैवायासेनावजिगमिषूणामभ्यसिषूणाञ्चात्यन्ताह्लादप्रदामाकलय्यैतस्या मुद्रणे कृतहृदयैः प्राच्यभारतीप्रकाशनप्रतिष्ठानाध्यक्षैः प्रेम्णाऽस्या साधुसम्पादने भृशं प्रार्थितोऽहं मन्दः कवियशःप्रार्थी, प्रांशुलभ्ये फले लोभादुद्बाहुर्वामन इव विदुषामुपहास्यतामेवागमिष्यम् यद्यस्मद्गुरुवर्याणां वाराणसेयसंस्कृतविश्वविद्यालये वेदान्तविभागाध्यक्षपदमलङ्कुर्वतां पण्डितश्रीरघुनाथशर्ममहोदयानां साहाय्यं नाध्यगमिष्यम्।

## सम्पादनकर्मणि सहायका ग्रन्थाः

एषां विद्वद्धौरेयाणां साहाय्येन सम्पादनकर्मणि प्रवृत्तेन मया अस्या धातुवृत्तेः प्राक्तनं संस्करणचतुष्टयमादर्शत्वेन स्वीकृतम्। तेषु प्रथमं संस्करणं काशिकराजकीयपाठशालाप्रधानाध्यापकैर्विद्वद्वरेण्यैर्भारद्वाजोपाह्वैः श्रीदामोदरशास्त्रिभिः सम्पादितम्, काश्यामेव 'मेडिकल हाल्' नाम्नि मुद्राणालये मुद्रितम्, 'लाज्रसं कम्पनी' एतदाख्येन प्रतिष्ठानेन १८९७तमे ख्रिष्टाब्दे प्रकाशितमस्ति। तदिदं संस्करणं वाराणसेयपरम्परया सम्पादितत्वादस्माभिर्मूलपाठे प्रायः प्रमाणत्वेन स्वीकृतम्। पुस्तकस्थटिप्पणीषु च यत्रतत्र 'क' सङ्केतेन स्मृतम्।

द्वितीयम्—बी॰ ए॰ इत्युपाधिधारिभिः अ॰ महादेवशास्त्रिभिः पण्डितरत्नैः क॰ रंगाचार्यमहोदयैश्च सम्पादितम्, महिशूर (मैसूर)- पत्तने 'गवर्नमेण्ट ब्राञ्च प्रेस' नाम्नि मुद्रणालये मुद्रितं १९१२तमे ख्रिष्टाब्दे महिशूरराज्यशासनेन प्रकाशितमस्ति। तदिदं संस्करणं शुद्धतमम्, अर्वाचीनवैज्ञानिकमुद्र॰प्रणाल्या मुद्रितमिति बहुत्रातोऽस्माभिस्साहाय्यं गृहीतम्। एतच्च टिप्पणीषु यत्रतत्र 'ख' संकेतेन स्मृतम्।

तृतीयं संस्करणम्—काशीस्थ 'चौखम्बा संस्कृत सीरीज' कार्यालयतः १९३४ तमे ख्रिष्टाब्दे प्रकाशितम्, व्याकरणाचार्यैः 'अनन्तशास्त्रिफड़के' इत्याख्यैर्विद्वद्भिः, सदाशिवशर्मशास्त्रिमहोदयैश्च सम्पादितमस्ति तदिदं संस्करणं भ्रष्टपाठबहुलमपि अस्माकं क्वचित् किञ्चित् साहाय्यं व्यदधात्।

चतुर्थञ्च—एकोनविंशतिशताब्द्या अन्तिमे भागे सुप्रसिद्धे 'पण्डित' पत्रे भागशो मुद्रितम्। एतत्संस्करणमवलम्ब्यैव महिशूर-भारद्वाजीयसंस्करणे मुद्रिते जाते इति न तत्र किञ्चिदपि ग्राह्यं वैशिष्ट्यमवशिष्टमासीदिति नास्माभिस्तद्बहु परामृष्टम्।

अस्यां धातुवृत्तौ सायणार्येण भूयांस आकरग्रन्थाः प्राचीना निवन्धाश्च (भाष्य-कैयट-काशिका-पदमञ्जरी-न्यास-धातुप्रदीप-क्षीरतंगिणीप्रभृतयः), ग्रंथकारा निबन्धकाराश्च ( आपिशलि-शाकटायन-भर्तृहरि-वामन-जयादित्य-अमरसिंह-यादवप्रकाशप्रभृतयः ) कश्चित् स्वोक्तिसंवादाय, कश्चित् स्वोपदर्शितार्थप्रतिष्ठापनाय, कश्चिच्च तदुक्तिखण्डनाय तत्रतत्रोदाहृताः। एते सर्वेऽप्यस्माभिर्यथोपलब्धि तत्रतत्र परामृष्टास्तथा तेषामुद्धरणानि च यथामति संशोध्य यथास्थानमेकक-द्विकोद्धरण-चिह्नेन ( " " इन्वर्टेड कामा ) चिह्नितानि। निबन्धकाराणां नामानि तत्रतत्र पृथक्कारकैः कनीयोभिः सीसकाक्षरैर्मुद्रापितानि। पाठसौकर्याय च सर्वत्र धातुसूत्राणि तेषां रूपाण्यपि च कनीयोभिरेव मुद्राक्षरैर्मुद्रापितानि।

अनुसन्धित्सूनां सौकर्यायादौ धातुसूत्रसंख्या, धातुसंख्या चान्ते सर्वत्र निर्दिष्टा। नास्माभिरत्र महिशूरसंस्करणं भारद्वाजसंस्करणं वाऽनुसृतं; तयोरेतद्विषयेऽशुद्धिबहुलत्वात्।

विदुषां परितोषाय माधवीय-धातुवृत्तेः प्राधान्येनोपजीव्यभूतो मैत्रेयः, दैवम्, पुरुषकारः, क्षीरस्वामी च तत्र तत्र टिप्पण्यामस्माभिः सपरिश्रममुद्धृताः। मैत्रेय-क्षीरस्वामिनोः धातुसूत्र-पाठान्तराण्यपि स्थापितानि। एवमेव तत्रतत्र महाभाष्य-कैयट-काशिका-पदमञ्जरी-अमरकोशप्रभृतीनां ग्रन्थानामप्याचार्येण परित्यक्तः प्रसंगनिर्देशः कृतः।

अन्ते च—अनुसन्धित्सूनां सौकर्यबुद्धया गणनिर्देशपूर्विका सूत्रसंख्यासमन्विता अर्थसहिता धातुसूची अपि वर्णक्रमपूर्विका संयोजिता। एवमेव धातुवृत्तो निर्दिष्टानां ग्रन्थानां ग्रन्थकर्तॄणाञ्च नामानि तथैव संयोजितानि।

भूमिकायाञ्च—धातुवृत्तिमवलम्ब्य सर्वेऽपि स्थूलाः सूक्ष्माश्च विषयाः समासव्यासाभ्यां परीक्षिताः।

एवमिदं सर्वतोभावेन सुबृंहितं शुद्धतमं संस्करणं विदुषां प्रमोदाय कल्पेत—इति वयं मन्यामहे।

### उपकृतिस्मृतिः

सर्वतः प्रथमं पदवाक्यप्रमाणपारावारीणानां सर्वतन्त्रस्वतन्त्राणां वाराणसेय-संस्कृतविश्वविद्यालये वेदान्तविभागाध्यक्षपदमलङ्कुर्वतां बृहस्पतिकल्पानां गुरुवर्याणां श्री१०८श्रीरघुनाथशर्ममहोदयानां चरणाब्जयोः प्रणतितर्ति संविदधामि येषां कृपाकटाक्षेणैव सुमहत्यस्मिन् दुःसाधे कर्मणि प्रवृत्तोऽहं साफल्यमभजम्। यैश्च करुणासम्पृक्तचेतसा मदुत्साहवर्धनाय प्राक्कथनरूपमाशीर्वचनमत्र संयोजितम्।

एवमेव वाराणसेयसंस्कृतविश्वविद्यालयेऽध्यापकपदमलङ्कुर्वताम्, एम ए., आचार्योपाधिभाजां तत्त्वविशारदानां ( डाक्टर ) श्रीरामअवधपाण्डेयमहोदयानामपि स्मरणमावश्यकम्, यैः समये समये मम प्रमादं समादधद्भिरवलम्बनप्रदानेनानेकशो मम स्खलतिरवरुद्धेति तेऽतीव धन्यवादार्हाः।

अनेकेषु शास्त्रेषु कृतभूरिपरिश्रमाणां संस्कृतव्याकरणशास्त्रस्य प्रसिद्धेतिह्यविदां क्षीरतरङ्गिणीसम्पादकानां श्रीयुधिष्ठिरमीमांसकमहाशयानामपि भृशमुपकृतिं स्मरामि, यैर्विरचिताः सम्पादिताश्च ग्रन्थाः प्रतिपदं मम मार्गमालोकितवन्तः।

प्राच्यभारतीप्रकाशनाध्यक्षा अपि भूयोभूयो धन्यवादार्हाः, ये प्राच्यभारतीसेवां हृदि निधायेदृशो महत्त्वशालिनो रत्नभूतान् ग्रन्थान् मुद्रापयित्वा सर्वजनेभ्यः

सौलभ्यं प्रददति। प्रार्थ्यंते च भगवान् सर्वज्ञस्तेषामीदृशीमेव मतिमनुपालयितुम्, येन तेऽहर्निशं प्राच्यभारतीमित्थमेव संसेवेरन्।

बहूनामाकरग्रन्थानामनुपलब्ध्या, मम प्रमादेन, सीसकाक्षरव्यत्यासेन, प्रति-संशोधकदृष्टिदोषेण वा जातानशुद्धिदोषान् क्षाम्यन्तु प्राचीनग्रन्थपरिशीलनशालिनो गुणैकपक्षपातिनो विद्वांसः। सफलयन्तु च मामकीनं परिश्रमं धातुवृत्तिपठन-पाठन-पर्यालोचनादिनेति सप्रश्रयमभ्यर्थयते—

गुरु-पूर्णिमा, २०२१
प्राच्यभारतीभवनम्,
कमच्छा, वाराणसी—१.

स्वामी द्वारिकादासशास्त्री

# विषयक्रमः



—●—

# संक्षिप्तसंकेतविवृत्तिः

अ० को०—अमरकोशः
उत्तरमेघ०—मेघदूतकाव्ये उत्तरमेघः
उत्तररा०—उत्तररामचरितम्
ऋ० स०—ऋग्वेदसंहिता
काव्यप्र०—काव्यप्रकाशः (मम्मट-विरचितः)
काव्याल०—काव्यालङ्कारसूत्राणि (वामनकृतानि)
काशि०—काशिकावृत्तिः
का० सू०—काव्यालङ्कारसूत्राणि (वामन-कृतानि)
का० सू०—कातन्त्रसूत्रम्
किरा०—किरातार्जुनीयकाव्यम्
किराता०—किरातार्जुनीयकाव्यम्
कु० स०—कुमारसम्भवकाव्यम्
कौमाराः—कातन्त्रानुयायिनो वैयाकरणाः
क्षी० त०—क्षीरतरङ्गिणी
क्षीर०—क्षीरस्वामी
क्षीरस्वामी—क्षीरतरङ्गिणीकारः
क्षीरतरङ्गिणीसम्पादकः—श्रीयुधिष्ठिर-मीमांसकः
क्षी० स्वा० टी०—क्षीरस्वामिकृता अमरकोशोद्घाटनटीका
जयमंगला—भट्टिकाव्यटीका
तरंगिणी—क्षीरतरङ्गिणी
तै० सं०—तैत्तिरीयसंहिता
त्रिकाण्डकोशः—चन्द्रकीर्तिशीलस्कन्ध-सम्पादितः
दै०—दैवम् (देवविरचितम्)
धातुप्रदीपः—राजशाहीसंस्करणम्
धा० प्र०—धातुप्रदीपः, मैत्रेयकृत्
नि०—निरुक्तम्
न्या०—न्यासः (काशिकाव्याख्यानभूतः)
न्यासोद्द्योतः—मल्लिनाथकृता काशिका-वृत्तिटीका
प० म०—पदमञ्जरी (काशिकाव्याख्या)
पाठा०—पाठान्तरम्
पा० धा० सू०—पाणिनीयसूत्रम्
पा० सू०—पाणिनीयसूत्रम्
पु०—दैवे पुरुषकाराख्यवार्त्तिकम्
पूर्वमेघ०—मेघदूतकाव्ये पूर्वमेघः
भट्टोजिदीक्षितः—वैयाकरणसिद्धान्त-कौमुदीप्रणेता
म० भा० प्र०—महाभाष्यप्रदीपः
म० भा०—पातञ्जलमहाभाष्यम्
भाष्यम्—तैत्तिरीयसंहिताभाष्यम्
मुद्रितक्षीरतरंगिणी—श्रीयुधिष्ठिर-मीमांसकसम्पादिता
मैत्रेयः—धातुप्रदीपकर्ता
रघु०—रघुवंशकाव्यम्
वा०—वाक्यपदीयम्
वा०—वार्त्तिकम् (कात्यायनमुनिकृतम्)
वासवदत्ता—एतदाख्यं नाटकम्
वि० वि०—विधिविवेकः
वेणी०—वेणीसंहारनाटकम्
वैज०—वैजयन्तीकोशः
शार्ङ्ग० प०—शार्ङ्गधरपद्धतिः
शिशु०—शिशुपालवधम् (माघकविकृतम्)
शिशु० व०—शिशुपालवधकाव्यम्
शि० सू०—शिवसूत्रम् ('अइउण्' इत्या-दिकम्)
सं० व्या० शा० इ०—संस्कृत व्याकरण-शास्त्र का इतिहास (श्रीयुधिष्ठिर-मीमांसककृतः)
स्वामी—क्षीरस्वामी (क्षीरतरङ्गिणीकारः)
हेला०—हेलाराजः (वाक्यपदीयटीकाकारः)

# भूमिका

## १

पाणिन्यादीन् नमस्कृत्य तदैतिह्यं समीक्ष्य च।
बहिरङ्गपरीक्षेयं धातुवृत्तेर्विधीयते ॥

### शब्दानुशासका ह्यष्टौ सिद्धाः संस्कृतवाङ्मये

'मुखं व्याकरणं स्मृतम्' इत्यभियुक्तोक्त्या व्याकरणं वेदाङ्गेषु मुख्यमङ्गम्। ईदृशे च व्याकरणे सन्ति इन्द्रचन्द्रादिकृता अष्टौ ( नव वा ) व्याख्यानभेदाः। तथा चोक्तम्—

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्राः जयन्त्यष्टादिशाब्दिकाः॥ इति।

यथा वा—

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकल्यं पाणिनीयकम्॥ इति।

१. इन्द्रो व्याकरणकर्तेति तैत्तिरीयसंहितायामप्याम्नायते—'वाग्वै पराच्यव्याकृताऽवदत्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति सोऽब्रवीद्वरं वृणै मह्यं चैवैष वायवे च सह गृह्याता इति तस्मादैन्द्रवायवस्सह गृह्यते तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्' इति ( ६।४।७ )। शाकटायनव्याकरणे च 'जराया ङसिन्द्रस्याचि' ( १।२।३७ ) इतीन्द्र उल्लिख्यते। कथासरित्सागरे तु—'पाटलिपुत्रं नन्दे शासति वर्षनाम्नो द्विजस्य पाणिनि-वररुचि-व्याडि-इन्द्रदत्तादयश्शिष्या आसन्। तदा च तपःप्रभावान्नवं व्याकरणं रचितवता पाणिनिना सह विवादे सम्प्रवृत्ते तादात्विकपाणिनिपराजयकुपितकपर्दिकृतघोरहुङ्कारविनष्टस्वीयैन्द्रव्याकरणो वररुचिः पाणिनिना पराजितः तदीयतन्त्रमेव प्राचीकशत्' इति कथोपलभ्यते।

२. चन्द्रस्तु विक्रमादित्यसहभुवा भर्तृहरिणा प्रणीते वाक्यपदीये उल्लिख्यते—

'यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः।
काले स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः॥
पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः।
स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः'॥ इति।

अस्यां धातुवृत्तौ च "चन्द्रस्तु—मदि जाड्ये इत्येव पपाठ" ( मा० धा० ५८ पृ० ) इत्यादिना चान्द्रवाक्यमपि तत्रतत्रोदाहृतम् ।

३. 'सङ्ख्यायाः' ( ५।१।५८ ) इति सूत्रे 'त्रिकं काशकृत्स्नम्, अष्टकं पाणिनीयम्, दशकं वैयाघ्रपदीयम्' इति काशिकायां दृश्यते । सङ्कर्षपरपर्यायं देवताकाण्डमपि चतुर्लक्षणीरूपं काशकृत्स्नकृतमिति सम्प्रदायतः प्रतीयते ।

४. 'वा सुप्यापिशलेः' ( ६।१।९२ ) इत्यादौ पाणिनिना आपिशलिर्निर्दिष्टः । माधवीयायां धातुवृत्तौ च तनादौ क्षिणुधातौ ( मा० धा० ५०८ पृ० ) "तथा चापिशलिः 'शब्विकरणे गुणः' इति धातुगुणमभिधाय 'करोतेश्च' 'मिदेश्च' इत्यसूत्रयत्" इत्यापिशलिसूत्रमुदाहारि । शाकटायनीयामोघायां वृत्तौ च 'अष्टका आपिशलपाणिनीयाः, त्रिकाः काशकृत्स्नाः, चतुष्काश्शाकटायनाः' इति दृश्यते । सामप्रातिशाख्यमप्यापिशालिकृतमिति प्रसिद्धम् ।

५. ऋक्तन्त्रव्याकरणं नाम सामप्रातिशाख्यं शाकटायनकृतमिति शब्देन्दुशेखरोपक्रमे दृश्यते । "वैयाकरणानां च शाकटायन आह—धातुजं नामेति" इति 'उणादयो बहुलम्' ( ३।३।१ ) इति पाणिनीयसूत्रे पतञ्जलिः । अधुनोपलभ्यमाने शाकटायनव्याकरणे धातोरुणादिप्रत्ययविधायकम् 'उणादयः' इति सूत्रं दृश्यते । अत्र शाकटायनीये 'न संयोगाद्' ( १।१।११५ ) इति सूत्रं संयोगपरव्यञ्जनस्य द्वित्वनिषेधकं दृश्यते । तत्सूत्रार्थानुवादरूपतया च 'त्रिप्रभृतिषु शाकटायनस्य' ( ८।४।५० ) इति पाणिनीयं सूत्रं प्रतीयते । 'त्रिप्रभृतिषु वर्णेषु संयुक्तेषु शाकटायनमतेन द्वे भवतः' इति तत्र काशिका । तदेतत्पर्यालोचने इदमेव शाकटायनतन्त्रं पाणिनिसमकालमिति प्रतीयते । परे त्वन्यथैव प्रतिपद्यन्ते—'आद्द्विषो झेर्जुस्वा' ( १।४।१०५ ) इति शाकटायनीयतन्त्रेऽस्मिन् आदन्ताद्द्विशिष्य परस्य ङितो लः वैकल्पिको झेर्जुस्भावो विहितः । पाणिनिना तु 'लङः शाकटायनस्यैव' ( १।४।१११ ) इति स एव जुस्भावः शाकटायनानुमततया वर्णितः ! तथा 'वानुव्यात्' इति शाकटायनीयतन्त्रेऽस्मिन्कृतं वैकल्पिकमस्पष्टश्रुतियकारवकारविधानं पाणिनिना 'व्योर्लघुप्रयत्नतरः शाकटायनस्य' ( ८।३।१८ ) इति शाकटायनानुमतत्वेन वर्णितम् । यदि इदमेव शाकटायनीयतन्त्रम् पाणिनेरनुमतं तदा तत्रैव वैकल्पिकत्वेन दृष्टस्य विधेः पाणिनिना शाकटायनीयत्वेनाभिधानं विफलं स्यात् । अन्यतन्त्रे नित्यस्य विधेर्वा प्रतिषेधस्य वा वैकल्पिकतायाः प्रदर्शनाय हि तस्य तस्य तन्त्रान्तरकारानुमतत्वेनोल्लेखो दृष्ट इति ।

६. अमरस्य तु नामलिङ्गानुशासनमेवाधुना दृश्यते, तत्र पाणिनितन्त्रदृष्टप्रत्यया एवाश्रिता लिङ्गादिसंग्रहे ।

७. जैनेन्द्रव्याकरणस्य प्रवक्ता पूज्यपादापरनामा देवनन्दी आसीदिति प्रसिद्धिः ।

८. संस्कृतवाङ्मयेऽत्यन्तं महत्त्वपूर्णं कातन्त्रव्याकरणं 'कौमारम्', कलापकम्' 'कलापम्' इति नामभिः प्रसिद्धं कुमारस्य कार्त्तिकेयस्याज्ञया शर्ववर्मणा विरचितम् । अथवा कुमाराणां बालानां कृते व्याकरणस्य सुखबोधाय प्रोक्तं तन्त्रं 'कौमारम्' इति बोध्यम् ।

९. सारस्वतं व्याकरणं विदुषामाश्रयदात्रा धाराधिपतिना सिन्धुलमहाराजपुत्रेण जयसिंहमहाराजपित्रा भोजदेवेन सरस्वतीकण्ठाभरणनाम्ना विरचितम् । अनुभूतिस्वरूपाचार्यैर्व्याख्यातं व्याकरणमपि 'सारस्वतम्' इति नाम्ना प्रसिद्धम् ।

## आचार्यः पाणिनिस्तेषु श्रेष्ठः शब्दानुशासकः

१०. निखिलसंस्कृतवाङ्मये पाणिनिप्रोक्तव्याकरणस्य साङ्गस्य समग्रस्योपलब्धिरेव ईदृशस्यार्षतन्त्रस्य सम्प्रति वैयाकरणजगति सर्वतोऽधिकं माहात्म्यं प्रख्यापयति । नैतावदेव, वयं त्वेतन्मन्यामहे यदिदमेव व्याकरणमुत्तरवर्त्तिनामन्येषां प्रधानमुपजीव्यमिति ।

भगवता पाणिनिना च स्वशब्दानुशासनकात्स्न्योपपत्त्यै सूत्रपाठेन सहैव धातुपाठोऽपि प्रधानाङ्गत्वेन प्रोक्तः । न हि धातुपाठस्य प्रवचनं विना कश्चिदप्याचार्यः शब्दानुशासनस्य सम्यक् प्रवचने समर्थो भवति । अत एवोत्तरवर्त्तिषु कातन्त्रादिव्याकरणेष्वपि धातुपाठपरम्परा समाना दरीदृश्यते—इति माधवीयधातुवृत्तिसमीक्षयाऽवगम्यते । एवमेव भागुर्यापिशलिप्रभृतिभिः पाणिनेः पूर्वतनैराचार्यैरपि, यत्रतत्र ग्रन्थेषु तत्तत्प्रोक्तधातूनामुपलब्ध्या, धातुपाठः प्रोक्त एवेति सुस्पष्टम् ।

## 'धातुपाठः पाणिनीयः' पक्षोऽयं सर्वसम्मतः

पाणिनीयैर्वैयाकरणैः समादृतो धातुपाठः पाणिनिप्रोक्त एवेति पाणिनीयानां परम्परा । अत्र केवलं काशिकावृत्तेर्न्यासाख्यटीकाकर्ता जिनेन्द्रबुद्धिरेव विरुद्धः । तेन ह्यस्यापाणिनीयत्वे हेतुद्वयं प्रादर्शि । परन्तु तेनैवान्यत्र आपिशलिधातुपाठमालोचयताऽस्य धातुपाठस्य पाणिनीयत्वमपि प्रतिपादितमिति तदुक्तिः स्ववचनेनैव खण्डिता भवतीति किमत्राधिकं वयं ब्रूमः ।

अथ प्रथमम् 'भूवादयो धातवः' (१।३।१) इति सूत्रविज्ञापितस्तत्खिलरूपो धातुपाठोऽपि पाणिनीय एवेत्यत्र कानिचित् प्रमाणान्यपि प्रस्तूयन्ते—

१. 'अदिप्रभृतिभ्यः शपः' ( २।४।७२ ); 'जुहोत्यादिभ्यः श्लुः' ( २।४।७५ ); 'दिवादिभ्यः श्यन्' ( ३।१।६९ ); 'भृञामित्' ( ७।४।७६ ); 'णिजां त्रयाणां गुणः

श्लौ' (७।४।७५); 'शे मुचादीनाम्' (७।१।५९); 'फणां च सप्तानाम्' (६।४।१२५); 'किरश्च पञ्चभ्यः' (७।२।७५); इत्यादिष्वनेकेषु सूत्रेषु धातुपाठान्तर्गतधातूनां गणपाठस्मरणं प्रमाणयति—'सूत्रपाठप्रवक्ता आचार्यः कञ्चिद् धातुपाठमपि पूर्वं प्रोक्तवान्' इति।

२. धातुपाठस्थैर्विविधैर्ङाद्यनुबन्धैः 'अनुदात्तङित आत्मनेपदम्' ( १।३।१२ ); 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' ( १।३।७२ ); 'ड्वितः क्त्रिः' ( ३।३।८८ ); 'ट्वितोऽथुच्' ( ३।३।८९ ) इत्यादिषु बहुषु सूत्रेषु कार्यविधानमपि धातुपाठस्य पाणिनिप्रोक्तत्वं प्रमाणयति।

३ 'वृद्धिरादैच्' ( १।१।१ ); भूवादयो धातवः' ( १।३।१ ); 'चुटू' (१।३।७); 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' ( १।३।७२ ); इत्याद्यनेकसूत्रव्याख्यानेषु महाभाष्यकारो भगवान् पतञ्जलिरपि स्वकीये महाभाष्ये इमं धातुपाठं स्पष्टमेव पाणिनिप्रोक्तत्वेन स्वीचकार।

४. अथ च प्राचीनाः वैयाकरणाः वामन-जयादित्य-क्षीरस्वामि-जिनेन्द्रबुद्धि-प्रभृतयः सूत्रपाठमिव धातुपाठमपि पाणिनीयमेव स्वीकुर्वन्तः, तत्रस्थप्रयोगाणां सामर्थ्यवशेनानेकान् उद्यम-उपरम-विधूनन-प्रीणन-व्याज-शोभादिशब्दान् निपातनात् साधयन्ति। इत्थमेतच्छब्दसाधनप्रकारोऽपि तत्तदाचार्याणां मते धातुपाठस्य पाणिनीयत्वमेव साधयति।

एवमेतैः प्रमाणभूतैर्हेतुभिः सद्भिः धातुपाठस्य पाणिनिप्रोक्तत्वे न कश्चिच्छङ्काकलङ्क इति स्पष्टम्।

### धातूनामर्थनिर्देशः पाणिनीयः स्मृतो बुधैः

व्याकरणशास्त्रेतिहासलेखकैः श्रीयुधिष्ठिरमीमांसकमहाशयैः स्वकीये 'व्याकरण शास्त्र का इतिहास' नाम्नि ग्रन्थे प्रकरणमिदं विशदं व्याख्यातमिति तस्यैव संस्कृतच्छायामत्र स्थापयामो विदुषां परितोषाय[1]।

"ये खलु धातुपाठं पाणिनीयमुररीकुर्वन्ति तेऽपि धात्वर्थानां पाणिनीयत्वापाणिनीयत्वयोर्विप्रवदन्ते। तेषां पाणिनीयत्वापाणिनीयत्वयोर्यानि प्रमाणानि, तान्यत्र निर्दिश्यन्ते। तथा हि—

( क ) अपाणिनीयत्वप्रतिपादकानि प्रमाणानि—यैः प्रमाणैर्धात्वर्थनिर्देशानाम् अपाणिनीयत्वं प्रतीयते, तान्युच्यन्ते—

---

१. अत्र धातुसूत्रसंख्यानिर्देशस्तु सौकर्यार्थमस्यैव ग्रन्थस्य कृत इति ध्येयम्।

१. "परिमाणग्रहणं च कर्त्तव्यम्—इयानवधिर्धातुसंज्ञो भवतीति वक्तव्यम्। कुतो ह्येतद् भूशब्दो धातुसंज्ञो भवति, न पुनर्भ्वेधशब्द: ?" ( महा० १।३।१ ) यदि हि नाम 'भू सत्तायाम्, एध वृद्धौ' इत्येवं सार्थको धातूनां पाठो भवेत्, तर्हि भ्वेधसमुदायस्य धातुसंज्ञायाः शङ्कैव नोदेति; भूशब्दानन्तरं सत्तायां पदस्य पाठात्। अत एवैतद्भाष्यव्याख्येन कैयट आह—

'न चार्थपाठः परिच्छेदकः, तस्यापाणिनीयत्वात्, अभियुक्तैरुपलक्षणतयोक्तत्वात्' इति।

अत्रैव अभियुक्तपदव्याख्याने नागेशेन—'भीमसेनेनेत्यैतिह्यम्' इत्युक्तम्।

२. 'पाठेन धातुसंज्ञायां समानशब्दानां प्रतिषेधो वक्तव्यः। 'या' इति धातुः, 'या' इत्याबन्तः। 'वा' इति धातुः 'वा' इति निपातः। 'नु' इति धातुः, 'नु' इति प्रत्ययः 'दिव इति धातुः, 'दिव' इति प्रातिपदिकम्।' ( महा० १।३।१ )

यदि हि नाम धातुपाठेषु 'या प्रापणे' 'वा गतिगन्धनयोः' इत्येवं सार्थो धातूपदेशः स्यात्, तर्हि शङ्कैवेयं नोदीयात्। यः खलु प्रापणेऽर्थे 'या' शब्दः, स धातुसंज्ञो भविष्यति। आबन्तस्तु नैव प्रापणार्थकः, कुतस्तस्य धातुसंज्ञाप्राप्तिर्यस्याः प्रतिषेधः कर्त्तव्यो भवेत्! एवं 'वा' 'नु' 'दिव'–आदिष्वप्यूह्यम्।

३. ( क ) 'न ह्यर्था आदिश्यन्ते क्रियावचनता च गम्यते।' ( महा० ३।१।८; ११; १९ )

( ख ) 'कः खल्वपि पचादीनां क्रियावचनत्वे यत्नं करोति।' ( महा० ३।१।१९ )

( ग ) "को हि धातु-प्रातिपदिक-निपातानामर्थानादेष्टुं समर्थः।" ( महा० २।१।१ )

द्वितीयवाक्यं व्याचक्षाणो नागेश आह—'पचादीनामर्थरहितानामेव पाठात्।'

४. भट्टोजिदीक्षितोऽपि भूवादिसूत्रकौस्तुभे ( १।३।१ ) अर्थरहितानामेव धातूनां पाठं स्वीचकार। तथा हि—"न च या प्रापणे इत्याद्यर्थनिर्देशो नियामकः; तस्यापाणिनीयत्वात्। भीमसेनादयो ह्यर्थं निर्दिदिशुरिति स्मर्यते। पाणिनिस्तु भ्वेध इत्याद्यपाठीदिति भाष्यकैयटयोः स्पष्टम्।" इति।

५. स एव पुनराह शब्दकौस्तुभे—( १।२।२० ) 'तितिक्षाग्रहणं ज्ञापकं भीमसेनादिकृतोऽर्थनिर्देश उदाहरणमात्रम्।' इति।

एभिः प्रमाणैरिदं स्पष्टं यत्पाणिनीयधातुपाठे योऽर्थनिर्देशः सोऽपाणिनीयः। पाणिनिस्तु 'भ्वेधस्पर्ध' इत्यमेवर्थविरहितानेव धातून् पपाठेति।

(ख) पाणिनीयत्वप्रतिपादकानि प्रमाणानि—तत्र यैः प्रमाणैर्धात्वर्थनिर्देशानां पाणिनीयत्वं सिद्धयति, तान्युच्यन्ते—

१. महाभाष्ये केचन धातवोऽर्थनिर्देशपुरःसरमुद्ध्रियन्ते। तेन ज्ञायते—महाभाष्यतः प्रागपि पाणिनीयधातुपाठेऽर्थनिर्देश आसीत्।

२. 'चुटू' (१।३।७) इति सूत्रव्याख्याने महाभाष्यकारः पठति—"अथवा आचार्यप्रवृत्तिर्ज्ञापयति—नैवञ्जातीयकानामिद्विधिर्भवति इति यदयमिरितः काँश्चिन्नुमनुषक्तान् पठति—'उ बुन्दिर् निशामने' (भ्वा० ६१५), 'स्कन्दिर् गतिशोषणयोः" (भ्वा० ६९९) इति।

पाणिनिना धातुपाठस्य प्रवचनं कृतमित्यनेन वचनेन ज्ञापितं पुरस्तात्। अतो येन खल्वाचार्येण 'उ बुन्दिर्, स्कन्दिर्' धातू इरितौ नुमनुषक्तौ च पठितौ, तेनैव तयोरत्र निर्दिष्टाः 'निशामने' 'गतिशोषणे च' अर्था अपि पठिता इति विस्पष्टम्।

३. भूवादिसूत्रेऽप्याह भाष्यकृत्—

'वपिः प्रकरणे दृष्टः, छेदने चापि वर्तते—केशश्मश्रू वपतीति। ईडिः स्तुतिचोदनायाच्ञासु दृष्टः, प्रेरणे चापि वर्तते—अग्निर्वा इतो वृष्टिमीट्टे मरुमेऽमुतश्च्यावयन्ति—इति। करोतिरभूतप्रादुर्भावे दृष्टः, निर्मलीकरणे चापि वर्तते—पृष्ठं कुरु, पादौ कुरु, उन्मृदानेति गम्यते।" महा० १।३।१) अत्र महाभाष्यकृता केषाञ्चिदर्थानां दृष्टत्वमुक्तम्, केषाञ्चिच्च वर्तनत्वम्। तत्र 'दृष्टः' 'वर्तते'—इत्युक्तः, तस्यायमेवाभिप्रायो यत् स धातुपाठे पठितो दृश्यते इति; यस्त्वर्थो 'वर्तते' क्रियया निर्दिष्टः स खलु धातुपाठेऽपठितोऽपि लोकवेदयोरुपलभ्यते इति।

४. बहवो हि वैयाकरणा धातुपाठे कृतानामर्थनिर्देशानां सूत्रवत् प्रामाण्यं स्वीकुर्वन्ति। तद्यथा—

(क) 'कथमुद्यमोपरमौ? 'अड उद्यमे', 'यम उपरमे' इति निपातनादनुगन्तव्यौ।' (काशि० ७।३।१४)।

(ख) 'धू विधूनने', तृप प्रीणने' इति निपातनादेतयोर्नुग्भविष्यति'।

(न्या० द्वि० भा० ७९२ पृ०)

(ग) 'शुभ शुम्भ शोभार्थे'—अत एव निपातनाद् 'शोभा' इति साधुः'। (क्षीरत० ६।३४)

(घ) 'शोभेति निपातनात्।' (५।२।४१) इति काव्यालङ्कारे वामनोऽपि।

यदि नाम धात्वर्थनिर्देशः पाणिनीयो नाभविष्यत्, तर्हि वैयाकरणानां तत्र सूत्रवत् प्रामाण्यबुद्धिरपि नोदैष्यत्। दृश्यते च यतस्तत्र सूत्रवत् प्रामाण्यबुद्धिः,

तस्मात् स्पष्टमेव यद्धात्वर्थनिर्देशान् प्रमाणीकुर्वन्तो वैयाकरणास्तानर्थनिर्देशान् पाणिनीयानेवानुमन्यन्ते ।

५. धातुवृत्तिकाराः बहुत्र धातुसूत्राणां संहितापाठस्य प्रामाण्यमाश्रित्य सूत्रविच्छेदे विप्रवदन्ते । यथा—

( क ) तपऐश्वर्येवावृतुवरणे' ( मा० धा० दि० ५१-५२ सू० ) इति दैवादिकपाठे मध्ये पठ्यमानं 'वा' पदं पूर्वसूत्रस्यावयवः, उतोत्तरस्य ? "पूर्वावयवे भौवादिकस्य तप सन्तापे ( मा० धा० भ्वा० ७०४ सू० ) इत्यस्यैश्वर्ये वा दिवादित्वमाचष्टे" इत्येके मन्यन्ते । "उत्तरावयवेऽपि वा इति पृथक्पदं सद् भौवादिकस्य 'वृतु' धातोः ( मा० धा० भ्वा० ४२१ सू० ) वरणे वा दिवादित्वं ब्रूते"–इत्यपरे संगिरन्ते । "वा इति धात्वेकदेशस्तेन 'वावृतु' इति धातुः"—इत्यन्ये आतिष्ठन्ते ।

( ख ) पतगतौवापशअनुपसर्गात्' ( मा० धा० चु० २५०-२५१ सू० ) इत्यत्रापि 'वा' पदं पूर्वसूत्रस्यावयवः, उतोत्तरस्य ? इति विवादः । केचन पूर्वसूत्रावयवं मन्यमानाः 'पतधातोर्गतौ वा णिजुत्पद्यते' इत्याहुः । अपरे उत्तरसूत्रावयवं मन्यमाना अपि 'वा' पदं स्वतन्त्रमभ्युपगम्य पशोऽनुपसर्गाद् वाऽदन्तत्वमाहुः । अन्ये तु 'वा' पदं धात्ववयवं ब्रुवाणाः 'वापशः' इति धातुं स्वीचक्रुः ।

अयं सर्वोऽपि विवादो धात्वर्थनिर्देशानां पाणिनीयत्वमुररीकृत्यैवोपपद्यते । यदि हि नामैतादृशेषु स्थलेषु 'भ्वेधस्पर्धवत्' केवलो धातुनिर्देश एव पाणिनीयोऽभविष्यत्, तर्हि 'तपवावृतु' 'पतवापश' इत्येवं संहितापाठे वा-शब्दे पठ्यमानेऽपि 'वावृतु' धातोः 'वापश' धातोश्च स्वरूपे सन्देह एव नोदपत्स्यत । वा-रहितपाठे तु नतराम् । यदि हि 'तपवावृतु' 'पतवापश' इत्यर्थविरहिते पाठे सन्देहावसरोऽपि स्यात्तर्हि 'तप-वावृतु' अथवा 'तपवा-वृतु' एवं 'पत-वावश' यद्वा 'पतवा-वश इत्येवमेव सन्देहः स्यात्; न तु यथा वृत्तिकारा आहुस्तथा ।

सायणाचार्यः सार्थपाठं पाणिनीयं मन्यमानः 'तपऐश्वर्येवावृतुवरणे' इत्यत्र 'तप ऐश्वर्ये वा, वृतुवरणे' इत्येवम्, 'तप ऐश्वर्ये, वावृतु वरणे' इत्येवञ्चोभयथा सन्धिविच्छेदमपि पाणिनीयमेवाह । तथा हि—

"अस्माकं तूभयमपि प्रमाणम्; आचार्येणोभयथा शिष्याणां प्रतिपादनात्" ( मा० धा० पृ० ४१८ ) ।

६. यदि हि पाणिनीये धातुपाठेऽर्थनिर्देशोऽपाणिनीयः स्यात्तर्हि समाने प्रघट्टके एकस्यैव धातोः द्विः पाठो नोपपद्यते । धातुस्वरूपनिदर्शनाय सकृत्पाठ एव पर्याप्तः स्यात् । तथा हि—

( क ) अट्टादिषु हुडेः—हुडि सङ्घाते, ( भ्वा० १७२ ), हुडि वरणे ( भ्वा० १८० )।

( ख ) शौट्टादिषु किटः—किट खिट त्रासे ( भ्वा० २०१ ) इट किट कटी गतौ ( भ्वा० २१५ )।

( ग ) मव्यादिषु खेलः—केल्ट खेल क्ष्वेल्ट वेल्ल चलने ( भ्वा० ३५२ ) पेल्ट खेल्ट शेल्ट षेल्ट गतौ ( भ्वा० ३५३ )।

७. एवमेव धात्वर्थानामपाणिनीयत्वे समानार्थकेषु सकृत् पठितस्य धातोरुत्तरसूत्रे एवान्यार्थनिर्देशाय पुनः पाठो नोपपद्यते। यथा—

( क ) रघिलघि····गत्यर्थाः ( भ्वा० ७७ ), लघि भोजननिवृत्तावपि ( क्षी० त० भ्वा० ७६ )।

( ख ) गज गजि···शब्दार्थाः ( भ्वा० १५५ ), गज मदने च ( भ्वा० १५६ )।

( ग ) तय णय गतौ ( भ्वा० ३१२ ) तय रक्षणे च ( भ्वा० ३१२ )। एवमन्यत्रापि द्रष्टव्यम्।

अथ च धात्वर्थनिर्देशस्यापाणिनीयत्वे एकस्य धातोः समाने प्रघट्टके सकृत् प्रवचनमेव सम्भवति, न द्विः, अर्थनिर्देशाभावेऽर्थभेदात् पुनः पाठे हेत्वभावात्। यदि हि नाम केनचिदर्वाक्कालिकेनार्थविरहिते पाणिनीये पाठे धातुभिः सह अर्थसंयोजनं कृतं स्यात्तर्हि एकस्य धातोर्द्वावर्थावेकस्मिन्नेव स्थाने निर्दिशेत्, न तु पाणिनिना सकृत्पठितस्य धातोरर्थभेदाद् द्वयोः स्थानयोः पाठं कुर्यात्। अनेन ज्ञायते–यथा पाणिनिना सूत्रपाठे 'बहुलं छन्दसि' इति समानवर्णानुपूर्वीकं सूत्रमर्थभेदाच्चतुर्दशसु स्थानेषु पठितम्, तथैव धातुपाठेऽप्येक एव धातुरर्थभेदाद् द्विस्त्रिर्वा पठित इति।

एतैः प्रमाणैर्धातूनामार्थनिर्देशः पाणिनीय एवेति विष्पष्टमुक्तं भवति। इति।

**धातुपाठो द्विधा प्रोक्तो लघुवृद्धविभेदतः**

वस्तुतस्तु भगवता पाणिनिनोभयथा धातुपाठप्रवचनं कृतम्। तत्र तेन केचन अर्थनिर्देशरहिताः 'भ्वेधस्पर्ध' इत्येवं धातव एव संहितापाठेन प्रतिपादिताः। अपरे 'भू सत्तायाम्, उदात्तः। एध वृद्धौ' इत्येवमर्थनिर्देशसहिताः। अस्यामुपपत्तौ महाभाष्यमेव प्रमाणम्।

तथा च अर्थनिर्देशरहितो धातूनां संहितापाठः 'लघुपाठः' इति वैयाकरणनिकाये प्रसिद्धः, सार्थनिर्देशो धातुपाठश्च 'वृद्धपाठः' इति।

अष्टाध्याय्या व्याख्यानग्रंथानामालोडनेन शैली चेयमाचार्यस्य—इत्यनुमीयते। तथा च यथा अष्टाध्याय्यां भाष्यवार्त्तिककृतोर्व्याख्यानं लघुपाठमाश्रित्य, काशिकाकारा दीनाञ्च व्याख्यानं वृद्धपाठमाश्रित्येति द्विधा व्याख्यानमुपलभ्यते; एवमेव धातुपाठस्यापि द्विधाप्रवचनस्वीकारे सर्वं समञ्जसं स्यात्। परम्परा चेयं प्राचीनानामाचार्याणाँ लघुवृद्धपाठप्रवचनरूपेति पुष्कलं संस्कृतवाङ्मयमप्यत्र प्रमाणमिति दिक्।

यच्च मैत्रेय-भट्टोजिदीक्षित-नागेशादयो धात्वर्थनिर्देशं भीमसेनकृतं मन्यन्ते, तत्तु भाष्याद्यपर्यालोचनविजृम्भितमेव। भीमसेनो नाम कश्चिद् वैयाकरणः सायणाचार्यादिवद् धातुपाठं व्याख्यातवानित्येव वक्तुं शक्यते, न तु तेन धात्वर्थनिर्देशोऽपि कृत इत्यपि; भाष्यादिविरुद्धत्वात्।

### वृद्धपाठत्रये तावज्ज्येष्ठः सायणसंस्कृतः

तत्र धातूनामर्थनिर्देशविरहितो लघुपाठश्शनैः शनैः पठने पाठने चोपयोगाभावाद् विरलतामगात्। सार्थनिर्देशो वृद्धपाठस्तु अध्ययनाध्यापने बहुलप्रचारत्वादिदानीं सर्वत्रोपलभ्यते। सोऽयं वृद्धपाठस्त्रिविध इति वैयाकरणेषु प्रसिद्धम्। अत्रेदं वक्तव्यम्—

यथा निखिलसंस्कृतवाङ्मये अन्येषां बहूनां ग्रन्थानां देशभेदेन विविधाः पाठा उपलभ्यन्ते, तथैव पाणिनीयशब्दानुशासनस्यापि स्थितिः पाणिनेरष्टाध्याय्याः काशिकावृत्तिसम्मतः पाठः पौरस्त्यैः प्रमाणत्वेनाश्रीयते। दाक्षिणात्यस्तत्रभवान् कात्यायनश्च यं पाठमाश्रित्य वार्त्तिकानि प्रणिनाय स दक्षिणेषु एव प्रमाणम्। क्षीरस्वामी च यं सूत्रादिपाठं क्षीरतरंगिण्यादिषु निर्दिशति स पश्चिमोत्तरशाखीयः। एवमर्थनिर्देशसहितस्य वृद्धधातुपाठस्यापि देशभेदेन त्रयः पाठा उपलभ्यन्ते। तत्र प्राच्याः मैत्रेयप्रभृतयो यं पाठमाद्रियन्ते, स पूर्वदेशीयः पाठः। क्षीरस्वाम्यादयो यं पाठमाश्रयन्ति स पश्चिमोत्तरदेशेषु प्रमाणत्वेन स्वीकृतः। आचार्यपाल्यकीर्त्तेरुपजीव्यभूतः पाणिनीयधातुपाठश्च दाक्षिणात्यसम्मतो धातुपाठः—इत्यनुमीयते, न त्विदानीं स साक्षादुपलभ्यते।

सम्प्रति यः पाणिनीयो धातुपाठो वैयाकरणैराद्रियते स सायणाचार्यैः परिष्कृतो वर्त्तते इत्यैतिह्यपृष्ठानि प्रमाणम्।

### धातुपाठेऽव्यवस्थायां विचारः क्रियतेऽधुना

अत्रैवं विचार्यते परमविदुषा श्रीयुधिष्ठिरमीमांसकेन सूक्ष्मेक्षिकया—

"यः खल्वर्थनिर्देशसहितो धातुपाठः सम्प्रत्युपलभ्यते, तत्र पठानां महत्यव्यवस्था दृश्यते। तत्र केषाञ्चिद्धातूनां क्रमविपर्यासः, केषाञ्चिदर्थविपर्ययः,

केषाञ्चिदभावः, केषाञ्चिच्च पुनराधिक्यमपि दृश्यते। नहि धातुपाठस्य कयोरपि द्वयोर्व्याख्यानयोस्समानः पाठ उपलभ्यते। एषा चाव्यवस्था चिरकालादेव प्रसृता, उत्तरोत्तरं च वृद्धिंगता। तथा हि—

( १ ) "जक्षित्यादयः षट्···न वार्थः परिगणनेन, आगणान्तमभ्यस्तसंज्ञा। इहापि तर्हि प्राप्नोति—आङः शासु·····।" ( महा० ६।१।६ )

एतेन भाष्यवचनेन स्पष्टं यद् भगवतः पतञ्जलेः काले 'आङः शासु इच्छायाम्' इत्यस्य धातोः 'वेवीङ् वेतिना तुल्ये' (मा० धा०, अ० ८५ सू० ) इत्यनन्तरं क्वचित् पाठ आसीत्। भाष्यव्याख्यातुः कैयटस्य कालेऽपि 'आङः शासु' धातोः 'वेवीङ्' उत्तरं पाठो नासीदिति तदीयव्याख्यानतो विज्ञायते। एतेन कैयटात् प्रागेव केनचिद्विदुषा 'आङः शासु' धातोः 'आस उपवेशने' (अ० १४) इत्यनन्तरं पाठः परिवर्तितः स्यात्।

२. आगणान्तमभ्यस्तसंज्ञायां येऽन्ये तत्र धातवस्तेभ्योऽभ्यस्तकार्यं प्राप्नोति, तत्परिहरन्नाह भाष्यकारः—"षसिवसी छान्दसौ" ( ६।१।६ )। अत्राह कैयटः—'षस् शस्ति स्वप्ने इति ये न पठन्ति, केवलं षस् स्वप्ने, वश कान्तौ इति, तन्मतेनैतदुक्तम्'। इति।

एतेन स्पष्टं यत् कैयटकाले द्विविधः पाठ आसीदिति। अयं द्विविधः पाठोऽद्यापि लभ्यते। यथा धातुप्रदीपे वृत्तौ च—'षस् सस्ति स्वप्ने, वश कान्तौ' इति; क्षीरतरंगिण्याञ्च—'षस् स्वप्ने; वश् कान्तौ' इति।

३. माधवीयधातुवृत्तिकारः सायणो बहुत्रेत्थं लिलेख—

(क) 'इह केचिद् 'धृञ् धारणे' इति पठन्ति सोऽनार्षः···। अस्माभिस्तु मैत्रेयाद्यनुरोधेन ञित्प्रकरणे हृरत्यनन्तरं पठित्वाऽयमुदाहृतः'। ( मा० धा० २६६ पृ० )

(ख) 'गाङ् गतौ···'गापोष्टक्' इत्यत्र न्यासपदमञ्जर्योरयं धातुरादादिक इति स्थितम्। शपि पाठे चास्य प्रयोजनं नास्ति। अस्माभिस्तु क्वाप्ययं पठितव्य इति मैत्रेयाद्यनुसारेणेह पठितः।" ( मा० धा० २६७ पृ० )

(ग) 'षच समवाये···एवं च न्यासकारादीनां बहूनामभिमतत्वादयं धातुरस्माभिः पठितः।' ( मा० धा० २९२ पृ० )

(घ) 'यथा तु भाष्य-वृत्ति-न्यास-पदमञ्जर्यादिषु, तथायं धातुर्नेति प्रतीयते इति जीर्यतावुपपादितम्। आत्रेयमैत्रेयपुरुषकारादिषु दर्शनादिहास्माभिर्लिखितम्।' ( मा० धा० २९५ पृ० )

( ङ ) 'एते पञ्चदश स्वामि-काश्यपानुसारेण लिख्यन्ते।' ( मा० धा० ५६२ पृ० )

(च) 'तत्राद्यो वृहिश्च मैत्रेयाद्यनुरोधेन दण्डके पठितः।' (मा० धा० ५६२ पृ०)

(छ) "डु कृञ् करणे' इति भूवादौ पठ्यते।...अनेन प्रकारेणास्माभिर्धातुवृत्तावयं धातुर्निराकृतः।" (ऋग्भाष्यम् १।८२।१)।

४. क्षीरस्वामी धातुपाठागमभ्रंशात्खिन्नमना आह—

पाठेऽर्थे चागमभ्रंशान्महतामपि मोहतः।
न विद्मः किं नु जह्मिः किं वात्रादध्महे वयम्।।"

(क्षी० त० पृ० २७८)

५ महाभाष्ये (१।३।१) पठ्यते—"ईडिः स्तुतिचोदनायाच्ञासु दृष्टः...।" सम्प्रति धातुपाठे 'ईड स्तुतौ' इत्येव पठ्यते चोदनायाच्ञार्थौ नोपलभ्येते।

एभिः प्रमाणैर्हस्तामलकवद् विस्पष्टं भवति—यत् पाणिनीयधातुपाठे चिरकालात् पाठविपर्यासारम्भोऽभूत्।

## धातूनां संहितापाठो वृत्तिकारैः समाश्रितः

यथा महाभाष्यकारादिभिरष्टाध्याय्यां सूत्राणां संहितापाठस्यैव प्रामाण्यमभ्युपगम्यते, तथैव धातुपाठेऽपि तत्तद्व्याख्याकारैः धातुसूत्राणां संहितापाठस्यैव प्रामाण्यं स्वीक्रियते। अत एव यत्रतत्र 'तपऐश्वर्येवावृतुवरणे' 'पतगतौवापशानुपसर्गात्' इत्यादौ विवदन्ते ते ते धातुवृत्तिकाराः। अयं व्याख्यानभेदो संहितापाठमाश्रित्यैव सम्भवति, नान्यथा।

यश्च संहितापाठं प्रमाणीकृत्य विविधः सूत्रविच्छेदः प्रदर्शितस्तत्रतत्राचार्यैः, स पाणिनीय एवेति वैयाकरणानां परम्परा। इयमेवोररीकृत्य 'तपऐश्वर्येवावृतुवरणे' इत्यत्राह आचार्यः सायणः—

"अस्माकं तूभयमपि प्रमाणम्, आचार्येणोभयथा शिष्याणां प्रतिपादनात्" (मा० धा० पृ० ४१८)।

अयं भावः—धातुपाठं प्रवचताऽऽचार्येण पाणिनिना केचन शिष्याः 'तप ऐश्वर्ये वा, वृतु वरणे' इत्येवं विच्छिद्य प्रतिपादिताः, केचन च 'तप ऐश्वर्ये, वावृतु वरणे' इत्येवमिति।

## आचार्याः सायणादन्ये धातुवृत्तिकृतस्त्विमे

पाणिनिप्रोक्तधातुपाठं सायणाचार्यादन्येऽप्याचार्या व्याख्यातवन्तः; परन्त्विदानीं तेषु केषाञ्चिदेव कृतय उपलभ्यन्ते। ईदृशामुपलब्धकृतीनामाचार्याणामेव संक्षिप्तवर्णनं प्रसंगप्राप्तं प्रस्तूयते—

१. पाणिनिः—यथा पाणिनीयाः 'उभयथा ह्याचार्येण शिष्याः सूत्रं प्रतिपादिताः—केचिदाकडारादेका संज्ञा, केचित् प्राक्कडारात् परं कार्यम्' (म० भा०

१।४।१); 'शुंगाशब्दमन्ये पठन्ति, ततो ढकं प्रत्युदाहरन्ति—शौंगेय इति । द्वयमपि चैतत् प्रमाणम्, उभयथा सूत्रप्रणयनात्' ( काशि० ४।१।११८ ) इति महाभाष्य-काशिकादिप्रामाण्येन पाणिनीयसूत्राणां काञ्चित् पाणिनिकृतां वृत्तिं स्वीकुर्वन्ति; एवमेवाचार्येण धातुपाठं प्रवचता तत्रापि काचिद् वृत्तिः कृतेति पूर्वोक्ताभिर्युक्तिभिः प्रमाणयितुं शक्यते । अतो वयमिदं स्वीकुर्मो यत्पाणिनीयधातुपाठे प्रथमो वृत्तिकार आचार्यः पाणिनिः स्वयमेवासीदिति ।

२. सुनागः—महाभाष्ये बहूनि सौनागवार्त्तिकानि प्राप्यन्ते, पदमञ्जरीकारहरदत्तमतानुसारमाचार्यः सुनागस्तेषां प्रवक्ता । कैयटश्चेममाचार्यं कात्यायनादर्वाचीनं मन्यते । माधवीयायां धातुवृत्तावपि शकधातौ, असधातौ, शक्लृधातौ च सौनागमतनिर्देशेन, 'सौनागाः कर्मणि शकेरिटमिच्छन्ति विकल्पेन, अस्यतेर्भावे" इति 'विभाषा भावादिकर्मणोः' ( ७।२।१७ ) इत्यत्र काशिकावृत्तौ सौनागमतोद्धरणेन चानुमीयते पाणिनीयधातुपाठे सौनागवृत्तिः । क्षीरस्वामी अप्येकत्र धातुविषयकं सौनागमतमुद्धरति ( क्षी० त० ३ पृ० ) इति सुनागोऽपि धातुवृत्तिकार इति निश्चीयते ।

३. भीमसेनः—धातुप्रदीपकर्ता मैत्रेयः, उमास्वातिभाष्यव्याख्याता सिद्धसेनगणिः, अमरटीकासर्वस्वकारः सर्वानन्दः, कविकल्पद्रुमटीकाकारो दुर्गादासः, दैवव्याख्याता कृष्णलीलाशुकमुनिः; भट्टोजिदीक्षितनागेशप्रभृतयश्च स्वस्वग्रन्थेषु बहुत्र धातुविषयकं भीमसेनमतमुल्लिलिखुः । एतेन विज्ञायते यद्भीमसेनाख्येन पाण्डुपुत्रवृकोदरादतिरिक्तेन केनचिद्विदुषा काचिद्धातुवृत्तिर्विरचितेति । 'पाणिनीयधातूनामर्थनिर्देशकोऽयमेव भीमसेनः' इति मतं त्वस्माभिः पूर्वं युक्तिभिः खण्डितमेव ।

४. क्षीरस्वामी—शाब्दिकमूर्धन्यः क्षीरस्वामी 'क्षीरतरंगिणी'—नाम्ना पाणिनीयधातुपाठं व्याख्यातवान् । व्याख्यानमिदमुपलभ्यमानेषु व्याख्यानेषु प्राचीनतमं महत्त्वपूर्णञ्च । अत एव मैत्रेयसायणवर्धमानप्रभृतयस्ततोऽर्वाचीना धातुवृत्तिकाराः आचार्याश्च क्षीरस्वामिमतं पदे पदे समुद्धरन्ति—क्वचित्तदुक्तिखण्डनाय, क्वचित् परमतदूषणे दार्ढ्याय, स्वमतदूषणनिरासाय वा ।

अयमाचार्यः कस्मिन् काले कस्मिन् देशे च समुत्पन्न इति न शक्यते दृढं वक्तुम् ।

'न्याय्ये वर्त्मनि वर्त्तनाय भवतां षड् वृत्तयः कल्पिताः' इति क्षीरतरंगिण्युपोद्घातश्लोकप्रामाण्येन च विज्ञायते यदनेनाचार्येण क्षीरतरंगिणीं विहायान्या अपि अमरकोशोद्घाटनादयः पञ्च वृत्तयो विरचिताः ।

५. मैत्रेयः—बौद्धविदुषा श्रीमैत्रेयरक्षितेन पाणिनीयधातुपाठे एका संक्षिप्ताकारा वृत्तिर्धातुप्रदीपनाम्ना कृता। अयं मैत्रेयरक्षितः पाणिनीयतन्त्रस्यासामान्यपण्डित आसीदिति धातुप्रदीपसमीक्षया प्रतीयते। यथाचोक्तं तेनापि स्वयमेव धातुप्रदीपान्ते—

आकृष्य भाष्यजलधेरथ धातुनामपारायणक्षपणपाणिनिशास्त्रवेदी।
कालापचान्द्रमततत्त्वविभागदक्षो धातुप्रदीपमकरोज्जगतो हिताय॥ इति।

अत एवार्वाचीनैराचार्यैः सायणप्रभृतिभिरपि स्व-स्व-धातुवृत्तिषु मैत्रेयव्याख्यात एव पाणिनीयधातुपाठः प्रमाणतया स्वीकृतः। 'योऽयं पाणिनिधातुपाठः साम्प्रतमध्ययनाध्यापने प्रयुज्यते, सोऽपि मैत्रेयव्याख्यात एव, सायणाचार्येण तु स केवलं प्रतिसंस्कृतः' इति मतं माधवीयधातुवृत्तिपर्यालोचनानन्तरं दृढं स्वीकर्तुं शक्यते।

'वृत्तिन्यासं समुद्दिश्य कृतवान् ग्रन्थविस्तरम्।
नाम्ना तन्त्रप्रदीपं यो विवृतास्तेन धातवः'॥

इति धातुप्रदीपोपसंहारश्लोकप्रामाण्येन तन्त्रप्रदीपोऽप्यन्या कृतिर्मैत्रेयरक्षितस्येति निश्चीयते।

अयमाचार्यः कदा क्व च जन्म लेभे इत्यविदितचरमेव। केचित्त्वस्य धातुप्रदीपे बहुत्र बवयोरभेदेन व्याख्याने पाणिनीयतन्त्रे प्रमादाद् वांगत्वमस्यानुमिन्वन्ति।

६. देवः—अनेन विदुषा "दैवम्" इति नाम्नैकः श्लोकात्मकः प्रकरणग्रन्थो निबद्धः। अस्मिन् ग्रन्थे पाणिनीयधातुपाठेऽनेकत्र पठितानां सरूपाणां धातूनां पाठप्रयोजनविचारः कृतः। अयमाचार्यो मैत्रेयरक्षितादर्वाचीन इति ऐतिह्यविदां मतम्। माधवीयायां धातुवृत्तौ सायणाचार्येण दैवस्य; अस्य वार्त्तिकस्य पुरुषकारस्य चासकृन्निर्देशः स्वोक्तप्रामाण्यार्थं कृत इति प्रामाणिकोऽयं धातुवृत्तिकार आसीदित्यवसीयते।

७. श्रीकृष्णलीलाशुकमुनिः—अनेनाचार्येण 'दैव' ग्रन्थस्य 'पुरुषकार' नामकं वार्तिकं लिखितम्। अस्मिन् ग्रन्थे पाणिनीयेतरव्याकरणसम्प्रदायग्रन्थानामपि अनुपदमुद्धरणदर्शनादस्याचार्यस्यानेकतन्त्रनिष्ठं ज्ञानमासीदिति स्फुटं भवति। सायणेन स्वकीयायां धातुवृत्तावयमस्य ग्रन्थश्च बहुधा निर्दिष्टौ।

आचार्योऽयं १२००तमे वैक्रमाब्दे जात इत्यैतिह्यविदः।

८. अन्ये आचार्याः—अपरेऽपि शतश आचार्याः काले काले पाणिनीयधातुपाठं व्याचख्युः। तेषु केचित् सायणाचार्येण स्वकीयायां धातुवृत्तौ स्मृताः स्वमत-

परमतविवादेषु। तेषां नामानि चास्माभिरत्र ग्रन्थान्ते प्रथमपरिशिष्टे संगृहीतानीति तानि तत्र एवावगन्तव्यानि।

## धातुवृत्ते रचयितुः सायणार्यस्य जीवनम्

व्याघ्रभूत्यादिभिराचार्यैः, मैत्रेयरक्षितक्षीरस्वाम्यादिविद्वद्भिश्च प्रणीतेषु प्राचीनेष्वर्वाचीनेषु च नानाविधेषु धातुव्याख्यानेषु सत्स्वपि तेषु सायणाचार्यविरचितं 'माधवीयधातुवृत्ति' नामकमेतत्प्रस्तुतं व्याख्यानं सर्वोपकारकं सुगमतमं चेति निर्विवादम्।

को हि नाम संस्कृतभाषाभिज्ञः सहृदयः वेदभाष्यकर्त्तुः सायणाचार्यस्य नाम्नोऽनभिज्ञः। वेद-व्याकरण-काव्य-कोश-न्याय-साहित्यैतिह्य-धर्मशास्त्रादिनानाविधेषु विषयेषु प्रसन्नगम्भीरया सुललितया गिरा ग्रन्थराशिं विरचयद्भिरेभिराचार्यपुङ्गवैः सुतरां सत्यापितं खल्विदं पदम्—'भारद्वाजकुलेश सायण! गुणैस्त्वत्तस्त्वमेवाधिकः' इति। यद्यप्येभिः पूर्वाचार्यपरम्परयैव प्रायः सर्वेऽपि ग्रन्था रचितास्तथापि सर्वेष्वपि विषयेषु एषां काप्यतितलस्पृग्रचनाशैली महतीं चित्तचमत्कृतिं जनयति, धूनोति चावश्यं सहृदयानां विदुषां शिरांसि!

अयमाचार्यः १३७२तमे वैक्रमाब्दे मायणगृहे सम्भूतः। अस्य पितुर्नाम 'मायणः' इति, मातुश्च 'श्रीमती' इति। भ्रातरौ च द्वौ। तत्र ज्येष्ठो माधवाचार्यः प्रसिद्धः, कनिष्ठश्च भोगनाथः कविः। अयं गोत्रेण भारद्वाजः, शाखया तैत्तिरीयः, सूत्रेण च बौधायन आसीत्। 'यज्ञनारायणार्य' इत्यस्य नाक्षत्रं नाम। त्रयश्चास्य विद्यागुरवः—श्रीविद्यातीर्थ-भारतीतीर्थ-श्रीकण्ठनामानः।

पाणिनीयव्याकरणे, मीमांसायाम्, वेदेषु च निष्णातोऽयमासीदित्येतत्कृतग्रन्थपर्यालोचनया स्पष्टं प्रतीयते।

विजयनगरराज्याधीश्वरस्य संगममहीपतेरयं महामन्त्री, कुलगुरू राज्यप्रबन्धकश्चासीत्। संगममहीपतिश्च संगम प्रथम )सुतस्य बुक्कमहीपतेः हरिहरसहोदरस्य कम्पराजस्य सुतः १४१२ वैक्रमाब्दत १४२० वैक्रमाब्दं यावत् विजयनगरराज्यं शशास।

अस्यैव राज्यप्रबन्धकालेऽयमाचार्यः सतीष्वपि प्राक्तनीषु धातुवृत्तिषु, तत्रत्यान् दुरुक्तानुक्तादिविषयान् परिहृत्य लोकोपकारकमिदम् 'माधवीयधातुवृत्ति' नामकं नवीनं ग्रन्थरत्नं प्रादुरभावयत्।

यथोक्तमनेन धातुवृत्तेरारम्भे—

'अस्ति श्रीसङ्गमक्ष्मापः पृथ्वीतलपुरन्दरः।
यत्कीर्त्तिमौक्तिकादर्शे त्रिलोक्या प्रतिबिम्ब्यते' ॥ ४ ॥

'तस्य मन्त्रिशिरोरत्नमस्ति मायणसायणः।
यः ख्याति रत्नगर्भेति यथार्थयति पार्थिवीम्' ॥ ८॥
'तेन मायणपुत्रेण सायणेन मनीषिणा।
आख्यया माधवीयेयं धातुवृत्तिर्विरच्यते' ॥ १३॥

एवमेव तत्तत्प्रकरणसमाप्तावपि—

"इति श्रीपूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसङ्गममहाराजमहामन्त्रिणा मायणपुत्रेण सायणाचार्येण विरचितायां माधवीयायां धातुवृत्तौ" इत्यादि।

तदेवं धातुवृत्तिरचनाकालः १४१२ वैक्रमाब्दात् १४२० पर्यन्तमस्तीति स्पष्टम्।

सोऽयं महामनाः सायणो विजयनगराधिपतेः प्रथमस्य हरिहरस्य कम्पणनाम्नोऽनुजस्य (वै० सं० १४०३-१४१२) मन्त्रिपदम्, तदनु तत्पुत्रस्य सङ्गमस्य (वै० सं० १४१२-१४२०) मन्त्रिपदं शिक्षकपदञ्चालञ्चकार। अन्ते च प्रथमस्य बुक्कनृपतेः (वै० सं० १४२१-१४३७), द्वितीयस्य हरिहरस्य (वै० सं० १४३८-१४४४) चामात्यपदधुरं वोढ्वा १४४४ वैक्रमाब्दे स्वर्जगाम।

## कुण्डिनार्यो यज्ञनारायणः सायण एव हि

अस्माभिरनुपदमेवोक्तम्—"यज्ञनारायणार्यः' इति सायणाचार्यस्य नाक्षत्रं नाम" इति; परन्त्वत्र विप्रवदन्ते विद्वांसः। यथा हि ग्रन्थस्यास्य महिशूरसंस्करणसम्पादकाः तत्संस्करणभूमिकायामाहुः—

"इदं पुनर्हि नश्चिन्तास्पदं यदस्या धातुवृत्तेरन्तःप्रविश्य विमर्शने सायणार्यादन्य एव कश्चित्कर्ताऽस्याः प्रतीयते इति। तथा हि —उपोद्घातपद्येभ्यः परतः कस्मिंश्चित्प्राक्तने कोशे इदं पद्यं दृश्यते—

'सुधा तु वृत्तिर्विहिता बुधानां श्रीवत्सचिह्नेन कृते हि नाके।
सुधातुवृत्तिर्विहिता बुधानां श्रीकुण्डिनार्येण कलावपीह ॥' इति।

तदनेन कुण्डिनार्यो धातुवृत्तेर्निर्मातेति स्पष्टम्। अनन्तरं तु तत्तद्धातुप्रक्रियानिरूपणे यज्ञनारायणोऽस्या निर्मातेत्यवगम्यते। यथा भ्वादौ क्रमधातुप्रक्रियान्ते—

'यज्ञनारायणार्येण प्रक्रियेयं प्रपञ्चिता।
अस्या निःशेषतः सन्तु बोद्धारो भाष्यपारगाः ॥' इति।

(मा० धा० पृ० ९५)

तथा तत्रैव मव्यतिप्रक्रियाया अन्ते—'यथा तु भाष्यं तथाऽस्य न यङ्लुगस्ति।
अथापि शिष्यबोधाय प्रक्रियेयं प्रपञ्चिता।
यज्ञनारायणार्येण बुद्धयन्तां भाष्यपारगाः ॥' इति।

(मा० धा० पृ० १४४)

वदधातुप्रक्रियाप्रकरणेऽपि—वदते यज्ञनाराणायः, भासमानस्तत्र सूत्रार्थं वक्तीत्यर्थः। वदते यज्ञनारायणार्यः, जानाति वक्तुमित्यर्थः।" इति (पृ० ११)

मीमांसकमनीषी अपि क्षीरतरंगिणीभूमिकायां सायणप्रसंगे आह—

"येयं महती (योऽयं महान्) ग्रन्थराशिः सायणनाम्नोपलभ्यते न सा सर्वा (स सर्वः) सततममात्यपदभारमुद्वहता सायणेनैव विरचिता (विरचितः), अपि तु तेन स्वस्य सहायकैर्बहुभिः पण्डितैर्निर्मापिता (निर्मापितः) इति विद्वत्समाजे प्रसिद्धिर्वर्तते। अत एव तन्नाम्ना प्रसिद्धेषु ग्रन्थेषु यत्र तत्र पारस्परिको विरोधोऽप्युपलभ्यते। सत्येवं माधवीया धातुवृत्तिस्तेन स्वयं विरचिता, आहोस्वित् तत्सहायकेनान्येनैव केनचिद् विदुषा निर्मिता इति सन्देहो जागर्त्येव। धातुवृत्तौ 'क्रमु पादविक्षेपे' इति सूत्रव्याख्यानान्ते पठ्यते—

'यज्ञनारायणार्येण प्रक्रियेयं प्रपञ्चिता।
तस्याः निःशेषतस्सन्तु बोद्धारो भाष्यपारगाः ॥ (पृ० ९५)

एवं 'मव्य बन्धने' इति सूत्रान्तेऽपि—

'अत्रापि शिष्यबोधाय प्रक्रियेयं प्रपञ्चिता।
यज्ञनारायणार्येण बुध्यन्तां भाष्यपारगाः' ॥ (पृ० १४४)

उभयत्र स्मृतो यज्ञनारायणः किं सायणस्यैव नामान्तरम्, उत तत्सहायकस्य धातुवृत्ते रचयितुर्वास्तविकं नामेति सन्देहनिर्गमकं न किञ्चित्प्रमाणमुपलभ्यते। वयं त्वनुमिनुमो यदयं यज्ञनारायणः सायणस्य सहायको धातुवृत्ते रचयिता स्यात्।" इति। (क्षी० त० भूमि० ३९-४० पृ०)।

जेकब्प्रभृतयः पाश्चात्त्या विद्वांसोऽपि मीमांसकमतमेवोररीकुर्वन्ति।

माधवीयधातुवृत्तिसम्पादकाः भारद्वाजदामोदरशास्त्रिणस्तु नामधातुवृत्तिभूमिकायां विभिन्नं मतमुपस्थापयन्ति। यथा हि—

"एतस्य ग्रन्थकर्तुः सायणेति कुलनाम्नैव प्रसिद्धिरिति माधवीयधातुवृत्तीविवृत्तनिरूपणे विस्तरेण व्यवस्थापितम्। व्यावहारिकं तु नाम (क्रमधातौ पृ० ९५)।

'यज्ञनारायणार्येण प्रक्रियेयं प्रपञ्चिता।
तस्याः निःशेषतस्सन्तु बोद्धारः भाष्यपारगाः ॥' इति।

मव्यधातौ (पृ० १४४) च—

'अत्रापि शिष्यबोधाय प्रक्रियेयं प्रपञ्चिता ।
यज्ञनारायणार्येण बुध्यन्तां भाष्यपारगाः ॥ इति

माधवीयधातुवृत्तिस्थश्लोकाभ्याम् 'यज्ञनारायण' इति निर्धार्यते ।'' इति ।

अहो बत महत्कष्टं यच्चैः कलाकुशलैः कोविदैः स्वकोयाभिः कमनीयाभिः कृतिभिः संस्कृतसाहित्यभाण्डागारं सम्पूरितम्, येषां कृपाप्रसादेन च संस्कृतसाहित्यं विश्वसाहित्यमुकुटमणिवद्राजते, तेषां जीवनेतिवृत्तविषये सामान्यतोऽपि वयं वञ्चिताः । तेषां विषये वयं यत्र तत्र विकीर्णैः कैश्चित् प्रामाणिकवचनैरेव किञ्चिज्ज्ञातुं शक्नुमः ।

सायणविषये पाश्चात्त्यानुसारि मीमांसकमनीषिमतं केवलं कल्पनाश्रितम् । यदि कल्पनयैव सर्वं साध्यते, तर्हि इत्थं कल्पनीयं येनास्माकमिष्टसिद्धिः स्यात्, आचार्यस्य चादरातिशयो भवेत् । यद्यपि भारद्वाजशास्त्रिमतमपि कल्पनाश्रितमेव, तथापि तद्युक्तियुक्तम् । भवति हि भारतीयानां नामद्वयम् । एकं व्यावहारिकं येन सर्वे पुरुषा व्यवहरन्ति । द्वितीयं नाक्षत्रम्, यद्धि केवलं नित्यनैमित्तककाम्यकर्मानुष्ठानकाल एवोपयुज्यते । अतः साध्वीयं कल्पना युज्यते—सायणेति नाम व्यावहारिकं वंशपरम्पराप्राप्तमाचार्यस्य, यज्ञनारायणेति च नाक्षत्रं नाम । कुण्डिनार्येति तु तस्यैव पर्यायभूतमित्यनर्थान्तरम्, अपपाठो वा । महिशूरसंस्करणसम्पादका अपि अन्ते सामान्येनास्माकमेव कल्पनापथमवलम्बन्ते । यथा हि—

"यद्वा—कल्पनायास्सर्वपथीनत्वात्, इत्यपि कल्पयितुं युज्यते—यथा अधुनाऽस्माभिरुपलब्धेषु कोशेषु एकत्रैव 'सुधातुवृत्तिः' इति पद्यमुपलभ्यते, ततोऽत्र 'श्रीकुण्डिनार्येण' इत्येष 'श्रीसायणार्येण' इत्यस्य स्थाने लेखकप्रमादकृतोऽपपाठ एव नूनं स्यात् ।···तथा 'यज्ञनारायणार्यः' इत्यप्यस्यैव सायणार्यस्य सांस्कारिकं नाम । 'सायण' इति वंशनाम्ना व्यवहारसिद्धं नाम । 'सर्वदर्शनसंग्रह'—उपक्रमस्थेन—

'श्रीमत्सायणदुग्धाब्धिकौस्तुभेन महौजसा ।
क्रियते माधवार्येण सर्वदर्शनसंग्रहः' ॥

इत्यनेन पद्येन सायणेति वंशनामापीति स्पष्टं प्रतीयते ।

यथा हि सामवेदभाष्योपक्रमे–'पञ्चाग्निना माधवेन श्रीनारायणसूनुना' इति मायणपुत्रत्वेनान्यत्रोल्लिखितस्यापि स्वस्य माधवाचार्येण नारायणसूनुत्वाभिधानात् मायणस्यैव 'नारायण' इति सांस्कारिकनामान्तरमिति कल्प्यते, तथैवास्यापि सायणस्य माधवसहोदरस्य 'यज्ञनारायणार्य' इति सांस्कारिकनामान्तरकल्पना नात्यन्तमनुपपन्ना ।" इति ।

### वैशिष्ट्यं माधवीयाया धातुवृत्तेरिदं किल

"माधवीयधातुवृत्तेः प्राचीने द्वे पाणिनीयधातुपाठव्याख्याने क्षीरस्वामिमैत्रेयरक्षितकृते समुपलभ्येते। परं ते अत्यन्तं संक्षिप्ते स्तः। तयोरपि मैत्रेयकृतो धातुप्रदीपः संक्षिप्ततरः। नैताभ्यां विद्वांसोऽपि धातुकान्तारावगाहनं कर्तुं शक्ताः, किं पुनरकृतधियः! नैव च तयोः प्रतिधातु णिजन्तसन्नन्तादिरूपाणि प्रदर्श्यन्ते। माधवीयायां धातुवृत्तौ तु खलु प्रायेण सर्वेषां धातूनां णिजन्तादिप्रक्रियाः संक्षेपतः प्रदर्श्यन्ते। अपि च सन्दिग्धेषु रूपेषु विविधमतान्युद्धृत्य निर्णयो विधीयते। यद्यप्यनेकत्र परमसूक्ष्मविचारचर्चया काठिन्यमपि समपद्यत, तथापि कृतधियां विपश्चितामध्यापकानां कृते इयं परमसाहाय्यमातनुते। भट्टोजिदीक्षितकृतसिद्धान्तकौमुद्याः प्रचारतः पूर्वं धातुपाठस्य कीदृशी अध्यापनप्रवृत्तिः पाणिनीयेष्वासीदित्यस्य वास्तविकं रूपमत्रैवोपलभ्यते। किं बहुना, आर्षपाठविधना अध्यापकानामध्येष्यमाणानाञ्च काशिकावृत्तिरिवेयमपि प्रधानसहाभूता वर्तते।"

इत्थं श्रीयुधिष्ठिरमीमांसकमहोदयाः व्याकरणशास्त्रस्येतिहासे माधवीयां धातुवृत्तिं संवर्णयन्ति। वयमप्यत्र सम्मता इति नातोऽधिकं ब्रूमः।

### नीरक्षीरविवेकेन धातुवृत्तिसमीक्षणम्

अथैवंविधविविधप्राचीननिबन्धाशयविमर्शनपुरस्परं विरचितायामप्यस्यां धातुवृत्तौ प्रतीयन्ते केचिद् दोषा आकरविरोध-प्रयोगविरोध-युक्तिविरोधादयः। ते च नवीनैर्भट्टोजिदीक्षित-नागेशभट्टप्रभृतिभिस्तत्र तत्र बहुधा प्रादर्शिषत। निदर्शनार्थं परमिह केचित् प्रदर्श्यन्ते—

तत्र भाष्याद्याकरविरोधो यथा—"भसंज्ञायामल्लोपे उत्तरपदमनच्कम्। स्थानिवद्भावश्चाल्विधित्वान्नेत्येकाजुत्तरपदत्वाभावात् प्रातिपदिकान्तनुम्विभक्तिषु चेति विकल्पो भवति वृत्रघ्नो वृत्रघ्ण इति" इति हन्धातुप्रकरणे अदादौ (३१६ पृ०) धातुवृत्तावुक्तम्, तदिदं 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति सूत्रभाष्यविरुद्धम्। तत्र हि—"कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः। किं प्रयोजनं वृत्रघ्नः, स्रुघ्नः, प्राघानीति। 'हन्तेरत्पूर्वस्य' इत्यत्पूर्वग्रहणं न कर्तव्यं भवति" इति 'वृत्रघ्नः' इत्यत्र णत्वप्रतिषेध एवाभाषि॥

एवं क्र्यादौ ग्रहधातौ (५३५ पृ०)—"जागृहीता, जाग्रहीष्यति 'ग्रहोऽलिटि' इत्यत्र ग्रहेर्यद्विहितमार्धधातुकं तस्य य इडिति विहितविशेषणत्वेऽपि द्विःप्रयोगरूपत्वाद् द्विवचनस्य द्विरुक्तोऽपि स एव ग्रहिरिति दीर्घो भवति" इत्यभिहितम्, तदिदं भाष्यादिविरुद्धम्। तथा हि—'एकाचो द्वे प्रथमस्य' इति सूत्रे 'ग्रहेरङ्गात्' इति भाष्यमुपादाय कैयट आह—तृचोऽपि

जरिगृहीत्यङ्गं न तु ग्रहिः, विशेषणसामर्थ्याद्धि यथाश्रुतरूपाश्रयणम्'। इति। यद्यपि तत्र यङन्तं प्रक्रम्येदमुक्तं तथाऽपि युक्तिसाम्याद्यङ्लुगन्तेऽपि न दीर्घ इति लक्ष्यते इति।

एवं नामधातुप्रकरणे ( ६२२ पृ० )—'कविरिवाचारति कवयति' इत्युपक्रम्य 'लुङ्यन्तरङ्गमपि गुणं सिचि वृद्धिरपवादत्वाद् बाधत इति वृद्धावायादेशे च अकवायीत्' इत्यभिहितम्, तदिदं कैयटादिविरुद्धम्। सिचा धातोराक्षेपात् 'ऋत इद्धातोः' इत्यतो धातोरित्यनुवर्तनाच्च धातुरेव यो धातुरिति व्याख्यानमाश्रित्य नामधातोर्न वृद्धिरिति कैयटादिभिरभिधानात्।

एवं भ्वादौ कषधातौ ( १७४ पृ० )—"आकषेण चरति आकषिकः 'आकर्षात् ष्ठल्' इति तृतीयान्तादस्माच्चरतीत्यर्थे ष्ठल्" इत्यभिहितम्। तदिदम्—

"आकर्षात्पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च।
आवसथात्किसरादेष्षितष्षडेते ठगधिकारे"॥

इति वार्त्तिकविरुद्धम्। एतद्वार्त्तिके 'आकर्षात् पर्पादे' इति पाठकल्पने वृत्तिभङ्गापत्तेः।

एवं भ्वादौ भूधातौ ( १९ पृ० ) 'अस्तिसिचोऽपृक्ते' इति सूत्रे द्विसकारनिर्देशं केषाञ्चिदभिमतत्वेनानूद्य दूषयित्वा 'अस्तिसिचः' इत्यस्य 'तन्त्रेण विद्यमानसिचः' इत्यर्थान्तरपरत्वं स्वमतमभिहितम्, तदपि भाष्यविरुद्धम्; स्थानिवत्सूत्रे 'आहिभुवोरीट्प्रतिषेधः' इति वार्त्तिकं प्रक्रम्य "भवतेश्च न वक्तव्यः; 'अस्तिसिचोऽपृक्ते' इति द्विसकारको निर्देशः, अस्तेस्सकारान्तादिति" इति भाषणात्॥

क्वचित् महाकविप्रयोगविरोधोऽपि। यथा भ्वादौ 'बुधिर् बोधने' इति धातौ ( २२५ पृ० ) 'अस्य तशब्दे दीपजनेति चिण्नेति अबोधिष्ट इत्येव भवति। तत्र हि दैवादिकैर्नित्यात्मनेपदिभिरकर्मकैस्साहचर्यात्तादृश एवं बुधिर्गृह्यते' इत्यभिहितम्, तदिदं महाकविप्रयोगविरुद्धम्; 'क्रमादमुं नारद इत्यबोधि सः' इति माघे 'अबोधि तज्जागरदुःखसाक्षिणि' इति नैषधे च सकर्मकादपि बुधेश्चिण्दर्शनात्॥

क्वचित्तु युक्तिविरोधोऽपि। यथा—अदादौ राधातौ ( ३६६ पृ० ) अतिरि ब्राह्मणकुलमित्युपक्रम्य "आमि तु 'नुमचिरतृज्वद्भावेभ्यो नुट्पूर्वविप्रतिषेधेन' इति नुटयात्वे च अतिराणामिति भवति" इत्यभ्यधायि, तदिदं न युज्यते; 'ह्रस्वनद्यापो नुट्' इति नुटि कृते हलादिविभक्तिपरकतया 'रायो हलि' इत्यात्वप्रवृत्तौ नुण्णिमित्तस्य ह्रस्वसन्निपातस्य विघातप्रसङ्गात् 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषाविरोधात्। 'नामि' इति दीर्घस्तु आरम्भसामर्थ्यादेव सन्निपातपरिभाषां बाधत इति अतिरीणामित्येव युक्तमिति।

एवं भ्वादौ भूधातौ ( ३६ पृ० )—“बोभोति—‘भूसुवोस्तिङि’ इति गुणनिषेधोऽत्र न भवति; ‘दाधर्ति’ सूत्रे बोभूत्विति छन्दसि गुणाभावार्थान्निपातनाज्ज्ञापकात्। इदमेव ‘प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्’ इत्यत्र ज्ञापकम्” इत्युक्तम्, तदिदं न सङ्गच्छते; असत्यामुक्तपरिभाषायां ‘बोभू तु’ इत्यत्र ‘भूसुवोः’ इत्यस्याप्राप्त्या गुणनिषेधार्थतया निपातनस्य चारितार्थत्वात्।

एवमेव भ्वादौ भूधातौ ( ३६ पृ० )—“अबोभूवन् इत्यत्र सिचः प्रत्ययलक्षणेन ‘सिजभ्यस्त’ इति जुस्भावः आत एवेति नियमान्न भवति। अभ्यस्ताश्रयस्तु विदिसाहचर्याल्लिङ्विषय इति नेह प्रसज्यते। विदेर्ह्यव्यवहितो झिर्लङ्येव सम्भवति” इत्यभिहितम्। तदिदं न युज्यते; ‘द्विस्त्रिश्चतुः’ इति सूत्रे कृत्वोऽर्थग्रहणेन कश्चित्साहचर्यानाश्रयणस्यापि ज्ञापितत्वेन इह साहचर्यस्य नियामकत्वासम्भवेन जुस एव युक्तप्रवृत्तित्वात्। अत एव भाष्ये ‘अचः परस्मिन्’ इति सूत्रे पंचमीसमासप्रयोजनतया अपीपचन्नित्युदाहृतम्। किञ्चेह अन्तादेशप्रवृत्तिवेलायां ‘अदभ्यस्यात्’ इत्येतत्प्रवृत्तिर्दुर्वारा। तस्मात् पक्षभेदेन अबोभूवुरिति वा अबोभूवदिति वा रूपं युक्तम्, न तु अबोभूवन् इति॥

एवं भ्वादौ भूधातौ ( ४६ पृ० ) “दृम्भूशब्दः ‘अन्धूदृम्भू’ इत्यादिना दृढशब्दे उपपदे दृढशब्दस्य दृम्भावस्य भूधातोः कूप्रत्ययस्य च निपातनेन सिद्ध इत्येकः पक्षः। ‘दृभी ग्रन्थे’ इत्यस्मात्कूप्रत्यये निपातनेन सिद्ध इत्यन्यः। तदेतत्पक्षद्वयेऽप्यूकारो न धातोरित्युवङोऽप्रसङ्गादजादिविभक्तौ यणेवेति रूपे न भेदः इत्यभ्यधायि, तदिदं न युज्यते; दृढशब्दोपपदकभूधातुप्रकृतिकस्य दृम्भूशब्दस्य औप्रत्यये अमि च ‘दृन्करपुनःपूर्वस्य भुवो यण्वक्तव्यः’ इति यणः प्रवृत्तेः दृभिप्रकृतिकस्य प्रथमयोः पूर्वसवर्णः’ ‘अमि पूर्वः’ इत्याभ्यां पूर्वरूपस्य प्रवृत्तिरिति रूपभेदस्य सत्त्वात्।

एवं भ्वादौ एधधातौ ( ४८ पृ० ) “‘एत्येधत्यूठ्सु’ इति सूत्रे अनुवृत्तमेचीति एधतेरपि विशेषणम्। मा भवान् प्रेदिधत् इत्यत्र व्यभिचारसम्भवात्” इति वृत्तिप्रदीपकारमतं प्रकृतिग्रहणे ण्यन्तस्य ग्रहणसम्भवान्निराकारि, तदिदं न युज्यते; एधतिग्रहणे ण्यन्तस्य ग्रहणासम्भवेऽपि णिच्प्रकृतेर्ग्रहणस्य दुर्वारतया मा प्रेदिधत् इत्यत्र प्रकृतिभूतस्य एधतेरेजादित्वव्यभिचारावश्यकत्वात्। “योगविभागः करिष्यते—वृद्धिरेचि, तत एत्येधत्योः, एत्येधत्योरच्चैचो वृद्धिर्भवति। तत ऊठि च वृद्धिर्भवतीति” इति भाष्ये एचः एत्येधत्योरुभयत्रापि सम्बन्धस्य भाषणाच्च।

एवं भ्वादौ उखधातौ ( ८२ पृ० )–“ऊखतुः इत्यादौ सवर्णदीर्घस्यान्तवत्त्वेनाभ्यासशेषत्वात् ह्रस्वो न भवति। अभ्यासमात्राश्रयत्वेनान्तरंगेऽस्मिन् पूर्वपरा-

श्रयस्य बहिरंगस्य सवर्णदीर्घस्य 'असिद्धं बहिरंगमन्तरंगे' इत्यसिद्धत्वात्" इत्यभिहितम्, तदिदं न संगच्छते; वार्णात् सवर्णदीर्घात् आंगस्य ह्रस्वस्यैवान्तरंगत्वात् 'वार्णादागं बलीयः' इति न्यायात्। तस्मात् आंगत्वात्पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वे कृते ततस्सवर्णदीर्घः। पुनर्ह्रस्वस्तु नापाद्यः; सकृत्प्रवृत्तिन्यायादित्येष युक्तम्।

एवं चुरादौ यन्त्रिधातौ ( ५६९ पृ० ) "अत्रापि पूर्ववत् ( चिन्तिवत् ) इदित्करणात् यन्त्रतीत्याद्यपि भवति" इत्युक्तम्। तथा कुद्रितन्त्रिमन्त्रिष्वपि कुन्द्रति, तन्त्रति, मन्त्रति—इत्युदाहृतम्, तदिदं चिन्त्यम्; यन्त्रि-तन्त्रि-मन्त्रि-कुद्रयो हि संयोगान्ताः। तेषां सकारविशिष्टपाठेऽपि 'अनिदिताम्' इति नलोपो न लभ्यते, नकारस्यानुपधात्वात्। तत् कथं तेषामिदित्त्वं णिजभावं ज्ञापयेत्! 'चिन्त्यात्' इत्यादौ णिजभावपक्षे नलोपव्यावृत्त्या सार्थकतां लभमान इकारो णिजभावं चिन्तेर्ज्ञापयतीति तूचितम्। न चेह तथेति स्फुटं वैषम्यमिति।

चुरादौ पृधातौ ( ५४० पृ० )—दीर्घोच्चारणस्य सेट्कत्वार्थतामाश्रित्य णिच्पाक्षिकतालिंगत्वमभिहितम्, तदिदं न युज्यते; धातुपाठकृता पाणिनिना विशिष्यैवोदात्तानां पाठात्। न हि 'ऋकारान्ताः सेट्काः' इति तेन परिभाषितम्, येनेत्थं तस्याशयः कल्प्येत। अतएव कविकल्पद्रुमे पारयतेर्नित्यण्यन्तत्वमुक्तम्॥

चुरादौ संग्रामयुद्धे ( ५७३–७४ पृ० )—इत्यत्र "संग्रामशब्दात् तत्करोतीति णिचाऽपि सिद्धाविह संग्रामस्य पाठस्सोपसर्गात्सङ्घातात् प्रत्ययार्थः" इत्युपक्रम्य "अस्यानुदात्तेत्त्वमपाणिनीयमिति पाठस्य तदर्थतया न व्यापकत्वभंगः" इत्यभिहितम्, तदिदं न युज्यते; 'युद्धे यो ग्रामशब्दः' इत्युक्त्यैव सामर्थ्यात् संपूर्वस्य लाभे तद्विशिष्टपाठस्य ज्ञापकत्वसम्भवात्। अत्रानुदात्तेत्त्वस्यापाणिनीयताश्रयणस्यानुचितत्वात्॥

एवं नामधातुप्रकरणे ( ६२५ पृ० )–"द्यौरिवाचरति देवति" इत्यभिहितम्, तदिदमनुचितम्; ऊठि पुगन्तेति गुणं बाधित्वा अन्तरंगत्वाद्यणि द्यवतीत्यस्यैवौचित्यात्। न च यणि कर्तव्ये बहिरंगस्योठोऽसिद्धत्वम्; 'नाजानन्तर्ये' इति निषेधात्। न च 'वार्णादांगम्' इति गुणस्य बलीयस्त्वम्; समानाश्रये हि तत्, न तु व्याश्रयेऽपि। सिवेरौणादिके नप्रत्यये ऊठि यणि गुणे स्योनशब्द इति धातुवृत्तौ जुहोत्यादौ वृधातौ स्वयमभिहितस्येत्थमेव संगमनीयत्वात्॥

क्वचित्तु पूर्वोत्तरग्रन्थयोर्व्याघातोऽपि। तथा—भ्वादौ अर्चधातौ ( ८४ पृ० ) 'अयं युजादौ स्वरितेत्पठ्यते। तत एवार्चयतीति सिद्धे क्रियाफलस्य कर्तृगामित्वेऽपि परस्मैपदार्थं इह पाठः" इति भ्वादिपाठस्य फलकर्तृगामित्वेऽपि परस्मैपदार्थत्वमभिहितम्। चुरादौ पुनराधृषादौ अर्चधातौ ( ५६३ पृ० ) "अर्च पूजायाम्—अर्चयति। अर्चति इति भौवादिकेन स्वरितेतार्ऽचिनैव सिद्धे णिज्विकल्पनं कर्तृगामि+.ले अर्चतीति यथा स्यादिति" इति णिज्विकल्पस्य तदर्थत्वमभिहितमिति स्फुटतरो व्याघातः।

एवं दिवादौ षह ( षुह ) चक्यर्थे ( ४०७ पृ० ) इत्यत्र सहेश्चुरादौ पाठो दिवादावपाठश्च हरदत्तकैयटादिग्रन्थोपष्टम्भेन समर्थितः। चुरादौ 'षह मर्षणे' ( ५६३ पृ० ) इति प्रक्रम्य "अस्येह पाठो वृत्तिकारादीनामनभिमत इति दिवादाववोचाम" इति तद्विरुद्धमेवाभिहितम् ॥

अदादौ चक्षिङ् धातौ ( ३२८ पृ० )—"अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यमिति ज्ञापनार्थोऽयं ङकारः। तेन 'तालैश्शिञ्जद्वलयसुभगैः' 'तृष्णे जृम्भसि' "प्रार्थयन्ति शयनोत्थितं प्रियाः" इत्यादयः प्रयोगाः उपपद्यन्ते। "ननु शिङ्क्ते इति शिञ्जः, जृम्भत इति जृम्भः, तद्वदाचरतीति क्वौ शतरि सिपि च शिञ्जन्, जृम्भसीति सिद्ध्यतः। तथा प्रार्थनं प्रार्थः, ततस्तत्करोतीति णौ प्रार्थयन्तीति, तत् किमनेन ज्ञापनेन ? सत्यम्; शब्दास्सिद्ध्यन्ति, अर्थास्तु सहृदयहृदयंगमा न भवन्ति" इत्यभिहितम्। चुरादौ पुनरर्थधातौ ( ५७१ पृ० ) "प्रार्थयन्ति शयनोत्थितं प्रियाः' इत्यादि कृदन्तात् तत्करोतीति णिचि नेयम्" इत्यभिहितम्। स्पष्टश्चात्र पूर्वोत्तरग्रन्थयोर्व्याघातः। किञ्चिइह आत्मनेपदानित्यत्वज्ञापनेन प्रार्थयन्तीति प्रयोगसाधनमप्यसंगतम्; अर्थयतेरात्मनेपदस्य 'आगर्वादात्मनेपदिनः' इति विशिष्य विधानादिति ॥

अदादौ ऊर्णुञ् धातौ ( ३४७ पृ० )—उरुमाचष्टे वारयतीत्यत्र "णाविष्ठवदिति वरादेशे वृद्धिः" इत्यभिहितम्। नामधातुवृत्तौ तु "उरोः वरयति" इति वृद्धिमकृत्वैवोदाहृतम् ॥

क्वचित्तु कल्पनाया अस्वारस्यमपि। यथा—दिवादौ क्षुधधातौ ( ४३० पृ० ) "क्षुधित इति तदस्य सञ्जातमितीचि" इत्युक्तम्। "वसतिक्षुधोरिट्" इत्यनेनेटि निष्ठायामपि क्षुधितशब्दसाधुतायां सम्भवन्त्यां इतच्पर्यन्तानुधावनमस्वरसम्।

अदादौ चक्षिङ् धातौ ( ३२६ पृ० )—'ख्या प्रकथने' इति धातोरपि ख्याञादेशस्यैव आर्धधातुके ख्शादिता प्रकल्पिता 'सस्थानत्वं नमः ख्यात्रे'

इति वार्त्तिकसङ्ग्रमनाय। एवं सति ख्यातेस्सार्वधातुकेऽपि क्शादिप्रयोगापत्तिः। तत्रानभिधानाश्रयणे च ख्यातेः क्शादित्वस्य सार्वधातुकेऽनभिधानस्य च कल्पनापेक्षया तादृशवार्त्तिकसङ्ग्रनये ख्यातेस्सार्वधातुकमात्रविषयताकल्पनमेव लघुतयाऽऽश्रयितुं युक्तमिति ॥

त इमे दोषा प्रदर्शितधातुवृत्तिवाक्यानां प्राचीनग्रन्थप्रदर्शितार्थमात्रानुवादप्रवृत्ततया, प्राचीनग्रन्थभेदसिद्धमतभेदप्रदर्शनमात्रप्रवृत्ततया वा यथाकथञ्चित् परिहरणोयाः। स्फुटतरं चायमर्थ एतद्ग्रन्थपर्यालोचनेनावगम्यते। तथा हि—अदादावूर्णुञ् धातौ ( ३४६ पृ० ) तावत् "और्णुनवत्—'दीर्घो लघोः' इत्यभ्यासस्य दीर्घो न भवति, 'चङ्परे णो यदङ्गं तस्य योऽभ्यासः' इति सूत्रार्थात्। अत्र त्वङ्गावयवस्याभ्यासो न त्वङ्गस्येति" इति वदन् धातुवृत्तिकारः जागृधातौ ( ३७७ पृ० ) पुनः "णौ चङि अजजागरत्—'सन्वल्लघुनि' इतीत्वं येन नाव्यवधानन्यायेन एकवर्णेन व्यवधान एव भवति, न पुनरनेकेनेतीह न भवति" इत्यभिदधे; तदिदं विरुद्धमिव प्रतीयते; जागृधातावप्यङ्गावयवस्यैवाभ्यासेन ऊर्णोतिप्रदर्शितसूत्रार्थानुसारम् अजजागरदित्यत्रेत्वप्रसक्तेरेवाभावात् प्रकारान्तरेण तद्वारणप्रयत्नस्यानुचितत्वात्।

वस्तुतस्तु मतभेदाभिप्रायकतया नानयोर्ग्रन्थयोर्विरोधः। ऊर्णोतिप्रकरणस्थो हि ग्रन्थः हरदत्तमताभिप्रायकः; 'अङ्गस्य योऽभ्यासः' इत्येवं सूत्रार्थस्य तेनोपवर्णनात्। जागृधातुप्रकरणस्थस्तु पुनः कैयटमताभिप्रायकः; "चङ्परे णौ यल्लघु तस्मिन् परतः" इत्येवं कैयटे तत्सूत्रार्थवर्णनात्। यद्यपि कैयटे 'केचित्तु' इत्यादिना "अङ्गस्य योऽभ्यासः" इत्याद्यर्थवर्णनप्रकारोऽपि प्रदर्शितः, तथापि तत्प्रकारस्य परमतत्वेनोक्तेः इतरपक्ष एव स्वमततया निर्धार्यत इति। स्पष्टं चेमं भेदं धातुवृत्तिकारस्स्वयमेव नामधातुवृत्तौ प्राचीकशत्। यथा—"इदं चाग्लोपित्वेनेत्वाभाववचनं सन्वत्सूत्रस्य चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपर इत्यर्थवादिनां हरदत्तादीनामनुसारेण, न तु चङ्परे णौ यल्लघु तस्मिन् परतोऽभ्यासस्येतिवादिनां कैयटकारादीनाम्" इति। ( ६०४ पृ० )

एतेन यद् भट्टोजिदीक्षितैस्सिद्धान्तकौमुद्याम्—

"संज्ञायाः कार्यकालत्वादङ्गं यत्र द्विरुच्यते।
तत्रैव दीर्घस्सन्वच्च नानेकाक्ष्विति माधवः॥
चकास्त्यर्थापयत्यूर्णोत्यादौ नांगं द्विरुच्यते।
किन्त्वस्यावयवः कश्चित्तस्मादेकाक्ष्विदं द्वयम्"॥

इति श्लोकाभ्यां चकास्तौ सन्वद्भावो न भवतोत्येतन्माधवमतत्वेनोपन्यस्तम्, तदूर्णोतिप्रकरणस्थधातुवृत्तिग्रन्थाभिप्रायपरामर्शेनेत्यवधेयं सुधीभिः।

क्वचित्तु पुनराशयानवबोधेनैव प्राचीनैरत्र धातुवृत्तावुद्भावितास्ते ते दोषा मनोरमादावेव तत्रतत्र निराकृताः। विस्तरभिया तु नेह तत्प्रकारः प्रपञ्च्यते।

क्वचित्तु ग्रन्थकारैर्धातुवृत्तेरनुक्तोपालम्भोऽपि कृतो दृश्यते। यथा—सिद्धान्तकौमुद्यां नामधातुप्रकरणे—'आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा इति वार्त्तिकं प्रक्रम्य 'वार्त्तिकेऽवेत्युपसर्गविशिष्टपाठात् केवलादुपसर्गान्तरविशिष्टाच्च क्यङेवेति माधवादयः, तन्नेति तूचितम्' इति; तत्तु अनुक्तोपालम्भमात्रमवधेयम्। इत्थं हि गल्भधातौ केषुचित् कोशेषु माधवीयधातुवृत्तिग्रन्थः—'अवगल्भेति विशिष्टग्रहणादनुपसृष्टादन्योपसृष्टाच्च आचारक्विपि गल्भति प्रगल्भति इति भवति'[1] इति।

क्वचित्तु धातुवृत्तिकारमतविपरीतं मतं यदाश्रित अर्वाचीनैर्मनोरमाकारादिभिः तत् शब्दरत्नकारादिभिस्ततोऽप्यर्वाचीनैर्निराकृतम्। यथा चुरादौ पूजधातौ "पूजितो राज्ञाम् —'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः। 'क्तस्य च वर्तमाने' इति कर्तरि षष्ठी। 'क्तेन च पूजायाम्' इति समासनिषेधः। 'पूजितो यस्सुरासुरैः' इत्यार्षं प्रयोग इत्याह" इत्यभिहितम्। "नित्यं कौटिल्ये गतौ" इत्यत्र नित्यग्रहणेन तक्रकौण्डिन्यन्यायानित्यताज्ञापनात् "पूजितो यस्सुरासुरैः" इत्यत्र भूतेऽपि क्तस्य सौलभ्येन कर्तरि तृतीयाया न काचिदनुपपत्तिरिति मनोरमाकाराः। नित्यग्रहणस्यानभिधानमाश्रित्य भाष्ये प्रत्याख्याततया न तन्न्यायानित्यताज्ञापकत्वं सम्भवतीति तु शब्दरत्नकाराः।

इत्यमेवान्येऽप्यत्र प्रतीयमानाः केचन दोषाः यथाकथञ्चित् सुपरिहराः कुशलमतिभिः। सन्तु वा दुरुद्धराः एव कतिपये दोषाः, नैतावता दुरवधारणाखिलशब्दान्वाख्यानप्रक्रियावधारणावरणान्धतमससमूलोन्मूलननिपुणधामनि धातुवृत्तिनामनि सुधाधामनि कस्यचित् कलङ्कलेशशङ्कयाऽनादरणावतरणं सम्भाव्यते; गुणभूयस्त्वेन अल्पीयसो दोषस्य तिरोधानात्।

धातुवृत्तेर्दूषणमुद्भावयन्तोऽपि च ग्रन्थकारा बहुषु प्रदेशान्तरेषु परदूषणप्रसङ्गे माधवग्रन्थविरोधमेव प्राधान्येन तद्दूषणसाधनतया निर्दिशन्तः प्रामाणिकप्रबन्धगणमूर्धन्यमिमं धातुप्रबन्धमनुसन्दधिरे।

तस्मादञ्जसा साध्वसाधुशब्दस्वरूपावदिधारयिषुभिः प्राक्तननानानिबन्धाशयानेकत्र साक्षाच्चिकीर्षुभिश्चाखिलैरप्यनुकलमयं धातुवृत्तिनामा प्रबन्धः परिशीलनीयोऽवश्यमिति सकलमतिभद्रम्।

---

१. काश्यां मुद्रिते 'पण्डितं पत्रे' षष्ठसंपुटे २१ पुटे द्रष्टव्योऽयं पाठः।

पाणिन्यादीन् नमस्कृत्य तदुक्तीः प्रसमीक्ष्य च।
अन्तरंगपरीक्षेयं धातुवृत्तेर्विधीयते ॥

—०—

## १. धातुशब्दनिर्वचनम्

दधाति=धारयति क्रियारूपमर्थम्, भ्वादिगणपाठमर्यादाञ्च; दधाति= 'सर्वं नाम धातुजमाह' इति सिद्धान्तात् निष्पादनद्वारा प्रातिपदिकानि पुष्णातीति वा धातुः। धाधातोरौणादिकस्तुन् प्रत्ययः।

यद्यप्येवं रीत्या धातुशब्दस्य निर्वचनमपि सम्भाव्यते, तथापि शब्दशास्त्रेऽस्मिन् संकेतकरणात् पारिभाषिकोऽयं धातुशब्दः। तत्राधुनिकसंकेतः परिभाषा, तया चार्थबोधकं पदं पारिभाषिकम्। यथा शास्त्रकारादिसंकेतितनदीवृद्ध्यादि पदम्। तथा च क्रियावाचकत्वे सति भ्वादिगणपठितत्वे सति पाणिनीयसंकेतसम्बन्धेन धातुपदवत्त्वमेव धातुत्वम्। तथा चाथर्वणे—'को धातुः, किं प्रातिपदिकम्, कः प्रत्ययः' इति।

## २. धात्वर्थविचारः

सर्वेषां शब्दानां धातुत एव जायमानत्वात् धात्वर्थनिरूपणाय प्रकरणमिदं प्रारब्धम्। तत्र फलानुकूलो यत्नसहितो व्यापारो धात्वर्थः। कर्तृकर्मसंख्याकाला आख्यातार्थः। फलत्वञ्चात्र—तद्धात्वर्थजन्यत्वे सति कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वम्। व्यापारत्वञ्च धात्वर्थफलजनकत्वे सति धातुवाच्यत्वम्। अनुकूलत्वञ्च संसर्गः। व्यापारमुख्यविशेष्यको बोधः।

अत्र प्राचीनवैयाकरणाः—"फलव्यापारयोर्धातुः" इति द्विवचनेन फलनिरूपिता च धातोः खण्डशः शक्तिः। अत एव फले स्तोकादिरूपकर्मणोऽभेदेन ग्रामादिरूपकर्मणश्च भेदेनान्वयः। विशिष्टे शक्तिस्वीकारे पदार्थैकदेशत्वेन फले कर्माद्यनन्वयापत्तिः। नैयायिकानामाख्यातपदोपस्थापितयोः कृतिवर्तमानयोरिव, वैयाकरणानां कर्तृसङ्ख्ययोरिव च व्युत्पत्तिवैचित्र्यैण धातुपदोस्थापितयोः फलव्यापारयोः परस्परान्वयबोधः स्यादेव"—इति वदन्ति।

नागेशभट्टस्तु—"फलविशिष्टव्यापारे, व्यापारविशिष्टफले च धातूनां शक्तिः, अन्यथा व्यापारोद्देश्यकफलविधेयकस्य फलोद्देश्यकव्यापारविधेयकस्य बोधापत्तिः, उद्देश्यविधेयभावेनान्वयप्रयोजिकायाः पृथगुपस्थितेः सत्त्वात्। फलावच्छिन्न-

व्यापारबोधे कर्तृप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम्। एवं व्यापारावच्छिन्नफलबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणमिति न सर्वत्र सर्वबोधप्रसंगः" इत्याह। वस्तुतस्तु—विशिष्टे शक्तिर्नास्ति; फलावच्छिन्नव्यापारत्वस्य, व्यापारावच्छिन्नफलत्वस्य च शक्यतावच्छेदकत्वे गौरवात्। फलव्यापारयोरेकदेशत्वेन तत्र कर्तृकर्मादीनामन्वयासम्भवाच्च। प्राचीनमते एकवृन्तावलम्बिफलद्वयवत् उभयांशे एका खण्डशश्शक्तिरिति न शक्तिद्वयकल्पनम्, न वा बोधजनकत्वसम्बन्धद्वयकल्पनम्। प्रत्युत नव्यानामेव तत् कल्पनीयं भवेदिति तत्त्वविदः।

मण्डनमिश्रस्य मीमांसकस्य "फलमेव धात्वर्थः, अनुकूलव्यापारस्तु आख्यातार्थः लडाद्यर्थवर्तमानत्वादीनां व्यापारेऽन्वयः, एकपदोपात्तत्वात्। फलस्याख्यातार्थव्यापारं प्रति विशेषणत्वम्" इति मतम्। अन्ये मीमांसकास्तु—व्यापारमात्रं धात्वर्थः, फलञ्च द्वितीयार्थं इति मन्यन्ते। तन्न शोभनम्। तथा हि व्यापारो व्यापारत्वेन धातुवाच्यः? उत क्रियात्वेन? तत्तद्रूपेण वा? नाद्यः, निखिलधातूनां पर्यायतापत्तेः। पूर्वदेशविभागानुकूला क्रिया त्यजेरर्थः। सैवोत्तरदेशसंयोगानुकूला क्रिया चात्र पादसञ्चारादिरूपा; तस्याश्चोभयधातुवाच्यत्वात्। नापि तृतीयः, उक्तदोषात्। एवं फलस्य द्वितीयार्थत्वेऽपि उक्तविकल्पदोषो बोध्यः। 'तत्तद्धातुसमभिव्याहृतद्वितीयाया एव संयोगादिफलवाचकत्वम्' इत्यंगीकारे तु महद् गौरवम्।

नव्यमीमांसकास्तु—"फलव्यापारौ धात्वर्थौ। उभयत्र खण्डश एका शक्तिः। अत एव पदार्थैकदेशान्वयशङ्कापि न। तत्र जन्यजनकभावः संसर्गः। व्यापारमुख्यविशेष्यकश्च बोधः। तत्रैव कर्मातिरिक्तकारकाणामन्वयः। कर्मकारकस्य च कर्तृपदसमभिव्याहारे फलेऽन्वयः" इत्याहुः।

## ३. लादेशार्थविचारः

'उच्चारित एव शब्दोऽर्थप्रत्यायको भवति नानुच्चारितः' इति भाष्याल्लोके तथैवानुभवाच्च लादेशानां तिङामर्थनिरूपणाय प्रकरणमिदं प्रारब्धम्। 'वर्तमाने लट्' इत्यादिविधायकानाम्, 'लः कर्मणि' इत्यादिशक्तिग्राहकसूत्राणाञ्चादेशार्थं स्थानिन्यारोप्य प्रवृत्तिः। तत्र सङ्ख्याविशेषकालविशेषकारकविशेषभावा लादेशमात्रस्यार्थाः। धातूनां फलव्यापारौ अर्थौ, तिङर्थाः—कर्तृकर्मसङ्ख्याकालाः। तत्र सङ्ख्या कर्तृप्रत्यये कर्तरि, कर्मप्रत्यये तु कर्मणि विशेषणम्। कालस्तु धात्वर्थव्यापारे विशेषणम्। फलव्यापारयोः फलं विशेषणम्, व्यापारः प्रधानम्। इदमत्र रहस्यम्—'क्रियाप्रधानमाख्यातम्' इति निरुक्तात्, 'भूवादयो धातवः' इति सूत्रस्थक्रियाप्राधान्यबोधक-

भाष्याच्च कर्त्राख्याते कर्माख्याते वा सर्वत्र व्यापारमुख्यविशेष्यक एवं बोधः। अत एव 'फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्', इति सङ्गच्छते। एवञ्च 'ग्रामं गच्छति चैत्रः' इत्यत्र ग्रामाभिन्नकर्मनिष्ठसंयोगानुकूल एकत्वावच्छिन्नचैत्राभिन्नकर्तृको वर्तमानकालिको व्यापारः। 'ग्रामो गम्यते चैत्रेण' इत्यत्र तु चैत्राभिन्नकर्तृवृत्तिः वर्तमानकालिक एकत्वावच्छिन्नग्रामाभिन्नकर्मनिष्ठसंयोगानुकूलो व्यापार इति प्राचीनवैयाकरणाः। नव्यास्तु कर्त्राख्याते व्यापारमुख्यविशेष्यकः, कर्माख्याते तु फलमुख्यविशेष्यको बोधः। 'फले प्रधानं व्यापारः' इत्यादिना व्यापारस्य प्राधान्यबोधनं तु कर्त्राख्याताभिप्रायेण। अथवा तत्र प्रधानाप्रधानोभयपदच्छेदः। प्रधानं कर्तृप्रत्ययसमभिव्याहारतात्पर्यकम्। अप्रधानं तु कर्मप्रत्ययसमभिव्याहारतात्पर्यकम् इति न काप्यनुपपत्तिः। अत एव "सुप आत्मनः क्यच्" इति सूत्रस्थं भाष्यं सङ्गच्छते।

वर्तमानत्वादिकालो लडादिद्योत्यः, वाच्योऽपि पक्षद्वयस्यापि भाष्यादावभिहितत्वात्, युक्तियुक्तत्वाच्च। तथाहि तत्तद्धातूनामेव वर्तमानार्थः। लट् तु तद्द्योतकः। न च बहूनां धातूनां तत्र शक्तिकल्पने शक्ततावच्छेदकनानात्वात् गौरवमिति वाच्यम्; व्यापारसन्तानस्यैव कालत्वेनाभ्युपगमात्, तस्य च धात्वर्थत्वात्। कालस्य व्यापारसन्तानातिरिक्तत्वे प्रमाणाभावात् तथा च तस्मिन् द्योत्ये लडादय इति 'वर्तमाने लट्' इति सूत्रार्थः। तस्माद् द्योतकत्वमेव लटः। एवं वाचकत्वमपि, 'वर्तमाने लट्' इति सूत्रात् वर्तमानकाले लड्विधानात्, व्यापारसन्तानस्य कालात्मकत्वाभावाच्च। तथा चोक्तं हरिणा—'क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका' इति। अनेन स्पष्टमेव क्रियापरिच्छेदकत्वं कालस्योक्तम्। नहि स्वपरिच्छेदकत्वं स्वस्य सम्भवति। तस्मात् वाचकत्वमेव लटः।

नैयायिकास्तु—लकाराणां कृतौ शक्तिः, कृतित्वजातेः शक्यतावच्छेदकत्वे लाघवात्। रथो गच्छतीत्यादौ व्यापारे लक्षणा। शक्ततावच्छेदकञ्च लकारसाधारणं लत्वमेव। तिप्त्वादीनां शक्ततावच्छेदकत्वे गौरवम्। अयमत्र विशेषः—लत्वेन यत्ने शक्तिः, आत्मनेपदत्वेन च फले। अन्यूनानतिप्रसक्तस्य धर्मस्यैवावच्छेदकत्वनियमेनात्मनेपदत्वस्य तथात्वादित्याहुः।

### ४. सकर्मकत्वाऽकर्मकत्वनिरूपणम्

फल-व्यापारयोरेकनिष्ठतायामकर्मकः।
धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः॥ १॥

फलस्य = गतिनिवृत्त्यादिरूपस्य, व्यापारस्य = गतिनिवृत्त्यनुकूलव्यापारादिरूपस्य च, एकनिष्ठतायाम् एकाधिकरणवृत्तितायां सत्यां, धातुरकर्मको

भवति, फलसमानाधिकरणव्यापारबोधकत्वं समानाधिकरणफलावच्छिन्नव्यापार-बोधकत्व वाऽकर्मकत्वमिति फलितोऽर्थः। यथा—स्था गतिनिवृत्तौ ( स्वा० ३:९ पृ० ), अत्र फलं गतिनिवृत्तिः, व्यापारस्तदनुकूल इति फलं व्यापारश्चोभयं 'देवदत्तस्तिष्ठति' इत्यत्र देवदत्तरूपैकाधिकरणे वर्त्तते, देवदत्तस्तिष्ठतीति कोऽर्थः ? गतिनिवृत्त्यनुकूलव्यापारवान् देवदत्तः। एवं तयोः फल-व्यापारयोः, धर्मिभेदे अधिकरणभेदे भिन्नभिन्नाधिकरणवृत्तितायां सत्यां धातुः सकर्मको भवति, फलव्यधिकरणव्यापारबोधकत्वं व्यधिकरणफलावच्छिन्नव्यापारबोधकत्वं वा सकर्मकत्वमिति फलितोऽर्थः। यथा 'डुपचष् पाके', देवदत्तस्तण्डुलान् पचति, कोऽर्थः ? तण्डुलनिष्ठविक्लृत्यनुकूलव्यापारवान् देवदत्तः, अत्र फलं विक्लृतिः, सा तण्डुलेषु वर्त्तते; व्यापारस्तदनुकूलः, स देवदत्ते वर्त्तते इति फलव्यापारयोर्भिन्नाधिकरणता।

अर्थान्तरे हि वर्त्तमानस्याकर्मकस्यापि सकर्मकत्वं भवति, कालाऽध्वभाव-देशापेक्षया च सर्व एव धातवः सकर्मकाः। मासमास्ते, क्रोशो गुडधानाभिर्भूयते, गोदोहं स्वपिति, कुरून् शेते ॥ १ ॥

अर्थान्तरवृत्त्यादिना च सकर्मस्यापि अकर्मकत्वं भवति, यदाह—

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्।
प्रसिद्धेरविवक्षातः, कर्मणोऽकर्मिका क्रिया ॥ २ ॥

अर्थान्तरे वर्त्तमानाद्धातोः सकर्मकस्यापि अकर्मिका किया भवति, यथा—भारं वहति, उद्यच्छतीत्यर्थः, नदी वहति, स्रवतीत्यर्थः।

कर्मणो धात्वर्थान्तःप्रवेशादकर्मकत्वम्, यथा—

'जीव प्राणधारणे', जीवति। 'हद पुरीषोत्सर्गे', हदते; अत्र प्राण-पुरीषाख्ये कर्मणी धात्वर्थेनैव क्रोडीकृते।

कर्मणः प्रसिद्धत्वात्, यथा—'वृषू सेचने', देवो वर्षति। न पुनरत्र—रक्तं वर्षति, पार्थः शरान् वर्षति।

कर्मणोऽविवक्षितत्वात्, यथा—नेह पच्यते, नेह भुज्यते। कर्माविवक्षा चौदासीन्यनिवृत्तिमात्रपरतया प्रयोगात्। यथा किं करोतीति प्रश्ने पचति पठतीत्यादि प्रत्यवस्थानम्, न तु भवति विद्यते वेत्यादि; तेषामपर्यनुयोज्यत्वात्। यत्तु किं करोतीति प्रश्ने भवतीत्युत्तरं तत् क्रियाख्यकर्मनिबन्धनम्, न तु वाह्यकर्मापेक्षं भवनम्; करोत्यर्थावगमात्। क्रिया हि सर्वधातूनामान्तरं कर्म, अत एव क्रियाविशेषणानां कमत्वं स्मरन्ति। नन्वेवं "क्रियाविशेषणाद्" इति योगो व्यर्थः, "कर्मणि" इत्येव द्वितीयासिद्धेः, नैवम्; आन्तरकर्मणा सकर्मणोऽपि अकर्मककार्यप्रतिपत्त्यर्थत्वाद् योगस्य, तेन 'सुखं सुप्तः' इत्यादौ कर्त्तरि क्तः सिद्धः। सुखं स्थातेत्यादौ कृन्निमित्ता षष्ठी न भवतीति। अतएव

सकर्मकाकर्मकव्यवहारो द्रव्यकर्मनिमित्त इत्युच्यते, यदाह—"सकर्मकाकर्मकत्वं द्रव्यकर्मनिबन्धनम्" ॥ २ ॥

### ५. द्विकर्मकधातवः

द्विकर्मका धातवश्च भाष्ये इत्थं परिगणिताः—

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्त्तितमाचरितं कविना ॥
नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।
द्विकर्मकेषु ग्रहणं कर्तव्यमिति निश्चयः ॥

### ६. धातूनामनुबन्धविचारः

अथास्मिन् धातुपाठेऽपेक्षितानि इदादिशास्त्राण्यष्टाध्याय्या एवावगन्तव्यानि, इहोक्तानि 'उदात्तः परस्मैभाषः' इत्यादीनि तु सम्प्रदायानुगतोपदेशात् । तानि चापेक्षितविधानानि कानिचिद् यथायथमिहोच्यन्ते ।

तत्रादावित्सूत्राणि—

( १ ) उपदेशेऽजनुनासिक इत् ( १।३।२ ) ।

उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् । उपदेश आद्योच्चारणम् । स च धातुपाठ-प्रातिपदिकपाठौ, सूत्रवार्त्तिके च । एतैर्हि शब्दा उपदिश्यन्ते—एधँ, स्पर्द्धँ इत्यादि । अत्रान्त्योऽकारोनुनासिकः । सूत्रकारकृत इदानीमयमनुनासिकपाठः परिभ्रष्टः । तेन हि "प्रतिज्ञानुनासिक्याः पाणिनीयाः', इह गुरूपदेशादेवाधुनानुनासिकज्ञानमित्यर्थः । भवतु । अत्रोकारोऽनुनासिकः । उपदेशे किम् ? अभ्र आँ अपः—लाक्षणिकमत्रानुनासिकत्वम् । अनुनासिकः किम् ? चिरिणोति । इत्संज्ञकस्य सर्वत्र लोपः 'तस्य लोपः' ( १।३।९ ) इत्यनेन । प्रयोजनाभावे तु न कस्यापीत्संज्ञा, 'इदर्थाभावात् सिद्धम्' इति ( १।३।३ वा०, १।२।७ वा० ) वार्त्तिककारवचनात् । यथा 'बह्वल्पार्थाद्' इत्यादिना ( ५।४।४२ ) विहितस्य शसः सकारस्य न लोपः; प्रयोजनाभावात् । बहुशः, अल्पशः ।

( २ ) हलन्त्यम् । ( १।३।३ ) ।

उपदेशेऽन्त्यं हलित् स्यात् । यथा शीङ् । कृञ् । धूञ् । क्षमूष् । इक् । इण् । मृङ् । चक्षिङ् । दाप् । दैप् । दाण् । ओहाक् इत्यादि ।

( ३ ) न विभक्तौ तुस्माः ( १।३।४ ) ।

विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः । पचेरन् । पचतः । अद्राक्षम् । 'विभक्तिश्च' ( १।४।१४० ) इति तिङां विभक्तिसंज्ञा । 'इटोऽत्' ( ३।४।१०६ ) इत्यत्र तु मुखसुखार्थस्तकारः, न त्वित्संज्ञकः; तित्स्वरापत्तेः ।

( ४ ) "आदिर्ञिटुडवः" ( १।३।५ )।

उपदेशे किम् ? ञिकारीयति । आदिः किम् ? पटूयति। अस्ति हि पृथ्वादिषु पटुशब्दोपदेशः ।

( क ) "इर उपसंख्यानम्" ( १।३।७, वा० )।

इर इत्संज्ञा स्यात्। श्च्युतिर्-अश्च्युतत्। घुषिर्-अघुषत्। दृशिर्-अदर्शत्।

अथ संक्षेपतः इत्त्वफलं विचार्यते—

( १ ) आदित्फलम्—"आदितश्च" ( ७।२।१६ )।

धातोराकारेतो निष्ठायामिण् न स्यात्। ञिमिदा—मिन्नः, मिन्नवान्। ञिक्ष्विदा-क्ष्विण्णः, क्ष्विण्णवान्। ञिष्विदा-स्विन्नः, स्विन्नवान्।

"विभाषा भावादिकर्मणोः" ( ७।२।१७ )।

भावे आदिकर्मणि चादितो धातोर्वा निष्ठायामित् स्यात्। मिन्नमनेन, मेदितमनेन। प्रमिन्नः, प्रमेदितः।

( २ ) इदित्फलम्—"इदितो नुम् धातोः" ( ३।१।५८ )।

इदितो धातोर्नुम् स्यात्। मित्त्वादन्त्यादचः परः। स्कुदि-स्कुन्दते। टुनदि-नन्दति। कुडि-कुण्डिना। हुडि-हुण्डितुम्। वदि-वन्दते। स्पदि-स्पन्दते। स्पन्दितव्यम्। स्पन्दनम्।

( ३ ) ईदित्फलम्—"श्वीदितो निष्ठायाम्"। ( ७।२।१४ )।

श्वयतेरीदितश्च निष्ठायामिण् न स्यात्। टुओश्वि-शूनः, शूनवान्। ओलजी-लग्नः, लग्नवान्। ओविजी-विग्नः, विग्नवान्। दीपी-दीप्तः। उन्दी-उन्नः, उत्तः।

( ४ ) उदित्फलम्—"उदितो वा" ( ७।२।५६ )!

उदितः परस्य क्त्व इड् वा स्यात्। शमु-शमित्वा, शान्त्वा। दिवु-दीवित्वा, द्यूत्वा। क्रमु—क्रमित्वा, क्रान्त्वा क्रन्त्वा; तमु—तमित्वा, तान्त्वा। दमु-दमित्वा, दान्त्वा।

( ५ ) ऊदित्फलम्—"स्वरतिसूतिसूयतिधूञूदितो वा" ( ७।२।४४ )।

स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड् वा स्यात्। षिधू-सेद्धा, सेधिता। असैत्सीत् असेधीत्। सेद्धव्यम्, सेधितव्यम्। गाहू-गाढा, गाहिता। गाहिष्यते, घाक्ष्यते। गाढुम्, गाहितुम्। गुपू-गोप्ता, गोपिता, गोपायिता। स्वृ-स्वर्ता, स्वरिता। षूङ्-सोता, सविता। सोष्यते, सविष्यते। धूञ्-धोता, धविता।

( ६ ) ऋदित्फलम्—"नाग्लोपिशास्वृदिताम्" ( ७।४।२ )।

णिच्यग्लोपिनः शास्तेर् ऋदिताञ्चोपधाया ह्रस्वो न स्याच्चङ्परे णौ। यथा मालामाख्यद् अममालत्। मातरमाख्यत् अममातरत्। शासु–अन्वशासत्। बाधृ–अबबाधत्। याचृ–अययाचत्। ढौकृ–अडुढौकत्। लोकृ–अलुलोकत्। लोचृ–अलुलोचत्।

(७) लृदित्फलम्—"पुष्पादिद्युताद्यॢदितः परस्मैपदेषु" (३।१।५५)

श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ् स्यात् परस्मैपदेषु। घस्लृ–अघसत्। गम्लृ–अगमत्। सृप्लृ–असृपत्। शक्लृ–अशकत्। आप्लृ–आपत्। पुष–अपुषत्। शमु–अशमत्। द्युत्–अद्युतत्। वृतु–अवृतत्। परस्मैपदेषु किम्? अद्योतिष्ट, अवर्त्तिष्ट।

(८) एदित्फलम् "ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्" (७।२।५)

ह्म्यन्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्न स्यादिडादौ सिचि। ग्रह–अग्रहीत्। भ्रम–अभ्रमीत्। टुवम–अवमीत्। व्ययीत्। क्षण–अक्षणीत्। श्वस–अश्वसीत्। जागृ–अजागरीत्। ण्यन्तस्य–ऊन–औनयीत्। इल–ऐलयीत्। अर्द–आर्दयीत्। छन्दस्येव ण्यन्तस्योदाहरणम्। भाषायान्तु चङ् स्यात्। औननत्। (मन्तान्तरे ओनिनत्।) ऐलिलत्। "येनार्द्दिदद् दैत्यपुरं पिनाको" इति। श्वि–अश्वयीत्। एदिताम्—कटे–अकटीत्। रगे–अरगीत्। हसे–अहसीत्। कखे–अकखीत्।

( ९ ) ओदित्फलम्—"ओदितश्च" (८।२।४५)

ओदितो निष्ठातकारस्य नकारः स्यात्। ओलस्जी—लग्नः, लग्नवान्। ओविजी–उद्विग्नः, उद्विग्नवान्। ओप्यायी–पीनः, आप्यानः। भुजो–भुग्नः। रुजो–रुग्णः। टुओश्वि–शूनः। ओहाक्–हीनः। ओहाङ्–हानम्। 'स्वादय ओदितः' इति स्वादिगणसूत्रम्। षूङ्–सूनः। दूङ्–दूनः। दीङ्–दीनः। डीङ्–उड्डीनः।

(१०) अग्लोपफलम्—"सन्वल्लघुनि चङ्परेऽनग्लोपे"। (७।४।९३)

चङ्परे णौ यदङ्गम् तस्य योऽभ्यासो लघुपरस्तस्य सनीव कार्यं स्याद् णावग्लोपेऽसति। अचीकरत्। अचीकमत्। अपीपचत्। अपीपवत्। अलीलवत्। अशिश्रवत्। लघुनि किम्? अततक्षत्। अररक्षत्। अजजागरत्। चङ्परे किम्? अहं पपच। परग्रहणं किम्? केवले चङि एव मा भूत्। अचकमत। अनग्लोपे किम्? अचकथत्, अररहत्।

दृषदमाख्यत् अददृषत्। णावग्लोपे सन्वद्भावनिषेधः फलम्।

(११) इरित्फलम्—"इरितो वा"। (३।१।५७)

इरितो धातोश्च्लेरङ् वा स्यात् परस्मैपदे परे। च्युतिर्—अच्युतत्, अच्योतीत्। भिदिर्—अभिदत्, अभैत्सीत्। छिदिर्—अच्छिदत्, अच्छैत्सात्।

दृशिर्–अदर्शत्, अद्राक्षीत् । परस्मैपदे किम् ? अभित्त । अच्छित्त ।

( १२ ) ञीत्फलम् –"ञीतः क्तः । ( ३।२।१८७ )

ञीतो धातोर्वर्त्तमाने क्तः स्यात् । ञिभिदा—भिन्नः । ञिधृषा—धृष्टः । ञिइन्धी— इद्धः । ञिक्ष्विदा—क्ष्विण्णः ।

( १३ ) ट्वित्फलम्—"ट्वितोऽथुच्" । ( ३।३।८९ )

ट्वितो धातोरथुच् स्याद् भावे । टुवेपृ—वेपथुः । टुओश्वि–श्वयथुः । टुमस्जो–मज्जथुः । टुनदि—नन्दथुः ।

( १४ ) ड्वित्फलम्—"ड्वितः क्त्रिः" । ( ३।३।८८ )

ड्वितो धातोः क्त्रिः स्यात् भावे । 'क्त्रेर्मम् नित्यम्' ( ४।४।२० ) इति ततो मप् । डुलभष्—लब्धिमम् ।

( १५ ) मित्फलम् –"मितां ह्रस्वः" । ( ६।४।९१ )

मितामुपधाया ह्रस्वः स्याण्णौ परे । ज्ञपयति । घटयति । व्यथयति । जनयति । शमयति ।

"चिण्णमुलोर्दीर्घोऽन्यतरस्याम्" । ( ६।४।९३ )

चिण्परे णमुल्परे च णौ मितामुपधाया दोर्घो वा स्यात् । अशमि, अशामि । शमंशमम्, शामंशामम् । अक्षञ्जि, अक्षाञ्जि । क्षञ्जंक्षाञ्जम् । अघटि, अघाटि । घटंघटम्, घाटंघाटम् ।

( १६ ) षित्फलम्—" षिद्भिदादिभ्योऽङ्" । ( ३।३।१०४ )

षिद्भ्यो भिदादिभ्यश्च स्त्रियामङ् स्यात् । जॄष्–जरा । त्रपूष्–त्रपा । क्षमूष्-क्षमा । डुपचष्–पचा । भिदा । मृजा । कृपा ।

( १७ ) ङित्फलम्—"अनुदात्तङित आत्मनेपदम्" । ( १।३।१२ )

अनुदात्तेत उपदेशे यो ङित् तदन्ताच्च धातोर्लस्य स्थाने आत्मनेपदं स्यात् । अनुदात्तेतो धातवो धातुपाठाज् ज्ञातव्याः । आस–आस्ते । वस–वस्ते । षूङ्–सूते, सूयते । शीञ्–शेते, शिश्ये । मृङो ङित्त्वं स्वरार्थम्, म्रियतेलुंङ् लिङोश्चेति ( १।३।६१ ) आत्मनेपदनियमात् । चक्षिङो ङित्त्वमन्त्येकारेत्त्वपरित्राणार्थम्, तेन तत्र न नुम् । चष्टे । चक्षाते । चचक्षे ।

( १८ ) अनुदात्तेत्फलम्—"अनुदात्तेतश्च हलादेः" । ( ३।२।१४९ )

अनुदात्तेतश्च हलादेरकर्मकाद् युच् स्यात् । वृतु–वर्त्तनः । वृधु–वर्धनः । विवक्षणः । अनुदात्तेतः किम् ? भविता । हलादेः किम् ? एधिता । आदिग्रहणं किम् ? जुगुप्सनः । मीमांसनः । अकर्मकात् किम् ? वसिता, वस्त्रम् ।

( १९ ) ञित्फलम्—"स्वरितञितः कर्त्रभिप्राये क्रियाफले" । ( १।३।७२ )

स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले । यजते, यजति । पचते, पचति । षुञ्–सुनुते, सुनोति । डुकृञ्–कुरुते, करोति । डुदाञ्–दत्ते, ददाति । स्वरितेतो धातवो धातुपाठादवगन्तव्याः ।

इदं फलितम्–अनुदात्तेद् धातुरात्मनेपदी । स्वरितेद् उभयपदी उदात्तेत् परस्मैपदीति । उदात्तेच्च धातुः धातुपाठे एव निर्दिष्टः । धातुष्वेभ्योऽपरे केचिल् कित्, णित्, पिच्च दृश्यन्ते । तत्र इण्दाणौ णितौ । इक्, ओहाक् च कितौ । दाप्, दैपौ पितौ ।

**गणा आचार्यनिर्दिष्टाः फलेन सहिता इमे**

१. अदादिः—"अदिप्रभृतिभ्यः शपः" ( २।४।७२ ) लुक् स्यात् । अत्ति । हन्ति ।

२. चुरादिः—"सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्" । ( ३।१।२५ )

३. जुहोत्यादिः—"जुहोत्यादिभ्यः श्लुः" ( २।४।७ ) । शपो लोपः स्यादित्यर्थः । जुहोति । ददाति । दत्ते ।

४. दिवादिः—"दिवादिभ्यः श्यन्" ( ३।१।६९ ) शपोऽपवादः । दीव्यति । नश्यति । विद्यते ।

५. स्वादिः—'स्वादिभ्यः श्नुः" ( ३।१।७३ ) सुनोति । सुनुते ।

६. तुदादिः—"तुदादिभ्यः शः" ( ३।१।७७ ) । तुदति । तुदते ।

७. रुधादिः—"रुधादिभ्यः श्नम्" ( ३।१।७८ ) रुणद्धि । रुन्धे ।

८. तनादिः—"तनादिकृञ्भ्य उः । ( ३।१।७९ ) तनोति । तनुते ।

९. "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" । ( ६।४।३६ ) । हतः । गतः । रतः । ततः ।

१०. क्र्यादिः—क्र्यादिभ्यः श्ना" (३।१।८१) । क्रीणाति, क्रीणीते । पुनाति, पुनीते । लुनाति, लुनीते ।

श्नु–श–श्नम्–उ–श्ना इत्येते च शपोऽपवादाः ।

११. रुदादिः—"रुदादिभ्यः सार्वधातुके" ( ७-२-७६ ) वलादेरिट् स्यात् । रोदिति । रुद्र, स्वप, श्वस, अन, जक्ष इति रुदादिः ।

"रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा ।
जक्षितिश्चेति विज्ञेयो रुदादि· पञ्चको गण" ॥ इति ।

१२. फणादिः—"फणाञ्च सप्तानाम्" । ( ६।४।१२५ ) एत्वाभ्यासलोपौ किति लिटि सेटि च थलि ।

"फणती राजति भ्राजभ्राशभ्लाशास्तथा स्यमः।
स्वनतिश्चेति विज्ञेयो फणादिः सप्तकः गणः" ॥ इति।

१३. यजादिः—"वचिस्वपियजादीनां किति" ( ६।१।१५ ) एभ्यः संप्रसारणं स्यात्।

"यजो वपो वहश्चैव वेञव्येञौ ह्वयतिस्तथा।
वद्वसौ श्वयतिश्चैव स्मृताः नव यजादयः॥ १॥

१४. भृञादिः—"भृञामित्"। ( ७।४।७६ ) भृञ् माङ्ओहाङिति भृञादयः।

१५. णिजादिः—"णिजां त्रयाणां गुणः श्लौ" ( ७।४।७५ ) णिजिर्, विजिर्, विष्लृ इति णिजादयः।

१६. जक्षित्यादिः—"जक्षित्यादयः षट्" ( ६।१।६ )।

"जक्षिजागृदरिद्राणां चकासेः शासेरेव च।
दीधीवेव्योश्च सप्तानां जक्षित्यादावुपग्रहः" ॥

१७. किरादिः—"किरश्च पञ्चभ्यः" ( ७।२।७५ )। सन इट् स्यात्। कृगृदृङ्प्रच्छ इति किरादिः।

१८. मुचादिः—"शे मुचादीनाम्" ( ७।१।५९ )। नुम् स्यात्।

मुञ्चतिर्लुम्पतिश्चैव विन्दतिर्लिम्पतिस्तथा।
सिञ्चतिः कृन्ततिश्चैव खिदिः पिशिर्मुचादयः॥

१९. तुजादिः—"तुजादीनां दीर्घोऽभ्यासस्य" (६।१।७)। छन्दस्येव। तूतोज। मामहानः।

२०. तृम्फादिः—"शे तृम्फादीनां नुम् वाच्यः" ( ७।१।५९, वा० ) तृफ तृम्फ तृप्तावित्यतो ये तुदादौ नकारानुषक्तास्ते तृम्फादयः।

२१. रधादिः—"रधादिभ्यश्च" ( ७।१।४५ )। वलादेरार्धधातुकस्य वेट् स्यात्।

रधिर्नशिस्तृपिश्चैव दृपिद्रुहिर्मुहिः स्निहिः।
स्नुहिश्चेति भवन्त्येते दैवादिका रधादयः॥ १॥

२२. शमादिः—"शमामष्टानां दीर्घः श्यनि" ( ७।३।७४ )।
"शमित्यष्टभ्यो घिनुण्" ( ३।२।१४१ )।

शमिस्तमिर्दमिश्चैव श्रमिर्भ्रमिक्षमी क्लमिः।
इत्येते मदिना सार्द्धमष्टौ शम्यादयः स्मृताः॥ १॥

२३. घटादिः—भ्वाद्यन्तर्गतः। 'घटादयो मितः' इति मित्त्वम्।

२४. ज्वलादिः—"ज्वलिति कसन्तेभ्यो णः" ( ३।१।१४० ) णः स्यात् वा। पक्षे अच्। ज्वलः, ज्वालः। भ्वादिषु ज्वलादयः पठ्यन्ते।

२५. प्वादिः—"प्वादीनां ह्रस्वः" ( ७।३।८० )। शिति परे। प्वादिः क्र्याद्यन्तर्गणः। पुनाति, पुनीते।

२६. ल्वादिः—"ल्वादिभ्यः" (८।२।४४) ल्वादय एकविंशतिः क्र्याद्यन्तर्गणः। तेभ्यः निष्ठातस्य नः स्यात्। दूनः, शीर्णः।

२७. पुषादिः—दिवाद्यन्तर्गतः। 'पुषादिद्युतादि' इत्यङ्।

२८. द्युतादिः—भ्वाद्यन्तर्गतः। 'द्युद्भ्यो लुङि' इत्यङ्।

२९. सिवादिः—'सिवादीनां वाड्' (८।३।१७)। सिवु, सह, सुट, स्तु, स्वञ्ज—एते सिवादयः।

३०. काण्यादिः—

काणे राणेस्तथा श्राणेर्भाठेर्हेठेर्लुठेरपि।
ण्यन्तस्य भाष्यकारेण काण्यादित्वं प्रदर्शितम्॥
बोधिन्यासकृता लोठिर्लोपिर्वाणिश्च ह्वायिना।
सहिताः पूर्वमुक्ताश्च काण्यादौ परिकीर्तिताः॥
दुर्गंद्याणि च काण्यादिं मन्यते शाकटायनः।
लोठिं तदेवमेतेऽत्र धातवो द्वादश स्मृताः॥

### ७. संकीर्णविधयः

कर्त्तरि शप् (३।१।६८) सार्वधातुके यक् (३।१।६१) धात्वादेः षः सः (६।१।६४), णो नः (६।१।६५), आदेच उपदेशेऽशिति (६।१।४५), न क्वादेः (७।३।४९), रलो व्युपधाद्धलादेः संश्च (१।२।२६) इत्यादयो विधयो धातुभ्यो यथायोगं प्रयोक्तव्याः। अष्टाध्यायीत एव तेऽवधार्य्याः। विस्तरभयान्नात्रालिखिषत। तथा उदात्तः सेट्। अनुदात्तः अनिट्। परस्मैभाषः परस्मैपदी। आत्मनेभाष आत्मनेपदी। उभयतोभाषः अथवा विभाषित उभयदीत्यर्थः। वृदिति वृत्तः समाप्त इत्यर्थः।

### ८. अनिट्कधातूनां विचारः

"एकाच उपदेशेऽनुदात्तात्" (७।२।१०)—उपदेशे यो धातुरेकाजनुदात्तः तस्मादुत्तरस्य वलादेः आर्धधातुकस्य इडागमो न भवति। प्रकृत्याश्रितोऽयं प्रतिषेधः। के पुनरुपदेशेऽनुदात्ताः? ये तथा पठ्यन्ते। त एव विस्पष्टार्थमत्र अनिट्कारिकासु विभज्य प्रदर्श्यन्ते।

अनिट् स्वरान्तो भवतीति दृश्यताम् इमांस्तु सेटः प्रवदन्ति तद्विदः।
अदन्तमृदन्तमृताञ्च वृङ्वृञौ श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि॥ १॥
गणस्थमूदन्तमुताञ्च रुस्नुवौ क्षुवन्तथोर्णोतिमथो युनुक्ष्णुवः।
इति स्वरान्ता निपुणं समुच्चितास्ततो हलन्तानपि सन्निबोधत॥ २॥

अस्यायमर्थः—स्वरान्तः अजन्तो यो धातुः स सर्वत्र अनिट् भवतीति दृश्यताम् अवगम्यताम्। तेषु स्वरान्तेषु धातुषु मध्ये तद्विदः आचार्याः इमांस्तु = वक्ष्यमाणान् धातून् तु सेटः प्रवदन्ति; अदन्तम्—अकारान्तं सर्वम्; ॠदन्तम्—

ॠकारान्तं सर्वम्; ऋताञ्च—ऋकारान्तानाञ्च मध्ये वृङ्वृञौ—वृङ् सम्भक्तौ, वृञ् वरणे इत्येतौ; श्विडीङिवर्णे—इवर्णान्तेषु धातुषु मध्ये टु ओ श्वि गतिवृद्ध्योः; डीङ् विहायसा गतौ; अथ शीङ्श्रिञावपि = अथ अनन्तरं, शीङ् स्वप्ने, श्रिञ् सेवायाम्, इत्येतौ द्वावपि। एतदुक्तं भवति—अकारान्ताः सर्वे धातवः, ॠकारान्ताः सर्वे, ऋकारान्तेषु द्वावेव, इवर्णान्तेषु चत्वारः, एतान् धातून् सेटः प्रवदन्ति इति। गणेषु तिष्ठति इति गणस्थः; तं गणस्थम् ऊदन्तम् ऊकारान्तं सर्वम्; उतां च रुस्नुवौ = उकारान्तानाञ्च मध्ये, रु शब्दे, प्रस्रवणे; क्षुवम् = टु क्षु शब्दे; तथा ऊर्णोतिम् = ऊर्णुञ् आच्छादने—

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥

इत्यतिदेशादेकाच्त्वमस्तीत्युदात्त ऊर्णोतिरुपदिश्यते। अथो = अनन्तरम्; युनुक्ष्णुवः = यु मिश्रणे, णु स्तुतौ, क्ष्णु तेजने, इत्येतान् सप्त धातून् सेटः प्रवदन्ति आचार्याः। अनेन प्रकारेण स्वरान्ता धातवः निपुणं समुच्चिताः सम्यगुक्ताः। ततो हलन्तानपि सन्निबोधत = ततः अनन्तरं हलन्तानपि अवगच्छत इत्यर्थः।

शक्लिस्तु कान्तेष्वनिडेक इष्यते घसिश्च सान्तेषु वसिः प्रसारणी।
रभिश्च भान्तेष्वथ मैथुने यभिः ततस्तृतीयो लभिरेव नेतरे ॥ ३ ॥

ककारान्तेषु धातुषु मध्ये शक्लृ शक्तौ इत्येको धातुरनिडिष्यते; सकारान्तेषु घसिः, प्रसारिणी वसिश्च; घस्लृ अदने, वस निवासे, इत्येतावुभौ अनिडाविष्येते। प्रसारणं सम्प्रसारणम्, तदस्यास्तीति प्रसारणी; वस निवासे इत्यस्य यजादित्वात् सम्प्रसारणं विधीयते। प्रसारणीग्रहणं वस आच्छादने इत्यस्य धातोः निवृत्त्यर्थम्। रभ राभस्ये, यभ मैथुने, डु लभष् प्राप्तौ—इति त्रय एव धातवः भान्तेषु अनिट इष्यन्ते, नेतरे = नान्ये।

यमिरमन्तेष्वनिडेक इष्यते रमिश्च यश्च श्यनि पठ्यते मनिः।
नमिश्चतुर्थो हनिरेव पञ्चमो गमिस्तु षष्ठः प्रतिषेधवाचिनाम् ॥ ४ ॥

ञमन्तेषु—ञम्प्रत्याहारघटकनकारमकारान्तेषु धातुषु; प्रतिषेधवाचिनाम् = इट्प्रतिषेधवाचिनाम् आचार्याणां मते षडेव अनिट इत्यर्थः। 'ञमन्ताड्डः' (उणादिषु) इति सूत्रकारेण कथितत्वान् ञकारेणापि मकारस्य ग्रहणमस्ति, अतो ञम्प्रत्याहारोऽस्ति इति मन्तव्यम्। यमु उपरमे, रमु क्रीडायाम्, यश्च श्यनि पठ्यते स मनिश्च—दैवादिक इत्यर्थः। मन ज्ञाने, णम प्रह्वत्वे शब्दे च, हन हिंसागत्योः, गम्लृ गतौ इति। एतदुक्तं भवति—मकारान्तेषु चत्वारः, नकारान्तेषु द्वाविति।

दिहिदुंहिमेंहतिरोहती वहिः नहिस्तु षष्ठो दहतिस्तथा लिहिः ।
इमेऽनिटोऽष्टाविह मुक्तसंशया गणेषु हान्ताः प्रविभज्य कीर्तिताः ॥

दिह उपचये, दुह प्रपूरणे, मिह सेचने, रुह बीजजन्मनि प्रादुर्भावे च, वह प्रापणे, णह बन्धने, दह भस्मीकरणे, लिह आस्वादने—इत्यष्टावनिटः। अत्र मुक्तसंशया इति किम् ? तन्त्रान्तरे चत्वारोऽपरे धातवः पठ्यन्ते—सहिरिहिमुहिलुहयः। तन्त्रान्तरं व्याकरणान्तरम् आपिशलादि।

दिंशि दृंशि दंशिमथो मृंशि स्पृंशि रिंशि रुंशि क्रोशतिमष्टमं विशिम् ।
लिशिञ्च शान्ताननिटः पुराणगाः पठन्ति पाठेषु दशैव नेतरान् ॥ ६ ॥

शकारान्ता ये धातवः गणपाठेषु पठ्यन्ते तेषां मध्ये, पुराणगाः—पुरातनशब्दशास्त्रेषु अतीव परिणतहृदया आचार्या इत्यर्थः, दश धातव एव अनिट इति प्रवदन्ति, नेतरान्। दिश अतिसर्जने, दृशिर् प्रेक्षणे, दंश दंशने, मृश आमर्शने, स्पृश संस्पर्शने, रुश रिश हिंसायाम्, क्रुश आह्वाने रोदने च, विश प्रवेशने, लिश अल्पीभावे इति।

रुधिस्सराधियुधिबन्धिसाधयः क्रुधिक्षुधी बुध्यतिशुध्यती व्यधि ।
इमे तु धान्ता दश येऽनिटो मतास्ततः परं सिध्यतिरेव नेतरे ॥ ७ ॥

धकारान्ता ये धातवः तेषु इमे धातवः अनिटो मताः—रुधिर् आवरणे, राध साध संसिद्धौ, युध सम्प्रहारे, बन्ध बन्धने, क्रुध कोपे, क्षुध बुभुक्षायाम्, बुध ज्ञाने, शुध शौचे, व्यध ताडने, षिधु संशुद्धौ इति।

शिषिं पिषिं पुष्यतिशुष्यती त्विषिं श्लिषिं विषिं तुष्यतिदुष्यती द्विषिम् ।
इमान् दशैवोपदिशन्त्यनिड्विधौ गणेषु षान्तान् कृषिकर्षती तथा ॥ ८ ॥

शिष्लृ विश्लेषणे, पिष्लृ सञ्चूर्णने, पुष पुष्टौ, शुष शोषणे, त्विष दीप्तौ, श्लिष आलिङ्गने, विष्लृ व्याप्तौ, तुष तुष्टौ, दुष वैकृत्ये, द्विष अप्रीतौ, कृष विलेखने, कृष आकर्षणे—भौवादिकस्तौदादिकश्च गृह्येते—इति द्वादश षान्ता अनिटः।

तपिन्तिपिञ्चापिमथो वपिं स्वपिं लिपिं लुपिं तृप्यतिदृप्यती सृपिम् ।
स्वरेण नीचेन शपिं छुपिंक्षिपी प्रतीहि पान्तान् पठितांस्त्रयोदश ॥ ९ ॥

तप सन्तापे, तप ऐश्वर्ये—द्वयोरपि ग्रहणम्। तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणार्थाः, आप्लृ व्याप्तौ, टु वप् बीजसन्ताने, ञि ष्वप् शये, लिप उपदेहे, लुप्लृ छेदने, तृप प्रीणने, दृप हर्षणमोचनयोः, सृप्लृ गतौ, शप आक्रोशे, शप उपालम्भने, शप स्पर्शे, क्षिप प्रेरणे इति पान्ता अनिटः।

अर्दिं हृदिं स्कन्दिभिदिच्छिदिक्षुदीन् शदिं सदिं स्विद्यतिपद्यती खिदिम् ।
तुदिं नुदिं विद्यति विन्त इत्यपि प्रतीहि दान्तान् दश पञ्च चानिटः ॥ १० ॥

अद भक्षणे, हद पुरीषोत्सर्गे, स्कन्दिर् गतिशोषणयोः, भिदिर् विदारणे, छिदिर् द्वैधीकरणे, क्षुदिर् सम्पेषणे, शद्लृ शातने, षद्लृ विशरणगत्यवसादनेषु, ञि ष्विदा गात्रप्रक्षरणे, पद गतौ, खिद दैन्ये, खिद परितापे, तुद व्यथने, णुद प्रेरणे, विद सत्तायाम्, विद विचारणे—इति पञ्चदश दान्ता अनिटः। अत्र विद्यति इत्यविभक्तिको निर्देशः; विन्त इत्यत्र इति शब्देनाभिहितत्वात् अव्ययेनाभिहिते कर्मणि न कर्मविभक्तिः इति प्रतिषेधात् प्रतिषेधविषये प्रथमा विभक्तिर्भवति।

पचिं वचिं विचिरिचिरञ्जिपृच्छतीन् सिचिं मुचिं णिजिभजिभञ्जिभृज्जतीन्।
त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन् भुजिं स्वजिं सृजिमृजि विद्ध्यनिटस्वरान्॥

अयमर्थः—चकारान्तेषु षड् धातून् अनिट्स्वरान् विद्धि अनुदात्तस्वरान् अनिट इत्यर्थः। छकारान्तेषु एकम्, जकारान्तेषु पञ्चदश धातून् अनिटो विद्धि इति। डुपचष् पाके, वच परिभाषणे ब्रुवादेशश्च, विचिर् पृथग्भावे, रुचिर् विरेचने, रञ्ज रागे, प्रच्छ ज्ञीप्सायाम्, षिच क्षरणे, मुच्लृ मोक्षणे, णिजिर् शौचपोषणयोः, भज सेवायाम्, भञ्जो आमर्दने, भ्रस्ज पाके, त्यज हानौ, यज देवपूजासङ्गतिकरणदानेषु; युजिर् योगे, युज समाधौ—द्वयोरपि ग्रहणम्, रुजो भङ्गे, षञ्ज सङ्गे, टु मस्जो शुद्धौ; भुज पालनाभ्यवहारयोः, भुज कौटिल्ये—द्वयोरपि ग्रहणम्, ष्वञ्ज परिष्वङ्गे, सृज विसर्गे, मृजू शुद्धौ, मृजू शौचालङ्कारयोः—एते अनिटः। सृजिमृजि इत्यत्र मृजेः प्रमादपाठः; मृजू मृजू इत्येतयोरूदित्त्वादिड्विकल्पस्यावश्यकत्वात्। अयमर्थः काशिकावृत्त्यादावपि प्रपञ्चितः।

## सन्दिग्धार्था धातवः

केचित् सन्दिग्धार्था अपि धातवो धातुपाठे उपलभ्यन्ते, यथा—वेष्ट वेष्टने (भ्वा १६०), चेष्ट चेष्टायाम् (भ्वा १६१), तुडि तोडने (भ्वा १७९), तडि ताडने (भ्वा १८३), तुड तोडने (भ्वा २४०), देवृ देवने (भ्वा २४०), देवृ देवने (भ्वा ३२७), रुष रोषे (११७ चु) दशि दंशने (चु ११२), गम्लृ गतौ (भ्वा ७०२) इत्यादयः। तथा हि न केवलं वेष्ट वेष्टने इत्यत्रैवार्थः सन्दिग्धः, अपि तु वट वेष्टने (भ्वा० २००) इत्यत्रापि सुतरामर्थे सन्देह उत्पद्यमानोऽन्योन्याश्रयदोषमपि पातयति धातुपाठे। एवमेव गम्लृ गतावित्यत्रैव न केवलं धात्वर्थः सन्दिग्धः; अपि त्वन्येष्वपि गत्यर्थकेषु धातुषु सन्देहमुत्पादयतीति शङ्काकलङ्कः पाणिनीयानां शब्दानां नित्यत्वसिद्धान्तेन परिमार्जनीयः।

तस्मै श्रीगुरवे नमः

# माधवीया धातुवृत्तिः

## १. भ्वादिगणः

### मङ्गलाचरणम्

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥१॥
जीयाद्दन्तिमुखो यस्य लीलयाऽजाण्डखण्डने ।
कन्दाङ्कुरवदाभाति दन्ताग्रं तद्बहिर्गतम् ॥२॥
चिदानन्दकलां वाणीं वन्दे चन्द्रकलाधराम् ।
नैर्मल्यतारतम्येन बिम्बितां चित्तभित्तिषु ॥३॥
अस्ति श्रीसङ्गमक्ष्मापः पृथ्वीतलपुरन्दरः ।
यत्कीर्तिमौक्तिकादर्शे त्रिलोक्या प्रतिबिम्ब्यते ॥४॥
यशः क्षीराहुतीकृत्य यत्प्रतापहुताशने ।
परे यान्ति पदं दिव्यं राजानो रणदीक्षिताः ॥५॥
तूर्णं कर्णान्तिकं प्राप्ते यत्प्रतीपधनञ्जये ।
पुरो निधाय गाङ्गेयमात्मा संरक्ष्यते परैः ॥६॥
कुर्वन् शत्रुयशांसि धूमपटलीं कृलङ्कषांज्यास्पदः
काष्ठासङ्गविवर्द्धितः प्रकटयन् भूतिं नवां भूयसीम् ।
आतन्वन्नितरप्रतापदहनं स्फूर्जत्स्फुलिङ्गाकृति
प्रायो यच्छति यत्प्रतापदहनः कस्मै न विस्मेरताम् ॥७॥
तस्य मन्त्रिशिरोरत्नमस्ति मायणसायणः ।
यः ख्याति रत्नगर्भेति यथार्थयति पार्थिवीम् ॥८॥
नित्योन्मीलितदानवारिरधिकं निर्धूतपङ्कोदयो
दूरापास्तहरीशलङ्घनविधिर्भङ्गप्रसङ्गोज्झितः ।
क्ष्माभृत्क्षोभकृतिक्षमः क्षणिकथन् दोषाकरोद्घोषणा-
मानन्दाय चकास्ति यस्त्रिजगतामाश्चर्यरत्नाकरः ॥९॥
यत्कीर्तौ जाह्नवीस्फूर्तौ कीर्त्या विद्विषतामपि ।
कलिन्दनन्दिनीकान्तिः स्पर्द्धयेव प्रपद्यते ॥१०॥
येन निर्मीयते नित्यं धनैरायोधनैरपि ।
श्रेयसे यशसे दानं विदुषां विद्विषामपि ॥११॥
न ध्यानं न व्रतं नार्चा न समाधिर्न वा जपः ।
मन्त्रसिद्धः बलं यस्य मतिरेव महीयसी ॥१२॥

तेन मायणपुत्रेण सायणेन मनीषिणा ।
आख्यया माधवीयेयं धातुवृत्तिर्विरच्यते ॥१३॥
अस्याः पूर्वनिबन्धेभ्यो गुणवत्ता न कथ्यते ।
सर्वं एव स्ववाक्येषु यदाहुर्गुणगौरवम् ॥१४॥
सा च सन्त्यक्तमात्सर्यैर्गुणगृह्यैर्मनीषिभिः ।
सूत्रवार्त्तिकभाष्याणामीक्ष्यतां पारदृश्वभिः ॥१५॥
कल्पयन्तु खला दोषं किं तैर्यद्यमुद्यमः ।
मुनित्रयगिरामर्थंसतत्त्वविदुषः[1] प्रति ॥१६॥
सुधा तु वृत्तिर्विहिता बुधानां श्रीवत्सचिह्नेन कृते हि नाके ।
सुधातुवृत्तिर्विहिता बुधानां श्रीकुण्डिनार्येण कलावपीह[2] ॥१७॥

१. भू सत्तायाम्—वर्त्तत इति शेषः । सत्तेहात्मभरणम् । यदाह हरिः—
'आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते ।[3]' इति ।

हेलाराजश्च—'अस्ति आत्मानं बिभर्ति सत्तां भावयतीति यावत्[4]' इति । कैयटकारोऽपि—'आत्मभरणवचनो भवतिः[5]' इति । नैरुक्ताश्च 'अस्तीत्युत्पन्नस्यात्मधारणमाचष्टे[6]' इति ।

२. उदात्तः—नानुदात्त इत्यर्थः । तेन 'एकाच उपदेशेऽनुदात्तात्' इतीण्निषेधो न भवति । एवमुत्तरत्रापि ।

परस्मैभाषा[7]—परस्मैपदीत्यर्थः । उपलक्षणमर्थनिर्देशः । हिमवतो गङ्गा प्रभवति, मल्लो मल्लाय प्रभवति, ग्रामस्य प्रभवति, परान् पराभवति, इदमेवं सम्भवति, स्थाली तण्डुलान् सम्भवति, शमनुभवतीत्यादौ प्रकाशनाङ्गनिःसरणपर्याप्त्यैश्वर्याभिभवोत्प्रेक्षान्तर्भावनसंवेदनादीनामवगमात् । न च मन्तव्यम्—'प्रभूप्रभृतयस्समुदाया एवैतेष्वर्थेषु वर्त्तन्ते' इति; एवं हीह भुवः क्रियावाचित्वाभावात्समुदायस्य च भूवादावपाठान्नेह धातुत्वमिति तन्निबन्धनप्रत्ययाभावात् प्रभवतीत्यादि रूपं न स्यात् । किञ्च—उपसर्गसम्बन्धमन्तरेण 'भूतिकामः' 'पुत्रो भवति' 'बहुर्वै भवतो भ्रातृव्यः' इत्यादावैश्वर्योत्पत्तिलिप्सादयोऽवगम्यन्ते । न चोत्पत्तिः सत्ता, उत्पन्नस्यात्मधारणलक्षणा सेत्युक्तत्वात् । तथा च नैरुक्ताः—'जायतेऽस्ति विपरिणमते वर्द्धतेऽपक्षीयते विनश्यति[8]' इति क्रमेण षड् भावविकारानाहुः । लोकेऽपि सत्ताजन्मनोर्भिन्नत्वादेव 'घटः किमुत्पद्यते' इति पृष्टो न कश्चिदप्यस्तीति प्रतिवक्ति । तथाचार्येणापि 'तत्र जातः' 'तत्र भवः' इति

---

१. ०मतत्त्व०-पाठा० । २. श्लोकोऽयं केवलं ख. पुस्तक एवोपलभ्यते । ३. वा० तृ०, सा० ४७ का० । ४. तु०-हेला०, पृ० १९६ । ५. म० भा० प्र० १.३.१ । ६. नि० अ० १, ख० ३ । ७. 'परस्मैभाषः' इति तूचितः पाठः, तु०—'परस्मैभाष इति परस्मैपदिनः पूर्वाचार्यसंज्ञा'—धा० प्र०, पृ० ८ । ८. नि० अ० १, ख० २ ।

भेदेन निर्दिश्यते। तस्माद्धातुरेवानेकार्थाभिधायी, प्रादयस्तु प्रकरणादिवद्विशेषस्मृतिहेतवो द्योतकाः। द्योतकापेक्षा च शब्दशक्तिस्वाभाव्यात् क्वचिदेव, यथा हरिशब्दो भेकादावेव। एवमुत्तरत्राप्यर्थनिर्देशोऽतन्त्रम्। यथा बीजसंताने वपिः पठितः केशान्वपतीत्यादौ छेदनेऽपि वर्त्तते; तथा करोतिरभूतप्रादुर्भावे पठितः अस्मानभितः कुरु, पादौ कुरु, यः प्रथमः शकलः परापतेत्स स्वरुः कार्यः, चोरङ्कारमाक्रोशतीत्यादौ स्थापननिर्मलीकरणोपादानोच्चारणादौ वर्त्तते। चोरङ्कारमित्यत्र चोरशब्दमुच्चार्येति ह्यर्थः, न त्वचोरश्चोरः क्रियते। अर्थनिर्देशस्योपलक्षणत्व एव 'कुर्द खुर्द गुर्द गुद क्रीडायामेव' इत्येवकारोपपत्तिः। 'गाधृ प्रतिष्ठालिप्सयोः' इत्यादौ त्वनेकार्थाभिधानं प्रपञ्चार्थम्। तदेवं सत्स्वपि बहुष्वर्थेषु माङ्गलिकत्वात् सुप्रसिद्धत्वात् सर्वपदार्थव्यापित्वाच्च सत्तायाः निर्देशः कृतः। उक्तं च भाष्ये— 'न सत्तां पदार्थो व्यभिचरति'[1] इति। हरिणाप्युक्तम् —

'संबन्धिभेदात्सत्तैव भिद्यमाना गवादिषु।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः॥
तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते'[2]॥ इति।

माङ्गलिकत्वमपि प्रसङ्गात् सत्ताख्यस्य परब्रह्मणः स्मरणेन। आदौ भुवो निर्देशो भूशब्दस्य महाव्याहृतिस्मरणेन माङ्गलिकत्वात्, सर्वधात्वर्थव्याप्यर्थाभिधायित्वात्, 'भूवादयो धातवः' इति प्रसङ्गाद् भूवादिशब्दस्य साधुत्वलाभहेतुत्वाच्च। कृभ्वस्तयो हि क्रियासामान्यवचनाः। सामान्यं च विशेषेषु प्रत्येकं परिसमाप्यते। आत्मभरणं च पाकादिष्वप्यस्तीति भ्वस्त्योः क्रियासामान्यवाचित्वम्। उक्तं च कैयटे-'तद्धयात्मभरणं विरुद्धार्थसमवायैः पाकादिभिरविरुद्धैकार्थसमवायम्'[3] इति। तेन यथा 'ब्राह्मणो गार्ग्यः' इत्यत्र ब्राह्मण्यं सामान्यं गार्ग्यत्वं विशेषस्तद्वदिहाप्यात्मभरणं सामान्यं पाकत्वादिकं तु विशेषः। करोतेरपि क्रियासामान्यमर्थः, 'ब्राह्मणो गार्ग्यः' इतिवत् 'किं करोति ? पचति' इति क्रियासामानाधिकरण्यदर्शनात्। इत्थं च करोत्यर्थः प्रश्नः पचत्यादिभिर्व्याकृतो भवति। अत्यन्तभेदे तु करोत्यर्थो न व्याकृतो भवेत्, यथा 'किं करोति देवदत्तः ? घटः' इति। कथं तर्हि करोत्यर्थविशेषत्वे सर्वधात्वर्थानामासनमपि करणमिति 'किं करोति' इति प्रश्ने 'न करोत्यास्ते' इति करोत्यर्थनिषेधेनोत्तरं संगच्छते ? उच्यते, नात्र क्रियासामान्यं पृच्छयते; किन्तु लोकप्रसिद्धो गमनागमनादिर्विशेषः, तत्रैवं लौकिकानां क्रियात्वाभिमानात्। तेन तन्निषेधपूर्वकम् 'आस्ते' इत्युत्तरं युज्यते। यद्वा-क्रियासामान्यसत्तावश्यम्भावाद् विशेषविषय एव प्रश्न इति तन्निराकरणेन प्रतिवचनं बोद्धव्यम्।

---

१. म० भा० प्र० ५।२।९४। २. वा० तृ०, जा० ३३-३४ का०। ३. म० भा० प्र० १।३।१।

क्रिया च यद्वस्तु सिद्धमसिद्धं वा शब्देन साध्यत्वेनाभिधीयमानमाश्रितक्रमं तदिति वैयाकरणानां मतम्। तदुक्तम् —

'यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात्क्रियेति व्यपदिश्यते'[1]॥ इति।

नन्वेवं सति वितता बहवः क्षणा धातुवाच्या इत्युक्तं भवति, यथा पचतीत्यत्राधिश्रयणोदकासेचनतण्डुलावपनैधोपकर्षणादिः, ततश्चैषां बहुत्वेनैकत्वाभावात् कथमेकक्रियात्वेनैकधातुवाच्यत्वम्? न चास्ति समुदायभावः; क्षणानां क्षणिकत्वेन युगपदसन्निधानात्, नैष दोषः; क्रमवतामेषां क्षणानामेकफलोद्देशेन प्रवृत्तानां सङ्कलनाबुद्ध्या समापादितैक्यानां क्रियात्वव्यवहारात्। न च यदनन्तरं फलं निष्पद्यते तस्यैव फलसाधनत्वम्, एवं ह्यधिश्रयणादिवैयर्थ्यं स्यादिति तैरपि समीहितफलानुगुणैर्यथास्वं विशेष आधीयत एवेत्यवश्यं फलसाधनत्वमङ्गीकर्त्तव्यम्; एवं च 'काल्पनिकः समुदायो धातुवाच्यः' इत्युक्तं भवति। तत्रावयवक्षणाः समुदाये गुणभावमापन्ना इति न ते शब्दभेदं प्रयुञ्जते। तदुक्तम् —

'गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते'[2]॥

क्रमजन्मनामेषां क्षणानामभेद एकत्वबुद्ध्या सङ्कलनात्मिकया प्रकल्पितः, स च समूहस्वभावो गुणभूतैरवयवैर्युक्त इत्यर्थः। 'गुणभूतैरवयवैः' इति वचनमवयवानां शब्दभेदं प्रति प्रयोजकत्वं नेति प्रतिपादनार्थम्। एवं समूहरूपायाः क्रियाया एकत्वादपूर्वापरीभावादक्रमत्वेऽप्यवयवक्रमाश्रयेण क्रमिकत्वव्यवहारः। उक्तं च —

'स चापूर्वापरीभूत एकत्वाद्यक्रमात्मकैः।
पूर्वापराणां धर्मेण तदर्थेनानुगम्यते'[3]॥ इति।

कथं तर्ह्येकैकस्मिन् क्षणे धातोः प्रयोगः, पचतीत्यधिश्रयितर्यपि वक्तारो भवन्ति? उच्यते, अधिश्रयणारम्भ एव फलाभिसन्धेस्तत्रैव समुदायस्यारोपात्। अयं च समाश्रितपूर्वापरीभाव एवारोप्यत इत्येकोऽपि क्षणः क्रमिको भवति। अत एव क्षणान्तरेऽनुष्ठीयमानेऽनुष्ठास्यमाने चाध्यारोपितपक्तिरूपस्य क्षणस्यातीतत्वादपाक्षीदिति भूतकालता; तथा तस्य क्षणस्य भावित्वादितरेष्वभाविष्वपि पक्ष्यतीति भविष्यत्कालता; तथैवैकस्य क्षणस्य वर्त्तमानत्वादन्येष्ववर्त्तमानेष्वपि पचतीति वर्त्तमानकालता चेति कालत्रययोग उपपद्यते। यथोक्तम् —

---

१. वा० तृ०, क्रि० १ का०। २. वा० तृ०, क्रि० ४ का०। ३. वा० तृ०, क्रि० १९ का०।

'समूहः स तथाभूतः प्रतिभेदं समूहिषु ।
समाप्यते ततोऽभेदे कालभेदस्य संभवः'[1] ।। इति ।

तथाभूतः क्रमिकः सन् प्रतिभेदं प्रत्येकं समूह आरोप्यते । ततो विषयविषयिणोरभेद एकत्वे कालभेदः सम्भवतीत्यर्थः । तदेवं शब्देन साध्यतया प्रतीयमानः समाश्रितक्रमोऽर्थः क्रियेति स्थिते 'घटो भवति' इत्यात्मभरणलक्षणा सत्ताऽपि तथैवाभिधीयत इति तस्या क्रियात्वे न विचिकित्सा । तथा च —

क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका ॥ इति ।

क्रियाभेदहेतुना कालेन 'अभूद्, अस्ति, भविष्यति' इति प्रयोगाः । नह्यक्रियस्य कालेन विभागोऽस्ति । उक्तं च —

'कालानुपाति यद्रूपं तदस्तीति प्रतीयते'[2] ।। इति ।

एवं च 'भूतं भव्यायोपदिश्यते' इति न्यायेन देवदत्तः पचतीत्यादिवत् घटो भवतीति क्रियाकारकभावेन समन्वय उपपद्यते । 'किं करोति, इति प्रश्ने पचतीत्यादिवदस्तीति प्रतिवचनाभावो निर्ज्ञातसत्तस्यानिर्ज्ञातो व्यापारभेदः पृच्छ्यते, न तु निर्ज्ञाता सत्तैवेति; तद्विषयस्य प्रश्नस्यैवानुदयात् , न त्वक्रियत्वात् । यदा तु सत्ताविषयः प्रश्नो विनाशाशङ्कया 'किं करोति देवदत्तः' इति, तदा 'अस्ति तावद्' इति प्रतिवचनमपि भवत्येव । ननु क्रियायाः क्रमिकत्वमध्यारोपेणेत्युक्तम्, गौणता तु प्राप्नोति ? अत्र परिहरन्ति —

'व्यवहारस्य सिद्धत्वान्न चेयं गुणकल्पना ।
उपचारो पि मुख्यस्यासंभवादपदिश्यते'[3] ॥ इति ।

यथा गोशब्दस्यासम्भवात्सास्नादिमदर्थस्य वाहीकादिवृत्तित्वे ।

एवं स्थिते सर्वपार्षदत्वाद्व्याकरणस्य तत्तत्तैर्थिकानुरोधेन हरिणा क्रियायां मतभेदाः प्रदर्शिताः, तेऽपीह संक्षेपेण प्रदर्श्यन्ते । यथा —

यदनन्तरं फलं निष्पद्यते सा क्रिया । यथौदनं पचतीत्यत्र विक्लेदनम् , तदनन्तरं फलनिष्पादात्तदेव कारकम् , नहि साक्षादजनयत्कारकं नाम । अधिश्रयणादीनां विक्लेदनोपयोगित्वान्न वैयर्थ्यम् ; तेषु तु पच्यादिप्रयोगस्तदर्थत्वेन विक्लेदनरूपाध्यारोपात् । पौर्वापर्यं तु पूर्वापरक्षणापेक्षया । उक्तं च —

'अनन्तरं फलं यस्याः कल्प्यते तां क्रियां विदुः ।
प्रधानभूतां तादर्थ्यादन्यासां तु तदाख्यता'[4] ॥ इति ।

अथ वा— 'चैत्रः पचति, मैत्रः पचति, क्षीरं पचति, ओदनं पचति' इत्यादिषु कर्तृकर्मभेदेन भिन्नेषु पाकादिषु पच्यादिप्रत्ययानुवृत्तेर्घटादिषु

१. वा० तृ०, क्रि० ९ का० । २. वा० तृ०, क्रि० १२ का० । ३. वा० तृ०, क्रि० १३ का० । ४. वा० तृ०, क्रि० १४ का० ।

घटत्वादिवदस्तिपचित्वादिकं नाम जातिः सा क्रिया। ननु युगपदवस्थितैरवयवैरारब्धेषु सत्सु घटादिषु समवायाद्घटत्वादीनामभिव्यक्तिर्युज्यते, इह तु क्रमजन्मभिरयुगपद्भाविभिः क्षणैरवयव्यन्तरमारब्धुं न शक्यते यत्समवायात् पचित्वाद्यभिव्यक्तिः स्यात्; नैष दोषः; क्रमजन्मभिरयुगपद्भाविभिरनारब्धावयविभिरुत्क्षेपणादिक्षणैरुत्क्षेपणत्वादीनामिवाभिव्यक्त्युपपत्तेः। यथैव चोत्क्षेपणाद्यवयवकर्माणि इदमहमुत्क्षिपामीत्यादिबुद्धीनां विशिष्टप्रयत्नजन्यतया मिथः स्वतो भिन्नान्युत्क्षेपणत्वादीनामाधारत्वमपि प्रतिपद्यमानानि दुरवधारत्वाद्विशिष्टजातिविषयां बुद्धिं न प्रकल्पयन्ति, एवमिहाप्येकैकक्षणदर्शनेन पचित्वादीनामप्रत्ययः। अत्र च साध्यत्वक्रमिकत्वे व्यञ्जकक्षणद्वारेण। उक्तं च—

'जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्तिनीम्।
असाध्या व्यक्तिरूपेण सा साध्येवोपकल्प्यते'[1]॥ इति।

एकैकस्मिन् क्षणेऽपि पचित्वादेर्वस्तुतो विद्यमानत्वात्तत्रतत्र शब्दयोग उपपद्यते।

अथ वा—कारकभेदभिन्नविक्लेदनादिरूपाया यस्याः क्रियाव्यक्तेरनन्तरं फलं निष्पद्यते तत्र समवेता विक्लेदनत्वादिका पच्यादिक्रिया। अस्याश्च साध्यत्वादिकमाश्रयद्वारकम्। यदाह —

'अन्ते याऽथ्वा क्रिया भावो जातिः सैव क्रिया स्मृता।
सा व्यक्तेरनुनिष्पादे जायमानेऽवगम्यते'[2]॥ इति।

अत्रापि मते व्यक्तिदर्शनवत्तादर्थ्यादन्यत्र पच्यादिप्रयोगः।

अथ वा— अधिश्रयणादिव्यापारविशिष्टेषु कारकेषु सर्वेष्वेवाधिश्रयणादिव्यापारेष्वन्त्य एव व्यापारे समवेतोपहितभेदा सत्ता क्रिया। तदुक्तम् —

स्वव्यापारविशिष्टानां सत्ता वा कर्तृकर्मणाम्।
क्रिया व्यापारभेदेषु सत्ता वा समवायिनी॥
अन्ते वात्मनि या सत्ता सा क्रिया कैश्चिदिष्यते।
भाव एव हि धात्वर्थ इत्यवच्छिन्न आगमः[3]'॥ इति।

'भाव एव हि' इत्यादिना 'षड् भावविकारा इति ह स्माह भगवान् वार्ष्यायणिः'[4] इति भाष्यकारानुमतं [5]निरुक्तकारवाक्यमस्य संवादकत्वेन दर्शयति। जातिसमुद्देशेऽप्युक्तम् —

'प्राप्तक्रमविशेषा तु क्रिया सैवाभिधीयते।
क्रमरूपस्य संहारे तत्सत्त्वमिति कथ्यते[6]'॥

---

१. वा० तृ०, क्रि० २१ का०। २. वा० तृ०, क्रि० २२ का०। ३. वा० तृ०, क्रि० २३-२४ का०। ४. म० भा० १।३।१। ५. नि० अ० १, ख० २। ६. वा० तृ०, जा० ३९ का०।

व्यापारविशेषाणां साध्यत्वात्क्रमिकत्वाच्च तदुपहितायाश्च ते भवतः।

अथ वा—शब्दोच्चारणसमनन्तरं योऽर्थः प्रतिभासते बुद्ध्याकारत्वेन स शब्दार्थः। तदुक्तम्—'बुद्धिप्रतिभासः शब्दार्थः'[1] इति। यदि हि बहिःसत्तासमाविष्टार्थोऽर्थः स्यात् तदा पटोऽस्ति नास्तीत्यादौ पौनरुक्त्यविरोधौ स्याताम्, तथा सतो जन्मायोगाद् पटो जायत इत्यादिप्रयोगोऽनुपपन्नः स्यात्। किं च बहिरत्यन्तासत्सु शशविषाणादिषु तत्तच्छब्दप्रयोगो न स्यात्। बुद्ध्युपारूढे तु शब्दार्थत्वे दोषा नावतरन्ति। बुद्धिसत्तासमाविष्टस्य बहिस्सत्ताऽसत्ताजननप्रतिपादनाय 'अस्ति, नास्ति, जायते' इति प्रयोगस्योपपन्नत्वात्। अर्थक्रियाकारित्वं तु दृश्यविकल्पयोरभेदाध्यवसायादुपपद्यते। शशविषाणादिष्वप्यस्तिप्रयोगो नास्तिप्रयोगश्च बुद्धिसत्तयैवास्ति, न तु बाह्यसत्तयेत्येवं प्रतिपादनाय। तस्माद्धातूनामपि बुद्धिसिद्धाः क्षणास्तद्गता जातिः सत्ता वार्थः, सैव क्रिया। साध्यत्वादिकं वा भेदेनाध्यवसितं दृश्यक्षणद्वारेण। उक्तं हि—

'बुद्धिं तज्जातिमन्ये तु बुद्धिसत्तामथापरे।
प्रत्यस्तरूपां भावेषु क्रियेति प्रतिजानते'[2]॥ इति।

बुद्धिशब्देन बुद्धिप्रतिभास्याकारोऽत्र विवक्षितः।

तदेवं भुवः क्रियावाचित्वात्पाठाच्च "भूवादयो धातवः" इति धातुत्वे "वर्त्तमाने लट्" इति वर्तमानत्वोपाधिकार्थाद्धातोर्लट् "प्रत्ययः", "परश्च" इति प्रत्ययसंज्ञकः परस्तात्। ननु बहवः क्षणा धातुवाच्यास्तत्र केचन भूताः, केचन भविष्यन्त इति तेषामविद्यमानत्वात् कथं वर्त्तमानत्वं धात्वर्थविशेषणम्? उच्यते; नेह विद्यमानत्वं वर्त्तमानत्वम्, किं तर्हि? प्रारब्धापरिसमाप्तत्वम्; तच्च यावतः क्षणसमूहस्य फलावधिप्रवृत्तिस्तावतः प्राक्फलजननादभेदेनाध्यवसितस्यास्त्येव। एवं च काल्पनिकसमूहाकारेण विद्यमानत्वं वर्त्तमानत्वमित्युक्तं भवति।

कार्योत्पत्तौ समर्थं वा स्वेन धर्मेण तत्तथा।
आत्मतत्त्वेन गृह्येत सा चास्मिन्वर्त्तमानता[3]॥ इति।

अस्यार्थः— वाशब्दो वक्ष्यमाणपक्षापेक्षः, एकैकक्षणानन्तरं फलनिष्पत्तेरदर्शनादितरक्षणवैयर्थ्यप्रसङ्गात्सर्वक्षणानन्तरं दर्शनाच्चैकफलसाधनत्वेन क्षणानां कल्पितमेकं समुदायरूपं कार्योत्पत्तौ समर्थमित्युच्यते, तत्स्वेन धर्मेण क्रमवत्त्वेन तथा युक्तमात्मतत्त्वेनात्मीयेन विद्यमानत्वेन गृह्यते सेयमस्मिन्समुदाये वर्त्तमानतेति। वाशब्दसूचितः पक्ष उच्यते—विप्रसृतावयवः क्रियाकलापः प्रयोक्तुः

---

१. म० भा० प्र० 'सिद्धे शब्दार्थसम्बन्धे' इति वार्त्तिकव्याख्यानावसरे। २. वा० तृ०, क्रि० २६ का०। ३. वा० तृ० ८८ का०।

सङ्कलनाबुद्ध्युपारूढः प्रतिपत्तृबुद्धौ संक्रान्तस्तस्या एकत्वाद्वर्त्तमानत्वाच्च तदभेदेनैको वर्त्तमानश्च व्यपदिश्यत इति। उक्तं च—

'क्रियाप्रबन्धरूपं यत् बुद्ध्यात्मा विनिगृह्यते।
संक्रान्तबिम्बमेकत्र तामाहुर्वर्तमानताम्'[1] ॥ इति।

अयमर्थः— प्रयोक्तुः सङ्कलनाबुद्धेरात्मा क्रियाप्रबन्धरूपं वस्तु एकत्र प्रतिपत्तुर्ज्ञाने संक्रान्तबिम्बं संक्रान्तस्वरूपं यद्विनिगृह्यतेऽवधार्यते तस्मात्तस्य ज्ञानस्य वर्त्तमानतामेव तदभेदात् क्रियाया वर्त्तमानतामाहुरिति। ननु यथोपलब्धिस्मरणम्, उपलब्धिश्च क्रमेणेति प्रयोक्तुः कथं सङ्कलनात्मिकैका बुद्धिर्यदुपारोहेणासौ प्रतिपत्तुः क्रियाकलापं शब्देन युगपदवगमयेत्? ततश्चैकबुद्ध्युपारोहाभावात्कथमेकत्ववर्त्तमानत्वे स्याताम्? नैष दोषः; अनुभववासनायाः प्रत्यासन्नत्वात्क्रमेणानुभवतामपि सङ्कलनायोगात्। अनुभवपूर्वत्वं हि स्मरणस्य नियतम्, न तु क्रमिकत्वमपि; अन्यथा समुच्चयशतादिप्रत्ययाभावप्रसङ्गात्। नन्वेवमस्त्वस्यैव बौद्धस्य वर्त्तमानत्वं कथं बाह्यस्येति चेन्न; दृश्यविकल्पयोरभेदाध्यवसायात्। अन्ये तु—काल एव क्रियाया उत्पन्नध्वस्तत्वेन साधनसम्पत्त्या संभाव्यमानोदयत्वेन प्रारब्धापरिसमाप्तत्वेन चोपहितः सन् क्रमेण भूतादिभेदं प्रतिपद्यते, तत्कालयोगात्क्रियाया अपि तत्तद्व्यपदेश इति। उक्तं च—

'क्रियोपाधिश्च सन् भूतभविष्यद्वर्त्तमानता।
एकादशभिराकारैर्विभक्ता प्रतिपद्यते'[2] ॥ इति।

काल इति शेषः। एकादशत्वमप्युक्तम्—

'भूतः पञ्चविधस्तत्र भविष्यंश्च चतुर्विधः।
वर्त्तमानो द्विधा ख्यात इत्येकादशकल्पना'[3] ॥ इति।

तत्र तावदद्यतनानद्यतनव्यामिश्रसामान्यरूपाश्चत्वारो मुख्यभूतभेदाः। सामान्यमपि विशेषेभ्यो व्यावृत्तेर्भेदः। उक्तं च 'अनेकमन्यपदार्थे' इत्यत्र 'सामान्यमपि यथा विशेषस्तद्वद्'[4] इति। परोक्षस्त्वनद्यतनभूतभेदो न तु भूतभेद इति न पृथग्गण्यते। "आशंसायां भूतवच्च" इत्यतिदिष्टभूतकार्यो भविष्यन्नप्येको गौणो भूत इति भूतः पञ्चविधः। भविष्यन् तु गौणाभावादद्यतनादिभेदेन चतुर्विधः। वर्तमानो गौणमुख्यभेदेन द्विविधः। "वर्तमानसामीप्ये" इत्यतिदिष्टवर्त्तमानकार्यौ भूतभविष्यन्तौ गौणौ। तदेवमेकादशभेदा कालस्य। यद्यप्यन्येऽप्यौपाधिका भेदाः सन्ति, तथापि शास्त्रप्रक्रियायामियन्त एवोपयुज्यन्त इत्येवमुक्तम्।

१. वा० तृ०, का० ८९। २. वा० तृ०, ३७ का०। ३. वा० तृ०, ३८ का०। ४. म० भा० २।२।२४।

लटोऽकारटकारयोः 'उपदेशेऽजनुनासिक इत्' 'हलन्त्यम्' इतीत्संज्ञा। उपदेशो धातुसूत्रप्रातिपदिकप्रत्ययागमादेशलक्षणः। प्रतिज्ञानुनासिक्याः पाणिनीयाः। 'तस्य लोपः' इतीतो लोपः। "अदर्शनं लोपः"–अदर्शनं चेह प्रसक्तस्य शब्दस्य विनाशः प्रयोजनं लडित्यनुवादष्टिद्व्यपदेशश्च। एषा दिगन्यत्राप्यनुसन्धेया। ननु 'शषसर्' 'हल्' इत्यत्र लकारस्येत्त्वे तेन 'आदिरन्त्येन सहेता' इति प्रत्याहारः, सति च तस्मिन् 'लण्' इत्यत्र लकारस्य हल्त्वात्तस्यैव 'शषसर्' 'हल्' इत्यत्रान्ते निर्देशादित्संज्ञा, तदाश्रयश्च हलिति प्रत्याहार इतीतरेतराश्रयत्वादयमेव तावत् प्रत्याहारोऽनुपपन्नः, ततः सर्वेषामेव णकारादीनामित्त्वं न स्यादिति सर्वप्रत्याहारव्यवहारोऽनुपपन्न इति कथमत्राच्त्वेन हल्त्वेन चाकारटकारयोरित्त्वम्, एवं च 'आदिरन्त्येन'इति ग्राहकसूत्रमपि व्यर्थं स्यादिति चेत्, नैष दोषः; हलिति सूत्रे हकारात्पर ऌकारः, लपरत्वं तु तस्यैकादेशलक्षणकृतम्। तेन तस्याच्त्वादित्त्वं भविष्यति, स एव 'हलन्त्यम्' इत्यत्राप्येकादेशेन लपरेण निर्दिष्ट इति। एवमपीतरेतराश्रयमेव–ऌकारस्य सत्यामित्संज्ञायां हलिति प्रत्याहारः, सत्यस्मिन्नैऔजिति चकारस्येत्त्वम्, तस्मिंश्च सत्यजिति प्रत्याहारः, अस्मिंश्च प्रत्याहारे सति ऌकारस्येत्संज्ञया भाव्यमिति। एवं तर्हि हल् च ऌ चेति समाहारद्वन्द्वेन द्वितीयस्यापि ऌकारस्य निर्देशात् प्रत्याहारमन्तरेण तस्येत्संज्ञासिद्धिः। अश्रवणन्तु संयोगान्तलोपेन। अथ वा—श्वेतो धावतीत्यादाविव द्वितीयमप्यत्र हल्ग्रहणं तन्त्रेणोपादीयते। तत्रैकेन हस्य ऌिति हकारसमीपस्थ ऌकारस्य विनैवं प्रत्याहारादित्संज्ञा भविष्यति। यद्वा—'हस्य ऌ हल्' इति तत्पुरुषस्य प्रत्याहारस्य च हल्शब्दस्यैकशेषेऽर्थद्वयं लप्स्यत इति न सङ्कटं किञ्चित्। तत्पुरुषः पुंल्लिङ्गः, प्रत्याहारस्तूभयलिङ्गोऽप्यन्तमित्यनेन साहचर्य्यादिह नपुंसकलिङ्ग इति। 'नपुंसकमनपुंसकेन' इति तस्य शेष एकत्वं च।

"लः कर्मणि च भावे चाकर्मकेभ्यः"—उत्सृष्टानुबन्धश्चायं लकारः, लकाराः सकर्मकेभ्यो धातुभ्यः कर्मणि कर्त्तरि च भवन्ति, अकर्मकेभ्यस्तु भावे कर्तरि चेति यथायोगं कर्त्रादौ भवन्ति। "स्वतन्त्रः कर्त्ता"—क्रियाप्रसिद्धौ यत्कारकं प्रधानभूतं विवक्षितं तत् कर्तृसंज्ञं भवति। ननु च सामग्रीसाध्यायां क्रियायां स्वस्वव्यापारे सर्वेषां स्वातन्त्र्यात् कथमेकस्य तत्? उच्यते; करणादिप्रवृत्तेः प्रागेव परस्मादर्थितादेरेव निमित्तात्कर्तुः प्रवृत्तिः, करणादि तु तदधीनप्रवृत्तिनिवृत्ति। तथा हि—अर्थी हि कर्त्ता तत्प्रयुङ्क्ते, न तदेनम्। किञ्च—तस्य प्रतिनिधिर्दृश्यते, व्रीह्यपचारे नीवारैरिज्यते, कर्तुः स नास्ति; तद्भेदे क्रियान्तरमेवेति प्रसिद्धिः। किञ्च–कारकान्तरानुपादानेऽप्यसौ दृश्यते भवत्यादिषु। तस्माद्युक्तं स्वातन्त्र्यम्। तथा चोक्तम्—

'प्रागन्यतः शक्तिलाभान्न्यग्भावापादनादपि ।
तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्त्तनात् ॥
अदृष्टत्वात्प्रतिनिधेः प्रविवेके च दर्शनात् ।
आरादप्युपकारित्वात्स्वातन्त्र्यं कर्तुरुच्यते'[1] ॥ इति ।

प्रागन्यतः शक्तिलाभादीनां शब्देन प्रतीतिमात्रस्य विवक्षणादचेतनेष्वपि तदनपायात् कर्तृतोपपत्तिः । उक्तं च—

'सर्वैरप्युदितैः शब्दैर्नियमो न तु वस्तुनि ।
कर्तृधर्मविवक्षायां शब्दात् कर्त्ता प्रतीयते'[2] ॥ इति ।

वृत्तौ तु स्वातन्त्र्येणागुणभावो विवक्ष्यत इति तस्य च सार्वत्रिकत्वात्सर्वत्र कर्तृतोपपत्तिः । उक्तं च—

कर्त्ता च त्रिविधो ज्ञेयः कारकाणां प्रवर्त्तकः ।
केवलो हेतुकर्त्ता च कर्मकर्त्ता तथापरः ॥ इति ।

"कर्तुरीप्सिततमं कर्म"—कर्त्रा क्रियया यदाप्तुमिष्टतमं तत्कर्म । "तथा युक्तं चानीप्सितम्"—येनैव प्रकारेणेप्सिततमं क्रियया युज्यते तेनैव प्रकारेण तथा युज्यमानमनीप्सितमपि कर्म । "अकथितं च"—अपादानादिविशेषकथारहितं दुह्यादिकारकं गवादि च कर्म । "दिवः कर्म च"—दिवः साधकतमं करणं तत्कर्मेत्यादि । चतुर्विधं कर्म—ईप्सिततमनीप्सिततमाकथितसंज्ञान्तरपूर्वभेदेन । तत्राद्यं त्रिधा—निर्वर्त्यम्, विकार्यम्, प्राप्यमिति । द्वितीयमपि द्वेधा—द्वेष्यम्, इतरदिति । तदुक्तम्—

'निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम् ।
तत्रेप्सिततमं कर्म चतुर्धान्यत्तु कल्पितम् ॥
औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम् ।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम्'[3] ॥ इति ।

तत्र निर्वर्त्यम्—यस्योपादानकरणं नास्ति, सदपि वा तत्परिणामित्वेन नाश्रीयते; यथा—संयोगं करोति, पटं करोति, मृदा घटं करोतीति । विकार्यमपि द्वेधा—प्रकृत्युच्छेदसम्भूतमेकम्, प्रकृत्यनुवृत्तौ गुणान्तरोत्पत्त्योपलक्षितमपरम्, यथा—काष्ठानि भस्म करोति, हिरण्यं कुण्डलं करोतीति । व्रीहीन्प्रोक्षतीत्यादौ प्रोक्षणादिजन्यादृष्टरूपेण विक्रियमाणा व्रीह्यादयोऽपि विकार्यं कर्म । प्राप्यं पुनरेकमेव, यत्र क्रियाकृतो विशेषो न गम्यते, यथा—वेदमधीत इत्यादौ वेदादि । तथा चोक्तम्—

१. वा० तृ०, सा० १०१-१०२ का० । २. वा० तृ०, सा० १०३ का० ।
३. वा० तृ०, सा० ४५-४६ का० ।

'सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी ।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते'[1] ॥
'तन्निर्वर्त्यं विकार्यं तु द्विधा कर्म व्यवस्थितम् ।
प्रकृत्युच्छेदसंभूतं किञ्चित् काष्ठादिभस्मवत् ॥
किञ्चिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ।
क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ॥
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते'[2] ॥ इति ।

भावस्तु केवलो धात्वर्थः । लस्य—"तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्"—तिबादयोऽष्टादश 'षष्ठी स्थानेयोगा' इति लस्य स्थाने स्युः । स्थानं प्रसङ्गः, योगः सम्बन्धः । इह शास्त्रेऽनियतसम्बन्धविशेषा षष्ठी स्थानेयोगेत्यर्थः । तत्र तिबादिष्वविशेषेण प्राप्तेषु, "शेषात्कर्तरि परस्मैपदम्' इत्यात्मनेपदविषयादन्यत्वेन शेषादन्यस्मात्परस्मैपदमेव, तच्च कर्त्तर्य्येव । आत्मनेपदविषयश्च स येषाम् 'अनुदात्तङित' इत्यादिनाऽऽत्मनेपदं विहितम् । "लः परस्मैपदम्" । "तङानावात्मनेपदम्"—तङिति तिबादिसूत्रेणोपात्तास्तादयो नव प्रत्याहारेणोच्यन्ते । आन इति शानच्कानचौ । अत्र यद्यपि-'लः परस्मैपदम्' इति लादेशानां सामान्येन परस्मैपदसंज्ञोच्यते, तथापि 'आकडारादेका संज्ञा' इत्यतः परेषां 'कडाराः कर्मधारय' इत्यतः प्राचामेकस्यैकैव संज्ञेति नियमात् तङानयोरात्मनेपदसंज्ञयाऽनवकाशया बाधिता सा तद्व्यतिरिक्तविषयाऽवतिष्ठते । "युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः"—युष्मदि समानाधिकरणे व्यवहिते वाऽव्यवहिते वा प्रयुज्यमाने स्थानिन्यप्रयुज्यमाने वा लान्तार्थस्य युष्मदर्थविशेष्यत्वे एव मध्यमः । "अस्मद्युत्तमः" पूर्ववद्व्याख्या । "शेषे प्रथमः"-यत्र युष्मदस्मदी समानाधिकरणे न स्तः स शेषस्तत्रैव प्रथमः । "तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः"—तिङः परस्मैपदान्यात्मनेपदानि च प्रत्येकं त्रीणित्रीणि पदानि भूत्वा यथासंख्यं प्रथमादिसंज्ञानि । "यथासंख्यमनुदेशः समानाम्"—संख्या क्रमः, अनुदेशः पश्चादुच्चार्यमाणो विधीयमानः, अनुदेशशब्दस्य सम्बन्धिशब्दत्वादाक्षिप्ता उद्देशिनः, तेषामनुदेशिनां च संख्यातः पाठतश्च समानानां यो यः क्रमस्तेन तेन क्रमेण संबन्ध इत्यर्थः । तत्राप्येवं व्यवस्था—'बहुषु बहुवचनम्', 'द्व्येकयोर्द्विवचनैकवचने' बहुत्वादिषु यथासंख्यं बहुवचनादीनि । "तान्येकवचनद्विवचनबहुवचनान्येकशः"-तानि लब्धप्रथमादिव्यपदेशानि त्रीणित्रीणि प्रत्येकं यथासंख्यमेकवचना-

१. वा० तृ०, सा० ४७ का० । २. वा० तृ०, सा० ४९-५१ का० ।

दिसंज्ञानि। एवं तिबादिषु। 'कर्त्तरि शप्'—कर्तृवाचिनि सार्वधातुके धातोः शप् स्यात्। "तिङ्शित्सार्वधातुकम्"—प्रत्यय इति शेषः। शकारस्य "लशक-तद्धिते"—लशकवर्गास्तद्धितवर्जप्रत्ययाद्या इत इतीत्वाल्लोपः। "सार्वधातुकार्द्धधातु-कयोः"—अनयोरिगन्ताङ्गस्थाने गुणः। "आर्द्धधातुकं शेषः"—तिङ्शिद्भ्योऽन्यो धातुसंशब्दनेन विहितः प्रत्यय आर्द्धधातुकम्। "अदेङ् गुणः"-अदेङौ मात्रिक-द्विमात्रिकौ तद्भाविनावतद्भाविनौ च, तौ च गुणौ। "अणुदित्सवर्णस्य चाप्र-त्ययः"—अण् चोदिच्च गृह्यमाणः सवर्णग्राहको भवति विधीयमानमणं वर्जयित्वा, उदिच्छब्देन कादयः पञ्चोच्यन्ते। "तुल्यास्यप्रयत्नं सवर्णम्"—आस्यं ताल्वादि, तत्स्थः प्रयत्नो यस्य वर्णस्य येन तुल्यः स तं प्रति सवर्णः। अकुहविसर्जनीयानां कण्ठः। स्पृष्टं करणं स्पर्शानामिति स्थानप्रयत्नसाम्यम्। कादयो मावसानाः स्पर्शाः। "तपरस्तत्कालस्य"—तः परो यस्मात्स च तात्परश्च तपरः, स उदात्ता-दिभिन्नं सवर्णमात्मना तुल्यकालं स्वं च ग्राहयतीति भिन्नकालाग्रहः। गुणविधौ च 'इको गुणवृद्धी' इत्यनेन गुणवृद्ध्योः स्वसंज्ञया विधाने इक इत्युपस्थाप्यते। 'अङ्गस्य' इति चाधिकृतम्। "यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्"—यस्मात् प्रत्ययविधिस्तदादि तच्च तस्मिन्नेव प्रत्ययेऽङ्गम्। तत्रानयोः सामानाधिकरण्ये-नान्वयस्य न्याय्यत्वादिकोऽङ्गस्य विशेषणता। "येन विधिस्तदन्तस्य"—यद्विशेष-णमुपादाय किञ्चिद्विधीयते तदात्मान्तस्य स्वस्य च ग्राहकमिति तदन्तत्वलाभः। "अलोऽन्त्यस्य"-आदेशः षष्ठीनिर्दिष्टस्यान्त्यस्य भवति। अन्त्यस्यैवालः स्थानषष्ठी स्थानित्वं प्रतिपादयतीत्यन्त्यस्य स्थानित्वादिगन्ताङ्गान्त्यस्येत्युक्तार्थलाभः। स चेह गुणः। "स्थानेऽन्तरतमः"—अनेकादेशप्रसङ्गे सदृशतमः स्यात्, स सदृशः गुणादिसदृशात् स्थानसदृश इति नियमादुकारस्योपूपध्मानीयानामोष्ठौ इत्यो-ष्ठ्यस्यौदौतोः कण्ठोष्ठ्यमिति ओष्ठ्य ओकारः। तस्य "एचोऽयवायावः" इति यथासंख्येनावादेशे सिद्धं भवति इति। अस्य च 'सुप्तिङन्तं पदम्' इति पदत्वे "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ" इति पदात्परयोरपादादौ वर्त्तमा-नयोः समानवाक्यस्थयोः श्रूयमाणषष्ठ्यादिद्विवचनान्तयोरनयोर्यथासंख्यं वान्ना-वादेशौ भवतः। "बहुवचनस्य वस्नसौ"। "तेमयावेकवचनस्य"—इमावादेशौ न द्वितीयैकवचनान्तयोः, "त्वामौ द्वितीयायाः" इति त्वामोर्विधानात्। एषामपि पूर्ववद्व्याख्या। भवति वाम्, भवति नौ, भवति वः, भवति नः, भवति ते, भवति मे, भवति ते, भवति मे, भवति त्वा, भवति मा। यथायोगं स्वं, देयं, प्राप्तमिति शेषः। एते चानेकाल्त्वात् 'अनेकाल्शित्सर्वस्य' इति सर्वादेशाः। एषां च 'स्थानिवदादेशोऽनल्विधौ' इति स्थान्यलाश्रयकार्यं वर्जयित्वा स्थानिकार्यविधा-नात् पदत्वे तन्निबन्धनानि रुत्वादीनि यथायोगं ज्ञेयानि। भवतः—अत्र तसः सकारस्य प्रयोजनाभावादित्त्वाभावः। न च लोप एव प्रयोजनम्, एवं हि नोपदि-

श्येत। 'सिति च' इति पदत्वं यकाराज्यसर्वनामस्थानविषयमिति न प्रयोजनम्। यद्वा— 'विभक्तिश्च' इति सुपः तिङश्चैकवचनादिसंज्ञाः सन्तो विभक्तय इति 'न विभक्तौ तुस्माः' इतीत्त्वाभावे "ससजुषो रुः"— सान्तस्य पदस्य सजुषश्च रुरिति रुत्वे 'खरवसानयोर्विसर्जनीयः' इति विसर्जनीयः। "विरामोऽवसानम्"— विरतिर्विरामः वर्णस्याभावोऽनुच्चारणम्, तत्र वर्णेष्वप्युच्चरितप्रध्वंसिषु बुद्धिकृतं पौर्वापर्यमित्यभावरूपेऽवसानेऽपि तत्सम्भवात् परसप्तमीत्योपपत्तिर्भवति। भवन्ति—"झोऽन्तः"। प्रत्ययादेरिति शेषः। अन्त्योऽकार उच्चारणार्थः, न तु तकारस्यानन्त्यत्वेनेत्त्वनिवृत्तये लुप्यते; तस्य प्रयोजनाभावादेव सिद्धेः। न च 'तित्स्वरितम्' इति स्वरितत्वं प्रयोजनम्; तितः प्रत्ययस्येति तत्र स्थितेः। न च स्थानिवत्त्वात्प्रत्ययः; तदेकदेशत्वादस्य। अत्र शबन्त्यकारयोः 'अतो गुणे' इत्य-पदान्ताकाराद् गुणे परे तयोः पूर्वपरयोः पररूपमेकादेश इत्येकादेशं वर्णमात्रा-श्रयत्वेनान्तरङ्गं प्रकृतिप्रत्ययापेक्षत्वाद्बहिरङ्गोऽपि गुणो 'वार्णादाङ्गं बलीयः' इति बाधते। अस्ति च समानाश्रयत्वम्; उभयोर्विकरणापेक्षत्वात्। पूर्वं त्वेका-देशे 'अन्तादिवच्च' इत्येकादेश आश्रीयमाणं पूर्वं प्रत्यन्तवत्परं प्रत्यादिवदिति 'सार्वधातुकमपित्' इत्यत्राश्रीयमाणस्य पितोऽस्य सार्वधातुकस्यैकादेशस्यादिव-द्भावाच्छपोऽपि सार्वधातुकग्रहणेन ग्रहणात् ङित्त्वात् 'क्ङिति च' इति क्ङिन्निमित्त-योरिग्लक्षणयोर्गुणवृद्ध्योर्निषेधाद् गुणो न स्यात्। भवतु वा पूर्वमेकादेशः, तदाप्यदोषः; 'अचः परस्मिन् पूर्वविधौ' इति परनिमित्तोऽजादेशोऽचः पूर्व-सम्बन्धिनि कार्यमात्रे कर्त्तव्ये स्थानिना तुल्यः स्यादिति स्थानिबुद्ध्या व्यवधानेन निषेधस्याप्रसङ्गात्। किं च तत्रापिदित्यस्य प्रसज्यप्रतिषेधत्वेन सिद्धान्तितत्वात् 'पित्सार्वधातुकं ङिन्न' इत्याश्रीयमाणं पित्तं प्रत्येकादेशस्यान्तवत्त्वात् ङित्त्वस्या-प्रसङ्गात्, अस्तु गुणैकादेशयोः प्रवृत्तौ कामचारः। भवसि। भवथः। भवथ। भवामि। भवावः। भवामः—"अतो दीर्घो यञि" इति यञादौ सार्वधातुके-ऽकारान्ताङ्गान्त्यस्य दीर्घः, स च स्थानी कण्ठ्य इति तादृश आकारः। 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति यञादीति लाभः। 'ऊकालोऽज्झ्रस्वदीर्घप्लुतः' इत्यचो मात्रिकद्विमात्रिकत्रिमात्रिकाः क्रमेण ह्रस्वादिसंज्ञाः।

'परोक्षे लिट्'—भूतानद्यतनपरोक्षतोपाधिकार्थवृत्तेर्धातोर्लिट्। धातु-वाच्यायाः क्रियाया इन्द्रियेणासन्निकर्षात्परोक्षत्वे सिद्धे परोक्षग्रहणं साधनपरोक्ष-तार्थम्। पूर्ववत्तिबादयः। ते च 'लिट् च' इति लिडादेशत्वादार्धधातुकाः। अत्र च 'लङः शाकटायनस्यैव' इत्यत एवकारानुवृत्त्या न सार्वधातुका इति विकरणाभावः। एषां च लिडादेशानां नवानां तिबादीनां 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' इति यथासंख्यं णलादयः स्युः। ते च स्थानिवत्त्वे-नार्धधातुकाः, प्रत्ययाश्च। णलो णकारस्य प्रत्ययादित्वाच्च इत्संज्ञायां लोपः।

प्रयोजनम् ? वृद्ध्यादि । नन्वत्र णकारो लुप्यत इत्यनेकाल्त्वाभावात् 'अनेकाल् शित्सर्वस्य' इति सर्वादेशत्वं न स्यात्, नैतत्; आदेशोत्तरकालं प्रत्ययत्वतदादित्वेन णकारस्येत्त्वे लोप इत्यादेशदशायामनेकाल्त्वात्। एवं भू अ इति स्थिते— 'अचो ञ्णिति' इति ञित्णित्प्रत्ययपरस्याजन्तस्याङ्गस्य वृद्धिः प्राप्नोति। वृद्धिरित्यादैचां तद्भावितानामतद्भावितानां 'वृद्धिरादैच्' इति संज्ञा, तपरकरणादैचौ द्विमात्रिकौ गृह्येते 'तादपि परस्तपरः' इति। "भुवो वुग्लुङ्लिटोः" इत्यजादौ लुङि लिटि च विधीयमानो वुक् कृताकृतप्रसङ्गित्वेन नित्यो वृद्धिं बाधते। अत्र वृद्धौ कृतायामौकारान्तस्य प्राप्नोत्यन्यत्र तूकारान्तस्येति शब्दान्तरप्राप्त्या वुगनित्य इति चेत्, न; एकदेशविकृतस्यानन्यत्वान्न शब्दान्तरप्राप्तिरिति। "आद्यन्तौ टकितौ"—यथासंख्यं षष्ठीनिर्दिष्टस्येति वुगयं भुवोऽन्त्यः। "लिटि धातोरनभ्यासस्य"—धातोरवयवस्य प्रथमस्यैकाचो द्विर्वचनमजादेस्तु द्वितीयस्येति भुव आदिर्द्विरुच्यते। "पूर्वोऽभ्यासः"—अत्र प्रकरणे, द्विरुक्तस्येति शेषः। "हलादिः शेषः" अभ्यासस्यादिर्हल् शिष्यते, अनादिस्तु निवर्तत इत्यर्थः। "ह्रस्वः" इति—अभ्यासस्याचो ह्रस्वः। "भवतेरः" इति—लिटि परेऽभ्यासान्तस्याकारादेशः। "अभ्यासे चर्च" इति—अभ्यासझलां चरो जशश्च। तत्र वर्गाणां प्रथमद्वितीयाः शषसा विसर्जनीयजिह्वामूलीयोपध्मानीया अघोषा विवृतकण्ठाः श्वासानुप्रदानाः; तृतीयचतुर्थपञ्चमहकारा घोषवन्तः संवृतकण्ठा नादानुप्रदाना इत्योष्ठ्यस्य घोषवतः संवृतकण्ठस्य नादानुप्रदानस्य भकारस्य तादृशो बकारः— बभूव। ननु 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इत्यजादौ प्रत्यये श्नुभ्रुवोरन्त्यस्य धात्वन्तयोरिवर्णोवर्णयोरियङुवङोर्विधानात्, अत्रोवङि कर्त्तव्ये "असिद्धवदत्राभात्"—समानाश्रयमाभीयशास्त्रमाभीयेऽसिद्धमिति वुकोऽसिद्धत्वादुवङ् स्यात्। अस्तु, पुनर्वुग् भविष्यति, ततश्च "उपधायां च"—धातोरुपधाभूतौ हल्परौ यौ रेफवकारौ ताभ्यां पूर्वस्येको दीर्घः स्यादिति दीर्घत्वम्, "लोपो व्योर्वलि" इति-पूर्वयकारवकारयोर्वलि परे लोप इति पूर्वस्य वकारस्य लोपे सेत्स्यति बभूवेति ? न सिद्ध्यति; "पूर्वत्रासिद्धम्"—अस्माद्योगात् परे पूर्वत्रासिद्धाः परे च मिथः पूर्वत्र पूर्वत्रासिद्धा इति 'उपधायां च' इत्यस्य वलि लोपं प्रत्यसिद्धत्वात्पूर्वलोपे हल्पर उपधावकारो नेति दीर्घाप्रसङ्गात्। अथ वा— दीर्घवलोपयोरन्तरङ्गयोः कर्त्तव्ययोः 'असिद्धं बहिरङ्गम्' इति बहिरङ्गस्य वुकोऽसिद्धत्वान्नैव दीर्घत्वं स्यात्, नापि वलोपः। एवं तर्हि 'वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ'[1] इति वुकः सिद्धत्वादुवङ् न भविष्यति ? 'श्नसोरल्लोप' इति तपरकरणाज्ज्ञापकादाभीयस्यासिद्धत्वस्यानित्यत्वाद्वात्र वुकः सिद्धत्वं भवति—बभूवतुः।

---

१. पा० सू० ६।४।२२ (वा०)।

बभूवुः। बभूविथ—आर्द्धधातुकस्येड्वलादेः' इतीट्। टित्त्वात्तदादिः। बभूविथ इत्यत्र वृद्धिवद्गुणो वुका बाध्यते। बभूवथुः—स्थानिवत्त्वेन विभक्तित्वान्न सकारस्येत्त्वम्। यूयं बभूव। नन्वत्राकारः 'अलोऽन्त्यस्य' इति थशब्दाकारस्यादेशः प्राप्नोति, फलं च यथासंख्यं स्यात्, मैवम्; अत्र धातोरित्यनुवर्तते, तस्मात्परस्य विधीयमानोऽकारः 'आदेः परस्य' इति थकारस्य, ततो द्वयोरकारयोः पररूपम्। अहं बभूव। बभूविव। बभूविम—उत्तमविषये चित्तव्याक्षेपात् परोक्षतासम्भवः। अत्र "असंयोगाल्लिट् कित्"—असंयोगान्ताद्धातोः परोऽपिल्लिट् किदिति वमयोः कित्त्वे 'श्र्युकः किति' इति श्रिञ उगन्ताच्च धातोः परस्य कितो नेडिति प्राप्तस्य निषेधस्य 'कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि'—क्रादय एव लिट्यनिटः, ततोऽन्ये लिटि सेट इति नियमात्सेट्त्वम्। अत्र केचिदेवमाहुः—"वुग्विधावोरित्यनुवृत्तेर्वृद्धिगुणयोः कृतयोरुवर्णान्तत्वाभावात्तल्लक्षणस्य वुकोऽप्राप्तेस्तस्याप्यसिद्धत्वात्परत्वात्प्राप्तयोर्गुणवृद्ध्योः "इन्धिभवतिभ्यां च"—आभ्यां परो लिट् किदिति कित्त्वेन बाधस्ततो वुक्। अत्र ङिद्ग्रहणानुवृत्तेर्ङित्त्वमप्यस्यातिदिश्यते इत्युभयातिदेशसामर्थ्यादनिग्लक्षणाया अपि वृद्धेर्निषेधः। तेन यङ्लुकि भवतीति निर्देशात्कित्त्वाभावाद् वृद्धिगुणयोः कृतयोरनुवर्णान्तत्वाद् वुगभावात्—बोभाव, बोभविथ, बोभव—इति सिद्धम्" इति, सर्वमेतद्वार्त्तिकविरुद्धम्; यदाह–'इन्धेश्छन्दोविषयत्वात् भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यम्'[1]। इति।

"अनद्यतने लुट्"—अह्न[2] उभयतोऽर्द्धरात्रमद्यतनः कालः। अविद्यमानाद्यतनभविष्यत्युपाधिकार्थाद्धातोर्लुट् स्यात्, लस्य तिबादिषु 'स्यतासी लृलुटोः'—ल इति लृङ्लृटोरुत्सृष्टानुबन्धयोः सामान्येन ग्रहणम्, ललुटोरादेशेषु परेषु धातोर्यथासंख्यं स्यतासी स्याताम्। अत्र केचित्तासेरिकारमुच्चारणार्थमाहुः। परमते त्वनुनासिकं सलोपप्रतिषेधार्थम्। इह तु प्रयोजनाभावान्न प्रसज्यते। 'लुटः प्रथमस्य डारौरसः'—लुडादेशस्यात्मनेपदप्रथमस्य परस्मैपदप्रथमस्य च यथासंख्यं डारौरसः स्युः। 'टेः' इति भस्याङ्गस्य टेर्डिति विधीयमानो लोपोऽत्राभत्वेपि डित्त्वसामर्थ्याद्भवति। 'अचोऽन्त्यादि टि'—एकत्र सन्निविष्टानामचामन्त्याजादिष्टिः। इड्गुणावादेशाः—भविता। अत्रेटः 'पुगन्तलघूपधस्य च'—पुगन्तस्याङ्गस्य लघूपधस्य चेको गुण इति प्राप्तो 'दीधीवेवीटाम्' इति निषिध्यते। 'ह्रस्वं लघु'। "अलोऽन्त्यात्पूर्व उपधा"—धात्वादौ वर्णसमुदायेऽन्त्यादलः पूर्व उपधा—भवितारौ। भवितारः—"रि च" इति—रेफादौ प्रत्यये तासस्त्योः सकारस्य लोपः। भवितासि—'तासस्त्योर्लोपः'—सकारस्य सकारादौ प्रत्यय इति शेषः। अत्र 'नाज्झलौ' इत्यज्झलोर्मिथः सावर्ण्यनिषेधेऽपवादे प्रवृत्ते पश्चात्तद्विषयपरि-

---

१. पा० सू० १।२।६ (वा०)। २. अह्नरुभयतो—पाठा०।

हारेण सवर्णसंज्ञाप्रवृत्तौ तदुपजीव्यप्रवर्त्तमानस्य ग्रहणकशास्त्रस्य 'नाज्झलौ' इत्यत्रानिष्पन्नत्वादज्ग्रहणेन पठितानामेवाचां ग्रहणादन्येषां हल्भिः सवर्णसंज्ञाया अनिषेधादाकारस्य सवर्णेन हकारेण ग्रहणादिण्त्वात् 'आदेशप्रत्यययोः' इतीण्कोश्च परस्यादेशरूपस्य प्रत्ययावयवस्य च सकारस्य विधीयमानं षत्वं कस्मान्नेति चेत्, [1]न; हकारो विवृतः, आकारो विवृततरः, एवं हि पठन्ति—'ए औ विवृततरौ ताभ्यामप्याकारः' इति[1]। 'वयस्यासु मूर्ध्नः' इत्यादिनिर्देशात्। यद्वा—'विवृतमूष्मणां स्वराणां च' इत्यत्र 'ईषत्स्पृष्टमन्तस्थानाम्' इत्यतः ईषदित्यनुवर्त्तते, तच्च पृथग्विभक्तिनिर्दिष्टैः प्राथमिकैरूष्मभिरेव संबध्यते, न तु स्वरैरिति नैव सावर्ण्यप्रसङ्गः। अत एव भाष्यवार्त्तिकयोः सूत्रं प्रत्याख्यातम्। भवितास्थः। भवितास्थ। भवितास्मि। भवितास्वः। भवितास्मः।

'लृट् शेषे च'—क्रियार्थक्रियोपपदादन्यो भविष्यत्कालः शेषः, तत्र शेषे चाक्रियार्थक्रियोपपदे भविष्यति च धातोर्लृट् स्यात्। चतुर्विधो भविष्यन्नित्युक्तम्। तत्रानद्यतने लुड्विधानादन्यत्रायं विधिः। 'अनद्यतन' इति बहुव्रीहिनिर्देशाद्व्यामिश्रेऽप्ययमेव। लस्य तिबादिषु 'स्यतासी' इति स्यः। इडादयः—भविष्यति। भविष्यसि। भविष्यामि। क्रियायां क्रियार्थायामुपपदे—धनी भविष्यामीति राजानं सेवते। 'आदेशप्रत्यययोः' इति सर्वत्र षत्वम्।

'लोट् च'—विध्यादिष्वर्थेषु धातोर्लोट् स्यात्। ते च वक्ष्यन्ते। लस्य तिबादिषु 'एरुः' इति लोडादेशेऽकारस्योकारः—भवतु। भवताम्—अत्र 'लोटो लङ्वत्' इति लङ्वत्कार्यातिदेशात् 'तस्थस्थमिपां तान्तामः' इति लङस्तसादीनां विधीयमानास्तामादय आदेशा लोट्यपि भवन्तीति तसस्ताम्। भवन्तु। भव—'सेर्ह्यपिच्च' इति। लोटः सेर्हिरादेशः। अपिदिति वचनात् स्थानिवत्त्वेन पिन्न भवति। अस्य प्रयोजनं तत्र तत्र दर्शयिष्यते। हेः 'अतो हेः' इत्यकारान्तात् परत्वेन 'प्रत्ययस्य लुक्श्लुलुपः' इति प्रत्ययादर्शनस्यैताः संज्ञाः, अनेकसंज्ञाविधानेन तद्भावितग्रहणविज्ञानात् तत्तच्छब्दभावितस्य प्रत्ययादर्शनस्य सा सा संज्ञेति संज्ञानामसङ्करो भवति। विधिप्रदेशेषु भाविसंज्ञाविज्ञानान्नेतरेतराश्रयत्वम्, यथा-'अस्य सूत्रस्य शाटकं वय' इति। अत्र यदि शाटको न वातव्यः, अथ वातव्यो न शाटक इति विप्रतिषेधात् स वातव्यो यस्योतस्य शाटक इति व्यपदेशो भावीति ह्यर्थः। भवतम्। भवत—लङ्वद्भावात्तम्तौ। ताम्तमोर्मकारस्य 'न विभक्तौ तुस्माः' इतीत्त्वनिषेधः। भवानि—'मेर्निः—इति लोडादेशस्य मेर्निरादेशः, अयं चापवादत्वाल्लङ्वद्भावप्राप्तमादेशं बाधते, मेर्नुरित्यवचनाद् 'एरुः' न भवति। तथा "इतश्च' इति ङिल्लादेशपरस्मैपदेकारस्य विधीयमानो लोपो लङ्वद्भावान्न

---

१-१. अयं पाठः ख. पुस्तके टिप्पण्यामुद्धृतो न तु मूले-इति ध्येयम्।

भवति । 'मो नः' इत्यवचनात् । भवाव । भवाम । लङ्वद्भावात् 'नित्यं ङितः' इति ङित्वाल्लादेशोत्तमसकारस्य विधीयमानो लोपोऽत्रापि भवति । 'आडुत्तमस्य पिच्च' इति लोडादेशोत्तमस्याडागमः टित्त्वादादिः । तस्य सवर्णदीर्घः । पिच्चेत्युत्तमस्य पित्त्वातिदेशप्रयोजनं तत्र तत्र भविष्यति । आडागममन्तरेण 'अतो दीर्घः' इति दीर्घेणापि रूपे सिद्धे तत्प्रवृत्तिः पर्जन्यवल्लक्षणप्रवृत्त्या । ननु तामादयो ङिल्लादेशानामुच्यन्ते न त्वाहत्य लङादेशानामिति कथं ते लङ्वद्भावेन प्राप्यन्ते ? उच्यते; विशेषातिदेशे सामान्यस्याप्यतिदेशात् । तथा हि वसिष्ठवदयमित्युक्ते वसिष्ठत्वप्रयुक्तं ब्राह्मणत्वप्रयुक्तञ्चातिदिश्यते । कथं तर्हि 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्याहत्य विधीयमानोऽडागमो न भवति ? अत्र वृत्तिकारः परिहारमाह— "'विदो लटो वा' इति वाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा भविष्यति" इति । अत एव तामादयः सलोपश्चेति तेन परिगणितम् । यद्वा—लोट इत्युपमेये षष्ठीदर्शनादुपमानं विज्ञायते, लङ इव कार्य्यं तल्लोटो भविष्यतीति, न तु लङि यत्कार्यं तल्लोटीति अडाटौ न भवतः । यदायं लोट् 'आशिषि लिङ्लोटौ' इत्याशिषि विधीयते, आशीरिष्टस्याप्तिरिच्छा, तदा 'तुह्योस्तातङाशिष्यन्यतरस्याम्' इति तुह्योर्वा तातङादेशः—भवतात्सः । भवतात् भवान् । भवतात्त्वम् । ननु तातङ्यं 'अनेकाल्शित्सर्वस्य' इत्यस्यापवादेन 'ङिच्च' इत्यनेनान्त्यस्य कस्मान्न भवति ? उच्यते; किमिदं ङित्त्वं ब्रूतात्, मृष्टादित्यादौ गुणवृद्धिप्रतिषेधार्थम्, उतान्त्यादेशार्थमिति सन्दिग्धप्रयोजनम् । न चान्त्यादेशार्थत्वे गुणवृद्धिप्रतिषेधार्थत्वसम्भवः; अप्रत्ययत्वात् । अनेकाल्त्वं तु निश्चितम्; 'ङिच्च' इत्येतच्चानङादिष्वनन्यप्रयोजनेषु ङित्त्वेषु सावकाशमितीहासन्दिग्धपरम् 'अनेकाल्शित्सर्वस्य' इत्येतदेव प्रवर्त्तते । भवतात्त्वमित्यत्र तातङा परेण पूर्वत्राधितस्य हेर्लुकः स्थानिवद्भावेन पुनः प्रवृत्तिः सकृद्गतपरिभाषया न भवति । यद्वा—'हुझल्भ्यो हेर्धिः' इत्यतो हेरित्यनुवर्त्त्य 'अतो हेः' इत्यत्र हिग्रहणमन्तरेण लुकि विधातव्ये पुनर्हिग्रहणस्य हेरिति विशेषणेन मुख्यहिपरिग्रहार्थत्वात्, इदमपि तातङः सर्वादेशत्वे प्रमाणम् ।

"अनद्यतने लङ्"—अविद्यमानाद्यतनभूतोपाध्यर्थाद्धातोर्लङ् स्यात् । लस्य तिबादिषु 'इतश्च' इतीकारलोपः । 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यङ्गस्याड्विधिः टित्त्वादादिः, उदात्तश्च—अभवत् । अभवद्—'झलां जशोऽन्ते'—पदान्ते झलां जश इत्यत्रान्तरतम्यात्तकारस्य दकारे 'वाऽवसाने' झलां वा चरित्यान्तरतम्याद्दकारस्य वा तकारः । अभवताम्—'तस्थस्थमिपां तान्तन्तामः' इति तसस्ताम् । अभवन्—अन्तादेशे इकारलोपे "संयोगान्तस्य लोपः"—संयोगान्तस्य पदान्तस्य लोप इति तलोपः । "हलोऽनन्तराः संयोगः"—अजव्यवहितश्लिष्टोच्चारितो हल्समुदायः संयोगः । अभवः—इकारलोपे रुत्वविसर्जनीयौ । अभवतम् । अभवत ।

अभवम्। अभवाव। अभवाम—'तस्थस्थमिपां तान्तन्तामः', 'नित्यं ङितः' इति तामादयः सलोपश्च।

"विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्"—विधिः प्रेरणं भृत्यादेः कस्याञ्चित् क्रियायां नियोजनम्। निमन्त्रणं नित्यनैमित्तिककर्मविषया प्रवर्त्तना। आमन्त्रणं काम्यकर्मविषया सा, अधीष्टं सत्कारपूर्विका सर्वकर्मविषया सैव। एषु चतुर्ष्वपि प्रवर्त्तनानुवर्त्तते, सैव लिङर्थः। भेदेन तूपादानं प्रपञ्चार्थम्। प्रवर्त्तना च प्रवृत्तिहेतुर्धर्मः।

'प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्त्तनाम्'[1]।

इत्याचार्याः। सम्प्रश्नः सम्प्रधारणम्—तद्वा इदं वा कर्त्तव्यमिति। प्रार्थनं याचनम्। एषु प्रत्ययार्थविशेषणेषु धातोर्लिङ् स्यात्। "यासुट् परस्मैपदेषूदात्तो ङिच्च" लिङः परस्मैपदेषु तेषामेव यासुट्, टित्त्वादादिः, उदात्तश्च सीयुटोऽपवादः। लिङ् च ङित्। इदमेव ङिद्वचनं ज्ञापकं ङिल्लादेशानां स्थानिवत्त्वेन ङित्त्वाभावस्य। यदि हि स्यात्, अचिनवम्, अमार्जमित्यादौ गुणवृद्धी न स्याताम्। इयं च ज्ञापकापेक्षा 'सार्वधातुकमपित्' इत्यस्य पर्युदासत्वपक्षे, प्रसज्यप्रतिषेधत्वे तु 'पिन्न ङित्' इति निषेधेन स्थानिवत्त्वेन 'सार्वधातुकं ङिद्' इत्यतिदेशेन च प्राप्तस्य सर्वस्य ङित्वस्य निवारणात्। चिनुयादित्यादिसिद्ध्यर्थं ङित्वं च वक्तव्यम्। भव यास् त् इति स्थिते "सुट् तिथोः"—लिङ्सम्बन्धिनोस्तकारथकारयोः सुट् स्यादिति सुट् टित्वादादिः। अयं तकारथकारभक्तः, यासुट् तु तिङ्भक्त इति विषयभेदादनयोर्न बाध्यबाधकभावः। 'लिङः सलोपोऽनन्त्यस्य' सार्वधातुकलिङः सम्बन्धिनोऽनन्त्यस्य सस्य लोप इति यासुट्सुटसकारयोर्लोपः। सुडिह पर्जन्यवल्लक्षणप्रवृत्त्या तु कृतः, न त्वस्मिन् कृते वाऽकृते वा विशेषोऽस्ति; लोपनात्। श्रवणं त्वाशीर्लिङात्मनेपदे। 'अतो येयः' इत्यदन्तादङ्गात्परस्य या इत्यस्येय् इत्यादेशः। 'आद्गुणः' इत्यवर्णान्तादचि पूर्वपरयोरेको गुणो भवन् कण्ठ्यस्याकारस्य 'इचुयशानां तालु' इति तालव्यस्येकारस्य च 'एदैतोः कण्ठतालु' इति कण्ठतालव्य एकारः। यकारस्य वलि लोपः—भवेत्। भवेताम्। भवेयुः—'झेर्जुस्' इति लिङादेशस्य झेर्जुसादेशे जकारे च 'जुसि च' इति विशेषणार्थे लुप्ते "उस्यपदान्तात्"—अपदान्तादवर्णादुसि परे पूर्वपरयोः पररूपमित्येतद्बाधित्वा 'अतो येयः' परत्वान्नित्यत्वाच्च प्रवर्त्तते। यद्यप्यन्तरङ्गत्वात् पररूपं न्याय्यम्, तथापि यास् इत्येतस्य इय् भवतीति विप्रतिषेधसूत्रे भाष्यकारैर्व्याख्यातत्वात् 'लिङः सलोप' इत्यस्यापवाद इय् 'अतो येय' इत्यत्र त्वाद्गुणे कर्तव्ये यलोपस्य सिद्धत्वमार्षम्, या इय इति वा पठनीयमिति बोध्यम्। भवेः। भवेतम्। भवेत। भवेयम्। भवेव। भवेम।

---

१. वि० वि० पृ० २४३।

'आशिषि लिङ्लोटौ' इति लिङि तु 'लिङाशिषि' इत्यार्द्धधातुकत्वान्न लिङः सलोपः। 'किदाशिषि' इति कित्त्वान्न गुणः। "स्कोः संयोगाद्योरन्ते च"—झलि परे यः संयोगः पदान्ते च यः संयोगस्तदाद्योः स्कोर्लोप इति झल्परसंयोगादित्वेन यासुटः सस्य लोपः। पदान्ते तु संयोगे तदादित्वेन सुटोऽपि सकारो लुप्यते—भूयात्। भूयास्ताम्। भूयासुः। भूयाः। भूयास्तम्। भूयास्त। भूयासम्। भूयास्व। भूयास्म। सलोपस्य पूर्वत्रासिद्धत्वेन तिस्योः संयोगान्तलोपो न भवति, पदान्तसंयोगादिलोपस्यानवकाशत्वात्। ननु "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति हलन्ताद् दीर्घाद् ङ्याबन्ताच्च परस्य सुतिस्यपृक्तस्य लोपविधानेऽपि स्कोरिति सलोपस्य पूर्ववदसिद्धत्वाद्धलन्तात्परोऽपृक्तत्वेन लोपः कस्मान्न भवति ? सुतिस्यपृक्तमिति प्रत्ययनिर्देशेन प्रकृतेराक्षेपात्ततः परस्यापृक्तस्य लोपविज्ञानात्। न चेह सकारान्तस्य प्रकृतित्वम्। यद्वा 'स्कोः' इति लोपस्यासिद्धत्वे भूयादित्यत्र सुट्सस्य लोपोऽप्यसिद्ध इति तस्य तकारभक्तत्वादपृक्तस्यैवाभावः। 'अपृक्त एकाल् प्रत्ययः'।

"लुङ्"—भूतोपाधिकार्थाद्धातोर्लुङ् स्यात्। 'भूतः पञ्चविध प्रोक्तः' इत्युक्तम्, तत्रानद्यतने लङ्विधानात्ततोऽन्यः सर्वो भूतोऽत्र गृह्यते। 'अनद्यतन' इति बहुव्रीहिनिर्देशान्न व्यामिश्रे लङः प्रसङ्गः। लस्य तिबादिषु 'च्लि लुङि' इति धातोः परश्च च्लिः। तस्य 'च्लेः सिच्' इति सिजादेशः। स्थानिन्यादेशे च चकारानुबन्धस्य प्रयोजनं वक्ष्यते। तस्य 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इति लुक्। स च नित्यत्वादिटः पूर्वः। "दाधा घ्वदाप्"—इति अदापो दाधारूपा धातवो घुसंज्ञाः। अडागमः—अभूत्। अत्र सिचो लुका लुप्तत्वात् प्रत्ययलक्षणाभावात् 'सिचि वृद्धिः परस्मैपदेषु' इति परस्मैपदे परे सिचि विधीयमाना वृद्धिर्न भवति। तथा गुणोऽपि न भवति, 'भूसुवोस्तिङि' इति तिङि सार्वधातुके निषेधात्। अत एव वा निषेधाद् वृद्धेरप्यभावो भविष्यति। यदि स्याद्., अपवादेनानयैव गुणस्य बाधादप्रसङ्गात् कथमसौ निषिध्येत ? ननु 'अस्तिसिचोऽपृक्ते' इत्यस्तिसिज्भ्यां परस्य सार्वधातुकापृक्तस्य विधीयमान ईट् प्रत्ययलक्षणेनात्र कस्मान्न भवति ? अत्र केचिदेवमाहुः—"अस्तीति द्विसकारकनिर्देशादेकेन सिचो विशेषणाच्छ्रूयमाणात्सिचः परस्येड्विधिरितीह न भवति" इति, इदमविचारितरमणीयम्; अस्तीति पदान्तर्भूतस्यास्य सकारस्य पदान्तरेणान्वयायोगात्। पृथक्पदत्वे तु न तस्य धातुत्वम्, नापि तत्सहितस्य समुदायस्येति धातुविषयश्तिब्निर्देश एव नोपपद्येत। अन्ये वर्णयन्ति—'आहिभुवोरीट्प्रतिषेधः[1]' इत्यत्र न केवल-

1. म० भा० १।१।९६। सर्वमेवेदं व्याख्यानं तत्रैव द्रष्टव्यम्।

मस्त्यादेशस्य भुवः स्थानिवत्त्वेन प्राप्त ईण् निषिध्यते, किन्त्वनादेशस्यापि" इति। स्थानिवत्त्वदूषणपरे च तत्र वार्त्तिके कथमनादेशो भूर्गृह्यत इति त एव प्रष्टव्याः। न चानादेशस्याग्रहणे निषेधस्य वैयर्थ्यं प्रमाणम्। अर्थभेदेन रूपद्वयार्थत्वात्तस्य। वयं तु परिहरामः—सिचोऽल्पाच्कत्वात् बहुविषयत्वेनाभ्यर्हितत्वाच्च पूर्वनिपाते कर्त्तव्ये 'अस्तिसिचः' इति वचनात्तन्त्रादिना विद्यमानसिचः इत्यस्याप्यर्थस्य लाभान्नेडिति। किञ्च—अर्थद्वयपरिग्रहे श्तिबप्युपपद्यते, अन्यथा सिजसिभ्यामित्येव ब्रूयात्, न चासत्यस्यतिनिवृत्त्यर्थः, विकरणेन व्यवधानात् ताभ्यां परस्य सार्वधातुकापृक्तस्यासम्भवात्। अभूताम्। अभूवन्—अजादौ 'भुवो वुक्' इति वुक्। अत्र झेः प्रत्ययलक्षणेन सिचः परत्वेऽपि 'सिजभ्यस्तविदिभ्यश्च' इति सिजादिभ्यः परस्य ङिल्लादेशस्य झेर्विधीयमानो जुस्भावो न भवति। 'आतः' इति नियमात् सिज्लुगन्ताद्यदि भवत्यात एवेति। अभ्यस्तम् 'उभे अभ्यस्तम्' 'जक्षित्यादयः षट्' इति वक्ष्यते। अभूः। अभूतम्। अभूत। अभूवम्। अभूव। अभूम।

'लिङ्निमित्ते लृङ् क्रियातिपत्तौ'। लिङो निमित्तं हेतुहेतुमद्भावादि, कुतश्चिद्वैगुण्यात्क्रियाया अनभिनिर्वृत्तिः क्रियातिपत्तिः, अत्र धातोर्लृङ् स्यात्। लस्य तिबादिषु "स्यतासी" इति स्यः। इडागमः, 'इतश्च' इत्यादि—यदि सेवापरोऽभविष्यत् आढ्यः अभविष्यत्। अभविष्यताम्। अभविष्यन्। अभविष्यः। अभविष्यतम्। अभविष्यत। अभविष्यम्। अभविष्याव। अभविष्याम। उदाहरणे क्रियातिपत्तिर्न सेवापरो नाप्याढ्य इति।

अथात्मनेपदं प्रदर्श्यते। "कर्त्तरि कर्मव्यतिहारे"—कर्म क्रिया। अन्ययोग्यायाः क्रियाया अन्येन करणं परस्परकरणं च कर्मव्यतिहारः। अस्मिन् गम्यमाने लस्यात्मनेपदं स्यात् इति लस्य तिबादिषु विकरणादि साधारणं पूर्ववदेव। 'टित आत्मनेपदानां टेरे' इति टिल्लादेशानामात्मनेपदानां टेरेत्वं स्यात्। इदं चैत्वम् 'आद्यन्तवदेकस्मिन्' इति केवलस्याप्यादन्तप्रयुक्तकार्यातिदेशात् केवलस्याप्यचष्टिसंज्ञाविधानाद्भवति। व्यतिभवते—व्यतिभवेते। अत्र 'आतो ङितः' इत्यदन्तादङ्गात्परस्य ङिदवयवस्याकारस्येयादेश इति 'सार्वधातुकमपित्' इति ङित आताम आकारस्येयादेशे वलि लोपः। 'आद्गुणः' 'नानर्थकेऽलोन्त्यविधिः' इति टेरेत्वमत्रान्त्यस्य न भवति। 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति ईदाद्यन्तस्य द्विवचनस्य प्रगृह्यत्वात् 'प्लुतप्रगृह्या अचि' इति प्रकृतिभावाद् व्यतिभवेते एतावित्यादावयादीनि न भवन्ति। इह प्रकृतिभावः परभूताज्निमित्तविकाराभावः। व्यतिभवन्ते—अत्र त्रीणि कार्याणि प्राप्नुवन्ति—अन्तादेशः, अद्भावः, शबिति। अत्र विशेषविहितत्वेनान्तादेशापवादादद्भावान्नित्यत्वाच्छप्। तत्र कृतेऽङ्गस्यादन्तत्वादद्भावस्य न प्राप्तिरिति सामान्यविहित एवान्तादेशः प्रवर्तते।

व्यतिभवसे—'थासः से' इति टिङादेशस्य थासः सेभावः—व्यतिभवेथे। व्यतिभवेते इतिवत्। व्यतिभवध्वे। व्यतिभवे। व्यतिभवावहे। व्यतिभवामहे। इटि त्वेत्वात् परत्वाद् 'आद्गुणः'। कृते वा तस्मिन् 'अतो गुणे' इति पररूपम्। व्यतिशब्दः कर्मव्यतिहारद्योतनार्थः। तस्य च "ते प्राग्धातोः"—ते गत्युपसर्गसंज्ञा धातोः प्राक् प्रयोक्तव्या इति नियमात् पूर्वप्रयोगः। 'उपसर्गाः क्रियायोगे', 'गतिश्च' इति प्रादयो यत्क्रियायुक्तास्तं प्रत्युपसर्गसंज्ञाः सन्तो गतयः। इतरेतरस्य व्यतिभवन्ति, अन्योन्यस्य व्यतिभवन्ति—इत्यत्र 'इतरेतरान्योन्योपपदाच्च' इति कर्मव्यतिहारलक्षणमात्मनेपदं निषिध्यते। 'अन्योऽन्योपपदाच्च' इति चकारेण परस्परोपपदादपि न भवति—परस्परं व्यतिभवन्ति। व्यतिबभूवे। व्यतिबभूवाते। व्यतिबभूविरे। व्यतिबभूविषे। व्यतिबभूवाथे। व्यतिबभूविढ्वे, व्यतिबभूविध्वे। व्यतिबभूवे। व्यतिबभूविवहे। व्यतिबभूविमहे। "लिटस्तझयोरेशिरेच्"—लिटस्तझयोरेशिरेचावादेशौ स्तः। एशः शकारो 'अनेकाल्शित्' इति सर्वादेशार्थः। 'विभाषेटः' इति—इणः परो य इट् तत परेषां षीध्वंलुङ्लिटां धकारस्य मूर्धन्य इति तद्विकल्पः। टेरेत्वमजादौ वुक्। वलादौ क्रादिनियमादिट्। 'भवतेरः' इत्यभ्यासस्यात्वम्। व्यतिभविता। व्यतिभवितासे—'थासः से' इति सेभावे 'तासस्त्योः' इति सलोपः। व्यतिभविताध्वे—अत्र सकारस्य धकारादिप्रत्ययपरत्वात् 'धि च' इति लोपे धकारस्य 'अनचि च' इति अच उत्तरस्य यरो द्वित्वमचि नेति द्वित्वे 'झलां जश् झशि' इति धकारस्यान्तरतम्याद्दकारः। येषां 'धि च' इति सिचो लोप इति पक्षस्तेषामप्यत्र सकारस्यान्तरतम्याज्जश्त्वेन दकारे नात्र रूपभेदः। व्यतिभविताह्वे—इटष्टेरेत्वे 'ह एति' इति सकारस्य हकारः। व्यतिभवितास्वहे। व्यतिभवितास्महे। व्यतिभविष्यते इत्यादि पूर्ववत्। व्यतिभवताम्। व्यतिभवेताम्। व्यतिभवन्ताम्। व्यतिभवस्व। व्यतिभवेथाम्। व्यतिभवध्वम्। व्यतिभवै। व्यतिभवावहै। व्यतिभवामहै—टेरेत्वम्। 'आतो ङितः' इत्यादि पूर्ववत्। 'आमेत' इति लोडादेशानामेकारस्यामादेशः। सेध्वेशब्दयोस्तु 'सवाभ्यां वामौ' इति यथासंख्यं वामादेशावपवादौ। उत्तमैकारस्यैत्वे 'एत ऐ' इत्यैकारः। अयमप्यामादेशापवादः। अत्राडागमे कृते तस्य तत्परस्य चैकारस्य "आटश्च"—आटोऽचि परे पूर्वपरयोरेका वृद्धिरित्यैकारे तस्य शवकारस्य च "वृद्धिरेचि"—अवर्णादेचि परे पूर्वपरयोरेका वृद्धिरित्यैकारः। व्यत्यभवत। व्यत्यभवेताम्। व्यत्यभवन्त। व्यत्यभवथाः। व्यत्यभवेथाम्। व्यत्यभवध्वम्। व्यत्यभवे। व्यत्यभवावहि। व्यत्यभवामहि। व्यतिभवेत। व्यतिभवेयाताम्। व्यतिभवेरन्। व्यतिभवेथाः। व्यतिभवेयाथाम्। व्यतिभवेध्वम्। व्यतिभवेय। व्यतिभवेवहि। व्यतिभवेमहि—'लिङः सीयुट्' इति लिङादेशस्य सीयुट्टित्त्वादादिः। 'सुट् तिथोः'। 'लिङः सलोपः'। 'आद्गुणः'। वलि लोपः। 'झस्य रन्' इति लिङो झस्य रन्नित्यादेशः, 'न विभक्तौ' इति नेन्नकारः। 'इटोऽत्' इति लिङादेशस्येटोऽदादेशः। तकार

उच्चारणार्थो नादेशावयवः। यद्वा—आदेशावयवत्वेऽपि 'इदमस्थमुः' इति थमु-प्रत्ययस्य 'प्राग्दिशो विभक्तिः' इत्यतः परे दिक्शब्देभ्य इत्यतः पूर्वे प्रत्यया विभक्त्य इति विभक्तित्वे तत्स्थत्वेन मकारस्येत्संज्ञानिषेधे सिद्धे तत्परित्राणायोकारासञ्जनेन 'न विभक्तौ' इत्यस्यानित्यत्वज्ञापनादित्वाल्लोप्स्यते। आशिषि—व्यतिभविषीष्ट। व्यतिभविषीयास्ताम्। व्यतिभविषीरन्। व्यतिभविषीष्ठाः। व्यतिभविषीयास्याम्। व्यतिभविषीढ्वम्, व्यतिभविषीध्वम्। व्यतिभविषीय। व्यतिभविषीवहि। व्यतिभविषीमहि। आर्द्धधातुकत्वादेषु लिङः सलोपाभावः। अत्र सीयुट् 'यदागमास्तद्ग्रहणेन गृह्यन्ते' इति प्रत्ययग्रहणेन गृह्यते, तथा तदवयवभक्तः सुडपि रुड्वत् समुदायभक्त इति द्वयोरपि सकारयोः प्रत्ययावयवत्वात् 'आदेशप्रत्यययोः' इति षत्वम्। तथा हि "शीङो रुट्" इति—प्रत्ययावयवझकारादेशस्य अतो रुट् इति विहितोऽपि रुट् समुदायभक्तत्वेन सार्वधातुकग्रहणेन गृह्यत इति शेरत इत्यत्र 'शीङः सार्वधातुके' इति गुणः प्रवर्त्तते। 'ष्टुना ष्टुः' षकारटवर्गाभ्यां युक्तयोः सकारतवर्गयोर्यथासंख्यं ष्टुरिति तकारथकारयोः टकारठकारौ। निमित्तिनिमित्तयोर्यथासंख्यं 'तोः षि' इति षकारे परे तवर्गस्य ष्टुत्वनिषेधान्न भवति। ध्वमि 'विभाषेटः' इति मूर्द्धन्यविकल्पः। व्यत्यभविष्ट। व्यत्यभविषाताम्। व्यत्यभविषत। व्यत्यभविष्ठाः। व्यत्यभविषाथाम्। व्यत्यभविढ्वम्। व्यत्यभविषि। व्यत्यभविष्वहि। व्यत्यभविष्महि। सिचीड्गुणावादेशषत्वानि यथायोगं ष्टुत्वं च। 'आत्मनेपदेष्वनत' इति झस्याद्भावः। तकारस्य प्रयोजनाभावान्नेत्त्वम्। ध्वमि षत्वस्य पूर्वत्रासिद्धत्वात् 'धि च' इति सलोपे गुणः। इणः परस्मादिटः परत्वात् 'विभाषेट' इति मूर्द्धन्यविकल्प उदाहार्यः। व्यत्यभविष्यत—इत्यादि लङ्वत्।

अथ भावकर्मणोर्लकाराः प्रदर्श्यन्ते। तत्र 'भावकर्मणोः' इत्यनयोर्लस्यात्मनेपदमेव। "सार्वधातुके यक्"—इति भावकर्मवाचिनि सार्वधातुके धातोर्यगिति लटि, लोटि, लङि, विध्यादिलिङि च यक्। अन्यत्र सार्वधातुके स्यादिभिरस्य बाधः, लिङाशीलिङोस्त्वार्द्धधातुकत्वान्न प्रसङ्गः। यकः कित्त्वान्न गुणः। भूयते। भूयताम्। अभूयत, भूयेत भवता—अत्र प्रत्ययेन कर्तुरनभिधानात्तृतीया। 'कर्तृकरणयोस्तृतीया' इति तिङ्कृत्तद्धितसमासैरनभिहतयोरनयोस्तृतीयोच्यते। तत्र भावस्य युष्मदस्मदर्थोविशेष्यत्वात्प्रथमपुरुष एव। तत्राप्याख्यातेन स्वतः क्रियाया निवृत्तभेदाया अभिधानादेकवचनमेव भवति—भवद्भ्याम् भवद्भिः, त्वया युवाभ्यां युष्माभिः, मया आवाभ्यामस्माभिर्भूयते इति। भवन्तीत्यादौ तु प्रत्ययेन कर्तुरभिधानात् तत्कृतं बहुत्वम्। भूयते मासः—'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्, देशश्चाकर्मणाम्" इति मासादयोऽकर्मकाणां कर्माणि। तत्र कर्मणोऽभिधानात् कर्मणि द्वितीया न भवति। सा च तिङादिभिरनभिहिते विधीयते। भूयते भवता मासम्—इत्यत्र भावे लविधानात् कर्मणोऽनभिधानाद्

द्वितीया। ननु सकर्मकत्वात्कथं भावे लकारः ? उच्यते; कालादिभिर्न कश्चिदप्यकर्मक इति तद्व्यतिरिक्तेन कर्मणाऽकर्मकाणां भावे लविज्ञानात्। कथं तर्हि मासे लः, अकर्मकाणां भावकर्त्रोर्लविधेः? उच्यते; एवंविधानां भावकर्मकर्तृषु लविज्ञानात्। तथोक्तं 'कालाध्वनोः' इत्यत्र मासादौ कर्मणि भावे च लकारं प्रस्तुत्य "'प्राकृतमेवैतत्कर्म यथा कटं करोति, शकटं करोति' इति, पुनश्च तत्र 'यदि तर्हि प्राकृतमेवैतत्कर्म अकर्मकाणां भावे लो भवतीति भावे लो न प्राप्नोति' इति चोदयित्वा 'अकर्मकाणामित्युच्यते, न च केचित्कालभावादिभिरकर्मकाः। त एवं विज्ञास्यामः— क्वचिद्येऽकर्मकाः इति। अथ वा 'येन कर्मणा सकर्मकाश्चाकर्मकाश्च भवन्ति तेनाकर्मकाणां न चैतेन कर्मणा कश्चिदप्यकर्मकः'। अथ वा 'यत्कर्म भवति, न च भवति, तेनाकर्मकाणाम्' न चैतत्कर्म क्वचिदपि न भवति'[1]" इति। अनुभूयते सुखम्—इत्यादौ संवेदनाद्यर्थत्वाद्भुवः संवेद्यादिभिरपि सकर्मकत्वात्कर्मण्येव लः। भूयेते, भूयन्ते इत्याद्युदाहार्यम्। तथा—भूयताम्। अभूयत। भूयेत मासः—इत्यादि च। लिटि न विशेषः। अत्र केचिदाहुः—"भवतेर इत्यत्वं श्तिपा निर्देशात् भावकर्मणोर्न' इति। अयमस्यार्थस्य कथं प्रतिपादकः ? इति त एव प्रष्टव्याः। तस्य तु प्रयोजनं यङ्लुकि मन्त्रविषये आमभावे लिट्परत्वे सत्यत्वनिवृत्तिः। भविता। भाविता—"स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च" इत्यजन्तानां हनादीनां च धातूनामार्द्धधातुकेषु भावकर्मविषयेषु स्यादिषु वा 'चिणीव कार्यमिट् च स्यादित्यभिधानात् चिण्वत्पक्षे वृद्धिः। इडिड्विधानमनिडर्थं ण्यन्तार्थं च। स्यसिजादीनामार्द्धधातुकत्वस्याव्यभिचारेऽपि तेन विशेषणं सीयुडर्थम्। तेन सार्वधातुके विध्यादिलिङि सीयुटि चिण्वत्त्वस्याभावः। एवं स्यसिच्सीयुड्विषये द्वैरूप्यमुदाहार्यम्—भविष्यते। भाविष्यते। अभविष्यत। अभाविष्यत। अभावि। अभाविषाताम्। अभविषाताम्। भविषीष्ट। भाविषीष्ट इत्यादि। लुङ्लिङोर्ध्वमि चिण्वत्पक्षे 'विभाषेट' इति मूर्द्धन्यविकल्पनाच्चातुरूप्यं नेयम्। लुङि तशब्दे 'चिण्भावकर्मणोः' इति चिण्विधानात् च्लेश्चिण्, ततः 'चिणो लुक्' इति तशब्दस्य लुक्।

अथ कर्मकर्त्तोच्यते। 'कर्मवत्कर्मणा तुल्यक्रियः'। 'कर्त्तरि शप्' इत्यतः कर्तृग्रहणमनुवृत्तं प्रथमान्तमिह विपरिणम्यते। इह कर्म न पारिभाषिकम्, तेनात्यन्तविलक्षणेन क्रियायाः सादृश्यायोगात्। नापि क्रियामात्रम्; यया कयाचन क्रियया क्रियायाः सादृश्याव्यभिचारात्। अतः कर्मेह तत्स्था क्रिया, अनया तुल्यक्रियः कर्त्ता कर्मणा तुल्यस्तत्कार्याणि लभत इत्यर्थः। तानि च यगात्मनेपदचिण्चिण्वद्भावाः। एकस्मिंश्च प्रयोगे कर्मणा तुल्यक्रियस्य कर्तुरसम्भवात् कर्मत्वकर्तृत्वे

---

१. म० भा० २।३।५।

प्रयोगभेदेन ज्ञेये। यद्येवं घटं भावयतीत्यत्र कर्मस्था क्रियोत्पत्तिः, अस्ति च तया तुल्यक्रियत्वं घटो भवतीत्यत्र कर्तुरिति यगादि कस्मान्न भवति ? अर्थस्वभावादेवास्य योगस्य धातुविषयत्वे सिद्धे धातोरित्यनुवृत्तिसामर्थ्याद्विभक्तिविपरिणामेन सप्तम्यन्तं विवक्षितैकत्वं विज्ञायत इत्येकस्मिन् धातौ कर्मणा तुल्यक्रियस्य कर्तुः कर्मवद्भावाद्; इह तु धातुर्भिद्यते। एवं च कर्मव्यापारोपसर्जनकर्तृव्यापारार्थो धातुर्यत्र सौकर्यातिशयप्रतिपादनाय कर्मव्यापारमात्रे वर्तते सोऽस्य विषयः सम्पन्नः। ततश्च, 'शत्रुमभिभवति' इत्यत्र न्यग्भवनोपसर्जने न्यग्भावने वृत्तो भवतिर्यदा न्यग्भवनमात्रे वर्त्तते तदा—अभिभूयते शत्रुः स्वयमेवेति यगात्मनेपदे भवतः। नन्वत्र कर्मस्था क्रिया न्यग्भवनं सैव कर्तृस्थापीति क्रियाभेदाभावात् कथं भेदनिबन्धनं सादृश्यमिति चेत्, न; कर्मकर्त्रवस्थाभेदेन भिन्नकारकगतत्वेन भेदोपपत्तेः। नन्वत्रातिदेशेन यगादिवद् द्वितीया कस्मान्न भवति ? न च 'अनभिहिते' इति निषेधः; अस्य कार्यातिदेशत्वाद् अत्र च तदधिकाराभावात्, उच्यते; 'व्यत्ययो बहुलं लिङ्याशिष्यङ्' इति संहितया सूत्रपाठाद् लिङीति द्विलकारको निर्देशः, तत्रैकं लग्रहणमनुवर्त्तते। तच्चेह षष्ठ्यन्तं सत् तदन्तत्वं प्रयोजयति, कार्यप्रतीतिश्चाध्याह्रियत इति लान्तकार्यविषयत्वादतिदेशस्य द्वितीयायाश्चातथात्वादप्रसङ्गः। एवं च कर्माश्रयाः कृत्यादयोऽपि न भवन्ति। नन्वभिभूयमानो देवदत्तो यज्ञदत्तमभिभवतीत्यत्रापि कर्मवद्भावः प्राप्नोति, अत्र हि यज्ञदत्ते कर्मणि दृष्टो न्यग्भाव इतरस्मिन् देवदत्ते च कर्तरि दृश्यते यदसौ न्यग्भवन् न्यग्भावयति, नैष दोषः; इह कर्मणा तुल्यक्रिय इति कर्मस्थया क्रियया तुल्यायाः क्रियाया प्रसङ्गात्कर्तुश्च क्रियापेक्षत्वात् प्रत्यासत्त्या तदपेक्षयैव कर्तुः कर्मवद्भावविज्ञानात्। इह च न्यग्भवनं न कर्तृत्व उपयुज्यते, किन्तु न्यग्भावनमेव; अन्यग्भवतोऽपि न्यग्भावने कर्तृत्वसंभवात्। वस्करणात्स्वाश्रयेण कर्मकर्तृत्वनिबन्धनो भावे लकारोऽपि भवति। अभिभूयते शत्रुणा स्वेनैवेति, तेन शत्रोर्द्वितीया न भवति। सर्वत्र कर्मवदुदाहरणानि। लुङि तशब्दे तु 'अचः कर्मकर्तरि' इति चिणादेशविकल्पनात् पक्षे सिचि तस्य च पूर्ववद्वा चिण्वदिटि तत्पक्षे वृद्धौ—अभ्यभावि, अभ्यभाविष्ट, अभ्यभविष्ट इति त्रैरूप्यम्। स्वाश्रये भावे लकारे तु 'चिण् भावकर्मणोः' इति चिणेव—अभ्यभावि शत्रुणा स्वेनैवेति।

अथ पुरुषविषये किञ्चिद् विचार्यते। युष्मदस्मदन्येषु सह विवक्षितेषु "त्यदादीनि सर्वैर्नित्यम्"—अन्यैस्सहवचने त्यदादीनि शिष्यन्ते, मिथस्तु पराणीति शिष्यमाणाभ्यां युष्मदस्मद्भ्यामशिष्यमाणार्थाभिधानेऽपि स्वार्थापेक्षौ मध्यमोत्तमावेव भवतः; न तु शिष्यमाणाशिष्यमाणरूपस्यार्थस्य युष्मदस्मदर्थान्यत्वेन शेषत्वात् प्रथमः, यत्र युष्मदस्मदी समानाधिकरणे न स्तः स शेष इत्युक्तत्वात्। तेन देवदत्तश्च त्वं च स च त्वं च युवां भवथः, देवदत्तश्च स च त्वं च यूयं भवथ। देवदत्तश्चाहं

च आवां भवावः। देवदत्तश्च स चाहं च वयं भवाम इति। युष्मदस्मदोः सहविवक्षायां परत्वादस्मदा शिष्यमाणेन युष्मदस्मदर्थाभिधानेऽपि परत्वादस्मदर्थापेक्ष उत्तमो भवति—त्वं चाहं च आवां भवाव इति। भवतापि युष्मदस्मदोः सहवचने तस्य पूर्वपाठाश्रयेण तयोरेव शेषे—भवाँश्च त्वं च युवां भवथः, भवाँश्चाहं च आवां भवाव इति। सहविवक्षा चानेकस्यार्थस्यैकगुणक्रियाभिनिवेशार्थं बुद्ध्या निरूप्यमाणस्य क्रियागुणद्वारेणान्योऽन्यापेक्षया समुदायभावमापन्नस्य सहभावेन वक्तुमिच्छा, उद्भूतावयवभेदत्वाच्च द्विवचनबहुवचने। असहविवक्षायां द्वैतम्—एक एव लकारोऽनेककारकार्थाभिधायी, प्रतिकारकमावर्त्तते वेति। तत्राद्ये पक्षे युष्मदस्मदन्यानामशेषत्वाद्यथायोगं मध्यमोत्तमौ भवतः—स च त्वं च भवथः। तथा मध्यमोत्तमयोर्युगपत्प्रसङ्गे परत्वादुत्तमः—त्वं चाहं च भवाव इति। पक्षान्तरे तु लाभिधेयतत्तत्कारकापेक्षया प्रथमादयो यथायोगं भवन्तीति न विवादः। भवान् भवति, त्वं भवसि, अहं भवामीति। अलिङ्गस्सम्बोधनैकविषयश्च युष्मदर्थः, भवदर्थस्त्वन्य इति तद्योगे प्रथमः। यदा त्वस्मात्सम्बोधनविभक्तिः तदा युष्मदर्थयोगात् मध्यमो भवति—हे भवन् भवसि इति। अतित्वं भवति, अत्यहं भवति इत्यादौ त्वामतिक्रान्तो मामतिक्रान्त इत्यत्र 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति तत्पुरुषे त्वमतिक्रान्तो येनाहमतिक्रान्तो येनेति "अनेकमन्यपदार्थे"—इत्यनेकं सुबन्तमन्यस्य पदस्यार्थे वर्त्तमानं समर्थं समस्यत इति बहुव्रीहौ वाऽतिक्रमितुः प्रधान्यात्तस्यैव लान्तार्थविशेषणत्वान्न मध्यमोत्तमौ। यदा त्वतिशब्दः पूजितवचनः, तदा 'स्वती पूजायाम्' इति तत्पुरुषे युस्मदस्मदोरर्थस्य प्राधान्यात्तेन विशेष्यत्वाद्—अतित्वं भवसि, अत्यहं भवामि इति भवतः। त्वद्भवति, मद्भवतीत्यत्र च्व्यन्तयोरेतयोस्त्वमिवाहमिवेति च स्वार्थारोपेण वर्त्तमानत्वादमुख्यार्थत्वात् 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति न्यायेन मध्यमोत्तमौ न स्तः। तथा हि—"अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः" इति कार्यात्मनाऽभूतस्य कारणस्य कार्यात्मना भावे विवक्षिते सम्पद्यमाने कार्यात्मना भवतिकर्त्तरि वृत्तात्प्रातिपदिकात्कृभ्वस्तियोगे च्विर्विधीयते। एतदुक्तं भवति—अभेदविवक्षया कारणवृत्तेः कार्यशब्दात् प्रत्ययः इति। त्वत्कल्पो भवति, मत्कल्पो भवतीत्यादावपि गौणार्थत्वाच्च न मध्यमोत्तमौ। तच्च "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः"—सम्पूर्णता पदार्थानां समाप्तिः, किञ्चिन्न्यूनतेषदसमाप्तिः, एतद्विशिष्टेऽर्थे वर्त्तमानात्प्रातिपादिकात् "तिङश्च" इति—तिङन्ताच्च स्वार्थे कल्पबादय इति प्रकृत्यर्थसदृशार्थान्तरवृत्तिभ्यो विधानात्। यदा तु कालान्तरदृष्टगुणेषदसमाप्तिविशिष्टस्वार्थवृत्तेः प्रत्ययः तदा न गौणार्थत्वमिति त्वत्कल्पो भवसि, मत्कल्पो भवामीति भवतः। त्वमेवेदानीं किञ्चिन्न्यूनगुणो भवसीत्यर्थः। पूर्वत्र तु त्वत्सदृशोऽन्यो भवतीत्यर्थः।

अथ तिङन्तात्प्रत्यया: प्रदर्श्यन्ते। "अतिशायने तमबिष्ठनौ"—अतिशायनं प्रकर्षोऽभिभवः। एतदुपाधिकार्थवृत्तेङ्याप्प्रातिपदिकादेतौ स्याताम्। तथा 'तिङश्च' इति तिङन्ताच्च। बहूनामेकस्य निर्धारणे वृत्तौ "द्विवचनविभज्योपपदे तरबीयसुनौ"—द्वयोरर्थयोर्वचने विभज्ये विभक्तव्ये चोपपदे तरबीयसुनोर्विधानात्। तत्र 'अजादी गुणवचनादेव' इतीष्ठनीयसुनोर्गुणवचनादेव नियमात्तिङन्तात्तरप्तमपावेव। एतदन्तात् "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे"—किमादिभ्यो यो घस्तदन्ताद् द्रव्यप्रकर्षे गम्यमाने आमुरित्यामुः। उकारो मकारस्यानन्त्यत्वेनेत्त्वनिवृत्तये। इल्लुप्यते। तत्र 'स्वरादिनिपातमव्ययम्' तथा 'तद्धितश्चासर्वविभक्तिः' इत्यसर्वविभक्तियुक्तं तद्धितान्तम्, 'कृन्मेजन्त' इति मकारैजन्तकृदन्तम् 'क्त्वातोसुन्कसुन' इति क्त्वाद्यन्तम् 'अव्ययीभावश्च' इत्यव्ययीभावश्चाव्ययम्। 'तरप्तमपौ घः'। तत्राभि परे, 'यचि भम्' यकारादावजादौ च स्वादावसर्वनामस्थाने परतः पूर्वं भमिति घान्तस्य भसंज्ञा। इह स्वादयः स्वौजसमौडित्यारभ्य कप्पर्यन्ताः। घान्तस्य "यस्येति च"—इवर्णोवर्णयोरिति भसंज्ञानिमित्ते तद्धिते च परे लोप इति लोपः—भवतितराम्, भवतितमाम्। तद्धिताश्च 'तद्धिताः' इत आरभ्य आपञ्चमाध्यायपरिसमाप्तेर्वक्ष्यमाणाः प्रत्ययाः। आमन्तं 'कृत्तद्धितसमासाश्च' कृदन्तं तद्धितान्तं समासश्च प्रातिपदिकमिति प्रातिपदिकम्, कृतः समासाश्च वक्ष्यन्ते। प्रतिपदिकाच्च 'ङ्याप्प्रातिपदिकात्' 'स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सु' इति विधीयमानेषु स्वादिषु पदत्वार्थमेकवचनं सुः। तस्य च "अव्ययादाप्सुपः"—अव्ययाद्विहितस्यापः सुपश्च लुगिति लुक्। स्वरादिष्वामिति पाठादव्ययत्वम्, आबिति टाप्डाप्चापः। "प्रशंसायां रूपप्" प्रशंसा स्तुतिः। एतदुपाधिकार्थात् ङ्याप्प्रातिपदिकात् तिङन्ताच्च रूपप् स्यात्। स्वभावादेतदन्तन्नपुंसकप्रथमैकवचनमेव। तस्य 'स्वमोर्नपुंसकात्' इति नपुंसकलिङ्गात्परत्वेन लुकि प्राप्ते 'अतोऽम्' इत्यम्भावे, "अमि पूर्वः"—अकोऽमि परे पूर्वपरयोः पूर्वरूपमेकादेश इति पूर्वरूपत्वम्, तेन भवतिरूपमित्यादि भवति। एवं कल्पबाद्यन्तादपि स्वभावान्नपुंसकात्स्वादिकार्यम्। 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इत्यकच्। तत्र 'तिङश्च' इत्यनुवृत्तेरस्यापि टेः प्रागज्ञातादिषु प्रागिवीयेष्वर्थेषु भवति। अकार उच्चारणार्थः। चकारः 'चित' इति स्वरार्थः, तत्र हि 'चितः सप्रकृतेः' इत्युच्यते—भवतकि।

अथ तिङोऽन्ये लादेशा उच्यन्ते—"लटः शतृशानचावप्रथमासमानाधिकरणे"—लटः शतृशानचावादेशौ नित्यं स्यातामप्रथमान्तेन चेत्सामानाधिकरण्यं भवति। तत्र शेषत्वादस्य लटः शतृ, तस्य शित्त्वात्सार्वधातुकत्वे पूर्ववच्छबादयः। शत्रन्तस्य 'कृदतिङ्' इति तृतीयधात्वधिकारविहितस्य प्रत्ययस्य कृत्संज्ञाविधानात् कृदन्तत्वेन प्रातिपदिकत्वादविशेषेण स्वादिप्रसङ्गे

कर्मत्वस्य विवक्षितत्वात् 'कर्मणि द्वितीया' इति द्वितीया। द्वितीयादिशब्दैः सुपां त्रिकाः पूर्वाचार्यप्रसिद्धयोच्यन्ते। तत्रापि 'सुपः' इति सुपस्त्रीणि-त्रीणि पदानि भूत्वैकशो यथासंख्यमेकवचनादिसंज्ञानीति तिङ्वदेकत्वादौ क्रमेणैकवचनादि भवति। तत्रामौटोः "सुडनपुंसकस्य" सुडिति प्रत्याहारेणादितः पञ्च वचनानि गृह्यन्ते। तान्यनपुंसकलिङ्गसम्बन्धीनि सर्वनामस्थानानीति सर्वनामस्थानत्वे 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुम्। उगितामञ्चानां लुप्तनकारस्याञ्चतेः पूर्वमधातोरुगितः पश्चाद्धातोश्चास्मिन्नुमिष्यते। 'अञ्चतिग्रहणस्य उगितो धातोर्यदि भवति अञ्चतेरेवेति नियमार्थत्वाद् अधातुग्रहणमधातुभूतपूर्वार्थम्। नुम् मित्त्वात् 'मिदचोऽन्त्यात्परः' इत्येकत्र सन्निविष्टानामचामन्त्यादचः परः। "नश्चापदान्तस्य झलि"—अपदान्तयोर्नकारमकारयोर्झल्यनुस्वार इति नस्यानुस्वारः। 'अनुस्वारस्य ययि परसवर्णः'। स च 'स्थानेऽन्तरतमः' इति नासिक्यानुस्वारस्य तादृशो नकारः—भवन्तं पश्य, भवन्तौ पश्य, भवतस्तानित्यत्र शसि 'स्वादिष्वसर्वनामस्थाने' इति पूर्वस्य प्राप्तायाः पदसंज्ञायाः 'यचि भम्' भसंज्ञया परयाऽनवकाशया बाधात् 'झलां जशोऽन्ते' इति जश्त्वं न भवति। कर्तृकरणविवक्षायाम्—'कर्तृकरणयोस्तृतीया'। उक्तः कर्त्ता। "साधकतमं करणम्"—क्रियाप्रसिद्धौ यत्कारकं कारकान्तरापेक्षया प्रकृष्टं विवक्षितं यद्व्यापारानन्तरं क्रियानिष्पत्तिर्विवक्ष्यते तत्करणम्। तदुक्तम्—

'क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम्॥
वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम्।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः[1]॥
क्रियते येन येनैव तत्तत्करणमिष्यते।
तेनाश्वेन रथेनेति सिद्धं दीपिकयेति च॥ इति।

टायाष्टकारष्टाङसीति विशेषणार्थः। अन्यथा 'सुपां सुलुग्' इति विहितस्याकारस्यापि ग्रहणमापद्येत—भवता तेन। भवद्भ्यां ताभ्याम्। भवद्भिस्तैः। हलादौ पदत्वाज्जश्त्वम्। सम्प्रदानविवक्षायाम्—'चतुर्थी सम्प्रदाने'। कृदाद्यनभिहित इति शेषः। 'कर्मणा यमभिप्रैति स सम्प्रदानम्' ददातिकर्म्मणा करणभूतेन कर्ता यमर्थमभिप्रैति तदनिराकर्तृ प्रेरयितृ अनुमन्तृ वा कारकं सम्प्रदानम्। उक्तञ्च—

'अनिराकरणात्कर्त्तुस्त्यागाङ्गं कर्मणेप्सितम्।
प्रेरणानुमतिभ्यां च लभते सम्प्रदानताम्[2]॥ इति।

---

१. वा० तृ०, सा० ९०-९१।	२. वा० तृ०, सा० १२९।

दानं चेहापुनर्ग्रहणाय किञ्चिदुद्दिश्य स्वीयत्यागः। भवते तस्मै ददाति। भवद्भ्यां ताभ्यां ददाति। भवद्भ्यस्तेभ्यो ददाति। अपादानविवक्षायाम्—'अपादाने पञ्चमी' 'ध्रुवमपायेऽपादानम्' सावधिकं गमनमपायः। तदुक्तम्—

'संयोगभेदाद् भिन्नात्मा गतिरेव भ्रमिर्यथा।
ध्रुवावधिरपायोऽपि समवेतस्तथा ध्रुवः[1]' ॥ इति।

अस्मिन् साध्ये यद् ध्रुवमेतदनाविष्टं तत्कारकमपादानम्। तथा हि—

अपाये यदुदासीनं चलं वा यदि वाऽचलम्।
ध्रुवमेवातदावेशात् तदपादानमुच्यते ॥ इति।

त्रिविधं चैतत्। यथाह—

निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा।
अपेक्षितक्रियं चेति त्रिधाऽपादानमुच्यते[2] ॥ इति।

तत्र प्रथमं धातुनाऽभिहितापायविषयम्, द्वितीयं धात्वर्थाङ्गार्थत्वेनाभिहितापायविषयम्, तृतीयं तु सामर्थ्यादिना प्रतीयमानापायविषयम्। भवतस्तस्मादागच्छति। भवतो मेघाद्विद्योतते विद्युत्—अत्र निःसरणाङ्गे विद्योतने विद्युतिर्वर्त्तते। भवतस्तस्मादाढ्यतरः—अत्र प्रकर्षप्रत्ययसामर्थ्याद्विभागकरणतया प्रकर्षलक्षणा क्रिया प्रतीयते। अत्रावधिविभक्तव्ययोरेकीकारो विभागस्तद्धेतुरपकर्षणं च बौद्धम्। तथा चाह—

'बुद्ध्या समीहितैकत्वान् पञ्चालान् कुरुभिर्यदा।
पुनर्विभजते वक्ता तदापायः प्रतीयते[3]' ॥ इति।

तत्रतत्र ङसीत्यनुवादार्थौ ङकारेकारौ। विभागोऽपायः, अस्मिन् साध्ये यद् ध्रुवमेतद्धेतुभूतक्रियानाविष्टं तदपादानमिति सूत्रार्थः। शेषविवक्षायाम्—'षष्ठी शेषे'—अनभिहित इति शेषः। कर्मादिभ्योऽन्यः प्रातिपदिकार्थव्यतिरेकहेतुः स्वस्वामिसम्बन्धादिः शेषः। द्विष्ठोऽप्यसौ सम्बन्धो गुणगत एव शब्देन प्रतिपाद्यत इति तस्मादेव षष्ठी, न तु प्रधानात्। तदुक्तम्—

द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते[4] ॥ इति।

तथा च वार्त्तिकमपि 'उक्तं पूर्वेण' इति। अस्यार्थः—प्रातिपदिकार्थसूत्रे पदसामानाधिकरण्ये उपसंख्यानमधिकत्वादिति चोद्यस्य न वा वाक्यार्थत्वादिति सामानाधिकरण्यप्रतीतेर्वाक्यत्वेन पदसंस्कारवेलायामभावात् प्रातिपदिकार्थनिबन्धना प्रथमा यथा भवति, एवमत्रापि प्रधानगतसम्बन्धप्रतीतेर्वाक्यार्थत्वेन पदसंस्कारवेलायामभावान्न प्रसङ्गः षष्ठ्या इति। परिहारभाष्यं चार्थरूपमेवै-

---

१. वा० तृ०, सा० १३७। २. वा०तृ०, सा० १३६। ३. वा० तृ०, सा० ४। ४. वा० तृ०, सा० १५७।

तदेवंजातीयकमिति[1]। भवतोऽस्य स्वम्, भवतोरनयोः, भवतामेषाम्। अधिकरणविवक्षायाम्—'सप्तम्यधिकरणे च' चकाराद् दूरान्तिकार्थेभ्यश्च। "आधारोऽधिकरणम्"—कर्तृकर्मणोः क्रियाश्रयभूतयोर्धारणक्रियां प्रति य आधारस्तत्कारकमधिकरणम्। त्रिविधं चैतत्। यदाह—

'कर्तृकर्मव्यवहितामसाक्षाद् धारयत् क्रियाम्।
उपकुर्वन् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्[2]'॥
औपश्लेषिकमेकं स्यात्तथा वैषयिकं परम्।
अभिव्यापकमित्येतत् त्रिधाधिकरणं मतम्॥
आस्ते कटे शकुन्तः खे तिले तैलं व्यवस्थितम्।
क्रमेणाधारभेदानामुदाहरणदर्शनम् ॥ इति।

भवति कटे शेते। मेघच्छन्ने भवति खे वलाका। भवति तिले तैलम्, भवतोरनयोः, भवत्स्वेषु। प्रथमासामानाधिकरण्ये प्रथमासामानाधिकरण्याभावे च 'नन्वोर्विभाषा' इत्यतो विभाषानुवृत्तेर्विकल्पेन भवतः 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा'। भवन्नयम्। 'हल्ङ्याब्भ्यः' इति सुलोपः। तकारस्य संयोगान्तलोपः। तस्यासिद्धत्वात् 'नलोपः प्रातिपदिकान्तस्य' इति विधीयमानो नलोपो न भवति। भवन्तौ तौ। भवन्तस्ते—जसो जकारोऽसन्देहेन विभक्तिस्वरूपप्रतिपत्त्यर्थः। भवत्तरः, भवत्तमः, भवद्रूपः, भवत्कल्पः इत्यादौ तरबादिपूर्ववत्। भवत्कः—'प्रागिवात्कः'। 'इवे प्रतिकृतौ' इत्यतः प्रागितः परेष्वज्ञातादिष्वर्थेषु द्योत्येषु प्रातिपदिकात्क इति कः। तद्धितत्वान्न ककारस्येत्त्वम्। शत्रभावे भवतीत्यादि पूर्वमुक्तमेव। अत्र तिङः स्थानिवत्त्वेन लट्त्वाच्छत्रादेशो न भवति, वाग्रहणस्य व्यवस्थितविभाषात्वविज्ञानात्। यदि हि स्यात्, स्थानिवद्भावेन तिङन्तत्वात्तस्मात्परात् घात् 'किमेत्तिङव्यय' इत्यादिना आमुः स्यात्; ततश्च भवत्तरामिति तृतीयमपि रूपं स्यात्। असामानाधिकरण्ये खल्वपि भवत इदं भावतम्—"तस्येदम्"—षष्ठीसमर्थाद् ङ्याप्प्रातिपदिकात्सम्बन्धिन्यर्थेऽणिति अण्। 'तद्धितेष्वचामादेः' इत्यादिवृद्धिः ञिति णिति तद्धिते परेऽङ्गस्याचामादेरचो वृद्धिरिति। इयं च 'अत उपधायाः' इति ञिति णिति प्रत्ययमात्रे परेऽङ्गस्योपधाया अतो विधीयमानां वृद्धिमपवादत्वाद्बाधते। न च भवत इत्यस्य देवदत्तादिविशेषापेक्षत्वादस्तीहापि सामानाधिकरण्यमिति वाच्यम्; तर्हि सापेक्षत्वादस्मात्प्रत्यय एव न स्यात्। 'समर्थः पदविधिः' इतीह शास्त्रे पदविधिः समर्थपदाश्रय इत्युक्तत्वात्। इदमप्युदाहरणम्—भवतो भक्तिर्भवद्भक्तिरिति। "षष्ठी"—षष्ठ्यन्तं समर्थेन सुबन्तेन वा समस्यत इति समासः। 'सुपो

---

१. म० भा० २।३।६०। २. वा० वृ०, सा० १४८।

धातुप्रातिपदिकयोः' इति तद्धितान्तसमासप्रातिपदिकयोरन्तर्भूतस्य सुपो लुक्। अत्र केचित्—लडिति वर्त्तमाने 'लटः शतृशानचौ' इति पुनर्लड्ग्रहणाद् 'नन्वोर्विभाषा' इति भूते विहितस्यापि लटोऽप्येतावादेशौ भवत इति। एतद्भाष्यवार्तिकयोर्नोक्तम्, वृत्तिकारस्य च नेष्टम्। यदाह—'लडिति वर्त्तमाने पुनर्लड्ग्रहणात् क्वचित् प्रथमासामानाधिकरण्येऽपि भवति' इति। 'सम्बोधने च' शतृशानचाविति शेषः। आभिमुख्यकरणं सम्बोधनम्, तच्च स्वभावात् क्वचित् कार्ये विनियोगार्थम्। यदाह—

'सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः।
प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियायां विनियुज्यते'' ॥ इति।

हे सुखमनुभवन् वर्धस्व। 'लक्षणहेत्वोः क्रियायाः''—लक्षणं चिह्नम्, हेतुः कारणम्। क्रियाया लक्षणहेत्वोर्वर्तमानाद्धातोर्लटः शतृशानचौ स्याताम्। शयनमनुभवन् यवनो भुङ्क्ते—अत्र शयनानुभवनं यवनभोजनस्योपलक्षणम्, शुश्रूषुर्भवन् विद्यामधिगच्छति, अत्रापि शुश्रूषाभवनं विद्याधिगमस्य हेतुः। योगद्वयमिदं प्रथमासमानाधिकरणे नित्यार्थम्। प्रथमा च 'सम्बोधने च' इति सम्बोधनाधिकप्रातिपदिकार्थे विहिता। 'माङ्याक्रोशे'—आक्रोशः शपनम्, अस्मिन् गम्यमाने माङ्युपपदे शतृशानचौ भवतः। मा भवन्। 'माङि लुङ्' इति प्राप्ते अस्मादेवादेशवचनाल्लडनुमीयते। सुखमनुभवन्नित्यादौ 'कर्तृकर्मणोः कृति' इत्यनयोः कृद्योगे विधीयमाना षष्ठी न भवति, 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति लादियोगे प्रतिषेधात्। ल इति शतृशानचौ, कानच्, क्वसुकिकिनौ चोच्यन्ते। उ इत्युवर्णान्ताः कृतः; उः, इच्छुः, उकः प्रत्यय एव। अव्यय इति 'कृन्मेजन्तः', 'क्त्वातोसुन्कसुनः' इति उक्ता अव्ययकृतः। 'क्तक्तवतू निष्ठा'। खलर्थः—खल् युच्। तृन्निति 'पूङ्यजोः शानन्' इति शानन्नादयः 'तृन्' इति तृन्पर्यन्ताः प्रत्याहारेणोक्ताः। प्रत्याहारश्च 'लटः शतृ' इति तृशब्दस्य तृनो नकारेण। सुखस्यानुभवन्निति प्रयोगः शेषलक्षणया षष्ठ्या। अत्र षष्ठीसमासः 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन'—इति पूरणादिभिर्निषेधान्न भवति। तत्र 'पूरण' इति पूरणार्थप्रत्ययान्ताः। 'गुण' इति गुणद्वारेण गुणिनि वर्तितुं शक्ता गुणमात्रनिष्ठा शुक्लादयः; ये तु गुणं स्वनिष्ठतयैवाभिदधति ते न रसादयः, यतस्तत्स्थैश्च गुणैः षष्ठी समस्यत इति तैः समास उक्तः। सुहितार्थास्तृप्त्यर्थाः। सदिति 'तौ सत्' इति सत्संज्ञौ शतृशानचौ। अव्यया उक्ताः। तव्यो न सानुबन्धकः, 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति। समानाधिकरणमेकविभक्त्यन्तं विशेषणं विशेष्यं वा।

---

१. काशि० ३।२।१२४। २. वा० वृ०, सा० १६३।

अथ शत्रन्तात्स्त्रीप्रत्यया इह प्रदर्श्यन्ते । 'उगितश्च'—यत्प्रातिपदिकमवयवद्वारेण साक्षाद्वोगित् 'येन विधिस्तदन्तस्य' इति तदन्तात् व्यपदेशिवद्भावेन केवलाच्च प्रातिपदिकात् स्त्रियां ङीप्स्यात् । ङकारः सामान्यग्रहणार्थः, पकारस्तदविघातार्थः । 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न', 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति परिभाषे प्रातिपदिकस्वरूपग्रहणप्रत्ययविधिविषये इति नेह स्तः । ङीबन्तस्य "यू स्त्र्याख्यौ नदी"—अन्यानपेक्षया स्त्रियां वृत्तमीदूदन्तं नदी, इति नदीत्वे "शप्श्यनोर्नित्यम्"—शप्श्यनोर्निमित्तत्वेन सम्बन्धिनः शतुर्नित्यं नुम् शीनद्योः परयोः । नुम् मित्त्वादन्त्यादचः परः । इह नदीशब्दो नद्यवयवे वर्त्तत इति शतुर्नदीपरत्वम् । भवन्ती । प्रतिभवन्ती । ङ्यन्तत्वात्स्वादिषु सोर्हल्ङ्यादिलोपः । भवन्त्यौ । भवन्त्यः । अजादौ 'इको यणचि' इति संहितायां यण् भवति । "प्रथमयोः पूर्वसवर्णः" इत्यकः प्रथमाद्वितीययोरजादौ विभक्तौ परतः पूर्वपरयोः पूर्वसवर्णदीर्घः एक इत्येतदत्र न भवति, 'दीर्घाज्जसि च' इति निषेधात् चकारादिचीति गृह्यते । हे भवन्ति—'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वः । अम्बार्था मात्रर्थाः । 'एङ्ह्रस्वात्सम्बुद्धेः' इति सम्बुद्धेर्हलो लोपः । 'एकवचनं सम्बुद्धिः' । सम्बोधने प्रथमाया इति शेषः । भवन्तीम्; भवन्तीः—अत्र 'अमि पूर्वः' पूर्वसवर्णदीर्घश्च यणं बाधेते । ङिद्वचनेषु 'आण् नद्याः' इति टित्त्वादादिराडागमः । 'आटश्च' इति यथायोगमैकार आकारश्च वृद्धिः—भवन्त्यै, भवन्त्याः । आमि 'ह्रस्वनद्यापो नुट्' इति नुट् टित्त्वादादौ—भवन्तीनाम् । सप्तम्येकवचनस्य 'ङेराम्नद्याम्नीभ्यः' इत्यामादेशे—भवन्त्याम् । नीशब्देन तदन्तो ग्रामण्यादिरुच्यते । भवन्तितरा, भवन्तीतरा । पूर्ववत्तरप् । अत्र 'घरूपकल्पचेलड्-ब्रुव-गोत्र-मत-हतेषु ङ्योनेकाचो ह्रस्वः' इति घादिषु परेषु ङ्यन्तस्यानेकाचो विधीयमानो नित्यो ह्रस्वः 'उगितश्च' इत्युगितः परस्या नद्या विधीयमानेन ह्रस्वविकल्पेन बाध्यते, अत्र घादयः प्रत्ययाः, चेलडादीनि प्रातिपदिकानि । अत्र हरदत्तः—"चेलडादीनां वृत्तिविषये कुत्सनवचनत्त्वात् तैः 'कुत्सितानि कुत्सनैः' इति समासः" इति[1] । न्यासकारस्तु "चेलड्-ब्रुव-गोत्राणामेवं समासमुक्त्वा मतहताभ्यां तु 'विशेषणं विशष्येण'" इत्याह[2] । एवं मतहतादिष्वप्युदाहार्यम् ।

अथ नपुंसकप्रक्रिया । भवत् ब्राह्मणकुलं तिष्ठति पश्येति वा—"स्वमोर्नपुंसकात्" इति लुक् । भवन्ती कुले—"नपुंसकाच्च" इत्यौङः शीभावः । औङिति प्रथमाद्वितीययोर्द्विवचनस्य पूर्वाचार्याणां संज्ञा । शकारः 'आच्छीनद्योः' इति विशेषणार्थः । 'शप्श्यनोः' इति नित्यं नुमागमः । भवन्ति कुलानि—'जश्शसोः

---

१. प० म० ६।३।४३ (पा० सू०) । २. न्या० ६।३।४३ (पा० सू०) ।

शि:' इति नपुंसकाङ्गात्परत्वे जश्शसोः शिरादेशः। शकारः शीति तत्र तत्रानुवादार्थः। 'शि सर्वनामस्थानम्' इति शेः सर्वनामस्थानत्वे "नपुंसकस्य झलचः" इति झलन्तस्याजन्तस्य नपुंसकाङ्गस्य सर्वनामस्थाने नुमिति नुम्। भवता इत्यादि पुंल्लिङ्गवत्।

अथ शानच्। व्यतिभवमानः—'आने मुक्' इत्यदन्तस्यानपरत्वेन मुक्त्विवादन्त्यः। व्यतिभवमानौ—'प्रथमयोः पूर्वसवर्णः' इति दीर्घस्य 'नादिचि' इति निषेधे 'वृद्धिरेचि' इति वृद्धिः। व्यतिभवमानान्—"तस्माच्छसो नः पुंसि" इति तस्मात्प्रथमयोः पूर्वसवर्णदीर्घात् परस्य शसवयवस्य सकारस्य न इति नकारादेशः। व्यतिभवमानेन—'टाङसिङसामिनात्स्याः'—अदन्तादङ्गात्परेषां टादीनां यथासंख्यमिनादय इति इनादेशे गुणः। व्यतिभवमानाभ्याम्—'सुपि च' इत्यदन्ताङ्गस्य दीर्घ इति सुप्परत्वाद्दीर्घः। व्यतिभवमानैः—'अतो भिस ऐस्' इत्यदन्ताङ्गात्परत्वेन भिस ऐसादेशः। व्यतिभवमानाय—'ङेर्यः' इत्यदन्तादङ्गात् परत्वेन ङार्यादेशः। 'ऋष्टाय' इति निर्देशात्सन्निपातपरिभाषाया अनित्यत्वात् 'सुपि च' इति दीर्घः। व्यतिभवमानेभ्यः—अत्र झलादिवहुवचनसुप्परादन्ताङ्गत्वेन 'बहुवचने झल्येत्' इत्येत्वम्, 'सुपि च' इति दीर्घश्च प्राप्नोति। तत्र 'विप्रतिषेधे परं कार्यम्' द्वयोस्तुल्यबलविरोधे परस्य प्राप्यमाणत्वात्परमेत्वं प्रवर्त्तते। व्यतिभवमानात्। व्यतिभवमानस्य—'टाङसि' इत्यादिना ङसिङसोरात्स्यौ। व्यतिभवमानयोः—'ओसि च' इत्यदन्तस्याङ्गस्यौस्परत्वे नकारेऽयादेशः। व्यतिभवमानानाम्—'ह्रस्वनद्यापो नुट्' इति नुटि अजन्तस्याङ्गस्य नाम्परत्वेन 'नामि' इति दीर्घः। 'सुपि च' इत्येव वा। व्यतिभवमाने—'आद्गुणः'। व्यतिभवमानेषु—एत्वे षत्वम्। व्यतिभवमानस्येदं व्यातिभवमानम्—अत्रासामानधिकरण्ये शानच् 'तस्येदम्' इत्यण्यादिवृद्धिः। "न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्" इति—पदान्ताभ्यां यकारवकाराभ्यां परस्याचामादेरचो वृद्धिर्न भवति, किन्तु ताभ्यां यथासङ्ख्यमैजागमो भवति तद्धिते ञ्णिति किति वा पर इत्येतस्य 'न कर्मव्यतिहारे' इति निषेधः।

अथ स्त्रियाम्। व्यतिभवमाना—"अजाद्यतष्टाप्"—अजादिगणपठितादकारान्ताच्च प्रातिपदिकात् स्त्रियां टाबिति टाप्। पकारः समान्यग्रहणार्थः, टकारस्तदविघातार्थः। अत्र शानचः स्थानिवत्त्वेन टित्त्वात् 'टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्ख्युनाम्' इति यथाकथञ्चित् टितः प्रातिपदिकाड्ढाद्यन्ताच्चानुपसर्जनात् स्त्रियां विधीयमानो ङीप्, ट एव इद् यस्य स टिदित्यवधारणस्याश्रयणाल्लटश्च द्व्यनुबन्धकत्वान्न भवति, सामगीत्यादौ टकोऽनेकानुबन्धकत्वेऽपि टित्त्वसामर्थ्यात् ङीप्, लटस्तु टित्त्वमेत्वाद्यर्थतया सावकाशम्। हल्ङ्यादिना सुलोपः। व्यतिभवमाने—'औङ आपः' इत्यापः परत्वेनौङः शीभावे

गुणः। ईकारप्रत्ययपरत्वेन 'यस्येति च' इति लोपो न भवति। 'औङः श्यां परे प्रतिषेधः' इति निषेधात्। व्यतिभवमानाः—सवर्णदीर्घः। हे व्यतिभवमाने—'सम्बुद्धौ च' इत्याप एत्वम्। एङः परत्वात्सोर्लोपः। व्यतिभवमानया—''आङि चापः' इत्येत्वेऽयादेशः। आङिति तृतीयैकवचनस्य पूर्वाचार्यसंज्ञा। चकारात् 'ओसि च'। व्यतिभवमानायै—'याडापः' इति आपः परस्य ङिद्वचनस्य याडागमष्टित्त्वादादिः। 'वृद्धिरेचि' इति वृद्धिः। व्यतिभवमानायाः। व्यतिभवमानयोः—'आङि चापः' इत्येत्वेऽयादेशः। व्यतिभवमानानाम्—'ह्रस्वनद्यापो नुट्'। व्यतिभवमानायाम्—ङेरामादेशः। व्यतिभवमानासु।

अथ नपुंसके। व्यतिभवमानम्—'अतोऽम्' इत्यम्भावः। व्यतिभवमाने—'नपुंसकाच्च' इति शीभावे पूर्ववदौङः श्यामिति यस्येति लोपनिवृत्तिः। व्यतिभवमानानि—'जश्शसोः शिः'। 'नपुंसकस्य झलचः' इति नुम्। 'सर्वनामस्थाने चासम्बुद्धौ' इति नान्तस्याङ्गस्योपधाया दीर्घः। हे व्यतिभवमानेत्यत्र 'अतोऽम्' इत्यम्भावेऽमि पूर्वत्वे च 'एङ्ह्रस्वात्' इति सम्बुद्धेर्हलो मकारस्य लोपः। तृतीयादि पुंलिङ्गवत्। 'लृटः सद्वा' इति लट इव लृटोऽपि शतृशानचोर्विधानाद् भविष्यन्नित्यादि लड्वत्सर्वमुदाहार्यम्। तत्र स्त्रियां नपुंसकद्विवचने च 'आच्छीनद्योर्नुम्' इति नुम्विकल्पो विशेषः। अत्रानुवृत्तं शतृग्रहणं स्वावयवे वर्त्तते। तेनावर्णान्तादङ्गात् परो यः शत्रवयवस्तस्याङ्गस्य शीनद्योः परयोर्वा नुमिति सूत्रार्थः, अथ वा—अवर्णान्तादङ्गात् शीनद्योः परयोः शत्रन्तस्य वा नुमिति। तत्र येन नाव्यवधानमिति तकारेण व्यवधानमाश्रयिष्यते, अवर्णान्तादङ्गात्परो यः शता तदन्तस्याङ्गस्येति सूत्रार्थो नोक्तः। अङ्गान्तस्य शत्रवयवस्य चान्तरङ्गत्वान्नुमः पूर्वमेकादेशे व्यपवर्गाभावादवर्णान्ताङ्गात्परस्य शतुरसम्भवात्। न चान्तादिवद्भावः, 'उभयत आश्रयणे नान्तादिवत्' इति निषेधात्। भूतपूर्वगत्याश्रयणे तु लुग्विकरणादावदती, जुह्वतीत्यादावपि स्यात्। व्यतिभविष्यमाण इत्यादौ 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वम्। अडादिभिर्व्यवायेऽपि रषाभ्यां परस्य समानपदस्थस्य नो ण इति सूत्रार्थः। भविष्यन्नित्यत्र तु 'पदान्तस्य' इति निषेधान्न भवति।

अथ सनन्ताः प्रदर्श्यन्ते। "धातोः कर्मणः समानकर्तृकादिच्छायां वा"—यो धातुरिषेः कर्म समानकर्तृकश्चार्थद्वारेण तस्मादिच्छायां वा सन् स्यात्। नकारो निर्देशाद्यर्थः। "सनि ग्रहगुहोश्च"—ग्रहिगुहिभ्यामुगन्तादेकाचश्च परस्य सनो नेडितीण्निषेधः। "इको झल्" इति इगन्ताद्धातोः परस्य झलादेः सनः कित्वान्नः गुणः। "सन्यङोः" एतदन्तस्य प्रथमैकाचो द्वे भवतोऽजादेस्तु द्वितीयस्येति द्वित्वेऽभ्यासकार्यम्। 'सनाद्यन्ता धातवः' इति सनादिणिङ्पर्यन्तानां प्रत्ययन्तानां धातुत्वात्पूर्ववल्लडादिषु तिबादयः। बुभूषति इत्यादि। लिटि

तु "कास्प्रत्ययादाममन्त्रे लिटि" कासे प्रत्ययान्ताच्च धातोर्लिटि परे आम्प्रत्यय इत्यामः। अकारो मकारपरित्राणार्थः। सूत्रे त्वत एव निर्देशात्पररूपम्। आमस्यार्धधातुकत्वात् 'अतो लोपः आर्धधातुके' इति सनोऽकारस्य लोपः। 'आमः' इत्यामः परस्य लेर्लुक्। प्रत्ययलक्षणत्वेन कृदन्तात्वादुत्पन्नस्य सुपः स्वरादिष्वामिति पाठादव्ययत्वाल्लुक्। तत्र यद्यमा साहचर्यादामपि तद्धित एवेत्युच्यते तर्हि 'आम' इत्येव लुग्भविष्यति। लिङ्ग्रहणं तु तत्र निवर्त्तिष्यते। अत्रामन्तस्याव्यक्तपदार्थकत्वात्पदत्वाय प्रथमातिक्रमे कारणाभावात्सुरेवोत्पत्स्यते। तस्य च हल्ङ्यादिलोपः सिद्ध इति किं लुको विधानेनेति चेत्, यदा तु प्रयोगवशाद् द्वित्वाद्यभिव्यक्तौ द्विवचनाद्युत्पद्यते तदर्थं लुगेषितव्यः। 'कृञ्चानुप्रयुज्यते लिटि' इत्यामन्तस्य पश्चादेवाव्यवहिता एव कृभ्वस्तय एव लिट्पराः प्रयोक्तव्याः। अत्र 'अभूततद्भावे कृभ्वस्तियोगे' इति कृशब्दस्य कृञो द्वितीयेति ञकारेण प्रत्याहारनिर्देशात् कृञिति कृभ्वस्तय उच्यन्ते। बुभूषाञ्चकार। बुभूषाम्बभूव—अत्र "मोऽनुस्वारः"—पदान्तस्य मोऽनुस्वारो हलीत्यनुस्वारे तस्य 'वा पदान्तस्य' इति यञि परे विधीयमानः परसवर्णविकल्पो भवति। अनुस्वारपक्षोऽप्युदाहार्यः। 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' इत्यत्र पूर्ववदित्यनुवृत्त्या 'पूर्ववत्कृञोऽनुप्रयोगस्य' इति द्वितीयोऽपि योगः सम्पद्यते। तत्राद्य आम्प्रत्ययप्रकृतेरिवाकर्त्रभिप्रायेऽप्यनुप्रयुज्यमानस्य कृञ आत्मनेपदं प्राकरणिकं विधत्ते। द्वितीयस्त्वर्थात् पूर्वस्येव कर्त्रभिप्राये परस्मैपदमित्यत्र आम्प्रकृतेः शेषत्वेन नित्यपरस्मैपदित्वात् कृञोऽपि परस्मैपदमेव। इदमेव कृञ्ग्रहणमनुप्रयोगे कृञिति प्रत्याहारग्रहणे लिङ्गम्, अन्यथाऽनुप्रयोगस्येत्येव ब्रूयात्। बुभूषामास—अत्र 'अस्तेर्भूः' इत्यार्द्धधातुके विषये विधीयमानो भूभावोऽनुप्रयोगे प्रत्याहारग्रहणसामर्थ्यादत्र न भवति, अन्यथा प्रतिपत्तिलाघवाय कृभ्वित्येव ब्रूयात्। बुभूषिता—इत्यतो लोपो गुणं परत्वाद् वार्णादाङ्गमिति वा बाधते। बुभूषिष्यति। बुभूषतु। अबुभूषत्। बुभूषेत्। आशिषि बुभूष्यात्—'अतो येयः' न भवति, आर्द्धधातुकत्वात्। अत्र 'अकृत्सार्वधातुकयोर्दीर्घः' इति अकृद्यकारेऽसार्वधातुके च परेऽजन्तस्याङ्गस्य विधीयमानो दीर्घः 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन' इत्यतो लोपस्य बलीयस्त्वात्तेन बाध्यते। अबुभूषीत्—'अस्तिसिचोऽपृक्ते' इति ईडागमे 'इट ईटि' इति सिचो लोपः। 'सिज्लोप एकादेशे सिद्धो वक्तव्यः' इति सिज्लोपस्य पूर्वत्रासिद्धत्वाभावात्सवर्णदीर्घः। अबुभूषिषुः—'सिजभ्यस्त' इति जुस्। अबुभूषिष्यत्।

अथात्मनेपदम्। व्यतिबुभूषते। व्यतिबुभूषाञ्चक्रे। 'आम्प्रत्ययवत्' इति नित्यस्तङ् कृञः। व्यतिबुभूषाम्बभूव। आसेति वा। व्यतिबुभूषिता। व्यतिबुभूषितासे। व्यतिबुभूषिष्यते। व्यतिबुभूषताम्। व्यत्यबुभूषत। व्यतिबुभूषेत। आशिषि—व्यतिबुभूषिषीष्ट।

व्यत्यबुभूषिष्यत। सर्वत्र 'पूर्ववत्सनः' इति तङ्। सनः पूर्वो धातुर्येन निमित्तेनात्मनेपदी सन्नन्तमपि तेनैव तथेत्यर्थः।

अथ भावकर्मणोः। बुभूष्यते त्वया। अनुबुभूष्यते सुखम्। यकि—'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घं बाधित्वा 'अतो लोपः' पूर्वविप्रतिषेधेन भवति। बुभूषाञ्चक्रे भवता। अनुबुभूषाञ्चक्रे सुखम्। बभूवे, आसे इति वा। इहानुप्रयुज्यमानानामन्तार्थाभिव्यक्तिमात्रपरत्वात् करोतेर्भावे, इतराभ्यां कर्मणि लिङुपपद्यते। प्रयुज्यते चैवम्—'रोमन्थमन्थरचलद्गुरुसास्नमासाञ्चक्रे निमीलदलसेक्षणमौक्षकेण'[1]; 'प्रकाशेनाकाशे दिनकरकरान्विक्षिपद्भिस्सिताक्षैर्नरेन्द्रैरौपेन्द्रं वपुरथ विशद्धाम वीक्षाम्बभूवे'[2] इति। 'इ एति' इत्यस्तेर्हत्वं तासि साहचर्यात्सार्वधातुकोत्तमैकवचने एवेतीह 'लिटस्तझयोः' इति तशब्दस्यैशीटश्चैत्वे न भवति। केचित्तु—तासेरुत्तमैवैकवचनमेकारः सम्भवतीत्येतावन्मात्रसाहचर्याश्रयेण लिडुत्तमैकवचनेऽपि हत्वमिच्छन्ति। तत्र साहचर्यसङ्कोचे कारणं न विद्मः। लृङ्लृटोराशीर्लिङि लुङि च कर्तृवदेव रूपम्। न च चिण्वदिटि वृद्धौ च 'आतो युक् चिण्कृतोः' इत्याकारान्तस्य चिणि ञ्णिति कृति च परे युको विधानाद्रूपभेदप्रसङ्गः, 'ण्यल्लोपौ' इत्यादिना वृद्धेरतो लोपेन बाधस्योक्तत्वात्। लुङ्येकवचने तु चिणो विधानात्तत्र अबुभूषि इति विशेषः। तथा लोटि लङि विध्यादिलिङि च कर्तृवत्प्रक्रिया। यक् तु विशेषः। कर्मकर्त्तरि 'भूषाकर्मकिरतिसनां चोपसंख्यानमन्यत्रात्मनेपदात्'[3] इति यक्चिणोर्निषेधात्सर्वत्र कर्तृवद्रूपम्। तत्करणात् स्वाश्रये भावे लकारे यक्चिणोर्विषये कर्मवद्रूपम्, कर्त्तरि तृतीया विशेषः। अभिबुभूष्यते शत्रुणा स्वयमेव इत्यादि। इच्छायाः कर्तृस्थत्वेन कर्मस्थत्वाभावेऽपीष्यमाणस्य प्राधान्यात्तस्य च कर्मस्थत्वादस्ति कर्मवद्भावः। अत एव 'भूषाकर्म' इति यक्चिणौ निषिध्येते।

अथ यङ्। "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्"—पौनःपुन्यं भृशार्थो वा क्रियाणां समभिहारस्तत्र द्योत्ये एवंविधाद्धातोर्यङ् स्यात्। द्विर्वचनादि पूर्ववत्। "गुणो यङ्लुकोः"—यङि यङ्लुकि चाभ्यासस्येको गुण इति गुणः। बोभूयते। 'अनुदात्तङित आत्मनेपदम्' इत्यादिनाऽऽत्मनेपदम्। यङो ङकारस्य गुणप्रतिषेधार्थत्वेनावयवे चरितार्थत्वान्न समुदायार्थत्वमिति यङन्तस्य धातोरङित्त्वात्कथमात्मनेपदमिति नाशङ्क्यम्; तत्र धातुग्रहणाभावात् ङिन्मात्रात्परस्य लस्य तद्विधेः। 'अनुदात्तेतो ये धातवो ङितश्च' इति प्रायिकाभिप्रायं वृत्तिकारवचनम्। अथ वा 'ङितश्च' इत्यत्र शब्दा इत्यध्याहार्यम्। अत एव 'अनुदात्तेतो ङितश्च ये धातवः' इति नोक्तम्। चङादावतिप्रसङ्गपरिहारस्तत्र तत्र वक्ष्यते।

---

१. शिशु० ५।६२। २. शिशु० २०।७९। ३. ३।१।८७ पा० सू० (वा०)।

बोभूयते त्वया । अनुबोभूयते सुखम् इत्यादि सनन्तवत्प्रक्रिया । कर्मवत्कर्मकर्ता । लुङि तशब्दे 'अचः कर्मकर्तरि' इति चिणो विकल्पनात्पक्षे सिजपि भवति । तेन अभ्यबोभूयि शत्रुः स्वयमेव, अभ्यबोभूयिष्ट इति च भवतः । वत्करणाद्भावे तु लकारे नित्यं चिणेव । अभ्यबोभूयि शत्रुणा स्वयमेवेति ।

अथ यङ्लुक् । "यङोऽचि च"—यङोऽचि प्रत्यये नित्यं लुक् । चकारेण बहुलग्रहणानुकर्षणादयं विकल्पेनानैमित्तिकोऽपि । प्रत्ययलक्षणेन यङन्तत्वाद्धातुत्वे लडादि, द्विर्वचनञ्च । आत्मनेपदं तु ङिन्मात्रात्तद्विधेः प्रत्ययलक्षणत्वाभावान्न भवति । 'चर्करीतं परस्मैपदि अदादिवच्च'[1] इति वचनाद् 'अदिप्रभृतिभ्यः शपः' इत्यदादिभ्य उत्तरस्य शपो विधीयमानो लुग्यङ्लुगन्तेऽपि भवति । 'चर्करीतम्' इति यङ्लुगन्तस्य पूर्वाचार्यव्यपदेशः । अत्र परस्मैपदीत्यनुवादो न विधिरित्याहुः । 'यङो वा' इति यङ्लुगन्तात्परस्य हलादेः पितः सार्वधातुकस्य वा ईडागमः—बोभवीति । बोभोति । 'भूसुवोस्तिङि' इति गुणनिषेधोऽत्र न भवति; 'दाधर्त्ति' सूत्रे बोभूत्विति छन्दसि गुणाभावार्थान्निपातनाज्ज्ञापकात् । इदमेव 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्' इत्यत्र ज्ञापकम् । बोभूतः । बोभुवति—'अदभ्यस्तात्'—अभ्यस्तादङ्गात्परस्य प्रत्ययादेर्झकारस्यादित्यदादेशे उवङादेशः । "उभे अभ्यस्तम्"—अस्मिन्प्रकरणे ये द्वे विहिते ते उभे अपि समुदिते अभ्यस्तम् । तथा 'जाक्षित्यादयः षट्' इति जक्ष एतदादयो जागृ दरिद्रा शास दीधीङ् वेवीङ् चकासश्च । बोभवाञ्चकार—पूर्ववत् कृञोऽनुप्रयोगस्येति कृञो नित्यं परस्मैपदम् । बोभविता । बोभविष्यति । बोभवीतु, बोभोतु । बोभूतात्—इत्यत्र तातङो ङित्वान्न गुणः । 'सार्वधातुकमपित्' इत्यस्य प्रसज्यप्रतिषेधात्तत्र च ङिदित्यनुवृत्तेस्तस्य च श्रूयमाणस्य पितश्चोद्देश्योपादेयत्वव्यत्ययेन 'पिन्न ङित्, ङिन्न पित्' इत्यर्थद्वयस्य भाष्ये[2] समाश्रयणात्तातङः स्थानिवत्त्वप्राप्तं पित्त्वं ङित्त्वेनानवकाशेन निवार्यत इति ईडभावः । बोभूहि—'सेर्ह्यपिच्च' इति पित्त्वनिषेधादीड्गुणौ न भवतः । बोभवानि । बोभवाव । बोभवाम—आडुत्तमस्य पित्त्वात् उवङं बाधित्वा परत्वाद् गुणो भवति । अहलादित्वादीडभावः । अबोभवीत् । अबोभोत् । अबोभूताम् । अबोभवुः—'सिजभ्यस्त' इति जुसि 'जुसि च' इतीगन्तस्याङ्गस्य गुणः । बोभूयात्—यासुटो ङित्त्वेन पित्त्वस्य निवर्त्तनादीटोऽभावः । आशिषि त्वसार्वधातुकत्वेन लिङः सलोपाभावो विशेषः । बोभूयुः—इत्यत्र जुस्भावे 'उस्यपदान्तात्' इति पररूपम् । यासुटो जुस्भक्तत्वेन 'जुसि' इति गुणोऽत्र न भवति, येन नाप्राप्तिन्यायेन 'सार्वधातुकमपित्' इत्यतिदिष्टङित्त्वाश्रयस्य निषेधस्यैव तेन बाधात्; तत्र 'क्ससस्याचि' इत्यतोऽ-

---

१. २:७१ पा० धा० सू० । २. म० भा० ३।१।८३ ]।

चीत्यधिकारादजादौ जुसि तद्विधानाद्वा । अबोभोत् । अबोभूवीत् । 'गातिस्था' इति सिचो लुक् । 'यङो वा' इतीटो विकल्पः । सिचः प्रत्ययलक्षणेन 'अस्तिसिचः' इति नित्यस्तु न भवति, श्रूयमाणे सिचि तस्योक्तत्वात् । ईट्पक्षे 'भुवो वुग्' इत्यजादिलक्षणो वुग् नित्यत्वाद् गुणं बाधते । अबोभूवन्नित्यत्र सिचः प्रत्ययलक्षणेन 'सिजभ्यस्त' इति जुस्भावः 'आत एव' इति नियमान्न भवति । अभ्यस्ताश्रयस्तु विदिसाहचर्याल्लङ्विषय इति नेह प्रसज्यते । विदेर्ह्यव्यवहितो झिर्लङ्येव सम्भवति । न च सिचा साहचर्याल्लुङ्विषयोऽपि स्यादिति वाच्यम्; 'विप्रतिषेधे परम्' इति परसाहचर्यस्य बलीयस्त्वात् । अबोभविष्यदित्यादि ।

अथात्मनेपदम् । व्यतिबोभूते । व्यतिबोभुवाते । अजादावुवङ् । व्यतिबोभवाञ्चक्रे । व्यतिबोभवाम्बभूव । 'आम्प्रत्ययवत्' इति कृञो नित्यं तङ् । व्यतिबोभविता । व्यतिबोभविष्यते । व्यतिबोभूताम् । व्यतिबोभुवाताम्—अजादावुवङ् । उत्तमे त्वाटि गुणः—व्यतिबोभवै । व्यत्यबोभूत् । व्यत्यबोभुवाताम् । व्यत्यबोभुवि । पूर्ववदुवङजादौ । व्यतिबोभुवीत । व्यतिबोभुवाताम् । व्यतिबोभुवीय । पूर्ववदजादावुवङ् । आशिषि—व्यतिबोभविषीष्ट—आर्द्धधातुकत्वादिड्गुणौ । ध्वमि 'विभाषेटः' इति मूर्द्धन्यविकल्पो द्रष्टव्यः । व्यत्यबोभविष्ट । ध्वमि पूर्ववन्मूर्द्धन्यविकल्पः । व्यत्यबोभविष्यत । भावकर्मणोः कर्मकर्त्तरि च बोभूयते त्वया इत्यादि सर्वं प्रकृतिवन्नेयम्, अभ्यास एको विशेषः ।

अथ सत् । बोभुवद् ब्राह्मणः । उगिल्लक्षणो नुम् 'नाभ्यस्तात्' इति निषिध्यते । बोभुवती स्त्री । बोभुवती ब्राह्मणकुले—स्त्रियां नपुंसकद्विवचनयोश्च नित्यत्वादन्तरङ्गत्वाच्च नुमः पूर्वं शपो लुक्यङ्गस्यावर्णान्तत्वात् 'आच्छीनद्योः' इति विकल्पितो नुम्न भवति । नापि 'शप्श्यनोः' इति नित्यः, तस्यावर्णात् परशतृविषयत्वात् । न च प्रत्यलक्षणेनात्परत्वम्, तस्याप्रत्ययलक्षणत्वात् । बोभुवति कुलानि, बोभुवन्ति कुलानि इत्यत्र तु शौ 'नाभ्यस्तात्' इति निषेधस्य 'वा नपुंसकस्य' इति विकल्पनात् पक्षे नुम्भवति । व्यतिबोभुवानः—लडादेशस्य तु शतुः स्येन व्यवधानादभ्यस्तात्परत्वाभावात् 'नाभ्यस्तात्' इति निषेधो न भवति । नापि 'वा नपुंसकस्य' इति विकल्प इति सर्वं प्रकृतिवत् ।

अथ णिच् । 'हेतुमति च'—स्वतन्त्रस्य कर्तुः प्रयोजको हेतुः, तद्व्यापारः प्रेषणादिर्हेतुमान्, स च कर्त्ता मा विरंसीदिति तत्र धातोर्णिच् स्यात् । णकारो वृद्ध्यर्थः । चकारो णिच्णिङो सामान्यग्रहणाविघातार्थः । सनाद्यन्तत्वाद्धातुत्वे लडादयः । तेषां 'णिचश्च' इति क्रियाफलस्य कर्तृगामित्वे तङ् । अन्यथा तु परस्मैपदम् । भावयते सस्यम् । भावयति सस्यम् । यदा तु फलस्य कर्तृगामित्वमुपपदेन प्रतीयते तदा 'विभाषोपपदेन प्रतीयमाने' इति परस्मैपदमपि भवति—स्वं सस्यं भावयति इति । यदा चित्तवत्कर्तृकादकर्मकादस्माण्णिच् तदा क्रिया-

फलस्य कर्तृगामित्वेऽपि 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति परस्मैपदम्। पुत्रं भावयतीति। विभाषोपपदादप्ययमेव विप्रतिषेधेन स्वं पुत्रं भावयतीति। 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' इत्यणौ कर्ता णौ कर्म। भावयाञ्चक्रे, चकार, बभूव, आस। 'अयामन्ताल्वाय्येत्न्विष्णुषु' इति आमादिषु विधीयमानो णेरयादेशो 'णेरनिटि' इत्यनिडादावार्द्धधातुके विधीयमानं णिलोपमपवादत्वाद्बाधते। यदायं ण्यन्तः चित्तवत्प्रकृतित्वेन नित्यं परस्मैपदी तदा अनुप्रयुक्तः करोतिरपि पूर्ववत् कृञोऽनुप्रयोगस्येति भिन्नेन कल्पितेन योगेन परस्मैपद्येव। भावयिता इत्यादि प्रकृतिवत्। आशीर्लिङि 'णेरनिटि' इति णिलोपः। स च 'अकृत्सार्वधातुकयोः' इति दीर्घं ण्यल्लोपावित्यादिना बाधत इति भाष्यात् इत्यादि भवति। आत्मनेपदे त्विडादित्वाण्णिलोपो नेति गुणायादेशयोः भावयिषीष्ट इत्यादि। ध्वमि 'विभाषेटः' इति मूर्द्धन्यविकल्पः। लुङि 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति सिजपवादश्चङ्। चकारङकारौ विशेषणार्थौ। णिलोपः। 'णौ चङ्युपधाया ह्रस्वः' इति चङ्परे णावङ्गस्योपधाया ह्रस्वः। "चङि"—इत्यनभ्यासस्य चङ्परस्य धातोः प्रथमस्यैकाचोऽजादेस्तु द्वितीयस्येति द्विर्वचने कर्त्तव्ये णौ कृतं स्थानिवदिति रूपस्थानिवत्त्वे भूशब्दो भौशब्दो वा द्विरुच्यते। तत्र भौशब्दस्य द्विर्वचनपक्षेऽपि 'ह्रस्वः' इत्यभ्यासस्य ह्रस्वो भवन् 'एच इग्घ्रस्वादेशे' इति नियमादिग्भावान्नान्तरतम्यादुकारः। तस्य च 'ओः पुयण्ज्यपरे' इतीकारः। उवर्णान्तस्याभ्यासस्यावर्णपरे पवर्गे यणि जकारे च परत इकार इति सूत्रार्थः। तस्य 'दीर्घो लघोः' इति दीर्घः। चङ्परे णौ यदङ्गं तदभ्यासस्य लघोर्लघुनि धात्वक्षरे परे दीर्घो भवति अनग्लोप इति सूत्रार्थः। इदमेवेत्ववचनं ज्ञापकं णौ कृतस्य स्थानिवत्त्वे; अन्यथोवर्णान्ताभ्यासो न क्वचिदपि स्यात्। नन्वत्र 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति चङ्परे णौ यदङ्गं तदभ्यासस्य लघुनि परेऽनग्लोपे सन्वत्कार्यातिदेशादित्वं सिद्धम्, सन्वत्कार्यं चेत्वमेव, 'सन्यतः' इति सनि परेऽभ्यासाकारस्येत्वविधानात्किं णौ कृतस्य स्थानिवत्त्वेन येन 'ओः पुयण्ज्य' इति वक्तव्यं स्यात्, सत्यम्; अत्र सन्वद्भावेनापि सिद्ध्यति, जुहावयिषतीत्यादावप्येवं स्यात्। अबीभवत्। अबीभवत। नन्वत्र यङ इव चङोऽपि ङित्त्वेन तङ् स्यादिति चेत्, न; विकरणात्पूर्वं नियमप्रवृत्तेः। अत्र च ज्ञापकं 'वृद्भ्यः स्यसनोः' इति स्यसनोस्तङो विकल्पनम्। पूर्वं तु विकरणे तेन व्यवधानान्नानुदात्तेतोऽनन्तरस्तङस्ति। नापि शेषादिति; आत्मनेपदपरस्मैपदनियमयोरत्राप्रसङ्गादेव। आत्मनेपदपरस्मैपदयोर्लस्य तिबादय इति सामान्येन सिद्धेः किमनेन विकल्पवचनेन!

अथ कर्मणि। ण्यन्तस्य सकर्मकत्वाद्भावासम्भवः। तत्र लट्लोट्लङ्विध्यादिलिङ्क्षु यकि विकरणे णिलोपे—भाव्यते। भाव्यताम्। अभाव्यत। भाव्येत

इत्यादि। अतोऽन्येषु लुङ्व्यतिरिक्तेषु कर्तृवद्रूपम्। लुङि तु कर्तरि चङो विधानात्सिजेव। तशब्दे तु चिणि—अभावि। अभावयिषातामित्यादि। तत्र चिणि णिलोपः। अन्यत्र तु गुणायादेशौ। ध्वमि 'विभाषेटः' इति मूर्द्धन्यविकल्पः। स्यादिषु चिण्वदिट्पक्षे 'असिद्धवदत्राभात्' इति चिण्वदिटोऽसिद्धत्वाण्णिलोपे भाविष्यते। अभाविष्यत। अभाविषाताम्। भाविषीष्ट। भाविता इत्याद्यपि द्रष्टव्यम्। अत्रापि षीध्वंलुङोर्धकारस्य पूर्ववद्वा मूर्द्धन्यः। कर्मकर्त्तरि तु 'यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसङ्ख्यानम्' इति यक्चिणोर्निषेधाद्यथायोगं शप्चङोः सर्वत्र कर्तृवद्रूपम्, स्यादिषु तु कर्मवत्। वत्करणाद्भावे तु लकारे कर्मवदुदाहार्यम्। कर्त्तरि तृतीया विशेषः। णिश्रिन्थीति यक्चिणोर्निषेधः कर्मकर्त्तरीतीह तौ स्त एव।

अथ कृतः प्रदर्श्यन्ते। भव्यं भवता। अनुभव्यो घटः। 'अचो यत्' इति यत्। अयं 'कर्त्तरि कृत्' इति कर्त्तरि प्राप्तोऽपि 'कृत्याः प्राङ् ण्वुलः' इति तव्यादीनां ण्वुलः प्राचां कृत्यसंज्ञाविधानात् 'तयोरेव कृत्यक्तखलर्थाः' इति भावकर्मणोर्नियम्यते। 'भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा' इति निपातनात् कर्तर्यपि भवति। अत्र वाग्रहणं 'तयोरेव' इति सामान्यस्य बाधा मा विज्ञायीति। उदाहरणेषु गुणे 'वान्तो यि प्रत्यये' इत्यवादेशः। अत्र वान्त इति पूर्वसूत्रनिर्दिष्टाववावावुच्येते। तौ च तत्र यथासंख्यमदोदौतोरितीहापि तथैव। अनेन च विशेषविहितेन यता सामान्यविहितानां तव्यत्तव्यानीयरां न बाधः; 'वाऽसरूपोऽस्त्रियाम्' इत्यस्त्र्यधिकारविहितस्यासरूपप्रत्ययस्य पक्षे बाधकत्ववचनात्। तव्यत्तव्यतोः स्वरे षष्ठीसमासनिषेधे च विशेषः। भवितव्यम्, भवनीयम् अनीयरो रेफः 'उपोत्तमं रिति' इत्युपोत्तमस्योदात्तार्थः। अवश्यभाव्यम्—'ओरावश्यके' इत्यवश्यम्भावे द्योत्ये उवर्णान्तलक्षणो ण्यत्। वृद्धौ 'वान्तो यि' इत्यावादेशः। पूर्ववदनेनापि तव्यादीनां न बाधः। यत्तु सरूपत्वाद्बाध्यते। 'नानुबन्धकृतमसारूप्यम्' इत्युक्तम्। अवश्यमो मकारस्य 'लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि' इति समासे लोपः। समासश्च 'मयूरव्यंसकादयश्च' इति तत्पुरुषः। मयूरव्यंसकादिश्चाकृतिगणः। देवभूयं गतः। देवत्वं गत इत्यर्थः। 'भुवो भावे' इत्यनुपसर्गे सुबन्ते उपपदे भुवः क्यप्। क्त्विान्न गुणः। अनुपपदादुपसृष्टाच्चाचो यदेव। 'उपपदमतिङ्' इति तत्पुरुषो नित्यसमासः। उपपदं सुबन्तं समर्थेन नित्यं समस्यते समासोऽतिङन्तश्चेति सूत्रार्थः। इदमेवातिङ्ग्रहणमत्र सुपेत्यस्यासम्बन्धे ज्ञापकम्। तथा योगविभागेन 'कुगतिप्रादयः' इत्यत्रापि सम्बध्यत इति तत्रापि सुपेत्यस्यासम्बन्धं ज्ञापयति। तेन 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति पूर्वाचार्यपरिभाषार्थः संगृहीतो भवति। अस्य प्रयोजनमुत्तरत्र दर्शयिष्यते। 'तत्रोपपदं सप्तमीस्थम्' इति तृतीये

धात्वधिकारे सप्तम्या निर्दिष्टस्योपपदसंज्ञा। धात्वधिकारादेव तृतीये धात्वधिकार इति सिद्धे तत्र ग्रहणं योगविभागेनाधिकृतेन प्रत्ययपदेन सम्बध्यते। तेनायमर्थः—तत्रोपपदे सत्येव प्रत्यय इति। अभिभावी। अभिभूतवानित्यर्थः। अभिभावीभूत इति—ग्रहादौ णिन्यन्तो निपातितः। परिभवी। परिभावी—अत्रैव निपातनाण्णिनौ पक्षे वृद्ध्यभावः। अभावी—'अचामचित्तकर्तृकाणाम्' इति ग्रहादिपाठाण्णिनिः। अत्र प्रतिषिद्धानामित्यनुवृत्तेरयं प्रत्ययो नञ्पूर्वादेव। "नञ्"—नञ् समर्थेन सुबन्तेन समस्यत इति तत्पुरुषसमासः। 'न लोपो नञः' इति उत्तरपदे नलोपः। 'सर्वनामस्थाने चासम्बुद्धौ' इति नान्ताङ्गत्वादुपधादीर्घः सर्वत्र 'इन्हन्पूषार्यम्णां शौ', 'सौ च' इति उपधालक्षणदीर्घमात्रस्य शौ सावेवेति नियमात् अभिभाविनावित्यादौ न भवति। पदान्ते 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः। सम्बुद्धौ तु 'न ङिसम्बुद्ध्योः' इति निषेधान्न भवति। परिपूर्वत्वे 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति समासप्रतिपादिकान्तस्य नकारस्य नुम्विभक्तिस्थस्य च पूर्वपदस्थान्निमित्तादुत्तरस्य वा णत्वविधानात्पक्षे परिभाविणौ इति णकार उदाहार्यः। सम्बुद्धौ तु 'पदान्तस्य' इति निषेधः। ननु चामुं विकल्पमपवादत्वाद्बाधित्वा 'कृत्यचः' इति उपसर्गस्थान्निमित्तात्परस्य कृत्स्थस्याचः परस्य नकारस्य नित्यं विधीयमानं णत्वं स्यात्। तत्र हि 'अन्मानाऽनीयानीनिनिष्ठादेशाः' इति इनिरपि प्रतिपदं परिगण्यते। न चापवादेषु पूर्वत्रासिद्धत्वप्रसङ्गः, नैष दोषः; 'कृत्यचः' इत्यस्य 'न भाभूपूकमिगमिप्यायीवेपाम्' इति निषेधात्। स्त्रियाम् 'ऋन्नेभ्यो ङीप्' इति ङीपि—अभिभाविनीत्यादि। नपुंसके स्वमोर्लुकि नलोपः। सम्बुद्धौ तु 'वा नपुंसकानाम्' इति वा नलोपः। अभिभाविन्नित्यादि। शौ तु 'इन्हन्पूषार्यम्णां शौ' इति दीर्घे अभिभावीनीति। वासरूपविधिना सर्वत्रात्र ण्वुल्तृचावपि भवतः—अभिभावकः, अभिभवितेत्यादि। तत्र ण्वुलो 'युवोरनाकौ' इत्यकादेशः। यु वु इत्युत्सृष्टानुबन्धयोः प्रतिज्ञातानुनासिकयणोः प्रत्यययोर्ग्रहणम्। तृचि तु 'ऋदुशनस्पुरुदंसोऽनेहसां च' इति असम्बुद्धौ सावृकारान्तानामुशनसादीनां चाङ्गानां विधीयमानोऽनङि ङित्त्वादन्त्यादेशे 'अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम्' इत्यवादीनामङ्गानामुपधायाः सम्बुद्धिवर्जिते सर्वनामस्थाने दीर्घविधानाद्दीर्घे नलोपः। अत्र सावसम्बुद्धौ 'नोपधायाः' इति नान्तलक्षणो वा दीर्घः। सम्बुद्धौ द्विवचनादौ सर्वनामस्थाने सप्तम्येकवचने च 'ऋतो ङि सर्वनामस्थानयोः' इति गुणः। स च "उरण् रपरः"—ऋवर्णस्य स्थानेऽण् प्रसज्यमान एव रपर इति रपरः। तत्र सम्बुद्धौ 'रात्सस्य' इति हल्ङ्यादिना वा सुलोपे हे अभिभवितः। अन्यत्र सर्वनामस्थाने 'अप्तृन्' इति दीर्घे अभिभवितारौ इत्यादि। अभिभवितॄनित्यत्र पूर्वसवर्णदीर्घे 'तस्माच्छसो नः' इति नत्वे 'पदान्तस्य' इति णत्वनिषेधः। अभिभवित्रा। अभिभवितृभ्याम् इत्यादि।

अजादौ यण्। ङसिङसोस्तु तयोरकारस्य ऋकारस्य च 'ऋत उत्' इत्येक उकार उभयोः स्थाने भवन्नप्यसांवृकारस्थानिकोऽपीति पूर्ववद्रपरत्वे सलोपः। अभिभवितॄणाम्—'क्षुभ्नादिषु च' इति णत्वनिषेधे नृनमनतृप्नोतिग्रहणादृवर्णगतोऽपि रेफो णत्वनिमित्तमिति 'रषाभ्याम्' इति णत्वे 'नामि' इति दीर्घः। अभिभवितरि—'ऋतो ङि' इति गुणः। स्त्रियाम्—'ऋन्नेभ्यो ङीप्' इति ङीप्। अभिभवित्रीत्यादि। नपुंसके—पूर्ववत्स्वमोर्लुक्। अभिभवितृ। औङः शीभावे 'इकोऽचि विभक्तौ' इति नुम्—अभिभवितृणी। शौ 'नपुंसकस्य झलचः' इति नुमि 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घे अभिभवितॄणि। अयं नुम् वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन' इति 'ऋतो ङि' इति गुणं बाधते। तृतीयाजादौ 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति समानायामाकृतौ भाषितपुंस्कस्येगन्तस्य नपुंसकस्य पुंवद्भावविधानात् पुंसीव पक्षे नुमभावात् अभिभवित्रा, अभिभवितृणा इत्याद्युभयमपि भवति। आमि 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' इति नुटि 'नामि' इति दीर्घः। भवतीति भावः—'भवतेश्च' इति वक्तव्यात्पक्षे णः। तस्याभावे 'अज्विधिः सर्वधातुभ्यः' इत्यचि—भवः। आशितो भवत्यनेनेति आशितम्भवः ओदनः। आशितस्य भवनमाशितम्भवः 'आशिते भुवः करणभावयोः' इति खच्, उपपदसमासः। 'अरुर्द्विषदजन्तस्य मुम्' इति खिदन्ते उत्तरपदेऽजन्तस्य पूर्वस्यान्त्यादचः परो मुमागमः। आढ्यम्भविष्णुः, आढ्यम्भावुकः—अनाढ्य आढ्यो भवतीत्यर्थे आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्व्यन्तेषूपपदेषु 'कर्तरि भुवः खिष्णुच्खुकञौ' इति कर्त्तरि कारके खिष्णुच्खुकञौ इत्येतौ स्याताम्। उभयत्र खित्त्वात् पूर्ववत् मुम्। खुकञो ञित्त्वाद्वृद्धिः। सुभगादिष्वप्येवमुदाहार्यम्। भविष्णुः—'भुवश्च' इति तच्छीलतद्धर्मतत्साधुकारिष्विष्णुच्। अस्य भाषाविषयत्वं चान्द्रा इच्छन्ति। भाष्यादौ छान्दसत्वमेव स्पष्टम्। तच्छीलादौ तच्छब्देन धात्वर्थ उच्यते। तत्र फलनिरपेक्षप्रवृत्तिः तच्छीलः धात्वर्थः कुलक्रमागतो धर्मो यस्य स तद्धर्मा। धात्वर्थं सकृदपि यः साधु करोति स तत्साधुकारी। भूष्णुः—'ग्लाजिस्थश्च ग्स्नुः' इत्यत्र चकारादस्मादपि ग्स्नुः। गित्त्वान्न गुणः। अत एव 'श्र्युकः किति' इतीटो निषेधः। भावुकः—'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्' इति तच्छीलादावुकञ्। ञित्त्वाद्वृद्धिः। परिभवी—'जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च' इति तच्छीलादाविनिः। इकारो नकारपरित्राणाय। वासरूपविधिना परिपूर्वादप्युकञ् भवति। परिभावुकः इति। विभूर्नाम कश्चित्। प्रतिभूर्धनिकाधमर्णयोर्मध्यस्थः। 'भुवः संज्ञान्तरयोः' इत्यनयोर्गम्यमानयोः क्विप्। अन्तरशब्देन धनिकाधमर्णयोर्मध्यस्थ उच्यते। संज्ञान्तरे स्वभावादुपसर्गनियमः। क्वित्त्वान्न गुणः। इकारो 'वेः' इति सामान्यग्रहणार्थः। पकारस्तदविघातार्थः। वकारस्य 'वेरपृ-

क्तस्य' इति लोपः। विभुवौ इत्यादौ "ओः सुपि" इति धातोरवयवः संयोगो यस्मादुवर्णात्पूर्वो नास्ति तदन्तस्यानेकाचोऽङ्गस्याजादौ सुपि यण् इति प्राप्तस्य यणो 'न भूसुधियोः' इति निषेधादुवङ्। वर्षासु भवतीति वर्षाभूः। वर्षाभ्वौ। वर्षाभ्वः। पूर्ववत् क्विप्। 'संज्ञायाम्' अस्यां सप्तम्यन्तं समस्यत इति तत्पुरुषः। 'क्विप् च' इति सोपपदनिरुपपदसाधारणे सर्वधातुविषये क्विप्युपपदसमासो वा। 'वर्षाभ्वश्च' इत्यजादौ यण्। चशब्दो दृन्कारपुनःपूर्वस्य च भुवो यणर्थः। दृन्भूशब्दो 'दृन्भू' इति निपातितः। अत्र तु भूशब्दस्यानर्थकत्वात् 'नभूसुधियोः' इत्यत्र ग्रहणाभावः सिद्ध इति कैयटे। तेन 'ओः सुपि' इत्येव यण् सिद्ध इत्यर्थः। 'दृम्भू' इति मान्तमेके पठन्ति। अनुस्मृतौ कारशब्दस्य स्थाने करशब्दः प्रयुज्यते—'दृन्पुनःकरवर्षासु भुवः' इति। कारशब्दस्यैकदेशविकृतस्यानन्यत्वात् सिद्धमिति तद्विवृतौ। अत्र क्षीरस्वामि-सुभूतिचन्द्र[1]प्रभृतयो भेके वर्षाभूशब्दं ह्रस्वान्तं प्रतिपद्यन्ते। अत एव स्त्रियां 'शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलिः' इति 'भुवश्च' इति उकारान्तलक्षणं ङीषं पठन्ति[2]। 'वर्षाभ्वश्च' इति अत्र वर्षासु भवतीति वर्षा वा भवते प्राप्नोतीति वर्षाभूरोषधिविशेष इत्यर्थविशेषमभिदधानस्य कैयटस्याप्ययमेवाशयो लक्ष्यते। तथा भागुरिरपि ह्रस्वान्तं मन्यते। यथाह च—

भार्या भेकस्य वर्षाभ्वी, भृङ्गी स्याद्भ्रमद्गुरस्य तु।
शिली गण्डूपदस्यापि कच्छपस्य डुलिः स्मृता॥ इति।

यादवप्रकाशस्तु भेकेऽप्यूकारान्तमाह—'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे षणि[3]' इति। तथा सुबोधनीकारोऽपि—"'भुवश्च' इत्युदन्तान् ङीष्विधानात् वर्षाभ्वीति पाठो न युक्तः। युक्तस्तु पाठो 'वर्षाभूः कमठी डुलिः'" इति। एवमेवोक्तं प्रक्रियारत्नेऽपि। वर्षासु प्रावृषि भवतीति वर्षाभूर्मण्डूकः पुंस्त्री। तेनास्त्र्याख्यत्वान्न ह्रस्वादय इति नदीसंज्ञायामाख्याग्रहणं नियतस्त्रीलिङ्गपरिग्रहार्थमिति तन्मतम्। कैयटेऽप्येवमुक्तम्—'आख्याग्रहणसामर्थ्यान्नियम आश्रीयते। स्त्रियमेव यावाचक्षाते न तु लिङ्गान्तरयुक्तमपीत्यर्थः' इति। उक्तं च पुनस्तत्र "दृष्वशनिप्रभृतीनामुभयलिङ्गानां पट्वादीनां च गुणवचनत्वात्सर्वलिङ्गानां स्त्रीविषयत्वाभावात् स्त्रियां वृत्तौ 'ङिति ह्रस्वश्च' इति नदीसंज्ञा न प्राप्नोति। एवं तर्हि 'ङिति ह्रस्वश्च' इत्यत्रैवंविधो नियमो नाश्रीयते, केवलस्य स्त्रीशब्दस्यानुवर्त्तनादित्यदोषः[4]" इति। हरदत्तस्तु 'पदान्तरमनपेक्ष्य स्त्रीवचनानां ग्रहणार्थमाख्या-

---

१. बहुशोऽन्विष्टापि सुभूतिचन्द्रकृतिर्नाद्यावधि सम्प्राप्ता। २. अ० को० १।९।२४ (क्षी० स्वा० टी०)। ३. वैज० १ : २।६।७७। अत्र 'षण्' इति प्राचां पुंल्लिङ्गस्य संज्ञा। द्र०—'वर्षाभ्वश्च' सूत्रे प्रौ० म०। ४. म० भा० प्र० १।४।३ (पा० सू०)।

ग्रहणं न तु नियतस्त्रीवचनानाम्' इत्याह। यदाह–'पदान्तरमनपेक्ष्य स्वयमेव यौ स्त्रियमाचक्षाते इत्याश्रीयते। इष्वशनिप्रभृतीनामुभयलिङ्गानां शब्दार्थं एव स्त्रीत्वमिति संज्ञा भवति। एवं पटुशब्दप्रभृतीनां गुणवचनानामपि शब्दार्थं एव स्त्रीत्वम्। तथा च पटुरानीयतामित्युक्ते स्त्रियमप्यानीय कृती भवति' इति। पुनश्चैवमाह–"नियतस्त्रीवचनानां ग्रहणार्थमाख्याग्रहणमिति वदतां मते आङ्पूर्वाद्ध्यायतेः क्विपि संप्रसारणे आध्यै ब्राह्मण्यै अत्रापि भाष्यकारोदाहृते न स्यात्, तस्मात्पूर्वं एव प्रकार आश्रयणीयः। कथं तर्हि प्रत्युदाहरणं ग्रामण्ये स्त्रियै, खलप्वे स्त्रियै इति? उच्यते, क्रियाशब्दत्वेऽप्यनयोः पुंसि मुख्या वृत्तिः, पुंसामेव खल्विदमुचितं यद् ग्रामनयनं नाम। एवं खलपवनमपि। आध्यानं तु स्त्रीपुंससाधारणमिति विशेषः[1]" इति। न्यासोद्द्योतादौ[2] अप्येवमुक्तम्। वृत्तिकारस्याप्यवमेव पक्षोऽभिमतः। यदाह—'आख्याग्रहणं शब्दार्थे स्त्रीत्वे यथा स्यात्पदान्तरद्योत्ये मा भूत्[3]' इति। प्रक्रियारत्ने त्वाधीशब्दो नित्यस्त्रीवचन इति नदीसंज्ञासिद्धिरुक्ता। एवं च हरदत्तादिमते वर्षाभूशब्दस्य भेक्यभिधानेऽपि नदीसंज्ञया भाव्यमिति तन्निबन्धनानि ह्रस्वादीनि भवन्ति। कैयट-सुभूतिचन्द्रादीनां मते नदीसंज्ञायां न विवादः, ऊकारान्तस्यौषधिविशेषवाचित्वेन नियतस्त्रीविषयत्वात्। एवं च प्रक्रियारत्नेनोक्तो नदीसंज्ञाभावः 'त्यजेदेकं कुलस्यार्थे' इति न्यायेन त्याज्यः। षष्ठीबहुवचने तु परत्वान्नित्यत्वाच्च नुटि कृते तस्य विभक्तिभक्तत्वात् 'एकाजुत्तरपदे णः' इति नित्यं णत्वम्। एकाज् उत्तरपदं यस्य तस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य पूर्वपदस्थान्निमित्तस्य नित्यं णत्वमिति सूत्रार्थः॥

विभुः, प्रभुः, सम्भुः—'विप्रसम्भ्यो ड्वसंज्ञायाम्' इति व्यादिभ्यः परस्माद्भुवो डुप्रत्ययः। डित्त्वाट्टिलोपः। शम्भुः—'मितद्र्वादिभ्य उपसंख्यानम्'। इति डुः। सुखरूपो भवतीत्यर्थः। यद्वा—अन्तर्भावितण्यर्थो भवतिः, तेन सर्वेषां सुखं भावयतीत्यर्थः। यद्वा—शमेर्ण्यन्ताद् 'अन्येभ्योऽपि दृश्यते' इति विचि शं शमयिता रोगाणां भवतीति शम्भुः। श्रूयते च—'भिषक्तमं त्वा भिषजां शृणोमि[4]', 'त्वादत्तेभी रुद्र शन्तमेभिः शतं हि मा त्र्यशीय भेषजीभिः[5]', 'अध्यवोचदधि वक्ता प्रथमो दैव्यो भिषक्[6]' इति। शम्भवत्यस्मादिति व्युत्पत्तिरपादाने डुप्रत्ययाभावाच्चिन्त्या। विभ्वी। प्रभ्वी। सम्भ्वी—'भुवश्च' इति भवतेरुदन्तस्यानुपसर्जनस्य स्त्रियां ङीष्। उपसर्जनत्वे त्वतिविभुर्ब्राह्मणीति ङीष् न भवति। भविष्यतीति भावी—'भुवश्च' इत्यौणादिक इनिर्णिद्वच्च। तेन वृद्धिः। अयं च 'भविष्यति

---

१. प० म० १।४।३ (पा० सू०)। २. न्या० १।४।३ (पा० सू०); न्यासोद्द्योतनाम्नी टीका मल्लिनाथसूरिविरचिता—इत्यैतिह्यविदः। ३. काशि० १।४।३ (पा० सू०)। ४. ऋ० सं० २।३३।४। ५. ऋ० सं० २।३३।२। ६. तै० सं० ४।५।१।

गम्यादयः' इति गम्यादिषु पाठाद् भविष्यत्कालविषयः। भावः—'श्रिणीभुवोऽनुपसर्गे' इति अकर्त्तरि कारके भावे च घञ्। उपसृष्टात्तु 'ऋदोरप्' इत्यप्—प्रभव इति। ऋदिति दकारो मुखसुखार्थं इत्योरित्युकार ऊकारमपि गृह्णाति। प्रभाव इत्यत्र तु प्रकृष्टो भावः प्रभाव इति प्रत्ययार्थ एव प्रशब्देन विशेष्यते, न प्रकृत्यर्थ इति क्रियायोगाभावादनुपसर्गत्वाद् घञ्सिद्धिः। विभावानुभावशब्दौ विभावयत्यनुभावयतीति ण्यन्तादचि व्युत्पाद्यौ। परिभवः, परिभावः, परीभावः 'परौ भुवोऽवज्ञाने' इति पक्षे घञपौ। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति घञन्त उत्तरपदे पूर्वोपसर्गस्य वा दीर्घोऽमनुष्ये विषये। भूतिः—'स्त्रियां क्तिन्' इत्यकर्त्तरि च कारके भावे च सर्वधातुभ्यः क्तिन्। 'मन्त्रे वृष' इत्यादिना भुवः क्तिन्वचनमस्य नित्त्वात् 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वे प्राप्ते उदात्तार्थम्, न तु भाषायां प्रयोगनिवृत्त्यर्थम्। प्रयुज्यते च भाष्ये—'सर्वं इमे स्वभूत्यर्थे प्रवर्त्तन्ते' इति। भूः—'सम्पदादिभ्यः क्विब्वा वक्तव्यः' इति क्विप्। क्विपः सर्वस्य लोपः। भवत्यस्मिन्ननेनेति वा भावः—'पुंसि संज्ञायां घः प्रायेण' इति पुंल्लिङ्गयोः करणाधिकरणयोर्घः। प्रायग्रहणं क्वचिदसंज्ञायामपि यथा स्यादिति। अनाढ्येनानायासेनाढ्येन भूयते ईषदाढ्यम्भवं भवता, स्वाढ्यम्भवं भवता। अनाढ्येनाढ्येन भूयते दुराढ्यम्भवं भवता। 'कर्तृकर्मणोश्च भूकृञोः'—च्व्यर्थविषयकर्तृकर्मवचनयोश्च शब्दादीषदादिषु चोपपदेषु भूकृञोः खलिति खल्। तत्र तु भुवोऽकर्मकत्वात्कर्तरि उपपदे भावे प्रत्ययः। करोतिस्तु कर्मणि, स्वभावात्। कृच्छ्रग्रहणं दुरो विशेषणम्। अकृच्छ्रग्रहणं इतरयोः। खित्त्वान्मुम्। नन्वत्र धात्वर्थमात्रं विशिंषित ईषदो गत्योरपि सुदुरोश्च कथं व्यवहितप्रयोगः। न च मुमर्थात् खित्करणादिति वाच्यम्, 'खित्यनव्ययस्य' इत्यत्र कृद्ग्रहणपरिभाषाया उपस्थानात्सगतिके खिदन्त उत्तरपदे मुमर्थत्वस्य सम्भवात्। न चैवं वाच्यं 'हृदयस्य हृल्लेख' इत्यत्राण्ग्रहणादेवाणन्तस्य ग्रहणे सिद्धे पुनर्लेखग्रहणादुत्तरपदाधिकारे प्रत्ययग्रहणपरिभाषाया अप्रवृत्तेर्ज्ञापनात्तदभावात्तद्विषया कृद्ग्रहणपरिभाषा कथं प्रवर्त्तेत इति? यतो नुम्यव्ययात्परस्य खितोऽसम्भवात्तदन्तस्य च सम्भवादनव्ययस्येति निषेधसामर्थ्यादुत्तरपदाधिकारेऽपीह प्रत्ययग्रहणपरिभाषया अवश्यमुपस्थातव्यम्। ततश्च तद्विषया कृद्ग्रहणपरिभाषाऽप्युपस्थास्यते। एवं तर्हि भाष्ये ईषदाढ्यम्भवमित्यादेरुदाहृतत्वात्प्रयोगनियमः। अवसीयादौ प्रधानभूतक्त्वाप्रत्ययार्थेनान्वीयमानस्य नञ्शब्दान्तेन समासवत् खिदन्तार्थेनान्वीयमानस्यापीषदादेः खिदन्तान्तेन समासः। कैयटे तु खित्करणादेव कर्तृकर्मणोः पूर्वप्रयोग उक्तः। तस्यायं भावः—अनव्ययस्येति निषेधसामर्थ्यादेव तदन्तत्वलाभः, न त्वस्मादेव प्रतिषेधादिहोत्तरपदाधिकारेऽपि ज्ञापितया प्रत्ययग्रहणपरिभाषया; यतस्तद्विषया कृद्ग्रहणपरिभाषा प्रवर्त्तेतेति। मुखतो-

भूत्वा, मुखतोभूय, मुखतोभावम्—'स्वाङ्गे तस्प्रत्यये कृभ्वोः' इति तस्प्रत्ययान्ते स्वाङ्ग उपपदे क्त्वाणमुलौ। तत्र 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति 'उपदंशस्तृतीयायाम्' इत्येव मादीनामुपपदानाममैव तेन चान्येन च तुल्यविधानानाममन्तेन समासविकल्पनान्मुखतोभावमित्येकं पदम्, द्वे वा पदे। क्त्वान्तेनापि तृतीयाप्रभृतीनामुपपदानां 'क्त्वा च' इति समासविकल्पनात्तत्पक्षे 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यबादेशः। अत्रानञिति नञ्सदृशमव्ययं परिगृह्यते। 'कृन्मेजन्तः' 'क्त्वातोसुन्कसुनः' इति णमुल्क्त्वान्तयोरव्ययत्वात्सुपो लुक्। स्थानिवत्त्वेन ल्यबन्तमव्ययम्। विनाभूय, विनाभूत्वा, विनाभावम्; नानाभूय, नानाभूत्वा, नानाभावम्। एकधाभूय, एकधाभूत्वा, एकधाभावम्—"नाधार्थप्रत्यये च्व्यर्थे" इति नाधार्थप्रत्ययान्ते च्व्यर्थविषये उपपदे कृभ्वोः क्त्वाणमुलाविति तौ। नानाशब्देन 'विनञ्भ्यां नानाञौ नसह' इति विहितौ नानाञावुच्यते। धाशब्देन 'संख्याया विधार्थे धा' 'अधिकरणविचाले च' इति विहितो धाप्रत्यय उच्यते। तत्र विधा नाम प्रकारः सामान्यस्य भेदको विशेषः। अधिकरणविचालोऽप्यधिकरणं द्रव्यं तस्य विचालः सङ्ख्यान्तरापादनम् एकस्यानेकीकरणमनेकस्यैकीकरणं वा। तदेकधाभूयेत्यादेरयमर्थः—अनेकं द्रव्यमेकं भूत्वेति एकस्यानेकीकरणे द्विधाभूयेत्यादौ द्रष्टव्यम्। ये तु धाप्रत्ययस्यादेशा 'एकाद्धो ध्यमुञन्यतरस्याम्', 'द्वित्र्योश्च धमुञ्', 'एधाच्च' इति विहिता ध्यमुञादयस्तेषामपि स्थानिवत्त्वेन धाग्रहणेन ग्रहणात्तदन्ते चोपपदे भुवः क्त्वाणमुलौ भवत इति ऐकध्यम्भूयेत्याद्युदाहार्यम्। 'नाधार्थे' इत्यत्रार्थग्रहणं तु ध्यमुञन्तात्स्वार्थे डदर्शनमिति यो डप्रत्ययस्तदर्थम्, स हि स्वार्थिकत्वाद्धार्थः। तथा नाञर्थमपि। अन्यथा सानुबन्धकत्वादयं नाशब्देन न गृह्येत। तूष्णीम्भूय, तूष्णीम्भूत्वा, तूष्णीम्भावम्। 'तूष्णीमि भुवः' इति क्त्वाणमुलौ। अन्वग्भूय, अन्वग्भूत्वा, अन्वग्भावम्। 'अन्वच्यानुलोम्ये' इति क्त्वाणमुलौ। आनुलोम्यमनुकूलता। नाधेत्यादियोगत्रयविषयेऽपि 'तृतीयाप्रभृतीनि' इति समासविकल्पो द्रष्टव्यः। भूतो घटः। भूतं घटेन। अत्र 'निष्ठा' इति भूते विहितस्य क्तस्य गत्यर्थादिपरत्वे 'गत्यर्थाकर्मकश्लिषशीङ्स्थासजनरुहजीर्यतिभ्यश्च' इति कर्त्तरि चकाराद्भावकर्मणोश्च विधानाद् भुवश्चाकर्मकत्वात्कर्तृभावावर्थौ, अयं च 'नपुंसके भावे क्तः' 'ल्युट् च' इति क्तल्युटौ न बाधते; यतस्तयोर्धात्वर्थस्य सिद्धता विषयः, अस्य तु धात्वर्थमात्रम् इति विषयभेदः, तेन घटस्य भूतं भवनमिति भवतः। क्तयोगे कर्त्तरि षष्ठ्या 'न लोकाव्यय' इति निषेधो न भवति, 'नपुंसके भावे क्त उपसंख्यानम्' इति तद्विधानात् शेषविज्ञानाद्वा तत्सिद्धिः। इदमेषां भूतम्—'क्तक्तवतू निष्ठा' इति ध्रौव्यादिभ्यो विहितस्य क्तस्य 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' इत्यत्राधिकरणमर्थः। चकारो यथाप्राप्तस्यानुज्ञानार्थः। तेन ध्रौव्यार्थेभ्यः कर्तृभावाधि-

करणेषु गत्यर्थेभ्यः कर्मकर्त्रधिकरणेषु कर्माविवक्षायां भावे च। प्रत्यवसानार्थेभ्यः कर्माधिकरणयोः पूर्ववदत्रापि भावे। ध्रौव्यार्था अकर्मकाः। प्रत्यवसानार्था अभ्यवहारार्थाः। 'अधिकरणवाचिनश्च' इत्यधिकरणे क्तयोगे षष्ठी। 'अधिकरणवाचिना च' इत्यस्याः समासनिषेधः। भवत्यनेनात्रेति वा भवनम्। 'करणाधिकरणयोश्च' इति सामान्यविहितो ल्युट्। अस्य कालसामान्यविषयत्वाद् भूतविषयेणाधिकरणोक्तेन न बाधः। परिभवनमित्यत्र 'कृत्यच' इति उपसर्गस्थान्निमित्तादुत्तरस्य कृत्स्थस्याच उत्तरस्य नस्य विधीयमानं णत्वं 'न भाभूपूकमिगमिप्यायीवेपाम्' इति निषिध्यते। अत्र 'ण्यन्तानां च भादीनामुपसंख्यानम्' इति वचनात्परिभावनमित्यत्रापि णत्वं न भवति।

अथोणादयः। दृन्भूः तरुः। सर्पजातिभेद इति पुरुषकारे। 'अन्धूदृन्भूजम्भूकपेलूकर्कन्धूदिधिषूः' इति दृढशब्द उपपदे कूप्रत्ययान्तो निपातितः। उपपदस्य च दृन्भावोऽस्मादेव निपातनात्। केचिदुपपदं नान्तं पठन्ति। अजादावस्य यणिति वर्षाभूप्रस्तावेऽवोचाम। क्वचिदुणादिवृत्तौ दृभी ग्रन्थ इत्यस्मात्कूप्रत्यये निपातनमित्युक्तम्। तत्राप्ययमूकारो न धातोरित्युवङोऽप्रसङ्गाद्यणेवेति न रूपभेदः। भवनं गृहम्। 'बहुलमन्यत्रापि' इति युच्। भुवनम्। 'भूसूधूभ्रस्जिभ्यश्छन्दसि' इति क्युन्, भाषायां बहुलवचनात्साधुरिति 'वा भुवनम्' इत्यत्र हरदत्तः। भूमिः 'भुवः—कित्' इति मिन्प्रत्ययः। कृष्णभूमः। उदग्भूमः। पाण्डुभूमः—'अच् प्रत्यन्ववपूर्वात्सामलोम्नः' इत्यत्राजिति योगविभागादच् समासान्तः। तथा च श्लोकवार्त्तिकम्—'कृष्णोदक्पाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः' इति[1]। भूरि। 'अदिशदिभूशुभिभ्यः क्रिन्' इति क्रिन्। भुवः[2]। अन्तरिक्षलोको महाव्याहृतिश्च। भूरञ्जिभ्यां कित्' इत्यसुन्, कित्त्वान्न गुणः[2]। अद्भुतः। 'अदि भुवो डुतच्' इति डुतच्। एवं प्रसिद्धप्रयोगा उणादिप्रत्ययान्ताः प्रदर्शिताः। अतः परमप्येवं वक्ष्यते—

सूत्रवार्तिकभाष्येषु छान्दसावेव केवलम्।
कानच्क्वसू प्रतीयेते तेन नात्र प्रपञ्चितौ॥
केचिदाहुः क्वसोः कित्त्वाज्ज्ञापकादनुमीयते।
अस्ति प्रयोगो भाषायामित्येवं प्राज्ञमानिनः॥
तथा हि छान्दसत्वेऽस्य छन्दस्युभयथेत्यतः।
सार्वधातुकसंज्ञत्वान्ङित्त्वे सिद्धेऽतिदेशतः॥
अनुनासिकलोपः स्यात् संयोगान्तेषु धातुषु।
अन्यत्रापि लिटः कित्त्वेऽसंयोगाल्लिट्किदित्यतः॥

---

१. काशि० ६।४।७९ (वा० सू०)। २-२. अयं पाठः ख. पुस्तके नास्ति।

सिद्धे कृतः ककारोऽसौ भाषायामर्थवानिति ।
तदसत्तेरुरित्यादौ यथा लिटि गुणः किति ॥
ऋच्छत्यृतामितीहापि तितीर्वति गुणो भवेत् ।
स मा भूदिति कित्त्वस्य भाष्ये फलसमर्थनात् ॥१॥

२. एध वृद्धौ । कत्थान्ता उदात्ता अनुदात्तेतः । एधते । एधसे । एधे । एधमानः । एधाञ्चक्रे । एधाम्बभूव । एधामास । 'इजादेश्च गुरुमतोऽनृच्छः' इत्यामप्रत्ययोऽमन्त्रे । 'दीर्घं च' इति दीर्घं गुरुसंज्ञम् । करोतेः 'आम्प्रत्ययवत्' इति नित्यं तङ् । एधिता । एधितासे । एधिताहे । ह एति । एधिष्यते । एधिष्यसे । एधिष्ये । एधिष्यमाणः । 'लृटः सद्वा' । एधताम् । एधस्व । एधै-'आमेतः' । 'सवाभ्यां वामौ', 'एत ऐ' । ऐधत । ऐधथाः । ऐधे । "आडजादीनाम्"-इत्यजादेरङ्गस्य लुङ्लङ्लृङ्क्षु आडागम इत्याट् टित्त्वादादौ । 'आटश्च' इति वृद्धिः । एधेत । एधेथाः । एधेय । आशिषि-एधिषीष्ट । एधिषीष्ठाः । एधिषीय । ऐधिष्ठ । ऐधिष्ठाः । ऐधिढ्वम् । ऐधिषि । 'धि च' इति सलोपः । इण्णन्तमङ्गमिति 'इणः षीध्वंलुङ्लिटां धोऽङ्गात्' इति धकारस्य मूर्धन्यः । अत्र हरदत्त एवं मूर्द्धन्यमुक्त्वा पक्षान्तरमाह—"अन्ये त्विटो विभाषाया वक्ष्यमाणत्वाद् गोबलीवर्दन्यायेन तद्व्यतिरिक्तमिणन्तमिह गृह्यते' इति वदन्त ऐधिध्वमित्यादौ ढत्वं नेच्छन्ति" । ऐधिष्यत । ऐधिष्यथाः । ऐधिष्ये । भावे लट्लोट्लङ्विध्यादिलिङ्क्षु यगुदाहार्यः । एध्यते भवता इत्यादि । लुङि 'चिणो लुक्' इति तशब्दस्य लुकि ऐधि भवता इति । शेषेषु कर्तृवद्रूपम् ।

सन्यजादित्वाद् द्वितीयस्यैकाचो द्विर्वचनेऽभ्यासकार्यम् । 'पूर्ववत्सनः' इति तङ् । एदिधिषते इत्यादि सर्वत्र प्रकृतिवत् । न च स्यादिषु चिण्वट्पक्षे वृद्धौ युकि रूपान्तरमपि स्यादित्याशङ्क्यम् । ण्यल्लोपेत्यादिनाऽतो लोपेन वृद्धेर्बाधस्योक्तत्वात् । एधयते सस्यम् । 'णिचश्च' इति कर्त्रभिप्राये तङ् । अस्मिन्नुपपदेन प्रतीयमाने 'विभाषोपपदेन प्रतीयमाने' इति परस्मैपदमपि भवति । स्वं सस्यमेधयति इति । अण्यन्ते चित्तवत्कर्तृके तु 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति परस्मैपदमेव-पुत्रमेधयतीति । विभाषोपपदादपि परत्वादिदमेव भवति, तेन स्वं पुत्रमेधयतीत्येव । 'गतिबुद्धि' इति सर्वत्र प्रयोज्यस्य कर्मत्वम् । एधयाञ्चक्रे । चकार । बभूव । आस । 'अयामन्त' इति णेरयादेशः । अत्र यदा प्रकृतेः चित्तवत्कर्तृकत्वेन नित्यं परस्मैपदं तदा कृञोऽपि 'पूर्ववत्कृञोऽनुप्रयोगस्य' इति कल्पितेन योगेन तथैव । एधयितासि । एधयितासे । एधयिष्यति । एधयिष्यते । एधयतु । एधयताम् । ऐधयत् । ऐधयत । एधयेत् । एधयेत । आशिषि एध्यात् । एधिषीष्ट । यासुट्यनिडाद्यार्धधातुकत्वाण्णिलोपः 'अकृत्सार्वधातुकयोः' इति दीर्घस्य पूर्वविप्रतिषेधेन बाधकः । ध्वमीटि गुणायादेशयोरिणः पर इटि 'विभाषेटः' इति मूर्द्धन्यविकल्पः । ऐदिधत् । ऐदिधत । 'णिश्रि' इति चङि णिलो-

पस्य 'द्विर्वचनेऽचि' इति द्विर्वचननिमित्तेऽचि योऽजादेशः स द्विर्वचने कर्त्तव्ये स्थानित्वं प्रतिपद्यत इति 'चङि' इति द्विर्वचने स्थानिवत्त्वात् 'अजादेर्द्वितीयस्य' इति धिशब्दो द्विरुच्यते। इदं च 'णौ चङि' इत्युपधाह्रस्वाद् बहिरङ्गादप्युत्तरकालं द्रष्टव्यम्। अत्र च लिङ्गमोणेॠदित्करणम्, तद्धि मा भवानोणिणदित्यत्र 'नाग्लोपि' इति चङि ह्रस्वस्य निषेधार्थम्, पूर्वं तु द्विर्वचने ह्रस्वभाविन्युपधा नेति किं निषेधेन! त्रेन मा भवानिदिधदिति भवति, 'न माङ्योगे' इत्याटो निषेधः। कर्मणि लुङ्येकवचने चिण्। अन्यत्र सिचीड्गुणायादेशाः। ऐधि। ऐधयिषाताम् इत्यादि। ध्वमि 'धि च' इति सलोपे णेर्गुणायादेशयोरिणः परत्वादिटो 'विभाषेटः' इति वा मूर्द्धन्यः। अन्येषु लेषु कर्तृवद्रूपम्। लिट्यनुप्रयोगे नित्यं तङुदाहार्यः। स्यादिषु पक्षे चिण्वदिटि 'तस्य असिद्धवदत्र' इत्यसिद्धत्वाण्णिलोपे एधिष्यत इत्यादि प्रकृतिवद्रूपाण्यपि पक्षे द्रष्टव्यानि। न च ध्वमि णेरिणः पर इडिति तल्लोपात्पूर्वं 'विभाषेटः' इति रूपभेदस्य प्रसङ्गः; नित्यत्वादन्तरङ्गत्वात्पूर्वत्रासिद्धत्वाच्च पूर्वमेव णेर्लोपात्। कर्मकर्तरि यक्चिणोर्विषये तयोः 'णिश्रन्थि' इति निषेधाच्छप्सिचोः कर्तृवद्रूपम्। स्यादिषु कर्मवत्। तत्करणात्स्वाश्रये भावे लकारे सर्वत्र कर्मवत्। कर्त्तरि तृतीया विशेषः—एध्यते त्वेनैवेत्यादि। प्रैधते। 'एत्येधत्यूठ्सु' इति वृद्धिः। एजादावेणि धातावेधतौ चावर्णान्तादुपसर्गात्परे ऊठि चावर्णात् पूर्वपरयोरेकादेशो वृद्धिरिति सूत्रार्थः। इयञ्च वृद्धिरेत्येधत्योरेङि पररूपस्यापवाद इत्यवर्णान्तोपसर्गलाभः। ऊठि त्वाद्गुणस्य। अत्र वृत्तौ 'एङ्ग्रहणमेतेरेव विशेषणं नैधतेः; अव्यभिचारात्' इति[1]। अत्र प्रदीपकृत् 'मा प्रेदिधदित्यत्र व्यभिचारासम्भवान्नैतत्सारम्' इत्याह। इदमेव त्वसारम्, ण्यन्तस्य शब्दान्तरत्वादेधतिग्रहणेनाग्रहणात्। अत एव हि 'न भाभूपूकमि' इत्यत्र 'ण्यन्तानां च भादीनामुपसंख्यानम्' इत्युक्तम्। वक्ष्यन्ति च तत्र न्यासकारादयः 'शब्दान्तरत्वात् ण्यन्तानां न प्राप्नोति तस्मादुपसंख्यानम्' इति। स्वयं च तत्रैव वक्ष्यतीति पूर्वापरविरोधं स एव प्रष्टव्यः। किं च ण्यधिकस्यापि ग्रहणे 'उपसर्गात्सुनोति' इत्यत्राभिषावयतीत्यत्र ण्यन्तेनाभेर्योगात्सुनोतिं प्रत्यनुपसर्गत्वात् षत्वं न स्यादिति चोदयित्वा प्रेषणादिरिहाभिषवे इति सुनोतिं प्रति उपसर्गत्वात् षत्वं सिद्धमिति भाष्यकारादीनां समाधानमनुपपन्नं स्यात्। अत एव हि वृद्धिविधौ हरदत्तः 'एङ्ग्रहणमेतेरेव विशेषणं न पुनरेधतेः' इति वृत्तिमुपादाय 'बाहुल्याभिप्रायेणैतदुक्तं मा प्रेदिधदित्यत्र व्यभिचारसम्भवादित्याहुः' इति मतान्तरेणाह। एधितः। एधितमनेन। इदमेषामेधितम्। 'क्तोऽधिकरणे च' इति क्तः। एधः—'असुन्' इत्यसुन्॥२॥

---

१. काशि० ६।१।८९ (पा० सू०)।

४. स्पर्द्ध सङ्घर्षे। सङ्घर्षः पराभिभवेच्छा। पराभिभवस्य धात्वर्थेनोपसंग्रहादकर्मत्वम्। उक्तञ्च—

'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया'[1]॥

इति। स्पर्द्धते। स्पर्द्धसे। स्पर्द्धे। स्पर्द्धमानः। पस्पर्द्धे। पस्पर्द्धिषे। पस्पर्द्धे। "शर्पूर्वाः खयः"—अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते अन्ये हलो निवर्तन्त इति पकारशेषः। स्पर्द्धिता। स्पर्द्धितासे। स्पर्द्धिताहे। स्पर्द्धिष्यते। स्पर्द्धिष्यसे। स्पर्द्धिष्ये। स्पर्द्धताम्। स्पर्द्धस्व। स्पर्द्धै। अस्पर्द्धत। अस्पर्द्धथाः। अस्पर्द्धे। स्पर्द्धेत। स्पर्द्धेथाः। स्पर्द्धेय। आशिषि—स्पर्द्धिषीष्ट। स्पर्द्धिषीष्ठाः। स्पर्द्धिषीय। अस्पर्द्धिष्ट। अस्पर्द्धिष्ठाः। अस्पर्द्धिषि। अस्पर्द्धिष्यत। अस्पर्द्धिष्यथाः। अस्पर्द्धिष्ये। भावे—लट्लोट्लङ्विध्यादिलिङ्क्षु यकि स्पर्द्ध्यते। स्पर्द्ध्यताम्। अस्पर्द्ध्यत। स्पर्द्ध्येत इत्यादि। लुङि तशब्दे चिणि अस्पर्द्धि। आशीरादिषु कर्तृवत्। पिस्पर्द्धिषते। पिस्पर्द्धिषाञ्चक्रे। पिस्पर्द्धिषिता इत्यादि। 'सन्यतः' इतीत्वमभ्यासस्य पूर्ववत् 'पूर्ववत्सनः' इति तङ्। आर्धधातुकेऽतो लोपः। विध्यादिलिङ्यतो लोपाभावाल्लिङः सलोपे गुणवलिलोपयोः। पिस्पर्द्धिषेत। भावे यक्चिणोर्विशेषः—पिस्पर्द्धिष्यते इत्यादि। पास्पर्द्ध्यते 'दीर्घोऽकितः' इत्यभ्यासस्याकारस्य दीर्घे यङि तल्लुकि च। पास्पर्द्धताञ्चक्रे, पास्पर्द्धिता इत्यादि। तत्रार्द्धधातुके 'यस्य हलः' इति हल उत्तरस्य यशब्दस्य लोपः। स चादेः परस्येति यकारस्य। अकारस्य अतो लोपः। भावे तादिषु यक्यपि अतोलोपयलोपयोः कर्तृवत्सर्वत्र रूपम्। पास्पर्द्ध्यते इत्यादि। लुङि तु चिणि अपास्पर्द्धि इति भवति। सन्यङोस्तास्यादिषु चिण्वदिटि न विशेषः, अतो लोपेन वृद्धेर्बाधादित्युक्तम्। यङो लुक्यदादिवच्चेति शपो लुकि "झषस्तथोर्धोऽधः"—झष उत्तरयोस्तकारथकारयोर्दधातिं वर्जयित्वा धकार इति धत्वे 'झलां जश् झशि' इति जश्त्वमान्तरतम्याद्दकारः। पास्पर्द्धि। एवं वचनान्तरेषु। पास्पर्द्धः। पास्पर्द्धति। 'अदभ्यस्तात्' इत्यद्भावः। पास्पर्त्सि। 'खरि च'—खरि च परे झलां चर इति चर्त्वम्—पास्पर्द्धः। पास्पर्द्ध। सर्वत्र हलादेः पितः सार्वधातुकस्य 'यङो वा' इति ईडुदाहार्यः। पास्पर्द्धीतीत्यादि। पास्पर्द्धाञ्चकार। पूर्ववत् 'कृञोऽनुप्रयोगस्य' इति नित्यं परस्मैपदम्। पास्पर्द्धिता। पास्पर्द्धिष्यति। पास्पर्द्धु। पास्पर्द्धात्—तातङि ङिच्च पिन्नेति स्थानिवत्त्वप्राप्तस्य पित्त्वस्य निषेधादीडभावः। पास्पर्द्धाम्। पास्पर्द्धतु। पास्पर्द्धि, पास्पर्द्धात्, पास्पर्द्धम्, पास्पर्द्धानि। सेर्ह्यादेशे 'हुझल्भ्यो हेर्धिः' इति धिभावः। हेरपित्त्ववचनादिडभावः। अपास्पर्त्। इतश्च लोपे हल्ङ्याद्लिोपे च 'झलां जशोऽन्ते' इति जश्त्वे 'वाऽवसाने' इति चर्त्वे तकारः। तदभावे अपास्पर्द्। 'रात्सस्य' इति नियमान्न संयोगान्तलोपः—अपास्पर्द्धाम्। अपास्पर्द्धुः 'सिजभ्यस्त' इति जुस्।

---

१. वा० तृ०, सा० ८८ का०।

अपास्पत्, अपास्पद्, अपास्पाः—सिपो हल्ङ्यादिलोपे पूर्ववज्जश्त्वे वा चर्त्वं च, तदभावे 'दश्च' इति सिपि परे वा रुः। 'रोरि' इति पूर्वस्य रेफस्य लोपः। 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति पूर्वस्याणो दीर्घः 'ढ्रलोप' इति ढकाररेफयोर्लोपनिमित्तयोः परयोरित्युच्यते। अपास्पर्द्धम्। अपास्पर्द्ध। अपास्पर्द्धम्। अपास्पर्द्ध्व। अपास्पर्द्धम्। पास्पर्द्धयात्। पास्पर्द्धयाताम्। पास्पर्द्धयुः। यासुटो ङित्त्वेनापित्त्वादीडभावः। आशिषि—पास्पर्द्धयात्। पास्पर्द्धयास्ताम्। असार्वधातुकत्वादीडभावः। अपास्पर्द्धीत्। अपास्पर्द्धिष्टाम्। अपास्पर्द्धिषुः। अपास्पर्द्धीः। अपास्पर्द्धिषम्। 'अस्तिसिच्' इति पितो नित्यमीट्! 'इट ईटि' इति सिचो लोपे 'सिज्लोप एकादेशे सिद्धो वक्तव्यः' इति सवर्णदीर्घः। 'वदव्रजहलन्तस्याचः' इति परस्मैपदपरे सिचि विहिता वृद्धिः 'नेटि' इति निषिद्ध्यते। अपास्पर्धिष्यद् इत्यादि। भावे सर्वत्र यङन्तवद्रूपम्। पास्पर्द्ध्यते इत्यादि। णौ स्पर्धयतीत्यादि एधयतीतिवदुदाहार्यम्। लुङ्यनजादित्वात्प्रथमस्यैकाचो द्विर्वचनम्। 'संयोगे गुरु' इति संयोगपरस्य ह्रस्वस्य गुरुसंज्ञाविधानात् 'सन्वल्लघुनि' इति इत्वम्, 'दीर्घो लघोः' इति दीर्घश्च न भवति, गुरुसंज्ञया चाकडारीयतयानवकाशया लघुसंज्ञा बाध्यते। कर्मणि—यक्चिणोर्विषये णिलोपे स्पर्ध्यते इत्यादि। प्रकृतौ भाववद्रूपाणि उदाहार्याणि। अन्यत्र स्पर्धयाञ्चक्रे इत्यादि कर्तृवत्। लुङि चङोऽभावात् चिण्। अस्पर्द्धि। द्विर्वचनादौ सिच्। अस्पर्धयिषाताम् इत्याद्युदाहार्यम्। ध्वमि 'विभाषेटः' इति मूर्द्धन्यविकल्पः। स्यादिषु चिण्वदिटि तस्य 'असिद्धवदत्र' इत्यसिद्धत्वाण्णिलोपे स्पर्धिष्यते इत्यादि प्रकृतिवद्रूपम्। कर्मकर्तरि यक्चिणोर्निषेधात् शप्चङौ स्पर्धयते इत्यादि कर्तृवन्नेयम्। अत्रापि स्यादिषु चिण्वदिट्पक्षे कर्मवत्। वत्करणात् स्वाश्रये भावे लकारे सर्वं कर्मवत्। कर्तरि तृतीया विशेषः। स्पर्धनः—'अनुदात्तेतश्च हलादेः' इति तच्छीलादौ युच्। स्पर्द्धा। 'गुरोश्च हलः' इति गुरुमतो हलन्तात् स्त्रियामकारप्रत्ययः। वासरूपेण क्तिन् 'अस्त्रियाम्' इति निषेधान्न भवति। इदमेषां स्पर्द्धितम्। स्पर्द्धितमनेन। स्पर्द्धितः—'क्तोऽधिकरणे च' इति कर्तृभावाधिकरणेषु क्तः। स्पर्धालुप्रयोगश्चिन्त्यः॥ ३॥

५. गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च। आत्मयापनं तत्साधनं च प्रतिष्ठा। लब्धुमिच्छा लिप्सा। एकत्र स्थापनं सन्दर्भो वा ग्रन्थः। तत्राद्येऽकर्मकः, इतरयोः सकर्मकः, गाधते। गाधसे। गाधे। गाधमानः। जगाधे। जगाधिषे। जगाधे। गाधिता। गाधितासे। गाधिताहे। गाधिष्यते। गाधिष्यमाणः। गाधताम्। गाधस्व। गाधै। अगाधत। अगाधथाः। अगाधे। गाधेत। गाधेथाः। गाधेय। आशिषि—गाधिषीष्ट। अगाधिष्ट। अगाधिष्ठाः। अगाधिषि। अगाधिष्यत इत्यादि। भावकर्मकर्तृषु लट्लोट्लङ्विध्यादिलिङ्क्षु यकि—गाध्यते। गाध्यसे। गाध्यताम्। अगाध्यत। गाध्येत इत्यादि। अन्येषु लेषु कर्तृवत्। लुङ्येकवचने तु चिणि अगाधि। लिप्सायामप्यार्थिकेन न्याये-

नेष्यमाणप्रधानत्वात्तस्य च कर्मस्थत्वात्सनन्तवत्कर्मकर्तृत्वोपपत्तिः—जिगाधिषते। जिगाधिषाञ्चक्रे। जिगाधिषिता। जिगाधिषिष्यते। जिगाधिषाताम्। अजिगाधिषत। जिगाधिषेत। आशिषि—जिगाधिषिषीष्ट। अजिगाधिषिष्ट। अजिगाधिषिष्यत इत्यादि। सर्वत्राभ्यासकार्यम्। आर्धधातुकेऽतो लोपः। भावकर्मणोर्यक्चिण्विषये जिगाधिष्यते। अजिगाधिषीत्यादि। कर्मकर्त्तरि यक्चिणोर्निषेधात् कर्तृवदेव। जागाध्यते जागाधाञ्चक्रे। जागाधिता। जागाधिष्यते। जागाध्यताम्। अजागाध्यत। जागाध्येत। आशिषि—जागाधिषीष्ट। अजागाधिष्ट। अजागाधिष्यत। सर्वत्राभ्यासस्य 'दीर्घोऽकितः', आर्धधातुके अतो लोपः, 'यस्य हलः' इति यलोपाल्लोपौ। भावादिषु यक्यल्लोप-यलोपयोः सर्वत्र कर्तृवद्रूपम्। लुङ्येकवचने तु अजागाधीति चिण्विशेषः। सन्यङोश्चिण्वदिट्स्यतोल्लोपेन वृद्धिबाधाद् न विशेष इत्युक्तम्। यङ्लुकि 'झष-स्तथोर्धोऽधः' 'झलां जश् झशि' जागाद्धि इत्यादि। सिपि "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति—धातोरवयवस्य झषन्तस्यैकाचो बशः स्थाने भषादेशः सकारादौ प्रत्यये ध्वे च परे पदान्ते च विषये इत्यान्तरतम्यात् गकारस्य घकारे 'खरि च' इति धकारस्य तकारे जाघात्सि इति। जागाधाञ्चकार—'पूर्ववत्कृञः' इति परस्मैपदम्। जागाधिता। जागाधिष्यति। जागाद्धु, जागाद्धात्। जागाधानि। अजा-घात्। अजाघाद्—हल्ङ्यादिलोपे पदान्ते चेति बशो भषादेशे जश्त्वे च चर्त्वम्। सिपि तु 'दश्च' इति वा रुत्वे अजाघाः इत्यपि। जागाध्यात्। जागाध्याताम्। आशिषि—जागाध्यात्। जागाध्यास्ताम्। अजागाधीत्। अजागाधिष्टाम्। अजागाधि-ष्यत् इत्यादि। सर्वत्र यङ्लुगन्तात्परस्य हलादेः पितः सार्वधातुकस्य पक्षे ईडुदा-हार्यः। लुङि तु 'अस्तिसिचः' इति नित्यः। भावादौ यङन्तवत्। गाधयति। गाधयाञ्चकार। गाधयिता। गाधयिष्यति। गाधयतु। अगाधयत्। गाधयेत्। आशिष्य-निडार्धधातुकत्वाण्णिलोपे—गाध्यात्। अजगाधत्। अत्रास्य ॠदित्त्वात् 'नाग्लो-पिशास्वृदिताम्' इति णौ चङि ह्रस्वे निषिद्धेऽभ्यासस्यालघुपरत्वात्सन्वदित्त्वलघु-दीर्घत्वे न भवतः। गाधयते इत्याद्युदाहार्यम्, प्रतिष्ठायाम् 'अणावकर्मकात्' इति चित्तवत्कर्त्तृकत्वे परस्मैपदमेव। भावकर्मणोर्यक्चिणोर्विषये णिलोपे गाधतिवद् रूपम्। स्यादिषु तु ण्यन्ते कर्तवत्। चिण्वदिटि तु णिलोपे गाधितेत्यादि प्रकृ-तिवदेव। कर्मकर्तरि यक्चिणोर्निषेधात्सर्वेसु लकारेषु कर्तृवत्। गाधनः—अनु-दात्तेत इति युच्। गाधा—'गुरोश्च हलः' इत्याकारः। प्रतिष्ठायां स्पर्द्धिवत्। भावकर्त्रधिकरणेषु क्त उदाहार्यः, इतरयोस्तु 'तयोरेव' नियमात्कर्मणि ॥ ५ ॥

६. बाधृ लोडने। लोडनं प्रतिघातः। गाधिवत्। बाहुः—'अर्जिदृशिकम्य-मिपसिबाधामृजिपशितुग्धुग्दीर्घहकारश्च' इति कुप्रत्यये-धातोर्हकारः—भद्रबाहुः चतुष्पाद्विशेषः। 'बाह्वन्तात्संज्ञायाम्' इति स्त्रियामूङ् प्रत्ययः। सुबाहुर्नाम कश्चित्, तस्यापत्यं सौबाहविः—'बाह्वादिभ्यश्च' इति षष्ठ्यन्तादपत्य इञ्।

"ओर्गुणः"—उवर्णान्तस्य भस्याङ्गस्य तद्धिते गुण इति गुणेऽवादेशः। यद्यपि बाह्वादिषु केवलो बाहुशब्दः पठ्यते, 'समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधः' इति तदन्तविधिश्च प्रतिषिध्यते; तथापि केवलस्यापत्येनायोगात्तदन्तत्वलाभः, संज्ञात्वेन विनियुक्ताद् बाहोस्तु प्रत्ययो नेष्यते। यदाह—

'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः।
शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु[1]' ॥ इति।

'राजश्वशुराद्यत्' इत्यत्र भाष्यादौ चोक्तं 'संज्ञायां श्वशुराद्यन्न' इति। उभाबाहु, उभयाबाहु प्रहरति। 'द्विदण्ड्यादिभ्यश्च' इतीच् समासान्तः। तस्य च द्विदण्ड्यादिष्वेवं पाठाल्लोपः, प्रत्ययलक्षणेन तदन्तत्वात् तिष्ठद्गुप्रभृतिष्विचः पाठात्तदन्तस्याव्ययीभावत्वविधानात् 'अव्ययीभावश्च' इत्यव्ययत्वे सुपो लुक्। उभयाबाहुः इत्यत्र 'उभादुदात्तो नित्यम्' इत्यत्रास्वरितत्वादेव वाग्रहणाननुवृत्ते-र्नित्यमयचि सिद्धे नित्यग्रहणं योगभेदेन वृत्तौ नित्यमयजन्तस्य प्रयोगार्थमि-त्युभशब्दस्योभयादेशः। अयमर्थः सर्वादिसूत्रे कैयटादौ स्फोरितः। तथा च तत्र वार्त्तिकमपि—'उभस्य सर्वनामत्वेऽकजर्थः पाठः। अन्याभावो द्विवचनटाब्विषय-त्वाद्। उभयोन्यत्र' इति। उभाबाहु इत्यत्र तु द्विदण्ड्यादिपाठाद् उभयाभावः ॥५॥

७. नाधृ नाथृ याच्ञोपतापैश्वर्याशीःषु। उपतापो रोग इति वृत्तौ। उपघात इति तरङ्गिण्याम्। आद्यो धान्तः, अपरस्थान्तः। अस्य थान्तस्य धान्तकाण्डे पाठोऽ-र्थसाम्यात्। उभावपि दन्त्यादी। सर्वं गाधतिवत्। द्वितीयस्य तु विशेषः। 'आशिषि नाथः' इत्याशिष्येवात्मनेपदम्। कर्मणि शेषत्वेन विवक्षिते षष्ठी च। सर्पिषो नाथते इत्यादि। 'षष्ठी शेष' इत्येवात्र षष्ठीसिद्धौ वचनमिदं सर्पिषो नाथनमित्यादौ समासनिवृत्त्यर्थम्, षष्ठी श्रूयत एव न लुप्यत इति। स लोपश्च समासे। उक्तञ्च—

'साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः। प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये[2]' ॥

इति। न तर्हीदानीमिदं सम्भवति सर्पिर्नाथनमिति। भवति यदा कृद्योग-लक्षणा षष्ठी। तथा च वार्तिकम्—'प्रतिपदविधाना च षष्ठी न समस्यते', 'कृद्योगा च षष्ठी समस्यते' इति। न चैवं सति समासनिषेधस्य वैयर्थ्यमिति वाच्यम्; यतः शेषषष्ठ्याः समासे 'समासस्य' इत्यन्तोदात्तत्वेन भाव्यम्। अन्यस्यास्तु 'गतिकारकोपपदात्कृत्' गत्यादिभ्यः परं कृदन्तमुत्तरपदं प्रकृति-स्वरमित्युत्तरपदप्रकृतिस्वरेण भाव्यम्, स च लिति प्रत्यये पूर्वमुदात्तत्वम्। अनाशिषि परस्मैपदं द्रष्टव्यम्। नाथति। ननाथ। नाथिता। नाथिष्यति। नाथतु।

---

१. यद्यपीयं कारिका 'बाह्वादिभ्यश्च' इति सूत्रभाष्यप्रदीपे हरिनाम्नठ स्मृता, परं बहुधोऽन्विष्टापि साम्प्रतिके वाक्यपदीये नोपलब्धा। २. वा० तृ०, सा० १९९ का०।

अनाथत् । नाथेत् । नाथ्यात् । अनाथीत् । अनाथिष्यत् । निनाथिषते इत्यादि । यङ्-लुक्यझषन्तत्वात् 'झषस्तथोर्धोऽधः' इति धत्वाभावे 'खरि च' इति चर्त्वे नानात्ति । नानात्तः । नानात्थ इत्यादि विशेषः । अत्र मैत्रेयाभरणकारावाद्यं णोपदेशं पठन्तौ 'णो नः' इति धात्वादित्वाण्णकारस्य नकारं विधाय "उपसर्गादसमासेऽपि णोपदेशस्य" इति उपसर्गस्थान्निमितात्परस्य णोपदेशनकारस्य समासासमासयो-र्णत्वविधानात् प्रणाधते इत्यादौ णत्वं प्रयोजनमाहतुः[1] । सर्वे नादयो णोपदेशा इत्यस्य पर्युदासे 'नृतिनन्दिनर्दिनक्किनटिनाधृनाथृनृवर्जम्' इत्यत्र चैनं न पेठतुः । अत्र काश्यपः—'नाधतेर्णोपदेशत्वमयुक्तम्, गणकारवृत्तिकारादीनामनिष्टत्वाद्' इति । नृतिनन्दीत्यादिवाक्ये नाधृनृवर्जं नृत्यादीन् पठित्वैतान्सप्त वर्जयित्वेति वदन् [2]श्रीकरोऽप्यत्रैवानुकूल । तथा पर्युदासवाक्ये नर्दतिवर्जं सर्वानेतान् पठतः शाकटायनन्यासकृतोऽप्ययमेव पक्षोऽभिमतः। उभयोस्थान्तपाठस्तु धान्तप्रकरण-विरोधान्नाशक्यः । इमौ याच्ञायामकथितेप्सिततमाभ्यां द्विकर्मकौ—

'दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना[3]' ॥

इत्यत्र भिक्षेरर्थपरत्वात् । उक्तं च कैयटे—'दुह्यादीनां चार्थोपलक्षणा-योपादानात् पर्यायप्रयोगेऽपि कर्मसंज्ञा भवति' इति । अर्थाश्रया चेयं संज्ञा न दुह्यादिवत्स्वरूपाश्रयेति भिक्षिं प्रस्तुत्य वदतो हरदत्तस्यापि मतेऽत्र न विवादः । श्लोकार्थस्तु—उपयुज्यत इत्युपयोगः, पयःप्रभृति प्रधानं कर्म, तस्य निमित्तं गवादि तच्च, यच्च ब्रुविशास्योर्गुणेन प्रधानकर्मणा धर्मादिना क्रियां प्रति साधन-त्वेन गुणत्वात् लब्धगुणव्यपदेशेन सचते सम्बन्धमुपैति माणवकादि, तदुभयं कारकमपूर्वविधौ विशेषेणाविवक्षितत्वादपादानादिसंज्ञाभावे कविना क्रान्त-दर्शिना सूत्रकारेणाकथितं कर्मोक्तमिति । याचिरिहानुनयार्थः । याचनार्थस्य तु भिक्षिणैव सिद्धम् ।

अथान्येऽपि द्विकर्मकाः प्रसङ्गात् प्रदर्श्यन्ते । यदाह—

'नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च । द्विकर्मकेषु ग्रहणं कर्त्तव्यमिति निश्चयः[4]' ॥

गत्यर्थग्रहणं गत्यादिसूत्रोपात्तानामुपलक्षणम् ।

जयतेः कर्षतेर्मन्थेर्मुषेर्दण्डयतेः पचेः । तारेर्ग्राहेस्तथा मोचेस्त्यजेर्दर्पिश्च संग्रहः ॥
कारिकायां चशब्देन सुधाकरमुखैः कृतः । ग्राहेरिह ग्रहो नैव हरदत्तस्य सम्मतः ॥

यदसौ 'गतिबुद्धि' इत्यत्र "अथ कथम् 'अयाचितारं नहि देवदेवमद्रिः सुतां ग्राहयितुं शशाक[5]' इति ? स्वतन्त्राः कवयः । यद्वा सुतां प्रति न किञ्चिदुद्ग्राह-

---

१. धा०प्र०,पृ० ६ । २. 'श्रीधरः' इति तूचित पाठः । द्र०–सं० व्या० शा० इं०, पृ० ४३६ । ३. म० भा० १।४।५१ । ४. म० भा० १।४।५१ । ५. कु० स० १।५२ ।

विषयं ग्राहयितुं बोधयितुं शशाकेत्येवं व्याख्येयम्। तत्र बुद्ध्यर्थत्वात् द्विकर्मकत्वं सिद्धम्" इति समर्थयते, इयं च निर्वाहणा दिक्; प्रतिग्रहणस्य ममेदमिति बुद्धिविशेषरूपत्वात् सुतां ग्राहयितुं ममेयमिति बोधयितुं न शशाक इत्येवं व्याख्यातुमुचितत्वात्। इदानीं न किञ्चिदुद्वाहविषयमित्याद्यध्याहर्त्तव्यं भवति। तथा श्रीकराचार्यस्याप्यभिमतमुपादानार्थस्य द्विकर्मकत्वम्।

'अजिग्रहत्तं जनको धनुस्तद्येनार्दिदद्दैत्यपुरं पिनाकी।
जिज्ञासमानो बलमस्य बाह्वोर्हसन्नभाङ्क्षीद्रघुनन्दनस्तत्[1]'॥

इति भट्टिश्लोकं विवृण्वन्यदाह—"तद्धनुस्तं रामं जनकोऽजिग्रहत् बोधितवान् अनेन धनुषा त्रिपुरं दग्धमिति। ग्रहेश्च बुद्ध्यर्थत्वात् 'गतिबुद्धि' इत्यादिना रामस्य कर्मसंज्ञा, धनुषस्तु 'कर्तुरीप्सिततमम्' इति, ग्रहिर्द्विकर्मकः। उपादानार्थत्वे तु ग्रहिर्गत्यादिष्वेकोऽपि न भवतीति कथं तमिति" इति। अत एव—

'तमादौ कुलविद्यानामर्थमर्थविदां वरः। पश्चात्पार्थिवकन्यानां पाणिमग्राहयत् पिता[2]'॥

इत्यत्र अर्थमग्राहयदित्यत्र बुद्ध्यर्थत्वाद् द्विकर्मकत्वमुक्त्वा पाणिमग्राहयदित्यत्र तेनेत्यध्याहारेण व्याख्यानात् प्रकृत्युपश्लेषेण बुद्ध्युपादानयोर्ग्रहणम्। किञ्चास्य द्विकर्मकत्वे 'अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम्[3]' इत्यत्र 'ण्यन्ते कर्तुश्च कर्मणः' इति प्रयोज्याया धेनोरभिधानेन भाव्यम्; ततश्च जायया गन्धमाल्ये या धेनुः प्रतिग्राहितेति विग्रहीतव्यम्। अत्र च प्रथमार्थं वर्जयित्वा सर्वविभक्त्यर्थेषु बहुव्रीहिरित्युक्तत्वात्समासो न स्यात्; सत्यपि समासे समानाधिकरणोत्तरपदाभावात् 'स्त्रियाः पुंवत्' इति पुंवद्भावो न स्यात्। पक्षान्तरे तु गन्धमाल्ययोरेव कर्मत्वात्तयोरेव क्तेनाभिधानात् जायया प्रतिग्राहिते गन्धमाल्ये यया धेन्वेत्यूढरथादिवत् तृतीयार्थे समासः सिध्यतीति गतमदः। इषिशकी च द्विकर्मकावेव भाष्य उक्तौ। एवं च 'अयाचितारं नहि देवदेवम्' इत्यत्रापि देवः शक्यपेक्षया कर्म, सुता प्रतिग्राहापेक्षयेति न सङ्कटं किंचित्।

अथ द्विकर्मकसाधारणमिदं विचार्यते। किमेते लादयः प्रधाने कर्मणि भवन्ति, अथाप्रधाने? न चानयोर्युगपदभिधानसम्भवः भिन्नकक्षत्वात्। अत्राह—

'प्रधानकर्मण्याख्येये लदीनाहुर्द्विकर्मणाम्। अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः[4]'॥

इति। अभिधान इति शेषः। अत्र द्विकर्मणामित्यनेन 'नीवह्योर्हरतेश्च' इति चशब्दसमुच्चिताः कृषिः नयत्यादयश्च त्रय उच्यन्ते; अन्येषां विशेषस्य वक्ष्यमाणत्वात्। तथा दुह्यादीनामित्यनेन कारिकोपात्ताश्चशब्दसमुच्चितेष्वन्त्रहेतुमण्ण्य-

१. भ० का० २।४२। २. रघु० १७।३। ३. रघु० २।१। ४. म० भा० १।४।५१ (वा०)।

न्ता दण्ड्यादयश्चोच्यन्ते । ण्यन्त इत्यनेन तु गत्यादिसूत्रोपात्ताश्चशब्दसमुच्चितास्तार्यादयश्च । अत्र बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु प्राकृते वा कर्मणि प्रयोज्ये वा लादयः । यदाह—

'कथितेऽभिहिते त्वविधिस्त्वमतिर्गुणकर्मणि लादिविधिः सपरे ।
ध्रुवचेष्टितयुक्तिषु चाप्यगुणे तदनल्पमतेर्वचनं स्मरत[1]' ॥

अस्यार्थः—तत्र प्रथमः पादः प्रधानकर्मणि लादिभिरभिहिते गुणकर्मणि षष्ठीत्येकीयमतदूषणपर इति इहानुपयोगान्न व्याख्यायते । सपरे गत्यादिसूत्रोपात्तसहिते दुह्यादौ गुणकर्मणि लादयः । गुणकर्मेति पुरुषप्रवृत्तेः पयःप्रभृत्यर्थत्वात् दुह्यादावप्रधानं गवाद्युच्यते । ण्यन्ते तु शब्दतः प्रयोजकव्यापारस्य प्राधान्यं प्रयोज्यव्यापारस्य त्वप्राधान्यमिति तदाप्यं धर्माद्युच्यते । ध्रुवयुक्तयोऽकर्मकाः, चेष्टितयुक्तयो गत्यर्थाः, एष्वगुणेऽप्रयोज्ये, तदेतदनल्पमतेर्मेधाविन आचार्यस्य वचनमिति । अत्र स्मरतेत्यनेनागमस्याविच्छेदं दर्शयति । एवं चात्रापि याचनस्य धनाद्यर्थत्वात्तस्यैव प्राधान्यादन्यद्राजादिकमप्रधानमिति तत्रैव लादयो भवन्तीति । नाथ्यते राजा धनं नाथ्यः नाथितः सुनाथ इत्यादि भवति । नाथिता धनस्य राज्ञ इत्यत्र च द्वितीयावत्कर्मणि षष्ठ्युभयत्र भवति । 'गुणकर्मण्युभयथा गोणिकापुत्रः' इति भाष्ये उक्तत्वाद् द्वितीयापि द्रष्टव्या—नाथिता धनस्य राजानमिति । भाष्ये नयतेरुदाहरणं प्रदर्शनमात्रम् । स्पष्टं चैतत् पदमञ्जर्यादिषु । नाथितव्यो राजा धनं देवदत्तेन इत्यत्र कर्तृकर्मणोः प्राप्ता कृद्योगलक्षणा षष्ठी 'कृत्यानां कर्त्तरि वा' इत्यत्र कृत्यानामिति योगं विभज्य उभयप्राप्तौ नेति चानुवर्त्त्य उभयप्राप्तौ कृत्ये षष्ठ्यभावस्य भाष्ये प्रतिपादितत्वान्न भवति । स्पष्टं चैवत् कैयटादौ । यत्तु 'कृत्यानाम्' इत्यत्र 'उभयप्राप्तौ कृत्ये षष्ठीप्रतिषेधः' इति वृत्तिमुपादाय 'प्रतिषेधोऽयं कर्त्तरि षष्ठ्याः; कर्मणि षष्ठ्यास्तु प्रधानस्य कर्मणः कृत्येनाभिधानादन्यस्याप्राधान्याद-प्रसङ्ग' इति न्यासेऽर्थसतत्त्वमुक्तम् । तद् द्वितीयावदप्रधाने षष्ठ्यनिवार्य्येति यत्किञ्चित् । 'कर्त्तरि वा' इति विधीयमानषष्ठीविकल्प उभयप्राप्तिव्यतिरिक्तकृत्यविषयः—नाथितव्यं सर्पिर्देवदत्तेन देवदत्तस्येति वा ॥ ६-७ ॥

८. दध धारणे । दान इति केचित्पठन्ति, 'दद दाने' इत्यत्र धारणे इति; तदयुक्तम् । .

'तद्वेषोऽसदृशोऽन्याभिस्स्त्रीभिर्मधुरताभृतः । दधते सुलभां शोभां तदीया विभ्रमा इव[2]' ॥
व्रज विटपममुं ददस्व तस्यै । पिबति च पाति च याऽसकौ रहस्त्वाम् ॥
'दाददो दुद्दुद्दादी दादादो दूददीददोः । दुद्दादं दददे दुद्दे ददादददोऽददः[3]' ॥

इत्यादौ दधो धारणार्थत्वस्यान्यस्य दानार्थत्वस्य च व्यवस्थितत्वात् ।

---

१. म०भा० १।४।५१। (वा०)। २. काव्यप्र० १०।९९२ । ३. शिशु० १९।११४ ।

दधते । दधेते । दधन्ते । दधसे । दधे । दधावहे । दधामहे । दधमानः । देधे । देधाते । देधिरे । देधिषे । देधे । देधिवहे । "अत एकहल्मध्येऽनादेशादेर्लिटि" किति लिटि परत्रावस्थिते यस्यादेरादेशो नास्ति तस्यासहाययोर्हलोर्मध्यगतस्याकारस्यैकारोऽभ्यासस्य च लोप इत्येत्वाभ्यासलोपौ। लोपोऽयं शिदिति सर्वादेशः। नन्वभ्यासादेर्दकारस्य जश्त्वेन प्रकृतिजशां प्रकृतिजश इति दत्वे कथमनादेशादित्वम्। न च पूर्वत्रासिद्धत्वम्; 'तॄफलभजत्रपश्च' इति फलभजिग्रहणात्। असिद्धत्वे ह्यनादेशादित्वेनैवैत्वाभ्यासलोपयोः सिद्धत्वान्न तत्कुर्यात्। एवं तर्हि 'न शसदद-वादिगुणानाम्' इति शसिददथोरेत्वाभ्यासलोपनिषेधाद्रूपाभेदे आदेशादित्वं नाश्रयिष्यते। तथा च वार्त्तिकम्—'प्रथमतृतीयादीनामादेशादित्वादेत्वाभाव इति चेच्छसिददिप्रतिषेधो ज्ञापको रूपाभेदे एत्वविज्ञानस्य' इति। दधिता। दधितासे। दधिताहे। दधिष्यते। दधिष्यमाणः। दधताम्। दधस्व। दधै। अदधत। अदधेताम्। अदधन्त। अदधथाः। अदधे। अदधावहि। दधेत। दधेयाताम्। दधेथाः। दधेय। आशिषि—दधिषीष्ट। अदधिष्ट। अदधिषाताम्। अदधिष्ठाः। अदधिषि। अदधिष्यत इत्यादि। कर्मकर्त्रोर्यक्चिण्विषये—दध्यते। दध्यताम्। अदध्यत। दध्येत। अदाधि। इत्यादि। अन्यत्र कर्तृवत्। दिदधिषते। दिदधिषाञ्चक्रे। दिदधिषिता। दिदधिषिष्यते। दिदधिषताम्। अदिदधिषत। दिदधिषेत। आशिषि—दिदधिषिषीष्ट। अदिदधिषिष्ट। अदिदधिषिष्यत इत्यादि। कर्मणि यक्चिण्विषये दिदधिष्यते इत्यादि। अन्यत्र कर्तृवत्। कर्मकर्त्तरि तु यक्चिणोर्निषेधात्सर्वत्र कर्तृवत्। अतो लोप आर्द्धधातुके दादध्यते। दादधाञ्चक्रे। दादधिता। दादधिष्यते। दादध्यताम्। अदादध्यत। दादध्येत। आशिषि—दादधिषीष्ट। अदादधिष्ट। अदादधिष्यत। 'दीर्घोऽकितः' इत्यभ्यासदीर्घः। सर्वत्रार्धधातुके 'यस्य हलः', 'अतो लोपः' इति यलोपाल्लोपौ। कर्मकर्त्रोर्यङन्तेऽपि विशेषो नेति गाधतावेवोपपादितम्। दादद्धि। दादद्धः। दाधत्सि। दादध्मि। 'दधस्तथोश्च' इत्यत्र कृतद्विर्वचनस्य दधातेर्ग्रहणात्। तकारथकारादौ चकारात् सकारादौ ध्वे पदान्ते च बशो विधीयमानो भष्भावोऽस्य न भवतीति 'एकाचः' इति सादौ ध्वे पदान्ते च विधीयमानः सामान्य एव भवति। दादधाञ्चकार। दादधिता। दादधिष्यति। दादद्धु, दादद्धात्। दादद्धि। दादधानि। अदाधत्, अदाधद्। अदादद्धाम्। अदादधुः। अदाधाः, अदाधत्, अदाधद्। अदादद्ध। अदादधम्। अदादध्व। अत्र 'हल्ङ्याब्भ्यः' इति तिप्सिपोर्लोपे पदान्तत्वात् 'एकाचः' इति भष्भावे जश्त्वे वा चर्त्वम्। सिपि तु 'दश्च' इति वा रुत्वं च। झशादौ 'झलां जश् झशि' इति धकारस्य दकारः। दादध्यात्। दादध्याताम्। आशिषि—दादध्यात्। दादध्यास्ताम् इत्यादि। अदादधीत्, अदादाधीत्। "अतो हलादेर्लघोः" इति हलादेर्हलन्तस्य लघोरतः स्थाने वा वृद्धिरिडादौ परस्मैपदपरे सिचि। एवम् अदादधिष्टाम्। अदादाधिष्टाम् इत्यादि। अदादधिष्यत् इत्यादि।

सर्वत्र यङ्लुकः परस्य हलादे पितः सार्वधातुकस्य पक्ष ईडुदाहार्यः। कर्मणि यङन्तवदिति बाधतावेवोपपादितम्। दाधयति इत्यादि बाधयतिवत्। चङि तु 'णौ चङि' इति ह्रस्वत्वे सन्वदित्वदीर्घत्वे विशेषः। अदीदधत् इत्यादि। दधनः— 'अनुदात्तेत:' इति युच्॥ ८॥

९. स्कुदि आप्रवणे। आप्रवणम्, उत्प्लवनमुत्प्लुत्य गमनं वेति तरङ्गिणी। उद्धरणमिति भोजः। अत्र सकर्मकः। 'इदितो नुम् धातोः' इत्यन्तेदित्त्वान्नुमागम उपदेशिवद्वचनादुपदेशावस्थायाम्। स्कुन्दते। स्कुन्दसे। स्कुन्दे। चुस्कुन्दे। चुस्कुन्दिषे। चुस्कुन्दिवहे। 'शर्पूर्वाः' इति खयः शेषः। "कुहोश्चुः" अभ्यासकवर्गहकारयोश्चवर्ग इत्यान्तर्यात् ककारस्य चकारः। स्कुन्दिता। स्कुन्दिष्यते। स्कुन्दताम्। अस्कुन्दत। स्कुन्देत। आशिषि—स्कुन्दिषीष्ट। अस्कुन्दिष्ट। अस्कुन्दिष्यत। भावादिषु यक्चिणौ— स्कुन्द्यते। स्कुन्द्यताम्। अस्कुन्द्यत। स्कुन्द्येत। अस्कुन्दि इत्यादि। चुस्कुन्दिषते। चुस्कुन्दिषाञ्चक्रे। चुस्कुन्दिषिता। चुस्कुन्दिषिष्यते। चुस्कुन्दिषेताम्। अचुस्कुन्दिषत। चुस्कुन्दिषेत। आशिषि—चुस्कुन्दिषिषीष्ट। अचुस्कुन्दिषिष्ट। अचुस्कुन्दिषिष्यत। चोस्कुन्द्यते। चोस्कुन्दाञ्चक्रे। चोस्कुन्दिता। चोस्कुन्दिष्यते। चोस्कुन्द्यताम्। अचोस्कुन्द्यत। चोस्कुन्द्येत। चोस्कुन्दिषीष्ट। अचोस्कुन्दिष्ट। अचोस्कुन्दिष्यत। भावादौ न विशेष इति गाधतौ प्रतिपादितम्। चोस्कुन्दीति। चोस्कुन्ति। चोस्कुन्दाञ्चकारेत्यादि। लङि तिप्सिपोर्हल्ङ्यादिसंयोगान्तलोपयोः—अचोस्कुन्। भावादौ यङन्तवदित्युक्तम्। स्कुन्दयति। स्कुन्दयते इत्यादि। स्कुन्दनः—युच्। स्कुन्दा—उपदेशावस्थायां नुमो विधानाद् धातोर्गुरुमत्त्वाद् 'गुरोश्च हलः' इति स्त्रियामकारो लघूपधगुणाभावश्च॥९॥

१०. श्विदि श्वैत्ये। अकर्मकः। श्वेतस्य गुणस्यापि धातुना साध्यतया क्रमिकतया चाभिधानात् क्रियात्वम्। यदाह—

'श्वेतते: श्वेत इत्येतत् श्वेतत्वेन प्रकाश्यते। आश्रितक्रमरूपत्वादभिधानं प्रवर्त्तते'[1]॥

इति। पूर्ववन्नुमागमः—श्विन्दते। श्विन्दसे। शिश्विन्दे इत्यादि स्कुन्दिवत्॥१०॥

११. वदि अभिवादनस्तुत्योः। प्रणतिपूर्वमाशिषो वाचनमभिवादनम्। तथा च प्रयोगः—'अभिववति नाभिवादयतेऽप्याचार्यं श्वशुरं राजानम्' इति। वन्दते। ववन्दे। वन्दिता इत्यादि। पूर्ववन्नुमि कृतेऽकारस्यासहायहल्मध्यगतत्वाभावान्नैत्वाभ्यासलोपौ; 'न शसददवादिगुणानाम्' इति निषेधाद्वा। गुण इति तद्भावितोऽकार उच्यते। वन्दारुः—'शॄवन्द्योरारुः' इति तच्छीलादिकर्तृष्वारुप्रत्ययः। वन्दना—'घट्टिवन्दिविदिभ्यश्च' इति स्त्रियां युच्। वन्दा वृक्षरुहा। बाहुलकात् स्त्रियां संज्ञायामकारः। 'वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि' इति अमरः। वन्दीति स्तोतर्यावश्यकणिन्यन्तः। हठहृतमहिलायां तु 'इन्' इति सर्वधातु-

---

१. वा० तृ०, क्रि० ३ का०।

विषयेऽनन्तात् 'सर्वतोऽक्तिन्नर्थादित्येके' इति ङीषि। अयं बशादिरपभ्रंशः। यदाह राजानकः[1] संदिग्धस्योदाहरणे—

'आलिङ्गितस्तत्रभवान्संपराये जयश्रिया। आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु'[2] ॥

अत्र वन्द्यामिति किं हठहृतमहिलायामुत नमस्यामिति सन्देह इति। वन्द्रः—पूजकः। 'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्' इति रक् प्रत्ययः ॥११॥

१२. भदि कल्याणे सुखे च। अत्र कल्याणं मङ्गलं सुखमात्मगुणः। भन्दते। बभन्दे। भन्दिता इत्यादि स्कुन्दिवत्। देवदत्ताय भद्रं भूयाद्देवदत्तस्येति वा। 'ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्रेरामालाः' इति रक्यनुनासिकलोपे च भद्रशब्दो निपातितः। तद्युक्तात् 'चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः' इत्याशिषि गम्यमानायां चतुर्थीषष्ठ्यौ। अत्रायुष्यादयोऽर्थपराः। भद्राकरोति मुण्डयतीत्यर्थः। 'भद्राच्चेति वक्तव्यम्' इति परिवापणे मुण्डने कृञो योगे डाच् प्रत्ययः। अस्य 'ऊर्यादिच्विडाचश्च' इति गतित्वात् पूर्वं प्रयोगः। अत एव निपातत्वेनाव्ययत्वात्सोर्लुक् ॥१२॥

१३. मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। कान्तिगतिष्वित्येके। मोदो हर्षः। मदो गर्वः। स्वप्न आलस्यम्। चन्द्रस्तु मदि जाड्ये इत्येव पपाठ। स्तुतिगतिभ्यामन्यत्राकर्मकः। मन्दते। ममन्दे। मन्दिता इत्यादि पूर्ववत्। मन्दुरा—'मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच्' इत्युरच्। मन्दिरम्—'इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहमुचिरुचिरुधिशुषिबन्धिभ्यः किरच्' इति किरच्। मन्द्रम्—'स्फायितञ्चि' इत्यादिना रक्। मन्दारः—'अगिमदिमन्दिभ्य आरन्' इत्यारन्। मन्दरः—बाहुलकादरः। यद्वा मन्दं रातीति मन्दरः। अयमिदित्। मदी हर्षे ईदित् दिवादौ। मद हर्षग्लेपनयोर्घटादौ। मद तृप्तियोग इति चुरादौ ॥ १३ ॥

१४. स्पदि किञ्चिच्चलने। चलनं कम्पनम्। अकर्मकः। स्पन्दते। पस्पन्दे। स्पन्दिता इत्यादि पूर्ववत्। स्पन्दयति 'निगरणचलनार्थेभ्यश्च' इति ण्यन्तात्परस्मैपदमेव। निगरणमभ्यवहारः ॥ १४ ॥

१५. क्लिदि परिदेवने। परिदेवनं शोचनम्। सकर्मकः। क्लिन्दते देवदत्तम्। चिक्लिन्दे। क्लिन्दिता इत्यादि पूर्ववत्। क्लेदा—क्लेदौषधिशशाङ्कयोः' इति यादवप्रकाशः। 'श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्द्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति' इति कनिनि गुणनुमभावयोर्निपातितः। 'सर्वनामस्थाने चासम्बुद्धौ'

१. मम्मट इति शेषः। २. काव्यप्र० ७।१६४।

इति नान्तत्वादुपधाया दीर्घः। सम्बुद्धौ हल्ङ्यादिलोपे प्रत्ययलक्षणेन सुबन्तत्वात्पदत्वे 'नलोपः प्रातिपदिकान्तस्य' इति प्राप्तो नलोपो 'न ङिसम्बुद्ध्योः' इति निषिध्यते, असंज्ञायामल्लोपे क्लेद्न इत्यादि। सप्तम्येकवचने 'विभाषा ङिश्योः' इत्यल्लोपस्य विकल्पनात् क्लेद्नि, क्लेदनि इत्यपि भवति। हलादौ पदत्वान्नलोपे क्लेदभ्याम् इत्यादि। नलोपस्य पूर्वत्रासिद्धत्वात् 'सुपि च', 'अतो भिस ऐस्', 'बहुवचने झल्येत्' इत्येते विधयो न भवन्ति। स्कुन्द्यादय एतदन्ताः सप्त इदितः। अयं परस्मैपदादिष्वपि पठिष्यते। ऊदिदार्द्रीभावे दिवादौ ॥ १५ ॥

१६. मुद हर्षे। मोदते। मोदेते। मोदसे। मोदे। लघूपधत्वाद् गुणः। मुमुदे। मुमुदाते। मुमुदिषे। मुमुदिवहे। 'असंयोगाल्लिट् कित्' इति कित्त्वान्न गुणः। मोदिता। मोदिष्यते। मोदताम्। अमोदत। मोदेत। आशिषि—मोदिषीष्ट। अमोदिष्ट। अमोदिष्यत इत्यादि। भावे—मुद्यते। मुद्यताम्। अमुद्यत। मुद्येत। अमोदि। शेषं कर्तृवत्। मुमुदिषते, मुमोदिषते। "रलो व्युपधाद्धलादेः संश्च" रलन्ताद्धलादेरुकारेकारोपधात् परौ सेटौ क्त्वासनौ वा कितौ भवत इति कित्त्वपक्षे न गुणः। मुमुदिषाञ्चक्रे इत्याद्युदाहार्यम्। मोमुद्यते। मोमुदाञ्चक्रे। मोमुदिता इत्यादि। अत्रार्धधातुके यलोपाल्लोपयोर्लघूपधगुणो न भवति। 'न धातुलोप आर्धधातुके' इति धात्वेकदेशलोपनिमित्तार्धधातुकनिमित्तयोर्गुणवृद्ध्योर्निषेधाद् 'अचः परस्मिन् पूर्वविधौ' इत्यल्लोपस्य स्थानिवत्त्वाद्वा। मोमोत्ति, मोमुदीति। मोमुत्तः। मोमुदति। मोमोत्सि। मोमुदीसि। मोमोद्मि, मोमुदीमि। मोमुद्वः यङ्लुकोऽनैमित्तिकत्वात् 'न धातुलोप' इति निषेधो न भवति। ईटि तु 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति निषेधः। मोमोदाञ्चकार। मोमोदिता। मोमोदिष्यति। मोमोत्तु, मोमुत्तात्, मोमुदीतु। मोमुद्धि। हेरपित्त्वान्न गुणः। मोमुदानि। मोमुदाव। आट्यजादिपित्सार्वधातुकत्वात् 'नाभ्यस्तस्य' इति गुणनिषेधः। लङीडभावपक्षे तिप्सिपोर्हल्ङ्यादिलोपे 'वावसाने' इति पक्षे चर्त्वम्। सिपि तु 'दश्च' इति वा रुत्वमपि। अमोमोत्, अमोमोद्। अमोमुत्ताम्। अमोमोत्, अमोमोद्, अमोमोः। अमोमुदम्। ईटि अमोमुदीत्। अमोमुदीः। मोमुद्यात्। आशिषि—मोमुद्यास्ताम्। यासुटो ङित्त्वकित्त्वाभ्यान्न गुणः। अमोमोदीत्—सिज्लोपस्यासिद्धत्वाद्वा प्रत्ययलक्षणेन वा गुणः। अमोमोदिष्टाम्। हलन्तलक्षणा वृद्धिः 'नेटि' इति निषिध्यते। अमोमोदिष्यत् इत्यादि। मोदयति। मोदयाञ्चकार इत्यादि पूर्ववत्। लुङि अमूमुदत्—'दीर्घो लघोः' इति दीर्घः। मुदित्वा, मोदित्वा। उक्तः कित्त्वविकल्पः। मुदितमनेन, मोदितमनेन। 'निष्ठा' इति भूते यः क्तः स 'तयोरेव कृत्य' इत्युक्तनियमादकर्मकादस्माद् भावे। प्रमुदितमनेन, प्रमोदितमनेन। प्रमुदितः, प्रमोदितः। अत्रादिक्रियालक्षणस्य भूतत्वाश्रये 'निष्ठा' इति क्तः। स च 'आदिकर्मणि क्तः कर्त्तरि च' इति भावकर्त्रोर्द्वयोरपि भवति। प्रमुदितवान्, प्रमोदितवान्। 'उदुपधाद्भावादिकर्मणोरन्यतरस्याम्' इति सेटो निष्ठायाः पक्षे कित्त्वनिषेधाद् गुणः।

भावादिकर्मभ्यामन्यत्र—मुदितो देवदत्तः, मुदितवानित्येव। ध्रौव्यार्थत्वात्कर्त्तरि क्तः। मुदितवानित्यत्र 'अत्वसन्तस्य चाधातोः' इत्यत्वन्तस्याधातोरसन्तस्य चोपधायाः सम्बुद्धिवर्जिते सौ विहिताद्दीर्घादनन्तरं क्तवतोरुदित्त्वेन नुमि हल्ङ्यादिसंयोगान्तलोपौ। पूर्वं तु नुमि न दीर्घस्य प्रसङ्गः, उपधाभावात्। न च संयोगान्तलोपादनन्तरमुपधात्वे भूतपूर्वगत्याऽत्वन्ताश्रयस्य दीर्घस्य प्रसङ्गः, नापि नान्तत्वेन 'सर्वनामस्थाने' इति दीर्घस्य; यतस्तयोः संयोगान्तलोपोऽसिद्धः। मोदनः–युच्। मुत्—'सम्पदादिभ्यः क्विप्' इति स्त्रियां क्विप्। मुदिरः—'इषिमदि' इत्यादिना किरच्। मुद्गः—'मुदिग्रोर्गग्गौ' इति गक्। कित्त्वान्न गुणः। मुद्गेन संसृष्टं मौद्गम्। 'मुद्गादण्' इति तृतीयान्तादस्मात्संसृष्टेऽण् प्रत्ययः। मुद्रा—'स्फायितञ्चि' इत्यादिना रक्। संसर्गार्थोऽयं चुरादौ ॥ १६ ॥

१७. दद दाने। किञ्चिदुद्दिश्यापुनर्ग्रहणाय स्वीयत्यागो दानम्। ददते। ददसे। ददे। ददद। दददाते। दददिषे। दददे। 'न शसदद' इत्येत्वाभ्यासलोपनिषेधः। ददिता। ददिष्यते। ददताम्। अददत। ददेत। आशिषि–ददिषीष्ट। अददिष्ट। अददिष्यत। कर्मादौ–दद्यते। दद्यताम्। अदद्यत। दद्येत। अदादि। शेषं कर्तृवत्। दिददिषते। दादद्यते। दाददीति, दादत्ति। दादयति। दादयते। शेषं मुदिवन्नेयम् ॥ १७ ॥

१८. ष्वद स्वर्द आस्वादने। संवरणे इति क्षीरस्वामी। आस्वादनमनुभवः। अत्रायं सकर्मकः, 'स्वदन्ति देवा उभयानि हव्या' इति दर्शनात्। छान्दसं परस्मैपदम्। तथा स्वादन इति ण्यन्तेनार्थनिर्देशाच्च सकर्मकोऽयम्। यद्वक्ष्यति 'चुरादावास्वादने सकर्मकात्' इति। अस्यार्थस्तत्र प्रपञ्चयिष्यते। यदायमनेकार्था धातव इति रुचौ वर्त्तते तदाऽकर्मकः। आद्यः षोपदेशः। तदुक्तं भाष्ये—'अज्दन्त्यपराः सादयः षोपदेशाः स्मिङ्स्विदिस्वदिर्स्वञ्जिस्वपयश्च'[1] इति। प्रायेणायमाङ्पूर्वः। आस्वदते रसम्। सस्वदे। सस्वदिता इत्यादि ददिवत्। रुच्यर्थत्वे खल्वपि दधि स्वदते देवदत्ताय। 'रुच्यर्थानां प्रीयमाणः' इति तर्प्यमाणस्यैषां प्रयोगे सम्प्रदानत्वाद्देवदत्ताच्चतुर्थी। अन्यकर्तृकोऽभिलाषो रुचिरिति वृत्तिः। अत्र हरदत्तः—"योऽभिलाषस्याश्रयः प्रीयमाणः ततोऽन्यकर्तृक इत्यर्थः। कथं पुनरन्याश्रयस्याभिलाषस्यान्यः कर्ता भवति, यावता यदाश्रयव्यापारं धातुः प्राधान्येनाचष्टे स कर्त्ता। नेदं कर्तृलक्षणम्, किं तर्हि ? स्वातन्त्र्यमेव। तच्च कचिद्वास्तवं कचिद्वैवक्षिकम्। तत्र माधुर्यातिशयेन स्वविषयं देवदत्ताश्रयमभिलाषं जनयद् दधि तत्र कर्त्रिति गीयते" इति। अत्र 'सात्पदाद्योः' इतिसातिप्रत्यय पदाद्योः सकारस्य षत्वनिषेधादिणः परत्वेऽपि न षत्वम्। कर्मादौ स्वद्यते इत्यादि। सिस्वदिषते। 'स्तौतिण्योरेव षण्यभ्यासात्' इति नियमान्न षत्वम्। अभ्यस्थान्निमित्तादुत्तरस्य

---

१. म० भा० ६।१।६४ (पा० सू०)।

'आदेशप्रत्यययोः' इति षत्वं कृतषत्वे सनि यदि भवति स्तौतिण्यन्तानामेवेति सूत्रार्थः। सास्वद्यते। सास्वदीति, सास्वत्ति। स्वादयति। स्वादयते। असिस्वदत्। शेषं पूर्ववत्। ण्यन्तात्सनि 'स्तौतिण्योरेव' इति नियमात् षत्वे प्राप्ते तदपवादः 'सः स्विदिस्वदिसहीनां च' इति सकारो विधीयत इति सिस्वादयिषति इति भवति। ये त्वमुं दन्त्यादि पठन्ति, तेषामिदं सत्ववचनं कथमर्थवदिति त एव प्रष्टव्याः। स्वदते। सस्वदे इत्यादि स्वदिवत्। अज्दन्त्येति षोपदेशलक्षणं केवलदन्त्यविषयमिति दन्त्योष्ठ्यपरोऽयं न षोपदेशः। अत एव दन्त्योष्ठ्यपराः स्विद्यादयः स्वदीत्यादिना पुनः पठ्यन्ते। स्वादुः। 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' इत्युण्प्रत्ययः। स्वाद आस्वादन इत्यत्रैवाग्रे ॥ १८–१६ ॥

१६. उर्द माने क्रीडायां च। क्रीडायामकर्मकः। चकारादास्वादने च। इह मानं सुखमिति सम्मतायाम्। ऊर्दते। ऊर्दाञ्चक्रे। ऊर्दिता। ऊर्दिष्यते। ऊर्दताम्। और्दत। ऊर्देत। आशिषि—ऊर्दिषीष्ट। और्दिष्ट। और्दिष्यत। 'उपधायां च' इति धातोरुपधाभूतरेफात् पूर्वत्वादिको दीर्घः सर्वत्र। यथायोगं भावकर्मकर्तृषु ऊर्द्यते इत्यादि। ऊर्दिदिषते। 'न न्द्राः संयोगादयः' इति द्वितीयस्यैकाचो नदराणां संयोगादीनां द्विर्वचननिषेधाद्दकारादिर्द्विरुच्यते। ऊर्दयति। और्दिदत् ॥ २० ॥

२०. कुर्द खुर्द गुर्द गुद क्रीडायामेव। अत्र कैयटपुरुषकारमैत्रेयादिषु तृतीयो न पठ्यते। सम्मता-मोघविस्तर-चान्द्रेषु तु त्रयोऽपि पठ्यन्ते। गुदक्रीडा 'गुदविहारः' इति चरके। मैत्रेयकाश्यपौ गुद इत्यपि पृथक् धातुरिति। अत्रैवकारो धातूनामनेकार्थत्वे ज्ञापक इत्युक्तम्। स्फूर्जेर्दीर्घोपदेशात् 'उपधायां च' इति दीर्घ एषां न इति चन्द्रः। मैत्रेय-सम्मता-मोघविस्तरकारादयस्तु दीर्घत्वमिच्छन्ति। कूर्दते। चुकूर्दे। कूर्दिता। कूर्दिष्यते। कूर्दताम्। अकूर्दत। कूर्देत। आशिषि—कूर्दिषीष्ट। अकूर्दिष्ट। अकूर्दिष्यत। भावे—कूर्द्यते। इत्यादि। चुकूर्दिषते। चोकूर्द्यते। चोकूर्त्ति। चोकूर्दीति। चोकूर्त्तः। चोकूर्दाञ्चकार। चोकूर्दिता। इत्यादि। लङि तिप्सिपोर्हल्ङ्याब्भ्यादिलोपे, 'वाऽवसाने' इति चर्त्वविकल्पः। अचोकूर्दीत्, अचोकूर्त्, अचोकूर्द्। सिपि तु 'दश्च' इति वा रुत्वमपि—अचोकूः। चान्द्रेऽपि मते 'रो रि' इति लोपे 'ढ्रलोपे' इति दीर्घस्य विद्यमानत्वादत्र न विशेषः। कूर्दयति। अचुकूर्दत्। एवमितरयोरप्युदाहार्यम्। गुदेः—गोदते। जुगुदे। गोदिता इत्यादि। जुगुदिषते, जुगोदिषते। गुदित्वा, गोदित्वा इत्यादि मुदिवन्नेयम्। गुदम्—इगुपधलक्षणः कः। गोद इति पचाद्यजिति मैत्रेयः ॥ २१–२४ ॥

२१. षूद क्षरणे। क्षरणं निःसारणम्। अत्रायमकर्मकः। हिंसायामपि वर्त्तते, मधुसूदनः इति। अत्रायं सकर्मकः। ण्यन्तोऽयं संस्कारेऽपि वर्त्तते। 'अग्निर्हव्यं शमिता सूदयाति' इति। हव्यं हवनार्हं पशोर्हृदयादि शमिता शामित्रोऽग्निः सूदयाति संस्करोतीति। क्षरणस्वादुकरणनाशनार्थत्वम् 'अहोरात्राणि मरुतो

विलिष्टं सूदयन्तु' इत्यत्राह भट्टभास्करः—'तथा हि अहोरात्राणि मरुतश्च तव विलिष्टं विनाशितं विश्लिष्टं वा सूदयन्तु क्षारयन्तु स्वादु कुर्वन्तु वा। यद्वा—यद्विलिष्टं यागायोग्यं यद्विरूपं विशसितं तद्विनाशयन्तु' इति। चरणे तु 'तव विलिष्टं न्यूनं पूरयन्तु' इति पूरणार्थत्वं दृश्यते। सूदते। सुषूदे। सूदिता। इत्यादि। भावादौ–सूद्यते इत्यादि। सुसूदिषते —'स्तौतिण्योरेव' इति नियमान्न षत्वम्। सोसूद्यते। सोसूत्ति। सूदयति। सूदयते। असूषुदत्। 'णौ चङि' इति ह्रस्वत्वम्। सूदिता—'सूददीपदीक्षश्च' इत्यनुदात्तेल्लक्षणस्य युचो निषेधात् 'तृन्' इति सामान्यस्ताच्छीलिकस्तृन्। मधुसूदनः। 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति ल्युः। सूदयति क्षरति क्षारयति रसानिति च सूदः पङ्कः पाचकश्च। 'इगुपधज्ञाप्रीकिरः कः' इति इगुपधत्वात् कर्त्तरि कः। अयं चुरादावपि॥ २५॥

२२. ह्राद अव्यक्ते शब्दे। अव्यक्तशब्दो वाद्यादिघोषः। ह्रादते। जह्रादे। 'कुहोश्चुः' इत्यभ्यासहकारस्यान्तरतम्यात् झकारश्चुत्वम्, तस्य 'अभ्यासे चर्च' इति जश्त्वं जकारः। ह्रादिता इत्यादि। भावे–ह्राद्यते इत्यादि। अह्रादि। जिह्रादिषते। जाह्राद्यते। जाह्रादीति, जाह्रात्ति इत्यादि। ह्रादयति। ह्रादयते। अजिह्रदत्। 'अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्' इति स्मरत्यादीनां चङ्परे णौ लघुनि धात्वक्षरे पर इत्त्वापवादादत्वविधानाज्ज्ञापकादित्वविधौ 'येन नाव्यवधानं तेन व्यवहितेऽपि' इत्येकेन व्यवहिते भवतीति नियमानाश्रयणादभ्यासस्येत्वम्। दीर्घस्तु न भवति संयोगपरत्वेनालघुत्वात्। ह्रदः-पचाद्यचि पृषोदरादित्वात् ह्रस्वः। माहिकह्रदो नाम वाहीकग्रामविशेषः, तत्र भवादिः माहिकह्रदीयः—'कन्थापलदनगरग्रामह्रदोत्तरपदात्' इति शेषेऽर्थे छः। 'वाहिकग्रामेभ्यश्च' इति प्राप्तयोः ठञ्ञिठयोरपवादः। 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' इति प्रत्ययादीनां फादीनां यथासंख्यमायन्नादिविधानात् छस्येयादेशः। छविधौ निपातनाद्वा ह्रदस्य ह्रस्वः॥ २६॥

२३. ह्रादी सुखे च। चकारादव्यक्तशब्दे च। ह्रादते इत्यादि ह्रादिवत्। विशेषस्त्वीदित्वात् 'श्वीदितो निष्ठायाम्' इतीडभावो 'ह्रादो निष्ठायाम्' इत्युपधाह्रस्वश्च। तथा 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इति निष्ठातकारस्य पूर्वदकारस्य च नकारः—आह्रन्नः, आह्रन्नवान्॥ २७॥

२४. स्वाद आस्वादने। स्वादते इत्यादि स्वदिवत्। अषोपदेशत्वाद् असिस्वदद् इत्यादौ न षत्वम्। स्वदिना समानार्थोऽप्ययमाकारोपधसाम्यादिह पठितः। अज्दन्त्येति षोपदेशलक्षणे दन्त्यग्रहणेन केवलो दन्त्यो गृह्यते, न तु दन्त्योष्ठ्योऽपीत्ययमषोपदेशः स्वर्दिवत्॥ २८॥

२५. पर्द कुत्सिते शब्दे। रेफवद्दान्तसंयोगान्तेषूर्दादिष्वयं न पठितः, शब्दविशेषार्थेन ह्राद्यादिनापि साम्यात्। स्वादिस्त्वाकारवत्संयोगादित्वेन ह्राद्य-

तुरोधेन मध्ये पठितः। इह कुत्सितः शब्दो गुदरवः। तदाह केशवस्वामी 'कौत्से कर्दति पर्दते गुदरवे' इति। पर्दते। पपर्दे। पर्दिता। पर्दिष्यते। पर्दताम्। अपर्दत। पर्देत। पर्दिषीष्ट। अपर्दिष्ट। भावे पर्द्यते इत्यादि। पिपर्दिषते। पापर्द्यते। पापर्द्येते। पापर्दीति, पापर्त्ति इत्यादि। लङि तिप्सिपोर्हल्ङ्यादिलोपे वा चर्त्वम्। सिपि तु पक्षे 'दश्च' इति रुत्वं चोदाहार्यम्। पृदाकुः—'पर्देर्नित् सम्प्रसारणमल्लोपश्च' इति काकुप्रत्ययोऽल्लोपः सम्प्रसारणं च ॥ २९ ॥

२६. यती प्रयत्ने। यतते। यतेते। येते। येतिषे। एत्वाभ्यासलोपौ। यतिता। यतिष्यते। यतताम्। अयतत। यतेत। आशिषि यतिषीष्ट। अयतिष्ट। अयतिष्यत। भावे-यत्यते इत्यादि। यियतिषते। यायत्यते। यायतीति, यायत्ति इत्यादि। लङि तिप्सिपोर्हल्ङ्यादिलोपे जश्त्वे वा चर्त्वम्। सिपि तु 'दश्च' इति वा रुत्वमपि। यातयति। अयीयतत्। यत्यम्—'तकिशसिचतियतिजनीनामुपसंख्यानम्' इति भावे यत्। आयत्तः, आयत्तवान्—ईदित्त्वात् 'श्वीदितो निष्ठायाम्' इतीडभावः। यत्नः। 'यजयाचयतविच्छप्रच्छरक्षो नङ्' इति भावादौ नङ्। यतिः—'इन् सर्वधातुभ्यः' इतीन्। यत निकारोपस्कारयोरिति चुरादौ ॥ ३० ॥

२७. युतृ जुतृ भासने। योतते। युयुते। योतिता इत्यादि। भावे—युत्यते। इत्यादि। युयुतिषते—युयोतिषते। 'रलो व्युपधात्' इति वा कित्त्वम्। योयुत्यते। योयुतीति। योयोत्ति इत्यादि। ईट्पक्षे 'नाभ्यस्तस्य' इति गुणनिषेधः। योतयति। अयुयोतत्। ऋदित्वात् 'नाग्लोपि' इत्युपधाह्रस्वनिषेधः। युतित्वा, योतित्वा। सन्वत्कित्त्वविकल्पः। 'उदुपधाद्भावादिकर्मणोरन्यतरस्याम्' इति निष्ठायां मुदिवत् कित्त्वविकल्प उदाहार्यः। युतितमनेन, योतितमनेन इत्यादि ॥ जोतते इत्यादि युतिवत् ॥ ३१-३२ ॥

२८. विथृ वेथृ याचने। 'द्वितीयो दान्तः। आद्यो धान्तः' इति कौशिकः। क्षीरस्वामिना स्वयं पक्षो दूषितः। वेथते। विविथे। 'असंयोगाल्लिट् कित्' इति कित्त्वान्न गुणः। वेथिता। वेथिष्यते। वेथताम्। अवेथत। वेथेत। आशिषि—वेथिषीष्ट। अवेथिष्ट। अवेथिष्यत। विविथिषते, विवेथिषते। वेविथ्यते। वेविथीति—'नाभ्यस्तस्य' इति गुणनिषेधः। वेवेत्ति ॥ वेथयति। अविवेथत्—ऋदित्त्वात् 'नाग्लोपि' इत्युपधाह्रस्वनिषेधः। द्वितीयस्य विशेषः—विवेथे। वेथ्यते। विवेथिषते। वेवेथ्यते। वेवेथीति। वेवेत्तः। इत्यादावगुणविषय एकारश्रवणम्। अस्य ऋदित्करणमुपधाह्रस्वनिवृत्त्यर्थम्। इमौ द्विकर्मकौ। दुह्यादित्वादप्रधाने कर्मणि लादयः। षष्ठी तु द्वितीयावदुभयत्र। गुणकर्मणि तु विकल्पेन, अप्रधाने कृत्येनाभिहिते कर्तृकर्मणोर्नैव षष्ठी। सर्वमेतन्नाथतावुपपादितं तत एवावगन्तव्यम् ॥ ३३-३४ ॥

२९. श्रथि शैथिल्ये। शैथिल्य्यमश्लिष्टताऽगाढता वा। इदित्त्वं नुमर्थम्। अत एव किति नलोपाभावः। श्रन्थते। शश्रन्थे। श्रन्थिता। श्रन्थिष्यते। श्रन्थताम्।

अश्रन्थत । श्रन्थेत । आशिषि—श्रन्थिषीष्ट । अश्रन्थिष्ट । अश्रन्थिष्यत । भावे—श्रन्थ्यते इत्यादि । शिश्रन्थिषते । शाश्रन्थ्यते । शाश्रन्थीति, शाश्रन्ति । 'खरि च' इति चर्त्वम् । लङि तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे च अशाश्रन् । श्रन्थयति । श्रन्थयते । अशश्रन्थत् । श्रन्था—'गुरोश्च हलः' इत्यकारः । 'ण्यासश्रन्थो युच्' इत्यत्र लाक्षणिकत्वान्नास्य ग्रहः । प्रश्रथः । हिमश्रथः । 'अवोदैधोद्मप्रश्रथहिमश्रथाः' इति घञि नलोपवृद्ध्यभावयोर्निपातनम् । गणान्तरपठितस्य वा निपातनम् । श्रन्थ विमोचनप्रतिहर्षयोरिति क्र्यादिः । श्रन्थ ग्रन्थ सन्दर्भे इति च । इमावाधृषीयावपि । श्रथ प्रयत्न इति चुरादिः । दौर्बल्ये कथादिः । आधृषीयो मोक्षणे ॥ ३५ ॥

३० ग्रथि कौटिल्ये । कौटिल्यं शाठ्यं वक्रता वा । ग्रन्थते इत्यादि श्रन्थिवत् । अभ्यासकार्यविशेषः । केचिदिमावनिदितौ सानुषङ्गौ पठन्तः क्ङिति नलोपमिच्छन्ति । अत्र तरङ्गिणी 'इदित्त्वादनुनासिकलोपाभावात् श्रेथे ग्रेथे इत्युदाहरन् वृत्तिकारो भ्रान्तः' इति । अत्र 'वृत्तिकार' इति धातुवृत्तिकृदुच्यते । तथा सानुषङ्गपाठः काशिकावृत्तिकारस्याऽप्यनभिमतः । यतः—'श्रन्थिग्रन्थिदम्भिस्वञ्जीनाम्' इति लिटः कित्त्वविधौ श्रेथतुर्ग्रेथतुरिति परस्मैपदिनावेवोदाजहार । ग्रन्थ सन्दर्भे इति क्र्यादौ युजादौ च । ग्रन्थ बन्धन इति च युजादौ ॥ ३६ ॥

३१. कत्थ श्लाघायाम् । कत्थते । चकत्थे । कत्थिता । इत्यादि । कर्मणि—कत्थ्यते इत्यादि । चिकत्थिषते । चाकत्थ्यते । चाकत्थीति इत्यादि पूर्ववत् । विकत्थी—'वौ कषलसकत्थस्रम्भ' इति वावुपपदे तच्छीलादिषु धिनुण् । वासरूपेण युच्—विकत्थनः ॥ ३७ ॥

३२. एधादय उदात्ता अनुदात्तेतः ।

अथ तवर्गीयान्ता. परस्मैपदिनः ।

३३. अत सातत्यगमने । सातत्यगमनं सन्ततगमनम् । ग्राममतति । ग्रामायातति । अतसि । अतामि । अतत् । अतन् । अतन्ति । 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ' इति कर्मणि द्वितीयाचतुर्थ्यौ । चेष्टायामिति वचनात् मनसातति ग्राममित्यत्र द्वितीयैव । अध्वन्यर्थग्रहणात् मार्गमततीत्यादावपि द्वितीयैव । आत । आततुः । आतिथ । आतिव । 'अत आदेः' इत्यभ्यासादेर्दीर्घो लिटि । अतिता । अतिष्यति । अततु । आतत् । आटि वृद्धिः । अतेत् । आशिषि —अत्यात् । मा भवानतीत् । 'वदव्रजहलन्तस्य' इति वृद्धेः 'नेटि' इति निषेधः । आतिष्यत् । कर्मणि—अत्यते । आते । अतिता । अतिष्यते । अत्यताम् । आत्यत । अत्येत । आशिषि—अतिषीष्ट । आतिष्ट । आतिषाताम् । आतिषत । गत्यर्थानां कर्तृस्थक्रियत्वान्न कर्मकर्त्तास्ति । कर्मव्यतिहारे तङस्य नास्ति; 'न गतिहिंसार्थेभ्यः' इति निषेधात् । व्यत्यतति इत्यादि । अतितिषति । आतयति देवदत्तं ग्रामम् । 'गतिबुद्धि' इति प्रयोज्यस्य कर्मत्वम् । अतितो ग्रामम् । अतितो ग्रामः । अतितं देवदत्तेन, इदमेषामतितम् । 'गत्यर्थाकर्मक'

इति 'क्तोऽधिकरणे च' इति योगद्वयेन कर्तृकर्मभावाधिकरणेषु क्तः। अत्क आसन्नः 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' इति कन्। अतिः गन्ता पक्षिविशेषश्च— 'अज्यतिभ्यां च' इतीण्प्रत्ययः। पादाभ्यामततीति पदातिः—'पादस्य पदाज्यातिगोपहतेषु' इत्याज्यादिपूत्तरपदेषु पदादेशः। शोभनमततीति स्वातिः नक्षत्रम्। स्वाती—'सर्वतोऽक्तिन्नर्थात्' इति वा ङीष्। स्वात्यां जातो माणवकः स्वातिः— अत्र 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इति शैषिकोऽण्। यदा जातार्थे तदा तस्य 'श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्' इति लुकि 'लुक्तद्धितलुकि' इति स्त्रीप्रत्ययस्य लुक्। स्वाती इति ङीषन्तस्य ग्रहणादङीषन्तादणो लुङ् नास्ति, तेन 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्' इति यथासंख्यादिह वकारात्पूर्वमौकारे वृद्धिनिषेधे च सौवातः इति भवति। वृद्धिनिषेधस्य प्रयोजनमन्यत्र। अस्तु वेहापि 'टिड्ढाणञ्' इत्यादिना स्त्रियां ङीपि 'यस्येति च' इत्याकारलोपे सौवाती भार्या यस्येति बहुव्रीहौ 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु' इति प्राप्तस्य पुंवद्भावस्य "वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे" इति रक्तविकारादतिरिक्तार्थस्य च वृद्धिनिमित्ततद्धितान्तस्य पुंवद्भावो नेति विधीयमानो निषेध इहाणो वृद्धिनिमित्तत्वाभावान्नेति पुंवद्भावे सौवातभार्यः इति भवति। 'स्त्रियाः पुंवत्' इति सूत्रस्यार्थः—स्त्र्यर्थस्य शब्दस्य स्त्रियां वर्त्तमाने समानाधिकरणे पूरणीप्रियादिवर्जित उत्तरपदे पुंस इव रूपं भवति, स चेत् स्त्रीशब्दो भाषितपुंस्कादनूङ् भवतीति। पूरणीति पूरणप्रत्ययान्तः स्त्रीलिङ्गपञ्चम्यादिशब्द उच्यते। भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कः, इह तु शब्दस्तद्योगात्तथोक्तः, ऊङोऽभावोऽनूङ्। भाषितपुंस्कात्परोऽनूङ् यस्मिन् स्त्रीशब्दे स भाषितपुंस्कादनूङ्। निपातनात्पञ्चम्या अलुक्। अतिथिः—'ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निज्यतुजलिजिष्ठुजिष्ठजिसन्स्यनिथिन्नुल्यसासानुकः' इत्यर्त्यादिभ्यो द्वादशभ्यः कत्न्यादयो द्वादश प्रत्यया यथासंख्यमित्यतेरिथिन्। अतिथौ साधुरातिथेयः—'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति सप्तम्यन्तात्साध्वित्यर्थे ढञ्। ढस्य 'आयनेयीनीयियः' इत्येयादेशः। अतिथय इदमातिथ्यम्—'अतिथेर्ञ्यः' इति चतुर्थ्यन्तात्तादर्थ्ये ञ्यः। अतसः क्षौमं प्रहरणं वायुश्च—'अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच्' इत्यसच्। अतसी उमा, 'षिद्गौरादिभ्यश्च' इति स्त्रियां ङीप्। सातयतीति सातयः—'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च' इति कर्त्तरि शे शपि गुणायौ। सातिः सौत्रो धातुरिति वृत्तौ। बोधिन्यासेऽपि 'सातिः सुखे वर्त्तते सौत्रः' इति। जिनेन्द्रहरदत्तौ 'सातिर्हेतुमण्ण्यन्तः' इति। इदिद्वन्धनार्थं उत्तरत्र भविष्यति ॥ ३८ ॥

३४. चिती संज्ञाने। संज्ञानं चैतन्यम्। चेतति। चिचेत। चिचिततुः। चिचे-

तिथ। चिचित, चिचेत। चिचितिव। चिचितिम। चेतिता। चेतिष्यति। चेततु। अचेतत्। चेतेत्। आशिषि—चित्यात्। अचेतीत्। अचेतिष्यत्। भावे—चित्यते इत्यादि। चिचितिषति, चिचेतिषति। चितित्वा, चेतित्वा। 'रलो व्युपधात्' इति कित्त्वविकल्पः। चेचित्यते। चेचितीति। 'नाभ्यस्तस्य' इति गुणनिषेधः। चेचेत्ति। चेतयति देवदत्तम्। अचीचितत्। 'अणावकर्मकात्' इति परस्मैपदमेव। 'गतिबुद्धि' इति प्रयोज्यं कर्म। चित्तः। चित्तवान्—'श्वीदित' इति अनिट्त्वम्। चितः—इगुपधलक्षणः कः। चेतनः—बाहुलकात्कर्त्तरि ल्युट्। चित् चैतन्यम्—सम्पदादित्वाद्भावे क्विप्। चेतः—'असुन्' इत्यसुन्। सुचेतीकरोति—'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च' इति कृभ्वस्तियोगे च्विः, सलोपश्च। 'अस्य च्वौ' इतीकारोऽकारस्य। अत्र मैत्रेयः—'कणः कश्च इति चितेः कणप्रत्यये धातोरन्त्यस्य च ककारे चिक्कणः इति। बहुलवचनाद्गुणाभावः प्रत्ययकस्येत्संज्ञाऽभावश्च' इति। हरदत्तस्तु चिनोतेः क्विप्—चित्, कणतेरच्—कणः, तकारस्य ककारश्चिक्कणादिपाठात्। केचित्तु चिक्कणादिषु तकारमेव पठन्ति। न्यासकारोऽप्येवं निरुवाह। स्मरणार्थोऽप्ययम्, 'चेतन्ती सुमतीनाम्' इति दर्शनात्। 'अधीगर्थदयेशां कर्मणि' इति कर्मणः शेषत्वे षष्ठी। अधीगर्थाः स्मरणार्थाः। तथा सन्धानार्थोऽपि। यदाह श्रीरामस्वामी[1]—'प्रायो विनाशः चित्तं सन्धानं विनष्टस्य सन्धानं प्रायश्चित्तम्' इति। 'प्रायस्य चित्तिचित्तयोः' इति पारस्करादिपाठात् सुट्। चिति स्मृत्यामिति चुरादौ। चित सञ्चेतन इति तत्रैवात्मनेपदी ॥ ३९ ॥

३५. च्युतिर् आसेचने। 'उपदेशेऽजनुनासिक इत्', 'हलन्त्यम्' इतीकाररेफयोरित्त्वम्। सेचनमार्द्रीभावनम्। यदाह हरदत्तः—'सिचिः कर्मस्थक्रियः, आर्द्रीभावनं ह्यत्र प्रधानं तदर्थत्वात्कारकव्यापारस्य' इति। आङीषदर्थेऽभिव्याप्तौ वा। च्योतति। चुच्योत। चुच्योतिथ। चुच्युतिव। च्योतिता। च्योतिष्यति। च्योततु। अच्योतत्। च्योतेत्। आशिषि—च्युत्यात्। लुङि 'इरितो वा' इति च्लेः परस्मैपदेष्वङादेशविधानात् ङित्त्वान्न गुणः—अच्युतत्। अच्युतताम् इत्यादि। अङभावे अच्योतीत् इत्यादि। कर्मादौ च्युत्यते इत्यादि। चुच्युतिषति, चुच्योतिषति। च्योतित्वा, च्युतित्वा। पूर्ववत् कित्त्वविकल्पः। चोच्युत्यते। चोच्युतीति, चोच्योत्ति। ईटि 'नाभ्यस्तस्य' इति गुणनिषेधः। च्योतयति। अचुच्युतत्। निष्ठायाम् 'उदुपधाद्भावादिकर्मणोः' इति कित्त्वविकल्प उदाहार्यः। च्युतितमनेन, च्योतितमनेन इत्यादि। कर्माविवक्षायां कर्मकर्त्तरि भावसम्भवः ॥ ४० ॥

३६. श्च्युतिर् क्षरणे। क्षरणं स्रुतिः। श्च्योतति। चुश्च्योत इत्यादि च्युतिवत्। अभ्यासे खयः शेषः। सकारादिरयम्, निर्देशः श्चुत्वेन। सकारादित्वे

---

१. श्रीधामस्वामी—ख. पुस्तके।

प्रयोजनं मधु श्च्योततीति मधुश्च्युत्—क्विप्, अस्मात् 'तत्करोति तदाचष्टे' इति णिचि 'णाविष्ठवत्प्रातिपदिकस्य' इतीष्ठनीव कार्यविधानाट्टिलोपे मधुश्च्यायतेः क्विप्। तस्य लोपे प्रत्ययलक्षणेन 'णेरनिटि' इति णेश्च लोपे यकारान्ताद् अस्मात्कृदन्तात् प्रातिपदिकात्सौ तस्य हल्ङ्यादिलोपे प्रत्ययलक्षणेन सुबन्तत्वेन पदत्वे 'संयोगान्तस्य' इति यलोपे श्चुत्वस्य पूर्वत्रासिद्धत्वात् 'स्कोः' इति सलोपे 'चोः कुः' इति चकारस्य पदान्तस्य कुत्वे तस्य जश्त्वे मधुगिति रूपसिद्धिरिति वृत्तिन्यासपदमञ्जरीसम्मताकारमैत्रेयादिभिरुक्तम्। यद्येवमटतीत्यट्, अट् श्च्योततीत्यत्रापि श्चुत्वस्यासिद्धत्वात्सकारपरत्वात् 'डः सि धुट्' इति धुट् प्राप्नोति, नैतत्; 'श्चुत्वं धुट्त्वे सिद्धं वक्तव्यम्' इत्युक्तत्वात्। अत एव वृत्तिकारादिविरोधात् तालव्योष्मादिवादिनौ स्वामिकाश्यपावुपेक्ष्यौ। यद्यपि तयोः 'अट् श्चोतति' इत्यत्र धुडभावः सिद्धः, मधुगित्यत्र 'संयोगान्तस्य' इति यकारवकारयोर्लोपे 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति व्रश्चादीनां छकारशकारान्तानां च झलि पदान्ते च षत्वविधानात् शकारस्य षकारे 'झलां जश्' इति जश्त्वे मधुडिति स्यात्। अत्र श्चुतिरित्ययकारमपि पठन्ति। तथा च 'मधुश्चुतं घृतमिव सुपूतं', 'श्चोतन्ति ते वसोः' इत्यादौ भट्टभास्करः। अत्र मैत्रेयोऽपि—श्चुतिरित्यप्येके पठन्ति, चुतिर् हासन[1] इति च॥ ४१॥

३७. मन्थ विलोडने[2]। विलोडनं क्षोभणम्। मन्थति। ममन्थ। ममन्थिथ। मन्थिता। मन्थिष्यति। मन्थतु। अमन्थत्। मन्थेत्। आशिषि—मथ्यात्। यासुटः कित्वान्नलोपः 'अनिदितां हल उपधायाः क्ङिति' इति। अमन्थीत्। अमन्थिष्यत्। कर्मादौ मथ्यते इत्यादि। मिमन्थिषति। मामथ्यते। मामन्थीति, मामन्ति। लङस्तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे च अमामन्। मन्थयति। अममन्थत्। मथित्वा, मन्थित्वा। नोपधात्परस्य 'नोपधात्थफान्ताद्वा' इति थकारफकारान्तात्सेटः क्त्वः कित्वविकल्पनात् पक्षे नलोपः। मन्थः—'हलश्च' इति करणे घञ्। मन्थनी—'करणाधिकरणयोश्च' इति अधिकरणे ल्युडन्तात् 'टिड्ढाणञ्' इति ङीप्। मन्थानः—'सम्यानच्स्तुवः' इत्यानज्बाहुलकादस्मादपि। अत्रायं धातुर्यद्यपि क्षीरस्वाम्यादिभिर्न पठ्यते, तथापि मैत्रेयचन्द्रदुर्गैः पठितत्वात्, 'शमीगर्भादग्निं मन्थति', 'ततो यथा प्राशु मन्थति। यदि मथ्यमानो न जायेत' इत्यादिदर्शनाच्चास्त्येव। अयं द्विकर्मकः। दुह्यादित्वादप्रधाने कर्मणि लादयः—अमृतमम्बुनिधिर्मथ्यत इति। द्वितीयावत् कृद्योगलक्षणा षष्ठ्युभयत्र कर्मणि 'गुणे तूभयथा गोणिकापुत्र' इति वचनाद् द्वितीयापि—अमृतस्याम्बुनिधेर्मन्थिता। अम्बुनिधिमिति च। अमृतं मन्थितव्योऽम्बुधिर्देवैरित्यत्र 'कृत्यानाम्' इति योगविभागेन कर्तृकर्मणोः

---

१. ज्ञुतिर् भासने—ख. पुस्तके। २. क्षीरस्वामी त्विदं सूत्रं न पठति।

षष्ठी निषिध्यते। नाथतौ सर्वमेतदुपपादितम्। अयं क्र्यादावपि। इह चाग्रे निरनुषङ्ग एवेदित्॥ ४२॥

३८. कुथि पुथि लुथि मथि[1] मान्थ हिंसासङ्क्लेशनयोः। कुन्थति। चुकुन्थे इत्यादि। मन्थिवत्। विशेषस्त्विदित्त्वात् क्ङिति नलोपाभावः कुन्थ्यते इत्यादि। तथा हिंसार्थत्वात् 'न गतिहिंसा' इति कर्मव्यतिहारे हिंसायां तङ्निषेधश्च। एवं पुन्थति-लुन्थति-मन्थतयोऽपि। मान्थतिस्तु सर्वत्र मन्थतिवत्। अत्र च क्षीरस्वामी मन्थं सानुषङ्गमनिदितं पठित्वा मथ्यत इति चोदाहृत्य 'मथीति दौर्गा मन्यन्ते' इत्याह। सम्मतायां तु द्वावपि पठ्येते। खड्गोपकुन्थं शत्रुं मारयति, खड्गेनोपकुन्थमिति वा—'हिंसार्थानां च समानकर्मकाणाम्' अत्रानुप्रयोगधातुना समानकर्मकाणां हिंसार्थानां तृतीयान्त उपपदे वा णमुलिति णमुल्। 'तृतीयाप्रभृतीनि' इति समासविकल्पः। सर्वस्मिन्नेवात्र णमुल्प्रकरणे क्रियाभेदे सति वासरूपेण क्त्वापीति वृत्तावुक्तम्। तेन खड्गेनोपकुन्थ्य इति 'समानकर्तृकयोः पूर्वकाले' इति क्त्वापि भवति। एवं खड्गोपपुन्थमित्यप्युदाहार्यम्। कुन्थ संश्लेषण इति क्र्यादौ। कुथ पूतीभावे। पुथ हिंसायामिति दिवादौ। पुथ भाषार्थश्चुरादौ॥ ४३–४७॥

३९. षिध गत्याम्। केचिदुदितं पठन्ति[2]। यदाह काश्यपः—"उकारः 'उदितो वा' इति विशेषणार्थः" इति। तरङ्गिणी चायमुदिदिति, तद्वृत्तिविरोधादुपेक्ष्यम्। यदाह–'ततः परं सिध्यतिरेव नेतरः' इत्यनिट्कारिकायां सिध्यतिबुध्यत्योः श्यना निर्देशादन्यविकरणयोर्बुधिसिध्योरिड् भवत्येव—बोधिता। सेधिता। निष्ठायामपि प्रतिषेधाभावाद् बुधितं सिधितमित्येव भवति' इति। उदित्त्वे हि 'उदितो वा' इति क्त्वायां विकल्पस्योक्तत्वाद् 'यस्य विभाषा' यस्य धातोः क्वचिद्विभाषेड्उक्तस्तस्य निष्ठायामिण्नेति प्रतिषेधेन भाव्यमिति कथमेवं ब्रूयात्? तत्र न्यासपदमञ्जर्योरपि सिधेरुदित्त्वमनार्षमित्युक्तम्। अत एव क्षीरस्वामी सिद्धमित्युदाहृत्य निरनुबन्धपाठे तु सिधित इत्यपरितुष्यन्नुदाजहार[3]। अथोदाहरणानि—'धात्वादेः षः सः'। सेधति। सिषेध। सिषेधिथ। सिषिधिव। 'आदेशप्रत्यययोः' इति षत्वम्। सेधिता। सेधिष्यति। सेधतु। असेधत्। सेधेत्। आशिषि—सिध्यात्। असेधीत्। असेधिष्यत्। कर्मणि—सिध्यते इत्यादि। गत्यर्थत्वेन कर्तृस्थक्रियत्वाद् न कर्मकर्तास्ति। सिसेधिषति, सिसिधिषति। सेधित्वा, सिधित्वा। 'रलो व्युपधात्' इति कित्त्वविकल्पः। 'स्तौतिण्योरेव षणि' इति नियमान्न षत्वम्। सेधिष्यते। कुटिलं गच्छतीत्यर्थः। 'नित्यं कौटिल्ये गतौ' इति यङ्। 'नित्यग्रहणं क्रियासमभिहारे यङो निवृत्तये' इति वृत्तौ प्रतिपादितम्। सेषिधीति, सेषेद्धि। 'झषस्तथोः' इति धत्वे जश्त्वम्। सेधयति। असीषिधत्। 'दीर्घो लघोः' इति दीर्घः।

---

१. 'मन्थ' इति क्षीरस्वामी। २. क्षीरस्वामिप्रभृतयः। ३. क्षी० त०, २३ पृ०।

'सिध्यतेरपारलौकिके' इति णावात्वं श्यना निर्देशादस्य न भवति । प्रतिषेधति—"उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्" इति उपसर्गस्थान्निमित्तात्परस्य सुनोत्यादिसकारस्य षत्वविधानात् 'सात्पदाद्योः' इति निषेधं बाधित्वा सिधिसकारस्य षत्वम् । 'सेधतीति शपा निर्देशो यङ्लुङ्निवृत्त्यर्थो दैवादिकनिवृत्त्यर्थश्च' इति हरदत्तः । तेन प्रतिसेषिधीतीत्यत्र अभ्यासे न षत्वम्, परस्य 'आदेशप्रत्यययोः' इति षत्वम् । अन्यस्त्वाह—'शपा निर्देशोऽयं सिध्यतेरेव निवृत्त्यर्थो न यङ्लुकः, तेनेह षत्वं भवत्येव । एवं हि 'सेधतेर्गतौ' इति निषेधे श्तिपा निर्देशोऽर्थवान्; अन्यथा यङ्लुकि षत्वस्यैवाप्रसङ्गात् किमनेन' इति । प्रत्येषेधत् इत्यादौ उपसर्गस्थान्निमित्तात्परत्वाभावेऽपि 'प्राक्सितादड्व्यवायेऽपि' इति षत्वम् । प्राक्सितादिति उपसर्गात्सुनोतीत्यादयः परिनिविभ्यः सेवत्यन्ता उच्यन्ते । प्रतिषिषिधिषतीत्यत्र 'स्तौतिण्योरेव' इति नियमं बाधित्वा 'स्थादिष्वभ्यासेन चाभ्यासस्य' इति अभ्यासात्परस्य षत्वम्, प्रकृतेस्तु 'उपसर्गात्' इति । इदं षत्वमषोपदेशार्थमवर्णान्ताभ्यासार्थं 'स्तौतिण्योरेव' इति नियमबाधनार्थं चेत्युक्तम् । सूत्रार्थस्तु—स्थादिषु प्राक्सितीयेषु 'उपसर्गात्' इति अभ्यासेन व्यवहितस्य च भवतीति । अत्राभ्यासस्य 'उपसर्गात्' इत्येव सिद्धेऽभ्यासग्रहणं योगभेदेन प्राक्सितीयेषु स्थादिष्वेवाभ्यासस्य षत्वम्, न त्वन्यत्रेति निषेधप्रतिपादनार्थम् । इदं च 'उपसर्गाद्' इति षत्वं 'सेधतेर्गतौ' इति निषेधात् प्रतिसेधति गा इत्यादौ गत्यर्थत्वे न भवति । सुषेधः, दुष्षेधः, निष्षेधः—'सुषामादिषु च' इत्येषु षत्वम् । नन्वत्राद्य उपसर्गस्थान्निमित्तात्परत्वादेव सिद्धम्, इतरयोरपि 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति किमेषां गणे पाठेन ! अत्र वृत्तिः—'सुशब्दस्य कर्मप्रवचनीयत्वान्निर्दुश्शब्दयोः क्रियान्तरविषयत्वादनुपसर्गत्वे सति पाठोऽयम् 'सेधतेर्गतौ' इति प्रतिषेधबाधनार्थं चेति । सिध्रः साधुपर्यायः । सिध्यतेर्वायम् । 'स्फायितञ्चि' इत्यादिना रक् । सिध्रको वृक्षविशेषः । संज्ञायां कन् । सिध्रकप्रचुरो वनविशेषः, सिध्रकावणम्—'वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम्' इति कोटरादित्वाद्वन उत्तरपदे दीर्घः । 'वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः' इति वननकारस्य णत्वम् । वनमिति षष्ठ्यर्थे प्रथमा । इदं णत्वं संज्ञायामप्राप्तत्वे त्वसंज्ञायामपीति स्थितम् । सिध्मम्—बाहुलकान्मन् । सिध्यतेर्वा । सिध्मलः—'सिध्मादिभ्यश्च' इति प्रथमान्तादस्त्युपाधिकादस्त्यर्थे लच् ॥ ४८ ॥

४०. षिधू शास्त्रे माङ्गल्ये च । शास्त्रं शासनमिति मैत्रेयशाकटायनौ । शिष्टावित्येव चन्द्रः । शास्त्रं शास्त्रविषयं शासनम् । माङ्गल्यं मङ्गलक्रियेति क्षीरस्वामी । एवं तरङ्गिण्यामपि । सेधति इत्यादि पूर्ववत् । विशेषस्तूदित्वाद्वलादावार्धधातुके 'स्वरतिसूतिसूयतिधूञूदितो वा' इति इटो विकल्पनात्—सेद्धा । सेत्स्यति । असैत्सीद् इति लुङि 'वदव्रज' इति वृद्धिः । तथाऽऽशीर्लिङ्लुङोरात्मनेपदेषु—

"लिङ्सिचावात्मनेपदेषु" इक्समीपाद्धलः परौ झलादी लिङ्सिचावात्मनेपदेषु कितावितिं कित्त्वादगुणत्वे—षिषिषिसीष्ट। व्यत्यषिद्ध। व्यत्यषित्साताम् इत्यादि भवति। क्त्वासनोश्चेडभावे—सिध्वा। सिषित्सति इति। 'हलन्ताच्च' इति इक्समीपाद्धलः परस्य झलादेः सनः कित्त्वान्न गुणः। निष्ठायां 'यस्य विभाषा' इतीण्णिषेधात् सिद्धम् इति भवति। अत्र मैत्रेयसम्मताकारौ—" 'कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि'—क्रादय एव लिट्यनिटस्ततोऽन्ये लिटि सेडित्यनेन नियमेन पुरस्तात्प्रतिषेधकाण्डस्यारम्भात् तस्य तदाश्रयस्य नियमस्य च बलीयस्त्वमिति यावान् कश्चिदिडभावः प्रतिषेधनिबन्धनो विकल्पनिबन्धनो वा स सर्वो बाध्यत इत्युदिल्लक्षणं विकल्पं बाधित्वा लिटि क्रादिनियमान्नित्यमिडिति सिषेधिता" इत्याहतुः। तथा च 'अचस्तास्वत्' इत्यत्र वृत्तिकारः—'नित्यग्रहणं किम्? विधोता, विधविता, विदुधविथ। तासौ विभाषितेटस्थलि नित्यमिडागमो भवति' इति। अत्र न्यासे 'स्वरत्यादिसूत्रेण धूञ इड्विकल्पः, तस्य नित्यग्रहणाद्विभाषितेटस्थलि नित्यमिडागमो भवति' इति। हरदत्तस्तु 'नित्यमिडागमो भवति' इति वृत्तिमुपादाय 'यावान् कश्चिदिडभावः प्रतिषेधनिबन्धनो विकल्पनिबन्धनो वा स सर्वः क्रादिसूत्रेण नियम्यत इत्यस्मिन्पक्ष इडभावः। यदा तु प्रतिषेधाधिकारेण क्रादीनामेव लिटीण्न भवतीति नियमात् प्रतिषेध एव सर्वो निवर्त्यते, 'स्वरति' इत्यादिसूत्रेण विकल्पो भवत्येवेति पक्षस्तदा विदुधोथ, विदुधविथेत्युभयं भवति' इति। अस्यायमभिप्रायः—अत्र वृञ्व्यतिरिक्तानां क्रादीनाम् "एकाच उपदेशेऽनुदात्तात्" एकाज् यो धातुरुपदेशेऽनुदात्तस्तस्मात्परस्य वलादेराधेधातुकस्येण्नेति प्रकृत्याश्रयः प्रतिषेधः सिद्धः, वृङ्वृञोस्तूगन्तत्वात् 'श्र्युकः किति' इति प्रत्ययाश्रय इति सिद्धे सत्यारभ्यमाणेनानेन नियमेन तुल्यजातीयानां क्रादिव्यतिरिक्तानां येषां प्रकृत्याश्रयः प्रत्ययाश्रयो वा निषेधः प्राप्तस्तेषामेवेट् प्राप्यत इति पुरस्तात्प्रतिषेधकाण्डारम्भस्य प्रयोजनम् 'स्मृत्वा स्मृतः' इत्यादौ परमपि स्वरत्यादिविकल्पं बाधित्वा 'श्र्युकः किति' इति निषेधप्रवृत्तिरिति च तेनोक्तम्। हरदत्तानुवादी रामदेवमिश्रोऽपि क्रादिसूत्रे 'अनुदात्तोपदेशानामत्र प्रकृत्याश्रयः प्रतिषेधः; वृङ्वृञोस्तु प्रत्ययाश्रयस्तदुभयस्याप्ययं नियमः' इति। वृत्तिग्रन्थोऽप्यत्रैवानुकूलः। अत्र मते—सिषेधिथ, सिषेद्ध; सिषिधिव, सिषिध्व इत्यादि भवति। एतदनन्तरं मृ मरण इत्याभरणे पठ्यते, तद् भाष्यविरोधादुपेक्ष्यम्। यद्ययं स्यात्कथं 'व्यत्ययो बहुलम्' इत्यत्र 'स च न मरति, न म्रियत इति प्राप्ते' इति ब्रूयात्? अयमनूदित्संराध्यर्थे दिवादौ ॥ ४९ ॥

५१. खादृ भक्षणे। खादति। चखाद। चखादिथ। खादिता। खादिष्यति। खादतु। अखादत्। खादेत्। आशिषि—खाद्यात्। अखादीत्। कर्मादौ—खाद्यते इत्यादि। चिखादिषति। चाखाद्यते। चाखादीति, चाखात्ति। खादयति मोदकं देवदत्तेन 'गतिबुद्धि' इत्या-

ादिना प्राप्तं प्रयोज्यस्य कर्मत्वम् 'आदिखाद्योः प्रतिषेधः' इति निषिध्यते। 'निगरण-चलन' इति नित्यं परस्मैपदम्। ऋदित्त्वादचखाददित्यत्रोपधाह्रस्वो न भवति। खादितो मोदकः, खादितमनेन, इदमेषां खादितम्—'क्तोऽधिकरणे च' इत्यादिना कर्मभावाधिकरणेषु क्तः। खादकः—'निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूञो वुञ्' इति ताच्छीलिको वुञ्। ण्वुलैव सिद्धे वुञ्विधानं ज्ञापकार्थं 'तच्छीलादिषु वासरूपविधिना तृजादयो न भवन्ति' इति वृत्तौ॥ ५०॥

४२. खद स्थैर्ये हिंसायां च। चकाराद्भक्षणे च। स्थैर्येऽकर्मकः। खदति। चखाद इत्यादि खादिवत्। लुङि अखादीत्, अखदीत्—'अतो हलादेर्लघोः' इति वृद्धिविकल्पः। खादयति। अचीखदत्। स्थैर्येऽकर्मत्वात्प्रयोज्यं कर्म। खदिरः—'अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः' इति किरजन्तो निपातितः। यवखदा—यवस्य सारः। स्वभावात्स्त्रीविषयोऽयम्। यवखदी—'व्रीह्यादिभ्यश्च' इति मत्वर्थे इनिः॥ ५१॥

४३. बद स्थैर्ये। ओष्ठ्यादिः। बदति। बबाद इत्यादि खदिवत्। किति लिटि थलि च सेटि रूपाभेदे आदेशादित्वानाश्रयणादेत्वाभ्यासलोपयोः—बेदतु, बेदुः, बेदिथ इत्यादि। बदरम्—बाहुलकादरन्प्रत्ययः। बदरी—'षिद्गौरादिभ्यश्च' इति ङीष्। अत्र पाठादेव वारन् प्रत्ययः। अत्र मैत्रेयः सानुषङ्गं पठित्वा नलोपे कृते एत्त्वाभ्यासलोपयोर्बेदतुरित्याह, तदसत्; संयोगान्तत्वेन मन्थ्यादिवल्लिटः कित्त्वाभावात्। बिदि अवयवे इत्यग्रे॥ ५२॥

४४. गद व्यक्तायां वाचि। गदति। जगाद। गदिता इत्यादि खादिवत्। वचनं शब्दप्रकाशनफलत्वात्कर्मस्थमिति न्यास-पदमञ्जरी-कैयटेषु। प्रणिगदति—'नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च" इति उपसर्गस्थान्निमित्तात्परस्य नेर्गदादिषु णत्वमिति णत्वम्। अड्व्यवायेऽपि इदमिष्यत इति प्रण्यगदत् इत्यादावपि भवति। गादयति पुत्रं श्लोकं देवदत्तः। 'गतिबुद्धि' इत्यादिना प्रयोज्यस्य कर्मत्वम्। अत्र शब्दकर्मेति कर्मशब्देन साधनमुच्यते, न क्रिया। यदि हि स्यात्, 'गतिबुद्धिप्रत्यवसानशब्दार्थाकर्मक' इति लघ्वसन्दिग्धं च ब्रूयात्। एवं न्यासकैयटपदमञ्जर्यादिष्वपि स्थितम्। तेन शिष्येण धर्मं गादयति इत्यत्र प्रयोज्यस्य न कर्मत्वम्। अत्र 'नित्याकर्मकगत्यर्थाभ्यवहारार्थशब्दकर्मदृशोऽखाददिक्रन्दिशब्दायह्वेञः' इति शाकटायनसूत्रव्याख्यायाममोघायाम् "नित्याकर्मकेभ्यो गत्यर्थेभ्योऽभ्यवहारार्थेभ्यः शब्दनक्रियेभ्यः शब्दकर्मकेभ्यश्च दृशेश्च यो णिस्तस्य कर्ता कर्म भवति 'खाददिक्रन्दिशब्दायह्वेञ्' इत्येतान् वर्जयित्वा" इत्युक्तम्। तन्मते क्रन्द्यादित्रयव्यतिरिक्तेषु सर्वेषु शब्दार्थेषु प्रयोज्यस्य कर्मत्वेन भाव्यम्, सूत्रे शब्दकर्मकेति कर्मग्रहणात् क्रन्द्यादिपर्युदासाच्च। तेनार्थद्वयस्य लाभः। गद्यम्—'गदमदचरयमश्चानुपसर्गे' इति कर्मणि यत्।

उपसृष्टात्तु ण्यत्—प्रगाद्यमिति। निगदः—'नौ गदनदपठस्वनः' इति पक्षेऽप्। अन्यदा घञ्—निगादः। अनुगदतीति आनुगादिकः। 'अनुगादिनष्ठक्' इति स्वार्थे ठक्। अस्मादेव निपातनाण्णिनिः। न त्वयं केवलं प्रयोगार्हः, ठको नित्यत्वादिति न्यासपदमञ्जर्यादिषु। कर्मव्यतिहारे नास्य तङस्ति; 'प्रतिषेधे हसादीनामुपसंख्यानम्' इति निषेधात्। हसादयो हसिप्रकारास्ते च शब्दनक्रियाः। स्तनगदी देवशब्द इति चुरादौ॥ ५३॥

४५. रद विलेखने। विलेखनं भेदनम्। रदति। रराद। रेदतुः। रेदिथ इत्यादि पूर्ववत्। रदनः—'करणाधिकरणयोश्च' इति ल्युट्॥ ५४॥

४६. णद अव्यक्ते शब्दे। 'णो नः'। धात्वादेर्णस्य नः इति शेषः। प्रणदति। प्रणनाद। प्रणेदतुः। प्रणेदिथ इत्यादि गदिवत्। 'उपसर्गादसमासेऽपि णोपदेशस्य' इति उपसर्गस्थान्निमित्तात्परत्वेन नकारस्य णत्वम्। प्रणिनदति इत्यादौ 'नेर्गद' इति णत्वम्। इदमप्यड्व्यवायेऽपीति प्रण्यनदत् इत्यादावपि भवति। धातुनकारस्य निशब्देन व्यवधानादुपसर्गादिति णत्वं न भवति। अशब्दकारकत्वेऽपि 'अणावकर्मक' इति प्रयोज्यस्य कर्मत्वं घटं नादयतीति। नदी—पचादौ नदडिति पाठात् टित्त्वात् ङीप्। नद्यां भवं नादेयम्—'नद्यादिभ्यो ढक्' इति शैषिको ढक्, तस्यैयादेशः। पञ्चानां नदीनां समाहारः पञ्चनदम्। 'नदीभिश्च' इति नदीवचनैः सह संख्याया अव्ययीभावः। अभिधानस्वभावादयं समासः समाहार इत्युक्तम्। 'अच्' इति योगविभागादच्समासान्तः। उक्तं च—

कृष्णोदक्पाण्डुपूर्वाया भूमेरच् प्रत्ययः स्मृतः। गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि॥

इति। निनदः—'नौ गदनद' इति पक्षे अप्। तदभावे घञ्—निनादः। इदित्समृद्ध्यर्थोऽग्रे। णद भाषार्थश्चुरादौ॥ ५५॥

४७. अर्द गतौ याचने च। याचने द्विकर्मकः। नाथत्यादिवज्ञादयो नेयाः। अर्दति। आनर्द। आनर्दतुः। आनर्दिथ। आनर्दिव। आनर्दिम। 'अत आदेः' इत्यभ्यासादेर्दीर्घे 'तस्मान्नुड् द्विहलः' इति दीर्घभूतादभ्यासात्परस्य नुडागमः। अर्दिता। अर्दिष्यति। अर्दतु। आर्दत्। अर्देत्। आशिषि—अर्द्यात्। मा भवानर्दीत्। 'नेटि' इति सिचि वृद्धेर्निषेधः। कर्मादौ—अर्द्यते इत्यादि। गत्यर्थत्वे कर्तृस्थक्रियात्वान्न कर्मकर्त्तास्ति। 'क्तोऽधिकरणे च' इत्यादिना कर्तृकर्मभावाधिकरणेषु क्त उदाहार्यः। तथा 'गत्यर्थकर्मणि' इति द्वितीयाचतुर्थ्यौ। कर्मव्यतिहारे 'न गतिहिंसा' इति तङ्निषेधः, णौ 'गतिबुद्धि' इति प्रयोज्यस्य कर्मत्वं च। अर्दिदिषति। 'न न्द्राः' इति निषेधाद्रेफवर्जितस्य द्वितीयस्यैकाचो द्विर्वचनम्। समर्णः। न्यर्णः। व्यर्णः। अभ्यर्णः—'अर्देः सन्निविभ्यः'। 'अभेश्चाविदूर्ये' इति समादिपूर्वपदादर्देः परस्य निष्ठाया इण्निषेधे 'रदाभ्याम्' इति तकारदकारयोर्नत्वे पूर्वस्य 'रषाभ्याम्' इति णत्वे परस्य ष्टुत्वेन णकारः। 'अभेश्चाविदूर्ये' इति निषेधादन्यत्र

अभ्यर्दितो वृषलः शीतेन इति भवति। आविदूर्यं प्रत्यासत्तिः। अस्मादेव निपातनाद् 'न नञ्पूर्वात्' इति निषेधं बाधित्वा भावे ष्यञ्। हिंसार्थोऽयं चुरादौ ॥ ५६ ॥

४८. नर्द गर्द शब्दे। दन्त्यादिः, नृतिनन्दिनर्दीति पर्युदासात् नर्दति। ननर्द। नर्दिता इत्यादि नदिवत्। यङ्लुकि पर्दत्यादिवत्। गेहे नर्दी—'पात्रे समितादयश्च' इति पक्षे तत्पुरुषः तत्रैव पाठात्सप्तम्या अलुक्। एवं गर्दति इत्यादि। गर्दभः—'कॄशॄशलिकलिगर्दिभ्योऽभच्' इत्यभच् ॥ ५७-५८ ॥

४९. तर्द हिंसायाम्। सकर्मकः। तर्दतीत्यादि पूर्ववत्। 'न गतिहिंसा' इति तङ्निषेधात् कर्मव्यतिहारेऽपि परस्मैपदम्। दण्डोपतर्दं गाः कालयति। दण्डेनोपतर्दमिति वा—'हिंसार्थानाम्' इति णमुल्। 'तृतीयाप्रभृतीनि' इति समासविकल्पः। वासरूपेण क्त्वायां दण्डेनोपतर्द्य इति ॥ ५९ ॥

५०. कर्द कुत्सिते शब्दे। कुत्सितशब्द इह कौक्षः। यदाह केशवस्वामी—'कौक्षे कर्दति पर्दते गुदरवे' इति। कर्दति इत्यादि नर्दतिवत्। कर्दमः—बाहुलकादमच् ॥ ६० ॥

५१. खर्द दन्दशूके। दन्दशूक इति दन्दशूककर्तृका क्रियाऽभिधीयते। साधनप्रधानप्रयोगित्वख्यापनार्थं दन्दशूकग्रहणमिति सम्मतातरङ्गिण्योः। दन्दशूको गर्हितदंशनशीलः, इह तु तत्स्था क्रिया; दंश इत्यनुक्तिस्ताच्छील्यादिप्रतिपत्त्यर्थेति मैत्रेयेण प्रतिपादितम्। दन्तशूक इति केशवस्वामी दकारस्य स्थाने तकारमाह; तन्महान्तो न सहन्ते। यदाह 'दन्दशूको बिलेशयः' इत्यत्र सुभूतिचन्द्रः—'दंशेर्यङन्तान्नुक्यूकप्रत्ययेऽल्लोपयलोपयोः' इति। तथा 'इषुमति रघुसिंहे दन्दशूकान् जिघांसौ'[1] इति भट्टिश्लोकव्याख्याने "दन्दशूकान् हिंस्रान् दंशेः 'लुपसद'" इत्याद्युक्तं शङ्कराचार्येण। हिंस्रमात्रे प्रयुञ्जानो भट्टिकारो दन्दशूकशब्दस्य नैघण्टुकप्रसिद्धिं नाद्रियते। खर्दतीत्यादि पूर्ववत् ॥ ६१ ॥

५२. अति अदि बन्धने। अत्र धनपालः—'तान्तं द्रमिडाः पठन्ति, आर्यास्तु दान्तम्' इति। उभयमिति मैत्रेयस्वामिकाश्यपसम्मताकारादयः। अन्तति। आनन्त। आनन्ततुः। आनन्तिथ। आनन्तिव। अन्तिता इत्यादि। इदित्त्वान्नुमि द्विहल्त्वात् 'तस्मान्नुड् द्विहलः' इति लिटि नुडागमः। अन्तितिषति। अनुस्वारपरसवर्णयोः पूर्वत्रासिद्धत्वात् 'न न्द्राः' इति नकारवर्जं द्विरुच्यते। न च 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यसिद्धत्वनिषेधः; अस्य द्विर्वचननिषेधरूपत्वात्। उक्तं चैवं 'हयवरट्' इत्यत्र कैयटे। अन्तयति। आन्तितत्। एवम् अन्दति इत्यादि। अन्तः—घञर्थे। उणादिवृत्तौ तु 'हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्' इति अमेस्तनि

---

1. भ० का० १।२६।

व्युत्पाद्यते। अन्ते भवम् अन्त्यम्—'दिगादिभ्यो यत्' इति सप्तम्यन्ताद्भवार्थे यत्। अन्तिमम्—अन्ताच्चेति वक्तव्यम्' इति शैषिको डिमच्—अन्तिकः। 'अत इनिठनौ'—अदन्तादस्त्युपाधिकादस्येति षष्ठ्यर्थे इनिठनाविति ठन्। 'ठस्येकः'—आवसथस्यान्तिकम्—'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इत्यन्तिकयुक्तात् षष्ठीपञ्चम्यौ। अन्तिकशब्दात्तु 'दूरान्तिकार्थेभ्यो द्वितीया च' इत्यत्र पञ्चम्यनुवर्त्तते, चकारेण तृतीया समुच्चीयत इति द्वितीयापञ्चमीतृतीयाः स्युः। तथा 'सप्तम्यधिकरणे च' इति चशब्दाद् दूरान्तिकार्थसमुच्चयार्थात्सप्तमी चेति चतस्रो विभक्तयः—अन्तिकम्, अन्तिकात्, अन्तिकेन, अन्तिके इति। एताश्चतस्रो विभक्तयोऽसत्त्ववचनेभ्यः प्रातिपदिकार्थे इति वृत्तौ। भाष्ये तु—

'दूरादावसथान्मूत्रं दूरात्पादावसेचनम्। दूराच्च भाव्यं दस्युभ्यो दूराच्च कुपिताद् गुरोः'॥

इति सत्त्ववचनादधिकरणे पञ्चमी दृश्यते। कैयटे च—'आवसथस्य दूर इत्यर्थः' इति। अन्तिकादागतः 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' स्तोकाद्यर्थाः कृच्छ्रशब्दश्च पञ्चम्यन्ताः क्तान्तेन वा समस्यन्त इति तत्पुरुषः। पक्षे विभक्तेस्तु 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक्। ऐकपद्यमैकस्वर्यञ्च विशेषः। नेदिष्ठः, नेदीयान्—'अन्तिकबाढयोर्नेदसाधौ' इति इष्ठन्नीयसुनोर्यथासङ्ख्यन्नेदसाधावादेशौ। अस्मादेव वचनात् 'अजादी गुणवचनादेव' इति बाध्यते। अन्दूः भूषायां शृङ्खले च। 'अन्दूदृम्भू' इत्यूकारप्रत्यये निपातितः। अन्दुको गजनिगलः। संज्ञायां कनि 'केणः' इति ह्रस्वः॥ ६२–६३॥

५३. इदि परमैश्वर्ये। इन्दति। इन्दाञ्चकार। इन्दिता इत्यादि। लिटि 'इजादेश्च' इत्याम्। इन्द्रः—'ऋज्रेन्द्र' इति रन्नन्तो निपातितः। इन्द्राणी—'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्' इति पुंयोगादाख्यायां ङीषानुकौ। 'पुंयोगादाख्या' नाम पुंसो योगात्तच्छब्देन स्त्रियामभिधानम्। इन्द्रमात्मन इच्छति 'सुप आत्मनः क्यच्' इति इषिकर्मणः सुबन्तादात्मेच्छायां क्यचि अकारस्य 'अस्य च्वौ' इति वर्तमाने 'क्यचि च' इतीकारे इन्द्रीयति। अस्मात्सन्यतो लोपे 'न न्द्राः' इत्यत्राजादेरिति वर्त्तते, स च कर्मधारयः पञ्चम्यन्त इत्यादेरचः परेषां नदराणां द्विर्वचननिषेध इति व्यवहितत्वाद्दकारस्य द्विर्वचने इन्दिद्रीयिषतीति भवति। अग्नीन्द्रौ देवते अस्य आग्नेन्द्रं हविः—'देवताद्वन्द्वे च' इति पूर्वपदस्यानङ्, "साऽस्य देवता" प्रथमान्ताद्देवतोपाधिकादस्त्यर्थेऽणित्यणि 'देवताद्वन्द्वे च' इति प्राप्ताया उत्तरपदवृद्धेः 'नेन्द्रस्य परस्य' इति निषेधः। इन्दिरा—बाहुलकात् किरच्॥ ६४॥

५४. बिदि अवयवे। अवयव इति अवयवक्रियोच्यते। बशादिः। बिन्दति। बिबिन्द। बिन्दिता इत्यादि। बिन्दुः—बाहुलकादुप्रत्ययः। अत्र मैत्रेयः 'बिन्दुरिच्छुः' इति सूत्रं बशादिं पठन् बिन्दुशब्दं व्युदपादयत्। वृत्तौ तु वेत्तेरेव तत्र

पाठः । अत्र सम्मतायां 'भिदि अवयवे । भिन्दति । यद्यभिधानमस्ति भिन्दुरिति दृश्यते' इति ॥ ६५ ॥

५५. गडि वदनैकदेशे[1] । इह वदनैकदेशारम्भलक्षणा क्रिया वदनैकदेशशब्देनोच्यते । गण्डति । गण्डः—अच् । 'अत्यादयः पञ्चैते न तिङ्विषयाः' इति काश्यपः । सम्मतायां तु बिदिभिदी एव प्रकृत्यैवमुक्तम् । अविगीतमन्ये सर्वेषां तिङमुदाहरन्ति ॥ ६६ ॥

५६. णिदि कुत्सायाम् । निन्दति । निनिन्द । निनिन्दिथ । निनिन्दिव । निन्दिता इत्यादि । कर्मादौ निन्द्यते इत्यादि । प्रणिन्दति—'उपसर्गादसमासेऽपि' इति णत्वम् । अत्र मैत्रेयाभरणसम्मताकाराः 'वा निंसनिक्षनिन्दाम्' इति णत्वविकल्पमिच्छन्ति, तदयुक्तम्; यतस्तत्र 'कृत्यचः' इत्यतः कृतीति वर्त्तते, तच्च निन्दादिभिर्विशेष्यमाणमर्थात्परसप्तम्यन्तमिति उपसर्गस्थान्निमित्तात्परस्य निंसादिनकारस्य कृति परे वा णत्वमिति सूत्रार्थः । तथा च शाकटायनः—'निंसनिक्षनिन्दः कृति वा' इति । एवं हि प्रकरणमबाधितं भवति, णोपदेशश्च सार्थकः । वृत्तौ च प्रणिन्दनम्, प्रनिन्दनमिति कृदन्तमेवोदाहार । निन्दकः—'निन्दहिंस' इति वुन् । णिद्द कुत्सासन्निकर्षयोरिति दिवादौ ॥ ६७ ॥

५७. टुनदि समृद्धौ । 'आदिर्ञिटुडवः' इति त्रय एते धात्वादयः समुदाया इतः । प्रयोजनं नन्दथुः इत्यत्र 'ट्वितोऽथुच्' इति भावादावथुच् । नन्दति । ननन्द । नन्दिता इत्यादि । भावे नन्द्यते इत्यादि । निनन्दिषति । नानन्द्यते । नानन्दीति, नानन्ति । नन्दयति । अननन्दत् । नन्दयतीति नन्दनः—'नन्दिग्रहि' इति ल्युः । अयं तवर्गीयोपदेशः, नृतिनन्दीति णोपदेशलक्षणपर्युदासात् । न नन्दतीति ननान्दा । ननान्दारौ । 'नप्ति च नन्देः' इति ऋन्प्रत्ययो वृद्धिश्च, 'न षट्स्वस्रादिभ्यः' इति 'ऋन्नेभ्यः' इति ङीपो निषेधः । 'ष्णान्ता षट्' इति षकारनकारान्ता सङ्ख्या षडित्युच्यते । स्वस्रादिपाठादेव नञो नलोपाभावः । ननान्दुरपत्यं नानान्द्रः—'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' इत्यञ् । अनृषीत्यविभक्तिकं भिन्नं पदम्, तेन बिदादिभ्यो गोत्रापत्येऽञ् अत्रानृषिभ्यस्त्वनन्तरापत्ये इति सूत्रार्थः ॥ ६८ ॥

५८. चदि आह्लादने दीप्तौ च । चन्दति । चचन्द । चन्दिता इत्यादि । चन्दनः—करणे ल्युट् । चन्द्रः—'स्फायितञ्चि' इत्यादिना रक् । चन्द्रकम्—संज्ञायां कन् । चन्द्रिका—टापि "प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः" इति इत्वमकारस्य, असुप इत्यापो विशेषणम्, स चेदाप् सुपः परो न भवतीति । चन्दिरः—'इषिमुषि' इत्यादिना किरच् ॥ ६९ ॥

५९. त्रदि चेष्टायाम् । त्रन्दति । तत्रन्द । त्रन्दिता इत्यादि ॥ ७० ॥

६०. कदि क्रदि क्लदि आह्वाने रोदने च । आह्वाने सकर्मकः । कन्दति । चकन्द ।

---

1. क्षीरस्वामी तु नेदं सूत्रं पठति ।

कन्दिता इत्यादि । चिकन्दिषति । चाकन्द्यते । चाकन्दीति, चाकन्ति । कन्दयति पुत्रं देवदत्तेन । 'गतिबुद्धि' इत्यत्र शब्दकर्मेति साधनकर्मणो ग्रहणात् प्रयोज्यस्य न कर्मत्वम् । शाकटायनमते त्वस्त्येव । सर्वमेतद्वृत्तौ प्रतिपादितं तत एवावगन्तव्यम् । क्रन्दति, क्लन्दति इत्यादि पूर्ववत् । संक्रन्दयतीति संक्रन्दनः—नन्द्यादित्वाद् ल्युः । आक्रन्दत्यस्मिन्निति आक्रन्दो देशः । आक्रन्द्यते रक्षणार्थमाहूयते इति आक्रन्दः शरणम् । कर्मण्यधिकरणे वा घञ् । आक्रन्दं धावति आक्रन्दिकः । 'आक्रन्दाट्ठञ्च' इति ठञ्ठकौ । अनयोः स्वरे विशेषः । ठस्येकः । कन्दरः—बाहुलकादरः । यद्वा—कन्दं वैक्लव्यं राति भीरूणामिति कन्दरः । क्रन्दलः—बाहुलकात्कलप्रत्ययः । यद्वा—पूर्ववद्रातेः कः । 'कपिलकादीनां संज्ञाछन्दसोः' इति लत्वम् । अथ वा—लातेरन्तर्भावितण्यर्थात्कः । कन्दली—गौरादित्वाद् ङीष् । एते घटादयोऽपि । आद्यावेवेत्यपरे ॥ ७१-७३ ॥

६१. क्लिदि परिदेवने । क्लिन्दति इत्यादि । अस्यानुदात्तेत्सु पठितस्येह पाठः परस्मैपदार्थः, स्वरितेत्स्वपाठः क्रियाफलस्य अकर्तृगामित्वेऽप्यात्मनेपदं कर्तृगामित्वे च परस्मैपदं यथा स्यात् ॥ ७४ ॥

६२. शुन्ध शुद्धौ । शुन्धति । शुशुन्ध । शुन्धिता इत्यादि । आशीर्लिङि कित्त्वात् 'अनिदिताम्' इति उपधालोपे शुध्यात् । तथा यक्यङोरपि—शुध्यते, शोशुध्यते इति । यङ्लुकि लङि तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे च प्रत्ययलक्षणेन लघूपधगुणो न भवति; संयोगान्तलोपस्य पूर्वत्रासिद्धत्वात् । शुधितः, शुधितवान्, शुधित्वा—'उदुपधात्' इति निष्ठायाः कित्त्वविकल्पो न भवति 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति । अत्र कित्त्वसन्निपातनिमित्तमुदुपधत्वम्; यत इदं कित्त्वाश्रये नलोपे भवति । धान्तप्रकरणमपहाय संयोगान्तप्रकरणानुरोधेनायमिह निर्दिष्टः । अयं शौचकर्मणि युजादौ । शुधि शौच इति दिवादौ अननुषक्तोऽनिट् च ॥ ७५ ॥

६३. अतादयः उदात्ता उदात्तेतो गताः ।

प्रथमं माङ्गलिकमेधतिं पठित्वा तदनुरोधेन तवर्गीयान्तानात्मनेपदिनश्च परस्मैपदिनश्च पठित्वा मातृकापाठक्रमेण कवर्गीयान्तानाह—

६४. शीकृ सेचने । तालव्यादिः । दन्त्यादिरिति धनपालकाश्यपौ; अत एव षोपदेशलक्षणे 'सृपिसृजिस्तृस्त्यासीकृसेकृसृवर्जम्' इति पेठतुः । पुरुषकारस्तु तन्न मृष्यति, यदाह—'सीकृ इत्यार्या इति धनपालः, तत्र चाद्यः पक्षः शीकर इति प्रयोगानुगुणः । योऽपि षोपदेशलक्षणे सीकृपाठः सोऽप्येवं प्रयुक्तः' इति । शीकते । शिशीके । शीकिता । शीकिष्यते । शीकताम् । अशीकत । शीकेत । आशिषि—शिकिषीष्ट । अशीकिष्ट । अशीकिष्यत । कर्मणि—शीक्यते इत्यादि । शिशीकिषते । शेशीक्यते । शेशीकीति, शेशीक्ति । लङि अशेशीकीत्, अशेशीक् हल्ङ्यादिलोपः । अशेशीक्

स्थातेत्यत्र 'स्कोः' इति सलोपो न भवति; निमित्तनिमित्तनोर्भिन्नपदस्य सत्वात्। उक्तञ्चैवं 'परेश्च घाङ्कयोः' इत्यत्र कैयटे—'पदस्येत्यधिकारात्प्रत्यासत्तिन्यायाश्रयणादेकपदस्थयोर्निमित्तनिमित्तिनोर्ग्रहणम्' इति। शीकयति। अशिशीकत्। शीका—'गुरोश्च हलः' इत्यकारः। शीकायते—तत्करोतीत्यर्थे 'अटाट्टाशीकाकोटापोटासोटाप्लुष्टाग्रहणं कर्त्तव्यम्' इति क्यङ्। अयमपि पाठस्तालव्यादित्वे प्रमाणम्। अयं क्यङ् 'तत्करोति' इति णिचोऽपवाद इत्येके, सोऽपीष्यत इति न्यासादौ। कान्तत्वादस्मात् क्विप् नोदाहर्त्तव्यः। स्थितं चैवं 'परेश्च घाङ्कयोः' इत्यत्र भाष्यकैयटयोः। तथा 'स्कोः संयोगाद्योः' इत्यत्र वृत्तितद्व्याख्यानेष्वपि। मर्षणार्थोऽयं युजादौ ॥ ७६ ॥

६५. लोकृ दर्शने। लोकते। लोकः। भाषार्थोऽयं चुरादौ ॥ ७७ ॥

६६. श्लोकृ सङ्घाते। श्लोकते। सङ्घातो ग्रन्थः। स चेह ग्रन्थ्यमानव्यापार इति श्रातिवदकर्मक इति स्वाम्यादयः। काश्यपादयस्तु ग्रन्थितृव्यापार इति मथ्नातिवत्सकर्मक इति। श्लोकैरुपस्तौति उपश्लोकयति। 'सत्यापपाशरूपवीणातूलसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्' इति णिच् ॥ ७८ ॥

६७. द्रेकृ ध्रेकृ शब्दोत्साहयोः। शब्दोत्साह इति केचित्। यदाह काश्यपः—'द्रेकते—शब्देनोत्साहं करोति' इति। उत्साहो वृद्धिरिति चन्द्रः। औद्धत्यमिति स्वामी। द्रेकते। दिद्रेके। द्रेकिता इत्यादि। द्रेकणः—'रपाभ्याम्' इति णः। एवं ध्रेकते इत्यादि ॥ ७९–८० ॥

६८. रेकृ शङ्कायाम्। आङ्पूर्वः संशये। 'आरेकं संशयं प्राहुः' इति वचनात्। रेकते इत्यादि ॥ ८१ ॥

६९. सेकृ स्रेकृ स्रकि श्रकि श्लकि गत्यर्थाः। अन्त्यौ तालव्यादी, अन्ये दन्त्यादयः। सेकते। सिसेके। सेकिता ॥ स्रेकते। सिस्रेके। स्रेकिता ॥ स्रङ्कते। सस्रङ्के। स्रङ्किता ॥ श्रङ्कते। शश्रङ्के। श्रङ्किता ॥ श्लङ्कते। शश्लङ्के। श्लङ्किता इत्यादि। अत्र मैत्रेयः तृतीयं श्रेकृ इति तालव्यादिमेकारोपधं पठति। अत्र कश्चित्स्रीकृ इति दन्त्यादिरपरोऽपि धातुः पठ्यते, तदनार्षम्; 'स्तृसृजस्तृपिस्त्यासेकृस्रवर्जम्' इति षोपदेशपर्युदासे भाष्यादिष्वपाठात्। अत्र क्षीरस्वामी—'अस्य दन्त्यादेः स्थाने तालव्यादिं पठित्वाऽर्थभेदात्पुनः पाठः' इत्युक्त्वा 'षेकृ इत्यन्ये विकल्पेन षोपदेकार्यार्थे पेठुः' इति ॥ ८२-८६ ॥

७०. शकि शङ्कायाम्। शङ्कते। शशङ्के। शङ्किता इत्यादि। शिशङ्किषते। शाशङ्क्यते। शाशङ्कीति, शाशङ्क्ति। लङि ईडभावे अशाशन्। शङ्कुः 'खरुशङ्कुपीयुनीलङ्गुलिगु' इत्युप्रत्ययान्तो निपातितः। शङ्कुला—बाहुलकादुलच्। शक्ल शक्ताविति स्वादौ। शक विभाषितो मर्षण इति दिवादौ ॥ ८७ ॥

७१. अकि लक्षणे। अङ्कते। आनङ्के। अङ्किता इत्यादि। अञ्चिकिषते। अनु-

स्वारपरसवर्णयोः पूर्वत्रासिद्धत्वात् 'न न्द्राः' इति निषेधात् ककारादिर्द्वितीयैकाच् द्विरुच्यते। न च 'पूर्वत्रासिद्धीयमद्विर्वचने' इति असिद्धत्वनिषेधः; 'न न्द्राः' इत्यस्य निषेधरूपत्वादित्यततौ स्थापितम्। आहुश्चात्र स्वामिकाश्यपादयोऽपि—"'न न्द्राः' इति निषेधात् कादेर्द्विर्वचनम्"। प्राङ्कनम्—'कृत्यचः' इति णत्वस्य "इजादेः सनुमः"—हलन्ताद्धातोः सनुमो यदि भवति तर्हि इजादेरेवेति नियमादभावः। अङ्कुरः—'मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच्' इत्युरच्। अकि कुटिलायां गतावित्यग्रे। अङ्क लक्षण इति चुरादौ ॥ ८८ ॥

७२. वकि कौटिल्ये। वङ्कते। ववङ्के। वङ्किता इत्यादि। प्रवङ्कनम्। पूर्ववदणत्वम्। वङ्क्रिः—'वङ्क्र्यादयश्च' इति क्रिन्नतो निपातितः। अयं गत्यर्थः पठिष्यते ॥ ८९ ॥

७३. मकि मण्डने। मङ्कते इत्यादि। प्रमङ्कनम्। अकिवदणत्वम्। मङ्कनः—'क्रुधमण्डार्थेभ्यश्च' इति ताच्छील्यादौ युच्। कर्मकर्त्तरि 'भूषाकर्म' इति यक्चिणोर्निषेधाद् मङ्कते कन्या स्वयमेव, अमङ्किष्ट कन्या स्वयमेवेति शप्सिचौ भवतः। मङ्किः—'इन्' इतीन् ॥ ९० ॥

७४. कक लौल्ये। लौल्यं गर्वश्चापल्यं च। ककते। चकके। ककिता इत्यादि। काकः—घञ् बाहुलकात्कर्तरि, कायतेर्वा आकनि। ककिरिदिद् गत्यर्थः पठिष्यते, तस्माद्वा घञ् ॥ ९१ ॥

७५. कुक वृक आदाने। कोकते। चुकुके। कोकितेत्यादि। चूकुकिषते, चुकोकिषते। कुकित्वा, कोकित्वा। 'रलो व्युपधात्' इति कित्त्वविकल्पः। कुकितमनेन, कोकितमनेन। प्रकुकितः, प्रकोकितः। प्रकुकितवान्, प्रकोकितवान्। 'उदुपधात्' इति कित्त्वविकल्पः। प्रकोकनम्, प्रकोकणम्। 'हलश्चेजुपधात्' हलादेरिजुपधात्परो यः कृत् तत्स्थस्य नकारस्य उपसर्गस्थान्निमित्तात्परस्य वा ण इति णत्वविकल्पः। 'कृत्यचः' इति नित्यापवादः। कोकः—'देवसेवमेषादयः पचादिषु द्रष्टव्याः' इत्यादिशब्दस्य प्रकारार्थत्वादिगुपधात्कं बाधित्वाऽच्प्रत्ययः। कोकिलः—'सलिकल्यनिमहिवडिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच्' इति इलच्। कोकिला—जातिलक्षणङीषं बाधित्वाऽजादित्वट्टाप् ॥ वृक—वर्कते। ववृके। वर्कितेत्यादि। विवर्किषते। वरीवृक्यते। 'रीगृदुपधस्य च' ऋत्वतोऽभ्यासस्य रीगिति रीगागमः, वरीवृकाञ्चक्रे इत्यादावल्लोपस्य स्थानिवत्त्वात् 'न धातुलोपः' इति वा गुणाभावः। वर्वक्ति, वरिवर्क्ति, वरीवृक्ति। वर्वृकीति, वरिवृकीति, वरीवृकीति। 'रुग्रिकौ च लुकि' इति ऋत्वतोऽभ्यासस्य रुग्रिकौ चकाराद्रीक्च। ईटि 'नाभ्यस्तस्याचि पिति' इत्यगुणत्वम्। एवं वर्वृक्ते इत्यादि। वर्वकाञ्चकार इत्यादौ यङ्लुकोऽनैमित्तकत्वात् 'न धातुलोपः' इति गुणनिषेधाभावः। अवर्वृकीत्। अवर्वक्। अवर्वर्ग्। अवर्वर्क् स्याता इत्यत्र 'स्कोः' इति कलोपो भिन्नपदत्वान्नेति

शीकतावुक्तम्। लुङि सार्वधातुकाश्रये गुणे 'नाभ्यस्तस्य' इति निषिद्धेऽपि सिजाश्रयो भवत्येव प्रत्ययलक्षणेन—अवर्कीत्। अवर्किष्टाम् इत्यादि। हलन्तलक्षणा वृद्धिः 'नेटि' इति निषिध्यते। वर्कयति। अववर्कत्। अवीवृकत्—'उर्ऋत्' चङ्परे णावुपधाया ऋकारस्य वा ऋकार इत्यृकार आदेश इररारामपवादः। वृकः—इगुपधलक्षणः कः। मृगविशेष आयुधजीविसङ्घविशेषश्च। तत्र द्वितीयार्थाभिधायिनो 'वृकाट्टेण्यण्' इति स्वार्थे टेण्यणि वार्केण्यः। 'ञ्यादयस्तद्राजाः' 'पूगाञ्ञ्यो ग्रामणीपूर्वात्' इत्यारभ्यापादपरिसमाप्तेर्वक्ष्यमाणाः प्रत्ययास्तद्राजसंज्ञा इति टेण्यस्य तद्राजत्वे 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति लुकि बहुषु वृकाः। तेनैवेति वचनाद्यदि: बहुत्वं तद्राजकृतमेवेत्यवगतेर्वार्केण्यमतिक्रान्ता अतिवार्केण्या इत्यादावर्थान्तरकृते बहुत्वे लुग् न भवति। तथा 'अस्त्रियाम्' इति वचनात् स्त्रियां टित्त्वात् ङीपि 'हलस्तद्धितस्य'—हल उत्तरस्य तद्धितयकारस्य लोपो भवतीति परत इति 'आदेः परस्य' इति यकारलोपे 'यस्येति च' इत्यकारलोपे वार्केणी, वार्केण्यौ, वार्केण्य इति भवति। वर्कारः—तरुणः पशुः। बाहुलकादरच्॥९२-९३॥

७६. चक तृप्तौ प्रतिघाते चेति वनपालमैत्रेयादयः। चक तृप्तावित्येव क्षीरस्वामिशाकटायनौ। चकते। चेके। चकिता इत्यादि। चकोरः—'कटिचकिभ्यामोरच्' इत्योरच्। अयं घटादावपि॥ ९४॥

७७. ककि वकि[1] श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क टिकृ टीकृ रघि लघि गत्यर्थाः। कङ्कते। चकङ्के। कङ्किता इत्यादि। वङ्कते। ववङ्के। वङ्किता इत्यादि। प्रवङ्कनम्। 'कृत्यचः' इति णत्वम् 'इजादेः सनुमः' इति नियमान्न भवति। कङ्कतः—बाहुलकादतच्। कङ्कत एव कङ्कतिका—संज्ञायां कनि टापि 'प्रत्ययस्थात्' इतीत्वम्॥ श्वङ्कते। शश्वङ्के। श्वङ्किता॥ त्रङ्कते। तत्रङ्के। त्रङ्किता॥ ढौकते। डुढौके। ढौकिता॥ त्रौकते। तुत्रौके। त्रौकिता॥ ष्वष्कते। षष्वष्के। ष्वष्किता। 'सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः' इति सत्वनिषेधः। वस्कते। ववस्के। वस्किता॥ मस्कते। ममस्के। मस्किता॥ टेकते। टिटिके। टेकिता। लिटि 'असंयोगाल्लिट् कित्' इति कित्त्वान्न गुणः॥ टीकते। टिटीके। टेकिता॥ रङ्घते। ररङ्घे। रङ्घिता॥ लङ्घते। ललङ्घे। लङ्घिता इत्यादि। ढौकतित्रौकत्योर्यङ्लुकोरभ्यासस्य ह्रस्वे गुणः। न च ह्रस्वस्य 'दीर्घोऽकितः' इत्यनेन बाधः; 'अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्ते' इति तत्राकित इत्यनेन ज्ञापितत्वात्। अस्ति च दीर्घस्य दीर्घत्वे प्रयोजनं ह्रस्वनिवृत्तिः। कृते तु ह्रस्वे तस्य दीर्घ ऊकारो न भवति, 'गुणो यङ्लुकोः' इत्यस्य निर्विषयत्वप्रसङ्गात्। ढौकतित्रौकतिटेकतिटीकतीनामृदित्त्वाण्णौ चङ्युपधाया ह्रस्वाभावः। अडुढौकत्। अतुत्रौकत्। अटिटेकत्। अटिटीकत्।

---

१. क्षीरस्वामी तु न पठति।

इति। लघु—'लङ्घिबंह्योर्नलोपश्च' इत्युप्रत्ययनलोपौ। लघिमा—'पृथ्वादिभ्य इमनिज्वा' इति भावकर्मणोरिमनिच्। 'टेः' इतीष्ठेमेयस्सु लोपः। वाग्रहणात् 'इगन्ताच्च लघुपूर्वात्' इति अणि पूर्वस्य भसंज्ञायामोर्गुणे लाघवमिति, लघुपूर्वान्तादिति सूत्रार्थः। रघुः—'बालमूललघ्वङ्गुलीनां वा लो रत्वमापद्यते' इति पक्षे लकारस्य रेफः। अङ्कतिः सम्मतायां दन्त्यादिः पठ्यते। अत्र दण्डके तिक्ष तीक्ष इति क्वचित्पठ्येते, तदपि तिकः प्रतीक इति दर्शनाद् ग्राह्यमेव, इगुपधलक्षणकान्तौ। तिकस्यापत्यं तैकायनिः—'तिकादिभ्यः फिञ्' इति फिञ्। फस्यायनादेशः। तैकायनयश्च कैतवायनयश्चेति तिककितवाः—'तिककितवादिभ्यो द्वन्द्वे' इति द्वन्द्वे बहुषु फिञो लुक्। लघि भोजननिवृत्तौ चेति स्वाम्यादयः। लघि शोषण इत्यग्रे। भाषार्थोऽयं चुरादौ॥ ९५–१०७॥

७८. अघि वघि मघि गत्याक्षेपे। आक्षेपो निन्दा, गतौ गमनारम्भे चेति स्वामी। अङ्घते। आनङ्घे। अङ्घिता इत्यादि। अञ्जिघिषते। 'न न्द्राः' इति नवर्जं द्विरुच्यते। अभ्यासस्य चुत्वेन झकारे जश्त्वे जकारः। अङ्घयति। आञ्जिघत्। वङ्घते। मङ्घते इत्यादि। प्राङ्घनमित्यादौ 'इजादेः सनुमः' इति नियमादणत्वम्॥ १०८–११०॥

७९. मघि कैतवे च॥ १११॥

८०. राघृ लाघृ द्राघृ सामर्थ्ये। राघते। रराघे। राघिता इत्यादि। रिराघिषते। राराघ्यते। राराघीति। रारान्घि। लङि अराराक्। राघयति। अरराघत्। ऋदित्त्वादुपधाह्रस्वनिषेधः। एवमितरयोरपि। उल्लाघः। 'अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः' इति क्ते इडभावस्तलोपश्च निपात्यते। 'उल्लाघः' इति वचनाद् अनुपसृष्टादन्योपसृष्टाच्च लाघितः, प्रलाघित इति भवति॥ ११२-११४॥

८१. द्राघृ आयामे च। आयामो दैर्घ्यक्रियेति कौशिकः। कदर्थनमिति स्वामी। ध्राघृ इति तवर्गचतुर्थादिमपि केचित्पठन्ति[1]॥ ११५॥

८२. श्लाघृ कत्थने। कत्थनं श्लाघनम्। देवदत्ताय श्लाघते। देवदत्तं स्तुवँस्तां स्तुतिं तमेव बोधयितुमिच्छतीत्यर्थः। "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" श्लाघादीनां प्रयोगे ज्ञीप्स्यमानो ज्ञपयितुमिष्यमाणः सम्प्रदानमिति देवदत्ताच्चतुर्थी, केचिदाहुः—'आत्मानं परं वा स्तुवन् तां स्तुतिमन्यं बोधयितुमिच्छतीत्यर्थः' इति। तथा च भट्टिः—'श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसेश्वरः[2]' इति। देवदत्तं श्लाघत इति ज्ञीप्स्यमानत्वाविवक्षायां कर्मत्वम्॥ ११६॥

८३. शीकादय उदात्ता अनुदात्तेतो गताः॥

---

१. द्र० क्षी० त०, ३० पृ०। २. भ० का० ८।७३।

अथ परस्मैपदिन आह—

८४. फक्क नीचैर्गतौ। इतः शिघ्यन्ता उदात्ता उदात्तेतः। 'नीचैर्गतिर्मन्दगमनमसद्व्यवहारो वा इति स्वामी। अधोगमनमिति केशवस्वामी। फक्कति। पफक्क। फक्किता। फक्किष्यति। फक्कतु। अफक्कत्। फक्केत्। आशिषि फक्क्यात्। अफक्कीत्। अफक्किष्यत्। कर्मादौ फक्क्यते इत्यादि। पिफक्किषति। पाफक्क्यते। पाफक्कीति। पाफक्ति। फक्कयति। अपफक्कत् ॥ ११७ ॥

८५. तक हसने। तकति। तताक। तेकतुः। तकिता। अतकीत्, अताकीद् इत्यादि। 'अतो हलादे' इति वा वृद्धिः। व्यतितकति। 'प्रतिषेधे हसादीनाम्' इति तङ्निषेधः। तक्यम्—'तकिशसि' इति यत् ॥ ११८ ॥

८६. तकि कृच्छ्रजीवने। तङ्कति। ततङ्क। तङ्किता इत्यादि। यङ्लुकि लङि ईडभावे—अतातन्। अस्यानन्तरं मैत्रेयः शुक गताविति पठित्वा 'शोकति, शुकः, शुक्र' इत्युदाजहार, अस्मिन्हि सति 'शुकवल्कोल्काः' इति शुभेः कनि भलोपे शुकशब्दनिपातनमनर्थकं स्यात्, इगुपधलक्षणेन कप्रत्ययेनैव सिद्धत्वात्। तथा शुके रग्विधानेनापि शुक्रशब्दसिद्धे 'ऋज्रेन्द्र' इत्यादौ शुचेर्निपातनमनर्थकं स्यादित्यस्य पाठोऽनार्ष इव प्रतीयते ॥ ११९ ॥

८७. बुक्क भषणे। भषणमिह श्वरवः। बुक्कति। बुबुक्क। बुक्किता इत्यादि। अयं चुरादावपि ॥ १२० ॥

८८. कख[1] हसने। कखति। चकाख। कखिता इत्यादि। अकखीत्, अकाखीत्। 'अतो हलादेः' इति वा वृद्धिः ॥ १२१ ॥

८९. ओखृ राखृ लाखृ द्राखृ ध्राखृ शोषणालमर्थयोः। ओखति। ओखाञ्चकार। ओखिता इत्यादि। ओचिखिषति। ओखयति। मा भवानोचिखत्। 'द्विर्वचनेऽचि' इति णिलोपस्य स्थानिवत्त्वात् खिशब्दस्य द्वितीयस्यैकाचो द्विर्वचनम्, ऋदित्त्वान्नोपधाह्रस्वः। इदमेव ऋदित्त्वं ज्ञापकम् 'अन्तरङ्गादपि द्विर्वचनात्पूर्वमुपधाह्रस्वत्वं भवति' इत्यस्य। अस्य च प्रयोजनं मा भवानिदिधदिति सिद्धिरित्येधतावुक्तम्। प्रोखति—"एङि पररूपम्" अवर्णान्तादुपसर्गादेङि परे पूर्वपरयोः पररूपमिति पररूपत्वम्। राखति। अरराखत्॥ लाखति॥ द्राखति॥ ध्राखति इत्यादि ॥१२२-१२६॥

९०. शाखृ श्लाखृ व्याप्तौ। शाखति। श्लाखति इत्यादि। शाखा—'गुरोश्च' इत्यकारः। शाखेव शाख्यम्—'शाखादिभ्यो यः' इति इवार्थे यः। प्रतिशाखं भवं प्रातिशाख्यम्—'अव्ययीभावाच्च' इति भवार्थे ण्यः। शाखा अस्य सन्तीति शाखी—'व्रीह्यादिभ्यश्च' इति इनिः। विशिष्टा शाखा विशाखा, सा प्रयोजनं प्रयोजिका यस्य वैशाखो मन्थः। 'विशाखाषाढादण्मन्थदण्डयोः' इति प्रयोजनेऽण्

---

१. 'खर्वे' इति क्षीरस्वामी।

प्रत्ययः । विशाखेति नक्षत्रं तत्र जातः, 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इत्यण् । तस्य 'श्रविष्ठाफल्गुनी' इत्यादिना लुकि 'लुक्तद्धितलुकि' इति स्त्रीप्रत्यस्य लुकि विशाखो माणवकः ॥ १२७–१२८॥

६१. उख उखि वख वखि मख मखि णख णखि रख रखि लख लखि इख[1] इखि[2] ईखि वलि रगि लगि अगि वगि मगि तगि त्वगि श्रगि श्लगि इगि रिगि लिगि गत्यर्थाः । द्वितीयान्ताः पञ्चदश, तृतीयान्तास्त्रयोदश । ओखति । प्रोखति । 'एङि पररूपम्' । उवोख । ऊखतुः । उवोखिथ । उवोख । गुणविषये 'अभ्यासस्यासवर्णे' इति अभ्यासस्येवर्णोवर्णयोरसवर्णेऽचि परत इयङुवङावित्युवङ् । लिटि पिद्वचनेषु गुणः, गुरुमानयं धातुरिति तेषां स्थानिवत्त्वेन लिट्त्वाद् आम्प्राप्तः सन्निपातपरिभाषया निवर्त्तते । आमि हि गुणनिमित्तप्रत्ययस्य 'आमः' इति लुक् स्यात् । ऊखतुरित्यादौ सवर्णदीर्घस्यान्तवत्त्वेनाभ्यासशेषत्वाद् ह्रस्वो न भवति, अभ्यासमात्राश्रयत्वेनान्तरङ्गेऽस्मिन् पूर्वपराश्रयस्य बहिरङ्गस्य सवर्णदीर्घस्य 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यसिद्धत्वात् । ओखिता इत्यादि । लुङि 'नेटि' इति वृद्धेर्निषेधे लघूपधगुणेन मा भवानोखीदिति भवति । ओचिखिषति—लघूपधगुणे कृते द्वितीयस्यैकाचो द्विर्वचनम् । ओखयति । मा भवानुचिखत् । द्विर्वचनात् पूर्वमेवोपधाह्रस्वत्वमिति ज्ञापितम् । ओखित्वा—'न क्त्वा सेट्' इति अकित्त्वाद्गुणः । भावादिकर्मणोर्निष्ठायाम्—'उदुपधात्' इति कित्त्वविकल्पनाद् उखितमनेन, ओखितमनेन इत्यादि नेयम् । उखो मुनिः—इगुपधत्वात्कः । उखेन प्रोक्त औखीयः श्लोकः—'तित्तिरिवरतन्तुखण्डिकोखाच्छण्' इति तृतीयान्तात् प्रोक्तार्थे छण् , णित्त्वाद् वृद्धिः । यदा तु प्रोक्तं छन्दो ब्राह्मणं वा तदा 'छन्दोब्राह्मणानि च तद्विषयाणि' इति नियमाद् अध्येतृवेदितृप्रत्ययविषयमेव । तेन 'तदधीते तद्वेद' इति औखीयशब्दाद् द्वितीयान्ताद् अध्येतृवेदित्रोरण् , तस्य 'प्रोक्ताल्लुक्' इति प्रोक्तप्रत्ययाच्छणः परत्वेन लुकि औखीयो माणवकः । औखीया ब्राह्मणीत्यत्र प्रत्ययलक्षणेनाणन्तत्वाद् 'टिड्ढाणञ्' इति न ङीप् भवति, अत इत्यनुवर्त्त्याणोऽकारस्य च विशेषणविशेष्यत्वाश्रयणाद् वर्णाश्रयत्वाद् 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति प्रत्ययलक्षणनिषेधात् । उखायां संस्कृतमुख्यम् 'शूलोखाद्यत्' इति सप्तम्यन्तात्संस्कृतमित्यर्थे यत् । प्रोखणम्—'कृत्यचः' इति णत्वम् ॥ उङ्खति । उङ्खाञ्चकार । उङ्खिता । उञ्चिखिषति । उङ्खयति । औञ्चिखत् इत्यादि । प्रोङ्खणम्—'इजादेः सनुमः' इति णत्वम् ॥ वखति । ववाख । वखिता इत्यादि । ववखतुरित्यादौ किति लिटि वकारादित्वादेत्वाभ्यासलोपौ न । लुङि अतो हलादेरिति वा वृद्धिः । अवखीत्, अवाखीत् इति । एवंपरेषामप्यनिदिताम् ॥ वङ्खयति । प्रवङ्खनम्—'इजादेः' इति नियमादणत्वम् ॥ मखति । ममाख । मखिता इत्यादि ॥ मङ्खति ॥ नखति ॥ नङ्खति । मूर्धन्यादेरुपदेश

---

१. मैत्रेयो न पठति । २. क्षीरस्वामी न पठति ।

'उपसर्गात्' इति णत्वेन प्रणखति इत्याद्यपि यथा स्यादिति । रखति ।। रङ्खति । प्ररङ्खणम्—'रषाभ्याम्' इति णत्वम् । इजादेरिति नियम उपसर्गात् 'कृत्यचः' इति प्राप्तस्यैव ।। लखति । लङ्खति ।। एखति । इयेख । एखिता इत्यादि ओखतिवत् ।। इङ्खति । इङ्खाञ्चकार ।। ईखति । ईखाञ्चकार । यद्यपि मैत्रेयेणादितस्त्रय इदित उखिवखिमखयः, मूर्द्धन्यादिर्णखिरनिदित्, इखिश्च न पठ्यन्ते, तथापि तदितरानेकव्याख्यातॄणां प्रामाण्यादस्माभिः पठिताः । अत्र चन्द्रः त्रखिमपि पपाठ । सम्मतायां तु त्रख त्रखि शिखि इति त्रयः पठ्यन्ते । द्रमिडास्तु रिखिमपि पठन्ति । एवमेकोनविंशतिः खान्ताः ।। वल्गति । रङ्गति । रङ्गन्त्यस्मिन् प्रेक्षकाणां मनांसीति रङ्गः—'हलश्च' इति संज्ञायामधिकरणे घञ् । रञ्जेर्वाऽयं द्रष्टव्यः । लङ्गति । विलगितः—'अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानम्' इति नलोपः । उपतापादन्यत्र लङ्गितः ।। अङ्गति । अङ्गत्यत्रावयवीत्यङ्गम्—रङ्गवद् घञ् । नाङ्गत्यत्रेति अङ्गो जनपदः—पूर्ववद् घञ् । अङ्गिरगतौ विपरीतलक्षणयात्र वर्तते, दर्श इत्यत्र दृशिवत् । न दृश्यतेऽस्मिन् चन्द्र इति हि दर्शशब्दो धूर्त्तस्वामिना व्युत्पादितः । कल्याणान्यङ्गान्यस्याः सन्तीति अङ्गना—'अङ्गात् कल्याणे' इति पामादिपाठान्मत्वर्थीयो नः । विशिष्टं विहीनं वाऽङ्गमस्येति व्यङ्गः, तस्यापत्यं व्याङ्गिः—'अत इञ्' 'स्वागतादीनां च' इति वृद्धिप्रतिषेधैजागमयोर्निषेधः । एवं स्वाङ्गिरित्यत्रापि । सर्वाङ्गं व्याप्नोतीति सर्वाङ्गीणः स्नायुस्तापो वा, 'तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति' इति सर्वादेः पथ्यायन्ताद् द्वितीयान्ताद् व्याप्नोतीत्यर्थे खः । अग्निः—'अङ्गेर्न लोपश्च' इति निप्रत्ययो नलोपश्च । अग्निर्देवता अस्य, आग्नेयं हविः—'सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः' इति ढक्प्रत्ययः । सर्वत्रेति वचनादर्थान्तरेऽप्ययमेव । अग्नीषोमौ, अग्नीवरुणौ—'ईदग्नेः सोमवरुणयोः' इति देवताद्वन्द्वलक्षणस्यानङोऽपवाद ईकारः । अग्नीवरुणौ देवता अस्य आग्निवारुणम्—'देवताद्वन्द्वे च' इत्युभयपदवृद्धिः । 'इद्वृद्धौ' इति वृद्धिमत्युत्तरपदे अग्नेरिकार ईत्वापवादः । अग्नायी—'वृषाकप्यग्निकुसितकुसिदानामुदात्तः' इति पुंयोगे ङीष्युदात्त ऐकारे चान्तादेशे आयादेशः । अग्नायी देवता अस्य आग्नेयम्—लिङ्गविशिष्टपरिभाषया 'सर्वत्राग्निकलिभ्यां ढक्' इति ढकि 'भस्याढे तद्धिते' इति 'पुंवद्भावपर्युदासे स्त्रीभ्यो ढको ग्रहणम्' इति कैयटादावुक्तत्वात्पुंवद्भावः । अग्निमिन्ध इति अग्निमिन्धः । 'भ्राष्ट्राग्न्योरिन्धे मुम्वक्तव्यः' इति मुम् । अग्रम्—'रुद्रेन्द्राग्र' इति निपातनाद्रकि नलोपः । अग्रे भवम् अग्रिमम्—'अग्रपश्चाड्डिमच्' इति डिमच् । अङ्गारः—'अङ्गिमदिमन्दिभ्य आरन्' इत्यारन् । अङ्गुलिः—'ऋतन्यञ्जि' इत्यादिना उलिप्रत्ययः । अङ्गुरिः—'बालमूल' इत्यादिना पक्षे रः । पञ्चाङ्गुलयः प्रमाणमस्य पञ्चाङ्गुलं:—"तद्धितार्थोत्तरपदसमाहारे च" तद्धितार्थे विषयभूते उत्तरपदे परतः समाहारे चाभिधेये

दिक्संख्ये समानाधिकरणेन समं समस्येते इति प्रमाणे तद्धितार्थे विषयभूते समासः । 'सङ्ख्यापूर्वो द्विगुः' इति द्विगुत्वे 'द्विगुश्च' इति तत्पुरुषश्चायम्; तत्र 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति प्रमाणोपाधिकादस्मात्प्रमाणिनि मात्रच्, तस्य 'द्विगोर्लुङ् नित्यम्' इति लुकि 'तत्पुरुषस्याङ्गुलेः सङ्ख्याव्ययादेः' इत्यचि 'यस्येति च' इतीकारलोपः । अत्यङ्गुलम्—'अत्यादयः क्रान्ताद्यर्थे' इति तत्पुरुषः, अव्ययादित्वादच् । शोभनाङ्गुलिः स्वङ्गुलिः, अत्यङ्गुलिः—"न पूजनात्" यान् शब्दानुपादाय समासान्तो विधीयते ते यदा पूजावचनात्परे भवन्ति तदा समासान्तो नेत्यत्राचोऽभावः । कुत्सिताङ्गुलिः किमङ्गुलिः—"किं क्षेपे" क्षेपे यः किं शब्दः स समानाधिकरणेन सुबन्तेन समर्थेन समस्यत इति तत्पुरुषः । 'किमः क्षेपे' इति क्षेपवचनादस्मात्परस्य समासान्तनिषेधाद् अज्न भवति । नाङ्गुलिः अनङ्गुलिः—अत्र 'नञस्तत्पुरुषात्' इति समासान्तनिषेधः । नञः परोत्तरपदान्तात्तत्पुरुषात्समासान्ता नेति सूत्रार्थः । पञ्चाङ्गुलिसदृशा अवयवा अस्य पञ्चाङ्गुल एरण्डः । धान्यादीनां विक्षेपदारुश्च पञ्चाङ्गुलमाहुः[1] । 'अङ्गुलेर्दारुणि' इति बहुव्रीहौ षच् । अङ्गुलीयकम्-संज्ञायां कन् । 'जिह्वामूलाङ्गुलेश्छः' इति सप्तम्यन्ताद्भवार्थे छः । अङ्गुलीयमेव अङ्गुलीयकम्—संज्ञायां कन् वङ्गतीति वङ्गः जनपदः । अङ्गवद्व्युत्पत्तिः । मङ्गतीति मङ्गलम्—मङ्गेरलच्' इत्यलच् । तङ्गति । त्रङ्गति । श्रङ्गति । श्लङ्गति । इङ्गति । रिङ्गति । लिङ्गति । लिगि चित्रीकरण इति चुरादौ च ॥ १२९-१५६ ॥

६२. त्वगि कम्पने च । त्वङ्गति ॥ १५७ ॥

६३. युगि जुगि वुगि वर्जने । युङ्गति । जुङ्गति । वुङ्गति इत्यादि[2] ॥१५८-१६०॥

६४. घघ हसने । घघति । जघाघ । घघिता इत्यादि ॥ १६१ ॥

६५. मघि मण्डने[3] । मङ्घति । मङ्घते कन्या स्वयमेव । अमङ्घिष्ट कन्या स्वयमेव । भूषाकर्मत्वान्न यक्चिणौ । मङ्घनः—'क्रुधमण्डार्थेभ्यश्च' इति युच् ॥ १६२ ॥

६६. शिघि आघ्राणे । शिङ्घति । शिङ्घानको रोगविशेषः । 'लूधूशिङ्घिधाञ्भ्यश्च' इत्यानक्प्रत्ययः ॥ १६३ ॥

६७. फक्कादय उदात्ता उदात्तेतः ॥

अथ क्रमप्राप्तांश्चवर्गान्तानात्मनेपदिन आह—

६८. वर्च दीप्तौ । ईजान्ता एतदादय उदात्ता अनुदात्तेतः । वर्चते । ववर्चे । वर्चिता । वर्चिष्यते । वर्चताम् । अवर्चत । वर्चेत । आशिषि—वर्चिषीष्ट । अवर्चिष्ट । अवर्चिष्यत । भावे—वर्च्यते इत्यादि । विवर्चिषते । वावर्च्यते । वावर्चीति, वावर्क्ति । अवावर्चीत् । अवावर्क्—'रात्सस्य' इति नियमान्न संयोगान्तलोपः । अवावर्क्

---

१. पादुलकमाहुः—ख. पुस्तके । २. अत्र स्वामि-मैत्रेयौ 'दघि पालने' इत्यधिकं सूत्रं पठतः; मैत्रेयस्तु 'लघि शोषणे' इत्यपि पठति । ३. क्षीरस्वामी नेदं सूत्रं पठति ।

स्थातेत्यादौ कुत्वस्यासिद्धत्वात् 'स्कोः' इति कलोपो न भवति। यद्वा तत्र निमित्त-निमित्तिनोः समानपदस्थत्व एव सलोप इतीह नैव प्रसङ्गः। वर्चयति। अवर्चत्। वर्चः दीप्तिः पुरीषञ्च—'असुन्' इत्यसुन्। वर्चस्कम् पुरीषम्—'संज्ञायां कन्'। 'सोऽपदादौ' इति विसर्जनीयस्य सत्वम्, 'कुप्वोः' इत्यस्यापवादः। ब्रह्मवर्चसम्। हस्तिवर्चसम्—'ब्रह्महस्तिभ्यां वर्चसः' इत्यच् समासान्तः। पल्यवर्चसम्, राजवर्चसम्—'पल्यराजभ्याञ्च' इत्यच्। ब्रह्मवर्चसस्य निमित्तं संयोग उत्पातो वा ब्रह्मवर्चस्यम् 'तस्य निमित्तप्रकरणे ब्रह्मवर्चसादुपसङ्ख्यानम्' इति यत्। वर्च्यम्—ण्यति 'चजोः कु घिण्ण्यतोः' इति कुत्वं न भवति। 'न क्वादेः' इत्यत्र 'क्वाद्यजिव्रजियाचिरुच्या-दीनां न प्रतिषेधो निष्ठायामनिटः कुत्ववचनात्' इत्युक्तत्वात्। अस्यार्थः—चजोः कु घिण्ण्यतोर्निष्ठायामनिटः' इति सूत्रं कर्त्तव्यम्, तेन 'न क्वादेः', 'अजिव्रज्योश्च' इति योगद्वयम्, 'यजयाचरुचप्रवचर्चश्च' इत्यत्र याचिरुच्यृचिग्रहणं न कर्त्तव्यं भवतीति, तेषां सेट्त्वादित्यभिप्रायः। अयमत्र विवेकः—ये क्वादयोऽन्ये वा निष्ठायामनिटस्तेषां कुत्वम्, ये तु सेटस्तेषां नेति। एवञ्चात्र मते ग्लुचादीनां कव-र्गादित्वेऽपि निष्ठायामनिट्त्वात्कुत्वेन भाव्यम्। अत्र हरदत्तः—'यथोत्तरं मुनीनां प्रामाण्यम्' इति वार्त्तिककारानुसारेण कुत्वस्य भावाभावौ व्यवस्थाप्याविति। कथन्तर्हि शोकः समुद्ग इति? यतः शुच्युब्जी निष्ठायां सेटौ। अत्र भाष्यम्—'शुच्युब्ज्योर्घञि कुत्वं वक्तव्यम्' इति। अत्र हरदत्तः—'तत्र यथान्यासेऽपि वक्तव्यं घञ्येव यथा स्याद्, ण्यति माभूत् इति, तदेव वार्त्तिककारपक्षे विध्यर्थं भवि-ष्यति' इति॥ १६४॥

९९. षच सेचने। अयं सेवनार्थोऽपि। तथा च 'त्रय एनां महिमानः सचन्ते' इत्यत्र क्षुरभट्टभास्करीययोः 'सचन्ते सेवन्ते' इति। निरुक्ते च 'सक्तुः सचित इति सेव्यमानस्य' इति। अस्यैतौ वाचकावित्यर्थः। 'प्रनू महि त्वं वृषभस्य वोचं यं पूरवो वृत्रहणं सचन्ते' इत्यत्र च सेवन्त इति। सचते। सेचे। सचिता। सचि-ष्यते। सचताम्। असचत। सचेत। आशिषि—सचिषीष्ट। असचिष्ट। असचिष्यत। 'स्तौतिण्योरेव' इत्यषत्वम्। सासच्यते। सासचीति, सासक्ति। साचयति। असीष-चत्। सक्तुः—'सितनिगमिमसिसचि' इति तुन्, 'तितुत्र' इतीण्निषेधः। सक्तुलः-'सिध्मादिभ्यः' इति मत्वर्थे लच्। सचिवः—बाहुलकाद्वप्रत्ययः इट् च। यद्वा—सचिः सेवा, इन्प्रत्ययः, तां वातीति सचिवः, आतोऽनुपसर्गे कः। यद्वा 'केशाद्वोऽन्यत-रस्याम्' इति वप्रत्ययः 'अन्येभ्योऽपि दृश्यते' इति मणिवराजीवादिवदस्मादपि। अयं समवाये स्वरितेदप्ने॥ १६५॥

१००. लोचृ दर्शने। लोचते। लुलोचे। लोचिता इत्यादि। लुलोचिषते। लोलो-च्यते। लोलोचीति, लोलोक्ति। लोचयति। अलुलोचत्। ॠदित्वाण्णौ चङि ह्रस्वा-भावः। भाषार्थोऽयं चुरादौ॥ १६६॥

१०१. शच व्यक्तायां वाचि । शचते । शेचे । शचिता इत्यादि । शची—इन्नन्तात् 'कृदिकारादक्तिनः' इति ङीष् ॥ १६७ ॥

१०२. श्वच श्वचि गतौ । श्वचते । शश्वचे । श्वचिता ॥ श्वञ्चते । शश्वञ्चे । श्वञ्चिता इत्यादि । शच्यादयस्तालव्यादयः ॥ १६८–१६९ ॥

१०३. कच बन्धने । कचते । चकचे । कचिता इत्यादि । कचते यूनां मनांसि बध्नातीति कचः—पचाद्यच् । काचः—'हलश्च' इति संज्ञायां घञ् ॥ १७० ॥

१०४. कचि काचि[1] दीप्तिबन्धनयोः । कञ्चते । चकञ्चे । कञ्चिता । काञ्चते । चकाञ्चे । काञ्चिता इत्यादि । कञ्चुकः—बाहुलकादुकप्रत्ययः । काञ्चनम्—अनुदात्तेत्त्वाद्युच् । काञ्चनस्य विकारः काञ्चनम्—'प्राणिरजतादिभ्योऽञ्' इति । रजतादित्वादञ् 'नित्यं वृद्धशरादिभ्यः' इति मयटोऽपवादः । काञ्चिः, काञ्ची । इन्नन्तात् 'कृदिकारादक्तिनः' इति वा ङीष् । काञ्चिकम्—संज्ञायां कन् । दीप्तौ चेति वक्तव्ये बन्धनग्रहणं प्रपञ्चार्थम् ॥ १७१–१७२ ॥

१०५. मच मुचि कल्कने । कल्कनं दम्भः शाठ्यं चेति मैत्रेयः । दम्भः कत्थनं चेति स्वामी । मचते । मेचे । मचिता ॥ मुञ्चते । मुमुञ्चे । मुञ्चिता इत्यादि । मुचेति चन्द्रः । तन्मते मोचत इत्यादि । मुच्लृ मोक्षणे इति तुदादौ । मुच प्रमोचने इति चुरादौ ॥ १७३–१७४ ॥

१०६. मचि धारणोच्छ्रायपूजनेषु । मञ्चते इत्यादि । मञ्चः—पचाद्यच् । शाकटायनस्तु मुचिं हित्वा द्वावेव धातू पपाठ—'मचि कल्कने, मच्लृ धारणोच्छ्रायपूजनेषु' इति । तेन चानुदात्तेत्स्थाने इदित् क्रियते तस्य च स्थाने लृदित् । धनपालस्तावत् शाकटायनानुसारी ॥ १७५ ॥

१०७. पचि व्यक्तीकरणे । पञ्चते । पङ्कः 'चजोः कु घिण्ण्यतोः' इति कुत्वम् । वार्त्तिकमते न्यङ्क्वादिर्द्रष्टव्यः । तेन हि निष्ठायामनिटः कुत्वमुच्यते । पञ्चन्—बाहुलकात्कनिन्प्रत्ययबहुवचनान्तः । तत्र 'ष्णान्ता षट्' इति षट्संज्ञाविधानात् 'षड्भ्यो लुक्' इति जश्शसोर्लुक् । पञ्चानामित्यत्र 'षट्चतुर्भ्यश्च' इत्यामो नुटि "नोपधायाः" नान्तस्योपधाया नामि दीर्घ इति दीर्घे 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः । स्त्रियामपीदमेव रूपम्, 'न षट्स्वस्रादिभ्यः' इति टापो ङीषश्च निषेधात् । अस्ति च टापः प्रसङ्गो नकारे लुप्ते । पञ्चानामपत्यं पाञ्चिः—बाह्वादित्वादिञ् । "नस्तद्धिते" नान्तस्य भस्य तद्धिते टिलोप इति टिलोपः । पङ्क्तिः—'पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्' इति 'तदस्य परिमाणम्' इति विषये तिप्रत्ययो निपात्यते । पञ्च परिमाणमस्य वर्गस्य पञ्चत् । 'पञ्चद्दशतौ वर्गे वा' इति डत्यन्तो निपातितः । वाग्रहणात् "संख्याया

---

१. क्षीरस्वामी मैत्रेयश्च नेमं पठतः ।

अतिशदन्तायाः कन्' इति कनि पञ्चकः। पचेति दुर्गः, तथा वर्धमानोऽपि। यदाह—'अनिडि्वधौ पच्यादिसूत्रे डुपचष्पाके पच व्यक्तीकरणे' इति। सम्मतायां तु वर्धमानवदुक्त्वा 'अन्यैस्त्वयमिदित् पठ्यते' इत्युक्तम्। 'तिङो गोत्रादीनि' इत्यत्र पचति गोत्रमित्युपादाय 'पच व्यक्तीकरणे' इति पठन् न्यासकारः परस्मैपदिनं च मन्यते। डुपचष्पाके इत्यग्रे। पचि विस्तारवचने इति चुरादौ ॥ १७६ ॥

१०८. ष्टुच प्रसादे। स्तोचते—'धात्वादेः षः सः'। ष्टुत्वं निमित्ताभावान्न भवति। सत्वात्पूर्वं तु पूर्वत्रासिद्धत्वेन न भवति। तुष्टुचे—'शर्पूर्वाः खयः' इति शेषः। स्तोचिता इत्यादि। तुस्तुचिषते। तुस्तोचिषते। स्तुचित्वा, स्तोचित्वा—'रलो व्युपधात्' इति क्त्वविकल्पः। 'स्तौतिण्योरेव' इति नियमात्सन्यषत्वम्। तोष्टुच्यते। तोष्टुचीति, तोष्टोक्ति। स्तोचयति। अतुष्टुचत्। स्तोकः—घञ्। उदश्वित्स्तोकम्—अल्पमुदश्विदित्यर्थः। "पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः"—पोटादिभिः समानाधिकरणैः जातिवाचि सुबन्तं समस्यते इति तत्पुरुषः। अत्रैव निर्देशाद् वार्त्तिककारमते कुत्वम्। स हि 'चजोः कु धिण्ण्यतोर्निष्ठायामनिटः' इति सूत्रं न्यास्थत्। स्तोकान्मुक्तः, स्तोकेन मुक्तः—स्तोकत्वेन मुक्त इत्यर्थः। 'करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य' इति तृतीयापञ्चम्यौ। 'असत्त्ववचनस्य' इति वचनात् स्तोकेन विषेण हत इति सत्त्ववचनात्तृतीयैव। स्तोकान्मुक्त इत्यत्र 'स्तोकान्तिक' इत्यादिना समासेऽपि 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुग्वचनात्तदेव रूपम्। संस्तोज इति वर्णविकाराभ्युपगमादिति मैत्रेयः ॥ १७७ ॥

१०९. ऋज गतिस्थानार्जनोपार्जनेषु। अयं पाठो मैत्रेयस्य। ऊर्जनेष्विति क्षीरस्वामिधनपालशाकटायनाः। अर्जते—'उरण् रपरः' इति रपरो गुणः। आनृजे—अत्र ऋजशब्दस्य द्विर्वचने हलादिशेषे 'उरत्' इति ऋवर्णान्ताभ्यासत्वादकारो भवन् 'उरण्रपरः' इति रपरः। पुनर्हलादिशेषे 'अत आदेः' इति दीर्घे 'तस्मान्नुड् द्विहलः' इति नुट्। ऋकारैकदेशस्यापि रेफस्य हल्त्वाश्रयणाद् द्विहल्त्वम्। तत्र हि द्विहल्ग्रहणं गौणस्येदृशस्य हलः परिग्रहार्थम्। अन्यथा तस्मान्नुडित्येव ब्रूयात्। न चाटतुरित्यादावेकहल्यतिप्रसङ्गः; 'अश्नोतेश्च' इत्यनेन द्विहलो यदि भवत्यश्नोतेरेवेति नियमात्। अस्याश्नातिमात्रनिवृत्त्यर्थत्वे 'नाश्नः' इत्येव ब्रूयात्। 'ऐऔच्' इत्यत्र 'द्विहल्ग्रहणं न करिष्यते' इति भाष्यम्। तत्र कैयटे—'अवर्णोपधस्य यदि भवति अश्नोतेरेव' इति नियमाश्रयेण द्विहल्ग्रहणं प्रत्याख्याय नुडुक्तः। अर्जिता। अर्जिष्यते। अर्जताम्। आर्जत। अर्जेत। आशिषि—अर्जिषीष्ट। आर्जिष्ट। आर्जिष्यत। अजादित्वादाडागमः। अर्जिजिषते—सनीटि गुणे 'न न्द्राः' इति रेफवर्जं द्विरुच्यते। अर्जयति। आर्जिजत्। प्राज्यते इत्यत्र कर्मादौ यकि "उपसर्गादृति

धातौ" अवर्णान्तादुपसर्गादृकारादौ धातौ परे पूर्वपरयोर्वृद्धिरेकादेश इति आर्वृद्धिः। आर्जित्वा—'न क्त्वा सेट्' इत्यकित्त्वाद्गुणः। ऋज्यम्—'ऋदुपधाच्चाक्लृपिचृतेः' इति भावकर्मणोः क्यप्॥ १७८॥

११०. ऋजि भृजी भर्जने। द्वितीय ईदित्। भर्जनं पाकविशेषः। ऋञ्जते। प्रार्ञ्जते—'उपसर्गादृति' इति वृद्धिः। ऋञ्जाञ्चक्रे आनृञ्जे इति सम्मतातरङ्गिण्योः, तदसत्; नुम्विधावुपदेशिवद्वचनात्। अत एव काश्यपमैत्रेयादयः सर्वे आममेव उदाजह्रुः। ऋञ्जिता। ऋञ्जिष्यते। ऋञ्जताम्। आर्ञ्जत। ऋञ्जेत। ऋञ्जिषीष्ट। आर्ञ्जिष्ट। आर्ञ्जिष्यत—'आटश्च' इति वृद्धिः। ऋञ्जिजिषते। 'न न्द्राः' इति नवर्जं द्विरुच्यते। ऋञ्जयति। मा भवान् ऋञ्जिजत्॥ भर्जते। बभृजे। भर्जिता इत्यादि। बिभर्जिषते। बरीभृज्यते। 'रीगृदुपधस्य च' इति रीक्। बर्भृजीति, बरिभृजीति, बरीभृजीति; बर्भर्क्ति, बरिभर्क्ति, बरीभर्क्ति इत्यादि। 'रुग्रिकौ च लुकि' इति रुग्रिकौ। भर्जयति। अबीभृजत्। उक्तं द्वा। अन्यदा—अबभर्जत्। भृक्तः, भृक्तवान्—'श्वीदितो निष्ठायाम्' इति अनिट्त्वम्। भर्गः—घञि कुत्वम्। भ्रस्ज पाके इति तुदादौ॥ १७९-१८०॥

१११. एजृ भ्रेजृ भ्राजृ दीप्तौ। एजते। प्रेजते—'एङि पररूपम्'। एजाञ्चक्रे। एजिता इत्यादि। एजिजिषते। एजयति। मा भवानेजिजत्—ऋदित्त्वान्नोपधाह्रस्वः; अन्यथैधत्यादिवद् द्विर्वचनात्पूर्वमेवोपधाह्रस्वः स्यात्। अङ्गमेजयतीत्यङ्गमेजयः। एवं जन्मेजयः—'एजेः खश्' इति ण्यन्तादस्मात्कर्मण्युपपदे खश्। शित्त्वात्सार्वधातुकत्वाच्छपि गुणायादेशौ। अन्यथार्धधातुकत्वात् 'ण्यल्लोपौ' इत्यादिना गुणं बाधित्वा णिलोपः स्यात्। खित्त्वात् 'अरुर्द्विषदजन्तस्य' इति पूर्वपदस्य मुम्। वृत्तौ तु 'एजृ कम्पने' इति परस्मैपदिण्यन्तात् खशुक्तः। उदेजयतीति उदेजयः। 'अनुपसर्गाल्लिम्प' इत्यादिना उत्पूर्वात् ण्यन्तादस्माच्छप्रत्यये शपि गुणायौ। अनुपसर्गग्रहणमर्थादस्य विशेषणम्, अत्राप्युपसर्गान्तरनिवृत्त्यर्थं च। तेन समुदेजयः इत्यादावपि णिलोपः। भ्रेजते। बिभ्रेजे। भ्रेजिता इत्यादि। बिभ्रेजिषते। बेभ्रेज्यते। बेभ्रेजीति, बेभ्रेक्ति। भ्रेजयति। अबिभ्रेजत्। 'ह्रस्वः' इति इकाराभ्यासस्य, पूर्ववदृदित्त्वान्नोपधाह्रस्वः। भ्राजते इत्यादि भ्रेजवत्। 'व्रश्चभ्रस्जसृज' इत्यादिना झलि पदान्ते च विधीयमानं षत्वमस्य नास्ति; राजिसाहचर्यात्फणादिपठितस्यैव तत्र ग्रहणादिति मैत्रेयक्षीरस्वामिसम्मताकारादयः। एवं च 'अवश्यपठितव्येन फणादिकेन भ्राजते इत्यादीनां सिद्धेरिह पाठोऽनार्ष इव' इति न्यासोक्तं दुरुक्तम्। यद्वा—तत्रापीवशब्देन पूर्वोक्त एव पक्षः सूच्यते। भ्राजयति। अबिभ्रजत्, अबिभ्राजत्। 'भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्' इति चङ्परे णौ उपधाह्रस्वविकल्पः। एवञ्चास्य ऋदित्त्वमनुदात्तेत्त्वमात्रफलम्। भ्राजिष्णुः—'भुवश्च' इति चकारादिष्णुच्। विभ्राक्—'भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्' इति ताच्छीलिके क्विप्। 'चोः कुः' इति कुत्वम्। व्रश्चादिसूत्रे राजिसाहचर्यात्

फणादिकस्यैव ग्रहणमित्युक्तत्वान्न षत्वम्। यत्तु वृत्तौ क्विप्सूत्रे विभ्राडिति कृतषत्वस्यैवोदाहरणन्तद् द्व्यनुबन्धकत्वेऽपीह फणादिकमपि गृह्यत इति सूचयितुम्, न त्वस्यापि षत्वमस्तीति। अत्र रेजिरपि क्वचित्पठ्यते, तदनार्षमिव। यदाह भट्टभास्करः—"'रेजते अग्ने पृथिवी मखेभ्यः' इत्यत्र राजतेश्छान्दसत्वम्" इति॥ १८३॥

११२. ईज गतिकुत्सनयोः। ईजते। ईजाञ्चक्रे। ईजिता इत्यादि। कर्मादौ ईज्यते इत्यादि। ईजिजिषते। ईजयति। मा भवानिजिजत्—द्विर्वचनात्पूर्वं 'णौ चङि' इति ह्रस्व इत्युक्तम्॥ १८४॥

११३. वर्चादय उदात्ता अनुदात्तेतः॥

११४. शुच शोके। एतदादयो व्रजान्ता उदात्ता उदात्तेतः। शोचति। शुशोच। शोचिता। शोचिष्यति। शोचतु। अशोचत्। शोचेत्। आशिषि—शुच्यात्। अशोचीत्। अशोचिष्यत्। कर्मणि—शुच्यते इत्यादि। शुशुचिषति, शुशोचिषति। शुचित्वा, शोचित्वा—क्त्विवविकल्पः। शोशुच्यते। शोशुचीति, शोशोक्ति। शोचयति। अशूशुचत्। 'दीर्घो लघोः'। शोचनः—'जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः' इति तच्छीलादौ युच्। प्रशुचितः, प्रशोचितः—'उदुपधाद्' इति क्त्वविकल्पः। शूद्रः—'शुचेर्दश्च' इति रक्प्रत्ययो दकारादेश उपधादीर्घश्च। 'शूद्रा चामहत्पूर्वा जातिः' इत्यजादिपाठात् 'जातेरस्त्रीविषयाद्' इति ङीषं बाधित्वा स्त्रियां टापि शूद्रा। जातिवचनात्पुंयोगे शूद्री इति ङीष् भवति। अमहत्पूर्वेत्युक्तेर्महाशूद्रशब्दाज्जातिलक्षणो ङीषेव भवति महाशूद्रीति। महाशूद्रशब्दो ह्याभीरजातिवचनः। अयमेवामहत्पूर्वस्येति प्रतिषेधो ज्ञापकः स्त्रीप्रत्ययेषु तदन्तविधेः। शोकः—घञ्। वार्त्तिकमते 'तुन्दशोकयोः' इति निपातनात् कुत्वमेष्टव्यम्। ईशुचिर् पूतीभाव इति दिवादौ॥ १८५॥

११५. कुच शब्दे तारे। कोचति। चुकोच। कोचिता इत्यादि पूर्ववत्। कुचः—इगुपधात्कः। 'क्रुच गतौ' इति स्वामी[1]। अयं सम्पर्चनार्थे ज्वलादौ, पुनः पाठे प्रयोजनं तत्रैव वक्ष्यते। सङ्कोचनार्थस्तुदादौ॥ १८६॥

११६. कुञ्च क्रुञ्च कौटिल्याल्पीभावयोः। दन्त्योपधाविमौ। 'गतिकौटिल्याल्पीभावयोः, गतेः कौटिल्ये द्रव्याल्पत्वे च' इति क्षीरस्वामी। कुञ्चति। चुकुञ्च। कुञ्चिता इत्यादि। चुकुञ्चिषति। चोकुच्यते 'अनिदिताम्' इति नलोपः। चोकुञ्चीति—'न लुमताङ्गस्य' इति निषेधात् प्रत्ययलक्षणेन नलोपो न भवति। चोकुङ्क्ति इति कुत्वेन चकारे निवर्त्तिते 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति ञकारे निवृत्तेऽनुस्वारस्य पुनः परसवर्णो ङकारः। अचोकुञ्चीत्। अचोकुन्—संयोगान्तलोपे सति पूर्ववन्निमित्ताभावात् ञकारेऽनुस्वारे च निवृत्ते नकारोऽवतिष्ठते। कुञ्चयति। अचुकुञ्चत्—चङ्पक्षः 'अनिदिताम्' इति नलोपो णिलोपस्य स्थानिवत्त्वात् 'असिद्धवदत्र' इत्यसिद्धत्वाद्वा व्यवधानान्न भवति। कुचितः, कुचिते-

१. क्षीरतरङ्गिण्यामत्र 'क्रुञ्च गतौ' इत्युपलभ्यते, न तु 'कुच गतौ' इति ध्येयम्।

वान्—'अनिदिताम्' इति नलोपः । कुञ्चित्वेत्यत्र तु 'न क्त्वा सेट्' इत्यकित्त्वान्न-लोपो न भवति । निकुचितमनेन इत्यादौ भावादिकर्मणोः 'उदुपधाद्' इति कित्त्व-विकल्पो न भवति, 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति । तथा चास्याः परिभाषायाः प्रयोजनवार्त्तिकम्—'उदुपधत्वमकित्त्वस्य निकुचिते' इति । इदमेवास्य नोपधत्वे मानम् । अत एवोदित्पाठिनौ चन्द्राभरणकारौ प्रत्युक्तौ; यतस्त-न्मते 'उदितो वा' इति क्त्वायामिटो विकल्पनान्निष्ठायाम् 'यस्य विभाषा' इति प्रतिषेधात्सेटो निष्ठाया एवाभावः । इदित्पाठोऽप्यनेनैव प्रत्युक्तः; यत इदित्वान्न-लोपस्य नैव प्रसङ्गः । निकुचतिरित्यत्र 'तितुत्रथसिसुसरकसेषु च' इति तिप्रत्ययस्य विधीयमानमनिट्त्वं तितुत्रेष्वग्रहादीनामित्युक्तत्वान्न भवति । एवं क्रुञ्चति । चुक्रुञ्च इत्यादि । क्रुङ्—'ऋत्विक्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' इति क्विन्, तस्य सर्वापहारी लोपः । पदत्वे चकारस्य संयोगान्तलोपे "क्विन्प्रत्ययस्य कुः" क्विन्प्रत्ययो यस्माद्विहितस्तस्य पदस्य कवर्गादेश इति नकारस्य ङकारः । संयोगा-न्तलोपात्पूर्वं प्रत्ययलक्षणेन 'अनिदिताम्' इति लोपो न भवति । ऋत्विगित्यादि-भिर्निपातनैः साहचर्याद् अन्यस्याप्यलाक्षणिकस्य कार्यस्य ज्ञापनात् । तदुक्तं वृत्तौ—'नलोपः कस्मान्न भवति ? ऋत्विगित्यादिनिपातनैः साहचर्यात्' इति । अत एव साहचर्यादुपपदाधिकारेऽपि केवलात् क्विन्प्रत्ययः । क्रुञ्चा—अजादि-पाठाद्धलन्तादपि टाप् । क्रुञ्चैव क्रौञ्चः—'प्रज्ञादिभ्यश्च' इति स्वार्थेऽण् प्रत्ययः । क्रुञ्चास्मिन्नस्तीति क्रुञ्चकीयो देशः-'क्रुञ्चा ह्रस्वत्वं च' इति नडादिपाठात् चातुरर्थिकः छप्रत्ययस्तत्सन्नियोगेन तुगागमो ह्रस्वत्वं च । 'चोः कुः' इत्यत्र यदुक्तं वामनेन—"क्रुञ्चेत्यत्र सञ्ज्ञीति वचनाज्जकारस्य चकारे झलि परतः कुत्वं न भवति, 'युजि-क्रुञ्चाञ्च' इति निपातनाद्वा । नकारोपधो वा धातुरयं रेफवर्जितः कुञ्च कौटिल्या-ल्पीभावयोरिति पठ्यते, नलोपो निकुचित इत्यत्र दृश्यते, युजिक्रुञ्चामिति तस्यैव रेफाधिको नलोपाभावश्च निपात्यते" इति; तत्क्रुञ्चेर्नोपधत्वेऽपि क्रुञ्चाशब्दे न दोष इत्येवम्परम्, न त्वयं धातुर्नास्ति सन्वा नकारोपध इत्येवम्परम् । स्पष्टं चैवं तत्र न्यासपदमञ्जर्योः । 'न क्त्वा सेट्' इत्यत्र च द्वावपि धातू न्यासकृतोपात्तौ । तथा 'ऋत्विक्' इत्यादिसूत्रे जयादित्यश्च—'क्रुञ्चः । नलोपः कस्मान्न भवति ? निपातनैः साहचर्यात्' इति ॥ १८७–१८८ ॥

११७. लुञ्च अपनयने । लुञ्चतीत्यादि पूर्ववत् । लुचित्वा, लुञ्चित्वा –'वञ्चिलुञ्च्यृ-तश्च' इति सेटः क्त्वः कित्त्वविकल्पनात् पक्षे नलोपः । केचिदमुमुदितं पठन्ति, तदनार्षम्; राजदन्तादिषु 'मृष्टलुचितम्' इति पाठात् । उदित्त्वे हि क्त्वायाम् 'उदितो वा' इतीटो विकल्पनाद् निष्ठायाम् 'यस्य विभाषा' इति प्रतिषेधाल्लु-ञ्चितमिति न स्यात् ॥ १८९ ॥

११८. अञ्चु गतिपूजनयोः । अञ्चति । आनञ्च । अञ्चिता इत्यादि । गतौ

व्यत्यञ्चतीत्यत्र 'न गतिहिंसा' इति तङ्निषेधः। पूजायां तु 'नाञ्चेः पूजायाम्' इति नलोपनिषेधाद् अञ्च्यते गुरुः, अञ्च्यात् इत्यादि भवति। अञ्चित्वा, अङ्क्त्वा— 'उदितो वा' इति इड्विकल्पः। इटि 'न क्त्वा सेट्' इत्यकित्त्वान्नलोपाभावः। निष्ठायाम् 'यस्य विभाषा' इतीटः प्रतिषेधात् समक्नम् इति, 'अञ्चोऽनपादाने' इति निष्ठानत्वम्। अपादाने तु उदक्तमुदकं कूपात् इति। पूजायां तु क्त्वानिष्ठयोः 'उदितो वा' इति विकल्पं 'यस्य विभाषा' इति निषेधं च बाधित्वा 'अञ्चेः पूजायाम्' इति नित्यमिट्। अञ्चित्वा गुरून्, अञ्चिता अस्य गुरवः—इत्यत्र 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्त्तमाने क्तः। मतिरिच्छा, बुद्धिर्ज्ञानम्, पूजा सत्कारः, 'क्तस्य च वर्त्तमाने' इति 'न लोकाव्यय' इति निषेधं बाधित्वा कर्त्तरि षष्ठी। अस्याश्च 'क्तेन च पूजायाम्' इति समासो निषिध्यते। 'पूजितो यः सुरासुरैः' इत्यत्र वर्त्तमानक्तेन तक्रकौण्डिन्यन्यायेन भूते क्तस्य बाधात् तृतीया चिन्त्या। यद्वा— तेनेत्यधिकारे 'उपज्ञाते' इति भूते क्तेन निर्देशाद् अयं वर्त्तमानक्तेन न बाध्यत इति सामान्येन ज्ञापकाश्रयणेनायं प्रयोगः समर्थनीयः। तैलमुदच्यतेऽस्मिन्निति तैलोदङ्कश्चर्मभस्त्रिकादिः। 'उदङ्कोऽनुदके' इति घञ्निपात्यते। उदके तु उदकोदञ्चनम्—ल्युट्। 'पुंसि संज्ञायाम्' इति घस्तु न प्रत्युदाहृतः, घघञो रूपे स्वरे वा विशेषाभावात्। घञ्यपि कृदुत्तरपदप्रकृतिस्वरमाद्युदात्तत्वं बाधित्वा 'थाऽथघञ्क्ताजबित्रकाणाम्' इति उत्तरपदमन्तोदात्तमेव। प्रत्यञ्चतीति प्रत्यङ्—'ऋत्विक्' इत्यादिना क्विनि 'अनिदिताम्' इत्यादिना नलोपे सौ 'उगिदचां सर्वनामस्थाने' इति नुमि हल्ङ्यादिसंयोगान्तलोपयोः 'क्विन्प्रत्ययस्य कुः' इति कुत्वं ङकारः। प्रत्यञ्चौ इत्यादि। भसंज्ञायां तु "अचः" लुप्तनकारस्याञ्चतेरकारस्य लोपो भसंज्ञायामित्यल्लोपे, "चौ" लुप्तनकाराकारेऽञ्चतौ परे पूर्वपदस्य दीर्घ इति दीर्घे प्रतीचः इत्यादि। हलादौ जश्त्वं प्रत्यग्भ्याम् इत्यादि। प्रत्यक्षु इत्यत्र 'खरि च' इति चर्त्वम्। नपुंसके तु स्वमोर्लुकि प्रत्यक्। द्विवचनबहुवचनयोः— 'नपुंसकाच्च' इति शीभावे भत्वे पूर्ववदल्लोपदीर्घयोः प्रतीची; 'जश्शसोः शिः' इति तस्य सर्वनामस्थानत्वाद् 'नपुंसकस्य झलचः' इति नुमि प्रत्यञ्चि। शेषं पूर्ववत्। स्त्रियाम् प्रतीची—'अञ्चतेश्चोपसंख्यानम्' इति ङीपि भत्वे पूर्ववदल्लोपदीर्घत्वे। पूजायां तु सर्वत्र नकारस्य लोपनिषेधाच्छ्रवणम्। अत एव 'अचः', 'चौ' इति अल्लोपदीर्घत्वेऽपि न भवतः—प्रत्यङ्, प्रत्यञ्चौ इत्यादि। पदत्वे संयोगान्तलोपे 'क्विन्प्रत्ययस्य' इति कुत्वं ङकारः। सप्तमीबहुवचने "ङ्णोः कुक्टुक् शरि"—ङकारणकारयोः पदान्तयोर्यथासंख्यं कुक्टुकौ शरि वेति कुकि 'चयो द्वितीयाः शरि पौष्करसादेः' इति वा खकारे प्रत्यङ्क्षु, प्रत्यङ्षु, प्रत्यङ्ख्षु इति त्रीणि रूपाणि। नपुंसके शिभाव-शीभावावेव विशेषः। उत्पूर्वत्वे 'उद ईत्' इति उदः परस्य लुप्तनकारस्याञ्चतेरादेः भसंज्ञायामीकारे उदीचः इत्यादि। अन्यत्सर्वं

प्रत्यक्शब्दवत्। प्रतीच्यादिभ्यो 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः' इति दिगादिवृत्तिभ्यः सप्तम्याद्यन्तेभ्यः स्वार्थे वाऽस्तातिः। दिशि दृष्टः शब्द इह दिक्शब्दः। 'अञ्चेर्लुक्' इत्यस्तातेर्लुक्। 'लुक्तद्धितलुकि' इति स्त्रीप्रत्ययस्य लुक्। प्रत्यग्वसति। प्रत्यगागतः। प्रत्यग्रमणीयम् इत्यादि। प्रत्ययलक्षणेन तद्धितान्तत्वात् 'तद्धितश्चासर्वविभक्तिः' इति अव्ययत्वात्सुपो लुक्। अस्तातेरभावे प्रतीच्यां वसति। प्रतीच्यामागतः। प्रतीची रमणीया इत्यादि। प्रागेव पुरुषः प्राचीनः। प्रागेव कुलं प्राचीनम्। प्राच्येव ब्राह्मणी प्राचीना—'विभाषाञ्चेरदिक्स्त्रियाम्' इत्यञ्चत्यन्तात् प्रातिपदिकात्स्वार्थे वा खः। 'अदिक्स्त्रियाम्' इत्युक्तत्वाद् दिग्वृत्तेरप्यस्तात्युत्तरादव्ययादलिङ्गाद् स्त्रीवृत्तित्वात्खो भवति प्राचीनं दिक् इति। यदा सप्तमीपञ्चम्योरर्थस्याभिहितत्वात् प्रातिदिकार्थत्वात् प्रथमैव— प्राचीनं दिशि वसति, प्राचीनं दिश आगत इति। तथा च स्थानिवत्सूत्रे भाष्यम्- 'प्राचीनं ग्रामादाम्राः' इति। प्राचि देश इत्यर्थः। खान्तोऽयं स्वभावान्नपुंसकलिङ्गः। प्राच्यम्। अपाच्यम्। उदीच्यम्। प्रतीच्यम्— 'द्युप्रागपागुदक्प्रतीचो यत्' इति शैषिको यत्। सम्यङ् 'समः समिः' इति अञ्चतावप्रत्ययान्त उत्तरपदे समः सम्यादेशः। तिर्यङ्—'तिरसस्तिर्यलोपे' इति 'अचः' इति लोपाभावे तिर्यादेशे यण्, लोपे तु तिरश्च इत्यादि। सहाञ्चतीति सध्र्यङ्- 'सहस्य सध्रिः' इत्यञ्चतावप्रत्ययान्त उत्तरपदे सध्र्यादेशः। विष्वगञ्चतीति विष्वद्र्यङ्, देवानञ्चतीति देवद्र्यङ्—'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' टेरद्र्यादेशोऽञ्चतावप्रत्ययान्त उत्तरपदे। चकारात्सर्वनाम्नश्च सर्वद्र्यङ् इत्यादि। अदसोऽद्र्यादेशे मतभेदः। 'अदसोऽसेर्दादु दो मः' इति असकारान्तस्यादसो दकारात्परस्य विधीयमानमुत्वमकाररेफयोरपि, तथा 'दो मः' इति मत्वमपि द्वयोरपि दकारयोरिति अमुमुयङ् इति भवतीति केचित्। अदसो रेफादेशस्योकारस्य तदिकारापेक्षो यण् उत्वस्य पूर्वत्रासिद्धत्वान्न भवति। शसादौ भत्वे 'अचः' इत्यल्लोपे 'चौ' इति अद्रेरकारस्य दीर्घे पूर्ववदुकारस्य रेफादेशस्य यणभावे अमुमुईचः इत्यादि। अपरे तूत्वमत्वे अन्त्यसदेशयोरेव रेफदकारयोरिति अदमुयङ् इति रूपं प्रतिपन्नाः। अत्रापि पूर्ववदुकारस्य यणभावः शसादावल्लोपादि च। अन्ये तु असेरिति पदम् 'अः सेः सकारस्थानिकोऽकारो यस्य' इति व्याचक्षाणा अद्र्यादेशे त्यदाद्यत्वाभावान्नोत्वमत्वे इति अदद्र्यङ् इति रूपमाहुः। तथा च श्लोकवार्त्तिकम्—

अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत्। केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते॥

अञ्चु गतियाचनयोरित्यग्रे स्वरितेत्। विशेषणार्थोऽयं चुरादौ॥ १९०॥

११९. वञ्चु चञ्चु तञ्चु त्वञ्चु म्रुञ्चु[1] म्लुञ्चु[1] म्रुचु म्लुचु गत्यर्थाः। वञ्चति। ववञ्च। वञ्चिता इत्यादि। आशीर्लिङि यासुटः कित्वादनुनासिकलोपे वच्यात्। विवञ्चि-

१-१. क्षीरस्वामी न पठति; 'म्लुञ्चु' इति ख. पुस्तकेऽपि नास्ति।

षति। वनीवच्यते। 'नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्' इति यङ्लुकोरभ्यासस्य नीगागमः। वनीवञ्चीति, वनीवङ्क्ति। यङो लुका लुप्तत्वान्नलोपाभावः। वनीवक्त इत्यादौ तसादीनां ङित्त्वेन नलोपः। माणवकं वञ्चयते—विप्रलम्भते इत्यर्थः। 'गृधिवञ्च्योः प्रलम्भने' इति ण्यन्ताभ्यामाभ्यामकर्त्रभिप्रायेऽपि तङ्। प्रलम्भनं मिथ्याफलाख्यानम्। अतोऽन्यत्र वञ्चयति, वञ्चयते इत्युभयं भवति। वङ्क्त्वा, वञ्चित्वा, वचित्वा—'उदितो वा' इतीड्विकल्पः। 'वञ्चिलुञ्च्यृतश्च' इति सेटः क्त्वो वा कित्वविधानात्पक्षे नलोपः। वक्तः, वक्तवान्—'यस्य विभाषा' इत्यनिट्त्वम्। वञ्च्यं वञ्चन्ति वणिजः—गन्तव्यं गच्छन्तीत्यर्थः। 'ऋहलोर्ण्यत्' इति ण्यति 'चजोः कु घिण्ण्यतोः' इति कुत्वं 'वञ्चेर्गतौ' इति निषिध्यते। अन्यत्र वङ्क्यं काष्ठमिति कुत्वं भवति। कुटिलमित्यर्थः। वक्रम्—'स्फायितञ्चि' इत्यादिना रक्॥ चञ्चति इत्यादि पूर्ववत्। चञ्चत्। चञ्चन्नेव कश्चिद् विशेषः चञ्चत्कः—यश्च मण्यादिः स्वयमचञ्चन्नपि प्रभया चञ्चन्निव लक्ष्यते सोऽपि चञ्चत्कः। 'स्थूलादिभ्यः प्रकारवचने कन्' इत्यत्र चञ्चद्बृहतोरुपसंख्यानात् कन्। प्रकारश्च भेदः सादृश्यं च। अपरे 'चञ्चाबृहतोरुपसंख्यानम्' इति पठन्ति. तृणमयः पुरुषश्चञ्चा, तत्प्रकारश्चञ्चकः। 'केणः' इति ह्रस्वः॥ तञ्चति। तक्रम्—'स्फायितञ्चि' इत्यादिना रक्॥ त्वञ्चति॥ म्रुञ्चति॥ म्लुञ्चति॥ म्रोचति। म्लोचति। अम्रुचत्, अम्रोचीत्। अम्लुचत्। अम्लोचीत्। 'जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च' इति च्लेर्वाऽङ्। मुम्रुचिषति। मुम्रोचिषति। म्रुचित्वा। म्रोचित्वा। 'रलो व्युपधाद्' इति कित्त्वविकल्पः। भावादिकर्मणोः उदुपधादिति कित्त्वविकल्पनाद् म्रुचितमनेन, म्रोचितमनेन इत्यादि। एवं म्लुचेरपि। सर्वेषामुदित्वेन क्त्वायामिड्विकल्पनान्निष्ठायामनिट्त्वम्। वञ्चु प्रलम्भन इति चुरादौ। तञ्चू सङ्कोचने इति रुधादौ॥ १९१–१९८॥

१२०. ग्रुचु ग्लुचु कुजु खुजु स्तेयकरणे। ग्रोचति। जुग्रोच। ग्रोचिता इत्यादि। ग्लोचति इत्यादि ग्रुचिवत्। जॄस्तम्भुसूत्रे ग्रुचिमपि केचित्पठन्ति। कोजति। खोजति। इमावपि ग्रुचिवत्, अङभावो विशेषः प्रनिकोजति। प्रनिखोजति—'शेषे विभाषा' इति उपसर्गस्थान्निमितात्परस्य नेर्णत्वं तत्रैव सूत्रे 'कखादावषान्त उपदेशः' इति पर्युदासान्न भवति। शेषश्च गदादिव्यतिरिक्तो धातुः। ग्रोकः, ग्रोक्यम्—घञ्ण्यतो 'चजोः कु घिण्ण्यतोः निष्ठायामनिटः' इति वार्त्तिकसूत्रेण कुत्वम्॥१९९–२०२॥

१२१. ग्लुञ्चु षस्ज गतौ। ग्लुञ्चति। जुग्लुञ्च। ग्लुञ्चिता इत्यादि। लुङि 'जॄस्तम्भु' इत्यादिना वाऽङि नलोपे - अग्लुचत्, अग्लुञ्चीत्। अङ्विधौ ग्लुचिग्लुञ्च्योरेकतरोपादानेनापि अग्लुचद्, अग्लोचीद्, अग्लुञ्चीद् इति सिद्धौ उभयोपादानमर्थभेदादिति केचित्। अपरे तूभयोपादानसामर्थ्याद् ग्लुञ्चेर्नलोपो न भवतीति अग्लुञ्चत् इति चतुर्थमपि रूपमाहुः, इदमुद्भाष्यम्; अन्यतरोपादाने-

नापि रूपत्रयसिद्धेरन्यतरच्छक्यमकर्तुमिति प्रतिपादितत्वात्। अनेकार्थत्वाद् धातूनामत्र विषयेऽर्थभेदो न प्रयोजक इति तत्र कैयटे। ग्लुचित्वा, ग्लुक्त्वा ॥ सज्जति—'धात्वादेः षः सः' इति द्वितीयस्य सकारस्य जश्त्वेन शकारे तस्य 'झलां जश् झशि' इति जश्त्वेन जकारः। ससज्ज। सज्जिता इत्यादि। सिसज्जिषति, सिसज्जयिषति—'स्तौतिण्योरेव' इति नियमादणावषत्वम्, हेतुमति च' इत्यत्र 'यद्भिप्रायेषु सज्जन्ते' इति भाष्यप्रयोगादयमात्मनेपद्यपि। अतोऽस्यात्मनेपदित्वं दूषयन्तो वर्द्धमानक्षीरस्वाम्यादय एव दुष्टाः। अत्र सश्चिमपि केचित्पठन्ति, 'तमजिह्वा असश्चत' इत्यादि च दृश्यते ॥ २०३-२०४ ॥

१२२. गुजि अव्यक्ते शब्दे। गुञ्जति। जुगुञ्ज। गुञ्जिता इत्यादि। गुञ्जा 'गुरोश्च हलः' गुरुमतो हलन्ताद्धातोरकार इत्यकारः। गुञ्ज्यते इदित्त्वान्नलोपाभावः। अत्र स्वामी 'अनिदिदित्येके' इति भूसूत्रे। सुधाकरस्तु अनिदित्पारायणेष्वपाठीत्, लक्ष्ये पुनरिदमविगीतमिति। शाकटायनस्तु द्वावपि पपाठ। गुञ्ज शब्दे इति तुदादौ ॥२०५॥

१२३. अर्च पूजायाम्। अर्चति। आनर्च। अर्चिता इत्यादि। अयं युजादौ स्वरितेत् पठिष्यते। तत एवार्चतीति सिद्धे क्रियाफलस्य कर्तृगामित्वेऽपि परस्मैपदार्थं इह पाठः। अयमात्मनेपदीति शाकटायनः, प्रयोजनं तु तन्मते क्रियाफलस्याकर्तृगामित्वेपि तङ्। 'यः पूर्णादुदचति' 'अविरघ्नीमुदचन्त्वाप' इत्यादिदर्शनात् 'अच इत्येके' इत्याभरणोक्तं युक्तम् ॥ २०६ ॥

१२४. म्लेच्छ अव्यक्ते शब्दे। इहाव्यक्तशब्दोऽस्फुटशब्दोऽपशब्दश्च। उक्तं हि पस्पशायाम् 'तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः' इति। 'न म्लेच्छितवा इत्यस्य पर्यायो नापभाषितवा' इति कैयटे। म्लेच्छति। मिम्लेच्छ। म्लेच्छिता इत्यादि। "दीर्घात्" दीर्घाच्छकारे परतो दीर्घस्य तुगिति तुक्। "तस्मिन्निति निर्दिष्टे पूर्वस्य" इति सप्तमीनिर्देशे पूर्वस्य षष्ठी प्रकल्प्येति दीर्घस्येति लाभः। ननु 'तस्मादित्युत्तरस्य' इति पञ्चमीनिर्देशे उत्तरस्य षष्ठी प्रकल्प्येत्युक्तत्वादिह चानवकाशया दीर्घादिति पञ्चम्या 'छे च' इत्यत्र सावकाशाया छ इति सप्तम्या एव षष्ठी प्रक्लृप्तियुक्ता, ततश्च तुकः कित्त्वेन छकारात्परत्वे श्चुत्वचर्त्वयोर्म्लेच्चतीति द्विचकारकं रूपं स्यात्, नैष दोषः; यतः 'विभाषा सेनासुराच्छाया' इति निर्देशाल्लिङ्गात् पञ्चम्या एव षष्ठी प्रकल्पयिष्यते। मिम्लेच्छिषति। मेम्लेच्छयते। मेम्लेच्छीति, मेम्लेष्टि। मेम्लेष्टः। मेम्लेच्छति इत्यादि। झलि 'व्रश्च' इत्यादिना षत्वे ष्टुत्वम्। मेम्लेक्षि—'षढोः कः सि' इति कत्वे षत्वम्। मेम्लेश्मि। मेम्लेश्म इत्यत्र "च्छ्वोः शूडनुनासिके च" इति च्छकारवकारयोर्यथासङ्ख्यं शकरोठावादेशौ भवतोऽनुनासिकादौ प्रत्यये झलादौ च क्ङितीति च्छकारस्य शकारः। अयं च 'क्रमश्च क्त्विच्छ्वोः' इति निर्देशात्सतुक्कस्य। अन्त्यादेशस्तु न भवति, 'नानर्थकेऽलोन्त्यस्य विधिः' इति; नञो ङित्करणाद्वा, अन्त्यादेशे विश्न

इत्यत्रानिगुपधत्वादेव गुणाप्रसङ्गात् किं ङित्त्वेन ! अत एव ङित्त्वाच्छ्वोरिति निर्देशः सतुक्कस्येत्यपि ज्ञायते, ये तूठ् विधौ क्ङितीति नानुवर्त्तयन्ति तेषां झलादिमात्रे शकारे कृते तस्यैव 'व्रश्च' इत्यादिना षत्वं द्रष्टव्यम्। अत्र मते तत्र छग्रहणं व्यर्थं स्यात्। वृत्तिप्रदीपे तु वितुक्कस्य शादेश उक्तः, तुगभावस्तु 'अकृतव्यूहाः पाणिनीयाः' कृतमपि शास्त्रं निवर्त्तयन्तीति। म्लिष्टम्—'क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमस्सक्ताविस्पष्टस्वरानायासभृशेषु' इति अविस्पष्टार्थे निपातितः। अपशब्दे तु म्लेच्छितमिति भवति, अस्य शपि पाठो म्लेच्छन्तीति 'शप्श्यनोर्नित्यम्' इति नित्यनुमर्थः, शे हि विकल्पः स्यात्, स्वरे च भेदः। शपि शपः पित्त्वाद् 'अनुदात्तौ सुप्पितौ' इति अनुदात्तः, शस्तु प्रत्ययस्वरेणाद्युदात्तः। एवमीदृशामन्येषामपि धातूनां विकरणभेदे फलत्रयम्। अयं चुरादावपि ॥ २०७ ॥

१२५. लच्छ लाछि लक्षणे ॥ लच्छति। ललच्छ। लच्छिता इत्यादि। "छे च" ह्रस्वस्य छे परतस्तुगिति तुक्! अलच्छीत् इत्यत्रान्तरङ्गत्वात्पूर्वं तुकि अकारस्यालघुत्वाद् 'अतो हलादेः' इति वा वृद्धिर्न भवति। तथा ललच्छ इत्यादौ 'अत उपधायाः' इति वृद्धिरनुपधात्वान्न भवति॥ लाञ्छति इत्यादि पूर्ववत्, लालाञ्छ्यते इत्यादावविदित्त्वान्नलोपो न भवति। लाञ्छः—'क्विप्च' इति सोपपदनिरुपपदसाधारणे क्विपि तस्य लोपे 'च्छ्वोः' इत्यत्र 'द्विचकारनिर्देशः, एकः सतुक्कः अपरः केवलः'इति न्यासपदमञ्जर्यादिपूक्तत्वात् लान् लांशौ, लांशः इत्यादि भवति। च्छ्वोरिति निर्देशे पूर्वे वितुक्कसतुक्कयोः समाहारद्वन्द्वे पश्चाद् वकारेणेतरेतरयोग इति द्विवचनयथासंख्ययोरुपपत्तिः। 'द्वन्द्वाच्चुदषहान्तात्' 'इति समासान्तः सौत्रत्वान्न भवति। हरदत्तस्तु सतुक्कछकारवकारयोः समाहारद्वन्द्वे पश्चाद्वितुक्केनेतरेतरयोग इति समासान्ताभावो द्विवचनोपपत्तिश्चेति। अत्र मते सतुक्कस्यापि च्छकारस्योठ् स्यादिति तदभावे यत्नः कर्त्तव्यः। एवं च यङ्लुक्यपि जश्त्वे लालांट्, लालांड् इत्यादि पूर्ववद्भवति। शूड्वधौ क्ङिद्ग्रहणानुवृत्तिपक्षे लालांष्टीत्यादौ व्रश्चादिसूत्रे छग्रहणे षत्वम्, तत्रापि पूर्ववत्केवलोऽपि छो गृह्यते ॥ २०८-२०९ ॥

१२६. वाछि[1] इच्छायाम्। वाञ्छतीत्यादि लाञ्छिवत् ॥ २१० ॥

१२७. आछि[2] आयामे। आञ्छति। आञ्छ। अत्र लिट्यभ्यासह्रस्वे 'अत आदेः' इत्यत्र तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थमिति न्यासकारहरदत्तादिभिः प्रतिपादितत्वाद् दीर्घाभावाद् नुडभावे सवर्णदीर्घः। अन्ये तु तपरकरणं मुखसुखार्थमिति आनाञ्छेत्युदाहरन्तीति मैत्रेयः। आञ्छिता इत्यादि। आञ्छिच्छिषति। 'न न्द्राः' इति नकारवर्जं द्वितीयैकाच् द्विरुच्यते। आञ्छयति। आञ्चिच्छत् ॥२११॥

---

१. 'वाञ्छि' इति ख. पुस्तके। २. 'आञ्छि' इति ख. पुस्तके।

१२८. ह्रीच्छ लज्जायाम् । ह्रीच्छति जिह्रीच्छ। ह्रीच्छिता इत्यादि म्लेच्छिवत् । ह्री लज्जायामिति जुहोत्यादौ ॥ २१२ ॥

१२९. हुर्छा कौटिल्ये । इह कौटिल्यमपसरणमिति मैत्रेयस्य मतम् । हूर्छति । जुहूर्छ । हूर्छिता इत्यादि । 'उपधायां च' इतीको दीर्घः । जुहूर्छिषति । जोहूर्छीति, जोहोर्त्ति । जोहूर्त्तः । जोहोर्षि । जोहोर्षि । जोहोर्मि । जोहूर्वः । जोहूर्मः । "राल्लोपः" इति रेफात्परयोः च्छ्वोर्लोपः क्वौ झलादावनुनासिकादौ प्रत्यये । अत्र सतुक्कस्य छस्याभावात् केवलो गृह्यत इति वृत्त्यादौ । हूः । हुरौ । हुरः—'राल्लोपः' तत्र पदत्वे च "र्वोरुपधाया दीर्घ" इति रेफवकारान्तस्य धातोः पदस्योपधाया इको दीर्घ इति इको दीर्घः । हूर्णः, हूर्णवान्—'आदितश्च' इत्यनिट्त्वे निष्ठायाम् राल्लोपे 'रदाभ्याम्' इति नत्वे 'रषाभ्याम्' इति णत्वम् । भावादिकर्मणोस्तु 'विभाषा भावादिकर्मणोः' इति आदितो निष्ठायाः पक्षे इड्विधानाद् हूर्णमनेन, हूर्छितमनेन इत्यादि द्रष्टव्यम् ॥ २१३ ॥

१३०. मुर्छा मोहसमुच्छ्राययोः । मूर्छति । हुर्छिवत् । विशेषस्त्वनिटो निष्ठायाम्, 'न ध्याख्यापॄमूर्छिमदाम्' इति नत्वनिषेधः—मूर्त्तः, मूर्त्तवान्, मूर्त्तमनेन इत्यादि । मूर्छास्य सञ्जाता मूर्छितः—'तदस्य सञ्जातं तारकादिभ्य इतच्' तदिति प्रथमासमर्थात् सञ्जातोपाधिकादस्येत्यर्थे इतजितीतच् ॥ २१४ ॥

१३१. स्फुर्छा[1] विस्तृतौ । स्फूर्छति । पुस्फूर्छ इत्यादि पूर्ववत् । अभ्यासे खयः शेषः ॥ २१५ ॥

१३२. युच्छ प्रमादे । युच्छति । युच्छति । युयुच्छ । युच्छितेत्यादि म्लेच्छादिवत् । अन्तरङ्गत्वात्तुकि अलघूपधत्वान्न गुणः । 'वार्णादाङ्गं बलीयः' इत्याङ्गस्य बलीयस्त्वं यत्राङ्गवार्णयोर्युगपत्प्राप्तिः समानाश्रयत्वं च तत्रेति, इह वैपरीत्यान्न भवति ॥ २१६ ॥

१३३. उछि उञ्छे । 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्' इति यादवप्रकाशः । एवं विज्ञानेश्वरोऽपि । 'उञ्छति' सूत्रे 'उञ्छतिः' उच्चिनोतीत्यर्थ इति न्यासः । 'बदराण्युञ्छति बादरिकः, श्यामाकानुञ्छति श्यामाकिकः' इत्युदाहरतो वृत्तिकारस्यापि 'व्यापित्वेनोच्चय एवार्थः' इत्यभिप्रायो लक्ष्यते । उञ्छति । उञ्छाञ्चकार । उञ्छिता इत्यादि । इदित्त्वाद् उञ्छ्यते इत्यादौ नलोपो न भवति । उञ्चिच्छिषति 'न न्द्राः' इति छादेर्द्विर्वचनम् । अभ्यासस्य चर्त्वे ह्रस्वे 'छे च' इति तुकि हलादिशेषो न भवति, अवयवभक्तत्वेनाभ्यासभक्तत्वाभावात् । न च स्वङ्गुलिर्देवदत्त इत्यादिवत् इहावयववाचकस्य समुदायावयवत्वम् ; यतः 'छे च' इत्यत्रागमिनोऽभावादेव पूर्वसूत्राद् ह्रस्वस्येत्यनुवृत्तिसिद्धावपि चकारेण तदनु-

1. स्फूर्छा—क्षीरस्वामी ।

कृष्यते । पूर्वसूत्रे ह्रस्वान्तस्येति स्थितम् । इह तु तथा मा भूदिति हि यत्नः । उञ्छयति । मा भवानुञ्चिच्छत् । अयं तुदादौ पठिष्यते । स पाठ उञ्छती इति शीनद्योर्नुम्विकल्पार्थोऽवश्यमभ्युपगन्तव्य इतीह पाठः किमर्थ इति चेत् , स्वरार्थः । उञ्छतीत्यत्र शपि 'अनुदात्तौ सुप्पितौ' इति शप्तिपोरनुदात्तत्वेन "धातोः"—धातोरन्त उदात्त इत्युकारस्योदात्तत्वे 'उदात्तादनुदात्तस्य स्वरितः' इति शबकारस्य स्वरितत्वे 'स्वरितात्संहितायामनुदात्तानाम्' इति तिबिकारस्य प्रचयत्वे त्रयोऽचः क्रमेणोदात्तस्वरितप्रचया भवन्ति । शे तु 'आद्युदात्तश्च' इति प्रत्ययादित्वेनाकारस्योदात्तत्वे, "अनुदात्तं पदमेकवर्जम्" यत्र पदे उदात्तः स्वरितो वा विधीयते तत्र तं वर्जयित्वाऽन्यदनुदात्तमिति धातोरप्यनुदात्तत्वे पूर्ववत्तिपः स्वरितत्वेऽचोऽनुदात्तोदात्तस्वरिता भवन्ति । विपर्ययः कस्मान्न भवति धातोरन्तोदात्तत्वे शस्यानुदात्तत्वमिति, यतोऽयं स्वरभेदो न स्यात् , नैतदस्ति; 'सति शिष्टस्वरो बलीयान्' इति यस्मिन्नसति यः शिष्यते स बलीयानित्यर्थः । ननु 'अन्यत्र विकरणेभ्यः' इत्यपि तत्र पठ्यते, नायं पर्युदासो धातुस्वरविषयः; किन्तु लसार्वधातुकस्वरविषयः । 'लादेशस्य सार्वधातुकस्य प्रत्ययाद्युदात्तत्वं सति शिष्टोऽपि विकरणस्वरो न बाधते' इति, अस्य च ज्ञापकं तादृशमेव । तथा हि—'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः' इति तासेः परस्य सार्वधातुकस्य सति शिष्टस्वरेणानुदात्तत्वेऽपि सिद्धे पुनर्विधानाज्ज्ञायते 'अन्यत्र विकरणेभ्यः' इति । तच्च लसार्वधातुकविषयम् ।। २१७ ।।

१३४. उच्छी[1] विवासे । समाप्तिविवास इति तरङ्गिण्याम् । 'विपूर्वश्चायं प्रायः प्रयुज्यते' इति पुरुषकारे । व्युच्छति । व्युच्छाञ्चकार । व्युच्छिता इत्यादि । आम्विधावागमनिमित्ततापि गुरुमत्ता गृह्यते, अत एव 'अनृच्छः' इति प्रतिषेधः । उचिच्छिषति—अत्र द्विर्वचने तुकि तुकश्चुत्वस्य पूर्वत्रासिद्धत्वात् हलादिशेषेण तकारस्य शेषे प्राप्ते 'खर्पूर्वाः खय इति वक्तव्यम्' 'शर्पूर्वाः खय' इत्यत्र शर्ग्रहणमपनीय खर्ग्रहणं कर्त्तव्यमित्यर्थः । तेन खर्पूर्वाः खयः शिष्यन्ते अन्ये निवर्त्तन्त इति तकारस्य निवृत्तौ छकारस्य 'अभ्यासे चर्च' इति चर्त्वे रूपम् । अभ्यासचर्त्वस्य तुक्यसिद्धत्वादुकारस्य पुनस्तुग्न भवति; 'अभ्यासजश्त्वचर्त्वमेत्वतुकोः सिद्धं वक्तव्यम्' इति चर्त्वस्य सिद्धत्वात् । अत्र 'पूर्वत्रासिद्धीयमद्विर्वचने' इति अनाश्रित्योक्तं 'खर्पूर्वाः खयः' इति । यदाहुर्हरदत्तादयः—तदाश्रयणे हि श्चुत्वस्य द्विर्वचने सिद्धत्वाद्धलादिशेषेण छस्य निवृत्ताविष्टसिद्धेः । व्युष्टः, व्युष्टवान्—'श्वीदितो निष्ठायाम्' इतीड्भावः । व्युष्टे दीयते कार्यं वा वैयुष्टम्—'व्युष्टादिभ्योऽण्' इति तत्र च दीयते कार्यमिति विषयेऽण्प्रत्ययः । 'न य्वाभ्याम्' इति ऐच् , वृद्धेरभावश्च । अयमपि तुदादौ पठिष्यते । पूर्ववदुभयत्र प्रयोजनम् ।। २१८ ।।

---

१. 'उछि' इति क्षीरतरङ्गिण्याम् । मन्ये सम्पादकस्तत्र भ्रान्तः ।

१३५. ध्रज ध्रजि धृज[1] धृजि[1] ध्वज[1] ध्वजि गतौ । ध्रजति । दध्राज । ध्रजिता इत्यादि । अध्रजीत् । अध्राजीत्—'अतो हलादेः' इति वा वृद्धिः । दिध्रजिषति । दाध्रज्यते । दाध्रजीति, दाध्रक्ति । 'चोः कुः' झलि पदान्ते च । 'खरि च' इति चर्त्वम् । ध्राजयति । अदिध्रजत् ॥ ध्रञ्जति । दध्रञ्ज । ध्रञ्जिता इत्यादि । दिध्रञ्जिषति । दाध्रञ्ज्यते । दिध्रञ्जिषति । दाधृञ्ज्यते । दाध्रञ्जीति, दाध्रङ्क्ति । लङि तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे च—अदध्रन् ॥ धर्जति । दधर्ज । धर्जिता इत्यादि । दिधर्जिषति । दरीधृज्यते । 'रीगृदुपधस्य च' इति रीक् । दर्धृजीति, दरिधृजीति, दरीधृजीतिः दर्धर्क्ति, दरिधर्क्ति, दरीधर्क्ति । 'रुग्रिकौ च लुकि' इति रुग्रिग्रीकः । 'नाभ्यस्तस्याचि' इति पक्षे न गुणः । एवं तसादौ दर्धर्क्तः इत्याद्युदाहार्यम् । धर्जयति । अदधर्जत्, अदीधृजत् । उञ्ऋ द्वा । धर्जित्वा—'न क्त्वा सेट्' इत्यकित्त्वाद् गुणः । धृज्यम्—'ऋदुपधाच्चाक्लृपि चृतेः' इति क्यप् । धर्जः—'चजोः कु घिण्ण्यतोर्निष्ठायामनिटः' इति वार्त्तिकसूत्रेण कुत्वम् ॥ धृञ्जति । दधृञ्ज । धृञ्जिता इत्यादि । दिधृञ्जिषति । दरीधृञ्ज्यते । पूर्ववद्रीक् । दाधृञ्जीति, दाधृङ्क्ति इत्यादि । धृजिवत् । लङि तिप्सिपोर्हल्ङ्यादिलोपसंयोगान्तलोपयोः अदाधृन्—संयोगान्तलोपस्यासिद्धत्वादलघूपधत्वात्प्रत्ययलक्षणेन न गुणः । धृञ्जयति । अदधृञ्जत् ॥ ध्वजति ॥ ध्वञ्जति इत्यादि ध्रजधृजिवत् । तरङ्गिणीकाश्यपसम्मतासु आद्यौ व्रजव्रजी इति दन्त्योष्ठ्यादी पठ्येते । अन्यत्र सर्वत्र तवर्गीयादी एव ॥ २१९–२२४ ॥

१३६. कूज अव्यक्ते शब्दे । कूजति । चुकूज । कूजिता । कूजिष्यति । चोकूज्यते । चोकूजीति, चोकूक्ति । कूजयति । अचूकुजत् । कूजः, कूज्यम्—'न क्वादेः' इति निष्ठायां सेट्त्वात्कुत्वाभावः ॥ २२५ ॥

१३७. अर्ज षर्ज अर्जने । अर्जति । आनर्ज । अर्जिता इत्यादि । अर्जिजिषति । अर्जयति । आर्जिजत् । स्वर्गः—वार्त्तिककारमते न्यङ्क्वादित्वात्कुत्वम् । ऋजुः—'अर्जिदृशि' इत्यादिना कुप्रत्ययः, ऋजादेशश्च । अर्ज प्रयत्न इति चुरादौ ॥ सर्जति । ससर्ज । सर्जिता । सिसर्जिषति—'स्तौतिण्योरेव' इति नियमान्न षत्वम् । सासर्ज्यते । सासर्क्ति इत्यादि । सर्जयति । अससर्जत् । सिसर्जयिषति ॥ २२६–२२७ ॥

१३८. गर्ज शब्दे । गर्जति इत्यादि ॥ २२८ ॥

१३९. तर्ज भर्त्सने । तर्जति । ततर्ज इत्यादि । अयं चुरादावपि ॥ २२९ ॥

१४०. कर्ज व्यथने ॥ २३० ॥

१४१. खर्ज पूजने[2] च । कर्जति । चकर्ज । कर्जिता ॥ खर्जति इत्यादि । खर्जूरः—'खर्जपिञ्जादिभ्य ऊरोलचौ' इत्यूरः ॥ २३१ ॥

१४२. अज गतिक्षेपणयोः । अजति । विवाय । विव्यतु । विव्युः । विवयिथ, विवेथ । विव्यथु । विव्य । विवाय, विवय । विव्यिव । "अजेर्व्यघञपोः" घञपोरन्यस्मिन्नार्द्ध-

---

१. क्षीरस्वामी न पठति । २. 'मार्जने' इति मैत्रेयः क्षीरस्वामी च ।

धातुके विषयभूते वीभाव इति वीभावे द्विर्वचने "एरनेकाचोऽसंयोगपूर्वस्य" धातोरवयवः संयोगो यस्मादिवर्णात्पूर्वो नास्ति तदन्तस्यानेकाचोऽङ्गस्याजादौ यणिति यण् । अत्र वकारस्य हल्परत्वात् 'उपधायां च' इति दीर्घे 'अचः परस्मिन्' इति यणः स्थानिवत्त्वात् 'असिद्धं बहिरङ्गमन्तरङ्गे' इति असिद्धत्वाद्वा न भवति । वृद्धिगुणयोर्विषये परत्वात्तौ भवतः । 'णलुत्तमो वा' इति उत्तमे णित्त्वविकल्पनात्पक्षे गुणः । वलादौ क्रादिनियमादिट् । वीभावो ह्यनुदात्तत्वाद् अनिट्, थलि तु "अचस्तास्वत्थल्यनिटो नित्यम्" अजन्तो यो धातुस्तासौ नित्यमनिट् तस्य तासाविव थलीण्निषेधे प्राप्ते "ऋतो भारद्वाजस्य"—योऽयं तासौ नित्यानिटस्थलीण्निषेधः स भारद्वाजस्य मतेन ऋकारान्तस्यैवेति नियमा- दन्यत्रार्थाद्विकल्प इतीडागमः पाक्षिकः । अजेरुदात्तत्वस्य इडर्थत्वात्तत्सामर्थ्या- द्वलादावार्द्धधातुकेऽयमादेशो विकल्पित इति पक्षे व्यादेशाभावात् आजिथ इत्यपि भवति । तथा वमयोरपि आजिव, आजिम इति । उक्तञ्च वृत्तौ—"'वलादावार्द्ध- धातुके विकल्प इष्यते' इति । अत्र केचिद्वमयोर्वलादित्वस्य क्रथादिनियमेनेटः पर्यवसानान्न कदाचिदपि वलाद्यार्द्धधातुकाभिव्यक्तिरिति न तत्रायमादेशविकल्पः । थलि तु भवत्येव यतस्तत्रेड्विकल्पः" इति । ननु विव्यतुरित्यादौ द्विर्वचना- त्पूर्वं परत्वादियङि 'द्विर्वचनेऽचि' इति तस्य द्विर्वचने कर्त्तव्ये स्थानिवत्त्वादुत्तर- खण्डे जग्मतुरित्यादिवदादेशरूपमेवावतिष्ठतेति कुतो यणः प्रसङ्गः ? उच्यते, द्विर्वचनार्थमियङि निवृत्ते पुनरयमिच्छतावश्यं प्रवर्त्तयितव्यः, तत्र दशायाम् 'असिद्धवदत्र' इतीयङोऽसिद्धत्वादङ्गस्यानेकाचत्वादपवादत्वेन वा यणेव भविष्यतीति इट-किदेत्यत्रायमर्थः प्रपञ्चयिष्यते । अजिता, वेता । अजिष्यति, वेष्यति । अजतु । आजत् । आशिषि—वीयात् । वलाद्यार्द्धधातुकत्वान्नित्यं वीभावः । आजीत्, अवैषीत् । आजिष्यत्, अवेष्यत् । अजिजिषति, विवीषति । 'इको झल्' इति सनः कित्त्वान्न गुणः । 'आर्द्धधातुके' इत्यस्य विषयसप्तमीत्वात्प्रागेव प्रत्ययोत्पत्तौ वीभावे हलादित्वाद्यङि वेवीयते नात्र यङ्लुगस्ति; यतो लुका यङार्द्धधातुकस्य विषयत्वापहारान्नार्द्धधातुकाभिव्यक्तिरिति वीभावस्य नैव प्रसङ्गः । उक्तञ्चैवं 'न लुमताङ्गस्य' इत्यत्र कैयटे—'न लुमता यस्मिन्निति चेत् हनिणिङादेशा न सिद्ध्यन्ति' इति भाष्यवार्त्तिकयोरुक्तेः 'लुङि च' इत्यादौ विषयसप्तम्याश्रय- णेनादेशाः सेत्स्यन्तीत्याशङ्क्य "लुका लुङो विषयत्वापहाराद्विषयसप्तम्याश्रय- णेऽप्यसिद्धिः" इति । वाययति, अवीवयत् कर्मादौ वीयते इत्यादि । स्यादिषु 'स्यसि- च्सीयुट्तासिषु वा चिण्वदिट्' इति वृद्धयायोः वायिष्यते । अवायिष्यत । अवायिष्यथ वायिषीष्ट । अवायिष्ट इत्यादि । चिण्वदिटोऽभावे—वेष्यते, अवेष्यत, अवेष्ट । वेषीष्ट, वेता इत्यादि । अत्र पक्षे वलाद्यार्धधातुकसद्भावात्पक्षे व्यादेशाभावे—अजिष्यते । आजिष्यत । अजिषाताम् । अजिषीष्ट । अजिता इत्यादि इति त्रैरूप्यम् । लिटि ध्वमि

चिण्वत्पक्षे वृद्धयायादेशयोः 'विभाषेटः' इति मूर्द्धन्यो विकल्पेन। अन्यदा तु 'इणः षीध्वम्' इति नित्यो ध्यादेशाभावश्चेति चातूरूप्यम्—वायिषीध्वम्, वायिषीढ्वम्, वेषीढ्वम्, आजिषीध्वम् इति। लुङि तु 'धि च' इति सिचो लोपे चिण्वदिटि ध्यादेशस्य वृद्धयाययोर्मूर्द्धन्यस्य पूर्ववद्विकल्पः। अचिण्वत्पक्षे तु नित्यः। आदेशाभावे च सिज्लोपे इटाङ्गस्रिणन्तमिति नित्ये मूर्धन्ये—अवायिध्वम्, अवायिढ्वम्, अवेढ्वम्, आजिढ्वम् इति चातूरूप्यम्। येषां तु दर्शनम् 'इणाष्षीध्वम्' इत्यत्रेण्ग्रहणेनेटो न ग्रहणमिति, तेषां मूर्द्धन्याभावात् लिङ्वदेव रूपाणि। कर्मकर्त्तरि तशब्दे 'अचः कर्मकर्त्तरि' इति चिणो विकल्पनात्पक्षे सिचि चिण्वदिटि च अवायि, अवेष्ट, अवायिष्ट इति त्रैरूप्यम्। अन्यत् सर्वं कर्मवत्। सम्भवति च क्षेपणार्थस्य कर्मकर्त्ता। प्रवयणम्, प्राजनम्—'वा यौ' इति वीभावविकल्पः, 'कृत्यचः' इति वीभावे णत्वम्। समजः पशूनां सङ्घ इत्यर्थः, उदजः तेषामेव प्रेरणम्। 'समुदोरजः पशुषु' इत्यप्। धात्वर्थस्यापशुविषयत्वे समाजः, उदाजः इति घञेव। अघञपोरिति पर्युदासान्न वीभावः। 'अजिव्रज्योश्च' इति अकुत्वम्। समज्या—'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' इति स्त्रियां भावादौ क्यप्। 'प्रतिषेधे क्यप उपसंख्यानम्' इति वीभावनिषेधः। प्रवेयम्—'आर्द्धधातुके' इत्यस्य विषयसप्तमीत्वात् प्रागेव वीभावे 'अचो यत्'; अन्यथा ण्यति वृद्धौ प्रवैयमिति स्यात्। वातमजा मृगाः—खश्प्रकरणे 'वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः खश उपसंख्यानम्' इति खश्। अस्य शित्त्वेन सार्वधातुकत्वान्न वीभावः। अजिरम्—'अजिरिशिशिर' इति निपातितः। वेणुः—'अजिवृरीभ्यो निद्' इति णुः। वेणुकीयम्—'नडादीनां कुक्च' इति चातुरर्थिकश्छः कुगागमश्च। आजिः—'अज्यतिभ्यां च' इतीणि वृद्धिः, 'पादस्य पदाज्यात्' इति निर्देशान्न वीभावः। अजः, अजा—अजादिपाठाट्टाप्। अत एव वीभावाभावः। अजानां समूहः आजिकम्—'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ्' इति वुञ्॥ २३२॥

१४३. तेज पालने[1]। तेजति। तितेज। तेजिता। तेजः—'असुन् तिजः' इति नित्यासुन्नन्तः। क्षमार्थोऽग्रे। तिज निशाने इति चुरादौ॥ २३३॥

१४४. खज मन्थे। खजति। चखाज। खजिता इत्यादि। अखजीत्, अखाजीत् 'अतो हलादेः' इति वा वृद्धिः। खजाको मन्थः—'खजेराकः' इत्याकः। अत्र केचित् 'कज मदे' इत्यपि पठन्ति॥ २३४॥

१४५. खजि गतिवैकल्ये। खञ्जति। चखञ्ज। खञ्जिता इत्यादि। इदित्त्वान्नलोपाभावः॥ २३५॥

१४६. एजृ कम्पने। एजति। एजाञ्चकार। एजिता। एजिजिषति। एजयति।

---

१. अस्य सूत्रस्य स्थाने क्षीरस्वामी 'कज मदे' इति पठति।

मा भवानेजिजत् । ऋदित्वान्नोपधाह्रस्वः । एजते इति दीप्तौ मतः ॥ २३६ ॥

१४७. टुओस्फूर्जा वज्रनिर्घोषे । टुशब्दस्य 'आदिर्ञिटुडवः' इतीत्त्वे लोपः । 'ट्वितोऽथुच्' इत्यथुचि स्फूर्जथुरिति । ओकारः 'ओदितश्च' इति निष्ठानत्वार्थः । स्फूर्णवान्—'आदितश्च' इत्यनिट्त्वम् । ननु निष्ठानत्वार्थादोदित्करणसामर्थ्यादेवा-निट्त्वं सिद्धम् । एवं तर्हि 'विभाषा भावादिकर्मणोः' इति इड्विकल्पार्थमा-दित्वम्—स्फूर्णमनेन, स्फूर्जितमनेन इत्यादि । स्फूर्जति । पुस्फूर्ज । स्फूर्जिता । पुस्फूर्जि-षति । पोस्फूर्ज्यते । पोस्फूर्क्ति । अपोस्फूक् । स्फूर्जयति । अपुस्फूर्जत् । अस्य दीर्घोपदेशेन 'उपधायां च' इति दीर्घस्यानित्यत्वज्ञापनात् मुर्छति हुर्छति स्फुर्छति इत्यपि भव-तीति केचिदिति मैत्रेये प्रतिपादितम् ॥ २३७ ॥

१४८. क्षि क्षये । 'अनिट् स्वरान्तः' इत्ययमनिट् । इह पाठस्तु उत्तरधातुसा-दृश्यादिति मैत्रेये प्रतिपादितम् । क्षयति । चिक्षाय । चिक्षियतुः । चिक्षेथ, चिक्षयिथ । चिक्षियिव—क्रादिनियमादिट् । थलि 'अचस्तास्वत्' इति निषेधाद् भारद्वाजनिय-माच्च विकल्पितः । अजादौ 'अचि श्नुधातु' इत्यादिनेयङ्, 'एरनेकाचः' इति यण् तु संयोगपूर्वत्वान्न भवति । क्षेता । क्षेष्यति । क्षयतु । अक्षयत् । क्षयेत् । आशिषि—क्षीयात् 'अकृत्सार्वधातुकयोः' इति दीर्घः । अक्षैषीत् सिचि वृद्धिः । कर्मादौ—क्षीयते इत्यादि वीवत् । अन्तर्भावितण्यर्थोऽयं सकर्मकः । 'न क्षीयत इत्यक्षरम्' इति भाष्ये दर्शनात् । चिक्षीषति—'अज्झनगमां सनि' इति झलादौ सनि दीर्घः । चेक्षीयते, चेक्षयीति 'सार्वधातुकार्धधातुयोः' इति गुणः । 'नाभ्यस्तस्य' इति निषेधो लघूपध-गुणस्य । क्षीणः, क्षीणवान्, क्षीणमिदम्—अस्य ध्रौव्यार्थत्वात् 'क्तोऽधिकरणे च' इति क्तः । 'अधिकरणवाचिनश्च' इति तद्योगे कर्तरि षष्ठी. 'निष्ठायामण्यदर्थे' इति क्षियो दीर्घः, ण्यदर्थो भावकर्मणी, 'क्षियो दीर्घात्' इति निष्ठानत्वम् । ण्यदर्थे तु क्षितमनेन, क्षितोऽयमनेन, क्षीणस्तपस्वी, क्षीणो जाल्मः, क्षित इति वा । 'वाक्रोश-दैन्ययोः' इति क्षियो निष्ठायां वा दीर्घः । पूर्ववद्दीर्घपक्षे नत्वम् । क्षेतुं शक्यः क्षय्यः—'क्षय्यजय्यौ शक्यार्थे' इति निपातनादयादेशो भवति । प्रक्षीय—'क्षियः' इति ल्यपि दीर्घः । क्षि निवासगत्योरिति तुदादौ । क्षीष हिंसायामिति क्र्यादौ । क्षिणु हिंसायामिति तनादौ ॥ २३८ ॥

१४९. क्षीज अव्यक्ते शब्दे । क्षीजति । चिक्षीज । क्षीजिता । चिक्षीजिषति । चेक्षीज्यते । चेक्षीक्ति । क्षीजयति । अचिक्षिजत् 'णौ चङि' इति ह्रस्वः । कूजिना सहायं न पठितः, अप्रसिद्धत्वात् ॥ २३९ ॥

१५०. लज लजि भर्जने ॥ २४०-२४१ ॥

१५१. लाज लाजि भर्त्सने च । चकारो भिन्नक्रमः । एतावपि भर्जन इति मैत्रेयः । भर्त्सनग्रहणं भर्जनस्याप्युपलक्षणमिति पुरुषकारे । लजति । ललाज । लेजतुः । लजिता । अलजीत् । अलाजीत् 'अतो हलादेः' इति वा वृद्धिः । लिलजिषति । लाल-

ज्यते । लालक्ति । लाजयति । अलीलजत् ॥ लज्जति । ललञ्ज । लञ्जिता । लिलञ्जिषति । लालञ्ज्यते इदित्त्वान्नलोपाभावः । लालङ्क्ति । लञ्जयति । अललञ्जत् ॥ एवं लाजति । लाञ्जति इत्यादि । लाजः । ओलजी ओलस्जी व्रीडने इति तुदादौ । लज प्रकाशने इति कथादौ । लजि इति पटपुटादिदण्डके भाषार्थः ॥ २४२-२४३ ॥

१५२. जज जजि युद्धे । जजति । लजिवत् । जङ्गलम्—बाहुलकात् कलप्रत्ययः कुत्वं च । कुरुजाङ्गलेषु भवं कौरुजाङ्गलम्, कौरुजङ्गलम्—'तत्र भवः' इत्यणि 'जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्' इति पूर्वपदस्य नित्या वृद्धिः, उत्तरपदस्य तु वा ॥ २४४-२४५ ॥

१५३. तुज[1] हिंसायाम् । तोजति । तुतोज । तोजिता । तुतोजिषति, तुतुजिषति । तुजित्वा, तोजित्वा—'रलो व्युपधाद्' इति कित्त्वविकल्पः । तोतुज्यते । तोतोक्ति । तोजयति । अतूतुजत् । भावादिकर्मणोः 'उदुपधाद्' इति कित्त्वविकल्पनात् तुजितमनेन, तोजितमनेन इत्यादि ॥ २४६ ॥

१५४. तुजि पालने च । तुञ्जति । तुतुञ्ज । तुञ्जिता । तुतुञ्जिषति । तोतुञ्ज्यते । तोतुङ्क्ति । अतोतुङ् । तुञ्जयति । अतुतुञ्जत् । तुङ्गः—वार्तिकमते न्यङ्क्वादित्वात् कुत्वम् । भाषार्थोऽयं युजादौ ॥ २४७ ॥

१५५. गज गजि गृज गृजि मुज[2] मुजि शब्दार्थाः । गजति ॥ गञ्जति इत्यादि । लजलजिवत् । जगजतुः इत्यादावादेशादित्वान्नेत्वाभ्यासलोपौ । गजः—अच् । गञ्जा तु मदिरागृहम् ॥ गर्जति । जगर्ज । गर्जिता । जिगर्जिषति । जरीगृज्यते । जर्गृजीति इत्यादि पूर्ववत् । गर्जयति । अजगर्जत्, अजीगृजत्-'उर्ऋत्' वा ॥ गृञ्जति । जगृञ्ज । गृञ्जिता । जिगृञ्जिषति । जरीगृञ्ज्यते—'रीगृत्वतः' इति रीक् । जरिगृञ्जीति इत्यादि ॥ मोजति । मुञ्जति इत्यादि तुजिवत् । मृज मृजीति स्वामिचन्द्रौ ॥ २४८-२५३ ॥

१५६. गज मदने च । अयं चुरादावपि शब्दार्थः । गर्ज शब्द इत्यग्रे ॥२५४॥

१५७. वज व्रज गतौ । वजति । ववाज । ववजतुः । वजिता इत्यादि । 'न शसददवादिगुणानाम्' इत्येत्वाभ्यासलोपनिषेधः । अवजीत्, अवाजीत् 'अतो हलादेः' इति वा वृद्धिः । वाजः । वाज्यम्—घञ्ण्यतौ; 'अजिव्रज्योश्च' इति चकारेण कुत्वनिषेधः ॥ व्रजति इत्यादि । लुङि 'वदव्रज' इति नित्या वृद्धिः—अव्राजीदिति । व्रज्या—'व्रजयजोर्भावे क्यप्' इति क्यप् । व्रजः—'गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च' इति अधिकरणे घान्तो निपातितः । परिव्राट्—'परौ व्रजेः षः पदान्ते' इति क्विपि षत्वं दीर्घश्च । एतौ चुरादावपि ॥ २५५-२५६ ॥

१५८. शुचादय उदात्ता उदात्तेतः क्षिवर्जम् ।

---

१. 'तुज तुजि' इति स्वामिमैत्रेयौ । २. स्वामी 'मज' इति पठति ।

अथ क्रमेण प्राप्तानात्मनेपदिनष्टवर्गीयान्तानाह—

१५९. अट्ट अतिक्रमणहिंसयोः । इतः शाङ्न्ता उदात्ता अनुदात्तेतः । दोपधोऽयं स्मर्यते इति मैत्रेयः । तोपधोऽयमिति 'ष्टुना ष्टुः' इत्यत्र न्यासवृत्तिप्रदीपकारादयः । स्वाम्यपि क्विपि अदिति तकारश्रवणार्थं तोपधत्वमुक्त्वा दोपधत्वमप्याह । मैत्रेयस्तु स्वमते दोपधत्वमुक्त्वा तोपधत्वं मतान्तरमाह । 'अड्ड' इति डान्तपाठः प्रकरणविरोधादुपेक्ष्यः । अट्टते । आनट्टे । अट्टताम् । आट्टत । अट्टेत । आशिषि—अट्टिषीष्ट । मा भवानट्टिष्ट । आट्टिष्यत । ष्टुत्वं सर्वत्र । दोपधत्वे चर्त्वञ्च । अटिट्टिषते—'पूर्वत्रासिद्धीयमद्विर्वचने' इति ष्टुत्वस्यासिद्धत्वाभावाद् द्विटकारस्य सन्नन्तस्य द्विर्वचने हलादिशेषे रूपम् । यद्यपि प्राणिणिषतीत्यादौ णत्वे कृते तस्यासिद्धत्वाभावात्सणत्वस्य द्विर्वचनेनैवेष्टसिद्धौ 'उभौ साभ्यासस्य' इति पुनर्णत्वविधानात् 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्यानित्यत्वज्ञापनात् ष्टुत्वस्यासिद्धत्वात् तकारादेर्द्विर्वचनं तदापि 'खर्पूर्वाः खयः' इति टकारस्यैव शेषादिदमेव रूपम् । एवं च पुरुषकारादिषु अतिट्टिषते इति तकारस्य शेषेणोदाहरणप्रदर्शनं चिन्त्यम् । दोपधत्वे तु 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्य द्विर्वचनविषयत्वात् 'न न्द्राः' इति द्विर्वचननिषेधे प्रवृत्त्यभावात् ष्टुत्वस्यासिद्धत्वाद् दकारवर्जं द्विरुच्यते । दकारस्य पुनष्टुत्वे चर्त्वं च अटिट्टिषते इति भाव्यम् । अट्टयति । आटिट्टत् । दोपधत्वे तु आट्टिटत् । अट्टा—'गुरोश्च' इत्यकारः । अट्टां करोति अट्टायते—'अटाट्या' इत्यादिना क्यङ् । अयमनादरे चुरादिः ॥ २५७ ॥

१६०. वेष्ट वेष्टने । वेष्टते । विवेष्टे । वेष्टिता । विवेष्टिषते । वेवेष्ट्यते । वेवेष्टीति, वेवेष्टि । वेवेष्टः । लङि—अवेवेट् । वेष्टयति । अविवेष्टत्, अववेष्टत् । 'विभाषा वेष्टिचेष्ट्योः' इति चङ्परे णावभ्यासस्य पक्षेऽकारः । कर्मादौ वेष्ट्यते इत्यादि ॥ २५८ ॥

१६१. चेष्ट चेष्टायाम् । वेष्टिवत् । अकर्मकस्त्वयम् ॥ २५९ ॥

१६२. गोष्ट लोष्ट सङ्घाते । गोष्टते । जुगोष्टे । गोष्टिता ॥ लोष्टते । लुलोष्टे । लोष्टिता इत्यादि वेष्टिवत् ॥ २६०—२६१ ॥

१६३. घट्ट चलने । घट्टते । जघट्टे । घट्टिता इत्यादि । अयं चुरादावपि ॥ २६२ ॥

१६४. स्फुट विकसने[1] । स्फोटते । पुस्फुटे । स्फोटिता इत्यादि । पुस्फुटिषते, पुस्फोटिषते । स्फुटित्वा, स्फोटित्वा—'रलो व्युपधात्' इति कित्त्वविकल्पः । पोस्फुट्यते । पोस्फुटीति, पोस्फोट्टि । अपोस्फोट् । स्फोटयति । अपुस्फुटत् । अयं तुदादावपि । विशरणार्थोऽग्रे परस्मैपदिषु । भेदनार्थश्चुरादौ ॥ २६३ ॥

१६५. अठि गतौ । अण्ठते । आनण्ठे । अण्ठिता । अण्टिण्ठिषते । अण्ठयति । आण्टिण्ठत् । 'न न्द्राः' इति नवर्जं द्विरुच्यते ॥ २६४ ॥

---

१. क्षीरस्वामी नेदं सूत्रं पठति ।

१६६. वठि एकचर्यायाम् । एकचर्या सहायगमनम् । वण्ठते । ववण्ठे । विवण्ठिषते । वावण्ठ्यते । वावण्ठीति, वावण्ठि । तिपः ष्टुत्वे चर्त्वम् । लोटि हेर्धित्वे ष्टुत्वे जश्त्वे वावण्ढि । लङि—अवावन् । वण्ठयति । अववण्ठत् । अयमनिदित् स्थौल्यार्थः परस्मैपदिषु ॥ २६५ ॥

१६७. मठि कठि शोके । इह शोक आध्यानम् । मातुर्मण्ठते उत्कण्ठत इत्यर्थः । 'अधीगर्थ' इति कर्मणि शेषे षष्ठी । मठ मदनिवासयोः, कठ कृच्छ्रजीवन इत्यग्रे परस्मैपदिष्वनिदितौ । कठि शोक इतीदित् चुरादौ ॥२६६–२६७॥

१६८. मुठि पालने । मुण्ठते इत्यादि ॥ २६८ ॥

१६९. हेठ विबाधायाम् । अमुं परस्मैपदिष्वपि केचित् पठन्ति । विबाधनं शाठ्यम् । हेठते । जिहेठे । हेठिता इत्यादि । हेठयति । अजीहिठत्, अजिहेठत् । 'काण्यादीनां वा' इति णौ चङ्युपधाया ह्रस्वविकल्पः ।
काणेराणेस्तथा श्राणेर्भाठे र्हेठेर्लुठेरपि । ण्यन्तस्य भाष्यकारेण काण्यादित्वं प्रदर्शितम् ॥ बोधिन्यासकृता लोठिर्लोपिर्त्राणिश्च व्हायिना । सहिताः पूर्वमुक्ताश्च काण्यादौ परिकीर्त्तिताः ॥ दुर्गश्चाणिं च काण्यादिं मन्यते शाकटायनः । लोठिं तदेवमेतेऽत्र धातवो द्वादश स्मृताः ॥२६९॥

१७०. एठ च । विपूर्वोऽयमिति स्वामिकाश्यपौ । मैत्रेयादयस्तु केवलमेवोदाजह्रुः । एठते । एठाञ्चक्रे । एठिता । एटिठिषते । एठयति । मा भवानिटिठत्—द्विर्वचनात्पूर्वमुपधाह्रस्व इत्युक्तम् ॥ २७० ॥

१७१. हिडि गत्यनादरयोः । हिण्डते । जिहिण्डे । हिण्डिता । जिहिण्डिषते । जेहिण्ड्यते । जेहिण्डि । अजेहिन् । अजिहिण्डत् ॥ २७१ ॥

१७२. हुडि सङ्घाते । हुण्डते । जुहुण्डे । हुण्डिता इत्यादि पूर्ववत् । अत्र काश्यपः—'आर्यास्तु न पठन्ति । द्रमिडास्तु तं पठन्ति' इति । भाष्यादौ तु हुण्डेत्यविगीतमुदाह्रियते ॥ २७२ ॥

१७३. कुडि दाहे । कुण्डते इत्यादि । कुण्डः । कुण्डम्—अच् । स्त्रियां कुण्डी । 'जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद् वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु' इति अमत्रे ङीष् । अन्यत्र कुण्डा । वैकल्यार्थोऽत्रैव पठिष्यते, रक्षणार्थश्चुरादौ ॥ २७३ ॥

१७४. वडि विभाजने[1] ॥ २७४ ॥

१७५. मडि च । अत्र स्वामी 'वडि विभाजने, मडि चेति पृथक् सूत्रणादर्थान्तरेऽपि' । नन्दी तु 'वडि विभाजने, मडि वेष्टन इति भङ्क्त्वा पठति' इति । वण्डते । ववण्डे । वण्डिता ॥ मण्डते । ममण्डे । मण्डिता इत्यादि । मण्डूकः—'शलिमण्डिभ्यामूकण्' इत्यूकण् । कूपमण्डूकः, उदपानमण्डूकः, कच्छमण्डूकः—'पात्रेसमिता-

१. 'वेष्टने' इति मैत्रेयः ।

दयश्च' इति क्षेपे सप्तमीतत्पुरुषः। क्षेपश्च 'कूपे मण्डूक इव' इत्यदृष्टविस्तारतायवगमात्। 'क्रुधमण्डार्थेभ्यश्च' इति युज्विधौ भूषणार्थ एव वृत्तौ उदाहृतः। तस्य 'अनुदात्तेतः' इति युचः सिद्धत्वान्न त्वस्य युज् नेति। मडि भूषायामित्यग्रे परस्मैपदिषु। णौ हर्षे च॥ २७५॥

१७६. भडि परिभाषणे। परिहास इति देवः[1]। 'परितो भाषणं परिभाषणम्' इति स्वाम्यादयः। यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणमिति निघण्टुः[2]। भण्डते इत्यादि। भण्डिलो दूतः—'सलिकल्यनिमहिभडिभण्डि' इत्यादिना इलच्। कल्याणार्थश्चुरादौ॥ २७६॥

१७७. पिडि सङ्घाते। पिण्डते इत्यादि। पिण्डिलो गणकः—पूर्ववदिलच्। चुरादावप्ययम्॥ २७७॥

१७८. मुडि मार्जने[3]। शुद्धिन्यग्भावौ मार्जनम्। मुण्डते इत्यादि। खण्डनार्थः परस्मैपदिषु॥ २७८॥

१७९. तुडि तोडने। तोडनं दारणं हिंसनं च। तुण्डते इत्यादि। तुण्डिः—'इन्' इतीन्प्रत्ययो वृद्धनाभिः, साऽस्यास्तीति तुण्डिलः—'तुण्डादिभ्य इलच्च' इत्यत्र 'स्वाङ्गाद् वृद्धौ' इति गणसूत्रेण स्वाङ्गाद्वृद्धौ वृत्तादस्मादिलच्। तुण्डिल एव तुण्डिभः—'तुण्डिवलिवटेर्भः' इति मत्वर्थीयो भः। तुण्डिलो बहुभाषी। 'सलिकल्यनि' इत्यादिनेलच्। अयमनिंदित्परस्मैपदिषु॥ २७९॥

१८०. हुडि वरणे। वरणं स्वीकारः। हरणमिति मैत्रेयः। हुण्डते। जुहुण्डे। हुण्डिता इत्यादि। स्फुडि विकसने इत्येके[4] पठन्ति॥ २८०॥

१८१. चडि कोपे। चण्डते इत्यादि। चण्डनः—'क्रुधमण्ड' इति वा 'अनुदात्तेतः' इति वा युच्। चण्डालः-'पतिचण्डिभ्यामालच्' इत्यालच्। चण्डालस्यापत्यं चाण्डालकिः—अत इञि 'सुधातुरकङ् च' 'व्यासवरुडनिषादचण्डालबिम्बानाम्' इत्यकङादेशोऽन्त्यस्य। चाण्डालीति शार्ङ्गरवादित्वात् ङीनि। 'तद्युक्तात्' इति सूत्रेऽण्प्रकरणे 'कुलाललकुटकर्मारव्यासवरुडनिषादचण्डालमित्रामित्रेभ्यश्छन्दस्युपसंख्यानम्' इति उक्तत्वाच्छान्दसः—चाण्डालः। चण्डी इति 'कृदिकारादक्तिनः' इति ङीष्। अयं चुरादौ च॥ २८१॥

१८२. शडि रुजायां सङ्घाते च। तालव्योष्मादिः। शण्डते इत्यादि। शण्डः—असुरपुरोहितः। शण्डिलः तीर्थमृषिश्च। 'सलिकल्यनि' इत्यादिनेलच्॥ २८२॥

१८३. तडि ताडने। तण्डते इत्यादि। तण्डः—अच्। वतण्डः—'वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्युपसर्गस्याल्लोपः। वतण्डस्य गोत्रापत्यं वातण्ड्यः। वातण्डः—'गर्गादिभ्यो यञ्' 'शिवादिभ्योऽण्' इति यञणौ। यदा त्विदमपत्यं-

---

१. मैत्रेयोऽपि। २. अ०को० १।६।१४। ३. मज्जने—क्षी०। ४. क्षीरस्वाम्यादयः।

माङ्गिरसं भवति तदा 'वतण्डाच्च' इति शिवाद्यणं बाधित्वा यञेव। अपत्ये तु स्त्रीलिङ्गे 'लुक् स्त्रियाम्' इति लुक्। 'शार्ङ्गरवाद्यञो ङीन्' इति ङीन्—वतण्डी। अनाङ्गिरसे तु लुगभावात् वातण्ड्यायनी—'प्राचां ष्फ तद्धितः' इति यञन्तात् ष्फः, फस्यायनादेशः। षित्करणसामर्थ्यात् स्वार्थे ङीष्। ष्फप्रत्ययाभावे 'यञश्च' इति ङीषि 'यस्येति च' इत्यल्लोपे "आपत्यस्य च तद्धितेनाति"—आपत्ययकारस्यानाकारादौ भसंज्ञानिमित्ते तद्धित ईति च परे लोप इति लोपे वातण्डी। 'अनाति' इति वचनात् वातण्ड्यायनी इत्यत्र यलोपो न भवति। वितण्डा। तण्डुलम्—'लुठितनितडिभ्य उलच्' इत्युलच्॥ २८३॥

१८४. पडि गतौ। पण्डते। पण्डितः। गोष्ठेपण्डितः—'पात्रेसमितादयश्च' इति क्षेपे सप्तमीतत्पुरुषः, तत्रैव पाठादलुक्। गोष्ठ एव पण्डितो न सदसीति क्षेपावगतिः। पण्डः—अच्। पणतेर्वा 'ञमन्ताड्डः'। पण्डस्यापत्यं पण्डारः—'आरगुदीचाम्' इत्यत्र रकापि गोधार इति सिद्धे आरग्वचनादन्यत्रापि भवतीति वृत्तावुक्तम्। नाशार्थश्चुरादौ॥ २८४॥

१८५. कडि मदे। कण्डते इत्यादि। भेदने चुरादिः। अनिदिदिहैव। अदादौ च परस्मैपदी॥ २८५॥

१८६. खडि मन्थे। खुडि इत्यप्येके पठन्ति। खण्डते। खण्डः—अच्। खडि भेदने चुरादिः॥ २८६॥

१८७. हेडृ होडृ[1] अनादरे। हेडते। जिहेडे। हेडिता। जिहेडिषते। जेहेड्यते। जेहेड्डि। हेडयति। अजिहेडत्। ऋदित्त्वान्नोपधाह्रस्वः। एवं होडते। जुहोडे इत्यादि। होडः—पचाद्यच्। होड इवाचरति होडते—'आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा' इति क्विपि 'सनाद्यन्ताः' इति धातुत्वे लादयः। होडादीनामकारस्यानुदात्तत्वानुनासिकत्वयोः प्रतिज्ञानात् 'अनुदात्तङितः' इति तङ्। तथा च भाष्यं सर्वप्रातिपदिकेभ्यः क्विबित्युक्त्वा—'न तर्हीदानीं गल्भाद्यनुक्रमणं कर्त्तव्यम्। कर्त्तव्यं च, आत्मनेपदार्थमनुबन्धानासङ्क्ष्यामि[2]' इति। क्विबभावे "कर्तुः क्यङ् सलोपश्च" इति उपमानात्कर्तुः सुबन्तादाचारे क्यङिति क्यङ्। उपमानस्य कर्तृत्वं संनिधानादाचरणक्रियापेक्षम्। सलोपश्चेति चशब्दस्यान्वाचयशिष्टार्थत्वाद्यत्रान्त्यः सकारः सम्भवति तत्र लोपः, स च व्यवस्थितविभाषया—होडायते। अनुनासिकत्वप्रतिज्ञानं क्विप्सन्नियोगेनैवेतत्संज्ञाया अभावात् 'अकृत्सार्वधातुकयोः' इति दीर्घः। हेडृ वेष्टने इति घटादौ। हेडृ गतावित्यग्रे परस्मैपदी॥ २८७—२८८॥

१८८. वाडृ आप्लाव्ये। वशादिः। आप्लवनमाप्लवः। वाडते। अववाडत इत्यादि॥ २८९॥

---

१. क्षीरस्वामी न पठति। २. म० भा० ३।१।११।

१८९. द्राडृ ध्राडृ विशरणे । द्राडते । ध्राडते इत्यादि ॥ २९०–२९१ ॥

१९०. शाडृ श्लाघायाम् । शाडते इत्यादि । लडयोरैक्यात् शालते इति काश्यपः । अत एव मैत्रेये 'रूपशालो शाला' इत्युदाहृतम् । 'लस्य' इत्यत्र भाष्य-कैयटयोः शाला इति श्यतेर्लप्रत्यये व्युत्पादि । शालीनः अधृष्टः—'शालीनकौपीने अधृष्टाकार्ययोः' इति खञि निपातितः । गवां शाला गोशालम्, गोशाला—विभाषा सेनासुराच्छायाशालानिशानाम्' इति सेनाद्यन्तस्य तत्पुरुषस्य वा नपुंसकत्वम् । गोशाले जातः गोशालः— 'तत्र जातः' इत्यण्, 'स्थानान्तगोशाल-खरशालाच्च' इति लुक् । लिङ्गविशिष्टपरिभाषया गोशालाशब्दादप्यणो लुग्भवति । एवं खरशालः । वत्सशालायां जातः वत्सशालः, वात्सशालो वा—'वत्सशालाभिजिदश्वयुक्शतभिषजो वा' इति अणो वा लुक् । शालिः—'इन्' इतीन् । शालीनां भवनं क्षेत्रं शालेयम्—'व्रीहिशाल्योर्ढक्' इति ढक् ॥ २९२ ॥

१९१. अट्टादय उदात्ता अनुदात्तेतः ॥

१९२. शौटृ गर्वे । इतो गड्यन्ता उदात्ता उदात्तेतः । शौटति । शुशौट । शौटिता । शौटिष्यति । शौटतु । अशौटत् । आशिषि—शौट्यात् । अशौटीत् । अशौटिष्यत् । शुशौटिषति । शोशौट्यते । शोशौट्टि । अभ्यासस्य ह्रस्वः । गुणः । शौटयति । अशुशौटत्—शौटीरः । 'कॄशॄपॄकटिपटिशौटिभ्य ईरन्' इतीरन् ॥२९३॥

१९३. यौटृ बन्धे । यौटति इत्यादि ॥ २९४ ॥

१९४. म्रेटृ म्रेडृ म्लेटृ उन्मादे । द्वितीयस्तृतीयान्तः । तथा च 'तस्य परमाम्रे-डितम्' इति दृश्यते । तत्र न्यासे 'आम्रेड्यते आधिक्येनोच्यते' इति । टान्तमध्ये पाठस्तु तदर्थसाम्यान्नाथतिवत् । म्रेटति । म्रेडति । म्लेडति इत्यादि ॥ २९५–२९७ ॥

१९५. कटे वर्षावरणयोः । अयमनेदिदग्रे । कटति । चकाट । कटिता इत्यादि । अकटीत् । 'अतो हलादेः' इति वा वृद्धिः 'ह्मयन्तक्षणश्वसजागृणिश्व्येदिताम्' इति एदित्वात् निषिध्यते । कटः—पचाद्यच् । कटी—'कटाच्च श्रोणिवचने' इति गौरा-दित्वात् ङीष् । निकटे वसति नैकटिकः—'निकटे वसति' इति सप्तम्यन्ताद्वसत्यर्थे ठक् । काटः लिङ्गः—'हलश्च' इत्यधिकरणे संज्ञायां घञ् । कटीरः जघनं कक्षुकक्ष 'कॄशॄपॄ' इत्यादिना ईरन् । कटित्रं चर्म—अशित्रादिभ्य इतीत्रः । कटकम्—'कुन् शिल्पिसंज्ञयोः' इति कुन् । कटुः—बाहुलकादुप्रत्ययः । कट्वरः—'छित्वरछत्वर-धीवरपीवरमीवरचीवरतीवरतीवरगह्वरकट्वरसंयद्वराः' इति वरचि निपात्यते । 'चटे इत्येके' इति काश्यपः । चटति इत्यादि पूर्ववत् । चाटुः—'दृसनिजनिचटिरहिभ्य ञुण्' इति ञुण् । चटुः—बाहुलकादुकारः । 'संज्ञापूर्वको विधिरनित्यः' ञुणि वृद्ध्य-भावो वा । चटुलः—बाहुलकादुलच् । चटकः—'कुन् शिल्पिसंज्ञयोः' इति कुन् । चटका—अजादिपाठाट्टाप्, 'प्रत्ययस्थात्' इतीत्वाभावश्च । चटकाया अपत्यं चाटकैरः—'चटकाया ऐरक्' इत्यैरक् । 'चटकाश्च' इति वक्तव्यात् चटकस्यापत्यमपि

चाटकैरः। स्त्रियां त्वपत्ये 'स्त्रियामपत्ये लुग्वक्तव्यः' इति ऐरको लुकि चटका इति भवति। भेदनार्थोऽयं चुरादौ ॥ २९८ ॥

१९९. अट पट गतौ। अटति। आट। अटिता। अटिष्यति। अटतु। आटत्। अटेत्। आशिषि—अट्यात्। मा भवानटीत्। 'नेटि' इति सिचि वृद्ध्यभावः। अटिटिषति। अटाट्यते। 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनामुपसंख्यानम्' इति यङि अजादित्वात् ट्यशब्दस्य द्विर्वचनेऽभ्यासस्य 'दीर्घोऽकितः' इति दीर्घः। नन्वत्र यङेव कार्यी निमित्तं च, एकस्य कार्यिनिमित्तत्वे च विरुद्धे, नैतत्; आकारभेदात्। अनभ्यासाकारेण कार्यी यङाकारेण निमित्तम्, तथा हि—देवदत्तशालायां ब्राह्मण आनीयतामित्युक्ते यदि देवदत्तोऽपि ब्राह्मणश्च शालास्थश्च भवति तदा सोऽप्यानीयते। यङ्लुकि 'सन्यङोः' इत्यस्य षष्ठ्यन्तत्वात् यङपेक्षया पूर्वस्य कार्याभावात् 'न लुमता' इति प्रत्ययलक्षणस्य प्रतिषेधाभावाद्यङन्तत्वाद् अटशब्दस्य द्विर्वचने हलादिशेषे 'दीर्घोऽकितः' इति दीर्घे सवर्णदीर्घे च तिपः ष्टुत्वे आट्टि इति भवति। ईट्पक्षे तु—आटीति। आट्टः। आटति। आट्सि। आट्टः। आटाञ्चकार इत्यादि। आड्ढि इत्यत्र हेर्धिभावे ष्टुत्वे पूर्वस्य जश्त्वं डकारः। लङि हल्ङ्यादिना तिस्योर्लोपे—आट्। अटतीति अटा। अचि टाप्। तां करोति अटायते 'अटाट्या' इत्यादिना क्यङ्। कुलस्य अटा कुलटा—शकन्ध्वादित्वात् 'कुलटाया वा' इति निर्देशाद्वा पररूपम्। कुलटाया अपत्यं कौलटिनेयः, कौलटेयः—स्त्रीभ्यो ढकि 'कुलटाया वा' इति पक्षे इनङादेशोऽन्त्यस्य। यदायं कुलटाशब्दः स्त्रीक्षुद्रायां वर्त्तते, क्षुद्रा दुःशीला अङ्गहीना वा, तदा 'क्षुद्राभ्यो वा' इति ढ्रकि कौलटेरः इति भवति। तदभावे वाशब्देन ढकि कौलटेयः इति। अटाट्या—'परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्' इति गमनमात्रे शप्रत्यये यकि द्विर्वचनहलादिशेषाभ्यासदीर्घेषु निपात्यते। पटति। पपाट। पेटतुः। पेटिथ। पटिता। अपटीत्, अपाटीत्। 'अतो हलादेः' इति वा वृद्धिः। पिपटिषति। पापट्यते। पापटीति, पापट्टि इत्यादि। पाटयति। अपीपटत्। पाटूपटः—ण्यन्तात्पचाद्यचि 'पाटेर्णिलुक्चोक्चाभ्यासस्य' इति णिलुक्, द्विर्वचनमभ्यासस्योगागम उपधादीर्घश्च, ऊको दीर्घोच्चारणसामर्थ्याद् ह्रस्वस्याभावः। अस्यागमत्वसामर्थ्यान्न हलादिशेषः; अन्यथादेशमेव विदध्यादुकारम्। 'अभ्यासस्यानचि' इति वा हलादिशेषह्रस्वयोरभावः, अभ्यासस्य यदुक्तं तदचि नेति। 'णेरनिटि' इति सिद्धे लुग्वचनं प्रत्ययलक्षणेन वृद्धेरभावार्थम्। पाटूका सुराविशेषः—'पाट्यकालावदातसुरायाम्' इति स्थूलादिपाठात् ण्यन्तादस्मात्कन्। पटुः—'कलिपाटिनमिमनिजनां गुक्पटिनाकिधताश्च' इत्युप्रत्यये यथासंख्यात्पटादेशः। अत्र गुगेक आगमः, अन्ये आदेशाः। पटोर्भावकर्मणी पटिमा—'पृथ्वादिभ्य इमनिज्वा' इतीमनिच्, 'टेः' इति टिलोपः। तदभावे 'इगन्ताच्च लघुपूर्वात्' इत्यणि पाटवम्।

गोष्ठेपट्ुः—'पात्रेसमितादयश्च' इति क्षेपे सप्तमीतत्पुरुषः। तत्रैव पाठादलुक्। गोष्ठ एव पटुर्न सदसीति क्षेपावगतिः। पटाका—'शालिपटिपतिभ्यो नित्'इत्याकिन्निच्च। पटलम्—'वृषादिभ्यश्चित्' इति कलप्रत्ययः चिच्च। पटलिका—संज्ञायां कन्। पटीरः—'कृशृ' इत्यादिनेरन्। पाटलम्—ण्यन्तात्कलप्रत्ययो बाहुलकात्। पाटली—'जातेरस्त्रीविषयादयोपधात्' इति ङीष्। पाटल्याः पुष्पाणि पाटलानि—'बिल्वादिभ्योऽण्' इति विकारावयवयोरण्, तस्य 'पुष्पफलमूलेषु बहुलम्' इति लुप् तत्रैव बहुलग्रहणान्न भवति। लुपि हि कौशीतक्याः फलानीत्यादिवत् 'लुपि युक्तवद्व्यक्तिवचने' इति युक्तवद्भावः स्यात्॥ २९९–३००॥

१९७. रट परिभाषणे। रटति इत्यादि। परिराटी—'सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च' इति परिपूर्वादस्मात्ताच्छीलिको घिनुण्। परिराटकः—'निन्दहिंस' इत्यादिना वुन् ताच्छीलिकः॥ ३०१॥

१९८. लट बाल्ये। लटति इत्यादि। लट्वा—'अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्' इति क्वन्। लाटयतीति लाटः—ण्यन्तादच्। केवलाद्वासंज्ञायां घञ्॥ ३०२॥

१९९. शट रुजाविशरणगत्यवसादनेषु। शटति इत्यादि। शाटकः—घञन्तात्संज्ञायां कन्। शाटी—जातिलक्षणो ङीष्॥ ३०३॥

२००. वट वेष्टने। वटति। ववाट। ववटतुः। वादित्वादेत्वाभ्यासलोपाभावः। वटिः—'इन्' इतीन्प्रत्ययः। वटिभः—'तुन्दवलिवटेर्भः' इति मत्वर्थे भः। वटकः—संज्ञायां कन्। वटका अन्नमस्यां पौर्णमास्यां वटकिनी पौर्णमासी—'तदस्मिन्नन्नं प्रायेण संज्ञायाम्' इत्यत्र 'वटकेभ्य इनिर्वक्तव्यः' इतीन्। घंटादावयं परिभाषणार्थः। पट वट ग्रन्थे इति कथादौ। 'वट वेष्टने' इति क्षीरस्वामी। यस्तु तत्र विभाजनार्थः, तं वटीति शाकटायनादयः पठन्ति। वटी विभाजने इति इहैवाग्रे चुरादौ चानदन्तेषु॥ ३०४॥

२०१. किट खिट त्रासे। केटति। चिकेट। केटिता। चिकिटिषति, चिकेटिषति। किटित्वा, केटित्वा इत्यादि। एवं खेटति इत्यादि। खेटः—'हलश्च' इति संज्ञायां घञ्। इह त्रासो भयोत्पादनम्। किटिर्गत्यर्थोऽग्रे भविष्यति। इहैके न पठन्ति। पठताम्मैत्रेयादीनामर्थभेदात्पुनः पाठ इत्यभिप्रायः॥ ३०५–३०६॥

२०२. शिट षिट अनादरे। आद्यस्तालव्यादिः, अपरो मूर्द्धन्यादिः। शेटति॥ सेटति इत्यादि किटिवत्। सिसेटिषति, सिसिटिषति इत्यत्र 'स्तौतिण्योरेव' इति नियमान्न षत्वम्। षोपदेशफलं तु सेषिष्यते, असीषिटत् इत्यादौ॥ ३०७–३०८॥

२०३. जट झट सङ्घाते। जटति। जजाट। जेटतुः। जटिता। जटा—अजन्तत्वाट्टाप्। निन्दिता जटा अस्य जटालो जटिलः—'जटाघटाकलाः क्षेपे' इति

सिध्मादौ पिच्छादौ च पाठाल्लजिलचौ। 'जत्वपि' इति भाष्यकारप्रयोगाद् अनदन्तत्वेऽपीनिः। झटति। जझाट। जझटतुः। झटिता इत्यादि॥ ३०९–३१०॥

२०४. भट भृतौ। भटति। भटित्रं शूलेन संस्कृतं मांसमिति निघण्टुः। वेतनमित्युणादिवृत्तौ अशित्रादिभ्यः' इतीत्रः। अयं घटादिः परिभाषणार्थः॥ ३११॥

२०५. तट उच्छ्राये। तटति। तटोऽस्या अस्तीति तटिनी—'अत इनिठनौ' इति मत्वर्थे इनिः। तटी—गौरादिपाठान् ङीष्। तड आघाते इति डकारान्तश्चुरादौ॥ ३१२॥

२०६. खट काङ्क्षायाम्। खटति खट्वा–'अशू प्रुषि'इत्यादिना क्वन्। खट्वारूढो जाल्मः—'खट्वा क्षेपे' इति क्षेपे गम्यमाने द्वितीयान्तस्य खट्वाशब्दस्य क्तान्तेन तत्पुरुषः॥ ३१३॥

२०७. णट नृतौ। अत्र पुरुषकारे 'णट नृत्ते नृत्तावित्यपि क्षीरस्वामी, इत्युभयथापि नर्तनमेवार्थः' इति। अयं णोपदेशः। 'नृतिनन्दि' इति णोपदेशपर्युदासवाक्ये नाटीति सवृद्धिकस्य ग्रहणादस्य घटादित्वान्मित्त्वात् नाटिरूपाभावादग्रहणम्। यदाह हरदत्तः—"'जासिनिग्रहण' इत्यत्र 'नट नृत्तौ' इत्यस्य घटादिपठितस्याग्रहणम्, विकृतनिर्देशात्" इति। अत एव णोपदेशपर्युदासविवरणेऽपि न्यासपदमञ्जरीपुरुषकारादिभिरवस्यन्दनार्थस्य चौरादिकस्य ग्रहणं कृतम्। ननु क्षीरस्वामी घटादौ 'नट नृत्तौ' इति पठित्वा 'नटयति शाखा' इत्युदाहृत्य 'नृत्तौ नाटयति' इति वक्ष्यति, अवश्यं हरदत्तादिभिरप्युभयत्र पाठसामर्थ्यादस्य नाटयतीत्यङ्गीकार्यम्, तत्कथमुक्तं विकृतनिर्देशादिति ? उच्यते; द्वयोर्ग्रहणे नटीत्येव निर्दिशेत्, न तु नाटीति विकृतम्, तत्सामर्थ्याद्यस्य नाटीत्येव रूपं तस्यैव पर्युदासो विज्ञास्यते, न तु यस्य नटिरूपं नाटिरूपं च। ननु योऽस्ति घटादिधातुर्नित्यं नटिरूपमापन्नः स एव विकृतनिर्देशेन व्यावर्त्येत, मैवम्; येऽन्यत्र पठिता घटादौ पठ्यन्ते, न ते पृथग् धातवः; किन्तु 'मित्त्वार्थमेव तेषामनुवादः' इति तत्र स्थितत्वात्। इह नृत्तिर्नर्त्तनम्, यत्कारिषु नटव्यपदेशः; न तु मार्गदेशीशब्दाभ्यां प्रसिद्धं नृत्तं नृत्यं च, यत्कारिषु नर्त्तकव्यपदेशः। तत्र वाक्यार्थाभिनयो नाट्यम्, पदार्थाभिनयस्तु नृत्यम्। 'अभिनयशून्यः पुनः शास्त्रोक्ताङ्गभङ्गः स्वगात्रविक्षेपो नृत्तः' इति तद्विदः। नैघण्टुकानां तु 'ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्त्तनम्' इति अभेदव्यवहारो निरूढलक्षणया नेयः। प्रणटति इत्यादि। नटी—गौरादित्वान्ङीष्॥ ३१४॥

२०८. पिट शब्दसङ्घातयोः। पेटति। पिपेट। पेटिता इत्यादि। पिपिटिषति, पिपेटिषति। पिटित्वा, पेटित्वा। पेटयति। अपीपिटत्। पिटकम्—'क्वुन् शिल्पिसंज्ञयोः' इति क्वुन्। पिटाकः—'पिटाकादयश्च' इत्याकः॥ ३१५॥

२०९. हट दीप्तौ। हटति। जहाट। हटिता। अहटीत्, अहाटीत इत्यादि।

हाटकम्—'संज्ञायां च' इति ण्वुल्, बाहुलकादयस्त्रियामपि हाटशब्दात् कन्वा॥३१६॥

२१०. षट अवयवे। सटति। ससाट। सेटतुः। सटिता। सिसटिषति—'स्तौतिण्योरेव' इत्यषत्वम्। साटयति। असीषटत्। सटा—अजन्ताट्टाप्॥ ३१७॥

२११. लुट विलोडने। 'एतदादयः पाठल्यन्ताष्टवर्गतृतीयान्ताः' इति कौशिककाश्यपनन्दिद्रमिडाः, ते चास्मादनन्तरे पिटहटी च पेठुः। लोटति। लुलोट। लोटिता। लुलुटिषति, लुलोटिषति। लुटित्वा, लोटित्वा। लोटयति। अलूलुटत्, अलुलोटत्। काण्यादित्वादुपधाह्रस्वविकल्पः। भूसूत्रे सुधाकरः—"'लुल विलोडने' इति लान्तोऽपि दृश्यते, 'लोलद्भुजाकारबृहत्तरङ्गम्' इति माघः[1]। डलयोरेकत्वस्मरणमिति वा प्रतिविधेयम्" इति। अयं दिवादावपि। भाषार्थश्चुरादौ। प्रतिघाते द्युतादौ इदित्। स्तेयार्थः परस्मैपदिषु। लुण्टेति चुरादौ॥ ३१८॥

२१२. चिट परप्रेष्ये। चेटति इत्यादि पूर्ववत्। काण्यादित्वाभावो विशेषः। चेटी—इनन्तात् 'सर्वतोक्तिन्नर्थादित्येके' इति ङीष्॥ ३१९॥

२१३. विट[2] शब्दे। वेटति इत्यादि। विटः—इगुपधलक्षणः कः। विटपः—'विटपविष्टपविशिपोलपाः' इति निपातितः॥ ३२०॥

२१४. बिट[3] आक्रोशे। बशादिः। बेटति इत्यादि। हिठेत्यत्र केचित्पठन्ति, हेठतीत्यादि॥ ३२१॥

२१५. इट किट कटी गतौ। अत्र मैत्रेयः—'कटीति ह्रस्वान्तं पठन्ति' इति चतुर्थं धातुमुक्त्वा मतान्तरेण दीर्घान्तं पठन् ई इति चतुर्थं धातुं दीर्घमुक्त्वा फलं च व्यपदेशिवद्भावेन गुरुमत्त्वेजादित्वाभ्यामयाञ्चकारेत्याम्सिद्धिमाह। क्षीरस्वामी तु 'त्रयो धातवः, तृतीय ईदित्' इत्यङ्गीकृत्य कटित्वा, कट्टः, कट्टवानित्युदाहृत्य 'अन्ये कटीई इति धात्वन्तरं प्रश्लिष्टमाहुः' इति चोक्त्वा कण्टति, कण्टकः, 'उदयति दिननाथो याति शीतांशुरस्तम्[4]' इति चोदाजहार। सम्मतातरङ्गिण्योस्तु कटिइ इति चत्वारो धातवस्तृतीय इदिदिति व्याख्यायि। धनपालशाकटायनौ तु त्रीनेव धातूनाहतुः। अयं पक्षः समर्थितः पुरुषकारेण। यदाह इ ई इति ह्रस्वदीर्घौ धातू प्रस्तुत्य "अन्ये पुनरुभावपि न पठन्ति। व्यक्तं चैतत् धनपालशाकटायनवृत्त्योः। अपि च शौटृ गर्वे इत्यादिकान् काँश्चन धातून्पठित्वा अन्ते चोदात्ता इत्युच्यते; तत्रास्मिन्प्रकरणेऽयतेरपि पाठे सति तस्य 'अनिट्स्वरान्तो भवतीति दृश्यताम्' इत्यनुदात्तत्वात्प्राचुर्याभिप्रायेण कथञ्चिन्नेयं स्यात्, यथाह मैत्रेयरक्षितः—'उदात्तत्वमयतिवर्जं भट्टग्रामन्यायेनोदात्ता इति सामान्योक्तिः' इति। स चायं न्यायः सुनिश्चित एवायतेः पाठे शोभते। विप्रतिपन्ने पुनरुदात्तत्वोक्त्याऽस्यवशादपाठ-

---

१. शिशु० व० ३।७२। २. 'पिट' इति क्षीरस्वामी, 'अर्थभेदाद् द्विः पाठः' इति-चाह। ३. 'विट विड' इति मैत्रेयः। ४. शिशु० व० ११।६४।

एव ज्यायान् । उदयतीत्यादि चैवमसाध्वेवास्तु" इति । हरदत्तस्यापि प्रायोऽयमेव पक्षोऽभिमतः । यदाह—" 'उपसर्गस्यायतौ' इत्यत्रायतिरनुदात्तेत्, कथं तर्हि 'उदयति विततोर्ध्वरश्मिरज्जौ'[1] इति परस्मैपदम् किमनेन वन्यगजशौचेन ! यदि वा पचाद्यजन्तादुदयशब्दादाचारक्विपि लट् । केचित्तु इटकिटकटीत्यत्र इकारमपि धातुं पठन्ति" इति । वृत्तिकारोऽपि प्रायेणात्रैवानुकूलः । यदाह 'एतिस्तुशासु' इत्यत्र क्यपि 'इत्यः' इत्युदाहृत्य—"कथमुपेयमिति ? इ इत्यस्यैतद्रूपम्" इति[2] । यदि हीमौ स्यातां प्राथम्यादनयोरेकमुपाददीत । अथोदाहरणानि—एटति । इयेट । ईटतुः । इयेटिथ । पिद्वचनेषु 'द्विर्वचनेऽचि' इति गुणस्य स्थानिवत्त्वादिट्शब्दस्य द्विरुक्तौ हलादिशेषे 'अभ्यासस्यासवर्णे' इति इयङ् । नन्वेवं गुणस्य स्थानिवत्त्वादवश्यं स पुनः प्रवर्त्तयितव्यः । तस्यां च दशायां गुणादन्तरङ्गत्वात् सवर्णदीर्घेण भाव्यम् । न चास्ति 'वार्णादाङ्गं बलीयः' इति; यत इदमाङ्गवार्णयोः समाननिमित्तत्वे प्रवर्त्तते । न च कार्यी निमित्तत्वेनाश्रीयते, सत्यम्; इदानीमेवाग्रे परिहरिष्यते । एटिता इत्यादि । इटिटिषति । एटयति । मा भवानिटिटत् । णिलोपस्य 'द्विर्वचनेऽचि' इति स्थानिवत्त्वाट्टिशब्दस्य द्विर्वचनम् । अतः पूर्वमेवोपधाह्रस्व इत्युक्तम् ॥ केटति । चिकेट । केटिता । चिकेटिषति । किटित्वा, केटित्वा इत्यादि । किटिः—'इगुपधात्' इतीन्, कित्त्वान्न गुणः । कटति । चकट । कटिता । इत्यादि । कटकः—संज्ञायां कुन् । कटकितम्—तारकादित्वादितच् । अनिदित्वादिनाम्—कटति इत्यादि । इ इति चतुर्थधातुवादिनाम्—अयति । इयाय । ईयतुः । ईयुः । इययिथ, इयेथ । भारद्वाजनियमादिड्विकल्पः । इय । इयय । इयाय । इयिव । इयिम । पिद्वचनेषु गुणवृद्ध्योः 'द्विर्वचनेऽचि' इति स्थानिवत्त्वाद् इकारस्य द्विर्वचने 'अभ्यासस्यासवर्णे' इतीयङ् । अन्यत्र पूर्ववदियङ् । स्थानिवद्भावाद् इशब्दस्य द्विरुक्तौ पुनरियङः प्रवर्त्तनायां तं बाधित्वा 'एरनेकाचः' इति प्राप्तं यणमन्तरङ्गत्वाद्बाधित्वा सवर्णदीर्घे पुनरियङादेशः । यदापि सवर्णदीर्घस्य यणश्चेकार आश्रयो भवति स्थानिवत्त्वेनेति समानाश्रयणे 'वार्णादाङ्गं बलीयः' इति दीर्घं बाधित्वा यणप्रवर्त्तते, तदापीदमेव रूपम् । अत्र पक्षे इययिथेत्यत्रापि न दोषः । यतस्तत्रापि समानस्थानित्वेनास्ति समानाश्रयणत्वं दीर्घगुणयोः । एवमपि न सिद्ध्यति, यदत्र द्विर्वचनकालेऽपहृतो गुणः पुनः प्रवर्त्तते । ततश्चानादिष्टादचः पूर्वत्वेनाभ्यासो दृष्ट इति तस्य 'अभ्यासस्यासवर्णे' इति इयङि कर्त्तव्ये गुणस्य स्थानिवत्त्वाद् असवर्ण इति प्रतिषेधः स्यात्, एवं तर्हि, अत एवासवर्णग्रहणसामर्थ्यात् स्थानिवत्त्वं न भविष्यति । नन्वयमस्ति वचनस्यावकाशोऽर्त्तेर्लिटि द्विर्वचने 'अर्त्तिपिपर्त्योश्च' इति अभ्यासेत्वे इयर्त्ति,

---

१. शिशु० व० ४।२० । २. 'ऐरेतद्रूपम्, नेणः' इति काशिकावृत्तिपाठः ।

इयृत इत्यादि, नैतत्; न ह्येकमुदाहरणं योगारम्भं प्रयोजयति, इयति प्रयोजने 'अभ्यासस्यार्त्तौ' इत्येव ब्रूयात्। उवोऽणादि तु न प्रयोजनम्, तस्य छान्दसत्वे 'तन्वादीनां छन्दस्युपसङ्ख्यानम्' इति सुवर्गादिवदुवङः सिद्धत्वात्। भाषायामामा भाव्यम्। एता। एष्यति—स्वरान्तत्वादनिट्त्वम्। अयतु। आयत्। अयेत्। आशिषि—ईयात्—'अकृत्सार्वधातुकयोः' इति दीर्घः। ऐषीत्। मा भवानेषीत्। ऐष्यत्। कर्मणि—ईयते इत्यादि। स्यादौ चिण्वदिटि वृद्धौ आयिष्यते इत्यादि। ईषिषति—'अज्झनगमां सनि' इति दीर्घः। 'इको झल्' इति सनः कित्त्वान्न गुणः। आययति। मा भवानयियत्। णौ चङि वृद्ध्याययोः 'णौ चङि' इति ह्रस्वे णिलोपे तस्य स्थानिवत्त्वेन यिशब्दस्य द्विर्वचनम्। इतः, इतवान्। प्रेत्य—ल्यपि 'षत्व-तुकोरसिद्धः' इति एकादेशस्यासिद्धत्वाद् ह्रस्वनिबन्धनस्तुक्। किटेति मैत्रेयमतेन त्राम्ने गतः। कटिश्चेदित् वर्षावरणयोः॥ ३२२-३२५॥

२१६. मडि भूषायाम्। मण्डति। ममण्ड। मण्डिता इत्यादि। मण्डते कन्या स्वयमेव। अमण्डिष्ट कन्या स्वयमेव—भूषाकर्मत्वाद्यक्चिणोर्निषेधः। मिमण्डिषति। मामण्ड्यते। अमामन्। मण्डयति। अममण्डत्। मण्डनः—'क्रुधमण्डार्थेभ्यश्च' इति युच्। मण्ड इति विभागे गतः॥ ३२६॥

२१७. कुडि वैकल्ये। कुण्डति इत्यादि। कुण्डते इति दाहे गतम्। अत्र स्वामी 'कुटीति कौशिकदुर्गौ' इति। शाकटायनः पुनः प्रकरणानुरोधेन डान्तमेवा-ध्यगीष्ट॥ ३२७॥

२१८. मुट[1] प्रमर्दने। मोटति। मुमोट। मोटिता। मुमुटिषति, मुमोटिषति। मुटित्वा, मोटित्वा—'रलो व्युपधात्' इति क्त्वविकल्पः। मुडेति धनपालः। 'पुडेति पकारादिर्डान्तः' इति शाकटायनः। क्षीरस्वामी तु द्वावपीदितौ पपाठ। मैत्रेयस्त्वमुं टान्तमेव पठित्वा मुडि खण्डने इति चाग्रे पठित्वा 'पुडि चेत्येके' इत्याह। मुट प्रमर्दनाक्षेपयोरिति तुदादौ। मुट सञ्चूर्णने इति चुरादौ॥३२८॥

२१९. चुडि[2] अल्पीभावे। चुण्डति इत्यादि। चुटेति दुर्गः। चुट छेदने इति तुदादौ। चुटचुटी द्वावपि चुरादौ॥ ३२९॥

२२०. मुडि खण्डने। मुण्डति इत्यादि। मुण्डः। मुण्डं करोतीति मुण्डयति। 'मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्' इति करोत्यर्थे णिचि णावि-ष्ठवदिति टिलोपः। यवनमुण्डः। काम्बोजमुण्डः—मयूरव्यंसकादित्वाद्विशेषणस्य परनि-पातः। अत्र मैत्रेयः—'पुडि चेत्येके। पुण्डति। पुण्डः। पुण्ड्रम्। पुण्डरीकम्' इति। 'उकारवत्पवर्गादिप्रकरणादिहायं निर्दिश्यते, मडि भूषायामित्युकारवान्न भवती-ति डकारान्तोऽप्यकारवत्त्वादादौ निर्दिष्टः' इति मैत्रेयः। अत्र 'शुठि खण्डनप्रम-

---

१. 'मुटि' ख. पुस्तके। 'मुडि' इति क्षीरस्वामी। २. 'चुटि' इति ख. पुस्तके मैत्रेये च।

र्द्दनयोः' इति क्वचिद्धातुकोशे पठ्यते । मैत्रेयादयस्तु न पठन्ति । तत्राद्यपाठ एव ज्यायान्यदिहैवाग्रे शुठि शोषणे इति भविष्यति । अस्मिन् हि सति तस्य रूपाभेदाद् शोषणग्रहणमपीहैव कर्त्तव्यं स्यात् ॥ ३३० ॥

२२१. रुटि लुटि स्तेये[1] । रुण्टति । लुण्टति इत्यादि । 'रुठिलुठीत्येके' इति क्षीरस्वामी । शाकटायनस्तृतीयान्तौ पपाठ । लोठतीति विलोडने गतम् । लुट प्रतिघाते इति द्युतादौ । रुष रोषणे इति चुरादौ । तत्र रुठेत्येके ॥ ३३१–३३२ ॥

२२२. स्फुटिर्विशरणे । अयं पाठो मैत्रेयादीनाम् । स्फोटति । पुस्फोट । स्फोटिता । पुस्फुटिषति, पुस्फोटिषति । स्फुटित्वा, स्फोटित्वा इत्यादि । इकाररेफयोः 'उपदेशेऽजनुनासिक इत्', 'हलन्त्यम्' इतीत्त्वम्, तेन लुङि 'इरितो वा' इति परस्मैपदे विधीयमानोऽङ्विकल्पो भवति—अस्फुटत्, अस्फोटीत् इति । 'इदितो नुम् धातोः' इति नुम् अन्तेदितो विधानादस्य न भवति । स्फुटेति चन्द्रः । अस्याङ् नास्ति । स्वामिकाश्यपौ तु स्फुटि स्फुट स्फटेति त्रीन् धातून् पठतः । स्फुण्टति । स्फोटति । स्फटति इत्यादि । स्फटा—अच्, टाप् । स्फुट विकसने इत्यात्मनेपदिषु टान्तः ॥३३३॥

२२३. पठ व्यक्तायां वाचि । पठति । पपाठ । पेठतुः । पठिता । अपाठीत् । पाठयति श्लोकं पुत्रम् इत्यादि ॥३३४॥

२२४. वठ स्थौल्ये । वठति । ववाठ । वठिता इत्यादि । वादित्वान्नैत्वाभ्यासलोपौ । ववठतुः । ववठुः । वठि एकचर्यायामात्मनेपदी गतः ॥३३५॥

२२५. मठ कठ मर्दानिवासयोः । अयं पाठो मैत्रेयस्य । अन्येषां[2] 'मठ मदनिवासयोः, कठ कृच्छ्रजीवने' इति । मठति । कठति इत्यादि । कठः अच् । कठेन प्रोक्तं छन्दः 'कलापिवैशम्पायनान्तेवासिभ्यश्च' इति वैशम्पायनान्तेवासित्वाण्णिनिः । तस्य 'कठचरकाल्लुक्' इति लुक् । 'छन्दोब्राह्मणानि च तद्विषयाणि' इति नियमात् 'तदधीते तद्वेद' इति अध्येतृवेदितृप्रत्ययान्त एव प्रयोगार्हः । तस्य चाणः 'प्रोक्ताल्लुक्' इति लुक् । तदेव कठेन प्रोक्तं छन्दोऽधीयमानोऽपि कठः । कठिनम्—औणादिक इनच् । वंशकठिने व्यवहरति वांशकठिनिकः—"कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति" इति कठिनान्तादिभ्यः सप्तम्यन्तेभ्यो व्यवहरतीत्यर्थे ठगिति ठक् । कठोरम् – 'कठिचकिभ्यामोरच्' इत्योरच् । अनन्तरम् अठ गताविति क्वचित्पठ्यते[3] । मैत्रेयादयस्तु न पठन्ति ॥३३६-३३७ ॥

२२६. रठ परिभाषणे । रठतीत्यादि ॥३३८॥

२२७. हठ प्लुतिशठत्वयोः[4] । हठति । जहाठ इत्यादि । हठ बलात्कार इति चन्द्रदुर्गौ ॥३३९॥

---

१. 'वटि विभाजने' इत्यधिकं सूत्रं पठतः स्वामिमैत्रेयौ । २. क्षीरस्वाम्यादीनाम् । ३. क्षीरतरङ्गिण्याम् । ४. 'प्लुतिशङ्कुबन्धनयोः' इति स्वामिमैत्रेयौ ।

२२८. रुठ लुठ उठ[1] उपघाते। रोठति। लोठति इत्यादि॥ अत्र मैत्रेयः—'उठेत्यप्येके' इति। धनपालशाकटायनौ तु रुठलुठेत्येव पेठतुः। क्षीरस्वामी तु उठिं पठित्वा 'रुठ लुठ इत्यपि दीर्घाः' इत्याह। श्रोठति। उवोठ। ऊठतुः। ओठिता इत्यादि। एठतिवत्प्रक्रिया। लुठेः काण्यादित्वात् अलूलुठत्। अलुलोठत् इति भवति। अयं श्लेषणे तुदादिः। लुठि आलस्ये प्रतिघाते च। रुठि लुठि गतावित्यग्रे इदितौ। लुठ श्लेषणे इति तुदादौ। 'असौ डान्त इत्येके' इति मैत्रेयः। तथा च स्वामी 'लुठतीति लक्ष्यदर्शनात् तुदादौ पाठः' इति। लुठ प्रतिघाते इति द्युतादौ॥३४०–३४२॥

२२९. पिठ हिंसासंक्लेशनयोः। पेठति इत्यादि। पीठम्—घञ्। 'अन्येषामपि दृश्यते' इति दीर्घः। पीठी—इन्नन्तात् 'कृदिकारादक्तिनः' इति ङीप्॥३४३॥

२३०. शठ कैतवे च। चकाराद्धिंसासंक्लेशनयोश्च। शठति इत्यादि। स्वाम्यादयः पुनश्चकारं नैव पेठुः। गत्यसंस्कारयोरयं चुरादौ। तत्रैव श्लाघायामात्मनेपदिषु, सम्यगवभाषणे कथादौ॥३४४॥

२३१. शुठ गतिप्रतिघाते। प्रतिघात इत्येव धनपालः। तथा च 'कुठि इत्युत्तरधातौ प्रतिहतिमात्रं प्रतीयते अतिशिष्यते इत्यर्थः' इति स एवाह। शोठति इत्यादि। शुठीति क्षीरस्वामी। शुठ आलस्ये इति चुरादौ। शुठि शोषणे इत्यत्रैवाग्रे॥३४५॥

२३२. कुठि च। कुण्ठति इत्यादि। कुण्ठः॥३४६॥

२३३. लुठि आलस्ये प्रतिघाते च। लुण्ठति इत्यादि। लोठतीत्युपघाते गतम्॥३४७॥

२३४. शुठि शोषणे। शुण्ठति। शुण्ठः। शुण्ठी। शोठतीति गतिप्रतिघाते गतः॥३४८॥

२३५. रुठि लुठि गतौ। अर्थभेदात्पुनः पाठो लुण्ठेरित्याहुः। रुण्ठति। लुण्ठति इत्यादि॥३४९–३५०॥

२३६. चुड्ड भावकरणे। भावकरणमभिप्रायसूचनम्। चुड्डति। चुचुड्ड। चुड्डिता इत्यादि। चुचुड्डिषति। चोचुड्यते। अचोचुत्। अयं दोपध इति संयोगान्तलोपे तकारस्य श्रवणं भवति। चुड्डयति। अचुचुड्डत्॥३५१॥

२३७. अड्ड अभियोगे। अयमपि दोपध इति क्विपि अत् इति भवति। अड्डति। आनड्ड। अड्डिता। अड्डिडिषति। 'न न्द्राः' इति दकारवर्जस्य द्विर्वचनम्। अड्डयति। आड्डिडत्॥३५२॥

२३८. कड्ड कार्कश्ये। कड्डति इत्यादि। अस्यापि दोपधत्वाद्यङ्लुकि क्विपि च अचाकत्, कद् इति च भवति। कच्च तत् जलं च कज्जलम्॥३५३॥

---

१. 'उठ' ख. पुस्तके नास्ति।

२३९. क्रीडृ विहारे। क्रीडति। चिक्रीड। क्रीडिता। चिक्रीडिषति। चेक्रीड्यते। चेक्रीट्टि। अचेक्रीट्। आक्रीडते—'क्रीडोऽनुसम्परिभ्यश्च' इति अन्वादिपूर्वाच्चकारादाङ्पूर्वात्तङ्, एवम् अनुक्रीडते इत्याद्युदाहार्यम्। समा साहचर्यादनोरुपसर्गस्य ग्रहणम्, तेन 'तृतीयार्थे' इति यदा अनोः कर्मप्रवचनीयत्वं तदा तङ् न भवतीति माणवकमनुक्रीडति इति, माणवकेन सह क्रीडतीत्यर्थः। 'कर्मप्रवचनीययुक्ते द्वितीया' इति माणवकाद् द्वितीया। संक्रीडन्ति शकटानीत्यत्र 'समोऽकूजन इति वक्तव्यम्' इति उक्तत्वान्न तङ्। कूजन्ति शकटानीति ह्यस्यार्थः। आक्रीडी—'सम्पृच' इत्यादिना घिनुण्। चिक्रीडः—'कृञादीनां के द्वे भवतः' इति कप्रत्यये द्विर्वचनम् ॥३५४॥

२४०. तुडृ तोडने। तोडनं दारणं हिंसनं चेत्युक्तम्। तोडति। तुतोड। तोडिता इत्यादि। तूडृ इति स्वामिशाकटायनौ। तुण्डते इत्यात्मनेपदी गतः ॥३५५॥

२४१. हूडृ हुडृ[1] होडृ[2] गतौ। हूडति। जुहूड। हूडिता। हूडयति। अजूहुडत्॥ होडति। जुहोड। होडिता। होडयति। अजुहोडत् इत्यादि। हुडृ हूडृ गताविति धनपालशाकटायनौ। होडते इत्यनादरे गतः ॥३५६-३५८॥

२४२. रौडृ[3] अनादरे। रौडति इत्यादि ॥३५९॥

२४३. रोडृ लोडृ उन्मादे। रोडति। लोडति इत्यादि ॥३६०-३६१॥

२४४. अड उद्यमने। अडति। अडो वृश्चिकलांगूलम्, तेन तैक्ष्ण्यं लक्ष्यते। विशिष्टोऽडस्तैक्ष्ण्यमस्य व्यडः, तस्यापत्यं व्याडिः—'अत इञ्', 'स्वागतादीनां च' इति वृद्धिप्रतिषेधैजागमयोर्निषेधः ॥३६२॥

२४५. लड विलासे[4]। लडति इत्यादि। जिह्वोन्मथने घटादौ। अनन्तरम् 'लल ईप्सायाम्' इति क्वचित्पठ्यते तत् क्षीरस्वामिपुरुषकारादयो नानुमन्यन्ते, यत् 'रलयोर्डलयोश्चैकत्वस्मरणात् ललयति ललना' इत्याहुः। लड उपसेवायामिति चुरादौ ॥३६३॥

२४६. कड मदे। कडति इत्यादि। क्षीरस्वामी तु कडीति पठित्वा 'कडेति दुर्गः' इत्याह। अयं तुदादौ च। उभयत्र पाठफलं तत्रैव लक्ष्यते। कण्डते इति गतः ॥३६४॥

२४७. गडि वदनैकदेशे। गण्डति इत्यादि। अत्र वक्तव्यं अन्तरत्यादिष्वमुं पठित्वोक्तम्[5] ॥३६५॥

२४८. शौटादय उदात्ता उदात्तेतः।

तवर्गान्ताः केचनैधत्यादयो गताः, केचन द्युतादौ वक्ष्यन्ते इति क्रमप्राप्तानात्मनेपदिनः पवर्गान्तानाह—

---

१. हुडृ ख. पुस्तके मैत्रेये च नास्ति। २. 'हौड' इति क्षीरस्वामी। ३. काडृ क. पुस्तके। ४. विकासे—इति मैत्रेयः। ५. पूर्वं ७८ पृष्ठेऽवलोकनीयम्।

२४९. तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणार्थाः। एतदादयः स्तोभत्यन्ता उदात्ता अनुदात्तेतः। 'तपिं तिपिं चापिं' इत्यनिट्कारिकासु पाठात् तिपिरेकोऽनुदात्तः, ऋदित्पवर्गान्तात्मनेपदित्वसाम्याच्चेह पाठः। क्षीरस्वामिना स्वयं सेडुदाहृतः, तत्काश्यपवृत्तिन्यासपदमञ्जर्यादिविरोधात् 'तपिं तिपिं' इति व्याघ्रभूतिवचनविरोधाच्चोपेक्ष्यम्। तेपते। तितेपे। तितपिषे। तितपिवहे। क्रादिनियमादिट्। तेप्ता। तेप्स्यते। तेपताम्। अतेपत। तेपेत। आशिषि—तिप्सीष्ट। अतिप्त। अतिप्साताम्। झलि सिज्लोपः "लिङ्सिचावात्मनेपदेषु" इति इक्समीपाद्धलः परयोर्झलाद्योर्लिङ्सिचोः कित्त्वान्न गुणः। आत्मनेपदेष्विति सिचि एव विशेषणम्, न लिङः परत्वासम्भवात्, परस्मैपदिषु झलादित्वासम्भवाच्च। तितिप्सते। तितिप्सेते, 'हलन्ताच्च' इति इक्समीपाद्धलादेः सनः कित्त्वान्न गुणः। तेतिप्यते। तेतिपीति, तेतेप्ति। तेपयति। अतितेपत्। ऋदित्त्वाण्णौ चङि ह्रस्वाभावः॥ तेपते। तितेपे। तेपिता। तेपिष्यते। तेपताम्। अतेपत। तेपेत। तेपिषीष्ट। अतेपिष्ट। तितेपिषते। तेतेप्यते। तेतेपीति, तेतेप्ति॥ स्तेपते। तिष्टिपे। तिष्टिपाते। अभ्यासे खयः शेषः। स्तेपिता इत्यादि तेपिवत्। तिस्तेपिषते, तिस्तिपिषते। स्तिपित्वा, स्तेपित्वा। 'स्तौतिण्योरेव' इत्यषत्वम्। 'रलो व्युपधात्' इति वा कित्त्वम्। तेष्टिप्यते। तेष्टिपीति, तेष्टेप्ति। तेष्टिप्तः। तिपिवत् ष्टेपिः। अभ्यासे खयश्शेषो विशेषः। 'दिपृ देपृ' इति च काश्यपः॥ ३६६-३६९॥

२५०. तेपृ कम्पने च॥ ३७०॥

२५१. ग्लेपृ दैन्ये॥ ग्लेपते इत्यादि॥ ३७१॥

२५२. टुवेपृ कम्पने। वेपते। वेपथुः—'ट्वितोऽथुच्' इत्यथुच्। विपिनम्—'वेपितुह्योर्ह्रस्वश्च' इतीनचि ह्रस्वः॥ ३७२॥

२५३. केपृ गेपृ ग्लेपृ च। 'चकारात्कम्पने गतौ च, सूत्रविभागात्' इति स्वामी। मैत्रेयस्तु चकारमन्तरेण पठित्वा 'कम्पन इत्यपेक्ष्यते' इत्याह। वेपतिना सहैषामपाठोऽप्रसिद्धत्वज्ञापनायेति तस्याभिप्रायः। ग्लेपेरर्थभेदात्पुनः पाठः। केपते इत्यादि। वेपादीनां तेपतेश्चलनार्थत्वात् 'निगरणचलनार्थेभ्यः' इति णौ परस्मैपदमेव। एषामनुदात्तेत्त्वात् 'चलनशब्दार्थादकर्मकाद्युच्' इति युचि वेपन इत्युदाहार्यम्॥ ३७३-३७५॥

२५४. मेपृ रेपृ लेपृ गतौ। अयं पाठः स्वामिनः। मैत्रेयस्तु 'मेपृ लेपृ सेवने, रेपृ प्लेवृ गतौ' इत्याह। मेपते॥ रेपते॥ लेपते इत्यादि। कचित्पठ्येते—'हेपृ घेपृ' इति च॥ ३७६-३७८॥

२५५. त्रपूष् लज्जायाम्। त्रपते। त्रेपे। 'तॄफलभजत्रपश्च' इति किति लिटि सेटि थलि एत्वाभ्यासलोपौ। त्रपेस्थल्नास्ति। त्रपिता, त्रप्ता। त्रपिष्यते, त्रप्स्यते। उदित्वादिड्विकल्पः। त्रपताम्। अत्रपत। त्रपेत। आशिषि—त्रपिषीष्ट, त्रप्सीष्ट। अत्रपि, अत्रप्त। झलि सिचो लोपः। तित्रपिषते, तित्रप्सते। तात्रप्यते। तात्रपीति, तात्रप्ति।

त्रपयति । अत्रितपत् । घटादित्वान्मित्त्वम् । त्रपित्वा, त्रप्त्वा । त्रप्तः, त्रप्तवान्—'यस्य विभाषा' इति निष्ठायामिण्निषेधः । त्राप्यम्—'आसुयुवपिरपिलपित्रपिचमश्च' इति भावे ण्यत्, 'पोरदुपधात्' इति यतोऽपवादः । त्रपा—'षिद्भिदादिभ्योऽङ्' इति स्त्रियामङ् । त्रपत्रपिष्णुः—'अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्' इति तच्छीलादाविष्णुच् । त्रपु—'शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' इत्युप्रत्ययः । त्रपुणो विकारः त्रापुषम्—'त्रपुजतुनोः षुक्' इति षुगागमोऽण्प्रत्ययश्च ॥ ३७९ ॥

२५६. कपि चलने । कम्पते । चकम्पे । कम्पिता इत्यादि । कम्पयति—'निगरणचलना' इति नित्यं परस्मैपदम् । कम्प्रः—'नमिकम्पिस्म्यजसकमहिंसदीपो रः' इति ताच्छील्यादौ रः । वासरूपविधिना 'अनुदात्तेतः' इति वा 'चलनशब्दे' इति वा युचि कम्पनः । ननु पदेरनुदात्तेत्त्वादेव युचि सिद्धे 'जुचङ्क्रम्य' इत्यादिना पुनर्युज्विधानेन ताच्छीलिकेषु वासरूपविधिर्नेति ज्ञापितम् । अन्यथा 'लषपतपद' इत्युक्त्वा अनुदात्तेल्लक्षणयुचः समावेशे सिद्धे पुनस्तद्विधानमनर्थकं स्यात्, नैतदस्ति; 'सूददीप' इति दीपेः युज्निषेधादस्यानित्यत्वज्ञापनात् । नित्ये हि 'नमिकम्पि' इत्यादिना विशेषविहितेन रप्रत्ययेन युचो बाधस्य सिद्धत्वात् किं तन्निषेधेन ! विकपितः—विकृतशरीर इत्यर्थः । 'लगिकम्प्योरुपतापशरीरयोः' इति नलोपः । कपिः—'कटिकम्प्योर्नलोपश्च' इतीन्प्रत्यये नलोपः । कपेर्भावकर्मणी कापेयम्—'कपिज्ञात्योर्ढक्' इति ढक् । वृषो धर्मस्तस्याकपिः अकम्पिता वृषाकपिः विष्णुः रुद्रश्च । वृषाकपायी श्रीः गौरी च । 'वृषाकपि' इत्यादिना पुंयोगलक्षणे ङीषि अन्त्यस्यैकारः । कपिलः—'कपेश्च' इतीलच्प्रत्ययः, बाहुलकादत एव निर्देशाद्वा नलोपः । कवलः, कम्बलः—बाहुलकात् कलप्रत्ययः, पकारस्य बकारः पक्षे नलोपश्च । कम्बल्यमूर्णापलशतम्—कम्बलाय हितमिति विषये 'कम्बलाच्च संज्ञायाम्' इति यत् । द्वाभ्यां कम्बल्याभ्यां क्रीता शाटी द्विकम्बल्या—'तद्धितार्थोत्तरपदसमाहारे च' इति तद्धितार्थे समासे 'द्विगुश्च' इति द्विगुत्वे 'प्राग्वतेष्ठञ्' इति प्राग्वतीयेष्वर्थेषु विहितस्य ठञः, 'अध्यर्द्धपूर्वद्विगोर्लुगसंज्ञायाम्' इति लुक् । अत्र 'द्विगोः' इति प्राप्तस्य ङीपः "अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि" इति निषेधः । अपरिमाणान्तात्परिमाणत्वेऽपि बिस्ताद्यन्ताच्च द्विगोस्तद्धितलुकि सति ङीब्नेति सूत्रार्थः । पाण्डुकम्बलेन परिवृतो रथः पाण्डुकम्बली—"पाण्डुकम्बलादिनिः" इति पाण्डुकम्बलशब्दात्तृतीयान्तात् परिवृतो रथ इत्यर्थे इनिः । येन यत्परिवृतं तत्तस्यास्ति इति मत्वर्थीयेनिना सिद्धे इदं वचनं ठनो निवृत्त्यर्थम् ॥३८०॥

२५७. रबि लबि अबि शब्दे । रम्बते । ररम्बे । रम्बिता । रिरम्बिषते । रारम्ब्यते । रारम्बीति, रारम्प्ति । अरारन् । हे इति रम्बत इति हेरम्बः ॥ लम्बते इत्यादि ॥ अम्बते । आनम्बे । अम्बिबिषते । अम्बयति । आम्बिबत् । त्रीण्यम्बकानि चक्षूंषि

अस्येति त्र्यम्बकः—त्रयाणां लोकानामम्बः पितेत्यागमविदः। 'द्यौर्भूमिरापस्तिस्रोऽम्बा अस्य' इति भारतम्। अम्बः शब्दः, त्रयः शब्दा अकारोकारमकाराः प्रतिपादका अस्य वेति भट्टभास्करः; स एव सृष्टिस्थितिसंहारविषयास्तिस्रो वा शक्तयोऽस्येति च। अम्बरीषम्—'भ्राष्ट्रमम्बरीषम्' इति निपात्यते। अम्बा। हे अम्ब—'अम्बार्थनद्योः' इति ह्रस्वः सम्बुद्धौ ॥ ३८१-३८३ ॥

२५८. लबि अवस्रंसने च। अलाबूः—'नञि लम्बेर्नलोपश्च' इति नञ्युपपदे उकारप्रत्ययो नलोपश्च णिद्वद्भावाद् वृद्धिश्च ॥ ३८४ ॥

२५९. कबृ वर्णे। कबते। चकबे। कबिता। चिकबिषते। चाकब्यते। चाकब्ति। काबयति। अचकाबत्। कबरः—बाहुलकादरः। कबरी—'जानपद' इत्यादिना केशवेशे ङीष्। अन्यत्र कबरा। कर्बुरः—बाहुलकादुरप्रत्ययो रेफोपजनश्च ॥३८५॥

२६० क्लीबृ अधाष्टर्ये। क्लीबते। चिक्लीबे। क्लीबिता। क्लीबयति। अचिक्लीबत्। क्लीब इवाचरति क्लीबते—'आचारेऽवगल्भक्लीब' इति क्विप्, तत्सन्नियोगेन चैषामकारस्यानुदात्तताऽनुनासिकताप्रतिज्ञानादनुदात्तेत्वात्तङ्ङिति होडतौ प्रतिपादितम्। क्विबभावे 'उपमानादाचारे' इति क्यङि क्लीबायते ॥ ३८६ ॥

२६१. क्षीबृ[1] मदे। क्षीबते। चिक्षीबे। क्षीबिता। क्षीबयति। अचिक्षीबत्। क्षीबः—'अनुपसर्गात्फुल्लक्षीब' इति निष्ठायामिडभावस्तलोपश्च, इच्छब्दलोपो वा निपात्यते ॥ ३८७ ॥

२६२. शीभृ कत्थने। शीभते। शिशीभे। शीभिता। शिशीभिषते। शेशीभ्यते। शेशीब्धि—'झषस्तथोः' इति तकारस्य धकारे 'झलां जश् झशि' इति भकारस्य बकारः। शीभयति। अशिशीभत्। शीभरः—बाहुलकादरः ॥ ३८८ ॥

२६३. चीभृ च। चीभते इत्यादि ॥ ३८९ ॥

२६४. रेभृ शब्दे। रेभते। अरेभत इत्यादि। विरिब्धः—'क्षुब्धस्वान्त' इत्यादिना स्वरे निष्ठायामिडभावे उपधाह्रस्वत्वं च निपात्यते। अन्यत्र रेभितः। अभि-रभी च क्वचित्पठ्येते[2]। अम्भते। रम्भते इत्यादि। अम्भः—असुन्। अम्भसोऽपत्यं आम्भिः। 'सम्भूयोऽम्भसोः सलोपश्च' इति बाह्वादिपाठादिञि सलोपः ॥३९०॥

२६५. ष्टभि स्कभि प्रतिबन्धे। स्तम्भते। तस्तम्भे—खयः शेषः। स्तम्भिता। तिस्तम्भिषते। 'स्तौतिण्योरेव' इत्यषत्वम्। षोपदेशफलं ण्यन्तात्सनि तिष्टम्भयिषति इति षत्वम्। उत्तम्भते। उत्तम्भिता। उत्तम्भितः—"उदः स्थास्तम्भोः पूर्वस्य" इति उदः परयोरनयोः सकारस्थाने पूर्वस्य सवर्ण इति तकारः। 'स्तम्भेः' इत्यादावुपसर्गात्परस्य षत्वविधौ 'स्तम्भुस्तुम्भु' इति प्रतिपदोक्तस्यैव स्तम्भेः ग्रहणं न त्वस्य लाक्षणिकस्येति विस्तम्भते इत्यादौ न षत्वम्। 'उदः स्थास्तम्भोः' इत्यत्र तु नायं न्यायः

---

१. 'क्षीव' इति मैत्रेयः। २. 'अभि रभि शब्दे' इति दुर्गः' इति क्षीरतरङ्गिण्याम्।

गतस्स्तम्भुरूपमुभयोरपि लाक्षणिकम्। अत्र स्वामिमैत्रेयौ ष्टभेष्टकारमेकीयमतेनौपदेशिकमाहतुः। तत्र ष्टम्भते विष्टम्भते इत्यादौ सर्वत्र ष्टुत्वेन षत्वे लिडादावभ्यासे टकारस्य शेषे तष्टम्भ इत्यादि भवति॥ स्कम्भते। चस्कम्भे। स्कम्भिता। स्कम्भितः—'प्रसितस्कभित' इति निपातनं छन्दसि। 'वेः स्कभ्नातेर्नित्यम्' इति षत्वं श्नानिर्देशात् सौत्रस्यैव, नास्येति विस्कम्भते इति भवति। 'स्तन्भुस्तुन्भुस्कन्भुस्कुन्भु' इति सौत्राश्चत्वारो धातवः, ते च 'स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुभ्यः श्नुश्च' इति श्नाश्नुविकरणा इति नात्रोदाह्रियन्ते। स्तोभते इत्यग्रे स्तम्भार्थे॥ ३८१-३८२॥

२६६. जभि जृभि गात्रविनामे। 'जभी इत्येके, जब्धम्' इति मैत्रेयः। अयमेव पाठः प्रायेण वृत्तिकारस्य सम्मतः। यदाह—'रधिजभोरचि' इत्यत्र अज्ग्रहणप्रत्युदाहरणे 'रब्धा, जब्धम्' इति, अनीदित्त्वे इटा भाव्यमिति कथमेवमुदाहरेत्! जम्भते। जजम्भे। जम्भिता। जम्भिष्यते। जम्भताम्। अजम्भत। जम्भेत। जम्भिषीष्ट। अजम्भिष्यत। जिजम्भिषते—'रधिजभोरचि' इति अजादौ प्रत्यये नुम्। जञ्जभ्यते—'लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम्' इति यङ्। भावो धात्वर्थस्तस्य गर्हा भावगर्हा। अयं च यङ् पूर्वसूत्रान्नित्यग्रहणानुवृत्त्या तक्रकौण्डिन्यन्यायेन वा क्रियासमभिहारयङो बाधक इति भाष्यादौ स्थितम्। 'जपजभदहदशभञ्जपशां च' इति अभ्यासस्य यङि यङ्लुकि च नुगागमः। इदं च नुग्ग्रहणमनुस्वारोपलक्षणार्थम्; 'नुगतोऽनुनासिकान्तस्य' इत्यत्रान्तग्रहणात्। तद्धि तदन्तविधिनाप्यनुनासिकान्तस्य धातोरभ्यासस्य नुकि सिद्धे तदन्तस्य यत्कार्यं तद्यथा स्यादिति। न च नुकोऽन्त्यत्वे किञ्चित्कार्यमस्ति, अस्ति चानुस्वारस्य 'वा पदान्तस्य' इति परसवर्णविकल्पः। 'कर्तुः क्यङ् सलोपश्च' इतिवदनुनासिकेत्यविभक्तिको निर्देशः। तेन जञ्जभ्यते इत्यत्रानुस्वारस्यापि पक्षे श्रवणं भवति। जञ्जभीति, जञ्जब्धि। जञ्जब्धः। जञ्जम्भति इत्यादि। 'रधिजभोरचि' इत्यत्र 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्' इति अजादौ नुमागमः। जम्भयति। अजजम्भत्। जम्भो दन्तविशेषोऽभ्यवहार्यं च। शोभनो जम्भोऽस्यास्तीति सुजम्भा—'जम्भासुहरिततृणसोमेभ्यः' इति स्वाद्यादेर्जम्भान्तात् बहुव्रीहेरनिचि 'सर्वनामस्थाने चासम्बुद्धौ' इति नान्तस्योपधाया दीर्घः। पदत्वे 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः भसंज्ञायां 'अल्लोपोऽनः' इत्यल्लोपः—सुजम्भ्न इत्यादि। ङौ तु 'विभाषा ङिश्योः' इति विकल्पित इति सुजम्भ्नि, सुजम्भनि इति भवतः। सम्बुद्धौ 'न ङिसम्बुद्ध्योः' इति नलोपप्रतिषेधः। नपुंसके तु 'वा नपुंसकानाम्' इति पक्षे नलोपः। अन्यत्र तु नित्यः। दीर्घस्तु न भवति; असर्वनामस्थानत्वात्। शौ सर्वनामस्थानपरत्वात् सुजम्भानि इति। 'विभाषा ङिश्योः' इति श्यामल्लोपविकल्पनात् सुजम्भ्नी, सुजम्भनी इति भवतः। स्त्रियां 'ऋन्नेभ्यः' इति ङीपः 'अनो बहुव्रीहेः' इति निषिद्धत्वात् पुंसीव रूपम्। यदा तु "डाबुभाभ्यामन्यतरस्याम्" मन्नन्तात्प्रातिपदिकादन्नन्ता-

द्वहुव्रीहेश्च डाबिति डाप्, तदा ङित्त्वाट्टिलोपे सुजम्भा, सुजम्भे इत्यादि। अत्र ङीपः प्रतिषेधस्य डापः श्रवणस्य च वचनद्वयप्रामाण्यादेव सिद्धौ अन्यतरस्याङ्ग्रहणेन भिन्नेन योगेन ङीपोऽभ्यनुज्ञानात् सुजम्भ्नी इत्याद्यपि भवति। अत्र च योगे 'अनो बहुव्रीहेः' इत्येवानुवर्त्तते, न तु 'मनः' इति। तेन सीमादेः प्रातिपदिकाद् ङीबभावः। सुजम्भ्नी इत्यादौ तु अन्नन्तबहुव्रीहित्वाद्भवत्येव। सुपर्वा सुशर्मा इत्यादौ तु 'अन उपधालोपिनोऽन्यतरस्याम्' इति नियमान्न भवति। सिद्धे सत्यारभ्यमाणोऽयं नियमार्थः यदन्यतरस्यां ङीब्विधानं तदुपधालोपिन एव इति। अत्र ह्यल्लोपो 'न संयोगाद्वमन्तात्' इति निषिध्यते। वमन्तात् संयोगात् भसंज्ञानिमित्ते प्रत्यये परेऽल्लोपो नेति सूत्रार्थः। 'जम्भासुहरिततृण' इत्यत्र जम्भेति भाविना समासान्तेन निर्देशात्समासार्थादुत्तरपदादकृते एव समासे समासान्ता इत्ययं पक्षो ज्ञाप्यते। तेन द्विपुरीत्यादि सिद्ध्यति। यदि ह्यत्र 'ऋक्पूरब्धूः' इत्यकारः समासे कृते स्यात्, तदा समासस्याकारान्तोत्तरपदत्वाभावात् 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्यते' इति स्त्रीलिङ्गता न स्यात्। जृम्भते। जजृम्भे। जृम्भिता इत्यादि। यङ्यङ्लुकोः 'रीगृत्वतः' इति वचनाद्रीग्रिग्रीको भवन्ति। जरीजृम्भ्यते। जरीजृम्भीति इत्यादि। जृम्भयति। अजजृम्भत्। जभिः विनाशनार्थे चुरादौ। भाषार्थोऽयं परस्मैपदिष्वपि इति केचित्॥३९३–३९४॥

२६७. शल्भ कत्थने। शल्भते। शशल्भे। शल्भिता इत्यादि॥३९५॥

२६८. वल्भ भोजने। दन्त्योष्ठ्यादिः। वल्भते। ववल्भे। णौ निगरणार्थत्वात् नित्यं परस्मैपदम्। वल्भयति॥३९६॥

२६९. गल्भ धार्ष्ट्ये। गल्भते। प्रगल्भः। अवगल्भ इवाचरति अवगल्भते—'आचारेऽवगल्भ' इति क्विप्, तत्सन्नियोगेनाकारस्यानुदात्तत्वानुनासिकत्वप्रतिज्ञानं प्रागेवोक्तमित्यनुदात्तेत्त्वात्तङ्। क्विपोऽभावे क्यङि अवगल्भायते। अवगल्भेति विशिष्टग्रहणादनुपसृष्टादन्योपसृष्टाच्चाचारक्विपि गल्भति, प्रगल्भति इति भवति॥३९७॥

२७०. श्रम्भु प्रमादे। तालव्योष्मादिः। एवं काश्यपः। दन्त्यादिरिति चन्द्रः। स्वामी चैवं पठित्वा मतान्तरेण स्त्रम्भिवति दन्त्यान्त्यत्वमप्याह। मैत्रेयस्य त्वयमेव पक्षः। यदाह सः—"संयोगान्तसाधर्म्येण सान्तोऽप्यत्र निर्दिश्यते। द्युतादावप्ययं पठिष्यते। तस्यैव च ध्वंसुसाहचर्यान्नीगित्याहुः। दन्त्वे पुनरसाहचर्यमिच्छन्ति" इति। दैवेऽप्येवमेवोक्तम्। तत्र तावदयं पक्षो वृत्तितद्व्याख्याकृतामनभिमत इव प्रतीयते, यद्दन्त्वसूत्रे उभयोर्ग्रहणं नीक्सूत्रे नास्येति चाहुः।' सति ह्येवमवश्यं वक्तव्यम्। तथैव स्वामिचन्द्रयोरपि पाठोऽनभिमत इव। यत् 'वौ कषलसकत्थश्रम्भ' इत्यत्र 'श्रम्भु विश्वासे' इति वदन्नमुं नोपाददत वृत्तिकारः, अग्रहणे कारणं चाचष्ट। तथा व्याख्याकृतोऽपि न वृत्तिकारवचनमुपलक्षणमाचचक्षत,

नाप्यग्रहणे कारणम् । श्रम्भते । शश्रम्भे । श्रम्भिता । श्रम्भित्वा, श्रब्ध्वा—उदित्त्वा-दिड्विकल्पः, 'न क्त्वा सेट्' इत्यकित्त्वान्नलोपाभावः । श्रब्धः—'यस्य विभाषा' इत्यनिट्त्वम् ॥३६८॥

२७१. ष्टुभु स्तम्भे । स्तोभते । तुष्टुभे । स्तोभिता इत्यादि । तुस्तुभिषते, तुस्तोभिषते । स्तुभित्वा, स्तोभित्वा—'रलो व्युपधात्' इति वा कित्त्वम् । उदित्त्वात्पक्षे क्त्वायामिडभावे स्तुब्ध्वा इति । 'निष्ठा' इति निष्ठायां 'यस्य विभाषा' इति स्तुब्धम् । सनि 'स्तौतिण्योरेव' इत्यषत्वम् , निष्टोभिता । निष्टोब्धा–'उपसर्गात्सुनोति' इत्यादिना 'प्राक्सितादड्व्यवायेऽपि' इति च षत्वम् । नितुस्तोभिषते इत्यत्राभ्यासेन व्यवायात् अस्थादित्वाच्च 'स्तौतिण्योरेव' इति नियम एवावतिष्ठते । अनुष्टुप्—पूर्ववत् षत्वम् । त्रिष्टुप्—'सुषामादिषु च' इति षत्वम् । अनुष्टुबेव आनुष्टुभम्, एवं त्रिष्टुबेव त्रैष्टुभम् । 'छन्दसः प्रत्ययविधाने नपुंसके स्वार्थे उपसंख्यानम्' इति स्वार्थे उत्सादिभ्यः प्राग्दीव्यतीयोऽण् , स्वार्थेऽपि प्राग्दीव्यतीयः ॥३६९॥

२७२. तिप्यादय उदात्ता अनुदात्तेतः तिपिवर्जम् ।

२७३. गुपू रक्षणे । एतदादयः शुम्भान्ता उदात्तेतः । 'गुपूधूपविच्छिपणिपनिभ्य आयः' इत्यायप्रत्ययः स्वार्थे 'आयादय आर्द्धधातुके वा' इति आर्द्धधातुके विषये विकल्पेनायमुत्पाद्यते । तस्मिन् लघूपधगुणः । आयादय आयेयङ्णिङ्च । 'सनाद्यन्ता धातवः' इति धातुत्वे—गोपायति । गोपायाञ्चकार—'कास्प्रत्ययात्' इत्याम् । गोपायिता । गोपायिष्यति । गोपायतु । अगोपायत् । गोपायेत् । आशिषि गोपाय्यात् । अगोपायीत् । अगोपायिष्टाम् । अगोपायिष्यत् । जुगोपायिषति । गोपाययति । अजुगोपायत् । सर्वत्रार्द्धधातुके अतो लोपः । अत एवाग्लोपित्वात् 'णौ चङि' इति ह्रस्वाभावः । गोपाय्यम्—'अचो यत्' । गोपायितः । गोपायित्वा । गोपाया—'अप्रत्ययात्' इत्यकारः । आयाभावे—जुगोप । जुगुपतुः । जुगोपिथ, जुगोप्थ । जुगुपिव, जुगुप्व । ऊदित्त्वादिड्विकल्पः । 'यावान् कश्चिदिडभावः प्रतिषेधनिबन्धनो वा विकल्पनिबन्धनो वा सर्वः क्रादिसूत्रेण नियम्यते' इति मैत्रेयः सेधतावाह; तन्मते नित्यमिटा भाव्यम् । 'क्रादिनियमः प्रतिषेधविषयः' इति वादिनां हरदत्तादीनां विकल्प एव । 'आयादीनामुत्पत्तिविकल्पः' इत्युक्तम् । निवृत्तिविकल्पे हि प्रत्ययलक्षणेन प्रत्ययान्तत्वात् गोपायाञ्चकार इति स्यात् । गोपिता, गोप्ता । गोपिष्यति, गोप्स्यति । गुप्यात्—'किदाशिषि' इति कित्त्वान्न गुणः । अगौप्सीत्, अगोपीत् । अगोपिष्यत्, अगोप्स्यत् । जुगुप्सति, जुगुपिषति । गुप्त्वा, गुपित्वा, गोपित्वा—'रलो व्युपधात्' इति क्त्वासनोः कित्त्वविकल्पः । सनि अनिट्पक्षे 'हलन्ताच्च' इति कित्त्वम् । जोगुप्यते—आयान्तस्यानेकाच्त्वात् न यङुदाहृतः । आयोत्पत्तिविकल्पस्य यङपि प्रयोजनम् । नात्र यङो लुगस्ति यत् 'आयादय आर्द्धधातुके वा' इति आर्द्धधातुकव्यक्तेरभिव्यक्तावेवायं विकल्प उच्यते । लुकि हि तेन विषयत्वापहारान्नार्द्ध-

धातुकव्यक्तेरभिव्यक्तिरिति कथमायाभावः स्यात् ? उपपादितश्चायं प्रकारोऽज गतिक्षेपणयोरित्यत्र। गोपयति। अजूगुपत्। गुप्तः—'यस्य विभाषा' इति नेट उत्पत्तिः। गुप्तिः—'तितुत्र' इति नेट्। उत्पत्तिविकल्पस्य चेदं प्रयोजनम्, अन्यथा प्रत्ययान्तत्वादकार एव स्यात्। गोप्यम्—ण्यत्। कुप्यम्—'राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः' इति क्यपि गुपेरादिकत्वं निपात्यते। अयं भाषार्थो रक्षणार्थश्चुरादौ। गुप गोपने इति इहैवाग्रे। गुप व्याकुलत्वे इति दिवादौ ॥४००॥

२७४. धूप सन्तापे। अस्यापि पूर्ववदायस्तदभावश्च। धूपायति। धूपायाञ्चकार। धूपायिता इत्यादि। आयाभावे वलादौ सर्वत्र नित्यमिडस्य विशेषः। 'रलो व्युपधात्' इति कित्त्वविकल्पस्याप्यत्र न प्रयोजनम्; अलघूपधत्वात्। आयाभावेऽपि नोऽस्य क्तिनस्ति, गुरुमत्त्वात्। तेन धूपा इत्यकार एव भवति। भाषार्थोऽयं चुरादौ ॥४०१॥

२७५. जल्प जप व्यक्तायां वाचि।

२७६. जप मानसे च। जल्पति। जजल्प। जल्पिता इत्यादि। जल्पाकः—'जल्पभिक्षकुट्टलुण्टवृङः षाकन्' इति ताच्छील्यादौ षाकन्। षित्वात् स्त्रियां जल्पाकी। जल्पति पुत्रं देवदत्तः। जल्पयति पुत्रं देवदत्तं यज्ञदत्तः—'जल्पत्यादीनामुपसंख्यानम्' इति प्रयोज्यस्याशब्दकारकत्वेऽपि कर्मत्वम् ॥ जपति। जजाप। जेपतुः। जपिता। अजपीत्, अजापीत्—'अतो हलादेः' इति वा वृद्धिः। जिजपिषति। जञ्जप्यते—'लुपसद' इत्यादिना भावगर्हायां यङ्। 'जपजभ' इत्यादिनाभ्यासस्य नुक्यनुस्वारे परसवर्णविकल्पो जभिवत्। जञ्जपीति, जञ्जप्ति। जापयति। अजीजपत्। जप्यम्—'पोरदुपधात्' इति यत्। कर्णेजपः—'स्तम्बकर्णयोरमिजपोः' इति यथासङ्ख्यम्, जपेः कर्णे सुबन्ते उपपदेऽच् 'हस्तिसूचकयोः' इति वचनात् सूचकविषयः। 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक्। जञ्जपूकः—'यजजप' इति यङन्तात्तच्छीलादावूकप्रत्यये 'अतो लोपः' 'यस्य हलः' इति अल्लोपयलोपौ। जपः—'व्यधजपोरनुपसर्गे' इति अप्। उपसृष्टात्तु घञि—उपजापः। अनयोः कर्मव्यतिहारे न तङस्ति, 'प्रतिषेधे हसादीनामुपसंख्यानम्' इत्युक्तत्वात् ॥४०२-४॥

२७७. चप सान्त्वने। चपति। चचाप। चेपतुः। चपिता इत्यादि जपिवत्। 'चपो वृक्षः' इति मैत्रेयः। वेणुविशेष इति दण्डनाथः। तस्य विकारः चापः—'तालादिभ्योऽण्' इति विकारावयवयोरण् ॥४०५॥

२७८. षप समवाये। समवायः सम्बन्धः सम्यगवबोधो वा। सपति इत्यादि जपिवत्। सिसपिषति। 'स्तौतिण्योरेव' इति अषत्वम्। सापयति। असीषपत्। सप्तिः—'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच्। सप्त—'सप्यशूभ्यां तुट् च' इति कनिन्प्रत्ययः तुडागमश्च। पञ्चन्शब्दवत् षट्संज्ञा तत्कार्यं च। सप्तानामपत्यं साप्तिः—'बह्वादिभ्यश्च' इतीञि 'नस्तद्धिते' इति टिलोपः। अत्र शाकटायनः

क्षीरस्वामी च 'सचतिं चाहुः' इत्युक्त्वा 'सचति सचिवः' इत्यप्याहतुः ॥४०६॥

२७९. रप लप व्यक्तायां वाचि। रपति। लपति इत्यादि जपिवत्। विलापयति पुत्रम् इत्यत्र जल्पत्यादित्वात्प्रयोज्यस्य कर्मत्वम्। अलीलपत्, अललापत्—काण्यादित्वाद् उपधाह्रस्वविकल्पः। राप्यम्, लाप्यम्—'आसुयुवपिरपिलपित्रपि' इति ण्यत्, यतोऽपवादः। अत एव जपतिना समानार्थत्वेऽपि पृथङ्निर्देशः। रिपुः—'रपेरिच्चोपधायाः' इति उप्रत्यय उपधाया इकारः ॥४०७-४०८॥

२८०. चुप मन्दायां गतौ। चोपति। चुचोप। चोपिता। चुचुपिषति, चुचोपिषति। चुपित्वा, चोपित्वा—'रलो व्युपधात्' इति कित्त्वविकल्पः। चोचुप्यते। चोचुपीति, चोचोप्ति। चोपयति। अचूचुपत्। चोपनः—चलनार्थत्वाद् युच्। णौ नित्यं परस्मैपदम्। गले चोप्यते गलेचोपकः—'कृत्यल्युटो बहुलम्' इति बहुलवचनाद् ण्यन्तादस्मात्कर्मणि ण्वुल्। 'कर्तृकरणे कृता बहुलम्' इति बहुलवचनात्सप्तम्यन्तस्यापि समासः। 'तत्पुरुषे कृति बहुलम्' इति बहुलवचनादलुक्, 'अमूर्द्धमस्तकात्स्वाङ्गादकामे' इति वा। 'उदुपधाद्भावादिकर्मणोः' निष्ठायां वा कित्त्वे चुपितमनेन, चोपितमनेन इत्यादि। चुप्रम्—ऋजेन्द्रादौ रकि निपातितः। 'स्वरेण नीचेन शपिं छुपिं छिपिम्' इत्यनिट्कारिकापाठो द्वितीयादेरिति तत्र तौदादिकस्य 'छुप संस्पर्शने' इत्यस्यैव ग्रहणं न त्वस्य ॥ ४०९ ॥

२८१. तुप तुम्प त्रुप त्रुम्प तुफ तुम्फ त्रुफ त्रुम्फ हिंसार्थाः। तोपति इत्यादि चुपिवत्। तुम्पति। तुतुम्प। तुतुम्पतुः—संयोगान्तत्वाल्लिटो न कित्त्वम्। तुम्पिता। तुम्पिष्यति। तुम्पतु। अतुम्पत्। तुम्पेत्। आशिषि—तुप्यात्। 'किदाशिषि' इति कित्त्वात् अनिदितामिति नलोपः। अतुम्पीत्। अतुम्पिष्यत्। तुतुम्पिषति। तोतुम्प्यते। तोतुम्पीति, तोतुम्प्ति। तोतुम्पः। तुम्पयति। अतुतुम्पत्। प्रस्तुम्पति गौः—'प्रात्तुम्पतौ गवि कर्त्तरि' इति सुट् तुम्पतेः। तुम्पताविति धातुनिर्देशो न तिङन्तानुकारणमिति प्रस्तुम्पः, प्रस्तुम्पकः इत्यादि च भवति। प्रतोतुम्पति इत्यादावत एव श्तिपा निर्देशान्न भवति ॥ त्रोपति ॥ त्रुम्पति ॥ तोफति ॥ तुम्फति इत्यादि तुपितुम्पिवत्। तत्रारेफसरेफयोः सानुषङ्गयोर्द्वितीयान्तयोः सेट्: क्त्वो 'नोपधात्थफान्ताद्वा' इति कित्त्वविकल्पनात् पक्षे नलोपे तुपित्वा, तुम्फित्वा। त्रुफित्वा, त्रुम्फित्वा इति भवति। अरेफाश्चत्वारस्तुदादावपि। आद्यस्तु चुरादावपि। तत्र स्वर्दनमर्थः ॥४१०-४१७॥

२८२. पर्प[1] रफ रफि अर्ब पर्ब लर्ब[2] बर्ब मर्ब कर्ब खर्ब गर्ब[3] शर्ब षर्ब चर्ब[4] गतौ। आद्यः प्रथमान्तः। परौ द्वावपि द्वितीयान्तौ। एकादश परे तृतीयान्ताः। द्वितीयतृतीयौ मुक्त्वा सर्वे रोपधाः। पर्पति। पपर्प। पर्पिता इत्यादि। पर्प्यतेऽनेनेति

---

१. 'वर्फ' इति स्वामी। २. स्वामिमैत्रेयौ न पठतः। ३. 'गर्व घर्व' इति स्वामी। ४. 'चर्ब भर्ब नर्ब' इति क्षीरतरङ्गिणीपाठः।

पर्पः—येन पीठेन पङ्गवश्चरन्ति स उच्यते। 'हलश्च' इति घञ्। पर्पेण चरति पर्पिकः—'पर्पादिभ्यष्ठन्' इति तृतीयान्ताच्चरत्यर्थे ष्ठन्। षित्त्वात् स्त्रियां पर्पिकी॥ रफति॥ रम्फति॥ अर्बति। आनर्ब॥ पर्बति॥ लर्बति॥ बर्बति॥ मर्बति॥ कर्बति॥ खर्बति॥ गर्बति॥ शर्बति॥ सर्बति। असिषर्बत्॥ चर्बति। अर्बादयो नोपधा इति कौशिकः॥४१८-४३१॥

२८३. कुबि छादने[1]। कुम्बति इत्यादि। कुम्बा—गुरुमत्त्वादकारः। "चिन्तिपूजिकथिकुम्बिचर्चश्च' इत्यङ्विधौ चौरादिकस्य ग्रहणम्॥४३२॥

२८४. लुबि तुबि अर्दने[1]। लुम्बति। तुम्बति इत्यादि। तुम्बी अलाबूः—गौरादित्वान्ङीष्॥४३३-४३४॥

२८५. चुबि वक्त्रसंयोगे। चुम्बति इत्यादि। लुम्ब्यादयस्त्रयश्चुरादौ॥४३५॥

२८६. षृभु षृम्भु हिंसार्थौ[2]। अत्र मैत्रेय एवं पठित्वा 'षिभु षिम्भु इत्येके' इति ऋकारस्य स्थाने इकारमप्याह। तरङ्गिण्यां तु ऋकारवन्तौ दन्त्यादी पठित्वा 'षोपदेशपर्युदासे सृग्रहणेनानर्थकस्यापि ग्रहणम्' इत्युक्तम्। सर्भति। ससर्भ। सर्भिता इत्यादि। सिषर्भिषति। मैत्रेयपाठे 'स्तौतिण्योरेव' इत्यषत्वम्। सरीसृभ्यते। सरीसृभीति, सरिसृभीति, सर्सृभीति। सरीसर्ब्धि, सरिसर्ब्धि, सर्सर्ब्धि। सर्भयति। अससर्भत्। असीसृभत्। 'उरृद्वा'। सिषर्भयिषति। तरङ्गिणीमते तु षत्वं न भवति। सर्भित्वा, सृब्ध्वा। ऊदित्त्वादिड्विकल्पः। सृब्धम्—'यस्य विभाषा' इत्यनिट्त्वम्। सृभ्यम्—ऋदुपधत्वात् क्यप्। सृम्भति। ससृम्भ। ससृम्भतुः। सृम्भ्यात्। नलोपः क्ङितोः। इकारवत्पाठपक्षे—सेभति। सिम्भति इत्यादि॥४३६-४३७॥

२८७. शुभ शुम्भ भाषणे हिंसायां च। द्वाविमौ देवमैत्रेयादयः पठन्ति। स्वामी तु निरनुषङ्गं न पपाठ। इदमेव आत्रेयस्यापि मतम्; तुदादौ 'शोभत इति शपि' इति वचनात्। दुर्गस्तु भासने इत्यस्यार्थमाह। एवं धनपालशाकटायनौ। गुप्तस्तु 'सावष्टम्भनिषुम्भसम्भ्रमनमद्भूगोलम्' इत्यादिदर्शनान्मूर्धन्यादित्वमाह। शोभति। शुम्भति इत्यादि। तोपतितुम्पतिवत्। शुभः—इगुपधलक्षणः कः। शुभ्रम्—'स्फायितञ्चि' इत्यादिना रक्। इमौ शोभार्थौ तुदादी। निरनुषङ्गस्त्वग्रे च दीप्तौ तङि॥४३८-९॥

२८८. गुपादय उदात्ता उदात्तेतः।

अथानुनासिकान्ताः—

२८९. घिणि घुणि घृणि ग्रहणे। एतदादयः कम्यन्ता उदात्ता अनुदात्तेतः। घिण्णते। जिघिण्णे। घिण्णिता। घिण्णिष्यते। घिण्णताम्। अघिण्णत। घिण्णेत। आशिषि घिण्णिषीष्ट। अघिण्णिष्ट। अघिण्णिष्यत। जिघिण्णिषते। जेघिण्णयते। जेघिण्णीति। जेघिण्टि। लङि—अजेघिन्। घिण्णयति। अजीघिण्णत। घिण्णितम्।

---

1. सूत्रद्वयमिदं क्षीरस्वामी न पठति। 2. '०ष्टृभु ष्टृम्भु हिंसार्थाः' इति ख. पुस्तके।

सर्वत्र नुमः ष्टुत्वम्। यङ्लुकि लङि संयोगान्तलोपस्यासिद्धत्वान्नकारान्तत्वम्। एवम् घुण्णते। घृण्णते। जघृण्णे इत्यादि। जरीघृण्ण्यते। 'रीगृत्वतः' इति रीक्। जरीघृण्णीति, जघृंण्णीति इत्यादि। अजघृंन् इत्यत्र संयोगान्तलोपस्यासिद्धत्वान्न गुणः। 'पदान्तस्य' इति णत्वं न ॥ ४४०-४४२ ॥

२९०. घुण घूर्ण भ्रमणे। घोणते। जुघुणे। घोणिता। जुघुणिषते, जुघोणिषते। घुणित्वा, घोणित्वा—'रलो व्युपधात्' इति कित्त्वविकल्पः। जोघुण्यते। जोघुणीति, जोघुण्टि। जोघूण्टः इत्यादौ अनुनासिकान्तत्वात् 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घ उपधायाः। झलीति क्ङितोर्विशेषणम्। घोणयति। अजूघुणत्। उदुपधत्वाद्भावादिकर्मणोः, घुणितमनेनेत्यादि। घोणा—क्रोडादिनिपातनादचि टाप्। कल्याणघोणा—अत्र "स्वाङ्गाच्चोपसर्जनादसंयोगपधात्" इति उपसर्जनसंयोगोपधस्वाङ्गान्ताद्बहुव्रीहेर्वा ङीषिति प्राप्तस्य ङीषः 'न क्रोडादिबह्वचः' इति निषेधः। अयं ङीष् क्रोडाद्यन्ताद्बह्वजन्ताच्च नेत्यर्थः। घूर्णते इत्यादि। यङ्लुकि लङि अजोघूर्ण्—'रात्सस्य' इति नियमात् संयोगान्तलोपाभावः। इमौ तुदादौ परस्मैपदिनौ ॥ ४४३-४४४ ॥

२९१. पण व्यवहारे स्तुतौ च।

२९२. पन च। पृथङ्निर्देशात् स्तुतावित्यनेनैवायं सम्बध्यते। शतस्य पणते, शतं पणते—'व्यवहृपणोः समर्थयोः' इति कर्मणि शेषे षष्ठी। अन्यदा द्वितीयैव। समर्थयोरिति समानार्थयोरित्यर्थः, शकन्ध्वादित्वात् समशब्दाकारस्य पररूपम्। द्यूते क्रयविक्रयव्यवहारे च समानार्थत्वमनयोः। पेणे। पणिता। पणिष्यते। पणताम्। अपणत। पणेत। पणिषीष्ट। अपणिष्ट। अपणिष्यत। पिपणिषते। पम्पण्यते—'नुगतोऽनुनासिकान्तस्य' इति नुक्। पम्पणीति। पम्पण्टि। पम्पाण्टः—'अनुनासिकस्य क्विझलोः' इति दीर्घः। अपम्पण्। पाणयति। अपीपणत्। पण्यम्—'अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु' इति पणितव्ये व्यवहर्तव्ये निपातितः। अन्यत्र ण्यति पाण्यम्। मूलकपणः, शाकपणः—यः संव्यवहाराय मूलकादीनां परिमितो मुष्टिर्बध्यते स उच्यते। 'नित्यं पणः परिमाणे' इति परिमाणे गम्यमाने अप् प्रत्ययः। अन्यत्र घञि पाणः। व्यावहारिकोऽप्युन्मानलक्षणपरिमाणयोगात् पण इत्युच्यते, स पणश्चेद्द्विवादः स्यादित्यादौ। इदं दास्यामीति पणनस्य परिच्छेदनात् पणोक्तिः। अध्यर्द्धपण्यम्। द्विपण्यम्—'पणपादमाषशताद्यत्' इति अध्यर्धपूर्वात् प्रातिपदिकात् पणाद्यन्ताद् द्विगोश्चार्हीयेष्वर्थेषु यत्। एत्यात्र आपणत इति आपणः—'गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च' इत्यधिकरणे घान्तो निपातितः। पणितम्। क्विपि पाण्—'अनुनासिकस्य' इति दीर्घः। वणिक्—'पणेरिज्यादेश्च वः' इति इजिप्रत्ययः पकारस्य च वकारः। वणिजो भावो वणिज्या—'दूतवणिग्भ्यां च' इति यः। यद्यप्ययं भावकर्माधिकारे, तथापि स्वभावाद्भाव एव स्त्रियां च।

वाणिज्यमिति—'प्रज्ञादिभ्यश्च' इत्यणन्ताद् वाणिजशब्दात् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ब्राह्मणादेराकृतिगणत्वात् ष्यञि कर्मणि चेति चकारेण भावः समुच्चीयते। विविधमत्र पणन्त इति विपणिः—'इन्' इतीन्। पणसम् पण्यपर्यायः—'अत्यमिचमितमिनमिरभिलभिनभितपिपतिपणिपनिमहिभ्योऽसच्' इत्यसच्। 'गुपूधूप' इत्यायो व्यवहारार्थस्य नेत्युक्तान्युदाहारणानि तद्विषयाणि। तथा च वृत्तिः—'स्तुत्यर्थेन पनिना साहचर्यात्तदर्थः पणिः प्रत्ययमुत्पादयति' इति। एवं न्यासपदमञ्जर्यादिष्वपि। अत एव तरङ्गिण्यामपि—"न चोपलेभे वणिजां पणायान्[1]' इति प्रयुञ्जानो भट्टिर्भ्रान्तः" इत्युक्तम्। पणायति राजानम्। पणायाञ्चकार। पणायिता इत्यादि। आर्द्धधातुकविवक्षायामायानुत्पत्तौ उक्तान्येवोदाहरणानि। अत्र गुपादिवदायोत्पत्तिविकल्पस्य प्रयोजनं पेणे इत्यादिसिद्धिः, पणाञ्चकारेत्यादिनिवृत्तिश्च। निवृत्तिविकल्पे हि प्रत्ययलक्षणेन प्रत्ययान्तत्वादाम्स्यात्। एवमन्यान्यपि प्रयोजनानि गुपिवन्नेयानि। अत्र स्वामिकाश्यपसम्मताकारवासुदेवादयः पणायत इत्यायान्तादात्मनेपदमुदाहरन्ति, तदसत्; यदस्यानुदात्तेत्त्वं व्यवहारार्थस्यायाभावात्स्तुत्यर्थस्यार्द्धधातुक आयविकल्पनात् प्रकृतावेव चरितार्थम्। अवयवे चाचरितार्थं लिङ्गं समुदायस्य विशेषकम्, यथा—जुगुप्सते इति। स्पष्टं चैवं 'गुपूधूप' इत्यत्र न्यासपदमञ्जर्यादिषु। अत्र क्षेमेन्द्रन्यासे पणतेः सार्वधातुकेऽप्यायविकल्प उक्तः। तथा—सुधाकरकाश्यपतरङ्गिणीकाराश्च विच्छेस्तुदादिपाठाल्लिङ्गात् सार्वधातुकेऽपि विकल्पमाहुः। नित्ये ह्याये विच्छायतीति शपापि सिद्ध्यतीति किं तत्र पाठेन? न चास्ति स्वरभेदः, शे कृते प्रत्ययस्वरेण तस्योदात्तत्वे धातुर्वर्ज्यमानस्वरेणानुदात्तः। शपि तु तस्य पित्त्वेनानुदात्तत्वात् 'धातोरन्तः' इति धातुरन्तोदात्तः। तत्र 'एकादेश उदात्तेनोदात्तः' इत्युभयथापि विकरणान्तस्योदात्तत्वात्। अनेनैवाभिप्रायेण 'च्छ्वोः शूठ्' इत्यत्र न्यासे गां विच्छतीति गोविड्रित्युक्तम्, नैतत्साधु; विच्छायती विच्छायन्तीति 'आच्छीनद्योः' इति नुम्विकल्पस्य प्रयोजनस्य सम्भवात्। शपि तु 'शप्श्यनोर्नित्यम्' इति नित्यो नुम् स्यात्। 'गुपूधूपविच्छि' इत्यत्र कैयटपदमञ्जर्यादिष्वप्येवमेव स्थितम्। विच्छ गतावित्यत्रात्रेयमैत्रेयावप्येवमेवाहतुः। तथा देवोऽपि 'विच्छेरायेशतुर्वा नुं शे स्यादिति तुदादिता[2]' इति। अत्र पुरुषकारे[3]—तुदादौ विच्छिः पठ्यते, न तु विच्छायतिरिति विच्छेरेवानन्तरेण शेन भाव्यम्। स चैवं भवन्नायविकल्पस्य कल्पकः स्यादेव। अत्रैव 'आयादय आर्द्धधातुके वा' इत्यत्र न्यासान्तरम्, 'आयादयः शपि नित्यम्' इति भाष्यं चानुकूलम्। 'नित्ये विच्छेराये शब्ग्रहणं शित उपलक्षणमिति कल्प्यं स्याद्' इति सुधाकराद्युक्तमेव समर्थितम्। नायं भाष्यस्यार्थः, तत्र हि पर-

---

१. भ० का० ३।२७। २. दै० ६७ का०। ३. दै० पु० ४१ पृ०।

सप्तमीत्वमाश्रित्य सूत्रं दूषयित्वा तत्परिहाराय 'सार्वधातुके नित्यम्' इत्यभिहिते तत्राप्यायेनानवकाशेन विकरणानां बाधदोषमुद्भाव्य तत्परिहारायैव यथा पुनरयं सूत्रभेदेन परिहारः। यदि पुनः शपि नित्यमित्युच्येत तदा सिध्यतीत्युक्तम्। तेनापि न्यासेन सार्वधातुके नित्यमित्यनेन समानफलेन भाव्यम्। तच्च शब्ग्रहणस्य शित उपलक्षणत्व एव युज्यते, अतश्चोपलक्षणत्वमेवैष्टव्यम्, यत्तत्र यथान्यासमेवास्तु इति सूत्रमेव विषयसप्तम्याश्रयणेन सिद्धान्तितम्। अत एव च तत्र कैयटेन 'तौदादिकाद्विच्छेः शेन भाव्यं न तु शपा, एवं तर्हि न्यासभेदोपलक्षणार्थमिदं शिति नित्यमिति न्यासः कर्त्तव्यः' इत्युक्तम्। यदप्युक्तं पुरुषकारे "'तुदादिभ्यः शः' इति हि शो विधीयते न तु विच्छायेः, विच्छेरेव तुदादिषु पाठात्, तच्चैतद्विच्छेः शविधानमाये नित्ये सति आयान्ताद्भवत्परिक्लिश्येत" इति; तदपि सूत्रस्वभावादाये नित्ये सति गुपादिष्वनुबन्धकरणवत् विच्छेः पाठोऽपि समुदायार्थतया युज्यते इति न सङ्कटम्। तथा च हरदत्तः—"विच्छिरयं तुदादौ पठ्यते, तत्सामर्थ्यादायप्रत्ययान्तादपि शविकरणो भवति, न तु शप्; यथा—जुगुप्सते इत्यात्मनेपदम्। तेन विच्छायती, विच्छायन्तीति 'आच्छीनद्योः' इति नुम्विकल्पो भवति" इति॥ पनायति इत्यादि पणिवत्। पनसः—'अत्यमि' इत्यादिना असच्॥४४५-४४६॥

२९३. भाम क्रोधे। भामते। बभामे। भामिता इत्यादि। बिभामिषते। बाभामीति, बाभान्ति। बाभान्मि। बाभान्वः। बाभान्मः। 'नुगतः' इति तपरकरणाद्यङ्लुकोरभ्यासस्य न नुगागमः। 'म्वोश्च' इति मकारान्तस्य धातोर्नकारादेशो भवति मकारवकारयोः परत इति मकारस्य नकारः। लङि अबाभान्—'मो नो धातोः' इति नकारः, पदस्येति शेषः। एवं क्विप्यपि भान्। भामः क्रोधः, सोऽस्या अस्तीति भामिनी। देवदत्ताय भामते इत्यत्र 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति कोपविषयत्वेन देवदत्तस्य सम्प्रदानत्वम्। अमर्षः क्रोधः। अपकारो द्रोहः। अक्षमा ईर्ष्या। गुणेषु दोषाविष्करणमसूया॥४४७॥

२९४. क्षमूष् सहने। क्षमते। चक्षमे। चक्षमिषे, चक्षन्से। चक्षमिध्वे, चक्षन्ध्वे। चक्षमिवहे, चक्षण्वहे। चक्षमिमहे, चक्षण्महे। ऊदित्त्वात्सर्वत्र वलाद्यार्द्धधातुक इड्विकल्पः। अनिट्पक्षे 'म्वोश्च' इति नत्वे 'रषाभ्याम्' णत्वम्। क्षमिष्यते, क्षंस्यते। क्षमताम्। अक्षमत। क्षमेत। आशिषि—क्षमिषीष्ट, क्षंसीष्ट। अक्षमिष्ट, अक्षंस्त। अक्षमिष्यत, अक्षंस्यत। कर्मादौ क्षम्यते। अक्षमि—'नोदात्तोपदेशस्य मान्तस्यानाचमेः' इति ञ्णिति कृति च वृद्धिनिषेधः। चिक्षमिषते, चिक्षंसते। चङ्क्षम्यते। चङ्क्षमीति, चङ्क्षन्ति। 'नुगतः' इत्यभ्यासस्य नुक्। लुङि 'ह्म्यन्त' इति वृद्धिनिषेधात्—अचङ्क्षमीत्। क्षमयति। अचिक्षमत्। 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' इति अमन्तत्वाण्णौ मित्त्वे 'मितां ह्रस्वः' इत्युपधाया ह्रस्वः। क्षमित्वा, क्षान्त्वा। क्षान्तः—'यस्य विभाषा' इत्यनिट्त्वम्। क्षामः—घञ्। क्षमकः—ण्वुल्।

अपराधक्षमः। अपराधक्षमा—'ईदित्त्वमिभ्यां च' इत्यणोऽपवादो णः, अणि हि ङीप्स्यात्। क्षमा—'षिद्भिदादिभ्योऽङ्' इति षित्त्वात् स्त्रियामङ्। ण्यन्तस्यास्य 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इति चिण्णमुल्परे णौ मितामुपधाया दीर्घविकल्पनात् अक्षमि, अक्षामि। क्षमंक्षमम्, क्षामंक्षामम् इति भवति। "आभीक्ष्ण्ये णमुल्च" अस्मिन् गम्यमाने समानकर्तृकत्वे पूर्वकालत्वे च णमुलिति णमुल्। चकारः क्त्वासमुच्चयार्थः। 'आभीक्ष्ण्ये द्वे भवतः' इति द्विर्वचनम्। पौनःपुन्यमाभीक्ष्ण्यम्। स्यादिष्वपि दीर्घविकल्पः चिण्वदिट्पक्षेऽपि भवति—क्षामिष्यते,क्षमिष्यते। अक्षामिषाताम्, अक्षमिषाताम्। क्षामिषीष्ट, क्षमिषीष्ट। क्षामिता, क्षमिता इत्यादि। चिण्वदिटोऽभावे क्षमयिष्यते। अक्षमिषाताम्। क्षमयिषीष्ट। क्षमयिता इति। लुङ्येकवचने चिण्परो णिरिति पक्षे दीर्घो भवति—अक्षमि, अक्षामि इति। यङ्लुगन्तादपि चिण्णमुलोश्चिण्वदिटि च अयं दीर्घविकल्पो द्रष्टव्यः—अचङ्क्षामि, अचङ्क्षमि। चङ्क्षामंचङ्क्षामम्, चङ्क्षमंचङ्क्षमम्। चङ्क्षामिष्यते, चङ्क्षमिष्यते इत्यादि। अत्राप्यचिण्वत्पक्षे चङ्क्षमिष्यते इत्यादि। अत्र 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इति ह्रस्वविकल्पेनापि दीर्घे सिद्धे दीर्घग्रहणं ण्यन्ताद्यङन्ताच्च णौ चिण्णमुल्परे दीर्घार्थम्। अक्रियमाणेऽस्मिन् णिलोपाल्लोपयोः परनिमित्तयोः पूर्वस्य ह्रस्वविकल्पे कर्त्तव्ये स्थानिवत्त्वान्न चिण्णमुल्परे णौ मिदङ्गमनन्तरमित्यसौ न स्यात्। क्रियमाणे तु दीर्घविधिं प्रति न स्थानिवदिति स्थानिवत्त्वं निषिद्ध्यते। नन्वेवमपि दीर्घे कर्तव्ये ण्यल्लोपयोः 'असिद्धवदत्र' इत्यसिद्धत्वात् व्यवधानं दुर्वारम्, नैतत्; व्याश्रयत्वेनासिद्धत्वाभावात्। तथा च वामनः—'णौ हि णियङोर्लोपः, चिण्णमुल्परे णावङ्गस्येति दीर्घत्वम्' इति। अयमपि दिवादौ ॥४४८॥

२६५. कमु कान्तौ। 'कमेर्णिङ्' इति स्वार्थे णिङ्। अयमार्द्धधातुके विकल्पेनोत्पद्यते। अत्राप्युत्पत्तिविकल्पस्य प्रयोजनं गुपिवद् द्रष्टव्यम्। कामयतेर्ङित्त्वात्तङ् कामयाञ्चक्रे। कामयिता। कामयिष्यते। कामयताम्। अकामयत। कामयेत। आशिषि—कामयिषीष्ट। अचीकमत—'णिग्रहणेष्वयमपि गृह्यते' इति 'णिश्रि' इति कर्तरि चङ्। 'णेरनिटि' इति णिलोपे 'णौ च' इति ह्रस्वः। चिकामयिषते। कामयति—णिङन्ताण्णौ 'णेरनिटि' इति लोपः। कामयिता। कामना—'ण्यासश्रन्थः' इति युच्। मांसकामः, मांसकामा—'शीलिकामिभिक्षिचरिभ्यो णः' इति अणोऽपवादो णः। अणि हि सति स्त्रियां ङीप्स्यात्। णिङभावे—चकमे। कमिता। कमिष्यते। कमिषीष्ट। अचकमत—'कमेरुपसंख्यानम्' इति कर्तरि चङ्। अकमिष्यत। चिकमिषते। चङ्कम्यते। अत्र 'यङ्लुङ् न' इति गुपू रक्षणे इत्यत्र स्थापितं तत एवावगन्तव्यम्। कामयति—'न कम्यमिचमाम्' इति मित्त्वनिषेधाद् वृद्धिः। 'चिण्णमुलोः' इति दीर्घविकल्पो मिद्विषय इत्यस्यामित्त्वात् चिण्णमुल्परेऽपि णौ नित्या वृद्धिः—अकामि। कामङ्कामम् इति। तथा चिण्वदिट्यपि मित्त्वाभावात् कामिष्यत इत्याद्येव भवति, न तु कमिष्यत

इत्यादि। अचिण्वत्पक्षे तु गुणाययोः कामयिष्यते इत्यादि। अस्योदित्त्वमणिङ्पक्षे क्त्वायामिड्विकल्पार्थम्, तेन कमित्वा, कान्त्वा इति। निष्ठायां तु 'यस्य विभाषा' इति निषेधात् कान्त इति। कामुकः—'लषपत' इत्यादिना उकञ्। कामङ्कामम्—'नोदात्तोपदेशस्य' इति चिणि ञिति णिति च कृति वृद्धिनिषेधोऽस्य न भवति। तत्र 'अचनामिकमिवमीनाम्' इति पर्युदासात्। कामुकी मैथुनेच्छावती—'जानपद' इत्यादिना मैथुनेच्छायां ङीष्, अन्या कामुका। कम्रः—'नमिकम्पि' इत्यादिना रः। कमनः इति वासरूपेणानुदात्तेल्लक्षणे युचि। कन्तुः कामः—'अर्जिदृशि' इत्यादिनो-प्रत्ययस्तुगागमश्च। कन्तुकम्—'कुमारीक्रीडनकानि च' इति कुमारीक्रीडनकादस्मात् कन्। कंसः—'वृतृवदिहनिकमिकषिभ्यः सः' इति सः। कंसाय हितं कंसीयम्। 'तस्मै हितम्' इति विषये 'प्राक् क्रीताच्छः' इति छः। तस्य विकारः कांस्यम्—'कंसीयपरशव्ययोर्यञञौ लुक्च' इति यथासंख्यादस्माद्विकारे यञि प्रातिपदिका-दित्यधिकारात्ततः परस्य छस्य यतश्च लुक्, यञञोस्तु विधानसामर्थ्यान्न भवति। कंसेन क्रीतं कंसिकम्—'कंसाट्टिठन्' इति टिठन् आर्हीयेष्वर्थेषु। टित्त्वात् स्त्रियां कंसिकी ॥४४९॥

२९६. घिण्णादय उदात्ता अनुदात्तेतः।

२९७. अण रण वण भण[1] मण कण क्वण व्रण भ्रण ध्वण[2] शब्दार्थाः। इतः क्रम्यन्ता उदात्ता उदात्तेतः। अणति। आण। अणिता। अणिणिषति। आणयति। मा भवानणिणत्। अणुः—स्वल्पो धान्यविशेषश्च। 'अणश्च' 'धान्ये नित्' इत्यु-प्रत्ययः। अणूनां धान्यानां भवनं क्षेत्रम् अणव्यम्, आणवीनम्—'विभाषा तिल-माषोमाभङ्गाणुभ्यः' इति षष्ठ्यन्ताद्भवने क्षेत्रे यत्। विभाषाग्रहणात् खञ्। यति "ओर्गुणः" उवर्णान्तस्य गुणो भवति भसंज्ञानिमित्ते तद्धिते परे इति गुणे 'वान्तो यि' इत्यवादेशः। अणुप्रकारः अणुकः—'स्थूलादिभ्यः प्रकारवचने कन्' इत कन्। प्रकारो भेदः सादृश्यं च। अणुकः सूक्ष्मदृक्। अणु निपुणे इति यावादि-पाठात् कन्। अण्डम्—'ञमन्ताड्डः' इति डः। बाहुलकाड्डुकारस्य नेत्त्वम्। आण्डूः जलतरणिः—'अणो डश्च' इत्यूकारप्रत्ययो डश्चान्तादेशः। रणति। रराण। रेणतुः। रणिता। अरणीत्, अराणीत्। 'अतो हलादेः' इति वा वृद्धिः। रिरणिषति। रंरण्यते। रंरणीति, रंरण्टि। रंराण्टः—'नुगतोऽनुनासिकान्तस्य' इत्यभ्यासस्या-नुस्वारः, 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः। राणयति। अरीरणत्, अरराणत्। काण्यादित्वाद् ह्रस्वविकल्पः। रणयति इति गतौ घटादिः। रणनं रणः शब्दः। रणन्त्यस्मिन्निति रणो यज्ञः संग्रामश्च—'वशिरण्योरुपसंख्यानम्' इति अकर्त्तरि कारके अप् प्रत्ययः। रणितम्। रण्डा 'ञमन्ताड्डः'। रणरणको हृल्लेखः—

---

१. क्षीरस्वामी न पठति। २. मैत्रेयो न पठति।

'घञर्थे कविधानम्' इति कः । 'क्नादीनां के द्वे भवतः' इति द्विर्वचनम्, संज्ञायां कन् । पृषोदरादित्वाद्धलादिशेषाभावोऽभ्यासस्याकारश्च । वणति । ववाण । ववणतुः इत्यादि । वकारादित्वादेत्त्वाभ्यासलोपाभावः । अयमपि काण्यादिः । वाणः शततन्तुः वीणा—'हलश्च' इति संज्ञायां घञ् । वाणी—'इञ् वपादिभ्यः' इति इञन्तात् 'सर्वतोऽक्तिन्नर्थादित्येके' इति ङीष् । अन्तर्वाण्यस्येति अन्तर्वाणिः विपश्चित्—'निष्प्रवाणिश्च' इति चकारात् 'नद्यृतश्च' इति कपो निषेधः । अवश्यं वणतीति वाणिनी—आवश्यकणिन्यन्तान्ङीप् । वण्डः—पूर्ववङ्गः । अल्पतनुः पशुः । भणति । बभाण । भणिता इत्यादि । अयमपि काण्यादिः । भण्यते इति भाणः—कर्मणि घञ् । भणितिः—'तितुत्र' इतीण्निषेधे 'तितुत्रेष्वग्रहादीनाम्' इति वचनादिडागमः । भण्डः । भडेर्वा भाण्डम्—'पुच्छभाण्ड' इति निर्देशाद्दीर्घः । भामेर्वा डप्रत्यये । सम्भाण्डयते, भाण्डानि सिञ्चनोतीत्यर्थः । 'पुच्छभाण्डचीवराण्णिङ्' इति णिङ् । 'भाण्डात्समाचयने' इति च वृत्तिः । ङित्त्वात्तङ् । समबभाण्डत—'णिश्रि' इति चङ् ॥ मणति । ममाण । मेणतुः । मणिता । इत्यादि । मणितम् । मणिः—इन्प्रत्ययः । मणिप्रकारो मणिकः—स्थूलादित्वात् कन् । मणिरेव मणिकः—यावादित्वात्कन् । मणिकः अलङ्कारः—संज्ञायां कन् । मण्डः । मण्डतेर्वा ॥ कणति । चकाण । कणिता इत्यादि । अयमपि काण्यादिः । कणयति इति गतौ घटादित्वात् । कणः लेशः सूक्ष्मतण्डुलश्च—गोचरादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वाद् घः । कणिका—संज्ञायां कनि 'प्रत्ययस्थात्' इतीत्वम् । कण्ठः—कणेष्ठः । बाहुलकात् ठस्येकाभावः । अयं निमीलनार्थश्चुरादौ ॥ क्वणति । चक्वाण । क्वणिता इत्यादि । क्वाणः, क्वणः । निक्वाणः, निक्वणः । कल्याणप्रक्वणा वीणा, कल्याणप्रक्वाणा इति वा—"क्वणो वीणायां च" इति अनुपसृष्टान्निपूर्वात् वीणाविषयाच्च क्वणेर्वाऽप्प्रत्ययः । सोपसर्गार्थं वीणाग्रहणम् । कुणालो धान्यं यज्ञोपकरणं च—'पीयुकणिभ्यां कालन् ह्रस्वः संप्रसारणं च' इति कालन्प्रत्ययः, यथासंख्यात्सम्प्रसारणं च । कुणपम्—'कणः सम्प्रसारणं च' इति कपन्प्रत्ययः सम्प्रसारणं च । कङ्कणीका प्रतिसरः—'चङ्कणेः कङ्कणश्च' इति यङ्लुगन्तादीकन्प्रत्ययः कङ्कणादेशश्च ॥ व्रणति । ववाण । व्रणिता इत्यादि । अयं व्रशादिः क्वचित्पठ्यते । दन्तोष्ठ्यादिरेव सर्वत्र । तथा च देवः—'व्रणेच्छब्दार्थविषये, व्रणयेद्गात्रचूर्णने'[1] इति । गात्रचूर्णनार्थोऽयं कथादिः ॥ भ्रणति । बभ्राण । भ्रणिता ॥ ध्वणति । दध्वाण । ध्वणिता इत्यादि । ध्रणिरपि सम्मतायामत्र पठ्यते ॥

२९८. श्रोणृ अपनयने । श्रोणति । प्रोणति । ओणाञ्चकार । ओणिता । ओणिणिषति । ओणयति । मा भवानौणिणत् । ऋदित्त्वान्नोपधाह्रस्वः । इदमेव ऋदित्त्वं द्विर्वचनात् पूर्वमुपधाह्रस्वत्वे ज्ञापकमित्युक्तम् । अवावा—'अन्येभ्योऽपि दृश्यते'

१. दै० ९३ का० ।

इति वनिपि 'विड्वनोरनुनासिकस्यात्' इति णकारस्याकारेऽवादेशे 'सर्वनामस्थाने' इत्युपधादीर्घे नलोपः । स्त्रियाम् अवावरी—'वनो र च' इति वन्नन्तप्रातिपदिकत्वात् ङीब्रौ । "वनो न हशः" हशन्ताद्यो वन् विहितस्तदन्तान् ङीब्रौ नेत्ययं प्रतिषेधः प्रायिकत्वादत्र नेति न्यासादौ ॥४६०॥

२९९. शोणृ वर्णगत्योः । शोणति । शुशोण । शोणिता । शुशोणिषति । शोशोण्यते । शोशोणिट । शोणयति । अशुशोणत् । शोणितम् । शोणः । शोणी, शोणा । 'शोणात्प्राचाम्' इति वा ङीष् ॥४६१॥

३००. श्रोणृ सङ्घाते । श्रोणति इत्यादि । श्रोणिः । इन्प्रत्ययः । श्रोणी । कृदिकारत्वाद्वा ङीष् । श्रोणा नक्षत्रम्—अजन्ताट्टाप् ॥४६२॥

३०१. श्लोणृ च । श्लोणति इत्यादि । शोणादयः तालव्योष्मादयः ॥४६३॥

३०२. प्रैणृ गतिप्रेरणश्लेषणेषु । पैणृ इति क्वचित्पठ्यते । प्रैणति इत्यादि ॥४६४॥

३०३. ध्रण शब्दे[1] । उपदेशे नान्तोऽयमिति प्रागस्य निर्देशो न कृतः । तस्य प्रयोजनं यङ्लुकीति मैत्रेयः । अतोऽस्य दण्डके पाठः प्रक्षिप्तः । ध्रणति इत्यादि । 'रषाभ्याम्' इति णत्वम् । यङ्लुकि दन्ध्रन्ति, दन्ध्रान्त इत्यादौ णत्वस्य 'नश्चापदान्तस्य' इत्यनुस्वारेऽसिद्धत्वात् कृते तस्मिन्परसवर्णः, तस्यासिद्धत्वात् पुनर्णत्वं न भवति । अभ्यासस्य 'नुगतः' इति नुक् । अस्मादनन्तरं क्वचित् कोशे[2] 'वण भण धण' इति त्रयः पठ्यन्ते, तत्र भणिर्मैत्रेयानुसारेण दण्डके पठितः । धणिरपि सम्मतायामिति तत्रैवोक्तम् । वणति । वणः—'उद्घ्नः' इत्यच् ॥४६५॥

३०४. कनी दीप्तिकान्तिगतिषु । कनति । चकान । कनिता इत्यादि । कन्या—कन्याया अपत्यं कानीनः—'कन्यायाः कनीन च' इति अण् कनीनादेशश्च । अत एव निर्देशाद्यत्, स्वरितान्तत्वं तु 'तिल्यशिक्यमर्त्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः' इति; अन्यथा 'यतोऽनावः' इति यदन्तस्य द्व्यचो विधीयमान आद्युदात्तः स्यात् । कनकम्—'कृन् शिल्पिसंज्ञयोः' इति कुन् ॥४६६॥

३०५. ष्टन वन[3] शब्दे । स्तनति । तस्तान । स्तनिता इत्यादि । तिस्तनिषति । तंस्तन्यते । तंस्तनीति । तंस्तन्ति । ध्वनतिवत्प्रक्रिया । स्तानयति । अतिष्टनत् । अभिनिष्टानः विसर्जनीयः—'अभिनिसः स्तनः शब्दसंज्ञायाम्' इति षत्वम्, अन्यत्र अभिनिस्तनति मृदङ्गः । अत्र न्यासे सकारादिरयं पठितः । तदस्य षोपदेशपर्युदासवाक्ये उपादानान्निर्मूलम् । अत एव पुरुषकारे मूर्द्धन्यादिरेवायं दर्शितः । स्तान्यम्—ण्यत् । स्तनः—अच् । स्तन्यम्—'शरीरावयवाद्यत्' इति भवार्थे यत् । स्तनितम्—स्तनयतीति देवशब्दार्थस्य कथादपठितस्य ॥ वनति । ववान । ववनतुः । वनिता । इत्यादि । वनितम् । वनित्वा । वतिः—क्तिनि 'तितुत्र' इतीण्निषेधात् 'अनुदा-

---

१. सूत्रमिदं क्षीरस्वामी न पठति । २. तरङ्गिण्याम् । ३. 'स्तन ध्वन' इति क्षीरस्वामी ।

त्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इत्यनुनासिकलोपे वतिः इति भवति। अनुदात्तोपदेशा यमिरमिनमिहनिगमिमन्यतयः। प्रवत्य—'वा ल्यपि' इत्यनुदात्तोपदेशादीनां विधीयमानोऽयमनुनासिकलोपविकल्पो व्यवस्थितविभाषाविज्ञानात् नान्तेषु नित्यः, अन्यत्र विकल्प इतीह नित्यः। वन्तिः—क्तिच् 'न क्तिचि दीर्घश्च' इति दीर्घानुनासिकलोपयोर्निषेधः। 'अनुदात्तोपदेशवनति' इति श्तिपा निर्देशात् वंवान्त इत्यादावनुनासिकलोपो न भवति। वनोतिनिवृत्त्यर्थस्तु श्तिपा निर्देशो न भवति; तनोत्यादित्वेन तस्यानुनासिकलोपस्येष्टत्वात्। वनिष्ठुः—अपानं मांसविशेषश्च। 'ऋतन्यञ्जिवनि'इत्यादिनेष्ठुच्। वनम्—अच्। वनानां समूहो वन्या—'पाशादिभ्यो यः' इति समूहे यः। तदन्तं स्वभावात् स्त्रीलिङ्गम्। वन्यम्—दिगादित्वाद्भवार्थे यत्। वानेयम्—'पूर्वनगरी' इति नद्यादित्वात् ढक् शैषिकः। वनिः, वनी—'कृदिकारादक्तिनः' इति वा ङीष्॥४६७-४६८॥

३०६. वन षण सम्भक्तौ। वनेरर्थभेदात्पुनः पाठ इति मैत्रेयः। तथैवोदाहरणानि—सनति। ससान। सेनतुः। सनिता इत्यादि। सायात्, सन्यात्—'किदाशिषि' इति कित्त्वाद् "ये विभाषा" जनसनखनां यकारादौ क्ङित्यात्वं वेति तद्विकल्पः। एवं यग्यङोरपि। धातुपारायणे तु "'ल्लोपो यि' इतिवद्वर्णमात्रे निर्देष्टव्ये य इत्यत्वतो निर्देशाद्यासुटयात्वं न" इत्युक्तम्। सिसनिषति, सिषासति—'सनीवन्तर्धभ्रस्जिदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' इतीड्विकल्पः; इडभावे 'जनसनखनां सञ्झलोः' इति झलादौ सनि क्ङिति च विधीयमानमात्वं भवति। सासायते। संसन्यते—'ये विभाषा' इत्यात्वम्। इदं च क्ङित्येवेति ण्यति न भवति—सान्यम् इति। संसनीति, संसन्ति। संसातः। प्रक्षातग्रहणन्यायेन 'जनसन' इत्यात्वे 'अनुनासिकस्य' इति दीर्घं परत्वाद् बाधित्वाऽत्रापि भवति। सातिः। सातः। सातवान्। आत्वसूत्रे च 'झलादिसन् जनखनोर्न सम्भवति इति सनोतेरेव विशेषणम्' इति वदता वृत्तिकारेण सनोतेः 'सनीवन्त' इति पक्ष इडागमः, तदिह 'सनोत्यर्थमेव संग्रहणम्'इत्यभिधानादिड्विधावात्वे च तानादिकस्यैव ग्रहणमितीव प्रतीयते। अन्ये तु पुनरुभयत्रोभयोर्ग्रहणमाहुः। एवं च वृत्तौ सनोतेरित्युपादानं 'तस्यानुनासिकलोपादात्वं विप्रतिषेधेन इति वक्ष्यामि' इत्येवमर्थं मन्तव्यम्। सानुः—'दृसनिजनिचरिचटिभ्यो ञुण्' इति ञुण्प्रत्ययः। वनु याचने, षणु दाने इति द्वयं तनादौ॥४६९-४७०॥

३०७. भ्रम गत्यादिषु। कनी दीप्तिगतीत्यत्र गतेः परयोः शब्दसम्भक्त्योरादिशब्देन ग्रहः। भ्रमति। बभ्राम। बभ्रमतुः। भ्रमिता इत्यादि। बिभ्रमिषति। भ्रामयति इत्यत्र 'न कम्यमिचमाम्' इति मित्त्वनिषेधात् 'मितां ह्रस्वः' इति 'पोरदुपधात्' ह्रस्वाभावः। भ्रम्यम्—'पोरद्'इति यत्। निष्ठायां 'रुष्यमत्वरसंघुषास्वनाम्'इतीड्विकल्पनात् भ्रमितः, भ्रान्तः; भ्रमितवान्, भ्रान्तवान् इति भवति। इडभावे 'अनुनासिकस्य

क्विझलोः क्ङिति' इति दीर्घः। क्विपि पूर्ववत् दीर्घे 'मो नो धातोः' इति नत्वे भ्रान् इति भवति। नलोपस्तु न भवति, असिद्धत्वादिति प्रागेवोक्तम्। भ्रमः— घञि 'नोदात्तोपदेश' इति वृद्धिनिषेधः। अत एव चिण्यपि ण्यन्तात् 'न कम्यमि' इति मित्त्वनिषेधात् ण्यपेक्षया वृद्धौ मा भवान् भ्रामि इति भवति। भ्रामयः इत्यम रोगे इति चौरादिकस्य। भ्रमत्रम—'अमिनक्षियजिवन्दिपतिभ्यः' इत्यत्रन्। भ्रमित्रः—'अमेर्द्विषति चिच्च' इतीत्रप्रत्ययः। भ्राम्रः–'अमितम्योर्दीर्घश्च' इति रप्रत्यये दीर्घः। भ्रान्त्रम्—'अत्यमिचमिशंसिभ्यः त्रन्' इति त्रन् ॥४७१॥

३०८. द्रम हम्म मीमृ गतौ। द्रमति। दद्राम। द्रमिता इत्यादि। लुङि 'ह्म्यन्त' इति वृद्धिनिषेधात् अद्रमीत्। दिद्रमिषति। दन्द्रम्यते। दन्द्रमीति, दन्द्रन्ति। दन्द्रान्तः इत्यादि। उत्तमे 'म्वोश्च' इति नत्वे णत्वम्—दन्द्रण्मि इत्यादि। अदन्द्रन् इत्यत्र तिप्सिपोर्हल्ङ्यादिलोपे 'मो नो धातोः' इति नत्वे 'पदान्तस्य' इति णत्वं न भवति। द्रमयति। अदिद्रमत्। अमन्तत्वान्मित्त्वम्। अद्रमि, अद्रामि। द्रमन्द्रमम्, द्रामन्द्रामम्—'चिण्णमुलोः' दीर्घविकल्पः। स्यादिषु चिण्वदिट्पक्षे दीर्घविकल्पे णिलोपे च द्रमिष्यते, द्रामिष्यते इत्यादि। शुद्धे पुनरिटि णेर्गुणायादेशयोः द्रमयिष्यते इत्यादि। अण्यन्तात् चिणि 'नोदात्तोपदेशस्य' इति वृद्धिनिषेधात् अद्रमि इत्येव भवति। एवं ञिति णिति कृति च द्रमः, द्रमकः इत्यादि। दन्द्रमणः—'जुचङ्क्रम्य' इत्यादिना ताच्छील्यादौ यङन्तादस्माद्युचि अल्लोपयलोपौ। द्रमिडः—'अमन्तत्ताड्डुः' इति डः। 'नेड्वशि कृति' इति निषेधो बाहुलकान्न भवति॥ हम्मति। जहम्म। हम्मिता इत्यादि। जिहम्मिषति। जेहम्म्यते। जंहम्मीति। जंहन्ति। जंहन्तः इत्यादाधनुपधात्वान्नोपधादीर्घः। लङि हल्ङ्यादिसंयोगान्तलोपयोः 'मो नो धातोः' इति नत्वे अजंहन्। हम्मयति। अजहम्मत्। हम्मित्वा। हम्मतिः ज्ञानम्, गत्यर्थो बुद्ध्यर्थः, न हम्मतिः अहम्मतिः अज्ञानम्। यद्वा अहमिति मतिः। अहंशब्दो मान्तोऽहङ्कारवचनोऽव्ययम्॥ मीमति। मिमीम। मिमीमतुः। मीमिता। इत्यादि। मिमीमिषति। मेमीम्यते। मेमीमीति, मेमीन्ति इत्यादि। लङि अमेमीत्। मीमयति। अमिमीमत्। मीमित्वा। मीमितः। अयं 'शब्दे च' इति क्वचित्[1] पठ्यते ॥४७२–४७४॥

३०९. चमु छमु जमु झमु अदने। चमति। चचाम। चेमतुः। चमिता इत्यादि। आङ्पूर्वत्वे तु 'ष्ठिवुक्लमुचमां शिति' इति दीर्घः। आचामति। आचामतु। आचामत्। आचामेत्। आचामयति। चिणि ञिति णिति कृति च 'नोदात्तोपदेशस्य' इति वृद्धिनिषेधात्—अचमि। चमः। चमक इत्यादि। अत्रापि 'अनाचमेः' इति वचनात् आचामि। आचामः, आचामक इति वृद्धिरेव। ननु वार्त्तिके 'अचमिकमिवमी-

---

१. क्षीरतरङ्गिण्याम्।

नाम्' इति केवलस्योमादानात् सर्वत्र वृद्ध्या भाव्यम्, नैतत्; यत इदं वार्त्तिकं धात्वन्तरमपि पर्युदसनीयम्, न केवलं सूत्रोपात्त इत्येवम्परम्। तथा च भाष्ये अध्यगीष्ट-'अत्यल्पमिदमुच्यते अनाचमेरिति' इति। अत एव न्यासः-'चमेस्तावदनाचमेरिति सूत्र एवोपादानात् प्रतिषेधः' इति। तथा वर्द्धमानोऽपि 'उपसर्गोपादानात् अचमि,पर्यचमि' इति। अपि च वृत्तावपि वार्त्तिकस्योदाहरणमाङ्पूर्वमेव दर्शितम्। चिचमिषति। चञ्चम्यते। चञ्चमीति। चञ्चन्ति। चञ्चान्त इत्यादि। अत्रापि प्रकृतिवदाङ्पूर्वत्वे चिणि ञिति णिति कृति वृद्धिः, अन्यत्र तदभावश्च। चामयति—'न कम्यमिचमाम्' इति मित्त्वनिषेधः। चम्यतेऽत्रेति चमसः-'अत्यमिचमि' इत्यसच्। चमूः-'कृषिचमितनिरमिसर्जिखर्जिभ्य ऊः' इत्यूकारप्रत्ययः॥ छमति। चच्छाम। छमिता इत्यादि। चिच्छमिषति। चञ्छम्यते। चञ्छमीति, चञ्छन्ति। चञ्छान्तः इत्यादि। छमयति-अमन्तत्वान्मित्त्वम्। चिण्णमुल्परे णौ 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इति वा दीर्घः। अच्छमि, अच्छामि। छमंछमम्। छामंछामम् इति। चिण्वदिटि वृद्धेर्भावाभावाभ्यां णिलोपे छमिष्यते, छामिष्यते इत्यादि। शुद्धे पुनरिटि गुणाययोः छमिष्यत इत्यादि। णिचाऽभावे चिणि ञिति णिति कृति च 'नोदात्तोपदेशस्य' इति वृद्धिनिषेधात् अच्छमि इत्यादि भवति॥ जमति। जजाम। जेमतुः। जमिता॥ झमति। जझाम। झमिता इत्यादि पूर्ववत्। अत्र मैत्रेयः—'जिमिं केचिदिच्छन्ति, जेमनम्' इति। एषामुदित्त्वात् क्त्वायामिड्विकल्पे चमित्वा, चान्त्वा इत्यादि भवति। निष्ठायाम्—'यस्य विभाषा' इत्यनिट्त्वात् चान्त इत्यादि। अनिटि—'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः॥ ४७५-४७८॥

२१०. क्रमु पादविक्षेपे। क्रामति। चक्राम। चक्रमतुः। क्रमिता। क्रमिष्यति। क्रामतु। अक्रामत्। क्रामेत्। आशिषि—क्रम्यात्। अक्रमीत्। 'ह्म्यन्तक्षण' इति वृद्धिनिषेधः। अक्रमिष्यत्। 'क्रमः परस्मैपदेषु' इति परस्मैपदे शिति दीर्घः। क्राम इत्यत्र हेर्लुकि प्रत्ययलक्षणेन परस्मैपदपरशित्परत्वेन दीर्घः[1]। न च 'न लुमता' इति निषेधः; तस्य लुमता लुप्तप्रत्ययनिमित्ताङ्गसंज्ञाविषयत्वात्। इह च हौ विकरणान्तमङ्गम्। क्रमस्तु विकरणे, विकरणश्च नित्यत्वात् पूर्वमेवात्र भवति। 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः' इति शब्विषये पक्षे श्यनो विधानात् क्राम्यति। क्राम्यतु। अक्राम्यत्। क्राम्येत् इत्यपि भवति। पूर्ववद्दीर्घः। चिक्रमिषति। चङ्क्रम्यते। चङ्क्रमीति, चङ्क्रन्ति इत्यादि। क्रमयति। अचिक्रमत्। 'मितां ह्रस्वः' इत्यत्र वृत्तिः-'केचिदत्र वेत्यनुवर्त्तयन्ति सा च व्यवस्थितविभाषा, तेन संक्रामयतीत्येवमादि सिद्धं भवति' इति। अविगीतस्तु संक्रमयति इति। अत्रैव 'रसातलं संक्रमिते तुरङ्गे' इत्यादिप्रयोगोनुकूलः। क्रमते। चक्रमे। क्रन्ता। क्रंस्यते। क्रमताम्। अक्रमत। क्रमेत;

---

१. म० भा० ७।३।२४ (पा० सू०)।

क्रंसीष्ट। प्रक्रंस्त। प्रक्रंस्यत। 'अनुपसर्गाद्वा' इति पक्षे तङ्। अत्रापि शब्विषये वा श्यनि क्राम्यते इत्यादि। 'वृत्तिसर्गतायनेषु क्रमः' इति वृत्त्यादिषु नित्यस्तङुदाहार्यः। वृत्तिरप्रतिबन्धः। सर्ग उत्साहः। तायनं स्फीतता। अयं वृत्त्यादिविषयस्तङ् 'उपपराभ्याम्' इति सिद्धे सत्यारम्भान्नियमादन्योपसृष्टान्न भवति। तेन संक्रामति इति परस्मैपदमेव। यदायमाङ्पूर्व उद्गमनार्थस्तदा 'आङ उद्गमने' इति वचनात् नित्यस्तङुदाहार्यः—आक्रमते भानुः इत्यादि। अत्र 'ज्योतिरुद्गमने इति वक्तव्यम्' इत्युक्तत्वात् आक्रामति धूमो हर्म्यतलात् इत्यत्र न भवति। 'उद्गमने वर्तमानोऽयमकर्मकः' इति कैयटे उक्तम्[1]। पदमञ्जर्यां तु 'आक्रमति धूमो हर्म्यतलम्' इति वृत्तिमुपादाय 'उद्गमने क्रमिरकर्मकः, तस्मादाक्रामति धूमो हर्म्यतलादिति पठितव्यम्' इत्युक्तम्[2]। यद्वा 'उद्गमनपूर्विकायां व्याप्तौ अत्र क्रमिर्द्रष्टव्यः' इति द्वितीया समर्थिता। 'नभः समाक्रामति चन्द्रमाः' इत्यत्र नोद्गमनं विवक्षितम्, किं तर्हि, व्याप्तिरिति परस्मैपदम्' इति तत्रैवोक्तम्[2]। विक्रमते—सुष्ठु पदानि विक्षिपतीत्यर्थः। 'अश्वादीनां गतिविशेषो विक्रमः' इति वृत्तिः। 'वेः पादविहरणे' इति नित्यस्तङ्। अन्यत्र विक्रामत्यजिनसन्धिः इति। त्रुट्यतीत्यर्थः। प्रक्रमते भोक्तुम्, उपक्रमते भोक्तुम्—'प्रोपाभ्यां समर्थाभ्याम्' इति नित्यस्तङ्। समर्थौ समानार्थौ। तच्च समानार्थत्वमादिकर्मणि। अन्यत्र प्रक्रामति, उपक्रामति इति, आगच्छति उपगच्छतीति चार्थः। आत्मनेपदेषु वलाद्यार्धधातुकस्य 'स्नुक्रमोरनात्मनेपदनिमित्ते' इतीडभावः। स्नुक्रमोर्वलाद्यार्धधातुकस्येडागमो भवति आत्मनेपदनिमित्ताभावे, इत्यक्षरार्थः। तदर्थादनयोरुदात्तत्वादेवेटः सिद्धावारम्भादात्मनेपदनिमित्तत्वे निषेधार्थं सूत्रं भवति। निमित्तग्रहणं कुर्वद्रूपताप्रतिपत्त्यर्थम्, न तु योग्यतापरमिति कर्मकर्तृविषयाद्भावकर्मविषयाच्चास्मात् कृतः सत्यामपि योग्यतायामात्मनेपदाभावात् प्रक्रमिता, प्रक्रमितुम्, प्रक्रमितव्यम् इतीड् भवत्येव। न चार्थविशेषा उपसर्गविशेषाश्चात्मनेपदस्य निमित्तं न क्रामतिरिति कथमस्यात्मनेपदनिमित्तत्वमिति मन्तव्यम्; यतस्तेषां विषयतया विशेषणत्वात् तद्विशिष्टो धातुरेव निमित्तम्। चिक्रंसते चिक्रंस्यते इत्यादौ 'पूर्ववत्सनः' इत्यतिदेशात्प्रकृतिगतमेव सनन्तेऽप्यात्मनेपदस्य निमित्तमिति तस्य क्रमिनिमित्तत्वादिडभावः। चिक्रंस्यते इत्यादौ भावकर्मणोरपि परत्वात् 'पूर्ववत्सनः' इत्येवात्मनेपदमिति प्रकृतेरेवात्मनेपदनिमित्तत्वमितीड्भावः सिद्धः। अस्ति च विप्रतिषेधः, भावकर्मणोरित्यात्मनेपदक्रमिनिर्मित्तत्वाभावादिट् स्यात्, अनेन तु सति नेति। यदा तु सनन्ताण्णिच्, तदात्मनेपदस्य क्रमिनिमित्तत्वाभावात् चिक्रमिषयते इतीटा भाव्यम्। तथा चिक्रमिषते स्वयमेव इति कर्मकर्तर्यपि। अत्र हि कर्मपदनिर्देशनिर्मित्तमेवात्मनेपदम्, न तु क्रमिनिमि-

---

१. म० भा० प्र० १।३।४० (पा० सू०)। २. प० म० १।३।४०।

त्तम्। अत्र हरदत्तः—"सिद्धं तु स्नुक्रमोरात्मनेपदेन समानपदस्थस्येण्निषेधात् 'क्रमेश्च' इति वार्त्तिककारवचनादिहाप्यत्मनेपदेन समानपदस्थत्वादिटा न भाव्यम्" इत्याह। भाष्यवार्त्तिकपूर्वापरपर्यालोचनायां समानपदस्थत्वे तात्पर्यं नेति प्रतीयते। यतस्तु वार्त्तिककारः "आत्मनेपदे परे स्नुक्रमोर्नेडित्येवं सूत्रार्थे आश्रीयमाणे निर्दिष्टपरिभाषया आनन्तर्ये एव भाव्यत्वात् प्रचिक्रंसिष्यत इत्यत्र स्येन व्यवधानात् प्रक्रंसीष्ट इत्यत्र च सीयुट आत्मनेपदभक्तत्वात् प्रकंस्यते इत्यत्र व्यपवर्गाभावात् आत्मनेपदपरत्वाभावादिण्निषेधाप्रसङ्गाद् आत्मनेपदपरप्रतिषेधे तत्परसीयुडेकादेशेषु च प्रतिषेधो वक्तव्य इत्युक्तत्वात्, तत्परिहारमात्राय सिद्धत्वात्मनेपदेन समानपदस्यस्येण्निषेधाद्" इत्याह। भाष्यकृता च 'यथान्यासमेवास्तु' इति सूत्रमेव स्थापितम्। न च तत्र समानपदस्थत्वावगतिः। तथा वृत्तावपि—'न चेत्स्नुक्रमी आत्मनेपदस्य निमित्तम्, निमित्तग्रहणं सीयुडादेस्तत्परस्य च प्रतिषेधार्थम्' इत्युक्तम्। गतमदः। प्रक्रान्तेत्यादावात्मनेपदाभावेऽपि 'क्रमेस्तु कर्त्तर्यात्मनेपदविषयादसत्यप्यात्मनेपदे प्रकृतिप्रतिषेधो वक्तव्यः' इति इडभावः। अनुपसर्गात् क्रमेः क्रन्ता क्रमिता इत्युभयमपि भवति। '"अनुपसर्गाद्वा' इति विकल्पेनात्मनेपदनिमित्तादित्येके। अन्ये त्वात्मनेपदविषयादिति अनन्यभावं विषयशब्दं वर्णयन्तः क्रमितेत्येव भवितव्यमित्याहुः" इति पदमञ्जर्याम्। क्रमेरात्मनेपदे तासावनिट्त्वात् 'उपदेशेऽत्वतः' इति थल इण्निषेधो नाशङ्क्यः; यतः परस्मैपदे तासौ सेट्त्वान्नित्यानिट्त्वाभावः। क्रान्त्वा क्रन्त्वा, क्रमित्वा -उदित्त्वादिड्विकल्पः। इडभावे 'क्रमश्च क्त्वि' इति वा दीर्घः। क्रान्तः—'यस्य विभाषा' इतीण्निषेधः। क्रमः—घञ्। 'नोदात्तोपदेश' इति वृद्धिनिषेधः। क्रममधीते क्रमकः—'क्रमादिभ्यो वुन्' इति 'तदधीते तद्वेद' इति विषये वुन्। चङ्क्रमणः—'जुचङ्क्रम्य' इति युच्। न क्रामतीति नक्रः—'डोऽन्यत्रापि दृश्यते' इति डः। 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या' इति निपातनान्नञो नलोपाभावः। क्रिमिः—'क्रमिगमिनमिस्थम्भामच इच' इतीन्प्रत्यये अकारस्येकारः। क्रमिणः—'लोमादिपामादिपिच्छादिभ्यः शनेलचः' इति पामादिपाठान्मत्वर्थीयो नः ॥४७९॥

यज्ञनारायणार्येण[1] प्रक्रियेयं प्रपञ्चिता। अस्या निःशेषतस्सन्तु बोद्धारो भाष्यपारगाः ॥

३११. अणादय उदात्ता उदात्तेतः ॥

३१२. अय वय पय[2] मय चय तय णय[3] गतौ। इत आरभ्य रेवत्यन्ता उदात्ता अनुदात्तेतः। अयते। अयाञ्चक्रे—'दयायासश्च' इत्याम्। अयिता। अयिष्यते। अयताम्। आयत। अयेत। आशिषि—अयिषीष्ट। आयिष्यत। अस्य लुङ्लिटोर्ध्वमि 'विभाषेटः' इति मूर्द्धन्यविकल्प उदाहार्यः। एवमन्येष्वपि यान्तेषु।

---

१. कोऽयं यज्ञनारायणार्य इति भूमिकायां विचारितम्।
२. 'यय' इति मैत्रेयः। ३. 'नय' इति क्षीरतरङ्गिण्याम्।

प्रयियिषते । आययति । मा भवानयियत् । आयः, अयः—घञचौ । चलनार्थत्वेऽपि नास्य युजस्ति, 'न ये' इति यान्तानां तन्निषेधात् । तेन अयिता इति सामान्यस्तृन् भवति । प्लायते—'उपसर्गस्यायतौ' इति उपसर्गस्थस्य रेफस्यायतिपरत्वाल्लत्वम् । नन्वेकादेशस्य स्थानिवत्त्वाद्रेफस्यायतिः परो न भवति, सत्यम् ; 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' इति एकेन वर्णेन व्यवधानमाश्रयिष्यते । न चास्ति 'पूर्वत्रासिद्धे न स्थानिवद्' इति, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति तस्य सापवादत्वात् । एवं च पल्ययते इत्यत्रापि लत्वं भवति । न चानन्तरो निर्दुरो रेफोऽवकाश इति वाच्यम् ; तर्हि लाघवार्थं तावेवोपाददीत । येषान्तूपसर्गविशेषणमयतिग्रहणम् 'अयतिपरस्योपसर्गस्य यो रेफः' इति, तेषां नैवास्य चोद्यस्यावसरः; किन्तु प्रत्यय इत्यत्रापि लत्वं स्यात् । भवितव्यमेवेति तेषामेव केचित् । अपरे तु 'प्रतिपूर्वस्यायतेर्नैव प्रयोगः' इति, तेषां प्रत्ययशब्दः प्रतिपूर्वादिणोऽचि । प्रत्ययितशब्दोऽप्यस्मादेव तारकादित्वादितचि । निरयते, दुरयते इति प्रयोगस्सान्तयोर्द्रष्टव्यः । नह्यत्र लत्वप्रसङ्गः, 'ससजुषोः' इत्यस्यासिद्धत्वात् । वयते । ववये—वादित्वान्नैत्वाभ्यासलोपौ । वयिता इत्यादि पूर्ववत् । विवयिषते । वावय्यते । वावयीति, वावति । वावतः । वावयति । वावयीषि, वावसि । वावथः । वावथ । वावयीमि । वावामि । वावावः । वावामः । वलि यलोपः । यञादौ तु कृते यलोपे 'अतो दीर्घो यञि' इति दीर्घः । भौ यलोपात्पूर्वं नित्यत्वाद्द्भावे वल्परत्वाभावाद्यलोपाभावः । लोटि सेर्हिभावात् परत्वात्पूर्वं वलि लोपे तदनन्तरं हिरादेशः, तस्य च 'अतो हेः' इति लुकि वावा इति भवति । पूर्वं तु हिभावे तमाश्रित्य वलि लोपे सन्निपातपरिभाषया हेर्लुङ् न स्यात्, उत्तमे तु नित्यत्वादाटि यलोपाप्रसङ्गात् वावयानि इत्यादि भवति । लङि तिप्सिपोः परमपि हल्ङ्यादिलोपे यलोपो बाधते इति अवावत्, अवाव इति भवति । इदं च 'व्योर्वलि लोपः' इत्यनुवादपूर्वं विधेये निर्दिश्ये तस्य पूर्वनिर्देशेन विध्यन्तराद्बलीयस्त्वज्ञापनादवगम्यते । यत्तु तत्र वृत्तावुक्तम्—'पूर्वनिर्देशस्य फलं वेरपृक्तलोपात्पूर्वं वलि लोपः' इति, तद्विध्यन्तरोपलक्षणम् । आहुश्चैवं तत्र व्याख्यातारः । यद्वा—प्रकृतिविशेषं प्रत्ययविशेषं चापेक्षमाणाद्धल्ङ्यादिलोपात् वर्णमात्रापेक्षत्वादन्तरङ्गो वलि लोप इति पूर्वमेवासावत्र प्रवर्त्तिष्यते । पयते । पेये । पयिता ॥ मयते । मेये । मयिता ॥ चयते । चेये । चयिता ॥ तयते । तेये । तयिता ॥ नयते । नेये नयिता इत्यादि । चायिवत् । नयतेर्णोपदेशत्वात् प्रणयते इति णत्वं भवति । अत्र षयीति मूर्द्धन्योष्मादिरपि क्वचित् कोशे पठ्यते, मैत्रेयादिभिस्तु न पठ्यते । वयादीनामपि अयिवत् 'न यः' इति युञ्निषेधात् तच्छीलादौ तृनेव । 'णय रक्षणे च' इति मैत्रेयः[1] । तय णयेत्येके । अयादीनां क्वौ वलि लोपे तुकि अत्, वत्,

१. क्षीरस्वामी तु 'तय रक्षणे च' इति पठति ।

इत्यादि भवति । अतो लोपस्तु न भवति, आर्द्धधातुकोपदेशे यदकारान्तं तस्य तद्विधानात् ॥४८०-४८६॥

३१३. दय दानगतिरक्षणहिंसादानेषु । सर्पिषो दयते । सर्पिर्दयते 'अधीगर्थदयेशां कर्मणि' इति कर्मणि शेषे षष्ठी । अशेषे तु द्वितीयैव । दयाञ्चक्रे । 'दयायासश्च' इत्याम् । दयिता इत्यादि । वयिवत् । दयालुः—'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्' इति ताच्छीलिक आलुच् । दया । दयतिर्भिदादिषु द्रष्टव्यः ॥४८७॥

३१४. रय गतौ । रयते इत्यादि वयिवत् । रायः—घञ् । रयः तु अचि[१] ॥४८८॥

३१५. ऊयी तन्तुसंताने । ऊयते । ऊयाञ्चक्रे । 'इजादेश्च गुरुमतः' इत्याम् । ऊयिता इत्यादि । ऊययति । मा भवानूनियत् । द्विर्वचनात्पूर्वमुपधाह्रस्वत्वमित्युक्तम् । ऊयित्वा, ऊतः, ऊतवान्—ईदित्त्वान्निष्ठायामनिट्त्वम् । ऊतिः—बाहुलकात् क्तिन् । "'ऊतियूति' इति निपातनमवतेः क्तिनि उदात्तार्थम्" इति वृत्तावुक्तम् ॥४८९॥

३१६. पूयी विशरणे दुर्गन्धे च । पूयते । पुपूये । पूयिता इत्यादि । पुपूयिषते । पोपूय्यते । पोपूयीति, पोपोति । पोपूतः—इत्यादि । वयतिवत् । तसादौ ङित्त्वान्न गुणः । पूययति । अपूपुयत् । पूयित्वा । पूतः, पूतवान्—ईदित्त्वान्निष्ठायामनिट्त्वम् । पूतिः—'गन्धस्येदुत्पूति' इत्यादिनिर्देशात् क्तिन् । पूयः—पचाद्यच् ॥४९०॥

३१७. क्नूयी शब्दे उन्दने च । क्नूयते । चुक्नूये । क्नूयिता इत्यादि पूयतिवत् । क्नोपयति 'अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ' इति पुकि यलोपे 'पुगन्तलघूपधस्य च' इति गुणः । अचुक्नुपत्—कृतेऽपि गुणे 'णौ चङि' इति ह्रस्वः । क्नूयीति सानुबन्धकस्य निर्देशाद्यङ्लुकि चोक्नूयोति इति भवति । चेलक्नोपं वृष्टो देवः—'चेले क्नोपेः' इति ण्यन्तादस्मात् कर्मणि चेल उपपदे वर्षप्रमाणे गम्यमाने णमुल् । यावता वर्षेण चेलं क्निद्यति तावद् वृष्ट इत्यर्थः । चेल इत्यर्थग्रहणमिति वस्त्रक्नोपम् इत्याद्यपि भवति । अस्यापीदित्त्वान्निष्ठायामनिट्त्वम् ॥४९१॥

३१८. क्ष्मायी विधूनने । क्ष्मायते । चक्ष्माये । क्ष्मायिता इत्यादि । चिक्ष्मायिषते । चाक्ष्माय्यते । चाक्ष्मायीति, चाक्ष्माति । तसादौ क्ङिति सार्वधातुके 'श्नाभ्यस्तयोरातः' 'ई हल्यघोः' इति लोप इत्वञ्च—चाक्ष्मीत इत्यादि । लोटि तातङ्पक्षे ङित्त्वात् चाक्ष्मीतात् इति भवति । हेरप्यपित्त्वात् ङित्त्वात् चाक्ष्मीहि । लङि नित्यत्वाद्यलोपात्पूर्वं 'सिजभ्यस्त' इति जुस्भावो भवति । अचाक्ष्मायीत् । अचाक्ष्मीताम् । अचाक्ष्मायुः इत्यादि । क्ष्मापयति । अचिक्ष्मपत् । 'अर्त्तिह्री' इत्यादिना पुक् । अस्यापि सानुबन्धकस्य निर्देशात् यङ्लुकि चाक्ष्मायति इति । ईदित्त्वान्निष्ठायां क्ष्मातः, क्ष्मातवान् ॥४९२॥

३१९. स्फायी ओप्यायी वृद्धौ । स्फायते । पस्फाये—अभ्यासे 'शर्पूर्वाः खयः'

---

१. 'रीङः' इति ख. पुस्तके ।

इति खयः शेषः। स्फायिता इत्यादि दमायिवत्। णौ 'स्फायो वः' इति यकारस्य वकारे स्फावयति। अपिस्फवद् इति भवति। स्फीतः, स्फीतवान् 'स्फायः स्फी निष्ठायाम्' इति स्फीभावः। वत्वस्फीभावौ प्रकृतिग्रहणन्यायेन यङ्लुक्यपि भवत इति। पास्फावयति। स्फीतः, स्फीतवान् 'स्फायः स्फी निष्ठायाम्' इति स्फीभावः। वत्वस्फीभावौ प्रकृतिग्रहणन्यायेन यङ्लुक्यपि भवत इति पास्फावयति, स्फीतः, स्फीतवान् इति भवति। स्फायतं इति स्फाः—क्विपि वलि लोपः। अयं वेरपृक्तलोपात्पूर्वं भवतीति वयतौ प्रतिपादितम्। स्फाश्च तदण्डं च स्फाण्डम्। एवं स्फान्त्रम्। वृद्धाण्डान्त्रे उच्यते। स्फारः—'स्फायितञ्चि' इत्यादिना रक्॥ प्यायते। पिप्ये। पिप्याते। पिप्यिरे। पिप्यिषे। पिप्याथे। पिप्यिध्वे। पिप्यिवहे—परत्वात् 'लिड्यङोश्च' इति प्यायः पीभावे पुनः प्रसङ्गविज्ञानात् पीशब्दस्य द्विर्वचने 'एरनेकाच' इत्यजादौ यण्। प्यायिता इत्यादि पूर्ववत्। लुङि 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्' इति कर्त्तरि तशब्दे वा चिणि अप्यायि, अप्यायिष्ट इति भवति। यङि लिड्वत्पीभावे पेपीयते इत्यादि। यङ्लुकि तु पाप्याति। पाप्यात इत्यादि पूर्ववत्। पीनः, पीनवान्—'प्यायः पी निष्ठायाम्' इति वा पीभावः। इयं च व्यवस्थितविभाषेति अनुपसृष्टे तु नित्यम्। उपसृष्टे तु नैव, आप्यानः प्रप्यानश्चन्द्रमाः इति। आङ्पूर्वादन्धूधसोर्भवत्येव—आपीनमन्धुः, आपीनमूधः इति। 'ओदितश्च' इति निष्ठानत्वम्। ईदित्वं पीभावाभावे निष्ठाया इण्निवृत्त्यर्थम्। ओदितोऽनन्तराया निष्ठाया नत्वार्थमिदमोदित्त्वम्। कृते पीभावे स्वरान्तत्वात् 'अनिट्स्वरान्तः' इत्यनिट्त्वे सावकाशमिति पीभावाभाव इण्निवृत्तेर्न ज्ञापकः। स्फायेस्त्वीदित्त्वे स्फीभावस्य नित्यत्वात् स्वरान्तत्वादनिट्त्वे सिद्धे अनुदात्तेत्त्वमात्रं फलम्। न च सत्यपीटि सवर्णदीर्घत्वेनेदमेव रूपमिति मन्तव्यम्; परत्वादियङ्प्रसङ्गात्॥४९३॥

३२०. तायृ सन्तानपालनयोः। सन्तानः प्रबन्धः। तायते। तताये। तायिता इत्यादि पूर्ववत्। लुङि 'दीपजन' इत्यादिना कर्त्तरि तशब्दे वा चिणि—अतायि, अतायिष्ट इति भवति। ऋदित्त्वाण्णौ चङ्युपधाया ह्रस्वाभावात् अततायत्। अनीदित्त्वान्निष्ठायाम्—तायितः, तायितवान्॥ ४९४॥

३२१. शल चलनसंवरणयोः। शलते। शेले। शलिता। शलिष्यते। शलताम्। अशलत। शलेत। आशिषि—शलिषीष्ट। अशलिष्ट। शाशल्यते। शाशलीति, शाशल्ति। लङि तिप्सिपोर्हल्ङ्यादिलोपः—अशाशल्। शालयति। अशीशलत्। शलित्वा। शलितः। शलभः—'कॄशॄशलिभ्योऽभच्'। शल्कम्—'इण्भिकापाशलि' इति कन्। शलाका—'शलिपतिपटिभ्यो नित्' इत्याकः। शालूकः—'शलिमण्डिभ्यामूकण्' इत्यूकण्। शललम्—'कलतृपश्च' इत्यत्र प्रत्ययस्य पूर्वनिर्देशस्य धात्वन्तरादप्ययं भवतीति सूचनार्थत्वात् कुण्डलादिवत् कलः प्रत्ययः। शलली—पिप्पल्यादित्वात् ङीष्, जातिलक्षणो वा। शलालुः—गन्धद्रव्यविशेषः, शलालुः पण्यं व्यवहार्यमस्य

शलालुकः—'शलालुनोऽन्यतरस्याम्' इति प्रथमान्तादस्य पण्यमित्यर्थे ष्ठन्। षित्त्वात् स्त्रियां शलालुकी। 'अन्यतरस्यांग्रहणात् 'प्राग्वहतेष्ठक्' इति ठकि 'किति च' इत्यादिवृद्धौ शालालुकः। उभयोरपि ठशब्दयोरुगन्तात्परत्वात् 'इसुसुक्तान्तात्कः' इति कादेशः। अत एव 'शलालुनः' इति निर्देशादालुप्रत्ययः। शाला इति शालतावुक्तम्। अयं गत्यर्थो ज्वलादौ परस्मैपदी ॥ ४९५ ॥

३२२. वल वल्ल[1] संवरणे[1] सञ्चरणे च[1]। वलते। ववले। वलिता इत्यादि शलिवत्। णौ घटादित्वाद् वलयति इति। वालः-'हलश्च' इति करणे घञ्। वारः-'वालमूल' इत्यादिना पक्षे रः। वलिः, वली—इन्नन्तात् 'कृदिकारादक्तिनः' इति वा ङीष्। वलिनः-पामादित्वान्मत्वर्थे नः। वलिभः-'तुन्दिवलिवटेर्भः' इति भः। अयमपि मत्वर्थीयः। वलिः-'वलेर्बलञ्चाहिरण्ये' इति इन्प्रत्यये वलादेशः। वलभी—बाहुलकादभचि पिप्पल्यादिदर्शनात् ङीष्। वलयः—'वलिमलितनिभ्यः कयन्' इति कयन्। वल्गुः—'वलेर्गुक्च' इति उप्रत्ययो गुगागमश्च। वलाकः –'वलाकादयश्च' इत्याकन्नन्तो निपातितः। वलाकाया अपत्यं वालाकिः—'बाह्वादिभ्यश्च' इतीञ्प्रत्ययः। अत्रैव पाठात् जातिलक्षणङीषं बाधित्वा टाप्, अजादित्वाद्वा। वलाका अस्य सन्तीति वलाकी—'व्रीह्यादिभ्यश्च' इति मत्वर्थ इनिः। वलीकं नीव्रम्—'अलीकादयश्च' इतीकन्। वल्मीकम्—बाहुलकान्मुडागमः ॥ वल्लते। ववल्ले। वल्लिता इत्यादि। यङ्लुकि तिप्सिपोर्हल्ङ्याद्लिोपे संयोगान्तलोपे च अवावल्। वल्लभः—'रासिवल्लिभ्यां च' इत्यभच्। वल्लरी—बाहुलकादरप्रत्यये पिप्पल्यादिदर्शनात् ङीष्। वल्लिः, वल्ली इति कृदिकारत्वाद्वा ङीष्। वल्लूरं शुष्कमांसम्—'खर्जपिञ्जादिभ्य ऊरोलचौ' इति ऊरः ॥ ४९६-४९७ ॥

३२३. मल मल्ल धारणे। मलते। मेले। मलिता ॥ मल्लते इत्यादि पूर्ववत्। माला—'अकर्त्तरि च कारके'—इति कर्मणि घञ्। 'लस्य' इत्यत्र भाष्यकैयटयोर्माङोऽयं लप्रत्यय उक्तः। माली—व्रीह्यादित्वादिनिः। मालभारी—'इष्टकेषीकामालानां चिततूलभारिषु' इति यथासंख्यान्मालाया भारिण्युत्तरपदे ह्रस्वः। केचित्तु तत्र 'हारि' इति पठन्ति। माल्यम्— ऋहलोर्ण्यत्'। मलयः—'वलिमलि' इति कयन्। शरीरं धार्यते इति मलम्—अच्। मृजेर्वा व्युत्पादयिष्यते। मलिनः, मलीमसः—'ज्योत्स्नातमिस्राश्रृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः' इतीनजीमसजन्तौ मत्वर्थे निपातितौ। केन मल्यते इति कमलम्—'घञर्थे कविधानम्' इति कः, 'कर्तृकरणे कृता' इति समासः। कमेर्वा कलप्रत्यये व्युत्पादनीयः। आमलकी—'क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि' इति क्वुनि गौरादित्वान्ङीष्। मल्लः-अच्प्रत्ययः। मल्लिका—'संज्ञायाम्' इति स्त्रियां ण्वुल्। मल्लकः—क्वुन्। मलं मल्लते धारयतीति मलमल्लं कौपीनम् ॥ ४९८-४९९ ॥

---

१. क्षीरस्वामी न पठति।

३२४. भल भल्ल परिभाषणहिंसादानेषु। भलते। भल्लते। इत्यादि। भालः—'अकर्त्तरि च कारके' इति घञ्। भां दीप्तिं लातीति वा भालः। भल्लूकः श्वापदः—'उलूकादयश्च' इति ऊकनन्तो निपातितः। भल्लूकोऽप्युलूकादिः। भल्यते हिंस्यतेऽनेनेति भल्लः—'पुंसि संज्ञायाम्' इति घः, 'हलश्च' इति घञ् वा। भल्ली—'जातेरस्त्रीविषयादयोपधात्' इति ङीष्। अयमाभण्डने चुरादिः॥ ५००-५०१॥

३२५. कल शब्दसंख्यानयोः। कलते इत्यादि। कालः—'अकर्त्तरि च कारके' इति घञ्। काले भवं काल्यम्—'दिगादिभ्यो यत्' इति सप्तम्यन्ताद्भवार्थे यत्। कालः प्राप्तोऽस्य काल्य उत्सवः—'कालाद्यत्' इति प्रथमान्तादस्य प्राप्तमित्यर्थे यत्। अनित्यो वर्णः कालेन रक्तो वा कालकः—"कालाच्च" इति अनित्ये वर्णे रक्ते च वर्त्तमानात्स्वार्थे कन्। काली—'जानपद' इत्यादिना वर्णे ङीष्। अन्यत्र काला, कालिका—संज्ञायां कनि 'केऽणः' ह्रस्वः। कलिलम्—'सलिकलि' इति इलच्। कलभः—'कॄगॄशॄशलिकलि' इत्यभच्। कलिः—'इन्' इतीन्प्रत्ययः। कलिना दृष्टं साम कालेयम्—'कलेर्ढक्' इति तृतीयान्ताद् दृष्टं सामेत्यर्थे ढक्, 'आयनेयी' इत्यादिनैयादेशः। 'सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः' इत्युक्तत्वात् सर्वेष्वर्थेष्वयं ढग्भवति। कलिका—संज्ञायां कुन् प्रत्ययः। कलिं गृह्णाति कलयति—'मुण्डमिश्र' इत्यादिना गृह्णात्यर्थे णिचि णाविष्ठवदिति टिलोपः। अत्र हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थमिति णिसन्नियोगेनाकारविधानादग्लोपित्वाद् ह्रस्वाभावात् अचकलत् इति भवति। अत्र यद्यपीकारोऽप्यगेव, तथापि तस्य टेरिति लोपात्परत्वाद् वृद्धौ ऐकारे तस्य चायादेशात्पूर्वं परत्वाट्टिलोपेऽङ्गमग्लोपि न स्यात्। कृते त्वत्वे वृद्धौ कृतायामप्यग्लोप्येव। ननु च वृद्धावात्वे पुकि च तत्सहितस्य टिलोपेन भाव्यमित्यनग्लोपित्वात् कथमग्लोपः? नैषः दोषः; तत्राग्लोपिग्रहणस्य समुदायार्थत्वात्। अन्यथा मालामाख्यत् अममालत् इत्यादौ केवलस्याप्यको लोपे 'अचः परस्मिन्' इति तस्य स्थानिवत्वादभ्यासस्य चङ्परणिपरत्वाभावादेव सन्वद्भावो न भविष्यतीति किमग्लोपिग्रहणेन! न च मन्तव्यं सर्वत्राभ्यासस्य चङ्परणिपरत्वायोगाद्व्यधानेन भाव्यमेवेत्यको प्राप्तेन स्थानिवद्भावेन व्यवधानेऽपि तदिति तत्रैव निषेधार्थमेतदस्त्विति। 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्याद्' इति न्यायेनावर्जनीयोत्तरव्यञ्जनव्यवधानस्यैवाश्रयणं युक्तम्। अयं क्षेपे चुरादिः, गतिसंख्यानयोः कथादिः॥ ५०२॥

३२६. कल्ल अव्यक्ते शब्दे। कल्लते इत्यादि। कल्लोलः—किशोरादित्वादोरप्रत्ययः, कपिलकादित्वाल्लत्वम्। अशब्दे इति स्वामी। अशब्दस्तूष्णीम्भाव इति च॥ ५०३॥

३२७. तेवृ देवृ देवने। तेवते। तितेवे। तेविता। तेविष्यते। तेवताम्। अतेवत। तेवेत। तेविषीष्ट। अतेविष्यत इत्यादि। तितेविषते। तेतेव्यते। तेवयति। अतितेवत्—

ऋदित्वान्नोपधाह्रस्वः। वकारान्तानामूठ्भाविनां भाषायां यङ्लुङ्नास्ति 'च्छ्वोः शूठ्' इत्यत्र क्ङिद्ग्रहणानुवृत्त्यननुवृत्ती प्रस्तुत्य 'तत्र त्वेतावानेव विशेषः—अनुवर्त्तमाने क्ङिद्ग्रहणे छः षत्वं वक्तव्यम्' इति भाष्ये उक्तत्वात्। छः षत्वमित्यक्ङिति झलादौ षत्वार्थं 'व्रश्चभ्रस्ज'इत्यत्र छग्रहणं कर्त्तव्यम्। क्ङिदधिकाराभावे तु झलादिमात्रे छः षत्वं शकारान्तत्वादेव सिद्ध्यतीत्यर्थः। यदि च वकारान्तानामपि यङ्लुक् स्यात्, तत्रापि क्ङिद्ग्रहणानुवृत्तौ ऊठा न भाव्यम्; अन्यदा तु भाव्यमिति विशेषस्य विद्यमानत्वाद् 'तत्र त्वेतावान् विशेषः' इत्यादि भाष्यं कथं सङ्गच्छेत। स्पष्टं चैतत्तत्र कैयटे। देवते इत्यादि पूर्ववत्। आदेवकः—'देविक्रुशोश्चोपसर्गे'इति तच्छीलादौ वुन्। देवरः—'अर्तिकमिचमिभ्रमिवाशिभ्यश्च' इत्यरः। देवलः—'कपिलकादीनां संज्ञाच्छन्दसोः' इति वा लत्वम्। यद्वा देवाँल्लाति आदत्ते इति देवलः—अनयोः क्विपि वलि लोपात्परत्वात् 'च्छ्वोः शूठ्' इत्यूठ्यया-देशे तयूः, दयूः इति भवति। एवमन्यत्रापि वकारान्तेषु। दिवीति प्रीणनार्थोऽग्रे परस्मैपदी, दिवु इति क्रीडार्थो दिवादिः। परिपूजनार्थश्चुरादिः ॥५०४-५०५॥

३२८. षेवृ गेवृ ग्लेवृ प्लेवृ म्लेवृ सेचने[1]। 'शेवृ खेवृ मेवृ इत्यप्येके'इति मैत्रेयः। सेवते। सिषेवे। सेविता इत्यादि। सिसेविषते। 'स्तौतिण्योरेव' इत्यषत्वम्। सेषेव्यते। सेवयति। असिषेवत्। एषाम् सर्वेषामृदित्त्वात् 'णौ चङि' इति न ह्रस्वः। परिषेवयते—'परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्' इति षत्वं 'सात्पदाद्योः' इति निषेधापवादः। 'प्राक्सितादड्व्यवायेऽपि' इति वचनात् पर्यषेवत इत्यादावपि भवति। परिषिषेविषते इत्यत्र षणीति नियमः 'स्थादिष्वभ्यासेन चाभ्यासस्य' इत्यनेन बाध्यते। एवं निविभ्यामप्युदाहार्यम्। सेवित्वा। सेवितः। क्विपि—सयूः। अत्र मैत्रेयादयो दन्त्यादिमपि पठन्ति। तथा च 'परिनिविभ्यः सेव' इत्यत्र न्यासेऽपि "षोपदेशस्य 'सात्पदाद्योः'इति निषेधे प्राप्ते परस्य त्वप्राप्ते एव'इति तदिदं षोपदेशलक्षणपर्युदासे स्त्यासेक्सृवर्जम" इति स्त्यायतिवदनुपादानाद्भाष्य-कारस्यानभिमतत्वमिव प्रतीयते। अत एव 'परिनिविभ्यः' इत्यत्र हरदत्तः—'सेवेति भूवादिष्वनुदात्तेत्' इत्याह, न तु 'सवति' इति। गेवते। ग्लेवते। प्लेवते। म्लेवते। शेवते। खेवते। मेवते। 'एवृ शेवृ क्रेवृ' इत्यपि क्वचित्पठ्यते ॥५०६-५१०॥

३२९. रेवृ प्लवगतौ[2]। प्लवगतिः प्लुतगतिः। रेवते इत्यादि। रेवा—अचि टाप्। रेवणः—अनुदात्तेत्त्वाद्वा चलनार्थत्वाद्वा युच्। अत्र मैत्रेयः 'प्लव' इति धात्वन्तरमाह, तच्चिन्त्यम्; यदि हि स्यात् आप्लवशब्दस्यास्मात् घञि सिद्धौ

---

१. 'ग्लेवृ पेवृ मेवृ म्लेवृ सेवने' इति ख० पुस्तके। 'एवृ शेवृ षेवृ सेवृ केवृ खेवृ ग्लेवृ पेवृ प्लेवृ मेवृ म्लेवृ सेवने' इति क्षीरस्वामी, मैत्रेयस्तु 'शेवृ पेवृ गेवृ ग्लेवृ पेवृ मेवृ म्लेवृ सेचने' इति पठति। २. 'रेवृ प्लेवृ गतौ' इति मैत्रेयः।

तदर्थं 'विभाषाङिरुप्लुवोः' इति प्लुवः पक्षे घञ्विधानमनर्थकं स्यात्। तथा प्लुङो णौ वृद्ध्यावादेशयोश्चङि णौ कृतस्य स्थानिवत्त्वात् प्लुशब्दस्य द्विरुक्तावपुप्लुवदिति निरत्रे प्राप्ते पक्षे अपिप्लवदिति सिद्ध्यर्थं 'स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा' इत्युकारस्येत्त्वविधानमनर्थकं स्यादिति। सति ह्यस्मिन्ननेनैवापिप्लवदिति भविष्यति। अत एव किलापरितुष्यन्मैत्रेयोऽपि 'प्लव इत्येके' इत्याह ॥५११॥

३३०. आयादय उदात्ता अनुदात्तेतः।

३३१. मव्य बन्धने। एतदादयोऽवत्यन्ता उदात्तेतः। मव्यति। ममव्य। मव्यिता। मव्यिष्यति। मव्यतु। अमव्यत्। मव्येत्। आशिषि—मव्यात्। 'हलो यमां यमि लोपः' इति वा यलोपः। अमव्यीत्—'नेटि' इति न वृद्धिः, 'ह्म्यन्त' इति वा। मिमव्यिषति। मामव्यते। अत्र तृजादौ यदा 'हलो यमाम्' इति धातुयकारस्य लोपः, तदार्धधातुकमाश्रित्याल्लोपः, 'यस्य हलः' इति यङोऽपि लोपे मामविता इत्यादि। यदा 'हलो यमाम्' इति न भवति तदा पूर्ववद्यङो लोपे मामव्यिता इत्यादि। मामव्यीति, मामति। ईडभावे 'लोपो व्योर्वलि' इति व्योर्लोपः। मामौतः—यलोपे वकारस्याङ्गात्परत्वाद्वलिलोपमपवादत्वाद्बाधित्वोठि वृद्धिः। मामव्यति—अद्भावो नित्यत्वाद्वलि लोपं बाधते। मामव्यीषि, मामसि। व्योर्लोपः। मामौथः। मामौथ। यलोपे ऊठि वृद्धिः। मामव्यीमि, मामौमि—अनुनासिकत्वादूठि वृद्धिः। मामौवः—व्योर्लोपः, 'अतो दीर्घो यञि' इति दीर्घः। मामौमः। मामव्यीतु, मामतु, मामतात्। मामौताम्। मामव्यतु। माम, मामतात्। मामौतम्। मामौत। मामव्यानि। मामव्याव। उत्वहित्वाभ्यां परत्वात्पूर्वमेव व्योर्लोपे पश्चात् 'तुह्योः' इति तातङि तदाश्रय ऊठत्र नाशङ्कनीयः पूर्वमेव वकारस्य लुप्तत्वात्। हेस्तु 'अतो हेः' इति लुक्। उत्तमे नित्यत्वादाटि न व्योर्लोपः। अमामव्यीत्। अमामत्। अमामौताम्। अमामव्युः। अमामः। अमामव्यम्। अमामौव। अमामौम। तिप्सिपोर्हल्ङ्यादिलोपादन्तरङ्गत्वाद्वलिलोपः। झिमिपोर्जुस्भावाम्भावौ वलिलोपं नित्यत्वात् बाधेते। वसि व्योर्लोपे 'अतो दीर्घो यञि' इति दीर्घः। मसि यलोपेऽनुनासिकादित्वादूठि वृद्धिः। मव्ययति। अममव्यत्। मव्यित्वा। मव्यितः। क्विपि—'लोपो व्योर्वलि' इति विधेयस्य लोपस्य पूर्वनिर्देशाद् वेरपृक्तलोपाद्वलोपस्य बलीयस्त्वस्य ज्ञापनादपृक्तलोपात् पूर्वं यकारस्य वलिलोपः, वकारस्य त्वपवादेनोठा बाधान्न भवतीति ऊठ्वृद्ध्योः उमौः। यथा तु भाष्यं तथास्य न यङ्लुगस्ति, तच्च तेवतावुक्तमुपपादित च ॥५१२॥

अथापि शिष्यबोधाय प्रक्रियेयं प्रपञ्चिता। यज्ञनारायणार्येण बुद्ध्यन्तां भाष्यपारगाः॥

३३२. सूर्क्ष्य ईर्क्ष्य ईर्ष्य ईर्ष्यार्थाः। सूर्क्ष्यति। सुसूर्क्ष्य। सूर्क्ष्यिता। सूर्क्ष्यिष्यति। सूर्क्ष्यतु। असूर्क्ष्यत्। सूर्क्ष्येत्। आशिषि—सूर्क्ष्यात्। असूर्क्ष्यीत्। असूर्क्ष्यिष्यत्। सुसूर्क्ष्यिषति—

'स्तौतिण्योरेव' इति नियमान्न षत्वम्। सोसूक्ष्यंते-'हलो यमाम्' इति पक्षे यलोपः। अन्यदा तु यकारद्वयम्। सोसूक्ष्र्यीति, सोसूष्टि—बहूनां समवाये द्वयोरपि संयोगसंज्ञाया आश्रितत्वात् 'स्कोः' इति कलोपः। लङि तिप्सिपोर्हल्ङ्यादिलोपे पदान्तसंयोगादित्वात् कलोपे जश्त्वचर्त्वयोः—असोसूट्, असोसूड्—सर्वत्र यकारस्य वलि लोपः। सूक्ष्र्ययति। असुसूक्ष्यंत्। सूक्ष्र्य आदरे इत्यग्रे॥ ईर्क्ष्यति। ईर्क्ष्याञ्चकार। ईर्क्षिता। ईर्क्ष्यिष्यति। ईर्क्ष्यतु। ऐर्क्ष्यत्। ईर्क्ष्येत्। ईर्क्ष्यात्। ऐर्क्षीत्। ऐर्क्षिष्यत्। ईर्चिक्षिषति। 'न न्द्राः' इति रेफवर्जस्य द्विर्वचनहलादिशेषे चर्त्वम्। ईर्क्ष्ययति। ऐर्चिक्षत्॥ ईर्ष्यति। ईर्ष्याञ्चकार। ईर्ष्यिता इत्यादि। सनि 'ईर्ष्यतेस्तृतीयस्य द्वे भवत इति वक्तव्यम्' इत्यत्र वृत्तौ "कस्य तृतीयस्य? केचिदाहुर्व्यञ्जनस्य; अपरे पुनराहुः 'तृतीयस्यैकाचः'" इति। तत्र 'तृतीयस्य व्यञ्जनस्य' इति पक्षे यकारादेर्द्वितीयस्यैकाचो द्विवर्चने-ईर्ष्यियिषति। पक्षान्तरे तु तृतीयस्यैकाचः सन एव द्विवर्चने—ईर्ष्यिषिषति इति भवति। ईर्ष्ययति, ऐर्षिष्यत्। ईर्ष्या—'गुरोश्च हलः' इत्यकारप्रत्ययः। एषामीर्ष्यार्थत्वात् 'क्रुधद्रुह' इति कोपविषयस्य सम्प्रदानत्वाच्चतुर्थी। देवदत्ताय सूक्ष्यंति इत्यादि। क्विपि—वलि लोपेऽपृक्तलोपे च पदान्तसंयोगादित्वात् 'स्कोः' इति कलोपे जश्त्वचर्त्वयोः-सूट्। 'रात्सस्य' इति नियमान्न संयोगान्तलोपः। एवमीक्ष्र्यतेरपि ईर्ट्। ईर्ष्यतेरपीदमेव रूपम्॥५१३-५१५॥

३३३. हय गतौ। भक्तिशब्दयोरपीति केचित्। हयति। जहाय। जहयिथ। हयिता। अहयीत्। 'ह्मयन्त' इति न वृद्धिः। जिहयिषति। जाहय्यते। जाहयीति, जाहति। जाहतः। जाहयति—'अदादेशो वलि लोपान्नित्यः' इत्युक्तम्। जाहसि। जाहामि—वलोपे 'अतो दीर्घो यञि' इति दीर्घः। हाययति। अजीहयत्। हयित्वा। हयतेः क्वौ वलि लोपे तुकि हत् इति भवति। 'अतो लोपो न' इत्ययतावुक्तम्। हयः। हयी वडवा—गौरादित्वान् ङीष्॥५१६॥

३३४. शुच्य अभिषवे। अवयवानां शिथिलीकरणं सुरायाः सन्धानं वाऽभिषवः; यथा 'सोममभिषुणोत्यृजीषमभिषुणोति' इति। सुराप्रकरणे च-'सन्धानं स्यादभिषवः' इति। अभिषवः स्नानमिति चन्द्रः। शुच्यति। शुशुच्य। शुच्यिता। शुशुच्यिषति। शोशुच्यते। 'हलो यमाम्' इति यलोपपक्षेऽतो लोपे 'यस्य हलः' इति चार्धधातुके यशब्दलोपे 'न धातुलोपः' इति वाल्लोपस्यासिद्धत्वात् स्थानिवत्त्वाद्वा गुणाभावे-शोशुचिता। यमो लोपाभावे तु शोशुच्यिता। शोशुच्यीति, शोशोक्ति-वलिलोपे लघूपधत्वाद्गुणः। यङ्लुकोऽनैमितिकत्वाद् गुणस्यानार्द्धधातुकनिमित्तत्वाद्वा 'न धातुलोपः' इति निषेधाभावः। शोशुक्तः। शोशुच्यति। शोशुच्यीषि, शोशोक्षि। शोशुच्यीमि, शोशोच्मि। शोशुच्वः। शोशोक्तु। शोशुग्धि—हेर्धित्वे 'चोः कुः' इति चकारस्य ककारे 'झलां जश्झशि' इति जश्त्वं गकारः। अशोशुच्युः इत्यत्र वलिलोपान्नित्यत्वाज्जुस्भावः। इगन्तविषयत्वाज्जुसि गुणो न भवति। अशोशुच्यम्—

नित्यत्वाद्वलि लोपात् पूर्वमम्भावः। शुच्ययति, अशुशुच्यत्। शुच्यित्वा। शुच्यितः। शुक्तिः इत्यत्र 'तितुत्र' इत्यनिट्त्वम्। 'चुच्य इत्यपि पठन्ति' इति मैत्रेयः। चुच्यति इत्यादि ॥५१७॥

३३५. हर्य गतिकान्त्योः। हर्यति। जहर्य। हर्यिता। अहर्यीत्। 'नेटि' इति न वृद्धिः। जिहर्यिषति। जाहर्य्यते। पूर्ववदार्धधातुके यमो यमि लोपे यल्लोपाल्लोपाभ्यां जाहर्ता। अन्यदा जाहर्यिता इत्यादि। जाहर्य्यीति, जाहर्ति। जाहर्तः। जाहर्यति। जाहर्षि— "शरोऽचि" अचो रहाभ्यां शरोऽचि न द्वित्वमिति षकारस्य द्वित्वाभावः। जाहर्मि। लोटि—जाहर्हि। जाहर्य्याणि इत्यत्र नित्यत्वादाद् वलि लोपं बाधते। अजाहर्यीत्—ईडभावे वलिलोपहल्ङ्यादिलोपयोः अजाहः। अजाहर्त्ताम्। अजाहर्युः। अजाहर्यम्। हर्ययति। अजहर्यत्। हर्यित्वा। हर्यितः। हर्या—स्त्रियामकारः। क्विपि वलि लोपे हः। हर्यतो यज्ञः—'भूदृशियजियच्यमिनमिहर्य्येभ्योऽतच्'इत्यतच् ॥५१८॥

३३६. अल[1] भूषणपर्याप्तिवारणेषु। अलति। आल। अलिता। मा भवानालीत्। "अतो ल्रान्तस्य"अकारसमीपरेफलकारान्ताद्धातोः परस्मैपदपरे सेटि सिचि अतो वृद्धिः' इति वृद्धिः। अलिलिषति। आलयति। आलिलत्। अलित्वा। अलितः। अलकम्—'संज्ञायाम्'इति कुन्। अलका–टापि 'प्रत्ययस्थात्' इतीत्वं क्षिपकादित्वान्न भवति। आलिः—इञ्वपादिभ्यः' इतीञ्। आली—कृदिकारत्वात् ङीष्। अलीकम्—'अलीकादयश्च'इति कीकन्। अत्र मैत्रेयः - 'अकारमनुनासिकस्वरितत्वमिच्छन्ति' इत्याह। तत्र अलते इत्यादि ॥५१९॥

३३७. ञिफला विशरणे। ञित्त्वं 'ञीतः क्तः' इति वर्त्तमानक्तार्थम्। फलति। पफाल। फेलतुः—'तॄफलभजत्रपश्च' इति किति लिटि थलि च सेट्येत्वाभ्यासलोपौ। निरनुबन्धकपरिभाषायाः प्रत्ययग्रहणविषयत्वादस्यापि तत्र ग्रहणम्, न केवलं फलनिष्पत्तावित्यस्यैव। अन्ये तु 'इयं परिभाषा सार्वत्रिकी'इति 'भजत्रपश्च' इति चग्रहणेन सानुबन्धकममुं समुच्चिन्वन्ति। उभयथा रूपे न विवादः। फलिता इत्यादि। अफालीत् इत्यत्र 'अतो ल्रान्तस्य'इति वृद्धिः। पिफलिषति। पम्फुल्यते। पम्फुलीति,पम्फुल्ति। पम्फुल्तः। पम्फुल्मि—'चरफलोश्च'इति यङि यङ्लुकि अभ्यासस्य नुक्। अत्रापि पूर्ववत् सानुबन्धकस्यापि ग्रहः। 'उत्परस्यातः' इत्यभ्यासात्परफलयोरकारस्योत्वम्। तपरकरणं लघूपधगुणनिवृत्त्यर्थम्। फालयति। अपीफलत्। फलम्—अच्। फलित्वा। फुल्लः—अस्याकर्मकत्वात्कर्तृभावाधिकरणे क्ते 'आदितश्च' इति निषेधे 'अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः' इति निपातनान्निष्ठातकारस्य लत्वम्। अत एव निपातनादुत्वं च। यद्वा—लत्वस्यासिद्धत्वात्तकारादिप्रत्ययपरत्वात् 'क्ति च' इत्युत्वम्। 'आदितश्च' इति निषेधस्य 'विभाषा भावादिकर्मणोः' विकल्पनात् फलितम् इत्यपि भवति। अनुपसर्गादिति वचनादुपसृष्ट-

---

१. 'अलँ' इति क्षीरतरङ्गिण्याम्। 'अलँ' इति मैत्रेयः।

स्योत्वे ल्त्वाभावात् प्रफुल्तम् इति भवति। समुत्पूर्वत्वे तु 'उत्फुल्लसम्फुल्लयोरुपसंख्यानम्' इति ल्त्वम्। 'क्तवतोरप्येतल्लत्वमिष्यते' इति वृत्तिः तेन फुल्लवान् इति भवति। फल्गुः—'फलिपाटी' इत्यादिनोऽप्रत्यये गुगागमः। क्विपि फलतीति फल्। फलिवाचरतीति 'सर्वप्रातिपदिकेभ्यः' इति क्विपि फलो धातुत्वे—फलति। पफाल। फेलतुः। फेलुः। पम्फुल्यते इत्यादि प्रकृतिवत्। प्रत्ययान्तधातुत्वे आम् न भवति, 'कास्यनेकाचः' इति उक्तत्वात्। निष्ठायां फलितम् इति नित्यमिडेव, आदित्त्वाभावात् ॥५२०॥

३३८. मील श्मील[1] स्मील क्ष्मील[2] निमेषणे। निमेषणं सङ्कोचः। द्वितीयस्तालव्यादिः। तृतीयो दन्त्यादिः। मीलति। मिमील। मीलिता इत्यादि। मिमीलिषति। मेमील्यते। मेमीलीति, मेमील्ति। मीलयति। अमीमिलत्, अमिमीलत्—'भ्राजभास' इत्यादिना णौ चङ्युपधाया ह्रस्वविकल्पः॥ श्मीलति॥ स्मीलति॥ क्ष्मीलति इत्यादि। मिल श्लेषणे इति ह्रस्वोपधस्तुदादौ ॥५२१–२४॥

३३९. पील प्रतिष्टम्भे। प्रतिष्टम्भो रोधनम्। पीलति। पिपील। पीलिता इत्यादि। पीला नाम काचित्–इगुपधलक्षणे कप्रत्यये टाप्। पीलाया अपत्यं पैलः—'पीलाया वा' इत्यण्। तदभावे 'द्व्यचः' इति ढक् पैलेयः। अणन्ताद्यून्यपत्ये वा अतइञि तस्य 'पैलादिभ्यश्च' इति लुकि पैलः पिता पैलः पुत्रः। पीलुः–'मृगय्वादिभ्यश्च' इति उप्रत्ययः। पीलोः पाकः, पीलुकुणः–"तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ" इति षष्ठ्यन्तात्पील्वादेः कर्णादेश्च यथासंख्यं पाकमूलयोः कुणब्जाहचोर्विधानादस्मात् कुणप्, ककारस्य 'लशक्वतद्धिते' इति तद्धितत्वान्नेत्वम् ॥५२५॥

३४०. णील वर्णे। नीलति। प्रणीलति। निनील। नीलिता इत्यादि। नीलः—इगुपधलक्षणः कः। नीली ओषधिर्बडवा च। 'जानपद' इत्यत्र 'नीलादोषधौ' 'प्राणिनि च' इति ङीष्। अन्यत्र नीला शाटी। जानपदाभावे च 'संज्ञायां वा' इति वचनात्संज्ञायां नीली, नीला इत्युभयं भवति। नील्या रक्तं वस्त्रं नीलम्—'तेन रक्तं रागात्' 'रज्यतेऽनेनेति रागः, शुक्लस्य वर्णान्तरापादनमिह रञ्जेरर्थः' इति वृत्तिः। रागवचनात्तृतीयान्ताद्रक्तार्थे यथाविहितं प्रत्यय इत्यणि प्राप्ते 'नील्या अन्वक्तव्यः' इत्यन्। णिल गहने इति ह्रस्वोपधस्तुदादौ ॥५२६॥

३४१. शील समाधौ। शीलति इत्यादि। शीलम्–इगुपधलक्षणः कः, घञ् वा। शीले समाधाने भवा प्रवृत्तिः शैली—अणि ङीष्। शील उपधारणे इति चुरादौ। शिल उञ्छे इति ह्रस्वोपधस्तुदादौ ॥५२७॥

३४२. कील बन्धने। कीलति इत्यादि। कीलः—इगुपधलक्षणः कः, 'हलश्च' इति घञ् वा। कीलकम्—कन्। संज्ञायां कुन्वा ॥५२८॥

---

१. मैत्रेयो न पठति। २. क्षीरतरङ्गिण्यां नास्ति।

३४३. कूल आवरणे । कूलति इत्यादि । कूलम्—पूर्ववत्कः ॥५२९॥

३४४. शूल रुजायां सङ्घाते च । शूलति । शूलम् । शूलेषु संस्कृतं शूल्यम्—'शूलोखाद्यत्' इति सप्तम्यन्तात्संस्कृतमित्यर्थे यत् । शूले पचति शूलाकरोति—शूले प्रोय पचतीत्यर्थः । 'शूलात्पाके' इति कृञा योगे डाच् । 'डाचि बहुलं द्वे भवतः' इति द्वित्वम् 'अव्यक्तानुकरणस्य डाजन्तस्य नेष्यते' इत्युक्तत्वान्न भवति । 'ऊर्यादिच्विडाचश्च' इति डाजन्तस्य निपातत्वं गतित्वं च । तत्र निपातत्वेऽव्ययत्वात्सोर्लुक् । गतित्वात् शूलाकृत्य इत्यत्र 'कुगतिप्रादयः' इति समासे क्त्वो ल्यप् । अयः शूलेनान्विच्छति आयःशूलिकः—'अयःशूलदण्डाजिनाभ्यां ठक्ठञौ' इति तृतीयान्तादस्मादन्विच्छतीत्यर्थे यथासंख्यं ठक् । अयःशूलशब्देन क्रूराचार उच्यते ॥५३०॥

३४५. तूल निष्कर्षे । निष्कर्षो निष्कोषणम्, तच्चान्तर्गतस्य बहिर्निस्सारणम् । तूलति । तूलम् । तूलैरनुकुष्णाति अनुतूलयति—'सत्यापपाश' इत्यादिना णिचि टिलोपः । णौ चङ्यग्लोपित्वात् अतुतूलत् ॥५३१॥

३४६. पूल संघाते । पूलति । पूलः ॥५३२॥

३४७. मूल प्रतिष्ठायाम् । मूलति । मूलम् । मूले जातो मूलकः 'पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद् वुन्' इति 'तत्र जातः' इति विषये वुन् । नक्षत्राणोऽपवादः । उत्पाटनीयं मूलमस्य इति मूल्यो मुद्गः—'मूलमस्याबर्हि' इत्यौपाधिकात्प्रथमान्तान्मूलादस्येत्यर्थे यत् । आबर्हीति बृहू उद्यमने इत्यस्माद्भावे घञा बर्हिः,सोऽस्यास्तीतीनिः । उद्यमनमिहोत्पाटनम्, ये सुपक्वा मूलोत्पाटनमन्तरेण ग्रहीतुं न शक्यन्ते इति ते एवमुच्यन्ते । मुद्गादिषु मध्यतो लूयमानेषु कोशा अपि लूयेरन्नित्यवश्यमेषां मूलमुत्पाटनीयम् । मूलेनानाम्यं मूल्यं लाभाख्यं द्रव्यम्—'नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्य्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु' इति यथासंख्यं मूलादानाम्ये यत्, आनाम्यमभिभवनीयं शेषीक्रियमाणमित्यर्थः । मूलं नाम पटादीनामुत्पत्त्यर्थं वणिग्भिर्विनियुक्तं द्रव्यम्, तेन हि स्वस्मादतिरिक्तं लाभाख्यं शेषीक्रियते, आत्मन उपकारकं क्रियते; यतः स्वयं तेन सगुणम् । गुणो भागः, इदमेव मूलमस्य सभागीकरणम्, तत्प्रति मूलस्योपकारकत्वं शेषत्वमानाम्यत्वं च । मूलेन समो मूल्यः पटः, उपादानसमानफल इत्यर्थः । अनेनैव सूत्रेण तृतीयान्तान्मूलात्समे यत् । न विद्यते मूलमस्याः सा अमूला—'पाककर्ण' इत्यादिना प्राप्तं ङीषं बाधित्वा 'मूलान्नञः' इत्यजादिपाठाट्टाप् । शतमूली—'पाककर्ण' इत्यादिना ङीष् । अयं रोहणार्थश्चुरादिः ॥५३३॥

३४८. फल निष्पत्तौ । फलति इत्यादि ञिफलावत् । फलितम् इति निष्ठायामिडेव । फलतीति फलम् । सम्फला—'पाककर्ण' इति ङीषं बाधित्वा 'सम्भस्त्राजिनशणपिण्डेभ्यः फलात्' इत्यजादिपाठाट्टाप् । भस्त्रफलादयोऽप्येवम्—'ङ्यापोः

संज्ञाच्छन्दसोर्बहुलम्' इति ह्रस्वः। अल्पं फलं फलिका, ततोऽन्यत्फलम्, फलं च तत्फलिका च फलाफलिका—'कृतापकृतादीनामुपसंख्यानम्' इति कर्मधारयः। 'अन्येषामपि दृश्यते' इति दीर्घः पूर्वपदस्य। एकमेव फलमवस्थाभेदादल्पत्व-महत्त्वाभ्यां युज्यते। त्रिफला—अजादिदर्शनाट्टाप्। फलिनः—'फलबर्हाभ्यामिनज्वक्तव्यः' इति मत्वर्थे इनच्। फलकम्—संज्ञायां कन्। निष्पाद्यते कृषिरनेनेति फालः—'हलश्च' इति करणे घञ्॥५३४॥

३४९. चुल्ल भावकरणे। भावकरणमभिप्रायाविष्कारः। चुल्लिः। चुल्ली—इनन्तत्वाद्वा ङीष्॥५३५॥

३५०. फुल्ल विकसने। फुल्लति। फुल्लः—अच्। फुल्लित्वा। फुल्लितः॥५३६॥

३५१. चिल्ल शैथिल्ये भावकरणे[१] च[१]। चिल्लति। चिल्लः। 'तिल गतौ' इति दुर्गमैत्रेयौ। तिल्लेत्यन्ये[२]। तेलति इत्यादि। तिलः—इगुपधलक्षणः कः। तिल स्नेहने इति तौदादिकाद्वा। तिलानां भवनं क्षेत्रं तिल्यम् तैलीनम—'विभाषा तिल' इति यत्खञौ। तिलेभ्यो हितं तिल्यम्—'खलयवमाषतिलवृषब्रह्मणश्च' इति चतुर्थ्यन्तात्तद्धितार्थे यत्। निष्फलस्तिलः तिलपेजः, तिलपिञ्जः—'तिलान्निष्फलात्पिञ्जपेजौ' इति तौ। तिलकम्—संज्ञायां कुन्। तिल स्नेहने इति चुरादौ च॥५३७॥

३५२. वेलृ चेलृ केलृ खेलृ क्ष्वेलृ[३] वेल्ल[४] चलने। वेलति इत्यादि। वेला—'गुरोश्च' इत्यकारः॥ चेलति। चेलः—पचादौ चेलडिति पाठात् अच्, टित्वं स्त्रियां ङीबर्थम्। चिल वसने इत्यस्माद्वा चेलम्। प्रसङ्गादत्र किञ्चिदुच्यते—कुत्सिता ब्राह्मणी ब्राह्मणिचेली इति "कुत्सितानि कुत्सनैः" कुत्साहेतुधर्मवचनैः समानाधिकरणैः समस्यन्त इति तत्पुरुषः। 'घरूप' इत्यादिना ह्रस्वः। 'चेलादयो वृत्तिविषये कुत्सनवचनाः' इति भवतावुक्तम्। तत्र चेलमकुलीनेन तन्तुवायेनोत्पादितं भवति, तत्सादृश्याद् ब्राह्मण्यादिषु वृत्त्या चेलशब्दस्य कुत्सनवचनत्वम्। स्त्रिचेली, स्त्रीचेली वा, वामोरुचेली, वामोरूचेली वा। "नद्याः शेषस्यान्यतरस्याम्" इति ह्रस्वविकल्पः। अङी च या नदी ङ्यन्तं च यदेकाच् स शेषः, तस्य घादिषु वा ह्रस्व इति सूत्रार्थः। अत्रान्तरेणापि शेषग्रहणं पूर्वसूत्रव्यतिरिक्तविषयत्वे सिद्धे तत्सामर्थ्यात्पूर्वश्रुतङ्यन्तानेकाजपेक्षं शेषत्वं बोधयितुम्। तेन यद्ङ्यन्तमनेकाच ङ्यन्तमेकाच् तत्रैवायं विकल्प इति, यद्भाषितपुंस्कमामलक्यादि, यच्च समानायामाकृतौ अभाषितपुंस्कं द्रोण्यादि पूर्वसूत्राविषयं तत्र न भवति। लक्ष्मीचेली, यवागूचेली इत्यादौ च ङ्यन्तनदीत्वेऽपि 'कृन्नद्याः प्रतिषेधः' इत्युक्तत्वान्नायं विधिर्भवति। श्रीचेली इत्यादौ तु नदीग्रहणान्नास्य प्रसङ्गः। नापि पूर्व-

---

१-१. क्षीरस्वामी न पठति। २. क्षीरस्वामिप्रभृतयः। ३. ख० पुस्तके नास्ति। ४. तरङ्गिण्यां नास्ति; 'वेल्ल चेल्ल' इति मैत्रेयः।

पुत्रस्य, ङ्यन्तानेकाच्त्वाभावात्। विदुषीचेली इत्यादौ "उगितश्च" उगितः परा या नदी तस्या ह्रस्वविकल्पः।' विद्वच्छ्रेयसोः पुंवद्भावोऽत्र पक्षे वक्तव्यः' इति वृत्तावुक्तत्वात् विद्वच्चेली इत्यपि भवति॥ केलति। केलिः। इन्प्रत्यये: केली। अप्रत्ययः-केला। केलयति—'कण्ड्वादिभ्यो यक्' इति स्वार्थे यकि सनाद्यन्तत्वेन धातुत्वे लडादि॥ खेलति। खेला। अयमपि कण्ड्वादिः॥ वेल्लति। वेल्लो विषम्—संज्ञायां घञ्। वेल्लयति। वेलादीनां पञ्चानामृदित्त्वाच्चङीति ह्रस्वाभावात् अविवेलत् इति भवति। वेल्लेस्त्वनुपधात्वान्न ह्रस्वप्रसङ्गः॥५३८-५४३॥

३५३. पेलृ शेलृ फेलृ गतौ। पेलति। अपिपेलत्। पेला मुक्तसमुज्झितम्॥ शेलति। अशिशेलत्। अत्र क्वचित्खेलृ,षेलृ,सेलृ इत्यपि त्रयः पठ्यन्ते। तत्र खेलतिः मैत्रेयाद्यनुसारेणाग्रे पठिष्यते। सेलतेस्तु दन्त्यादेः पाठः षोपदेशपर्युदासवाक्येऽनुपादानादनार्षः। मूर्द्धन्यादिस्तु सेलुः श्लेष्मातक इत्यादिदर्शनाद् ग्राह्यः॥५४४-५४६॥

३५४. स्खल संचलने। स्खलति। चस्खाल। अस्खालीत्। णौ घटादित्वात् स्खलयति॥५४७॥

३५५. खल सञ्चये। खलति। चखाल। अखालीत्। खलति पापानि संचिनोतीति खलः-अच्। खल्यते सञ्चीयते धान्यादिकमिति खलम्। 'खनो घ च' इत्यत्र वृत्तिः—'खलं भगः पदं चेति वक्तव्यम्' इति। तत्र हरदत्तः—'घित्करणसामर्थ्यादन्येभ्योऽप्ययं भवति, नहि खनः कश्चिदवयवः कुत्वभागस्ति'। खलानां समूहः खल्या—'खलगोरथात्' इति षष्ठ्यन्तात्समूहे यत्। खलिनी—'इनित्रकट्यचश्च' इति पूर्वत्रैव विषये इन्यादिविधानादिह यथासंख्यादिनिः। सर्वे एते यादयः स्वभावात् स्त्रीविषयाः। खलाय हितं खल्यम्—'खलयव' इति यत्। यस्मिन्काले खले यवा भवन्ति स कालो खलेयवम्, एवं खलेबुसम्—'तिष्ठद्गुप्रभृतीनि च' इत्यव्ययीभावः। तत्र ह्येवं पठ्यते—'खलयवादीनि प्रथमान्तानि विभक्त्यन्तरेण न सम्बध्यन्ते, अन्यपदार्थे च वर्त्तन्ते' इति। तेनैतौ प्रथमान्तावेव। अव्ययीभावात् 'अव्ययीभावश्च' इति नपुंसकत्वम्। खलन्ति सञ्चलन्ति केशा अस्मादिति खलतिः। अयं च भीमादिषु पाठात् 'भीमादयोऽपादाने' इत्यपादानविषयः। अत्रैव पाठादेवातिप्रत्यये धातूनामनेकार्थत्वात्सञ्चलने वृत्तिः। यद्वा—पूर्वस्यैव धातोर्भीमादिषु पाठात् सलोपः। खलत इत्यप्यतचि निपातितः। शास्त्रम्, शाठ्यम्, शिरोमध्यं च॥५४८॥

३५६. गल अदने। गलति। अगालीत्। गलः—'गोचरसञ्चर' इत्यादौ चकारेण पुंसि संज्ञायां घः। गिरतेर्वा॥५४९॥

३५७. षल गतौ। सलति। सालयति। असीषलत्। सालः-'अकर्त्तरि च कारके' इति संज्ञायां घञ्। सलिलम्—'सलिकलि' इत्यादिनेलच्॥५५०॥

३५८. दल विशरणे[1] । दलति । णौ घटादित्वात् दलयति । दाडिमम्—दाल-शब्दाद् घञन्तात् 'तेन निर्वृत्तम्' इत्यत्र विषये 'भावप्रत्ययान्तादिमज्वक्तव्यः' इती-मच् । डलयोश्चाभेदः । कुं दलतीति कुद्दालः—पृषोदरादिः । अयं घटादा-वपि ॥५५१॥

३५९. श्वल श्वल्ल आशुगमने । श्वलति । शश्वाल । अश्वालीत् । शिश्वलिषति । शाश्वल्यते । श्वालयति । अशिश्वलत् ॥ श्वल्लति । अश्वल्लीत्—अत्राङ्गान्त्यस्य लकारस्या-कारसमीपत्वाभावात् 'अतो ल्रान्तस्य' इति वृद्धिर्न भवति ॥५५२-५५३॥

३६०. खोलृ खोरृ गतिप्रतिघाते । खोलति । चुखोल । खोलयति । अचुखोलत् । ऋदित्त्वान्नोपधाह्रस्वः । खोडः खञ्जः—पचाद्यच्, लडयोरभेदः ॥ एवं खोरति इत्यादि ॥५५४—५५५॥

३६१. धोरृ गतिचातुर्य्ये । धोरति । धोरिता । अदुधोरत् । धौरितकम्—अश्वानां गतिविशेषः । निष्ठान्तात्सञ्ज्ञायां कन् ॥५५६॥

३६२. त्सर छद्मगतौ । त्सरति । तत्सार । तत्सरतुः । त्सरिता । अत्सारीत्—'अतो ल्रान्तस्य' इति वृद्धिः । तित्सरिषति । तात्सर्यते । तात्सरीति, तात्सर्त्ति । तात्सर्षि । अतात्सः । त्सरुः—'भृमृशीतृचरित्सरितनिधनिमस्जिभ्य उः' इति उप्रत्ययः । त्सरौ कुशलः त्सरुकः—'आकर्षादिभ्यः कन्' इति सप्तम्यन्तात् कुशल इत्यर्थे कन् ॥ ५५७ ॥

३६३. क्मर हूर्छने[2] । क्मरति । चक्मार । क्मरिता । अक्मारीत् इत्यादि पूर्ववत् ॥ ५५८ ॥

३६४. अभ्र वभ्र मभ्र चर गत्यर्थाः । चरतिर्भक्षणार्थोऽपि । अभ्रति । आनभ्र । अभ्रिता । मा भवानभ्रीत्—अङ्गान्त्यस्य रेफस्याकारसमीपत्वाभावात् 'अतो ल्रान्तस्य' इति न वृद्धिः । अबिभ्रिषति । अभ्रयति । अबिभ्रत् । अभ्रयते—इत्यत्र रेफस्य हलः परत्वाद्यम्परत्वाच्च 'हलो यमाम्' इति पाक्षिको लोपो न भवति; तत्र यथा-सङ्ख्याश्रयणात् । तथा चोत्तरसूत्रे सवर्णग्रहणमर्थवत् । उक्तं च वृत्यादौ सवर्णग्र-हणस्य फलं शिण्ढीत्यादौ यथासङ्ख्यनिरासः । अभ्रम्—अच् । भृञो वा व्युत्पाद-यिष्यते । अभ्रिः—इनन्तः काष्ठकुद्दालः । अभ्रकम्—संज्ञायां कुन् ॥ वभ्रति । ववभ्र । वभ्रता । विवभ्रिषति । वावभ्रयते । उक्तो रेफे यलोपाभावः । वावभ्र्ति—भकाररेफतकाराः संयुज्यन्ते । 'अनचि च' इति भकारस्य पक्षे द्विर्वचने 'झलां जश्झशि' इति पूर्वस्य जश्त्वेन वकारभकाररेफतकाराः द्रष्टव्याः । लङि—तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे च 'झलां जशोऽन्ते' इति जश्त्वे च 'वावसाने' इति चर्त्वे अवावप्; अवावब् ॥ एवं मभ्रति इत्यादि ॥ चरति । चचार । चेरतुः । चेरुः । चरिता । इत्यादि ।

---

१. 'विदारणे' इति मैत्रेयः । २. क्षीरस्वामी नेदं सूत्रं पठति ।

अचारीत् 'अतो ल्रान्तस्य' इति वृद्धिः। चिचरिषति। चञ्चूर्यते—'लुपसदचर' इति भावगर्हायामेव यङ्। 'चरफलोश्च' इत्यभ्यासस्य नुकि 'उत्परस्यातः' इत्युत्वे तस्य हल्परत्वे 'हलि च' इति दीर्घः चञ्चुरीति, चञ्चूर्ति। अत्र दीर्घस्य पूर्वत्रासिद्धत्वेन प्राप्तो लघूपधगुण 'उत्' इति तपरकरणसामर्थ्यान्न भवति। तपरत्वं हि विकारनिवृत्त्यर्थम्। यद्येवं दीर्घोऽपि निवर्त्तेत इति न मन्तव्यम्; यतस्तपरत्वेन निवृत्तौ प्रसक्तायामपि दीर्घत्वमसिद्धम्। अचञ्चूः—लङि तिप्सिपोर्हल्ङ्यादिलोपे रेफस्य विसर्जनीयः। यदायमुत्पूर्वः सकर्मकस्तदा 'उदश्चरः सकर्मकात्' इति तङ्, गुरुवचनम् उच्चरते इति उत्क्रम्य गच्छन्तीत्यर्थः। तथा समुपसृष्टात् 'समस्तृतीयायुक्तात्' इति तङ्। अश्वेन सञ्चरते इति। सम इतीयं षष्ठी। तेन व्यवहितेऽपि भवति—अश्वेन समुदाचरते इति। चर्य्यम्—'गदमदचर' इति भावकर्मणोर्यत्। 'अनुपसर्गे' इति वचनात्सोपसर्गे उपचार्यम् इति ण्यदेव। आचार्यो देशः—'चरेराङि चागुरौ' इति यत्। गुरौ तु आचार्यं इति ण्यदेव। आचार्य्यस्य स्त्री आचार्य्यानी—'इन्द्रवरुण' इत्यादिना ङीषानुकौ। 'आचार्य्यादणत्वं च' इति णत्वाभावः। चरतीति चरः—चरडिति पचादिपाठादच्, टित्। स्त्रियाञ्चरी। चरस्य गोत्रापत्यं चारायणः—'नडादिभ्यः फक्' इति षष्ठ्यान्ताद्गोत्रापत्ये फक्, फस्यायनादेशः। चराचरः—'चरिचालपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्य' इति अचि पक्षे द्विर्वचनम्, अभ्यासस्यागागमः। आगमसामर्थ्यान्न हलादिशेषः; अन्यथादेशमेव कुर्यात्। दीर्घोच्चारणसामर्थ्यान्न ह्रस्वः। कल्याणाचारः। कल्याणाचारा—'शीलिकामि' इत्यादिना कर्म्मण्युपपदे णः। कुरुचरः—'चरेष्टः' इत्यधिकरणे उपपदे टप्रत्ययः। टित्त्वात् स्त्रियां कुरुचरी। भिक्षाचरः—'भिक्षासेनादायेषु च' इति भिक्षादिषूपपदेषु टप्रत्ययः। एवं सेनाचरः, आदायचरः इति। अनधिकरणार्थमिदं सूत्रम्। चरिष्णुः—'अलंकृञ्' इत्यादिना इष्णुच्। अतिचारो। उपचारी—'सम्पृच्' इत्यादिना ताच्छीलिको घिनुण्। ब्रह्म वेदस्तदर्थं व्रतं चरतीति ब्रह्मचारी—'सुप्यजातौ' इति णिनिः। समानो ब्रह्मचारो सब्रह्मचारी—'चरणे ब्रह्मचारिणि' इति इति चरणे गम्यमाने समानस्य सभावः। चरणशब्दः शाखाध्यायिषु रूढः। सब्रह्मचारिण इमे साब्रह्मचाराः—'नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसङ्ख्यानम्' इति टिलोपः। चर्य्यतेऽनेनेति चरित्रम्—'अर्त्तिलूधूसूखनसहचर इत्रः' इतीत्रः करणे।—प्रज्ञादिपाठात्स्वार्थेऽणि चारित्रम्। गोचरो विषयः, सञ्चरो मार्गः—'गोचरसञ्चर' इत्यधिकरणे घञ्प्रत्ययान्तौ निपात्येते। अत्र सञ्चरत्यनेनेति सञ्चर इति वृत्तिः। तत्र सुधाकरः—"'समस्तृतीयायुक्तात्' इति तङ भाव्यम्" इति। परिचर्या 'परिचर्या' इत्यादीनां स्त्रियां भावे शे यक्। चरितं तदिति चर्म—'मन्' इति मन्। अयं च 'उणादयो बहुलम्' 'भूतेऽपि दृश्यन्ते' इति भूते। चर्माण्यस्यां सन्ति

चर्मण्वती नदी—'आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती' इति मतुपि नलोपाभावो णत्वं च संज्ञायां निपात्यते। चर्मी—'व्रीह्यादिभ्यश्च' इति मत्वर्थे इनिः। 'नस्तद्धिते' इति टिलोपः। चर्मिणोऽपत्यं चार्मिकायणिः—'वाकिनादीनां कुक्च' इति फिञ्, कुक्चागमः। कुकि नान्तत्वाभावेऽपि 'चर्मवर्मिणोर्नलोपश्च' इति वचनान्नलोपः। सर्वः चर्मणा कृतः सर्वचर्मीणः, सार्वचर्मीणः—'सर्वचर्मणः कृतः खखञौ' इति कृत इत्यर्थे तृतीयान्ताद् अस्मात् खखञौ, सर्वचर्मण इत्यसमर्थः समासः; यतः सर्वशब्दस्य कृत इत्यनेन सम्बन्धो वृत्त्यादावुक्तः। चर्मणः कोशः चार्मः—'चर्मणः कोश उपसंख्यानम्' इति टिलोपः। अन्यत्र 'अन्' इति प्रकृतिभावात् चार्मणं चक्षुः। चारु—'दृसनिजनिचरि' इति ञुण्प्रत्ययः। चरुः—'भृमृशीतृचरि'इत्युप्रत्ययः। अयं हि भीमादित्वादपादाने चरन्त्यस्मादादायेति हि व्युत्पत्तिः। चरकः—क्वुन्, चरकेण प्रोक्तमपि चरकम्—'तेन प्रोक्तम्' इत्यणः 'कठचरकाल्लुक्' इति लुक्, चरको नाम वैशम्पायनः। उक्तं च–'कलापिवैशम्पायनान्तेवासिभ्यश्च'इत्यत्र 'आलम्बिश्चरकः प्राचां पलिङ्गिकमलावुभौ'इत्युपादाय 'चरको नाम वैशम्पायनः' इति। तत्राभेदविवक्षयालम्ब्यादीनामिदं विशेषणम्। चरकाय हितं चारकीणम्। 'माणवचरकाभ्यां खञ्' इति 'तस्मै हितम्' इति विषये खञ्। चर सञ्चयने इति चुरादौ॥ ५५९-५६२॥

३६५. ष्ठिवु निरसने। 'सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधः' इति प्रतिषेधः सत्वस्य। अस्य द्वितीयस्थकारष्ठकारो वेति वृत्तिः। आचार्येण शिष्येभ्य उभयथा प्रतिपादनात् उभयमपि प्रमाणमिति व्याख्यातारः। ष्ठीवति–'ष्ठिवुक्लमुचमां शिति' इति दीर्घः। तिष्ठेव। तिष्ठिवतुः। अभ्यासे खयः शेषः। ष्ठेविता। ष्ठेविष्यति। ष्ठीवतु। आशिषि ष्ठीव्यात् 'हलि च'इति दीर्घः। अष्ठेवीत्। तिष्ठेविषति, तुष्ठ्यूषति—'सनीवन्तर्ध' इति सनः पक्षे इडागमः, तदा च 'हलन्ताच्च' इति सनः कित्त्वे वलि लोपं बाधित्वा 'च्छ्वोः शूठ्' इति ऊठ यणादेशे द्विवचनम्। अत्र वर्णमात्राश्रयत्वेन चान्तरङ्गे यणि कर्त्तव्ये बाह्यप्रकृतिप्रत्ययाश्रयत्वेन बहिरङ्गस्योठोऽसिद्धत्वं न भवति; 'नाजानन्तर्ये' इति निषेधात्। तेष्ठीव्यते। ष्ठेवयति। प्रतिष्ठिवत्। ऊड्भाविनां वकारान्तानां यङ्लुङ्नास्तीति तेवतावुक्तम्। ठकारपक्षे सर्वत्राभ्यासे टकार उदाहार्यः। टिष्ठेव इत्यादि। ष्ठेवित्वा, ष्ठ्यूत्वा—उदित्त्वादिड्विकल्प इति। 'न क्त्वा सेट्'इति कित्त्वनिषेधाद् गुणः, अन्यदा तु कित्त्वादूठि यणादेशः। ष्ठ्यूतः। ष्ठ्यूतिः—'यस्य विभाषा' 'तितुत्र' इत्यनिट्त्वम्। ष्ठीवनम्, ष्ठेवनम्—पृषोदरादित्वात्पक्षे दीर्घः, तथा च चान्द्रसूत्रम्—'ष्ठिवुसिवोर्दीर्घश्च' इति। अयं दिवादावपि॥ ५६३॥

३६६. जि जये। अत्र मैत्रेयः 'उत्तरधातुसादृश्यानुरोधेनाजन्तोऽप्यत्र निर्दिश्यते' इति। इह जय उत्कर्षप्राप्तिरित्यकर्मकोऽयम्। यस्त्वभ्रेऽभिभवार्थः स सकर्मकः। यदाह देवः—

जयतिर्जयाभिभवयोराद्येऽर्थेऽसावकर्मकः। उत्कर्षप्राप्तिराद्योऽर्थो द्वितीयेऽर्थे सकर्मकः[1] ॥इति।

जयति। जिगाय। जिग्यतुः। जिगयिथ, जिगेथ। जिग्यिव 'सन्लिटोर्जेः' इत्यभ्यासादुत्तरस्य कुत्वं गकारः। अजन्तत्वादनिट्त्वे क्रादिनियमादिट्। थलि तु भारद्वाजनियमादिड्विकल्पः। अजादौ क्ङिति लिटि 'एरनेकाच' इति यण्। जेता। जेष्यति। जयतु। अजयत्। जयेत्। जीयात्–'अकृत्सार्वधातुकयोः' इति दीर्घः। अजैषीत्। जिगीषति। 'इको झल्' इति सनः कित्त्वान्न गुणः। "अज्झनगमां सनि" अजन्तानां हन्तेर्गमेश्च झलादौ सनि दीर्घ इति दीर्घः। पूर्ववदभ्यासात्परस्य 'सन्लिटोः' इति कुत्वम्। जेजीयते। जेजयीति, जेजेति। जेजितः। जेज्यति—अजादौ क्ङिति यण्। जापयति—'क्रीङ्जीनां णौ' इत्यचः स्थाने आत्वे पुगागमः। अजीजपत्। विजयते, पराजयते—'विपराभ्यां जेः' इति तङ्। अयं प्रकृतिग्रहणन्यायेन यङ्लुगन्तादपि—विजेजिते, पराजेजिते इति। यङ्लुगन्तात्सनि 'सन्लिटोर्जेः' इति कुत्वं न भवति, तत्र प्रत्यासत्त्या सन्लिङ्निमित्तस्यैवाभ्यासस्य ग्रहणात्। तथा च वृत्तिः—'सनि लिटि च प्रत्यये जेरङ्गस्य योऽभ्यासः' इति। 'विपराभ्याम्' इत्यत्रोपसर्गयोर्ग्रहणात् पराजयति सेना इत्यादौ तङ् न भवति। अस्याकर्मकत्वात्सर्वे कृतो न सन्तीति तन्त्रेणाभिभवार्थे प्रदर्शयिष्यन्ते ॥५६४॥

३६७. जीव प्राणधारणे। प्राणलक्षणस्य कर्मणो धात्वर्थेनोपसंग्रहणादकर्मकोऽयम्। जीवति। जिजीव। जीविता इत्यादि। जिजीविषति। जेजीव्यते। 'वकारान्तानामूठ्भाविनां यङ्लुङ् नास्ति' इति तेवतावुक्तम्। जीवयति। अजिजीवत्। अजीजीवत्—'भ्राजभास' इत्यादिना णौ चङ्युपधाह्रस्वविकल्पः। यावज्जीवम्। 'यावति विन्दजीवोः' इति यावत्युपपदे णमुल्। जीविका—'धात्वर्थनिर्देशे ण्वुल्वक्तव्यः' इति ण्वुल्। जीवनस्य मूतो जीमूतः—पृषोदरादिपाठाद्वलोपः। उणादौ तु 'जेर्मुट् चोदात्तः' इति जयतौ व्युत्पादितः। जीवातुः—'जीवेरातुः' इत्यातुप्रत्ययः। जैवातृकः—'जीवेरातृकन् वृद्धिश्च' इति आतृकनि वृद्धिः। जीवन्तः—'रुहिनन्दिजीविप्राणिभ्यो झच् षिद्वदाशिषि' इति झच्, षिद्भावात् स्त्रियां ङीषि जीवन्ती। जीवन्तस्य गोत्रमपत्यं वा जैवन्तायनः—'द्रोणपर्वतजीवन्तादन्यतरस्याम्' इति गोत्रापत्ये वा फक्। तदभावे इञि जैवन्तिः ॥५६५॥

३६८. पीव मीव तीव णीव स्थौल्ये। पीवति। पिपीव। पीविता। पिपीविषति। पेपीव्यते। पीवयति। अपीपिवत्। एवं मीवति॥ तीवति इत्यादि। प्रणीवति 'उपसर्गादसमासे' इति णत्वम्। पीवरः स्थूलः। मीवरः मानी। तीवरो निषादः। नीवरो वणिक्। 'छित्वर' इत्यादिना ष्वरचि वलि लोपे निपात्यन्ते। टित्त्वात् स्त्रियां ङीपि पीवरी इत्यादि। उणादिवृत्तौ तु पा पाने, तेवृ देवने, मार्ग मार्गणे, णीञ् प्रापणे

१. दै० १३-१४ का०।

इत्येतेभ्य एते व्युत्पादिताः ॥५६६-५६९॥

३६९. क्षीवु[1] निरसने। क्षीवति इत्यादि। उदित्त्वात् क्त्वायामिड्विकल्पः। क्षीवित्वा, क्ष्यूत्वा। इडभावे ऊठि यणादेशो निष्ठायां 'यस्य विभाषा' इतीण्निषेधात्—क्ष्यूतः। 'क्षेवु निरसने' इति चन्द्रः। क्षेवति इत्यादि ॥५७०॥

३७०. उर्वी तुर्वी थुर्वी[2] दुर्वी धुर्वी हिंसार्थाः। ऊर्वति। ऊर्वाञ्चकार। ऊर्विता। ऊर्विष्यति। ऊर्वतु। और्वत्। ऊर्वेत्। और्व्यात्। और्वीत्। ऊर्विविषति। ऊर्वयति। मा भवानूर्विवत्। रेफोपधत्वात् 'उपधायां च' इति सर्वत्र दीर्घः। ऊर्णः। ऊर्णवान्—ईदित्त्वान्निष्ठायामनिट्त्वे झलादिप्रत्ययपरत्वात् 'राल्लोपः' इति वलोपे रेफस्य हल्परत्वाद् 'हलि च' इति दीर्घः। 'रषाभ्याम्' इति निष्ठानस्य णत्वम्। एवं क्विप्यपि 'राल्लोपः' इति वलोपे 'र्वोरुपधायाः' इति पदत्वे दीर्घः—ऊः उरौ उरः इत्यादि॥ तूर्वति। तुतूर्व। तूर्विता। तुतूर्विषति। तोतूर्य्यते—'हलो यमाम्' इति वकारस्य लोपो यथासंख्यान्न भवति। तोतूर्वीति, तोतोर्त्ति। तोतूर्त्तः। तोतूर्वति इत्यादि। पिद्वचनेष्वनिट्पक्षे वकारस्य झल्परत्वेनानुनासिकादिप्रत्ययपरत्वेन च राल्लोपे लघूपधगुणः। 'हलि च' इति दीर्घत्वं तु गुणे पूर्वत्रासिद्धम्। ङित्त्वनेनैव दीर्घः। तोतूर्वति इत्यत्र परत्वान्नित्यत्वाच्च राल्लोपात्पूर्वमद्भावे कृते झल्परत्वाभावान्न राल्लोपः। 'उपधायां च' इति रेफोपधत्वाद्दीर्घः। तोतूर्त्तः इत्यत्र वलिलोपे 'हलि च' इति दीर्घः। अझलादित्वादननुनासिकत्वाच्च राल्लोपस्य न प्रसङ्गः। तोतोर्तु, तोतूर्तात्। तोतूर्हि। तोतूर्वाणि। उत्तमे राल्लोपान्नित्यात्वादाडागमः। लङि—तिप्सिपोः परत्वाद्राल्लोपे हल्ङ्यादिलोपे अतोतोः इति। अतोतूर्युः—इत्यत्र नित्यत्वाद् जुसि झल्परत्वाभावान्न राल्लोपः। तूर्वयति। अतुतूर्वत्। तूर्विस्वा। तूर्णः। तूर्णवान्—ईदित्त्वान्निष्ठायामनिट्त्वम्। एवं थूर्वति॥ दूर्वति॥ धूर्वति इत्यादि। धूः, धुरौ—'भ्राजभासभाष' इत्यादिना क्विपि राल्लोपः। पदत्वे 'र्वोः' इति दीर्घः। धूर्षु इत्यत्र 'खरवसानयोः' इति विसर्जनीयः 'रोः सुपि' 'रोरेव सुपि' इति नियमान्न भवति। धूर्पतिः—'अहरादीनां पत्यादिषु उपसंख्यानम्' इति विसर्जनीयापवादः पक्षे रेफः। 'उभयत्राप्यादिशब्दः प्रकारे' इति हरदत्तः। रेफाभावे विसर्जनीयो धूःपतिः। अत्र विसर्जनीयस्य 'कुप्वोः ≍क≍पौ च' इति पवर्गपरत्वेन पक्ष उपध्मानीय उदाहार्यः। 'इणः षः' इति षत्वमपदादिकवर्गपवर्गपरविसर्जनीयविषयमितीह न भवति। धुर्यः, धौरेयः—'धुरो यड्ढकौ' इति द्वितीयान्ताद्वहतीत्यर्थे यड्ढकौ। धुर्यम् इत्यत्र यति 'हलि च' इति दीर्घस्य 'न भकुर्छुराम्' इति प्रतिषेधः। 'र्वोः' इति दीर्घस्तु 'यचि भम्' इति भत्वेन पदत्वस्य बाधान्न भवति। सर्वधुरां वहति सर्वधुरीणः—'खः सर्वधुरात्' इति खः। 'ख इति योगविभागात् दक्षिण-

---

१. 'क्षिवु' इति मैत्रेयः। २. क्षीरस्वामी न पठति।

धुरीणः, उत्तरधुरीणः' इति वृत्तिः। योगविभागस्येष्टसिद्ध्यर्थत्वाद् धुरीण इत्यपि द्रष्टव्यम्। अत्र 'ऋक्पूरब्धूःपथामानक्षे' इति ऋगाद्यन्ते समासे अकारस्य समासान्तस्य विधानात् 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति परवल्लिङ्गतया सर्वधुराया इति निर्देष्टव्ये सर्वधुरादिति निर्देशः शब्दरूपापेक्षः' इति वृत्तावुक्तम्। "अनक्षे इति वचनादक्षस्य धूःअक्षधूः। दृढा धूरस्य दृढधूःअक्ष इत्यादावकारो न भवति। सुधूःअतिधूः,किंधूः,अधूः इत्यत्र 'न पूजनात्' 'किमः क्षेपे' 'नञस्तत्पुरुषात्' इति समासान्ताभावः। पूजायां स्वती परिगणितौ। 'किमः क्षेपे' इत्यत्र न्यासान्तरेणापि क्षेपग्रहणं लक्षणप्रतिपदोक्तपरिभाषया 'किं क्षेपे' इति विहितस्य क्षेपविषयस्यैव तत्पुरुषस्य लाभे तत्करणात्सा परिभाषा नेहास्तीति ज्ञापनात् कुत्सिता धूरस्य किंधूः शकट इत्यत्रापि समासान्तो न" इत्युक्तं पदमञ्जर्याम्; तद्भाष्यविरोधादुपेक्ष्यमिति। अयं चाकारःसमासार्थाद्युत्तरपदादकृत एव समासे भवति। तेन द्विधुरीत्यादावकारान्तोत्तरपदत्वाद् 'द्विगोः' इति ङीप्सिद्धिः। एतच्च जम्भतावुपपादितम्। एकधुरां वहति एकधुरीणः, एकधुरः—'एकधुराल्लुक् च' इति लुक् खश्च पक्षे। धूर्तो हस्ती—'हसिमृग्रिण्वामि' इत्यादिना तन्। अक्षेषु धूर्तः अक्षधूर्तः—'सप्तमी शौण्डैः' इति सप्तम्यन्तं शौण्डादिना समस्यते। ब्राह्मणधूर्तः-'पोटायुवति' इत्यादिना समासः ॥५७१-५७५॥

३७१. गुर्वी उद्यमने।

३७२. मुर्वी बन्धने। मूर्वति। मूर्वति। मुमूर्व इत्यादि। मूर्वा—'गुरोश्च' इत्यकारप्रत्ययः। मौर्वी—'तस्य विकारः' इत्यणि ङीप्॥५७६-५७७॥

३७३. पुर्व पर्व फर्व मर्व पूरणे। पूर्वति। 'उपधायां च' इति दीर्घः। क्विपि राल्लोपे पूः। पिपर्तौ च व्युत्पादयिष्यते। पुरि भवादि पौरेयम्—'नद्यादिभ्यो ढक्' इति शैषिको ढक्। तत्र वृत्तौ 'पूर्वनगरीति पठित्वा केचित्पूर्वनगिरीति पठन्ति, विच्छिद्य च प्रत्ययं कुर्वन्ति, उभयमपि प्रमाणम्' इत्युक्तम्। द्विपुरी—'ऋक्पूरब्धूः' इत्यकारः समासान्तः,स चाकृत एव समास इति जम्भतावुक्तम्, तेनाकारान्तोत्तरपदद्विगुत्वे ङीप् पूर्ववदत्रापि स्वतिक्किनञ्भ्यः परत्वे समासान्तो न भवति। पूर्वः—अच्। "सर्वादीनि सर्वनामानि" असंज्ञोपसर्जनानि सर्वादीनि सर्वनामसंज्ञानीति सर्वनामत्वे 'सर्वनाम्नः स्मै' इति ङेः स्मैभावः - पूर्वस्मै। 'पूर्वादिभ्यो नवभ्यो वा' इति पूर्वस्मात्, पूर्वात्। पूर्वस्मिन्, पूर्वे—इति ङसिङ्योः स्मात्स्मिनौ। 'आमि सर्वनाम्नः सुट्' इति पूर्वेषाम इत्यामः सुडागमः। 'बहुवचने झल्येत्' इत्येत्वे षत्वम्। जसि च 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' इति जसः कार्यं प्रति सर्वनामसंज्ञाविकल्पनात् सर्वनामत्वे 'जसः शी' इति शीभावे—पूर्वे, पूर्वाः। जसः कार्यं प्रतीत्युक्तत्वात् 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यकचि संज्ञायां विकल्पाभावात् पूर्वके पूर्वका इति भवति। व्यवस्था नाम स्वाभिधेयापेक्षोऽवधिनियमः। मासेन पूर्वाय मासपूर्वाय

इत्यत्र 'पूर्वसदृश' इति तृतीयासमासत्वे 'तृतीयासमासे' इति सर्वनामत्वाभावः। अत्र समासे इति प्रकृते पुनः समासवचनाद्वाक्येऽपि नेयं संज्ञा। स्त्रियां तु 'सर्वनाम्नः स्याड् ह्रस्वश्च' इति ङिद्वचनेषु स्याडागमे ह्रस्वत्वे पूर्वस्यै, पूर्वस्याः, पूर्वस्याम् इति। शीभावाद्यनदन्तत्वान्न भवति। पूर्वस्मिन्नहनि पूर्वेद्युः—"सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः" इति ऐद्युस्प्रत्यये गस्येति लोपे निपात्यते। 'तद्धितश्चासर्वविभक्तिः' इति अव्ययश्चायम्। पुरो वसति। पुर आगतः, पुरो रमणीयम्। 'पूर्वाधरावराणामसिपुरधवश्चैषाम्' इति सप्तमीपञ्चमीप्रथमान्तेभ्यः पूर्वादिभ्योऽसिप्रत्ययः स्वार्थे, तत्संनियोगेनैषां यथासंख्यं पुरादय आदेशा इत्यसिप्रत्यये पूर्वस्य पुरादेशः। पुरस्ताद्वसति। पुरस्तादागतः। पुरस्ताद्रमणीयम्—'अस्ताति च' अस्तातौ परतः पूर्वादिभ्यः पूर्ववत् पुराद्यादेशाः। पूर्वतः, पूर्वत्र—किंसर्वनामबहुभ्योऽद्व्यादिभ्यः' इत्यधिकृत्य 'पञ्चम्यास्तसिल्' 'सप्तम्यास्त्रल्' इति स्वार्थे तसिल्त्रलौ। पुरो भवं पौरस्त्यम्—'दक्षिणापश्चात्पुरसस्त्यक्' इति शैषिकस्त्यक्। पुरस्कृत्य—"पुरोऽव्ययम्" इति क्रियायोगे गतित्वात् 'कुगतिप्रादयः' इति समासे क्त्वो ल्यपि तुक्। 'नमस्पुरसोर्गत्योः' इति कुप्वोः परतो विसर्जनीयस्य सत्वम्, गतिसंज्ञायामव्ययवचनात् पुरःकृत्वा इत्यत्रानव्ययत्वेन गतित्वाभावात्सत्वसमासयोरभावः। पूर्वं कृतमनेन पूर्वी—'पूर्वादिनिः' इति प्रथमान्तात्पूर्वशब्दादनेनेत्यर्थे इनिः। पूर्वं कृतमनेनेति 'सुप्सुपा' इति समासः। कृतपूर्वी कटम् 'सपूर्वाच्च' इतीनिः। सपूर्वाद्विद्यमानपूर्वादित्यर्थः। पूर्वः पुरुषः पूर्वपुरुषः—'पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च' इति समानाधिकरणविशेषणसमासः। पूर्वं कायस्य पूर्वकायः "पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे" इति एकदेशिनाऽवयविना षष्ठ्यन्तेन पूर्वादीनि सामर्थ्यादवयववचनानि समस्यन्त इति तत्पुरुषः। 'एकाधिकरणे' इत्युक्तत्वादवयविन्येकद्रव्ये सत्ययं समासः। तेन पूर्वः छात्राणामित्यत्र समासो न भवति। पूर्वापरम्। पूर्वापरे, पूर्वापरौ—'विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्' इति द्वन्द्वस्य विभाषयैकवद्भावः। 'स नपुंसकम्' इति विहितैकवद्भावो नपुंसकलिङ्गः। पूर्वंपूर्वं पुष्यन्ति पूर्वतरं पुष्यन्तीत्यर्थः। 'पूर्वप्रथमयोरर्थातिशयविवक्षायां द्वे भवतः' इति द्वित्वम्। पर्वति। पपर्व। पर्विता। पिपर्विषति। पापर्व्यते। पापर्ति लङि तिप्सिपोः अपापः। क्विपि 'राल्लोपः'—पः, परौ परः। पर्वतः—'भृमृदृशियजिपर्वि' इत्यादिनातच्। पर्वते भवो मनुष्यः पर्वतीयः—'पर्वताच्च' इति शैषिकः छः। भवादावमनुष्ये 'विभाषाऽमनुष्ये' इत्यणि पार्वतम् इत्यपि भवति। 'तस्य जन्यं रघोर्घोरं पार्वतीयैर्गणैरभूत्'[1] इति

---

१. रघु० ४।७७।

प्रयोगः 'तस्येदम्' इत्यणि द्रष्टव्यः। पर्वतोऽभिजनोऽस्याः पार्वती—'सिन्धुतक्षशिलादिभ्योऽणञौ' इति प्रथमान्तादभिजनोपाधिकादस्येत्यर्थे तक्षशिलादित्वादञि ङीप्, यत्र पूर्वैरुषितं सोऽभिजनः। एवं फर्वति॥ मर्वति इत्यादि। पूर्व निकेतने इति चुरादौ। अत्र देवः—'पूर्व्यतीति तु यत् स्वप्ने तत्कण्ड्वादिषु दर्शनात्' इत्याह[1]। गणपाठे पुनः पूर्वशब्दो न दृश्यते, यस्त्वर्थनिर्देशसहिते गणे पठ्यते 'लेट् लोट् धौर्त्ये पूर्वभावे स्वप्ने च' इति, सोऽनयोरर्थनिर्देशः। अत एव शाकटायनायाममोघायां वृत्तावर्थनिर्देशमन्तरेण कण्ड्वादीनां पाठे पूर्वशब्दो न पठ्यते। स्पष्टं चैतत् पुरुषकारे ॥५७८-५८१॥

३७४. चर्व अदने। चर्वति इत्यादि। चर्वयति देवदत्तम्—'निगरणचलन' इति नित्यं परस्मैपदम्। 'गतिबुद्धि' इति प्रयोज्यस्य कर्मत्वम्॥ ५८२॥

३७५. भर्व हिंसायाम्। भर्वति इत्यादि। अयमीदित्स्वपि क्वचित्पठ्यते॥५८३॥

३७६. कर्व[2] खर्व गर्व दर्पे। कर्वति। खर्वति। गर्वति इत्यादि। कर्वीतीदित्स्वपि पठ्यते ॥५८४-५८५॥

३७७. अर्व शर्व षर्व[3] हिंसायाम्। अर्वति। आनर्व अर्विता। अर्विविषति॥ शर्वति। शर्वः—शृणोतेरौणादिके वप्रत्ययेऽपि। शर्वस्य स्त्री शर्वाणी—'इन्द्रवरुण' इत्यादिना ङीषानुकौ॥ सिर्षविषति इत्यत्र 'स्तौतिण्योरेव'इत्यषत्वम्। षोपदेशफलं ण्यन्तात्सनि सिर्वयिषति इति। सर्वः सर्त्तेर्वप्रत्यये वा। सर्वनामकार्यं पूर्वशब्दवत्। सर्वस्मिन्काले सर्वदा—'सर्वैकान्य'इति काले वर्त्तमानात्स्वार्थे दाप्रत्ययः, 'सर्वस्य सोऽन्यतरस्याम्'इति पक्षे दकारे प्रत्यये सभावः। सर्वस्मै हितं सार्वम्। सर्वीयम्—सर्वपुरुषाभ्यां णढञौ' इत्यत्र 'सर्वाण्णस्य वा वचनम्' इति उक्तत्वाच्चतुर्थ्यन्ताद्धितमित्यर्थे छाणौ। सर्वे देवाः सर्वदेवाः—'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' इति कर्मधारयः। सर्वेषां शुक्लतरः सर्वशुक्लः—'गुणात्तरेण समासस्तरलोपश्च' इति तरबन्तस्य तरबन्तेन समासस्तरलोपश्च ॥ ५८६-५८८॥

३७८. इवि व्याप्तौ। इन्वति—इदित्त्वान्नुम्। नुम्विधावुपदेशिवद्वचनादिजादिगुरुमत्त्वात् इन्वाञ्चकार। इन्विता। इन्विष्यति। इन्वतु। ऐन्वत्। इन्व्यात्। ऐन्वीत्। इन्विविषति। इन्वयति। ऐन्विवत्। इन्वितः। इन्वका—तारकाविशेषः—संज्ञायां कन्, क्षिपकादित्वात् 'प्रत्ययस्थात्' इतीत्वाभावः॥ ५८९॥

३७९. पिवि मिवि णिवि सेचने[4]। अयं पाठो मैत्रेयस्य च। अन्ये तृतीयं मूर्धन्योष्ठ्यादिं पठन्ति। 'सेवने' इति तरङ्गिण्याम्। पिन्वति। पिपिन्व। पिन्विता। पिपिन्विषति। पेपिन्व्यते। पिन्वयति। अपिपिन्वत्॥ एवं मिन्वति इत्यादि॥५९०-५९२॥

---

१. दै० १६३ का०। २. तरङ्गिण्यां नास्ति। ३. तरङ्गिण्यां नास्ति। ४. 'स्रंसने'इति मैत्रेयः।

३८०. हिवि दिवि धिवि जिवि प्रीणनार्थाः । अत्र केचिदाद्यमिकारादिं पठित्वा 'पुनः पाठोऽर्थभेदात्' इति, धातूनामनेकार्थत्वे तु न प्रयोजनमस्ति । तस्मात् मैत्रेयोक्त एव ह्रिवीति पाठो ज्यायान् । हिन्वतित्यादि । जिहिन्व । हिन्विता इत्यादि पिन्वतिवत् । एवं दिन्वति इत्यादि । धिनोतेः 'धिन्विकृण्व्योर च' इति शब्विषये उप्रत्ययः, अकारश्चान्तादेशः । तस्यातो लोपः; तस्य स्थानिवत्त्वात् उप्रत्ययमपेक्ष्य लघूपधगुणो न भवति, तस्य तु पित्सु गुणः । धिनोति । धिनुतः । धिन्वन्ति—अन्तादेशे यणादेशः । धिनोषि । धिनुवः, धिन्वः; धिनुमः, धिन्मः—'लोपश्चास्यान्यतरस्यां म्वोः' असंयोगपूर्वो य उकारस्तदन्तस्य वकारमकारादौ प्रत्यये वा लोप इति पक्षे उलोपः । मिपि तु परत्वाद्गुणे उकारस्याभावः । धिनोतु । धिनु—'उतश्च प्रत्ययादसंयोगपूर्वात्' योऽयमुकारोऽसंयोगपूर्वः तदन्तात्प्रत्ययात् परस्य हेर्लुगिति लुक् । धिनवानि—नित्यत्वादुकारलोपात् पूर्वमाट् । अधिनोत् । अधिनुताम् । अधिनोः । अधिनवम् । अधिन्व, अधिनुव । अधिनुम, अधिन्म । धिनुयात् । अन्यत्र लकारे पूर्ववत् । धिन्वयति इत्यादि । जिन्वति इत्यादि देवने गतम् ॥ ५९३-५९६ ॥

३८१. रिवि रवि धवि[2] गत्यर्थाः । रिण्वति ॥ रण्वति ॥ धन्वतीत्यादि । धन्वा—'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इति कनिन् । उणादिवृत्तौ धन्विः सौत्रो धातुरुच्यते । नान्तत्वादसम्बुद्धौ सर्वनामस्थाने दीर्घः । भसंज्ञायां 'न संयोगाद्वमन्तात्' इति अल्लोपनिषेधात् धन्वन इति । स्त्रियाम् 'अनो बहुव्रीहेः' इति ङीपो निषेधात् सुधन्वा, सुधन्वानौ इत्यादि । यदा तु 'डाबुभाभ्याम्' इति डाप् तदा सुधन्वा सुधन्वे इत्यादि । अत्रान्यतरस्यां ग्रहणात् यत् डापोऽभ्यनुज्ञानमुक्तं तदुपधालोपिन एवेति जम्भतावुक्तम् ॥५९७-५९९॥

३८२. कृवि हिंसाकरणयोश्च । चकाराद्गतौ । कृणोति—'धिन्वकृण्व्योर च' इति शब्विषये उकारप्रत्ययोऽकारश्चान्तादेशः । अल्लोपादि सर्वं धिन्विवत् । अयं स्वादौ च ॥ ६०० ॥

३८३. मव बन्धने । मवति । ममाव । मेवतुः । मविता, अमवीत् । अमावीत्—'अतो हलादेः' इति वा वृद्धिः । मिमविषति । मामव्यते । मामवीति, मामोति । मामूतः । मामवति । मामोषि । मामोमि । मामावः । मामूमः—"ज्वरत्वरस्रिव्यविमवामुपधायाश्च" ज्वरादिनामुपधावकारयोः क्वौ झलादावनुनासिकादौ च प्रत्यये परे ऊडित्यूठादेशे पिति गुणः । मामतीयत्र परत्वात् नित्यत्वात् अद्भावे झलादित्वं पर्यवसन्नमिति ऊण्न भवति । मामाव इत्यत्र वलि लोपे 'अतो दीर्घो यञि' इति दीर्घः । 'ज्वरत्वर' इत्यत्र क्वचित् वृत्तिकोशे क्वौ झलादौ क्ङितीति पठ्यते, तत्र क्ङिद्ग्रहणं संपातायातम्,अवतेस्तुन्योतुरिति दर्शनात् । तथा अनुनासिकादिग्रहणं चावश्यमत्रानुवर्त्यम् । अवतेर्मनिन्प्रत्यये तस्य च टिलोपे ओमिति दर्श-

---

१. क्षीरस्वामिप्रभृतयः । २. 'दृवि धवि' इति क्षीरस्वामी ।

नात्। तथा च 'न धातुलोप' इत्यत्र कैयटे 'आम्नेमाणम्' इति उपादाय छान्द-सत्वादूकारस्य ऊण् न भवतीत्युक्तम्। मामोतु। मामोतात्। मामोहि। मामवानि—नित्यत्वादाटि झलादित्वं पर्यवसन्नमित्यूडभावः। लङि तिप्सिपोरूठि अमामोत्, अमामोः। मिपि नित्यत्वादम्भावे—अमामवम्। मावयति। अमीमवम् 'वकारान्तानामूड्भाविनां यङ्लुङ न'इति यदुक्तं तत् 'च्छ्वोः' इति ऊड्विषयं द्रष्टव्यम्। क्विपि मूः, मुवौ ॥६०१॥

३८४. अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु। अवति। आव। आवतुः। अविता। मा भवानवीत्। अविविषति। आवयति। मा भवानविवत्। क्विपि ऊः, उवौ, उवः—'ज्वरत्वर'—इत्यादिनोठ्। ऊतिः—'ऊतियूति'इत्यादिना क्तिनि निपात्यते। 'स्त्रियां क्तिन्'इति सिद्धे निपातन-मुदात्तार्थम्। अविषः—'अविमह्योष्टिषच्' इति टिषच्। टित्त्वात् स्त्रियाम् अविषी। ऊनः—'इण्सिञ्जिदीङुष्यविभ्यो नक्'इति नकि कित्त्वादगुणत्वम्। ओम्—'अवतेष्टि-लोपश्च' इति मन्, तस्य च टिलोपे ऊठि गुणः। ओतुः—'सितनि' इत्यादिना तुनि ऊठि गुणः। कृष्णोतुः—'ओत्वोष्ठयोः समासे वा' इति वा पररूपम्। अन्यदा 'वृद्धिरेचि' इति वृद्धिः। अविः—इन्नितीन्। अविरेव अविकः—'अवेः कः' इति स्वार्थे कप्रत्ययः। अवनिः—'अर्त्तिसृधृधम्यम्यश्यवितृजनिभ्योऽनिः' इत्यनिः। अवनी—कृदिकारत्वात् ङीष्। अवीः ऋतुमती—'अवितॄस्तृतन्त्रिभ्य ईः'इति ईप्रत्ययः।

३८५. मव्यादय उदात्ताः उदात्तेतो जयतिवर्जम्।

३८६. धावु गतिशुद्धयोः। उदात्तः। स्वरितेत्। 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इति क्रियाफलस्य प्रधानस्य कर्तृगामित्वविवक्षायां तङ्। धावति। दधाव। दधावतुः। धाविता इत्यादि। तङ्पक्षे धावते इत्यादि। यदा क्रियाफलस्य कर्तृगामित्वमुपपदेन प्रतीयते तदा 'विभाषोपपदेन प्रतीयमाने' इति परस्मैपदं भवति। स्वार्थं धावति इति। दिधाविषति,दिधाविषते। 'पूर्ववत्सनः'इति क्रियाफलस्य कर्तृगामित्वे तङ्। दाधाव्यते। धावयति। अदीधवत्। धावित्वा, धौत्वा—'उदितो वा' इतीड्विकल्पः। इडभावे 'च्छ्वोः शूठ्' इति ऊठि 'एत्येधत्यूठ्सु' इति वृद्धिः, निष्ठायां 'यस्य विभाषा' इति अनिट्त्वात्—धौतः, धौतवान्। अत्र मैत्रेयः—'कथं धावितो धावितवान्' इति उपक्रम्य कृतिचृतिनृतीनामीदित्त्वं 'यस्य विभाषा' इत्यस्यानित्यत्वे ज्ञापकमाह। नित्यत्वे ह्येतेषाम् 'सेसिचि कृतचृतछृततृदनृतः'इति सकारादाविटो विकल्पनान्निष्ठायामनिट्त्वस्य सिद्धत्वात्किं तदर्थेनेदित्त्वेन॥६०३॥

अथ ऊष्मान्ता आत्मनेपदिनः—

३८७. धुक्ष धिक्ष सन्दीपनक्लेशनजीवनेषु। धुक्षते। दुधुक्षे। धुक्षिष्यते। धुक्षताम्।

---

१. क्षीरस्वामी न पठति।

अधुक्षत । धुक्षेत । धुक्षिषीष्ट । अधुक्षिष्ट । दुधुक्षिषते । दोधुक्षीति, दोधुष्टि । अनिटि 'स्कोः' इति कलोपः । तस्यासिद्धत्वान्न लघूपधगुणः । दोधुक्षीषि, दोधुक्षि—अनिट्त्वे 'स्कोः' इति कलोपे 'षढोः कः सि' इति कत्वे सिपः षत्वम् । दोधुष्टु । दोधुड्ढि—अत्र सेर्हिः, तस्य धित्वे ष्टुत्वे च 'झलां जश् झशि' इति दकारः । दोधुक्षाणि । लङि—तिप्सिपोर्हल्ङ्यादिलोपे पदान्तसंयोगत्वात्कलोपे 'झलां जशोऽन्ते' इति जश्त्वस्य 'वावसाने'इति चर्त्वे अदोधुट्, अदोधुड् । धुक्षयति । अदुधुक्षत् । धुक्षा ॥ एवं धिक्षते इत्यादि ॥ ६०४-६०५ ॥

३८८. वृक्ष वरणे । वृक्षते । ववृक्षे—द्विर्वचने उरदत्वे च हलादिशेषः । वृक्षिता इत्यादि । विवृक्षिषते । वरीवृक्ष्यते—'रीगृत्वतः' इति रीगागमः । वर्वृष्टि, वरीवर्ष्टि, वरिवृष्टि इत्यादि । वृक्षयति । अववृक्षत् । वृक्षः । वृक्षाः ॥६०६॥

३८९. शिक्ष विद्योपादाने । शिक्षते । शिशिक्षे इत्यादि धुक्षिवत् । अत्र तरङ्गिणीकारादयः "'शिक्षेर्जिज्ञासायाम्'इति वचनं नियमार्थम्" इति व्याचक्षाणा जिज्ञासाया अन्यत्र परस्मैपदम् आहुः, तदयुक्तम्; शकेः सनन्तस्य विध्यर्थसम्भवात् , न च विधिसम्भवे नियमो युज्यते । एवमेव समर्थितं न्यासकैयटपदमञ्जर्यादिषु ॥६०७॥

३९०. भिक्ष याच्ञायामलाभे लाभे च।[1] भिक्षते इत्यादि पूर्ववत् । अयं द्विकर्मकः, तत्र 'अप्रधाने दुहादीनाम्' इति वचनाल्लकृत्यखलर्था अप्रधाने भवन्ति । पौरवो गां भिक्ष्यते । भिक्षितव्यः । भिक्षितः । सुभिक्ष इत्यादि । षष्ठी तु द्वितीयावदुभयत्र भवति । भिक्षिता गोः पौरवस्य इति । 'अप्रधाने तूभयथा गोणिकापुत्रः' इति भाष्ये उक्तत्वात्पौरवमिति द्वितीयापि भवति । भिक्षितव्यो राजा धनं देवदत्तेन इत्यत्र 'अनभिहिते कर्मणि कर्त्तरि च 'कर्तृकर्मणोः' इति षष्ठ्या 'उभयप्राप्तौ कृति प्रतिषेधः' इत्युक्तत्वात् न प्रसङ्गः । सर्वमेतन्नाथतावुपपादितं[2] तत एवावगन्तव्यम् । भिक्षुः—'सनाशंसभिक्ष उः' इति ताच्छीलिक उप्रत्ययः । भिक्षाकः—'जल्पभिक्ष' इति षाकन् । षित्त्वात् स्त्रियां भिक्षाकी ॥६०८॥

३९१. क्लेश अव्यक्तायां[3] वाचि । बाधन इति दुर्गः । अत्र स्वामी 'क्लेश व्यक्तायां वाचि च'[4] इति पठन्निमावपि पूर्वधातोरर्थावेवाह । चन्द्रदुर्गमैत्रेयसम्मताकारदेवादयस्तु धात्वन्तरमेवाहुः । क्लेशते । चिक्लेशे । चिक्लेशिषते । चेक्लेश्यते । चेक्लेष्टि । इत्यादि । हौ तु चेक्लेड्ढि । व्रश्चादिना षत्वे धे ष्टुत्वे जश्त्वम् । क्लेशयति । अचिक्लेशत् । क्लेश उपतापे इति दिवादौ ॥६०९॥

३९२. दक्ष वृद्धौ शीघ्रार्थे च । दक्षते । ददक्षे । दक्षिता इत्यादि । दक्षिणः—'द्रुदक्षि-

---

१. 'भिक्षायाम्' इति क. पुस्तके । २. पूर्वं ९९ पृष्ठेऽवलोकनीयम् । ३. 'व्यक्तायाम्' इति मैत्रेयः । ४. 'क्लेशे च व्यक्तायां वाचि' इति मुद्रितक्षीरतरङ्गिणीपाठः ।

भ्यामिनन्' इतीनन्। पूर्वशब्दवत् सर्वनामत्वं तत्कार्यं च। स्त्रियां तु टापि दक्षिणा। दक्षिणामर्हतीत्यादि दक्षिणीयः, दक्षिण्यः—'कडङ्करदक्षिणाच्छ च' इति द्वितीयान्तादर्हतीत्यर्थे छयतौ। ग्रामस्य दक्षिणतो वसति। दक्षिणत आगतः। दक्षिणतो रमणीयम्—'दक्षिणोत्तराभ्यामतसुच्' इति सप्तमीपञ्चमीप्रथमान्तात् स्वार्थेऽतसुच्, 'षष्ठ्यतसर्थप्रत्ययेन' इति तद्युक्तात्षष्ठी। 'अतसर्थप्रत्ययेन' इति सप्तम्याद्यन्तात्स्वार्थे यो विहितः स उच्यते। दक्षिणा ग्रामस्य–'उत्तराधर' इत्ययमातिरतसुज्विषये। पूर्ववत् ग्रामतः षष्ठी। दक्षिणेन ग्रामम्। ग्रामस्येति वा–'एनबन्यतरस्याम्' इत्युत्तरादिभ्य एनप्। 'अपञ्चम्याः' इति वचनादयं सप्तमीप्रथमान्तेभ्य उत्तराद्यर्थेऽवधिसापेक्ष इति अवधिमतस्तस्य सामर्थ्यादवध्यपेक्षमदूरत्वम्। अन्यतरस्यांग्रहणं यथाप्राप्तातसुजाद्यभ्यनुज्ञानार्थम्। इतरथा ह्ययमदूरे बाधकः स्यात्। "एनपा द्वितीया" इति तद्युक्तात् द्वितीया षष्ठ्यपीष्यते इति षष्ठी च। दक्षिणा ग्रामात्–'दक्षिणादाच्' इत्याच् एनपो विषये, 'अन्यारादितरर्त्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते' इत्याजन्तयुक्तात्पञ्चमी। अन्य इत्यर्थग्रहणम्। आरादितरर्त्ते इति स्वरूपग्रहणम्। दिक्शब्दा दिशि दृष्टाः पूर्वादयः। अञ्चूत्तरपदाः प्रागादयः। आजाही प्रत्ययौ। दिक्शब्दत्वादेव सिद्धेऽञ्चूत्तरपदग्रहणमस्तात्यन्तार्थम्। तत्र हि 'षष्ठ्यतसर्थप्रत्ययेन' इति षष्ठी विधीयते, एवमाजाह्योरपि। दक्षिणाहि: ग्रामात्—'आहि च दूरे' इत्याहि:। पूर्ववदवध्यपेक्षं दूरत्वम्। चकारादाजपि द्रष्टव्यः। सर्वे एते 'तद्धितश्चासर्वविभक्तिः' इति अव्ययसंज्ञकाः। दक्षिणा भवः दाक्षिणात्यः—'दक्षिणापश्चात्पुरसस्त्यक्' इति शैषिकस्त्यक्। दक्षिणाशब्दः पश्चात्पुरोभ्यां साहचर्यादिहाजन्तोऽव्ययो गृह्यते। अत एव सर्वनामत्वाभावात् 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पुंवद्भावो न भवति ।।६१०।।

३६३. दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु। दीक्षते इत्यादि। 'अनुदात्तेतश्च' इति युच्। 'सूददीपदीक्षश्च' इति निषेधाद् दीक्षिता इति सामान्यस्त्रन् ।।६११।।

३६४. ईक्ष दर्शने। ईक्षते। ईक्षाञ्चक्रे। ईक्षिता। ईक्षिष्यते। ईक्षताम्। ऐक्षत। ईक्षेत। ईक्षिषीष्ट। ऐक्षिष्ट। ईचिक्षिषते। ईक्षयति। ऐचिक्षत्। देवदत्तायेक्षते। नैमित्तिकः पृष्टः सन् शुभाशुभं पर्यालोचयतीत्यर्थः। "राधीक्ष्योर्यस्य विप्रश्नः"। अनयोस्तत्कारकं सम्प्रदानं यस्य विप्रश्नः। यद्विषयं पृच्छ्यत इत्यर्थः। स्वसम्बन्धिनः शुभाशुभस्य विप्रश्नयोगित्वात्कारकमपि तथोच्यते। तदिह धातुरर्थात् शुभाशुभपर्यालोचनवृत्तिः। अन्यत्र देवदत्तमीक्षते इति द्वितीयैव। सुखं प्रतीक्षते सुखप्रतीक्षः, सुखप्रतीक्षा—'ईक्षिक्षमिभ्यां चेति वक्तव्यम्' इति कर्मण्युपपदे णप्रत्ययः ।।६१२।।

३६५. ईष गतिहिंसादर्शनेषु। ईषते। ईषाञ्चक्रे। ईषिता इत्यादि। 'तीषसहलुभरुषरिषः' इत्यत्र ह्रस्वादेर्ग्रहणात् ईषिता इत्यादौ नेड्विकल्पः। ईषा। मनस ईषा मनीषा—पृषोदरादिः। ईष्व आचार्यः। 'ईष्व इति वनन्तस्य निपातनमस्य' इति

मैत्रेयः । उणादिवृत्तौ तु 'इषु इच्छायाम्' इति तौदादिकस्य निपातनमुच्यते इष्वः इति ह्रस्वादिः । तन्मतेऽयमिच्छार्थः । परस्मैपदिषु इष गताविति दिवादौ । अयमिच्छार्थः तुदादौ, आभीक्ष्ण्यार्थः क्र्यादौ ॥६१३॥

३९६. भाष व्यक्तायां वाचि । भाषते । बभाषे । भाषिता । बिभाषिषते । बाभाष्यते । बाभाषीति, बाभाष्टि । भाषयति । अबभाषत्, अबीभषत्—'भ्राजभास' इत्युपधाह्रस्वविकल्पः । भाषकः—'निन्दहिंस' इत्यादिना वुञ् ताच्छीलिकः ॥ ६१४ ॥

३९७. वर्ष[1] स्नेहने । दन्त्यौष्ठ्यादिः । वर्षते । ववर्षे । वर्षिता । विवर्षिषते । वावर्ष्यते । वावर्ष्टि । लङि तिप्सिपोः अवावट्, अवावड्—'रात्सस्य' इति नियमान्न संयोगान्तलोपः । वृषु सेचन इत्यग्रे परस्मैपदी । शक्त्यर्थश्चुरादौ ॥ ६१५ ॥

३९८. गेषृ अन्विच्छायाम् । ग्लेषृ इति मैत्रेयः । अन्विच्छा अन्वेषणम् । गेषते । जिगेषे । गेषिता । जिगेषिषते । जेगेष्यते । जेगेष्टि । जेगेट्टः । गेषयति । अजिगेषत्—ऋदित्त्वान्नोपधाह्रस्वः ॥६१६॥

३९९. एषृ[2] प्रयत्ने । एषते इत्यादि ॥६१७॥

४००. जेषृ णेषृ एषृ प्रेषृ[3] गतौ । जेषते ॥ नेषते । प्रणेषते ॥ एषते । एषाञ्चक्रे । एषिता । एषिष्यते । एषयति । मा भवानेषिषत् ॥ प्रेषते ॥६१८–६२१॥

४०१. रेषृ[4] हेषृ अव्यक्ते शब्दे । रेषते । अयं स्वभावाद्वृकविषयः । हेषते । अयमश्वविषयः । ह्लेषृ इति सरेफश्चात्र द्रष्टव्यः । यदाह केशवस्वामी—

'कौक्षे कर्दति पर्दते गुदरवे रेषेति वार्के भवेत्,
बुक्केति श्वरवे भषेति हयजे ह्लेषेति हेषेति च' ॥ इति ।

तथा 'हेषा ह्लेषा च निःस्वने[5]' इत्यमरः ॥६२२–६२३॥

४०२. कासृ शब्दकुत्सायाम् । कासते । कासाञ्चक्रे । 'कास्प्रत्ययाद्' इत्याम् । कासिता । कासिष्यते । कासताम् । अकासत । कासेत । कासिषीष्ट । अकासिष्ट । चिकासिषते । चाकास्यते । चाकास्ति । लोटि हेर्धिभावे 'धि च' इति सलोपे चाकाधि । न च 'धि च' इत्यत्र भाष्यकृता सिजित्यपेक्ष्यते । लङि—तिपि हल्ङ्यादिलोपे प्रत्ययलक्षणेन तिप्परत्वात् "तिप्यनस्तेः" इति अस्तिवर्जितस्य सान्तस्य पदस्य तिपि परे दकार इति दकारे तस्य चर्त्वे अचाकात् । सिपि तु "सिपि धातोरुर्वा" इति सान्तस्य अस्तिवर्जितस्य धातोः पदस्य पक्षे रुत्वे अचाकाः इत्यपि भवति । कासयति । अचकासत् । ऋदित्त्वान्नोपधाह्रस्वः । कासः—'हलश्च' इति संज्ञायां घञ् । कासरः—औणादिकः अरः । कासारः—बाहुलकादारः । कासूः शक्तिः । कासूतरी—'कासूगोणीभ्यां ष्टरच्'

---

१. 'पर्ष' इति क्षीरस्वामी, 'पर्ष वर्ष' इति मैत्रेयश्च । २. 'येसृ' इति क्षीरस्वामी, मैत्रेयश्च । इतः पूर्वं 'प्रेसृ यत्ने' इत्यधिकं सूत्रं पठति मैत्रेयः । ३. 'ह्लेषृ' इति क्षीरस्वामी मैत्रेयश्च । ४. क्षीरस्वामी न पठति । ५. अ० को० २।८।४७ ।

इति अल्पत्वे द्योत्ये ष्टरच्। षित्त्वान्ङीष्। अस्मादेव निर्देशादूकारप्रत्ययः। कसतीति ज्वलादौ गत्यर्थः। कंस्त इति गतिशासनयोरादादिकस्य; तत्रान्येऽनिदित्पाठिनः कस्तः इत्याहुः। अन्ये तु तालव्यान्तं पठन्तः कष्टः इति।।६२४।।

४०३. भासृ दीप्तौ। भासते इत्यादि कासिवत्। भासयति। अबीभसत्, अबभासत्। 'भ्राजभास' इत्युपधाह्रस्वविकल्पः। एवं चास्य ऋदित्त्वं तन्मात्रफलम्। अनुबन्धान्तराकरणं तु प्रकरणानुरोधात्। भास्वरः—'स्थेशभास' इत्यादिना तच्छीलादौ वरच्। भाः। भासौ। भासः—'भ्राजभास' इति ताच्छीलिकः कर्त्तरि क्विप्।।६२५।।

४०४. णासृ रासृ शब्दे। नासते। प्रणासते।। रासते इत्यादि कासिवत्। नासा—अकारः। नासिका—संज्ञायां कनि 'केऽणः' इति ह्रस्वः। 'प्रत्ययस्थात्' इतीत्वम्। नासायां भवं तस्यै हितं नास्यम्—'शरीरावयवाद्यत्' इति यत्। नासिकाशब्दात्तु यति 'नस्नासिकाया यत्तस्क्षुद्रेषु' इति नस्भावे नस्यम् इति। एवं नस्तः। नःक्षुद्रः इत्यादि। 'आद्यादिभ्य उपसंख्यानम्' इति सार्वविभक्तिकस्तसिः। 'अपादाने चाहीयरुहोः' इति वा अपादाने या पञ्चमी तदन्तात्स्वार्थे तसिः हीयरुहोः प्रयोगे नेति। नःक्षुद्रः इत्यत्र नासिकया क्षुद्र इति 'पूर्वसदृश' इत्यादिना समासस्तृतीयायाः। तत्र हि ऊन इत्यर्थग्रहणम्। नासिक्यो वर्णः, नासिक्यं नगरम्—इत्यत्र यति 'वर्णनगरयोर्न' इति नस्भावप्रतिषेधः। वाध्रीव नासा यस्य वाध्रीणसः अजविशेषः—"अञ् नासिकायाः संज्ञायां नसं चास्थूलात्" इति नासिकान्ताद् बहुव्रीहेः संज्ञायामच् समासान्तः, नासिकायाश्च नसादेशः। अस्थूलादिति वचनात् स्थूलनासिक इत्यत्राञ्नस्भावौ न भवतः। खुरणाः—'खुरखराभ्यां नस् वक्तव्यः' इति नस्भावः। 'आदेशान्तरकरणं प्रत्ययनिवृत्त्यर्थम्' इति कैयटपदमञ्जर्यादौ। अत्र वृत्तौ 'अजपीष्यते' इति। तेन खुरणसः, खरणस इत्यपि भवति। प्रगता नासिका अस्य प्रणसः—"उपसर्गाच्च" उपसर्गपूर्वनासिकान्ताद् बहुव्रीहेरजित्यच्, नासिकायाश्च नस्भावः। 'उपसर्गाद्बहुलम्' इति उपसर्गस्थान्निमित्तात्परस्य नसो नकारस्य णत्वम्। उभयत्रोपसर्गग्रहणं प्राद्युपलक्षणार्थम्। विगता नासिका अस्य विग्रः—'वेर्ग्रो वक्तव्यः' इति ग्रादेशो नासिकायाः। 'यद्यहं नाथ नायास्यं विनसा हतबान्धवा'[1] इति भट्टिप्रयोगे विशेषविहितेन ग्रादेशेन भाव्यमिति महान्तो न सहन्ते। केचित्तु वार्त्तिकम् 'वेः खो वक्तव्यः' इति पठन्तो विख इति उदाहरन्ति। तुङ्गनासिका—'नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च' इति नासिकाद्यन्ताद्बहुव्रीहेर्वा ङीष्। रासः क्रीडाविशेषः। रासभः—'रासिवल्लिभ्यां च' इति अभच्। रास्ना। 'रास्नासास्नास्थूणावीणा' इति नप्रत्यये

---

१. भ० का० ५।९।

निपातितः ॥६२६-६२७॥

४०५. णस कौटिल्ये। नसते। प्रणसते। नेसे। नसिता इत्यादि। नासयति। अनीनसत् ॥६२८॥

४०६. भ्यस भये। भ्यसते। बभ्यसे। भ्यसिता। भ्यसिष्यते। बाभ्यस्यते। बाभ्यस्ति। भ्यासयति। अबिभ्यसत्। बाभ्यधि इत्यत्र हेर्धिभावे 'धि च' इति सलोपः। तस्यासिद्धत्वात् 'अतो हेः' इति लुक् न भवति। एवं नसेरपि नानधि इति भवति ॥६२९॥

४०७. आङः शसि इच्छायाम्। आङः शसीति पाठादयमाङ्पूर्व एव प्रयोक्तव्यः। तथा च काश्यपः—'अयमाङ्पूर्व एव प्रयोक्तव्यः' इति। सम्मतायां 'न च केवलो नाप्युपसर्गान्तरपूर्वः' इति। आशंसते। आशशंसे। आशंसिता। आशिशंसिषते। आशशंस्यते—इदित्त्वान्नुम्, नलोपाभावश्च। आशाशंस्ति। आशाशन्धि इत्यत्र 'धि च' इति सलोपेऽनुस्वारपरसवर्णौ। लङि तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे च आशाशन्। आशंसयति। आशशंसत्। आशंसुः। 'सनाशंसभिक्ष उः' इत्युप्रत्ययः। आशंसितः। आशस्य—क्त्वो ल्यप्। 'दौर्गास्तु नोपधमनिदितं पठन्ति' इति स्वामी। तेषां नलोपाभावो विशेषः। शंसु स्तुतावित्यग्रे परस्मैपदिषु। आङः शासु इच्छायाम्। शासु अनुशिष्टाविति द्वयमदादौ ॥६३०॥

४०८. ग्रसु ग्लसु अदने। ग्रसते। जग्रसे। ग्रसिता इत्यादि पूर्ववत्। ग्रासयति पिण्डं देवदत्तम्। निगरणार्थत्वान्नित्यं परस्मैपदम्, प्रयोज्यस्य कर्मत्वं च। ग्रसित्वा, ग्रस्त्वा—उदित्त्वादिड्विकल्पः। ग्रस्तः—'यस्य विभाषा' इति अनिट्त्वम्। ग्रस्यत इति ग्रासः कवलः। पिण्डं ग्रसते पिण्डग्रः-'अत्वसन्द' इति दीर्घः 'अधातोः' इति प्रतिषेधान्न भवति। ग्रसिष्णुरिति हेलाराजीये लिङ्गनिर्देशे प्रयुज्यते। 'भुवश्च' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाद् भ्राजिवन्निर्वाह्यः। अत एव 'भुवश्च' इत्यत्र वृत्तौ चकाराद् भ्राजेश्च भाषायामिति चशब्दः क्रियते॥ एवं ग्लसति इत्यादि॥६३१-३२॥

४०९. ईह चेष्टायाम्। ईहते। ईहाञ्चक्रे। ईहिता। ईहिष्यते। ईहताम्। ऐहत। ईहेत। ईहिषीष्ट। ऐहिष्ट। ईजिहिषते। ईहयति। मा भवानीजिहत्। ईहा। ऐही। पर्यैही —आङ्पूर्वात्पर्याङ्पूर्वाच्चेनन्तात् शार्ङ्गरवादिपाठान्ङीन् ॥६३३॥

४१०. बहि महि वृद्धौ। बंहते। बबंहे। बंहिता। बंहिषीष्ट। बिबंहिषते। बाबंह्यते। इदित्त्वान्नुम्, नलोपाभावश्च। बाबंढि—झलि पदान्ते च 'हो ढः' इति ढकारस्य ढकारः। 'झषस्तथोर्धोऽधः' इति तकारस्य धकारे 'ष्टुना ष्टुः' इति ष्टुत्वे 'ढो ढे लोपः' इति पूर्वस्य लोपः। अत्र ढत्वष्टुत्वे आश्रयात् सिद्धे। नकारस्यानुस्वारपरसवर्णौ। बाबण्ढः। बाबंहति। बाभङ्क्षि—ढत्वे 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इति बकारस्य भष्भावेन भकारे 'षढोः कः सि' इति कत्वम्। बाबण्ढः। बाबंह्मि। बाबंह्वः। लङि तिप्सिपोर्हो धात् पूर्वं हल्ङ्यादिलोप इति झषन्तत्वाभा-

वान्न भष्भावः । बंहयति । अबबंहत् ॥ एवं मंहते इत्यादि । अयं भाषार्थश्चुरादाविति स्वामी । मह पूजायामिति इहैवाग्रे परस्मैपदिषु । महीयते इत्यादि 'महीङ्' इति कण्ड्वादिपाठात् ॥६३४-६३५॥

४११. अहि गतौ । अंहते । आनंहे । अंहिता । अञ्जिहिषते । 'कुहोश्चुः' इति हकारस्य झकारे 'अभ्यासे चर्च' इति जश्त्वेन जकारे नकारस्यानुस्वारपरसवर्णौ । अंहयति । आञ्जिहत् । अंहः—असुन् । चुरादौ भाषार्थः ॥६३६॥

४१२. गर्ह गल्ह कुत्सायाम् । गर्हते । जगर्हे । गर्हिता । जिगर्हिषते । जागर्ह्यते । जागर्हीति इत्यादि बंहिवत् । लङि तिप्सिपोर्हल्ङ्यादिलोपे 'रात्सस्य' इति नियमात् संयोगान्तलोपाभावाद् हकारस्य ढकारे झषन्तत्वात्पदान्तविषयत्वाच्च भष्भावे अजाघर्ड् । अयमाधृषीयोऽपि॥ गल्हत इत्यादि पूर्ववत् । यङ्लुकि तिप्सि-पोर्लोपे संयोगान्तलोपे अजागल् ॥६३७-६३८॥

४१३. बर्ह[1] बल्ह प्राधान्ये । ओष्ठ्यादी । बर्हते । बल्हते इत्यादि । बर्हते सर्वे-ष्ववयवेषु प्रधानं भवतीति बर्हम् । बर्हिणः—'फलबर्हाभ्यामिनज्वक्तव्यः' इतीनच् । बर्ही—मत्वर्थीय इनिः । इमौ भाषार्थौ चुरादी । बर्हिस्तु हिंसायामपि तत्रैव, बृहि वृद्धाविति अत्रैवाग्रे परस्मैपदिषु ॥६३९-६४०॥

४१४. वर्ह वल्ह परिभाषणहिंसादानेषु । दन्त्यौष्ठ्यादी । वर्हते ॥ वल्हते । ववल्हे । वल्हिता इत्यादि । अत्र धनपालमैत्रेयौ परिभाषणादावोष्ठ्यादित्वम्, वृद्धौ दन्त्यो-ष्ठ्यादित्वं चाहतुः । 'छादयत्यनेनेति वर्हः घञ्'इति वदन् शाकटायनोऽप्यत्रैवानु-कूलः । यथा वयं तथा स्वामी । यदाह—'बर्ह बल्ह प्राधान्ये, वुनि बर्हकः' इति । एवं मुनिप्रबर्हा इति प्राधान्ये प्रयोग उपपद्यते । प्रवल्हिका इति च भाषार्थे । तदुक्तं पुरुषकारे—'प्रवल्हिका प्रहेलिका'इति, तच्चात्रैवानुकुलम् । भाषाविशेषत्वात् प्रवल्हा इति । तथा च बह्वृचब्राह्मणम्—'प्रवल्हिकाश्शंसति प्रवल्हिकाभिर्वै देवा असुरान् प्रवल्ह्याथैनानत्यायन्' । व्याकृतं चैतत् गोविन्दस्वामिना 'प्रवल्ह्य अनृतं भाषित्वा' इति । यत्तूक्तं शाकटायनेन 'आच्छाद्यतेऽनेनेति वर्हः घञ्' इति, नैतदोष्ठ्यादित्वे साधकम्; 'सर्वेष्ववयवेषु प्रधानं भवति' इत्येवं व्युत्पादितत्वात् । बृहू उद्यमने इति चुरादौ[2] ॥६४१-६४२॥

४१५. प्लिह गतौ । प्लेहते । पिप्लिहे । पिप्लिहिषते । प्लिहित्वा, प्लेहित्वा—'रलो व्युपधाद्' इति कित्त्वविकल्पः । प्लीहा—'श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्ने-हन्मूर्द्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्' इति कनिनन्तो निपातितः । उणादिवृत्तौ तु प्लीहशब्दपूर्वाद्धन्तेष्टिलोपे व्युत्पादितः । यथा वयं तथा मैत्रेयः । प्लीहानावित्यादौ "इन्हन्पूष" इति नियमो हन्शब्दस्यानर्थकत्वान्न

१. मैत्रेयो न पठति । २. 'वृहू उद्यमने इति तुदादौ' इति ख. पुस्तके ।

इति भाष्यादौ स्थितम् ॥६४३॥

४१६. वेहृ जेहृ बाहृ प्रयत्ने। आद्यो'दन्त्यौष्ठ्यादिः। अन्त्यः केवलौष्ठ्यादिः। उभावपि केवलौष्ठ्यादी इत्येके, दन्त्यौष्ठ्यादी इत्यन्ये। वेहते। जेहते। बाहते इत्यादि। ऋदित्त्वाण्णौ चङि ह्रस्वाभावः—अविवेहत् इत्यादि। वेहत् गर्भोपघातिनी गौः—'संश्चत्तृपद्वेहत्' इति अतिप्रत्यये निपात्यते। गोवेहत्—'पोटायुवतिस्तोक' इत्यादिना कर्मधारयः। वाहा—अजन्तत्वाट्टाप्। बाढम्—'क्षुब्धस्वान्त' इत्यादिना निष्ठायामिडभावो भृशार्थे, अन्यत्र बाहितम्। जेहतिर्गत्यर्थोऽपि, उक्तं च 'रेणुभिर्जेहमानम्' इत्यत्र क्षुरभट्टभास्करीययोः ॥६४४-६४६॥

४१७. [1]द्राहृ निद्राक्षये। निक्षेपे इति केचित्[2]। द्राहते। यङ्लुकि 'दादेर्धातोर्घः' इति झलि पदान्ते चेति हस्य घकारे 'झषस्तथोः' इति धत्वे जश्त्वे च दाद्राग्धि। दाद्राग्धः इत्यादि। सिपि भष्भावेन दकारस्य धकारे 'खरि च' इति धकारस्य चर्त्वेन ककारे सिपः सकारस्य षत्वे दाध्राक्षि। लङि हल्ङ्यादिना तिप्सिपोर्लोपः, भष्भावजश्त्वचर्त्वेषु अदाध्राक् ॥६४७॥

४१८. काशृ दीप्तौ। काशते। चकाशे। काशिता। काशिष्यते। काशताम्। अकाशत। काशेत। काशिषीष्ट। अकाशिष्ट। अकाशिष्यत। चिकाशिषते। चाकाश्यते। चाकाष्टि। व्रश्चादिना षत्वे ष्टुत्वम् चाकाक्षि। चाकाश्मि। चाकाश्वः। चाकाश्मः। चाकाड्ढि इत्यत्र हेर्धिभावे व्रश्चादिना षत्वे ष्टुत्वे जश्त्वम्। लङि अचाकाट्। काशयति। अचकाशत्। काशः—अच् घञ् वा। नीकाशः—'इकः काशे' इति इगन्तस्योपसर्गस्य काश उत्तरपदे दीर्घः। काशिः, काशी—अक्तिन्नत्वात् वा ङीष्। काशिषु भवा काशिका—'काश्यादिभ्यष्ठञ्ञिठौ' इति शैषिकौ ठञ्ञिठौ। ठञि 'टिड्ढ' इति ङीप्—काशिकी। काष्ठम्। काष्ठा—'हनिकुषिनीरमिकाशिभ्यः क्थन्' इति क्थन्। आकारोपधप्रकरणादयमिह पठितः। अयं दिवादौ च। काशृ गतिशासनयोरित्यदादौ। अन्ये दन्त्यान्त्यमिदितं पठन्ति। अनिदितमपरे ॥६४८॥

४१९. ऊह वितर्के। वितर्कः सम्भावनम्। ऊहते। ऊहाञ्चक्रे। ऊहिता। ऊहिष्यते। ऊहताम्। औहत। ऊहिषीष्ट। औहिष्ट। ऊजिहिषति। ऊहयति। औजिहत्। समूहति, समूहते—'उपसर्गादस्यत्यूहोर्वा वचनम्'इति उपसृष्टादस्मात्परस्मैपदं च। समुह्यात् इत्यत्र 'किदाशिषि' इति कित्त्वे 'उपसर्गाद्ध्रस्व ऊहतेः' इति यकारादौ क्ङिति ह्रस्वः। एवं यक्यपि समुह्यते इति। यद्यपि 'उपसर्गादस्यत्यूहोः'इति वार्त्तिकमकर्मकाधिकारे पठितम्, तथापि वृत्तिकैयटादौ सकर्मकाकर्मकसाधारणमुक्तम्। 'अनुक्तमप्यूहति पण्डितो जनः' इति प्रयोग आङ्पूर्वस्येति सुधाकरः। एवं च सति ओहति इति गुणः पठितव्यः। ओह्यते इत्यत्रान्तादिवद्भावेनोपसर्गात्परत्वेन

१. इतः पूर्वं 'माहृ माने' इत्यधिकं सूत्रं पठति मैत्रेयः। २. दुर्ग-क्षीरस्वामिप्रभृतयः।

'उपसर्गाद्ध्रस्व ऊहतेः' इति ह्रस्वो न भवति। 'उभयतआश्रयणे नान्तादिवत्' इति वचनात्। यद्वा—अत्राण इति वर्त्तते, स च सामर्थ्यात्पूर्वेण णकारेणेति ह्रस्वाप्रसङ्गः। एवं च समौह्यत इत्यादावप्याटि वृद्धौ ह्रस्वो न भवति ॥६४९॥

४२०. गाहू विलोडने। गाहते। जगाहे। जघाक्षे। जगाढ्वे—'थासः से' झलि 'हो ढः' इति ढत्वे भष्भावे कत्वम्। ध्वमि ढत्वभष्भावयोः ष्टुत्वे ढलोपः। क्रादिनियमस्य प्रतिषिद्धविषयत्वादूदित्वादिट्पक्षे जगाहिषे इत्यादि। गाढा, गाहिता। घाक्ष्यते, गाहिष्यते। गाहताम्। अगाहत। गाहेत। गाहिषीष्ट। अगाढ। अघाक्षाताम्। अघाक्षत। अगाढाः। अघाड्ढ्वम्। अघाक्षि। झला दौसिज्लोपे ढत्वषत्वष्टुत्वढलोपाः। प्रत्ययलक्षणेन सादिप्रत्ययपरत्वाद्भष्भावो नाशङ्क्यः; सिज्लोपस्य प्रत्ययलक्षणे पूर्वत्रासिद्धत्वात्। अत एवासिद्धत्वात्सिज्लोपात्पूर्वं न भष्भावः। ध्वमि तु परत्वाद्भष्भावः। इट्पक्षे अगाहिष्ट इत्यादि। जिघाक्षते, जिगाहिषते। जागाह्यते। जागाढि। गाहयति। अजीगहत्। गाढ्वा, गाहित्वा। गाढः, गाहितः। 'गाहट्' इति पचादौ पाठात् टित्त्वात् स्त्रियां गाही। गह्वरम्—'छित्वर'इत्यादिना ष्वरचि ह्रस्वे निपात्यते। उणादिवृत्तौ तु गाधतेर्निपातनमुक्तम्। गहनं करोति गहनायते—'सत्रकष्टकक्ष'इत्यनेन द्वितीयान्ताद्गहनात कण्वचिकीर्षायां क्यङ्। कण्वं पापम्। सत्रादयश्च वृत्तौ पापवचना इति हरदत्तादिभिरुक्तम्। अत्रैव वार्त्तिके निर्देशात् ल्युटि ह्रस्वः। गहे भवं गहीयम्-'गहादिभ्यश्च' इति शैषिकोऽत्र छः। 'गह' इति निर्देशादचि ह्रस्वः ॥६५०॥

४२१. गृहू[1] ग्रहणे। गर्हते। जगृहे। जगृहिषे, जघृक्षे। जगृहिढ्वे, जघृढ्वे। गर्हिता, गर्ढा। गर्हिष्यते, घर्क्ष्यते। गर्हताम्। अगर्हत। गर्हिषीष्ट, घृक्षीष्ट—'लिङ्सिचावात्मनेपदेषु' इत्यनिट्पक्षे कित्त्वान्न गुणः। अगर्हिष्ट, अघृक्षत। अगर्हिषाताम्। अगर्हिषत, अघृक्षत। अगर्हिष्ठाः, अघृक्षथाः। अगर्हिढ्वम्, अगर्हिध्वम्, अघृक्षध्वम्। अगर्हिषि, अघृक्षि। अगर्हिष्वहि, अघृक्षावहि। अनिट्पक्षे—'शल इगुपधादनिटः क्सः', 'क्सस्याचि' इत्यल्लोपः। यवादौ 'अतो दीर्घो यञि' इति दीर्घः। ढत्वादि तु पूर्ववत्। जिगर्हिषते, जिघृक्षते—इडभावे 'हलन्ताच्च' इति सनः कित्त्वम्। जरीगृह्यते—'रीगृदुपधस्य च' इति रीक्। जर्गृहीति, जर्गर्ढि। जर्गृढः—रुग्रिकोरप्युदाहार्यम्। गर्हित्वा, गृढ्वा। गृढम्। गृहम्—इगुपधलक्षणः कः। अत्र मैत्रेयः—"'गेहे कः' इति गृह्णातेः कविधानं तस्यापि गृहमिति यथा स्यात्" इति। अयं क्वचित्कोशे ग्रिह इदुपधः पठ्यते, तदनार्षः, यदाह देवः—

ण्यन्तस्य ग्रहणे गृहेर्ग्रहयते तत्राऽनदन्ताद् गृहे-
र्भ्वादेः शपि गर्हते श्नि तु पदे गृह्णात्यगृह्णीत च[2] ॥ इति।

अत्र पुरुषकारे[3] 'गृहेरित्यनेनैव पूर्वस्माददन्तत्वमात्रं विशेषः,गृहित्वं चाविशि-

१. 'ग्लहू' इति क्षीरस्वामी। २. दै० १६४ का०। ३. दै० ११२ पृ०।

ष्टम्' इति दर्शयता मन्दानां गृहपाठाशङ्का निरवकाशतां नीता। 'ग्लहू' इति स्वामिकाश्यपसम्मताकारादयः पठन्ति, तदपि ग्राह्यम्। तथा च 'अक्षेषु ग्लहः' इत्यत्र वृत्तिः—'ग्लहिः प्रकृत्यन्तरम्' इति। ग्लहते इत्यादि पूर्ववत्। ग्लहोऽक्षस्य—'अक्षेषु ग्लहः' इत्यप्। अक्षादन्यत्र ग्लाह इति घञ्। एषां तु निपातनं ग्रहेरेतदिति तेषामनक्षे ग्राह इति प्रत्युदाहार्यम्। लत्वाभावो विशेषः ॥६५१॥

४२२. घुषि[1] कान्तिकरणे। घुंषते। जुघुंषे। घुंषिता। जुघुंषिषते। जोघुंष्यते। जोघुंष्टि। लोटि हेर्धिभावे ष्टुत्वजश्त्वानुस्वारपरसवर्णेषु जोघुण्ढि। लङि तिप्सिपोर्लोपे अजोघुन्। घषीत्यदुपधं पेठतुश्चन्द्रकाश्यपौ। स्वामी घसेति दन्त्यान्तमदुपधं पपाठ। यथा वयं तथा देवमैत्रेयदुर्गाः। षकारान्तोऽप्ययं 'घुषिरविशब्दने' इत्युत्तर[2]धातुसाम्यादिह पठितः ॥६५२॥

४२३. घुक्षादयः उदात्ता अनुदात्तेतः।

४२४. घुषिर् अविशब्दने[3]। इतोऽर्हत्यन्ता उदात्ता उदात्तेतः। विशब्दनं प्रतिज्ञानम्, तच्च शब्देन स्वाभिप्रायप्रकाशनमिति न्यासे। 'अस्मादन्यस्मिन्नर्थे यथाप्रयोगमयं धातुर्वर्त्तते' इति पुरुषकारे। सर्वत्र क्षीरस्वामिधनपालभागवृत्तिकारा घुषिं शब्दार्थं पेठुः। चन्द्रदुर्गौ तु अविशब्दमपहाय 'शब्दे' इत्येवं पेठतुः। 'घुषृ शब्दे' इति पठन् शाकटायनोऽप्यत्रैवानुकूलः। तेन च इरित्स्थाने ऋदित् इति क्रियते। यदि शब्द इत्यर्थः स्यात्, तर्हि 'घुषिरविशब्दने' इति इट्प्रतिषेधेऽपि लघु घुषिरशब्द इत्येव वाच्यं स्यात्। इति घुषिरविशब्दार्थं इति मैत्रेयादिपाठो ज्यायान्। घोषति। जुघोष। घोषिता। लुङि 'इरितो वा' इति परस्मैपदेषु च्लेरङादेशविकल्पनात्—अघुषत्, अघुषताम्; अघोषीत्, अघोषिष्टाम् इत्याद्युभयं भवति। 'लुग्वा दुह' इत्यत्र न्यासे व्यत्यघुक्षतेति वृत्तौ प्रत्युदाहरणमुपादाय 'अनित्यमागमशासनम्' इत्यनिट्त्वमुक्त्वा 'शल इगुपधात्' इति क्स उक्तः। हरदत्तादयस्तु 'प्रत्युदाहरणं घुष्यतेः' इति मन्वाना इडभावाय यत्नं न कृतवन्तः। घुष्यतिर्हि नित्यानिट्। जुघुषिषति, जुघोषिषति। घुषित्वा, घोषित्वा—'रलो व्युपधात्' इति कित्त्वविकल्पः। जोघुष्यते। जोघोष्टि। लोटि हेर्धित्वष्टुत्वयोः च जश्त्वे च षकारस्य जोघुड्ढि। लङि तिप्सिपोः अजोघोट्। घोघषति। अजूघुषत्। घुष्टा रज्जुः—'घुषिरविशब्दने' इति निष्ठायामनिट्त्वम्। सम्पूर्वत्वे तु 'रुष्यमत्वरसंघुषास्वनाम्' इति इटो विकल्पनात् सङ्घुष्टा रज्जुः, संघुषिता रज्जुः इत्युभयं भवति। घुषिर्विशब्दने इति चुरादौ ॥ ६५३ ॥

४२५. अक्षू व्याप्तौ[4]। अक्षति। आनक्ष। आनष्ठ, आनक्षिथ। आनक्ष्व, आनक्षिव—

---

१. 'घसि' इति क्षीरस्वामी। २. 'इत्युदात्त' क. पुस्तके। ३. 'शब्दार्थः' इति स्वामिमैत्रेयौ। ४. 'व्याप्तौ संघाते च' इति मैत्रेयः।

ऊदित्त्वादिड्विकल्पः। थल्यनिट्पक्षे 'स्कोः' इति कलोपे ष्टुत्वम्। अक्षिता, अष्टा। अक्षिष्यति, अक्ष्यति—'षढोः कः सि' इति कत्वे आद्यस्य 'स्कोः' इति लोपः। अक्षतु। आक्षत्। अक्षेत्। अक्ष्यात्। मा भवानक्षीत्। मा भवानक्षिष्टाम्—'नेटि' इति न वृद्धिः। अनिट्पक्षे 'वदव्रजहलन्तस्य' इति वृद्धौ मा भवानाक्षीत्। मा भवन्तावाष्टामित्यादि। ननु येन नाव्यवधानमिति न्यायेनैकेन वर्णेन व्यवधानमाश्रयितुं युक्तं न त्वनेकेनेति वलोपस्यासिद्धत्वादनेकेन व्यवधानात् कथं वृद्धिः? नैतत्; तत्र हल्ग्रहणं हल्समुदायप्रतिपत्त्यर्थमित्युक्तत्वात्। तथा हि—'वदव्रज्योः' इति योगो विभज्यते। तत्र 'अत' इति अनुवर्त्तयिष्यते। ततः 'अचः' इति द्वितीयो योगः। तत्राङ्गेनाचो विशेषणात् अपाक्षीदित्यादावेकेन वर्णेन व्यवधाने वृद्धिसिद्धौ पुनः क्रियमाणं हल्समुदायप्रतिपत्त्यर्थं भवति। अस्य कर्तृवाचिसार्वधातुकपरत्वे 'अक्षोऽन्यतरस्याम्' इति पक्षे श्नुर्भवति—अक्ष्णोति। अक्ष्णुतः। अक्ष्णुवन्ति—अजादौ 'अचि श्नुधातु' इत्यादिनोवङ्। अक्ष्णोतु। अक्ष्णुहि इत्यत्र 'उतश्च प्रत्ययात्' इति हिलुङ् न भवति; तत्रैवासंयोगपूर्वादित्युक्तत्वात्। अक्ष्णवानि इत्यत्र आटि परत्वादुवङं बाधित्वा गुणः। आक्ष्णोत्। अक्ष्णुयात्। अचिक्षिषति। अनिट्पक्षे 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्युक्तत्वात् अस्मात्परत्वात् 'स्कोः' इति कलोपे 'षढोः' इति कत्वे च सनः ककारसहितस्य द्वितीयस्यैकाचो द्विर्वचने हलादिशेषे 'सन्यतः' इतीत्वे अचिक्षति इति भवति। अक्षयति। चङि णिलोपस्य स्थानिवत्त्वात् क्षिशब्दस्य द्विर्वचने आचिक्षत्। अक्षित्वा, अष्ट्वा। निष्ठायाम्—अष्टः। अक्षिः—'इन्' इतीन्प्रत्ययः। अक्ष्णा—'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इति तृतीयाद्यजादावजन्तस्यानङादेशे 'अल्लोपोऽनः' इत्यल्लोपः। ङौ 'विभाषा ङिश्योः' इति विकल्पनात् अक्षणि, अक्षिणि इत्युभयं भवति। विशालमक्षि यस्य स विशालाक्षः—"बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इति स्वाङ्गवाचिसक्थ्यन्ताद् बहुव्रीहेः षच्। षित्वात् स्त्रियाम्—विशालाक्षी। स्वाङ्गादिति वचनात् स्थूलाक्षा वेणुयष्टिः इत्यत्र 'अक्ष्णोऽदर्शनात्' इत्यचि टाब् भवति। अदर्शनवाच्यक्षन्तात् समासमात्रादजिति सूत्रार्थः। इह च दर्शनं चक्षुरिति गवाक्षम्, कबराक्षम् इत्यत्राचक्षुर्वचनस्याक्षिशब्दस्याज्भवति। यद्वा अत्र समुदायो दर्शनसाधनम्, न तु तदवयवोऽक्षिशब्द इति तस्य दर्शनयोगाभावाददर्शनादिति निषेधस्य नैव प्रसङ्गः। कबराक्षम् इति सांच्छिद्रं यदश्वानां मुखापिधानं तदुच्यते। कथं स्थूलाक्षिरिक्षुरिति? यदि दृश्यते, 'अनित्यः समासान्तः' इति निर्वाह्यः। अयं समासान्तः स्वतिपूर्वस्यापि भवति। 'न पूजनात्' इत्यत्र 'बहुव्रीहौ सक्थ्यक्ष्णोरनिषेधः' इत्युक्तत्वात्॥ ६५४॥

४२६. तक्षू त्वक्षू तनूकरणे। तक्षति। ततक्ष इत्यादि अक्षिवत्। 'तनूकरणे तक्षः' इति पक्षे शब्विषये श्नौ तक्ष्णोति इत्यादि अक्ष्णोतिवत्। तक्षा—'कनिन्युवृषितक्षि' इति कनिन्। तक्ष्णोऽपत्यं ताक्ष्णः—'शिवादिभ्योऽण्' इत्यण्।

अत्र 'अन्'इति अन्नन्तस्याणपरत्वात्प्रकृतिभावे प्राप्ते 'षपूर्वहन्धृतराज्ञामणि' इति षपूर्वो योऽन्शब्दो हनश्च तयोर्धृतराजन्शब्दस्य चाणि प्रत्ययेऽल्लोप इत्यल्लोपः। "शिवाद्यणा 'सेनान्तलक्षणकारिभ्यश्च' इति ण्यस्य बाधो नेष्यते" इति वृत्तावुक्तत्वात् ताक्षण्यः इत्यपि भवति। 'नस्तद्धिते' इति टिलोपो 'ये चाभावकर्मणोः' इति प्रकृतिभावान्न भवति। सेनान्त इति सेनाशब्दान्ता गृह्यन्ते। लक्षण इति स्वरूपग्रहणम्। कारिणः इति शिल्पिन इति। ग्रामस्य तक्षा ग्रामतक्षः। कुट्यां भवः कौटः, स चासौ तक्षा च कौटतक्षः, स्वस्तन्त्रस्तक्षोच्यते, 'ग्रामकौटाभ्यां च तक्ष्णः' इति टच् समासान्तः। पञ्चानां तक्ष्णां समाहारः पञ्चतक्षम्, पञ्चतक्षी—'तद्धितलोपश्च' इति नलोपः। पक्षे स्त्रीत्वं च, तदा 'द्विगोः' इति ङीप्। अन्यदा 'स नपुंसकम्' इति नपुंसकत्वम्। तक्ष त्वचने इत्यग्रेऽनूदित्॥ ६५५-६५६॥

४२७. उक्ष सेचने। उक्षति। उक्षाञ्चकार। उक्षिता इत्यादि पूर्ववत्। 'उक्षां प्रचक्रुर्नगरस्य मार्गान्'[1] इति भट्टिप्रयोगमुपादाय सुधाकरादयः—'उक्ष्यत इत्युक्षाः, कर्मणि घञ्, उक्षान् प्रचक्रुः' इति पाठान्तरं न्यास्थन्। उक्षा—'श्वन्नुक्षन्' इति कनिनन्तो निपातितः। उक्ष्णां समूहः औक्षकम्—'गोत्रोक्ष' इत्यादिना वुञ्। उक्ष्ण इदम् औक्षम्—'औक्षमनपत्ये' इति निपातनाट्टिलोपः। अपत्ये तु औक्ष्णः—'षपूर्वहन्' इत्यल्लोपः। जातोक्षः। महोक्षः। वृद्धोक्षः—'अचतुर'इति कर्मधारयादचि टिलोपो निपात्यते॥ ६५७॥

४२८. रक्ष पालने। रक्षति। ररक्ष। रक्षिता इत्यादि। निरक्षतीति निरक्षी—'रक्षश्रुवसवपशां नौ' इति ग्रहादिपाठाण्णिनिः। रक्षणम्। रक्ष्णः—'यजयाच' इत्यादिना नङ्। रक्षः—असुन्। राक्षसः—'प्रज्ञादिभ्यश्च' इति स्वार्थेऽण्॥ ६५८॥

४२९. णिक्ष चुम्बने। निक्षति। निनिक्ष। निक्षिता इत्यादि। प्रणिक्षणम्, प्रनिक्षणम्। 'वा निंसनिक्षनिन्दाम्' इति णत्वविकल्पः। अयं विकल्पः कृत्येवेति निन्दतौ प्रतिपादितम्। तेन प्रणिक्षति इत्यादौ 'उपसर्गात्'इति णत्वं भवति॥६५९॥

४३०. तृक्ष स्तृक्ष[2] णक्ष गतौ। तृक्षति। ततृक्ष। तृक्षिता इत्यादि। तितृक्षिषति। तरीतृक्ष्यते। 'रीगृत्वतः' इति रीक्। तर्तृष्टि—'स्कोः' इति कलोपस्यासिद्धत्वाल्लघूपधत्वाभावान्न गुणः। एवं रिप्रीकोः। तृक्षयति। अतितृक्षत्। तृक्षतीति तृक्षः तस्यापत्यं तार्क्ष्यः—'गर्गादिभ्यो यञ्'इति यञ्॥ स्तृक्षति। तस्तृक्ष इत्यादि पूर्ववत्। षोपदेशफलं तरीष्टृक्ष्यते इत्यादौ॥ नक्षति। प्रणक्षति। नक्षत्रम्—'अमितक्षि' इत्यत्रप्रत्ययः। 'न भ्राण्' इत्यत्र नञ्पूर्वात् क्षरतेः क्षीयतेर्वा नक्षत्रमिति निपातितम्॥

४३१. वक्ष[3] रोषे। सङ्घाते इत्येके[3]। वक्षति। इत्यादि। वक्षः-असुन्॥६६३॥

---

१. भ० का० २।१०। २. 'ष्टृक्ष' इति मत्रेयः। ३-३. 'भक्ष रोषे; वक्ष सङ्घाते' इति क्षीरस्वामी।

४३२. मुक्ष[1] सङ्घाते। मुक्षति इत्यादि। 'मक्ष इत्यप्येके' इति मैत्रेयः। मक्षति। ममक्ष। मक्षिता इत्यादि। मक्षिका—'क्वुन् शिल्पिसंज्ञयोः' इति क्वुनि टापि 'प्रत्ययस्थात्' इतीत्वम् ॥६६४॥

४३३. तक्ष[2] त्वचने। त्वचनं संवरणमिति दुर्गकाश्यपमैत्रेयाः। 'त्वचो ग्रहणम्' इति स्वामी। तक्षति इत्यादि। अयमूदित्तनूकरणे गतः। अत्र मैत्रेयः 'पक्ष परिग्रहे इत्यप्येके' इति। पक्षति। पक्षः—घञ्। पक्षस्य मूलं पक्षतिः—'पक्षात्तिः' इति तिप्रत्ययः। पक्षे भवं पक्ष्यम्—'दिगादिभ्यो यत्' इति यत्प्रत्ययः। पक्षसी—छदिपर्यायः, वत्सरार्द्धवचनश्च—असुन् प्रत्ययः ॥६६५॥

४३४. सूर्क्ष[3] आदरे[3]। 'आदरानादरे' इति क्वचित्पठ्यते, तदसत्; 'सोमेन यक्ष्यमाणो नर्क्षून्सूर्क्षेन्न नक्षत्रम्' इति दर्शनात् सोमेन यक्ष्यमाणो 'वसन्ते ब्राह्मणोऽग्नीनादधीत। उत्तरयोः फल्गुन्योरग्निमादधीत' इत्यादि ऋतुनक्षत्राणि नाद्रियेत इति तत्रार्थः। तथा—'अवहेडनमसूर्क्षणम्' इति दृश्यते। सूर्क्षणमादरः। ततोऽन्यद्-सूर्क्षणमनादरः। सूर्क्षति। सुसूर्क्ष। सूर्क्षिता इत्यादि ॥६६६॥

४३५. काक्षि वाक्षि माक्षि[4] काङ्क्षायाम्। काङ्क्षति। चकाङ्क्ष। काङ्क्षिता इत्यादि। चिकाङ्क्षिषति। चाकाङ्क्ष्यते। चाकाङ्क्षीति, चाकांष्टि, इत्यादि। काङ्क्षयति। अचकाङ्क्षत् ॥ एवं वाङ्क्षति ॥ माङ्क्षति इत्यादि ॥६६७-६६९॥

४३६. द्राक्षि ध्राक्षि ध्वाक्षि[5] घोरवासिते[6] च। द्राङ्क्षति। ध्राङ्क्षति। ध्वाङ्क्षति। द्राक्षा। ध्राक्षा। द्राक्षामान्। ध्वाक्षामान्—"मादुपधायाश्च मतोर्वोऽयवादिभ्यः" मकारान्तात् मवर्णोपधात् अवर्णान्तात् अवर्णोपधाच्च परस्य मतुपो मकारस्य वकार इति प्राप्तं वत्वं 'यवादिभ्यः परस्य न' इति निषेधान्न भवति। द्राक्षाध्राक्षाशब्दयोरनुनासिकलोपोऽपि यवादिपाठादेव। ध्वाङ्क्षतीति ध्वाङ्क्षः। तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः—'ध्वाङ्क्षेण क्षेपे' इति सप्तम्यन्तं ध्वाङ्क्षवाचिना क्षेपे गम्यमाने नित्यं समस्यते इति तत्पुरुषः। क्षेपोऽत्रानवस्थादिनाऽवगम्यते ॥६७०-६७२॥

४३७. चूष पाने। चूषति। चुचूष। चूषिता इत्यादि। चुचूषिषति। चोचूष्यते। चोचूष्टि। चूषयति। अचूचुषत् ॥६७३॥

४३८. तूष तुष्टौ। तूषति इत्यादि पूर्ववत् ॥६७४॥

४३९. पूष वृद्धौ। पूषति इत्यादि। पूषी—दीपस्थापनार्थं कुड्ये आकल्पितो बिलविशेषः। पचाद्यच्। गौरादित्वात् ङीष्। पूषा—'श्वन्नुक्षन्' इत्यादिना कनिनन्तो निपात्यते। पूषणौ—'इन्हन्पूषार्यम्णां शौ' इति उपधालक्षणस्य दीर्घस्य

---

१. 'म्रक्ष' इति मैत्रेयः। २. 'त्वक्ष' इति क्षीरस्वामी। ३-३. 'सूर्क्ष्य अनादरे' इति क्षीरस्वामी; '०अनादरे' इति मैत्रेयः। ४. 'माक्षि द्राक्षि ध्राक्षि ध्वाक्षि' इति क्षीरस्वामी। ५. क्षीरस्वामी न पठति। ६. 'घोरनिवाशिते' इति क्षीरस्वामी।

शावेव प्रत्यये नियमात् 'सर्वनामस्थाने' इति दीर्घो न भवति। सौ तु 'सौ च' इति विधानाद् भवति। अयमसम्बुद्धिविषयः। प्रतिपूषाणि ज्योतींषि इत्यत्र शिपरत्वात् दीर्घः। अपत्यादावणि पौष्णः—'षपूर्वहन्' इत्यल्लोपः। पुष पुष्टाविति इहैवाग्रे, दिवादौ, क्र्यादौ च। पुष धारणे इति चुरादौ ॥६७५॥

४४०. मूष स्तेये। मूषति। मूषकः—संज्ञायां क्वुन्। मूषिका—अजादिपाठात् जातिलक्षणङीषं बाधित्वा टाप्। मुष स्तेये इति ह्रस्वोपधः क्र्यादौ॥ लूष रूष भूषायामिति सुधाकरः। लूषति। रूषति। रूषितः ॥६७६॥

४४१. शूष[1] प्रसवे। 'तालव्योष्मादिरिति पारायणिकाः[2]' इति स्वामी। दृश्यते च तैत्तिरीयके—'सक्षशूष' इति। केचित् दन्त्यादिं पठन्ति, तदनार्षम्; षोपदेशलक्षणविरोधात्। शूषति इत्यादि ॥६७७॥

४४२. यूष हिंसायाम्। यूषति। यूषम् मांसरसविशेषः ॥६७८॥

४४३. जूष च। जूषति। जुषी प्रीतिसेवनयोरिति तुदादौ, जुष परिभाषणे इति युजादौ ह्रस्वोपधौ ॥६७९॥

४४४. भूष अलङ्कारे। भूषति। भूषते कन्या स्वयमेव। अभूषिष्ट कन्या स्वयमेव—'भूषाकर्म'इति यक्चिणोर्निषेधः। भूषाफलं शोभनाख्यं कर्मणि दृश्यते इति कर्मस्थक्रियात्वं कैयटे इत्युक्तम्। 'अङ्कास्सूनाः परिभूषन्त्यश्वम्' इत्यत्र भट्टभास्करः—'सूना मांसविकर्षणसाधनान्यस्थ्यादीनि, अश्वं परिभूषन्ति परितो भवन्ति' इति भवतेर्लोटि सिपि रूपमुक्त्वा "भूषयतेर्वा शपः 'छन्दस्युभयथा' इत्यसार्वधातुकत्वाण्णिलोपः" इत्याह। तदस्य धातोरनुस्मरणात्। न चायं नास्तीति शक्यते वक्तुम्; सर्वेषु व्याख्यानेष्वविवादेनोपादानात्। अयं चुरादौ च ॥६८०॥

४४५. ऊष रुजायाम्। ऊषति। ऊषाञ्चकार। ऊषिषति। ऊषयति। मा भवानूषिषत्। णिलोपस्य स्थानिवत्त्वात् षिशब्दस्य द्विर्वचनम्। ऊषः—घञ्। ऊषरः—'ऊषशुषिमुष्कमधो रः' मत्वर्थे रः। उष दाह इति अग्रे ह्रस्वोपधः ॥६८१॥

४४६. ईष उञ्छे। ईषति इत्यादि ऊषिवत्। ईषत इति गतौ गतः ॥६८२॥

४४७. कष खष[3] शिष जष झष शष वष मष[4] रुष रिष हिंसार्थाः। तृतीयषष्ठौ तालव्योष्मादी। सप्तमो दन्त्यौष्ठ्यादिः। कषति। चकाष। कषिता इत्यादि। अकषीत्, अकाषीत्—'अतो हलादेः' इति वा वृद्धिः। सर्वङ्कषः। 'सर्वकूलाभ्रकरीषेषु कषः' इति खच्। 'अरुर्द्विषदजन्तस्य' इति खिदन्ते उत्तरपदे पूर्वपदस्य मुम्। एवं कूलादिषूदाहार्यम्। विकाषी—'वौ कषलसकत्थस्रम्भः' इति तच्छीलादीषु घिनुण्। आकषः। निकषः—'गोचर'इत्यादिसूत्रे चकारस्यानुक्तसमुच्चयार्थं-

---

१. 'शूष' इति स्वामिमैत्रेयौ। २. पाठोऽयं क्षीरतरङ्गिण्यामक्षरशो नोपलभ्यते। ३. स्वामिमैत्रेयौ न पठतः। ४. 'मष मुष' इति क्षीरस्वामी।

त्वात् अधिकरणे घः। आकषेण चरति आकषिकः—'आकषात् ष्ठल्' इति तृतीयान्तादस्मात् चरतीत्यर्थे ष्ठल्। षित्त्वात् आकिषिकी। आकषे कुशलः आकषकः—'अकषादिभ्यः कन्' इति सप्तम्यन्तात् कुशल इत्यर्थे कन्। निमूलकाषं कषति, समूलकाषं कषति निमूलं समूलं च कषतीत्यर्थः। 'निमूलसमूलयोः कषः' इति णमुल्। उपपदसमासः। 'कषादिषु यथाविध्यनुप्रयोगः' इति यस्मात् णमुलो विधानं तस्यैवानुप्रयोगः। कषादयश्च 'निमूलसमूलयोः कषः' इत्यारभ्य 'उपमाने कर्मणि च' इत्येतदन्तेषूपात्ता धातवः। अत्रानुशब्दो नानन्तर्ये, अपि तु धात्वर्थानुवादेन पश्चाद्भावे; तेन व्यवहितपूर्वप्रयोगोऽपि द्रष्टव्यः। तथा च वृत्तिः—धातुसम्बन्धे प्रत्ययविधानादनुप्रयोगार्थं वचनम्' इति। तथा 'यथाविध्यनुप्रयोगः पूर्वस्मिन्' इत्यत्र हरदत्तः—'अनुशब्दो धात्वर्थानुवादेन पश्चाद्भावे, न त्वानन्तर्ये। तेन पूर्वप्रयोगो व्यवहितप्रयोगोऽपि भवति' इति। न्यासे च "अथ पूर्वप्रयोगस्य व्यवहितप्रयोगस्य च निवृत्त्यर्थं कस्मान्न भवति यथा 'कृञ्चानुप्रयुज्यते लिटि' इत्येतत्, तन्न; एतयोरिष्टत्वात्" इति। पादौ कषितुं शीलमस्य पत्काषी—'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः 'हिमकाषिहतिषु च' इति हिमादावुत्तरपदे पादः पद्भावः। कष्टं व्याकरणम्। कृच्छ्रसाध्यमित्यर्थः। कष्टानि वनानि दुष्प्रवेशानीत्यर्थः। 'कृच्छ्रगहनयोः कषः' इति निष्ठायामनिट्त्वम्। अन्यत्र कषितो देवदत्तः। कष्टाय कर्मणे क्रामति कष्टायते—'कष्टाय क्रमणे' इति चतुर्थ्यन्तादनार्जवे क्यङ्, क्रमणमिहानार्जवम्। कष्टं चिकीर्षति कष्टायते—'सत्रकक्षकष्ट' इत्यादिना द्वितीयान्तात्कण्वचिकीर्षायां क्यङ्। कक्षः—'वृतिवदि' इत्यादिना सप्रत्ययः। 'षढोः कः सि' इति कत्वम्, 'तितुत्र' इति इण्निषेधः। कक्षायते—'सत्रकक्ष' इत्यादिना क्यङ्॥ खषति इत्यादि पूर्ववत्। खष्पः बलात्कारः—'खष्पशष्पबाष्पपर्परूपकूर्पशिल्पाः' इति पप्रत्ययान्तो निपात्यते॥ शेषति। शिशेष। शिशेषिथ। शेष्टा। शेक्ष्यति। शेषतु। अशेषत्। शेषेत्। आशिषि—शिष्यात्। अशिक्षत्—'शल इगुपधाद्' इति क्सः। अनिट्त्वं च—'शिषिं पिषिं श्लिष्यतिपुष्यती त्विषिम्' इति व्याघ्रभूतिवचनात्। तदुक्तं पुरुषकारे—'शिषोऽसर्वोपयोगे यौ शेषयेच्छेषतीत्युभे। लुङ्यभावादङोऽशेषीत्'[1] इति देवमुपादाय "अशेषीदित्ययुक्तं, शिषिं पिषिमित्यनिट्कारिकाप्रामाण्याच्छिषिमात्रस्यानिट्त्वेन क्से सति अशिक्षदिति युक्तत्वात्[2]"। तथा मैत्रेयोऽपि शेष्टेत्यनिटमुदाजहार। एवं च लिटि सेट्त्वं क्रादिनियमेन द्रष्टव्यम्। एवं चास्य सेटां मध्ये पाठो यथा शिषिमात्रस्यानिट्त्वेन 'शल इगुपधाद्' इति षान्तसाम्यात् षान्तपरस्मैपदिसाम्याच्च द्रष्टव्यः। शिशिक्षति—'हलन्ताच्च' इति सनः कित्त्वम्। शेशिष्यते। शेशेष्टि। शेषयति। अशीशिषत्।

---

१. दै० १७८-९ का०। २. दै० १०९ पृ०।

शिष्ट्वा । शिष्टः । शिष्टवान् । शिष्पः कलायोगः—'खष्पशिष्प' इति पप्रत्ययान्तो निपातितः ।। जषति । जजाष । जेषतुः । जेषिता इत्यादि कषिवत् । क्किति लिटि सेटि थलि चैत्वाभ्यासलोपौ ।। एवं झषति ।। शषति इत्यादि । शष्पं पूर्ववत्पः ।। झष आदानसंवरणयोरित्यग्रे स्वरितेत् । वषति । ववाष । ववषतुः । वषिता इत्यादि । वादित्वान्नैत्वाभ्यासलोपौ ।। मषति इत्यादि ।। रोषति । रुरोष । रुरोषिथ । रोषिता, रोष्टा । रोषिष्यति इत्यादि । तकारादौ 'तीषसहलुभरुषरिषः' इतीड्विकल्पः । रुषित्वा । रोषित्वा,रुष्ट्वा–इट्पक्षे 'रलो व्युपधाद्' इति किक्त्वविकल्पः । निष्ठायां 'रुष्यमत्वरसंघुषास्वनाम्' इतीटो विकल्पनात् 'यस्य विभाषा' इति निषेधो न भवति—रुष्टः, रुषितः—'मतिबुद्धिपूजार्थेभ्यश्च' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाद्वर्तमाने क्तः । इट्पक्षे 'उदुपधाद्भावादिकर्मणोरन्यतरस्याम्' इति किक्त्वविकल्पनात्पक्षे गुणे रोषितमनेन इत्यादि भवति । रुष रोषे इति दिवादौ चुरादौ च ।। रेषति इत्यादि रोषतिवत् । निष्ठायां 'यस्य विभाषा' इतीटो निषेधात् रिष्टः । रेषते इति शब्दे गतः । अत्र दण्डके मुषिरपि क्वचित् धातुकोशे पठ्यते । स्तेयार्थोऽयं पूर्वत्रैव पठित इतीह पाठे नाभिनिवेष्टव्यम् । हिंसार्थत्वं यदि दृश्यते, तदा धातूनामनेकार्थत्वाद्भविष्यति ।।६८३-६९२।।

४४८. भष भर्त्सने । इह भर्त्सनं श्वरवः, यतस्तत्रैवायं प्रसिद्धः । भषति । भषकः—क्वुन् ।। ६९३ ।।

४४९. उष दाहे । ओषति । ओषाञ्चकार । 'उषविद' इत्याम्विकल्पः । उवोष । ऊषतुः । उवोषिथ । उवोष–पिद्वचनेषु गुणस्य स्थानिवत्त्वादुषशब्दस्य द्विर्वचने पुनर्गुणे 'अभ्यासस्य' इत्युवङ् । न चाभ्यासस्यानादिष्टादचः पूर्वत्वेन गुणस्य स्थानिवत्त्वम्, असवर्णग्रहणसामर्थ्यादिति प्रागेवोपपादितम् । ओषिता । ओषिष्यति । ओषतु । औषत् । ओषेत् । उष्यात् । औषीत् । ओषिषति । ओषयति । मा भवानुषिषत् प्रत्युष्टम् इत्यत्र भट्टभास्करः—"'ओदितश्च' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वादाश्वस्तादिवदिट्प्रतिषेधः" इति । ऊष्मा—मनिनि बाहुलकाद् दीर्घः । 'ऊष रुजायाम्' इत्यस्माद्वा । उष्णः–इण्सिञ्जिदीङुषि' इति नक् । ऊष्णिका यवागूः–'ब्राह्मणकोष्णिके संज्ञायाम्' इति कनि निपात्यते । ऊष्णं करोतीति उष्णकोऽलसः–'शीतोष्णाभ्यां कारिणि' इति कन् । उष्णं न सहते उष्णालुः—'शीतोष्णतृप्रेभ्यस्तदसहने' इत्यालुच् । ओष्ठः–'उषिकुषिगार्तिभ्यस्थन्' इति थन् । बिम्बोष्ठी, बिम्बोष्ठा–'नासिकोदरौष्ठ' इति वा ङीष्, 'ओत्वोष्ठयोः समासे वा' इति पररूपं वृद्धेरपवादः । अन्यदा वृद्धौ बिम्बौष्ठी, बिम्बौष्ठा । पार्योष्ठ्यम्—सप्तम्यर्थेऽव्ययीभावः । तस्माद्भवार्थे 'परिमुखादिभ्य उपसंख्यानम्' इति ञ्यः । उष्ट्रः–'ष्ट्रन्' इति ष्ट्रन्, बाहुलकादगुणत्वम् । उष्ट्राणां समूहः औष्ट्रकम्—'गोत्रोक्षोष्ट्र' इति वुञ् । उष्ट्रस्य विकारावयवयोरपि औष्ट्रकम्—'उष्ट्राद्वुञ्' इति वुञ् ।। ६९४ ।।

४५०. जिषु विषु मिषु सेचने। जेषति। जिजेष। जेषिता। जिजिषिषति, जिजेषिषति। जिषित्वा, जेषित्वा—'रलो व्युपधात्' इति किरवविकल्पः। 'उदितो वा' इति क्त्वायामिडभावे-जिष्ट्वा। जेजिष्यते। जेजेष्टि। जेषयति। अजीजिषत्। जिष्टम्॥ वेषति। विवेष। विविषतुः। विवेषिथ। विवष्ठिव।—'शिषिं पिषिं शुष्यतिपुष्यती त्विषिं श्लिषिं विषिं तुष्यतिदुष्यती द्विषिम्' इत्यनिट्कारिकापाठादस्यानिट्त्वेऽपि क्रादिनियमादत्रेट्। वेष्टा। वेक्ष्यति। अविक्षत्–'शल इगुपधाद्' इति क्सः। विविक्षति–'हलन्ताच्च' इति सनः कित्त्वान्न गुणः। उदित्त्वात्क्त्वायामिड्विकल्पः–विषित्वा, विष्ट्वा। विष्टम्। वेषेण सम्पादी वेष्यो नटः—'कर्मवेषाद्यत्' इति तृतीयान्तात्सम्पादिन्यर्थे यत्। सम्पत्तिः शोभातिशयः। वेषेणात्यन्तं शोभत इत्यर्थः। विष्लृ व्याप्तौ जुहोत्यादौ। विष विप्रयोग इति च क्र्यादौ॥ मेषति इत्यादि जेषतिवत्। मेषः। मेषट् इति पचादिषु दर्शनादचि टित्त्वात्स्त्रियां मेषी। अयं स्पर्द्धायां तुदादौ॥६९५-६९७॥

४५१. पुष पुष्टौ। पोषति। पुपोष। पुपोषिथ। पोषिता। पोषिष्यति। अपोषीत् 'शिषिं पिषिं शुष्यतिपुष्यती'इति श्यना निर्देशादयं सेट्। तथा पुषादीत्यङ्विधावपि दैवादिकस्य ग्रहणम्। सेट्कत्वात् क्सोऽपि न भवति। स्वपोषं पोषति–'स्वे पुषः' इति णमुल्। अत्र स्वशब्दः पित्निर्दिश्यते, तेन 'पित्पर्यायवचनस्य तद्विशेषार्थस्य च ग्रहणार्थम्' इत्युक्तत्वात् स्वशब्दे तत्पर्यायवाचिनि विशेषवाचिनि चोपपदे प्रत्यय इति गोपोषं धनपोषम् इत्यादि च भवति। पुषित्वा, पोषित्वा। पुषितम्, पुष्टम् इति दैवादिकस्य, पोषितम् इति ण्यन्तस्य। पोषयतीति पोषयित्नुः 'स्तनिहृषिगदिमदिपुषिभ्यो णेरित्नुच्' इति ण्यन्तादित्नुच्। 'अयामन्त' इति णेरयादेशः। अयं दिवादिः क्र्यादिश्च। धारणार्थश्चुरादिः। नन्वेक एव पुषिः विकरणभेदाय पुनः पठ्यते, क्वचिच्चायं सेट्, अन्यत्र पाठादनिट् इत्यर्थादार्धधातुके विकल्पितेट्कत्वात् 'यस्य विभाषा' इतीटा निष्ठायां न भव्यम्? नैतत्; यस्य वाचनिक इड्विकल्पस्तस्यैव तत्राश्रयणात्॥ ६९८॥

४५२. श्रिषु श्लिषु प्रुषु प्लुषु दाहे। श्रेषति। शिश्रेष। श्रेषिता॥ श्लेषति। शिश्लेष। शिश्लेषिथ। श्लेषिता। 'शिषिं पिषिं शुष्यतिशिष्यती त्विषिं विपिं श्लिषिम्'इत्यनिट्कारिकायां दैवादिकस्य श्लिषेर्ग्रहणम्, नास्येतीडुदाहृतः। उक्तं च कैयटे–'श्लिष आलिङ्गन इति क्सविधावनिट इत्यनुवर्त्तनाद् दाहार्थस्य सेटो ग्रहणाभावः' इति। एवं तत्र न्यासपदमञ्जर्योरपि। यस्त्वनिट्कारिकाव्याख्यानन्यासे द्वयोर्ग्रहणमिति पाठः, स स्वोक्तिविरोधाद् ग्रन्थान्तरविरोधाच्च प्रमादलिखितः। तथा च वर्द्धमानस्वामिसम्मताकारादयश्चामुं सेटमाहुः। श्लेषतीति श्लेषः–'श्याद्व्यधास्रुसंस्रवतीणवसावहृलिहश्लिषश्वसश्च'इति कर्त्तरि णः। श्लेष्मा मनिन्। श्लेष्मलः-मत्वर्थे लच्। श्लेष्मणः पामादित्वान्नः। अयमपि मत्वर्थे। श्लेष्मणः शमनं कोपनं वा श्लैष्मिकम्—तस्य निमित्तप्रकरणे 'वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम्' इति ठक्।

श्लक्ष्णः—'श्लिषेरच्चोपधायाः' इति क्नप्रत्ययः। उपधायाश्चाकारः। श्लिष्यतेर्वा श्लक्ष्णः। आचारश्लक्ष्णः—'पूर्वसदृश' इत्यादिना समासः। आलिङ्गने दिवादिः। श्लेषणे चुरादिः॥ प्रोषति॥ प्लोषति इत्यादि। प्लुष्यति इति दिवादिपाठात् सेट्। प्रुषिप्लुषी द्वौ स्नेहने क्र्यादौ॥ ६९९-७०२॥

४५३. पृषु वृषु मृषु सेचने।

४५४. मृषु सहने च। इतरौ हिंसासंक्लेशनयोश्च[1]। अत्र काश्यपः—'मृषु हिंसासंक्लेशनदानेषु' इत्यादि पपाठ। पर्षति। पपर्ष। पर्षिता। पर्षिष्यति। पर्षतु। अपर्षत्। आशिषि—पृष्यात्। अपर्षीत्। पिपर्षिषते। परीपृष्यति। पर्पृषीति, पर्पर्ष्टि, पर्पर्क्षि। लोटि पर्पृड्ढि—इत्यत्र हेर्ङित्वान्न गुणः। पर्पृषाणि—'नाभ्यस्तस्याचि पिति' इति गुणनिषेधः। लङि तिप्सिपोर्हल्ङ्यादिलोपे—अपपर्ट्। 'रात्सस्य' इति नियमात् न संयोगान्तलोपः। अपर्पृषीत्। पूर्ववदगुणत्वम्। एवं रिरीकोरुदाहार्यम्। पर्षयति। अपपर्षत्। अपीपृषत्। 'उर्ऋद्वा'। पर्षित्वा, पृष्ट्वा—उदित्त्वाद्विकल्पः। पृष्टम्, पृषितम्—'बाहुलकात्पृषेः किच्च' इतीतच् अस्मादपीति। पृषतम्—'पृषिरञ्जिभ्यां कित्' इत्यतच्। पृषत् बिन्दुर्मृगश्च—वर्त्तमाने पृषन्महद्बृहज्जगच्छतृवच्च' इत्यतिप्रत्यये गुणाभावः। शतृवद्भावाद् 'उगितश्च' इति स्त्रियां ङीपि—पृषती। पार्ष्णिः—'घृणिपृश्निपार्ष्णिभूर्णिचूर्णितूर्णिः' इति निप्रत्यये निपात्यते। पार्ष्णीलः—'सिध्मादिभ्यश्च' इत्यत्र 'पार्ष्णिधमन्योर्दीर्घश्च' इति पाठात् लचि दीर्घः। तत्रान्यतरस्यांग्रहणस्यानुवर्त्तनात् मतुपि पार्ष्णिमान्॥ वर्षति। ववर्ष। वर्षतीति वर्षम्—'अज्विधौ भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थम्' इत्यच्। 'वृषभो वर्षणात्' इति भाष्यकारप्रयोगात् ल्युडपि। वृष्टिः—'तितुत्र' इति नेट्। वृषभः—'ऋषिवृषिभ्यां कित्' इत्यभच्। वृषः—इगुपलक्षणः कः। वृषाय हितं वृष्यम्—'खलयवमाषतिलवृषब्रह्मणश्च' इति यत्। अत्राकारान्तस्य वृषशब्दस्य ग्रहणात् 'कनिन्युवृषि' इति कनिनन्ताद् वृषन्शब्दाद्यन्न भवति। 'प्राक्क्रीतीयश्छस्त्वनभिधानान्न' इति भाष्यादौ स्थितत्वाद् वृष्णे हितमिति वाक्यमेव भवति। वृषमात्मन इच्छति वृषस्यति, मैथुनमिच्छति इत्यर्थः—'अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि' इत्यसुक् 'अश्ववृषयोर्मैथुनेच्छायाम्' इति। अन्यत्र 'क्यचि च' इतीकारे वृषीयति। वृष्णिः—'सृवृषिभ्यां कित्' इति निः। वृषणः—बाहुलकात् क्युन्। वर्षत इति स्नेहने गतः॥ मर्षति। ममर्ष। मृषित्वा, मर्षित्वा—'तृषिमृषिकृषेः काश्यपस्य' इति सेट्क्त्वः कित्त्वविकल्पः। अनिट्पक्षे मृष्ट्वा। निष्ठायां मृष्टम्। 'मृषस्तितिक्षायाम्' इति कित्त्वमनिटो निष्ठायामेवेति दैवादिकस्य तत्र ग्रहणम्, स हि सेट्, मृषस्तितिक्षायामिति दिवादौ युजादौ च स्वरितेत्त्वौ॥ ७०३-७०५॥

---

१. 'मृषु हिंसासङ्घातयोः' इति क्षीरस्वामी पृथक् सूत्रं पठति।

४५५. घृषु सङ्घर्षे। घर्षति। सङ्घर्षणम्। घृष्टम् ॥७०६॥

४५६. हृषु अलीके। हर्षति। हृष्टानि लोमानि। हृषितानि लोमानि। हृष्टं लोमभिः, हृषितं लोमभिः—अत्रोदित्वान्नित्यमनिट्त्वे प्राप्ते 'हृषेर्लोमसु' इति लोमविषयालीकवाचित्वात्पक्षे इडागमः। यस्तु दिवादौ हृष तुष्टाविति पठ्यते, तस्य तु सेट्कत्वान्निष्ठायामनेन पक्षे इण्निषिध्यते इतीयमुभयत्र विभाषा। अत्र 'लोमान्यङ्गजानि केशाश्च' इति वृत्तावुक्तम्। लोमभ्योऽन्यत्र हृष्टम् इत्येव भवति। दैवादिकस्य तु हृषितम् इति। हृष्टो देवदत्तः, हृषितो देवदत्तः—विस्मित इत्यर्थः। हृष्टा दन्ताः, हृषिता दन्ताः—प्रतिहता इत्यर्थः। 'विस्मितप्रतिघातयोश्चेति वक्तव्यम्' इति इड्विकल्पः। हर्षुलः—'हृषेरुलच्' इत्युलच्। हर्षयित्नुः—'स्तनिहृषि' इत्यादिना ण्यन्तादित्नुच् ॥७०७॥

४५७. तुस ह्रस ह्लस रस शब्दे। तोसति। तुतोस। तोसिता। तोसिष्यति। तोसतु। अतोसत्। तोसेत्। आशिषि—तुस्यात्। अतोसीत्। तुतुसिषति, तुतोसिषति। तुसित्वा, तोसित्वा—'रलो व्युपधाद्' इति कित्त्वविकल्पः। तोतुस्यते। तोतोस्ति। तोतुधि—इत्यत्र सेर्हेर्धिभावे चकाधीतिवत् 'धि च' इति सलोपः। लङि तिप्सपोर्हल्ङ्यादिलोपे 'तिप्यनस्तेः' इति सकारस्य दत्वे अतोतोत् इति भवति। सिपि तु—'सिपि धातोः' इति पक्षे रुत्वे अतोतोः इति भवति। तोसयति। अतूतुसत् ॥ ह्रसति। जह्रास। ह्रसिता इत्यादि। जिह्रसिषति। जाह्रस्यते। जाह्रस्ति इत्यादि तुसिवत्। ह्रासयति। अजिह्रसत्। ह्रस्वः—वाहुलकाद् 'ह्रस्वं लघुः' इति निर्देशाद्वा वप्रत्ययः। ह्रसिष्ठः। ह्रसीयान्। ह्रसिमा—'पृथ्वादिभ्य इमनिज्वा' इति इमनिच्। 'स्थूलदूर' इति इष्ठेमेयःसु यणादिपरं लुप्यते पूर्वस्य च गुणः इत्येतत्स्थूलादिविषयं यथासम्भवम्। अत्र यणादिलोपस्य 'असिद्धवदत्र' इत्यसिद्धत्वात् 'टेः' इति लोपो न भवति। ह्रस्वं करोति ह्रसयति—'णाविष्ठवद्' इति यणादिलोपः। 'अङ्गवृत्तेः पुनर्वृत्तावविधिर्निष्ठितस्य' इति वृद्ध्यभाव इति भाष्ये। अग्लोपित्वाच्चङि ह्रस्वाभावात् अजह्रसत्। ह्लसति इत्यादि ह्रसिवत्। रसति इत्यादि। रस इति रस आस्वादनस्नेहनयोरिति चौरादिकस्य ण्यन्तस्य। रसयतीति हि तस्य व्युत्पत्तिः॥७०८-११॥

४५८. लस श्लेषणक्रीडनयोः। लसति इत्यादि। विलासी—'वौ कषलस' इति तच्छीलादौ घिनुण्। न लसः अलसस्तस्य भावः आलस्यम्—'न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटबुधकतरसलसेभ्यः' इति नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणाद्युत्तरे भावप्रत्यया न भवन्तीति निषेधश्चतुरादिपर्युदासादिह नेति ष्यञ् भवति। एवं न रसः अरसः, आरस्यम् इति। अलसोऽप्यालस्यः—यतः चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् भवति। लस शिल्पयोगे इति चुरादौ ॥७१२॥

४५९. घस्लृ अदने। अयं न सार्वत्रिकः, 'लिट्यन्यतरस्याम्' इति अदेर्घस्लादेशविकल्पविधानवैयर्थ्यप्रसङ्गात्। द्वैरूप्यं हि साध्यम्। ततश्च यत्र लिङ्गं वचनं वास्ति तत्रैवास्य प्रयोगः। अत्रैव पाठः शपि परस्मैपदे लिङ्गम्। लृदित्करणमङि।

'घसिश्च सान्तेषु' इति इण्निषेधो वलाद्यार्धधातुके। यत्र प्रत्यये प्रतिपदोपादानम् 'सृघस्यदः क्मरच्' इत्यादौ तद्वचनम्। घसति। घस्ता। घत्स्यति—'सः स्यार्धधातुके' इति तत्वम्। घसतु। अघसत्। घसेत्। शबभावादाशिष्यस्याप्रयोगः। अघसत्, लृदित्त्वादङ्। घस्ता। घत्स्यते देवदत्तेनान्नम् इत्यादौ शप्परस्मैपदाभावेऽपि वलादिर्निमित्तः प्रयोगः। घस्मरः—'सृघस्यदः क्मरच्' इति तच्छीलादौ क्मरच्। घासिः, भक्ष्यं तृणादिः—'जनिघसिभ्यामिण्' इतीण्। 'घासिं जघास' इति भट्टभास्करः "बहुलं छन्दसि' इत्यदो घस्लादेश औणादिकः" इत्याह; तदस्य घसेरस्मरणात्॥७१३॥

४६०. जर्ज[1] चर्च[1] झर्झ परिभाषणहिंसातर्जनेषु। जर्जति। चर्चति॥ झर्झति। झर्झरः—बाहुलकादरः। 'चर्चझर्झयोस्तुदादौ पठिष्यमाणयोरिह पाठः स्वरार्थः' इति देवमैत्रेयपुरुषकारेषु। ऊष्मान्तेषु पाठोऽर्थानुरोधादिति च मैत्रेयः। चर्च अध्ययने इति चुरादौ॥७१४-७१६॥

४६१. पिसृ पेसृ गतौ। पेसति। पेसयति। अपिपेसत्। एकारोपधपाठः क्ङिदर्थ इति पिपेसतुः। पेपेस्यत इत्यादि। पेस्वरः–'स्थेशभासपिसकसो वरच्' इति वरच्। इह कश्चित्कोशे विसृ वेसृ पिशृ पेशृ इत्यपि पठ्यन्ते। आद्यौ दन्त्यौष्ठ्यादी दन्त्योष्मान्तौ, इतरौ ओष्ठ्यादी तालव्योष्मान्तौ; चत्वार एते मैत्रेयादिषु न दृश्यन्ते। पिस अवयव इति तु चुरादौ॥७१७-७१८॥

४६२. हसे[2] हसने। हसति। जहास। अहसीत्। 'ह्म्यन्तक्षण' इत्यादिना वृद्धिनिषेधः। व्यतिहसन्ति। 'प्रतिषेधे हसादीनामुपसङ्ख्यानम्' इति तङ्निषेधः। हसः—'स्वनहसोर्वा' इत्यनुपसृष्टात् पक्षे अप्। तदभावे घञ्—हासः। उपसृष्टात् तु नित्यं घञेव-प्रहास इति। हस्तः–'हसिमृग्रिण्' इत्यादिना तन्। 'तितुत्र' इति इण्निषेधः। हस्तोऽस्यास्तीति हस्ती–'हस्ताज्जातौ' इति इनिप्रत्ययः। हस्तिनां समूहो हास्तिकम्—'अचित्तहस्तिधेनोष्ठक्' इति ठक्, 'नस्तद्धिते' इति टिलोपः। लिङ्गविशिष्टपरिभाषया हस्तिनीशब्दादपि ठकि 'भस्याढे तद्धिते' इति पुंवद्भावाद् हास्तिकम् इत्येव। हस्तिधेनुभ्यां तदन्तविधेरिष्टत्वात् वानहस्तिकम् इत्याद्यपि भवति। हस्ति प्रमाणमस्य हास्तिनः पुरुषः—'पुरुषहस्तिभ्यामण् च' इति प्रथमान्तात् प्रमाणोपाधिकात् अस्येत्यर्थेऽण्प्रत्ययः। चकाराद् द्वयसज्दघ्नञ्मात्रचो भवन्ति—हस्तिद्वयसम्। हस्तिदघ्नम्। हस्तिमात्रम् इति। अणि 'नस्तद्धिते' इति टिलोपः, 'इनण्यनपत्ये' इति प्रकृतिभावान्न भवति। हस्तेन दीयते कार्यं वा हस्त्यम्—'तेन यथा कथा च हस्ताभ्यां णयतौ' इति तृतीयान्ताद्दीयते कार्यमित्येतयोरर्थयोर्यत्। हस्ते नक्षत्रे जातो हस्तः—नक्षत्राणः 'श्रविष्ठाफल्गुनी' इत्यादिना लुक्। ह्रस्वं मुखम्—'स्फायितञ्चि' इत्यादिना रक्॥७१९॥

---

१-१. 'चर्च झर्छ' इति क्षीरस्वामी। २. 'हस' इति ख. पुस्तके प्रामादिकः पाठः।

४६३. णिश समाधौ[1]। तालव्योष्मान्तः। नेशति। प्रणेशति। निनेश। नेशिता। निनिशिषति, निनेशिषति। निशित्वा, नेशित्वा—'रलो व्युपधाद्' इति क्त्वविकल्पः। नेनिश्यते। नेनेष्टि—व्रश्चादिना षत्वं ष्टुत्वम्। नेशयति। अनीनिशत्। अत्र मैत्रेयो निशाशब्दमस्मादाह। तस्याभिप्रायः—क्विपि 'आपं चैव हलन्तानां यथा वाचा निशा दिशा' इति टाबिति। अन्ये तु नितरां शेरतेऽस्यामिति शेतेरधिकरणे डप्रत्यये व्युत्पादयन्ति। निशायां भवं नैशिकम्–'निशाप्रदोषाभ्यां च'इति शैषिकः पक्षे ठञ्। तदभावे प्राग्दीव्यतीयेऽणि नैशम् ॥७२०॥

४६४. मिश मश शब्दे रोषकृते च। इमौ तालव्योष्मान्तौ। मेशति। मशति इत्यादि। मशकः—सञ्ज्ञायां क्वुन् ॥७२१-७२२॥

४६५. शव गतौ। दन्त्योष्ठ्यान्तः। तालव्योष्मादिश्च। शवति। शवम्। क्विप्यूठि वृद्धौ—शौः ॥७२३॥

४६६. शश प्लुतगतौ। तालव्योष्माद्यन्तः। शशति। शशः। शशनः—'चलनशब्दार्थात्'इति युच्। अत्र कश गताविति क्वचित् पठ्यते,तत् 'प्रतिष्कशश्च कशेः' इत्यत्र वृत्तौ कश गतिशासनयोरित्यादादिकस्योपादानादनार्षमिव प्रतीयते। तथा 'नाभ्यस्तस्य'इत्यत्र 'प्रकृत्यन्तराणां वा' इति भाष्यवृत्ती प्रस्तुत्य तद्व्याख्यातृभिरादादिक एवोपादीयते ॥७२४॥

४६७. शसु हिंसायाम्। दन्त्योष्मान्तः। शसति। शशास। शशसतुः—'न शस' इत्येत्वाभ्यासलोपनिषेधः। शस्यंतेनेनेति शस्त्रम्—'दाम्नीशस' इति करणे ष्ट्रन्। स्त्रियां षित्त्वात् शस्त्री। शस्यम्—'तकिशसि' इत्यादिना यत्। शास्यम् इति 'हन्त्यर्थाश्च' इति चुरादिपाठात् स्वार्थे णौ यति। शसित्वा, शस्त्वा—उदित्त्वादिड्विकल्पः। शस्तो वृषलोऽविनीत इत्यर्थः। "धृषिशसी वैयात्ये"–धृषिशसी यदा वैयात्यविषयौ तदैवैताभ्यां पराया निष्ठाया इडभाव इति नियमादन्यत्र विशसित इति भवति। विशसितुर्धर्म्यं वैशस्त्रम्—'ऋतोऽञ्' इति षष्ठ्यन्ताद्धर्म्यमित्यर्थेऽञ्प्रत्ययः। तत्र 'विशसितुरिड्लोपश्च' इति वचनादिड्लोपः। आङः शसि इतीच्छायां गतः ॥७२५॥

४६८. शंसु स्तुतौ। अयं हिंसायामपीति दुर्गः। द्वाविमौ तालव्योष्मादी दन्त्यान्तौ। शंसति। शशंस इत्यादि। आशिषि किन्त्वात् 'अनिदिताम्' इत्युपधालोपे शस्यात्। शिशंसिषति। शाशस्यते। ङित्त्वान्नलोपः। शाशंस्ति—यङो लुका लुप्तत्वात् प्रत्ययलक्षणाभावान्नलोपाभावः। शाशस्तः इत्यादौ तसादीनां ङित्त्वान्नलोपः। शाशधि इत्यत्र हेरपित्त्वात् ङित्त्वान्नलोपे 'धि च' इति सलोपः। शंसयति। अशशंसत्। शस्यम्–'शंसिदुहिगुहिभ्यो वेति वक्तव्यम्'इति क्यपि नलोपः। क्यबभावे ण्यति

---

१. इतः पूर्वं मैत्रेयः 'कस गतिशासनयोः' इति सूत्रं पठति।

शंस्यम्। शंसित्वा, शस्त्वा—उदित्त्वादिड्विकल्पः। इटि 'न क्त्वा सेट्' इत्यकित्त्वा-न्नलोपाभावः। शस्तम्—'यस्य विभाषा' इति नेट्। नॄन् शंसतीति नृशंसः—कर्मण्यण्। नरा एनं शंसन्ति नरा अस्मिन्नासीनाः शंसन्तीति वा नराशंसः—घञ्। अग्निर्देशविशेषो वा। वनस्पत्यादिषु पाठात्पूर्वपदस्य दीर्घः। ब्राह्मणानि शंसतीति ब्राह्मणाच्छंसी—रूढिरियमृत्विग्विशेषस्य। 'सुप्यजातौ' इति णिनिः। 'ब्राह्मणाच्छंसिन उपसंख्यानम्' इत्यलुक्। अस्मादेव निर्देशात् द्वितीयार्थे पञ्चमी। अतिशयेन प्रशस्यः श्रेष्ठः। श्रेयान्। ज्येष्ठः। ज्यायान्–'प्रशस्यस्य श्रः' 'ज्य च' इत्यतिशायनिकयोरजाद्योः परयोःश्रज्यावादेशौ भवतः। आदेशयोरकारोच्चारणसामर्थ्याट्टिलोपो न भवति। ज्यायान् इत्यत्र 'ज्यादादीयसः' इति ज्यशब्दात्परस्य ईयसुन आदेराकारः। श्रेयसोऽपत्यं श्रायसः–'देविकाशिंशपादित्यवाड्दीर्घसत्त्रश्रेयसामात्' इति वृद्धिनिमित्ततद्धितपरत्वात्परत्वादेकारस्य स्थाने आकारादेशः। प्रशस्यमाचष्टे श्रापयति, ज्यापयति—'तत्करोति' इति णिचि 'णाविष्ठवद्' इति श्रज्यादेशयोर्वृद्धौ पुक्॥७२६॥

४६९. चह परिकल्कने। परिकल्कनं शाठ्यम्। चहति। चचाह। चेहतुः। चहिता इत्यादि। अचहीत्–ह्मन्तत्वान्न वृद्धिः। चिचहिषति। चाचह्यते। चाचाढि—'हो ढः' 'झषस्तथोर्धो धः' 'ष्टुना ष्टुः' 'ढो ढे लोपः', 'ढ्रलोपे पूर्वस्य दीर्घः'। अयं चुरादौ मित्प्रकरणे, कथादौ च। मित्सु पान्तं मैत्रेयः पठिष्यति॥७२७॥

४७०. मह पूजायाम्[1]। महति इत्यादि चहिवत्। मही–'मह' इति गौरादिपाठात् ङीष्। महिषः—'अविमह्योष्टिषच्'। टित्त्वात् स्त्रियां महिषी। महिषा अस्मिन् सन्ती महिष्मान् देशः—'महिषाच्चेति वक्तव्यम्' इति 'तदस्मिन्नस्तीति देशे तन्नाम्नि' इति विषये ड्मतुप्। डित्त्वाट्टिलोपः। महिष्या धर्म्यं माहिषम्-'अणमहिष्यादिभ्यः' इत्यण् 'तस्य धर्म्यम्' इति विषये। महान्। महान्तौ। महान्तः–'वर्त्तमाने पृषन्महद्बृहज्जगच्छतृवच्च' इत्यतिप्रत्यये निपातितः। शतृवद्भावान्नुम्। 'सान्तमहतः' इत्यसम्बुद्धौ सर्वनामस्थाने दीर्घः। उपधायां संयोगापेक्षमुपधात्वम्। सम्बुद्धौ तु संयोगान्तलोपे—हे महन्। शतृवद्भावादतिप्रत्ययस्य स्त्रियाम् 'उगितश्च' इति ङीपि–महती। महांश्चासौ पुरुषश्च महापुरुषः—'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इति पूजावचनाः सदादयः पूज्यमानवचनैः समानाधिकरणैः समस्यन्ते इति तत्पुरुषे 'आन्महतः समानाधिकरणजातीययोः' इति समानाधिकरणे उत्तरपदे जातीयरि च प्रत्यये महत आत्वमित्याकारः। जातीयरि महाजातीयः–'प्रकारवचने जातीयर्' इति प्रकारो भेदः सादृश्यं च, तत्र वर्त्तमानात्स्वार्थे जातीयरिति जातीयर्। कथं महाबाहुर्देवदत्त इति, यावता 'सन्महत्' इति प्रतिपदोक्ते समासे समाना-

---

१. क्षीरस्वामी नेदं सूत्रं पठति।

धिकरणस्योत्तरपदस्य सम्भवस्तत्रैवात्वेन भाव्यम्? सत्यम्; यद्येतावत्प्रयोजनं स्यात् 'आन्महतो जातीयरि च' इत्येव ब्रूयात्। चशब्देनोत्तरपदमाक्षेप्स्यते, तच्च प्रतिपदोक्तमेव भविष्यति; एवं सिद्धे सति यदत्र समानाधिकरणग्रहणं तत्समानाधिकरणमात्र आत्वार्थं विज्ञास्यते। महत्या घासो महाघासः—'महत आत्वे घासकरविशिष्टेषूपसंख्यानम्' 'पुंवद्वचनं च' इति पुंवद्भाव आत्वं च। एवं महाकरो महाविशिष्ट इति। अमहान् महान् सम्पन्नो महद्भूतश्चन्द्रमाः—अत्र अमहत्यां प्रकृतौ वर्त्तमानात् महच्छब्दात् कारणात्मना भूतस्य कार्यात्मना भावे द्योत्ये च्विर्विधीयते इति महच्छब्दस्य गौणार्थत्वान्मुख्ये च कार्यसम्प्रत्ययात् आत्वाभावः। महतो भावः महिमा—पृथ्वादित्वादिमनिचि 'टेः' इति टिलोपः। मंहते इति वृद्धौ गतः ॥७२८॥

४७१. रह त्यागे। रहति इत्यादि महतिवत्। रहः। रहसी—असुन्प्रत्ययः। विरहीकरोति—'अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्त्तरि' 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च' इति च्विप्रत्ययः, सलोपश्च। 'अस्य च्वौ' इति ईत्वम्। रहसि भवं रहस्यम्—दिगादित्वाद्यत्। अनुरहसम्। अवरहसम्। तप्तरहसम्—'अन्ववतप्ताद्रहसः' इति अन्वादिपूर्वाद्रहःशब्दान्तात् समासमात्रादच् समासान्तः। राहुः—'हसनिरहिजनि' इत्यादिना उण्। रह त्यागे इति कथादौ, मित्प्रकरणे च चुरादौ ॥७२९॥

४७२. रहि गतौ। रंहति। ररंह। रंहित्वा इत्यादि। इदित्त्वेन रारंह्यते इत्यादौ नलोपो न भवति। रंहः—असुन् ॥७३०॥

४७३. दृह दृहि बृह बृहि वृद्धौ। दर्हति। ददर्ह। दर्हिता इत्यादि। दरीदृह्यते 'रीगृत्वतः' इति रीक्। दर्दर्हीति। दर्दर्घि—'दादेर्धातोर्घः' इति झलि पदान्ते च हकारस्य घकारः। 'झषस्तथोः' इति धत्वम्। 'झलां जश्झशि' इति घस्य जश्त्वेन गकारः। दर्दर्क्षि इत्यत्र 'एकाचो बशः' इति दकारस्य धकारः। 'खरि च' इति घकारस्य चर्त्वं ककारः। लङि तिप्सिपोरपृक्तलोपे घत्वभष्भावजश्त्वचर्त्वेषु अदधर्क्। 'रात्सस्य' इति नियमान्न संयोगान्तलोपः। चर्त्वस्य पूर्वत्रासिद्धत्वाद् झषन्तत्वम्। दर्हयति। अददर्हत्। अदीदृहत्—'उर्ऋत्'। दृहित्वा। दृहितम् ॥ दृंहति। ददृंह। दृंहिता। दिदृंहिषति। दरीदृंह्यते 'रीगृत्वतः' इति रीक्। दर्दृंहीति। दर्दृङ्धि। दर्दृङ्घः। लङि तिप्सिपोर्हल्ङ्यादिलोपे पदान्तसंयोगान्तलोपे पदान्तत्वे झषन्तत्वाभावान्न भष्भाव इति अदर्दन्। दृंहित्वा। दृंहितम्। दृढः—'दृढः स्थूलबलयोः' इति क्तस्यानिट्त्वं तकारस्य ढत्वं नकारहकारयोर्लोपश्च निपात्यते। दृंहेरपीदं निपातनं नलोपवर्जम्। तथा च वृत्तिः—'अथ दृहिः प्रकृत्यन्तरमस्ति, तस्याप्येतदेव सर्वं नलोपवर्जम्' इति। स्थूलबलाभ्यामन्यत्र दृहितः, दृंहितः। नन्वत्र तकारस्य ढत्वं हकारलोपश्च किमर्थं निपात्यते, यावता हो ढे 'झषस्तथोः' इति धत्वे

ष्टुत्वढलोपयोः सिद्धं दृढ इति ? सत्यं सिद्ध्यति । इह हि—द्रढिमा । द्रढीयान् । द्रढिष्ठः । दृढमाचष्टे द्रढयति । 'र ऋतो हलादेर्लघोः' इति 'णाविष्ठवत्' इति च इष्ठेमेयस्सु णौ च हलादेर्लघोः ऋकारस्य विधीयमानो रभावो ढलोपस्य पूर्वत्रासिद्धत्वात् संयोगपरत्वेन गुरुत्वाल्लघुत्वाभावान्न स्यात् । तथा परिद्रढय्येत्यत्र परिदृढमाचष्ट इति विगृह्य 'सोपसर्गाच्चेत्संग्रामयतेरेव' इति नियमाद् दृढशब्दाण्णौ टिलोपे क्त्वान्तेन समासे क्त्वो ल्यपि च कृते 'ल्यपि लघुपूर्वात्' इति लघुपूर्वाद्वर्णात्परस्य णेर्ल्यपि परे विधीयमान अयादेशो न स्यात् । नन्वेवमपि टिलोपस्य 'असिद्धवद्' इत्यसिद्धत्वान्न लघुपूर्वाद्वर्णात्परो णिर्भवति; नैतत् ; णौ टिलोपो णेर्ल्यप्ययादेश इति व्याश्रयत्वेनासिद्धत्वाप्रसङ्गात् । न च 'पूर्वस्मादपि विधौ स्थानिवद्भावः' इति टिलोपस्य स्थानिवत्त्वेन व्यवधानम् ; 'प्रवेभिदय्य गतः' इत्यादीनां भाष्ये उदाहरणात् । यद्वा—'लघुपूर्वाद्' इत्यनेन सामर्थ्यादन्यपदार्थस्य वर्णस्याक्षेपादत्र 'वर्णग्रहणे जातिग्रहणम्' इति 'निपात एकाच्' इत्येकग्रहणेन ज्ञापनात्स्थानिवद्भावेन व्यवधानेऽपि न दोषः । यथा परिदृढस्यापत्यं पारिदृढिः—'अत इञ्' । स्त्रियाम् 'इतो मनुष्यजातेः' इति ङीष्—पारिदृढी कन्येत्यत्र "अणिञोः" इति अनार्षे गोत्रे यावणिञौ तदन्तयोर्गुरूपोत्तमयोः स्त्रियां ष्यङिति ष्यङ् प्रसज्येत ॥ बर्हति । बृंहति इत्यादि पूर्ववत् । दादित्वाभावान्न घत्वमिति झलि पदान्ते 'हो ढः' एव । परिवृढः—'प्रभौ परिवृढः' इति इडभावादि पूर्ववन्निपात्यते । अत्रापि हलोपादेः पूर्ववत्प्रयोजनम् । प्रभोरन्यत्र परिबृहितः, परिबृंहितः इति । अत्र सानुषङ्गावेव पाणिनीयौ । यदाह वृत्तिकारः—'दृढपरिवृढनिपातनं यदि दृहिः प्रकृत्यन्तरमस्ति' इति । निरनुषङ्गौ भाष्यकारीयौ, दृश्यते हि—'दृढनिपातनं किमर्थम्, न दृंहेरिड् भवतीत्येवोच्येत; परिवृढनिपातनं किमर्थम्, परिपूर्वाद्वृहतेनैड्भवतीत्येवोच्येत'[1] इति । तथा 'न धातुलोप आर्धधातुके' इत्यत्र दृहिः प्रकृत्यन्तरमस्तीति ॥७३१-७३४॥

४७४. बृहि शब्दने । बृंहितं करिगर्जितम्[2] । बृहिर् इति चन्द्र-गुप्तौ । तत्फलं च अबृहत् अबर्हीत् इति पक्षे अङ्सिद्धिरित्याह क्षीरस्वामी । बृह बृहि भाषार्थौ चुरादौ । बर्हत इति प्राधान्ये गतम् ॥७३५॥

४७५. तुहिर् दुहिर्[3] उहिर् अर्दने । तोहति । तुतोह । तोहिता । लुङि 'इरितो वा' इति पक्षे अङ् । अतुहत् । अतोहीत् । तुतुहिषति, तुतोहिषति । तुहित्वा, तोहित्वा—'रलो व्युपधाद्' इति कित्त्वम् । तुह्यते । तोतोढि । तोतूढ इत्यादि । तोहयति । अतूतुहत् । तुहिनम्—'वेपितुह्योर्ह्रस्वश्च' इतीन् प्रत्ययः, ह्रस्ववचनं वेपत्यर्थम् ॥ दोहति इत्यादि तोहतिवत् । 'दिहिर्दुहिर्मेहतिरोहती' इत्यनिट्कारिकायां मैत्रेयादयो नास्य ग्रहण-

---

१. म० भा० ७।२।२१ (पा० सू०) । २. तु०—अ० को० २।८।१०७ ।
३. क्षीरस्वामी न पठति ।

मिच्छन्ति ॥ ओहति । उवोह । ऊहतुः । ऊहुः । ओहिता इत्यादि उषिवत्प्रक्रिया । लुङि पक्षे मा भवानुहत् ॥७३६-७३८॥

४७६. अर्ह पूजायाम् । हकारान्तप्रसङ्गादनिडपीह पठितः । अर्हति । आनर्ह । अर्हिता । अर्जिहिषति । माभवानर्जिहत् । सुखार्हः । दुःखार्हः—'अर्हः' इति कर्मण्युपपदेऽच् । अर्हन्—'अर्हः प्रशंसायाम्' इति शता । प्रशंसाया अन्यत्र वधमर्हति चोरः । अर्हतो भाव आर्हन्त्यम्—'अर्हतो नुम् च' इति ब्राह्मणादिपाठात् ष्यञ्नुमौ । अर्घः—'संज्ञायामघंमेघनिदाघावदाघाः' इति न्यङ्क्वादिपाठात् कुत्वम् । अर्घो विक्रीयमाणस्य धान्यादेरियत्ता । अन्ये तु—मूल्यमिति; तथा अनर्घं इति प्रयुज्यते । अमूल्य इत्यर्थः । पूजाविधिरप्यर्घः, अर्घार्थमुदकम् अर्घ्यम्—'पादार्घाभ्यां च' इति तादर्थ्ये यत् । अर्हतिराधृषीयोऽपि ॥७३९॥

४७७. घुषिरादय उदात्ता उदात्तेतः ।

एवं तुहिरादीनूष्मान्तान् विकल्पिताङः परिसमाप्य आत्मनेपदपरस्मैपदभेदेन विकल्पिताङोऽन्यानप्याह—

४७८. द्युत दीप्तौ । एतदादयः कृपूपर्यन्ता उदात्ता अनुदात्तेतः । द्योतते । दिद्युते । दिद्युताते—'द्युतिस्वाप्योः सम्प्रसारणम्' इति हलादिशेषं बाधित्वा सम्प्रसारणम्, अभ्यासस्येति शेषः । द्योतिता । द्योतिष्यते । द्योतताम् । अद्योतत । द्योतेत । आशिषि द्योतिषीष्ट । अद्योतिष्ट, अद्युतत्—'द्युद्भ्यो लुङि' इति वा परस्मैपदम् । 'द्युद्भ्यः' इति बहुवचननिर्देश आद्यर्थावगमार्थः । यदा परस्मैपदं तदा पुषादित्वादङ् । दिद्युतिषते, दिद्योतिषते । द्युतित्वा, द्योतित्वा—'रलो व्युपधाद्' इति वा कित्त्वम् । देद्युत्यते—'द्युतिस्वाप्योः'—इत्यभ्यासस्य सम्प्रसारणे 'गुणो यङ्लुकोः' इति गुणः । देद्युतीति, देद्योति । द्योतयति । अदिद्युतत्—'द्युतिस्वाप्योः' इत्यभ्यासनिमित्तेन प्रत्ययेनानन्तर्यं नाश्रीयते इति णिचा व्यवधानेऽप्यत्र सम्प्रसारणं भवति । अत एव तत्र वृत्तौ अदिद्युतदित्युदाहारि । तथा 'दाधर्ति' इति सूत्रे दविद्युतदित्यत्र 'द्युतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य सम्प्रसारणाभावो विगागमश्चात्वं चास्य निपात्यते' इत्युक्तम् । आनन्तर्ये ह्याश्रीयमाणे यङो लुका लुप्तत्वादानन्तर्याभावान्न सम्प्रसारणस्य प्रसङ्ग इति किं तदभाववचनेन ! अत्र शिवदेवः—'हेरचङि' इति अभ्यासादुत्तरस्य हिनोतेः कुत्वमुक्त्वा तस्याचङीति निषेधाल्लिङ्गात् 'प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम्' इति सामान्येन परिभाषामाश्रित्य पर्यहार्षीत् । अत्राभ्यासस्य निमित्तप्रत्ययानन्तर्ये आश्रीयमाणे प्राजीहयदित्यत्र णिचा चङो व्यवधानात्कुत्वाप्रसङ्गेऽपि क्रियमाणोऽयं निषेधो ण्यधिकस्य ग्रहणं ज्ञापयति । अस्याः परिभाषायाः सामान्यापेक्षत्वं वृत्तिकारस्यानभिमतम् । यदाह—'हेरचङोऽन्यत्र ण्यधिकस्यापि कुत्वं भवति, तेन प्रजिघाययिषतीति सिद्धं भवति' इति । तथा च वार्त्तिके अपि—'हेरचङि प्रतिषेधानर्थक्यमङ्गान्यत्वात्', 'ज्ञापकं त्वन्यत्र ण्यधिकस्य कुत्वज्ञापनार्थम्' इति । एवं च 'स्तम्बकर्णयोरमिजपोः', 'अर्हः' इत्यादौ ण्यधि-

कस्य ग्रहणाभावाद् ण्यन्तादचोऽभावादणि सुखार्हो इत्यादि सिद्धयति । यदुक्तं सीरदेवेन 'ण्यधिकपरिभाषाया अव्यापिनीत्वात् अर्हादावप्रवृत्तिः' इति । सामान्यत्वमङ्गीकृत्य तदपि वृत्तिवार्त्तिकविरोधादेव प्रत्युक्तम् । अस्योदुपधत्वाद् 'उदुपधाद्भावादिकर्मणोः' इति निष्ठायाः किन्त्वविकल्प उदाहार्यः—द्युतितमनेन, द्योतितमनेन इत्यादि । विद्युत्—'भ्राजभास' इत्यादिना क्विप् । दिद्युत्—'द्युतिगमिजुहोतीनां द्वे च' इति क्वौ द्वित्वेऽभ्यासस्य सम्प्रसारणम् । ज्योतिः—'द्युतेरिसन्नादेश्च जः' इतीसन्, आदेश्च जः ॥७४०॥

४७९. श्विता वर्णे । श्वेतते । शिश्विते । श्वेतिता । अश्वितत्, अश्वेतिष्ट इत्यादि पूर्ववत् । श्वित्तम्-'आदितश्च'इति निष्ठायामनिट्त्वम् । भावादिकर्मणोस्तु 'विभाषा भावादिकर्मणोः' इतीडप्युदाहार्यः । श्वितितमनेन इत्यादि । श्वित्रम्—'स्फायितञ्चि' इत्यादिना रक् ॥७४१॥

४८०. ञिमिदा स्नेहने । मेदते । मिमिदे । मेदिता । अमिदत्, अमेदिष्ट इत्यादि । 'मिदेर्गुणः' इत्यत्र शिद्ग्रहणमनुवर्त्तते, तच्च कर्मधारय इति यस्मिन्विधिरितीत्संज्ञकशकारादौ सगुण इति एशि गुणाभावः । मिन्नः—'श्वीतः क्तः'; 'रदाभ्याम्' इति नत्वम् । आदित्त्वादनिट्त्वम् । भावादिकर्मणोस्तु 'विभाषा भावादिकर्मणोः' इतीट्पक्षे 'निष्ठाशीङ्' इति सेटो निष्ठाया अकित्त्वाद् गुणे मेदितमनेन इत्यादि । मेदुरः—'भञ्जभासमिदो घुरच्'इति घुरच् । मित्रम्—'अमिचिमिदिशसिभ्यः त्रन्' इति त्रन् । अयं दिवादिश्चुरादिश्च । मिदृ मेदृ मेधाहिंसनयोरिति ह्विक्कादौ ॥७४२॥

४८१. ञिष्विदा स्नेहस्य मोचने च[1] । स्नेहनमोचनयोरिति क्वचित्पठ्यते । स्वेदते । सिष्विदे । स्वेदिता । अस्विदत्, अस्वेदिष्ट । सिस्विदिषते, सिस्वेदिषते—'स्तौतिण्योरेव' इत्यषत्वम् । सेष्विद्यते । सेष्वेत्ति । स्वेदयति । असिस्विदत् । ण्यन्तात्सनि 'सः स्विदिस्वदिसहीनां च'इति अभ्यासात्परस्य षत्वे—सिस्वेदयिषति इति । निष्ठायां मिदिवत् स्विन्नः इत्यादि । अत्र स्वामी 'ञिक्ष्विदा'इति क्ष्वकारं पठित्वा 'ञिष्विदा इति नन्दी'इत्याह । तत्र क्ष्वेदते । चिक्ष्विदे । अक्ष्विदत्, अक्ष्वेदिष्ट इत्यादि । क्ष्वेदतीत्यव्यक्ते शब्दे भविष्यति । क्ष्विद्यतीति स्नेहनमोचनयोर्दिवादौ । स्विद्यतीति च गात्रप्रस्रवणे ॥७४३॥

४८२. रुच दीप्तावभिप्रीतौ च । रोचते देवदत्ताय मोदकः—'रुच्यर्थानां प्रीयमाणः' इति प्रीयमाणस्य सम्प्रदानत्वाच्चतुर्थी । रुरुचे । रोचिता । अरुचत्, अरोचिष्ट । रुरुचिषते, रुरोचिषते । रुचित्वा, रोचित्वा । 'भृशं रोचते इत्यर्थे यङ्नेष्यते'[2] इति वृत्तिन्यासादौ । रोचयति । रोचयते—'अणावकर्मकात्' इति कर्त्रभिप्राये

---

१. 'गात्रप्रस्रवणे' इति क. पुस्तके । 'ञिस्विदा स्नेहनमोहनयोः' इति क्षीरस्वामी ।

२. धातुप्रदीपे ।

प्राप्तं परस्मैपदं 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः' इति निषिध्यते। रोचयतीति रोचनः। रोचना-'नन्दिवासिदमिदूषिसाधिवर्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम्' इति नद्यादिपाठाल्ल्युः। रोचिष्णुः—'अलंकृञ्' इत्यादिनेष्णुच्। रुच्यः—'राजसूयसूर्य' इत्यादिना कर्त्तरि क्यब् निपात्यते। रोकः—घञ्। 'चजोः कुघिण्ण्यतोः' इति निष्ठायामनिटः कुत्वं वदतो वार्त्तिककारस्य 'विभाषा श्यावारोकाभ्याम्' इति निपातनात् कुत्वम्। रोचिः—'शुचिरुच्योः संज्ञाम्' इति सिः। रुक्मम्—'युजिरुचितिजां कुश्च' इति मक्प्रत्ययः। चकारस्य ककारः। रुचकः मणिः—'क्वुन् शिल्पिसंज्ञयोः' इति क्वुन् ॥७४४॥

४८३. घुट परिवर्त्तने। घोटते। जुघुटे। घोटिता। अघुटत्, अघोटिष्ट। घुटित्वा, घोटित्वा—'रलो व्युपधाद्' इति वा-कित्त्वम्। जोघुट्यते। जोघोट्टि। घोटयति। अजूघुटत्। घुटितः। भावादिकर्मणोः कित्त्वविकल्पे घुटितमनेन, घोटितमनेन इत्यादि। घोटः—अच्। घोटकः—संज्ञायां कन्। घुटिका—संज्ञायां क्वुन्। अयं तुदादौ च ॥७४५॥

४८४. रुट[1] लुट लुठ प्रतीघाते। आद्यौ प्रथमान्तौ। अन्त्यो द्वितीयान्तः। अयं पाठो देवमैत्रेयादीनाम्। हरियोगिनस्तु आद्यावेव। 'धातोः कर्मणः' इत्यत्र कैयटे द्वाविमौ द्वितीयान्तौ पठितौ। क्षीरस्वामी त्वेवं पठित्वा आह-"'रुट लुट' इत्येके। बाधृ लोडने इति लिङ्गाद्" इति। तथा लुठ दीप्तावित्यप्यसावाह। लुटि इति तु शाकटायनः। सुधाकरस्तु 'भूवादिसूत्रे लुठतिर्द्वितीयान्तोऽपि; लुठितोः लोठमानः इति प्रयोगदर्शनात्' इत्याह। रोटते॥ लोटते॥ लोठते इत्यादि पूर्ववत्। लोटतीति लोडने गतम्। रुण्टति लुण्टतीति स्तेये। रोठति लोठति इत्युपघाते। लुण्ठति इत्यालस्यप्रतिघातयोः। रुण्ठति लुण्ठति इति द्वयं गत्यर्थे ॥७४६-७४८॥

४८५. शुभ दीप्तौ। शोभते। शुशुभे। अशुभत्, अशोभिष्ट। शुशुभिषते, शुशोभिषते। शुभित्वा, शोभित्वा। शोशुभ्यते। शोशोब्धि। शोभयति। अशूशुभत्। हिंसाभाषणयोः शोभति, शुभति इति गतौ ॥७४९॥

४८६. क्षुभ सञ्चलने। सञ्चलनं प्रकृतिविपर्यासो मथनं च। क्षोभते। अक्षुभत्, अक्षोभिष्ट इत्यादि पूर्ववत्। क्षुब्धो मन्थः—'क्षुब्धस्वान्त' इति मन्थे निष्ठायामनिट्त्वं निपात्यते। अन्यत्र क्षुभितः। अयं दिवादिः क्र्यादिश्च ॥७५०॥

४८७. णभ तुभ हिंसायाम्। प्रणभते। नेभे। नभिता। अनभत्, अनभिष्ट॥ तोभते। तुतुभे। तोभिता। अतुभत्, अतोभिष्ट। णभिरयमभावेऽपि वर्त्तते। 'नभन्तामन्यके समे' इत्यत्र 'मा भूवन्नन्यके सर्वे' इति निरुक्तम्[2]। तथा नभन्तामन्यकेषां ज्याका अधि धन्वसु' इत्यत्र भाष्येषु 'अन्यकेषां शत्रूणां धन्वसु स्थिता ज्याकाः छिन्ना

1. अत्र स्वामी 'रुट दीप्तौ' इति पृथक् सूत्रं स्वीचकार। 2. नि० ५।२३।

मा भवन्तु'इति । नभसः—समुद्र आकाशश्च । 'अत्यमि' इत्यादिना असुन्प्रत्ययः । इमौ दिवादी क्र्यादी च ॥७५१-७५२॥

४८८. स्रंसु ध्वंसु भ्रंसु अवस्रंसने[1] ।

४८९. ध्वंसु गतौ च । स्रंसते । सस्रंसे । स्रंसिता । अस्रसत् । अस्रंसिष्ट—अङि नलोपः । सिस्रंसिषते । सनीस्रंसीति । सनीस्रंसीति सनीस्रंस्ति—'नीग्वञ्चुस्रंसु'इत्यादिना नीक् । स्रंसित्वा, स्रस्त्वा—उदित्त्वादिड्विकल्पः । इटपक्षे कित्त्वाभावान्नलोपाभावः । स्रस्तम् । उखायाः स्रंसते इति उखास्रत्—'क्विप् च' इति क्विप् । 'वसुस्रंसुध्वंसु' इति पदान्तसकारस्य दकारः । सनीस्रः—यङ्लुगन्तात् क्वौ नलोपः । दत्वं तु सानुबन्धकनिर्देशान्न भवति । रुत्वविसर्जनीयौ । 'अत्वसन्तस्य' इति दीर्घोऽधातोरिति निषेधान्न भवति । सनीस्रंसः—अचि परे यङ्लुकि यङो लुका लुप्तत्वात्प्रत्ययलक्षणाभावान्नलोपाभावः ॥ एवं ध्वंसते ॥ भ्रंसते इत्यादि । अत्र तृतीयं मैत्रेयस्वामिबोधिन्याससम्मताकारादयः तालव्योष्मान्तं पठन्तो नीग्विधावपि तथैवानुवदन्ति । भ्रंशते इत्यादि । अत्र क्वचित् भ्रशिरपि पठ्यते । भ्रशु भ्रंशु अधःपतने इति दिवादौ । देवमैत्रेयादिमते स्रंसते इति प्रमादेऽपि गतः ॥७५३-७५६॥

४९०. स्रम्भु[2] विश्वासे । विस्रम्भते । सस्रम्भे । स्रम्भिता । अस्रभत्, अस्रम्भिष्ट । सिस्रम्भिषते । सास्रभ्यते । सास्रम्भि । स्रम्भयति । असस्रम्भत् । स्रम्भित्वा, स्रब्ध्वा । स्रब्धम् । विस्रम्भी—'वौ कषलस' इति घिनुण् । श्रम्भते इति तालव्यादिः काश्यपादिमते प्रमादे गतः ॥७५७॥

४९१. वृतु वर्तने । वर्तते । ववृते । वर्तिता । वर्तिष्यते, वर्त्स्यति । वर्तताम् । अवर्तत । वर्तेत । वर्तिषीष्ट । अवृतत्, अवर्तिष्ट । अवर्तिष्यत, अवर्त्स्यत् । विवर्तिषते, विवृत्सति—'वृद्भ्यः स्यसनोः' वा परस्मैपदम् । 'वृद्भ्यः' इति बहुवचननिर्देश आद्यर्थावगमार्थं इति वृतुवृधुशृधुस्यन्दिक्ृपीनामपि स्यसनोर्वा परस्मैपदं द्रष्टव्यम् । 'न वृद्भ्यश्चतुर्भ्यः' इति सकारादेरार्धधातुकस्य परस्मैपदपरस्य इडभावे झलादेः सनः 'हलन्ताच्च' इति कित्त्वादगुणत्वम् । 'न वृद्भ्यश्चतुर्भ्यः' इत्यत्र भाष्यवार्त्तिकयोः—'सिद्धं तु वृतादीनामात्मनेपदेन समानपदस्थस्येड्वचनात्' इत्युक्तत्वात् कृत्परेऽपि सादौ परस्मैपदलुकि चेटः प्रतिषेधो भवति । विवृत्सिता । विवृत्सितुम् । विवृत्सितव्यम् । विवृत्स इति । सामान्येन वलादाविटि सिद्धे आरभ्यमाणमिदमात्मनेपदेन समानपदस्थस्येड्विधानमर्थादन्यनिवृत्त्यर्थम् । विवृत्सिषीयत इति आत्मनेपदेन समानपदस्थत्वेऽप्यन्तरङ्गप्रकृत्याश्रयः प्रतिषेधो भवति । न तु बहिरङ्ग आत्मनेपदाश्रयो विधिः । वरीवृत्यते । 'रीगृत्वतः' इति रीक् । वर्वर्ति

---

१. 'स्रसु भ्रन्सु ध्वन्सु अधःपतने' इति मैत्रेयः । २. 'स्रुन्भु' इति तरङ्गिण्यां प्रामादिकः पाठः ।

इत्यादि नेयम्। वर्तयति। अववर्तत्, अवीवृतत्—उक्तं द्वा। वर्त्स्यन् वर्तिष्यमाणो वा वर्त्तिष्णुः 'अलंकृञ्'–इत्यादिना इष्णुच्। हस्तवर्त्तं वर्त्तयति—'हस्ते वर्तिग्रहोः' इति हस्तवाचिनि करणे उपपदे ण्यन्तादस्मात् ग्रहेश्च णमुल्। हस्त इत्यर्थग्रहणमिति पाणिवर्त्तम् इत्याद्यपि भवति। कषादित्वाद्यथाविध्यनुप्रयोगः। वृत्तः। अयं यदान्तर्भावितण्यर्थस्तदा सकर्मकः, यथा 'तेन निर्वृत्तम्' इति, निर्वर्तितमिति ह्यत्रार्थः। यद्येवं 'णेरध्ययने वृत्तम्' इति निष्ठायामिडभावनिपातनं किमर्थम्? यस्मादन्तर्भावितण्यर्थादस्मात् वृत्तमध्ययनमिति भविष्यति। एवं तर्हि ण्यन्तादप्यध्ययने वृत्तमित्येव यथा स्यात्, न तु वर्त्तितमित्येवमर्थं निपातनम्। अत्र वृत्तिकारोऽमुं पक्षमुक्त्वा 'वर्त्तितो गुणो देवदत्तेन इति चेष्टम्' इत्याह। अत्र हरदत्तः–'तेषां नार्थः सूत्रेण' इति। वृत्तं तदिति वर्त्म–'उणादयो बहुलम्' 'भूतेऽपि दृश्यन्ते' इति मनिन्। वर्त्मनिः रथमार्गः—'अदेर्मुट् च' 'वृत्तेश्च' इति मुडागमो निप्रत्ययश्च। 'अदिवृत्तिभ्यां मुट् च' इति वक्तव्ये पृथग्योगकरणात्पक्षे मुण्न भवति। वर्त्तनिः इत्यपि भवति। वर्त्तनी—कृदिकारत्वात् ङीष्। अयं भाषार्थश्चुरादौ ॥७५८॥

४६२. वृधु वृद्धौ। वर्धते इत्यादि पूर्ववत्। वर्धिष्णुः—'अलंकृञ्' इत्यादिनेष्णुच्। वर्द्धनः—नन्द्यादिपाठात् ल्युः। वृद्धः। अतिशयेन वृद्धो वर्षिष्ठः। वर्षीयान्—'प्रियस्थिर' इति इष्ठन्नीयसुनोर्यथासंख्याद् वृद्धस्य वर्षादेशः। ज्येष्ठः, ज्यायान्—'ज्य च' इति ज्यादेशः। अकारोच्चारणसामर्थ्याट्टिलोपो न भवतीति प्रागेवोक्तम्। वृद्धमाचष्टे वर्षयति, ज्यापयति—'णाविष्ठवत्' इति वर्षज्यादेशौ। वृद्धिः—'तितुत्र' इति नेट्। वृद्ध्यर्थं द्रव्यमपि वृद्धिः, तत्प्रयच्छति गर्ह्यमिति वार्धुषिकः–'तत्प्रयच्छति गर्ह्यम्' इति द्वितीयान्ताद् गर्ह्योपाधिकात्प्रयच्छतीत्यर्थे ठगिति ठक्। वृद्धेर्वृधुषिभावश्च' इति वृद्धेर्वृधुषिभावः। 'वृधुषिः प्रकृत्यन्तरं वा' इति वृत्तिः। वृद्धेर्गर्ह्यत्वमशास्त्रीयत्वेन। अयं भाषार्थश्चुरादौ ॥७५९॥

४६३. शृधु शब्दकुत्सायाम्। शर्धते इत्यादि पूर्ववत्। अयं प्रहसने चुरादिः। वृतादयस्त्रय उदितः ॥७६०॥

४६४. स्यन्दू प्रस्रवणे। स्यन्दते। सस्यन्दे। सस्यन्दिषे, ससन्त्से। सस्यन्दिवहे, सस्यन्द्वहे—ऊदित्त्वात् 'स्वरतिसूति' इत्यादिना वलादावार्द्धधातुक इड्विकल्पः। स्यन्दिता, स्यन्त्ता। स्यन्दिष्यते, स्यन्त्स्यते—'वृद्भ्यः स्यसनोः' इति यदा परस्मैपदं तदा स्यन्देरूदिल्लक्षणमन्तरङ्गमपीड्विकल्पं 'न वृद्भ्यः' इति निषेधश्चतुर्ग्रहणसामर्थ्याद्बाधते इति स्यन्त्स्यति, अस्यन्त्स्यत्। सिस्यन्त्सति, इत्येव भवति। स्यन्दताम्। अस्यन्दत। स्यन्दिषीष्ट, स्यन्त्सीष्ट। अस्यन्दिष्ट, अस्यन्दिषाताम्। इडभावे झलि सिलोपे चर्त्वे अस्यन्त। अस्यन्त्साताम् इत्यादि। 'द्युद्भ्यो लुङि' इति यदा परस्मैपदं तदा 'पुषादिद्युताद्ि' इति अङि अनुनासिकलोपे–अस्यदत्। अस्यदताम् इत्यादि। अस्यन्दिष्यत, अस्यन्त्स्यत। सिष्यन्दिषते, सिस्यन्त्सते, सिस्यन्त्सति। अनुस्यन्दते जलम्।

अनुष्यन्दत इति वा 'अनुविपर्यभिनिभ्यः' इति वा षत्वम्। एवं पर्यादिभ्य उदाहार्यम्। 'अप्राणिषु' इत्यस्य पर्युदासत्वात्प्राण्यप्राणिसमुदायोऽपि प्राणिव्यतिरिक्त इति मत्स्योदके अनुष्यन्देते इत्यत्रापि वा मूर्द्धन्यो भवति। स्यन्दित्वा, स्यन्त्वा—'क्त्वि स्कन्दिस्यन्दोः' इत्यादिष्वपि नलोपो निषिध्यते। स्यन्नः–निष्ठायां 'यस्य विभाषा' इत्यनिट्त्वान्नत्वम्। स्यदः-घञि 'स्यदो जवे' इति निपातनान्नलोपः, वृद्ध्यभावश्च। जवादन्यत्र स्यन्दः। स्यन्दनः—'अनुदात्तेतश्च' इति युच्। सिन्धुः–'स्यन्देः सम्प्रसारणं धश्च' इत्युप्रत्ययः सम्प्रसारणं धश्चान्तादेशः। सिन्धौ जातः सिन्धुकः। सैन्धवः—'सिन्ध्वपकराभ्यां कन्', 'अणञौ च' इति कनणौ। सिन्धुरभिजनो यस्य सैन्धवः—'सिन्धुतक्षशिलादिभ्योऽणञौ' इत्यण्। सिन्धौ भवादिरपि सैन्धवः—'कच्छादिभ्यश्च' इति शैषिकोऽण्। यदा त्वयं भवादिर्मनुष्यः तत्स्थो वा तदा 'मनुष्यतत्स्थयोर्वुञ्' इति वुञ्—सैन्धवको मनुष्यः। सैन्धवकं हसितम् इति। लवणसिन्धौ भवं लावणसैन्धवम्—'प्राग्दीव्यतोऽण्', 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः ॥७६१॥

४९५. कृपू सामर्थ्ये। कल्पते। चक्लृपे। चक्लृपिषे, चक्लप्से इत्यादि स्यन्दिवत्। विशेषस्तु 'लुटि च क्लृपः' इति लुटि स्यसनोरिति पक्षे परस्मैपदं तदा 'तासि च क्लृपः' इति तासौ सकारादावनिट्त्वं च-कल्प्ता। कल्प्तासि इति। पूर्ववदिदमूदिल्लक्षणं विकल्पं बाधते। अत्र चात्मनेपदेन समानपदस्थस्येति स्थितमिति सन्नन्तात्कृति परस्मैपदलुकि च निषेधो भवति—चिक्लृप्सिता। चिक्लृप्से इत्यादि। 'हलन्ताच्च' इति सनः कित्त्वान्न गुणः। तथा यदा 'लिङ्सिचोरात्मनेपदे' इतीडभावस्तदा 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वान्न गुणः—क्लृप्सीष्ट। अक्लृप्त। अक्लृप्साताम् इत्यादि। इट्पक्षे कल्पिषीष्ट, अकल्पिष्ट इत्यादि—'कृपो रो लः' इति रेफस्य लत्वम्। तत्र वर्णात्मकस्य रेफस्य वर्णात्मको लकारः। यस्त्ववर्णात्मक ऋकारस्तस्यावर्णात्मक लृकारः तत्र स्थान्यादेशयोः वर्णैकदेशयोः निर्देष्टुमशक्यत्वात् ऋकारस्य लृकारः सम्पद्यते। चलीक्लृप्यते। चल्कल्सि, चलिकल्सि, चलीकल्सि इत्यादौ रुग्रिग्रीकामपि कृपो भक्तत्वेन तद्रेफत्वाल्लत्वं भवति। तथा ह्युक्तम्—'अदसोद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत्' इति। द्युतादीनां यङ्लुगन्तानां लुङ्यङ् नास्ति, 'पुषादिद्युतादि' इति गणनिर्देशात्। तेन अदेद्योतीत् इत्येव भवति। सिजपेक्षोऽत्र गुणः, नाजादिपिदपेक्षः। तथा वृतादीनां यङ्लुगन्तानां 'न वृद्भ्यः' इति इण्निषेधोऽपि गणनिर्देशान्न भवति। वरीवर्तिष्यति इत्याद्येव भवति। कृपेस्तु गणनिर्देशाभावात् 'तासि च क्लृपः' इति इण्निषेधो भवत्येव। चल्क्लृप्तासि इत्यादि ॥ ६२॥

४९६. द्युतादय उदात्ता अनुदात्तेतः।

४९७. वृत्। वृत्तः सम्पूर्णो द्युतादिर्वृतादिश्चेत्यर्थः। वृतु वर्तने इत्यस्माद्धातोर्भूतेऽपि क्विप्।

गणप्रयुक्तकार्यभाजो घुतादीन् वृतादींश्च परिसमाप्यान्यानपि गणप्रयुक्तकार्यभाज आह—

४९८. घट चेष्टायाम् । एतदादयस्त्वरत्यन्ता उदात्ता अनुदात्तेतः षितश्च, तत्फलं घटा इत्यादौ 'षिद्भिदादिभ्योऽङ्' इत्यङ् । घटादयः फणान्ता मितः, तत्फलं तत्र तत्र दर्शयिष्यते । घटते । जघटे । घटिता इत्यादि । जिघटिषते । जाघट्यते । जाघट्टि । घटयति । अजीघटत् – मित्त्वात् 'मितां ह्रस्वः' इति णावुपधाह्रस्वः । यदा तु ण्यन्ताच्चिण्णमुलौ तदा 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इति चिण्णमुल्परे णौ मितामुपधाया वा दीर्घशासनात्—अघाटि, अघटि । घाटंघाटम्, घटंघटम् इति भवति । अण्यन्ते तु वृद्धिरेव । ण्यन्तात्स्यादिषु चिण्वदिट्यपि वा दीर्घः—घाटिष्यते, घटिष्यते । अघाटिष्यत, अघटिष्यत । अघाटिषाताम्, अघटिषाताम् । घाटिषीष्ट, घटिषीष्ट । घाटिता, घटिता । चिण्वदिटोऽसिद्धत्वात् 'णेरनिटि' इति णिलोपः । चिण्वदिडभावे गुणायादेशयोः कृतयोः घटयिष्यते इत्यादि । कर्मकर्त्तर्यप्येवम् । लुङ्येकवचने तु 'णिश्रि' इति यक्चिणोर्निषेधाच्चङि अजीघटत स्वयमेव इति भवति । 'अचः कर्मकर्त्तरि' इति चिण्विकल्पस्य ण्यन्तो न विषय इति प्रागेवोक्तम्[1] । 'घटादयो मितः' इति गणनिर्देशेन विधीयमानत्वान्मित्त्वस्य यङ्लुक्यभावात् न ह्रस्वो नापि दीर्घविकल्प इति जाघाटयति । अजाघाटीत् इत्यादि भवति । घटी—अजन्तत्वात् 'जातेरस्त्रीविषयात्' इति ङीष् । घटना—'घटिवन्दिविदिभ्यश्च' इति युच् । घटिका—'क्वुन् शिल्पिसंज्ञयोः' इति क्वुन् । अपरे गणान्तराधीता इह पठ्यन्ते, तेषामिहोपात्त एवार्थे मित्त्वम्, ये त्वपूर्वाः पठ्यन्ते तेषामुपात्ते चानुपात्ते चार्थे मित्त्वम् । तदुक्तं बोधिन्यासे—'केचिदिहैव पठ्यन्ते तेषामुपसर्गादिना अर्थान्तरेऽपि सानुबन्धत्वम्, यथा—विघटयति' इति । अपरे गणान्तराधीता इह पठ्यन्ते तेषामर्थेन नियमः, यथा—स्मृ चिन्तायामन्यत्र पठितोऽत्र स्मृ आध्याने, आध्यानमुत्कण्ठापूर्वकस्मरणम्, स्मरयति, अन्यत्र स्मारयति । अत्र तरङ्गिण्यामपीदमेवार्थतत्त्वं स्थितम् । घटयति इति घट सङ्घात इति चौरादिकस्य, तस्य हि मित्त्वं निषिध्यते । "नान्ये मितोऽहेतौ" इति ज्ञपादिपञ्चकव्यतिरिक्ता अहेतौ स्वार्थे णिचि मितो न न भवन्तीत्यर्थः । अत एव स्वार्थे णिचि मित्त्वनिषेधाच्चेष्टायां मित्त्वार्थं तस्यायमनुवादो न भवति ॥७६३॥

४९९. व्यथ भयसञ्चलनयोः । व्याघ्रात् व्यथते—"भीत्रार्थानां भयहेतुः" इति बिभेत्यर्थानां त्रायत्यर्थानां च प्रयोगे भयहेतुः कारकमपादानमिति व्याघ्रस्यापादानत्वात्पञ्चमी । व्यथते । विव्यथे—'व्यथो लिटि' इत्यभ्यासस्य सम्प्रसारणम्, 'न सम्प्रसारणे सम्प्रसारणम्' इति पूर्वस्य यणो यकारस्य सम्प्रसारणपरत्वात्सम्प्रसारणं न भवति । सम्प्रसारण इति च सम्प्रसारणभाविनीत्यर्थः । यद्वा—अस्मादेव

---

१. पूर्वं ३८ पृष्ठेऽवलोकनीयम् ।

वचनसामर्थ्यात्पूर्वं परस्य सम्प्रसारणं क्रियते पश्चादन्यस्य, अत्र च वेलायामस्ति सम्प्रसारणपरत्वम्। अथ वा 'व्यथो लिटि' इति सम्प्रसारणं हलादिशेषापवाद इति परस्यैव प्रसज्यते, न पूर्वस्येति न चोद्यावकाशः। व्यथिता इत्यादि। विव्यथिष्यते। वाव्यथ्यते। वाव्यथीति, वाव्यत्ति। व्यथयति। अविव्यथत्। घटिवच्चिण्णमुलोरुदाहार्यम्। न व्यथत इति अव्यथ्यः—'राजसूयसूर्य'इत्यादिना निपातितः। अव्यथी—'जिदृक्षि' इत्यादिना नञ्पूर्वात्ताच्छीलिक इनिः। व्यथा—षित्त्वादङ्। विथुरः—'छिदिभिदि' इत्यत्र व्यथेः सम्प्रसारणं चेति वचनात्कुरचि सम्प्रसारणम्। विधुरः—'व्यथेः सम्प्रसारणं धः किच्च' इति वचनादुरचि सम्प्रसारणं थकारस्य धकारः। 'व्यथ दुःखचलनयोः'इति दुर्गः। 'भयचलनयोः'इति प्रकाशः। तवर्गचतुर्थान्तोऽयं दिवादौ ॥७६४॥

५००. प्रथ प्रख्याने। प्रथते। पप्रथे। प्रथिता। प्रथयति। अपप्रथत्। 'अत् स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्' इति चङ्परे णावभ्यासस्यात्वमित्वापवादः। अप्रथि, अप्राथि इत्यादि घटिवत्। पृथिवी—'प्रथेः षिवन्सम्प्रसारणं च' इति षिवनः षित्त्वान् ङीष्। पृथिव्या निमित्तं संयोग उत्पातो वा पार्थिवः—'सर्वभूमिपृथिवीभ्यामणञौ' इति अञ्। पृथिव्या ईश्वरः पृथिव्यां विदित इति वा पार्थिवः—'तस्येश्वरः' 'तत्र विदित इति च' इत्यञ्, 'पृथिव्या ञाञौ' इति प्राग्दीव्यतीयेष्वर्थेषु ञाञौ—पार्थिवम्। अनयोः स्त्रियां विशेषः—पार्थिवा, पार्थिवी। पृथुः—'प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च' इति कुप्रत्ययः सम्प्रसारणं च। सलोपवचनं भृज्जत्यर्थम्। पृथोर्भावः प्रथिमा—'पृथ्वादिभ्य इमनिज्वा' इति इमनिच्। 'र ऋतो हलादेः' इति ऋकारस्य रशब्दः। इमनिजभावे 'इगन्ताच्च लघुपूर्वात्' इत्यणि पार्थिवम्। अत्र लघोः पूर्वत्वमिगपेक्षम्। तच्चेह द्वयोरचोरानन्तर्येणावस्थानासम्भवादेकेन हला व्यवधानमाश्रीयते। 'वोतो गुणवचनात्' इति ङीष—पृथ्वी। गुणमुक्त्वा गुणिनि वर्त्तमानो गुणवचनः। अयं कथादावपि। अत्र केचित् 'पृथा' इति ऋकारोपधमपि पठन्ति। यदाह वर्द्धमानः—'पृथिकदिक्रन्दिदक्ष्यादीनां घटादौ पाठः चिण्णमुलोर्वृद्ध्यर्थः' इति। अत्र स्वामी प्रथेः सम्प्रसारणविधानमार्षं मन्यते। पुरुषकारेऽपि[1] "'यदप्रथयत् तत्पृथिव्याः पृथिवीत्वम्' इति श्रौतस्य निर्वचनस्यानार्षपक्षे एवाञ्जस्यम्' अन्यथा यदपर्थयदित्येव ब्रूयात्" इति। पुनश्चोक्तम्—"सर्वथापि पृथेर्घटादिपाठे तत्फलं 'घटादयः षितः' इति षित्त्वादङि सति पृथेति रूपं द्रष्टव्यम्" इति। व्यथादिस्थान्तः, पृथ प्रक्षेपे इति चुरादौ ॥७६५॥

५०१. प्रस विस्तारे। प्रसते। पप्रसे। पिप्रसिषते। पाप्रस्यते। पाप्रस्ति। लङि तिपि 'तिप्यनस्तेः'इति दत्वे अपाप्रत् इति भवति। सिपि तु 'सिपि धातो रुर्वा'इति

---

१. दै० ७१ पृ०।

दत्वरुत्वयोः—अपाप्रत्, अपाप्रः। प्रसयति। अपिप्रसत्। अप्रसि, अप्रासि इत्यादि। प्रसा ॥७६६॥

५०२. म्रद मर्दने। म्रदते। मम्रदे। म्रदिता। मिम्रदिषते। माम्रद्यते। माम्रदीति, माम्रत्ति। म्रदयति। अमम्रदत्—'अत् स्मृदृत्वरप्रथम्रद' इत्यादिनाभ्यासस्यात्वं मित्त्वापवादः। मृदुः—'प्रथम्रदि' इत्यादिना कुप्रत्ययः सम्प्रसारणं च। नैतेन मृद्नातेरभावोऽनुमातव्यः। तत्र सम्प्रसारणस्यान्यार्थं वक्तव्यत्वात्, सत्व एव हि मृद्नातेः'मृडमृद'इत्यादिनिर्देशोपपत्तिः। मृदोरपत्यं मार्देयः–'शुभ्रादिभ्यश्च' इति ढक्। 'ढे लोपोऽकद्र्वाः' इति उकारलोपः। मृद्वी—गुणवचनत्वात् ङीष्। मृद्विका—कनि 'केऽणः' इति ह्रस्वः। म्रदिमा—पृथ्वादिभ्य इमनिचि 'र ऋतः' इति रः। तदभावे मार्दवम्। स्वादुमृदुन इदं सौवादुमृदवम्—'द्वारादीनां च' इति वृद्धिप्रतिषेध ऐजागमश्च। मृद क्षोदे इति ऋकारोपधः क्र्यादौ ॥७६७॥

५०३. स्खद स्खदने। स्खदनं विद्रावणमिति स्वामी। स्खदते। चस्खदे। स्खदिता। स्खदयति। अचिस्खदत्। अस्खदि, अस्खादि। 'स्खदिरवपरिभ्यां च' इति मित्संज्ञानिषेधस्य वक्ष्यमाणत्वात् अवस्खादयति। परिस्खादयति इत्यत्र मित्त्वं न भवति। 'अपावपरिभ्यः' इति बोधिन्यासे पठ्यते, तन्मते—अपस्खादयति इत्यत्रापि मित्त्वं न भवति ॥७६८॥

५०४. क्षजि गतिदानयोः। क्षज इति कौशिकः। क्षञ्जते। चक्षञ्जे। क्षञ्जिता। चिक्षञ्जिषते। चाक्षञ्ज्यते। चाक्षङ्क्ति—झलि 'चोः कुः'इति कुत्वेन गत्वे'खरि च'इति चर्त्वम्। नकारस्यानुस्वारपरसवर्णौ। क्षञ्जयति। अचिक्षञ्जत्। अक्षञ्जि, अक्षाञ्जि। क्षञ्जंक्षञ्जम्। क्षाञ्जंक्षाञ्जम्। मित्त्वसामर्थ्यादनुपधात्वेऽपि 'चिण्णमुलोः' इति दीर्घविकल्पो भवतीति मैत्रेयसुधाकरादयः। क्षञ्जा इति गुरुमत्त्वादङि सिद्ध्यति। एवमन्येषामपि संयोगान्तानां दध्यादीनां मित्त्वसामर्थ्यात् दीर्घविकल्पः ॥७६९॥

५०५. दक्ष गतिशासनयोः। वृद्धिशैघ्र्ययोरनुदात्तेदयं पठितस्तस्येहार्थविशेषे मित्त्वार्थोनुवादः। दक्षयति। अददक्षत्। अदाक्षि, अदक्षि इत्यादि ॥७७०॥

५०६. क्रप कृपायां गतौ। क्रपते। चक्रपे। क्रपिता। चिक्रपिषते। चाक्रप्यते। चाक्रप्ति। क्रपयति। अचिक्रपत्। अक्रपि, अक्रापि इत्यादि। अस्येह पाठो मित्त्वार्थः, न तु षित्त्वार्थः; यतः 'क्रपेः सम्प्रसारणं च' इति भिदादिपाठात् तत्फलमङ्, सिद्ध्यति कृपा इति। कृपाणः–'युधिबुधिदृशिभ्यः किच्च'इत्यानच् बाहुलकादस्मादपि। कृपणः—बाहुलकादेव 'रञ्जेः क्युन्' इति क्युन् अस्मादपि। कृपीटः—'कृतॄकृपिभ्यः कीटन्'इति कीटन्। अत्र '''कृपो रो लः'इति लत्वाभावार्थं कृपिस्थाने क्रपिः पठितव्यः'' इति 'कृपो रो लः' इत्यत्र भाष्यादौ स्थितम्। कर्पूरम्–'खर्जपिञ्जादिभ्य ऊरोलचौ' इत्यत्रापि क्रपिग्रहणादूरः। कृपाणादौ सर्वत्र बाहुलकात् सम्प्रसारणम्। यद्वा—सर्व एवैते कृपेरेव, 'लत्वाभावो बहुवचनात्' इति लत्वसूत्रे उक्तम् ॥७७१॥

५०७. कदि क्रदि क्लदि वैक्लव्ये। अत्र क्षीरस्वामी एवं पठित्वाह—'वैकल्ये इति चन्द्रः। कथ क्रद क्लद इति नन्दी' इति। मैत्रेयस्तु—कदिक्रदी द्वाविदितौ पठित्वा क्रद क्लद इति द्वावनिदितावाह। तत्रेदितोरन्त्यः सरेफः, आद्यो नीरेफः; अनिदितोस्त्वाद्यः सरेफः, अपरो लकारवान्। वर्द्धमानोऽपि मैत्रेयवल्लकारवन्तमिदितं नात्र पठति। यदाह—'ग्रथिकन्दिक्रन्दिदक्ष्यादीनां घटादौ पाठः चिण्णमुलोर्वृद्ध्यर्थः' इति। अत्र कदिक्रदिक्लदीनामाह्वानरोदनयोः परस्मैपदिषु गतानां पुनरिहोपादानं न केवलं मित्त्वार्थम्; किन्त्वात्मनेपदिषु पाठसामर्थ्यात्तदर्थमपि। कन्दते। चकन्दे। कन्दिता। चिकन्दिषते। चाकन्द्यते। चाकन्ति। कन्दयति। अचकन्दत्। अकान्दि, अकन्दि। कन्दंकन्दम्, कान्दंकान्दम् इत्यादि त्वजिवत्। मित्त्वसामर्थ्यादनुपधाया अपि दीर्घविकल्पः॥ एवं क्रन्दते॥ क्लन्दते इत्यादि। अनिदित्पाठे कदते। कदयति। अकदि, अकादि इत्यादि॥ एवं क्रदते॥ क्लदते इत्यादि। कन्दनम्। कन्दलः—बाहुलकात्कलः। कन्दली—गौरादित्वान्ङीष्॥७७२-७७४॥

५०८. ञित्वरा सम्भ्रमे। त्वरते। तत्वरे। त्वरिता। तित्वरिषते। तात्वर्यते। तातूर्ति। तातूर्तः। तात्वरति। तातूर्षि। तातूर्थः। तातूर्मि—'ज्वरत्वर' इत्युपधावकारयोः कौ झलादावनुनासिकादौ च झलि क्ङिति ऊठ्। लोटि हेरपित्त्वान्ङित्त्वादूठि—तातूर्हि। त्वरयति। अतत्वरत्—'अत् स्मृदृत्वर' इत्यभ्यासस्यात्वम्। इत्वापवादः। अत्वरि, अत्वारि। त्वरंत्वरम्, त्वारंत्वारम्। तूर्णः। त्वरितः—'रुष्यमत्वर' इति निष्ठायामिड्विकल्पः। अस्यादित्त्वमात्मनेपदमात्रफलमिति मैत्रेयहरदत्तादयः। अन्ये त्वादित्त्वं यङ्लुकीडभावार्थमाहुः। न हि तत्र 'रुष्यमत्वर' इतीड्विकल्पः; 'एकाचः' इति तत्रानुवर्त्तनादिति। तेषामयमभिप्रायः—'आदितश्च' इत्यत्राव्यभिचारादेकाज्ग्रहणं न सम्बध्यते। न चावयवेऽचरितार्थमादित्त्वं यङ्लुगन्तार्थमपि स्यात्; तस्य धात्वन्तरत्वात्। त्वरतेस्त्वादित्त्वं नावयवे चरितार्थमिति सामर्थ्याद्यङ्लुगन्तार्थमिति, मैवम्; 'प्रयोजनकल्पनायामयमेव प्रकारः' इति नियमाभावात्। यदादित्त्वसामर्थ्यादिड्विकल्पे नैकाजिति सम्बध्यते, तेन तत्र त्वरिग्रहणं यङ्लुगर्थम्। प्रकृतौ त्वादित्त्वात्प्रतिषेध एवेति वक्तुं शक्यते। एवं हि आदित्त्वं प्रकृत्यर्थमेव भवति। तस्मान्मैत्रेयाद्युक्तमेव ज्यायः। तूः। तूरौ। तूरः—'ज्वरत्वर' इत्यूठ्॥७७५॥

५०९. घटादयः षितः।

५१०. उदात्ता अनुदात्तेतः। षित्फलमङुदाहृतः।

एवमात्मनेपदिनः समाप्य परस्मैपदिन आह—

५११. ज्वर रोगे। एतदादयः फणान्ता उदात्ता उदात्तेतः। ज्वरति। जज्वार। ज्वरिष्यति। ज्वरतु। अज्वरत्। ज्वरेत्। ज्वर्यात्। अज्वारीत्—'अतो ल्रान्तस्य' इति वृद्धिः। जिज्वरिषति। जाज्वर्यते। जाजूर्ति। जाजूर्तः। ज्वरयति।

अजज्वरत् । 'अत्स्मृ' इत्यादिनाभ्यासस्यात्वम् । अज्वरि, अज्वारि इत्यादि । ज्वरितः । जूः । जूरौ । जूरः—'जरत्वर' इत्यूठ् । सञ्ज्वारी—'सम्पृच' इति घिनुण् । 'रुजार्थानाम्' इत्यत्र अज्वरेरिति वचनात् कर्मणि षष्ठी न भवति । चोरं ज्वरयति रोगः ॥७७६॥

५१२. गड सेचने । गडति । जगाड । गडिता । जिगडिषति । जागड्यते । जागट्टि । गडयति । अजीगडत् । अगडि, अगाडि इत्यादि । गडु अस्यास्तीति गडुलः—'सिध्मादिभ्यश्च' इति लच् । अत्रैव वा पाठात् बाहुलकात् वा उप्रत्ययः । गडुली—गौरादित्वात् ङीष् । कण्ठे गडुरस्य गडुकण्ठः—'सप्तम्याः पूर्वनिपाते प्राप्ते गड्वादिभ्यः परवचनम्' इत्युक्तत्वात् सप्तम्यन्तस्य पूर्वप्रयोगो न भवति । अत्र वृत्तिः 'कथं वह्रेगडुरिति ? प्राप्तस्य चाबाधा व्याख्येया' इति[1] । 'अमूर्द्धमस्तकात्' इति अलुक् । गण्डति इति वदनैकदेशे गतम् ॥७७७॥

५१३. हेड वेष्टने । 'हेडृ अनादरे' इति आत्मनेपदिषु गतः, तस्य परस्मैपदिषु अनुवादसामर्थ्यात् परस्मैपदमपि भवति । अन्यथा 'घटादयः षितः' इत्यस्यानन्तरं परस्मैपदिभ्यो ज्वरादिभ्यः पूर्वमेवात्मनेपदिनमेवानुवदेत् । इहायमनृदित्पठ्यते, पूर्वस्तु ऋदिदिति धात्वन्तरत्वं नाशङ्क्यम्; यत ऋदितोनुवादेऽपि मित्त्वात् ह्रस्वत्वेन भाव्यमित्युत्सृष्टानुबन्धोऽयमनुवादः । हेडति । जिहेड । हेडिता । जिहेडिषति । हिडयति । अजीहिडत् । अत्र मितां ह्रस्वो भवन् 'एच इग्घ्रस्वादेशे' इति नियमात् आन्तरतम्यादिकार एव ह्रस्वो भवति । अत एव ह्रस्वविधानसामर्थ्यात् पुनर्गुणो न भवति । अहिडि अहीडि, इत्यादि । 'चिण्णमुलोः' इति दीर्घविकल्पे 'असिद्धवदत्र' इति ह्रस्वस्य नासिद्धत्वम्, व्याश्रयत्वात् । णिजाश्रयो ह्रस्वः, चिण्णमुल्परण्याश्रयो दीर्घविकल्पः । एवमाद्यर्थं हि तत्र दीर्घग्रहणम्, अन्यथा ह्रस्व एव विकल्प्येत । अनादरार्थस्य हेडयति ॥७७८॥

५१४. वट भट परिभाषणे । वट वेष्टने, भट भृताविति पठितयोः परिभाषणे मित्त्वार्थोऽयमनुवादः । वटयति । भटयति । अवटि, अवाटि । अभटि, अभाटि । अत्र पुरुषकारे 'वटेत्यप्याद्यो बहुषु कोशेषु दृश्यते' इति[2] ॥७७९-७८०॥

५१५. नट नृत्तौ । पूर्वत्र 'नृतिर्नाट्यम्' इत्युक्तत्वात् इह नृतिशब्देन ततोऽन्योऽर्थो नृत्तनृत्यलक्षणः, चलनादिलक्षणश्चोच्यते । अत्र मैत्रेयः—'गताविव्येके, नताविव्यन्ये' इति । स्वामी च नट नताविति पठित्वा 'नटयति शाखाम्' इत्युदाहृत्य 'नृत्तौ नाटयति' इति । नटयति । अनटि, अनटि इत्यादि । अयं णोपदेश इति प्रागुक्तम् ॥७८१॥

५१६. ष्टक प्रतिघाते । स्तकति । तस्ताक । स्तकिता । तिस्तकिषति । तास्तक्यते ।

---

१. काशि० २।२।३९ (पा० सू०) । २. दै० ६२ पृ० ।

तास्तक्ति । स्तकयति । अतिष्टकत् । अस्तकि, अस्ताकि इत्यादि । अत्र दन्त्यादिरपि क्वचित्पठ्यते, तत् षोपदेशलक्षणविरुद्धम् ॥७८२॥

५१७. चक तृप्तौ । चकति । चचाक । चकिता । अचकीत्, अचाकीत् । चकयति । अचीचकत् । अचकि, अचाकि इत्यादि । अस्यात्मनेपदिषु पठितस्य परस्मैपदिष्वनुवादात्परस्मैपदं हेडतिवत् । अत्र स्वामी–'अयं तृप्तिप्रतिघातयोः पूर्वं पठितः तृप्तिमात्रे' इत्यर्थपाठं व्यत्यास्थत । शाकटायनस्तु–उभयत्रोभयार्थत्वमाह । धनपालस्तु पुनर्यथास्वामि पठित्वा 'पूर्वं पठितस्यायमनुवादः' इति आत्मनेपदमुदाजहार । तन्मते परस्मैपदिष्वनुवादो व्यर्थः स्यात् ॥७८३॥

५१८. कखे हसने । कखति । चकाख । चकखतुः । कखिता । अकखीत्—एदित्वात्सिचि वृद्ध्यभावः । चिकखिषति । चाकख्यते । चाकक्ति । कखयति । अचीकखत् । अकखि, अकाखि इत्यादि ॥७८४॥

५१९. रगे शङ्कायाम् ।

५२०. लगे सङ्गे । रगति । लगति इत्यादि कखिवत् । लग्नः—'क्षुब्धस्वान्त' इति अनिट्त्वनत्वे निष्ठायां निपात्येते । अन्यत्र लगितम् । रङ्गतिलङ्गती गत्यर्थेषु गतौ ॥७८५-७८६॥

५२१. ह्लगे ह्वगे षगे[1] ष्टगे[2] संवरणे। क्वचित्कोशे स्थगे इति दन्त्यादिरपि पठ्यते, तत् षोपदेशलक्षणविरुद्धम् । ह्लगति । जह्लाग । अह्लगीत् । जिह्लगिषति । जाह्लाग्यते । जाह्लक्ति । ह्लगयति । अजिह्लगत् । अह्लागि, अह्लगि ॥ एवं ह्वगति इत्यादि ॥ सगति । ससाग । सेगतुः । सेगुः । आदेशादित्वमनैमित्तिकम्, न तु लिण्निमित्तमिति एत्वाभ्यासलोपौ । असगीत् । सिसगिषति । सासग्यते । सासक्ति । सगयति । असीषगत् । असगि, असागि इति । स्थगति । तस्थाग । तस्थगतुः—अभ्यासे खयः शेषः । स्थगिता । अस्थागीत् । तिस्थगिषति । तास्थग्यते तास्थक्ति । स्थगयति । अतिस्थगत् । अस्थगि, अस्थागि इत्यादि ॥७८७-७९०॥

५२२. कगे नोच्यते । अत्र मैत्रेयः–'अस्यायमर्थः इति नोच्यते । क्रियासामान्यमर्थ इत्यर्थः । इह शास्त्रे कगे नोच्यते इत्येके' । स्वामी तु 'अस्यायमर्थ इति नोच्यते; अनेकार्थत्वात् । नोच्यत इति योऽर्थस्तत्रार्थे कगिरित्येके' इत्युक्त्वा क्रियासामान्यमस्यार्थः' इत्याहान्ते । कगति . इत्यादि । कखादयोऽष्टौ एदितः ॥७९१॥

५२३. अक अग कुटिलायां गतौ। अकति। आक । अकिता। मा भवानकीत् । अचिकिषति। अकयति। मा भवानचकत्। मा भवानाकि । मा भवानकि इत्यादि। अङ्कत इति लक्षणार्थे गतः ॥ अगति इत्यादि अकिवत् । अङ्गतीति गतौ गतम् ॥७९२-७९३॥

---

१. क्षीरतरङ्गिण्यादौ । २-२. 'ष्टुगे स्थगे' इति क्षीरस्वामी ।

५२४. कण रण गतौ। कणयति। अचीकणत्। अकणि इत्यादि। एवं रणयति इत्यादि। 'काण्यादीनां वा' इत्युपधाह्रस्वविकल्पो न शङ्क्यः, ह्रस्वभाविन्या उपधाया एवाभावात्। कणति रणतीति शब्दार्थे गतौ। तयोः काणयति। राणयति ॥७९४-७९५॥

५२५. चण शण[1] श्रण दाने च। चणिश्रण्योश्चौरादिकयोर्हेतुमण्णिचोऽभावात् स्वार्थे तु णौ 'नान्ये मितोऽहेतौ' इति मित्त्वनिषेधान्न तयोरिमावनुवादाविति धात्वन्तरभूतावेतौ। चणति। चचाण। चेणतुः। चणिता। अचणीत्, अचाणीत्। चिचणिषति। चञ्चण्यते। चञ्चण्टि। चञ्चाण्टः। चणयति। अचीचणत्। अचणि, अचाणि। इत्यादि। एवं शणति। श्रणति इत्यादि। शण गतावित्यन्ये। अन्त्यौ तालव्यादी ॥७९८

५२६. श्रथ[2] क्नथ[2] क्लथ हिंसार्थाः। श्रथति। शश्राथ। श्रथिता। शिश्रथिषति। शाश्रथ्यते। शाश्रत्ति। श्रथयति। अशिश्रथत्। अश्रथि, अश्राथि॥ एवं क्नथति॥ क्लथति। क्नथेस्तु 'जासिनिप्रहणनाटक्राथ' इत्यत्र क्राथेति निर्देशान्मित्त्वेऽपि वृद्धिरिति वृत्तितद्व्याख्यानेषु। तेन क्राथयति चोरस्येति भवति। मित्त्वफलं तु अक्नथि, अक्राथि इत्यादौ 'चिण्णमुलोः' इति दीर्घविकल्पः। तथा 'जासिनि' इत्यत्र हरदत्तः-"घटादिपाठस्तु 'घटादयः षितः' इत्यातिदेशिकोऽङ्यथा स्यात्, 'चिण्णमुलोः' इति दीर्घविकल्पश्च यथा स्यात्" इति। ननु 'घटादयः षितः' इति मध्ये सूत्रणात्पूर्वेषामेव षित्त्वं न परेषामिति कथं षित्त्वमुक्तम्? सत्यम्; अत एव किलापरितुष्यन् स्वयमेव दीर्घविकल्पप्रयोजनमाह। एवं च दीर्घविकल्पश्चेति 'च' शब्दो वार्थो व्याख्येयः। अत्र न्यासे—"क्राथीति विकृतनिर्देशस्य प्रयोजनं मित्वेऽपि वृद्धिः"। तत्रैव 'षष्ठी' इत्युक्त्वा "चङन्ते वृद्ध्यभावाच्चोरमचिक्रथत्" इत्युक्तम्। तत्र शेषाधिकारात्पुनः समासनिवृत्तये पुनः शेषे षष्ठीविधानमिति शेषविवक्षायां षष्ठी दुर्वारा, कर्मविवक्षायां तु द्वितीया स्वतः सिद्धेति नेदं प्रयोजनम्। 'क्नथ हिंसायामिति युजादौ स्वरितेत्[3]' इति देवः। 'अयमात्मनेपदी' इति शाकटायनः। 'जासिनि' इत्यत्र क्राथीति निपातनाद् वृद्धिरिति वदतां वृत्तिकारादीनां नायं धातुरेवास्ति ॥७९९-८०१॥

५२७. चन च। हिंसायामिति शेषः। चनति। चनयति। अचनि, अचानि ॥८०२॥

५२८. वनु च नोच्यते। "न केवलं कगे यावद् वनु च नोच्यते" इति स्वामी। 'नोच्यते' इति कगतौ व्याख्यातम्। उदित्करणसामर्थ्यादयमन्यो धातुः, न तानादिकस्यायमनुवादः। क्रियासामान्ये मित्त्वमात्रार्थे ह्यनुवादे तानादिक एवानुवाद्यः, न पुनः शब्दार्थः सम्भक्त्यर्थो वा। गतौ वनतिरिति कोऽयं नियमः! तेन क्रियासामान्येऽपि वनति इत्यादि भवति। तथोदित्त्वाद् वान्त्वा, वनित्वा।

---

१. क्षीरस्वामी न पठति। २-२. 'श्नथ क्नथ क्रथ' इति ख. पुस्तके। 'श्रथ श्लथ क्लथ' इति मैत्रेयः। ३. दै० १०० का०।

वान्तम् इति। इदं च मित्त्वं 'ग्लास्नावनुवमां च' इत्यनुपसृष्टानां विकल्पस्य वक्ष्यमाणत्वात्सोपसर्गार्थम्। प्रवनयति। प्रावीवनत्। प्रावनि, प्रावानि इत्यादि ॥८०३॥

५२९. ज्वल दीप्तौ। ज्वल दीप्ताविति पठिष्यते, तस्य मित्त्वार्थोऽयमनुवादः। इदमपि मित्त्वं सोपसर्गविषयम्। 'ज्वलह्वलह्मलनमामनुपसर्गाद्वा' इत्यनुपसृष्टानां विकल्पस्य वक्ष्यमाणत्वात्। प्रज्वलयति। प्राज्वालि, प्राज्वलि इत्यादि ॥८०४॥

५३०. ह्वल ह्मल चलने। इमौ च सोपसर्गावेव नित्यं मित्त्वं प्रयोजयतः। ज्वलतिवदनुपसृष्टयोर्विकल्पस्य वक्ष्यमाणत्वात्। ह्वलति। जह्वाल। ह्वलिता। अह्वालीत्—'अतो लान्तस्य' इति नित्यं वृद्धिः। जिह्वलिषति। जाह्वल्यते। जाह्वल्ति। विह्वलयति। व्यह्वलि, व्यह्वालि इत्यादि। एवं ह्मलति इत्यादि। किवँह्वलयति इत्यत्र 'यवलपरे यवला वा' इति यवलपरे हकारे परे मकारस्य पक्षे यवलविधानात्सानुनासिको वकार उदाहार्यः। किं ह्मलयति इत्यत्र "हे मपरे वा" इति मकारपरे हकारे परे मकारस्य पक्षे मकारविधानान्मकारोऽप्युदाहार्यः ॥८०५-८०६॥

५३१. स्मृ आध्याने। 'स्मृ चिन्तायाम्' इत्यस्याध्याने मित्त्वार्थोऽयमनुवादः। आध्यानमुत्कण्ठापूर्वकं स्मरणम्। मातुः स्मरति। मातुः स्मरयति। अस्मरि, अस्मारि। अनाध्याने—स्मारयति। 'अधीगर्थ' इति कर्मणि षष्ठी। अधीगर्थाः स्मरणार्था इत्युक्तम् ॥८०७॥

५३२. दॄ भये। अत्र देवधनपालपूर्णचन्द्रा अमुं धात्वन्तरमाहुः। मैत्रेयस्तु दॄ विदारण इति क्र्यादिः, तस्येह मित्त्वार्थं पाठः। दृणन्तं प्रयुङ्क्ते दरयति। भयादन्यत्र दारयति। 'धात्वन्तराभ्युपगमे दरति' इत्येके इति। क्षीरस्वामी पुनर्दरतीत्युदाहृत्य 'क्रैयादिकस्यैव मित्त्वार्थमिहानुवाद इत्येके' इत्याह। अत्राभरणकारोऽमुं ह्रस्वान्तं धात्वन्तरं पठित्वा 'अत्स्मृदृत्वर' इत्यत्रापि ह्रस्वान्तं पठन् णौ चङि अददरत् इत्युदाजहार, तदसत्; तत्र दीर्घान्तपाठस्याविगीतत्वात्, दॄ विदारणे' इति व्याख्यातृभिरुपादानाच्च। किं च ह्रस्वान्ताभ्युपगमे 'शॄदॄप्रां ह्रस्वो वा' इति दृणातेर्विकल्पेन ह्रस्वविधानमनर्थकं स्यात्; यतः ह्रस्वान्तादस्मात् लिटि विदद्रतुरिति यणादेशे सिध्यति, विददरतुरिति च दृणातेः 'ऋच्छत्यॄताम्' इति गुणे। न च विदारणे रूपद्वयार्थं ह्रस्वविकल्पनं स्यादिति वाच्यम्; धातूनामनेकार्थत्वेन अस्यापि विदारणे वृत्तिसम्भवात्। तथा च—शृणातेः तत्र विशशरतुरिति भविष्यति, विशश्रतुरिति श्रा पाके इत्यस्य। न चार्थभेदः, धातूनामनेकार्थत्वादिति शॄग्रहणं प्रत्याख्याय ह्रस्वार्थमुक्तम् ॥८०८॥

५३३. नॄ नये। नरयति। अनरि, अनारि इत्यादि। अन्यत्र नारयति। मैत्रेयस्तु नामुमिच्छति, यदाह—'नॄ नय इत्यप्येके' इति ॥८०९॥

५३४. श्रा पाके। श्रै पाक इत्यग्रे कृतात्वस्य तस्य, श्रा इत्यादादिकस्य च

सामान्येनेदमनुकरणम्। लुग्विकरणालुग्विकरणयोरिति श्रायतेः, लक्षणप्रतिपदोक्तयोरिति श्रातेः। अत्र च सर्वत्र पाको विक्लित्तिरिति कैयटकारादयः। श्रपयति। अश्रपि, अश्रापि इत्यादि। विक्लेदयतीत्यर्थः। पाकादन्यत्र श्रापयति, स्वेदयतीत्यर्थः। धातूनामनेकार्थत्वात् स्वेदे वृत्तिः ॥८१०॥

५३५. मारणतोषणनिशामनेषु ज्ञा। एषु जानातिर्मिद्भवति। पशुं संज्ञपयति। मारयतीत्यर्थः। विष्णुं विज्ञपयति, सन्तोषयतीत्यर्थः। प्रज्ञपयति रूपं दर्शयतीत्यर्थः। कौमाराणां मतेनात्र सोपसर्गाः प्रदर्शिताः। अन्यत्र ज्ञापयति बोधयतीत्यर्थः। नेह निशामनं ज्ञानमात्रम्, किन्तु चक्षुःसाधनं ज्ञानम्। 'शम लक्ष आलोचने'इत्यस्य हीदं रूपम्, आलोचनञ्च चक्षुर्विज्ञाने प्रसिद्धम्। उक्तञ्चैवं वृत्तिकारादिभिः—'त्यदादिषु दृशोऽनालोचने कञ्च', 'पश्यार्थैश्चानालोचने'इत्यादौ। दैवमैत्रेयपुरुषकारादिष्वपि निशामनं चक्षुर्विज्ञानमिति स्थितम्। अत एव न्यासे 'श्लाघह्नुङ्स्था'इत्यत्र न्यासे 'ज्ञीप्स्यमान इति मारणादिषु पठितस्य घटादेः हेतुमण्णिचः'इत्युक्त्वा 'अथ वा'इत्यपरितोषात् 'ज्ञप मिच्च इति चौरादिकस्य स्वार्थे णौ'इति प्रक्रियान्तरमुक्तम्। 'चौरादिकश्च ज्ञानज्ञापनयोर्वर्त्तते' इति तत्रैव वक्ष्यते। तेन ज्ञापने ज्ञपयति ज्ञापयतीति रूपद्वयं भवतीति। तथा च दैवः—

'जानातीति क्नि सिध्येज्ज्ञपयति तु पुनर्मारणादौ घटादे-
श्चौ मिच्चेऽपीदमेव ज्ञप मिदिति पदं ज्ञापने मारणादौ।
तेनार्थात् ज्ञापनेऽर्थे ज्ञपयतिपदवत् ज्ञापयेदित्यपि स्यात्'[१] इति।

तथा मैत्रेयोऽपि इह—'अन्यत्र ज्ञापयति स्वामिनम्' इत्युदाहृत्य चुरादौ च 'ज्ञप मिच्च'इत्यत्र ज्ञपयतीति मितमुदाहृत्य 'ज्ञापने मारणादिषु चाभिधानमस्य' इत्याह। अत्र चन्द्रः—'मारणतोषणनिशानेषु'इति। वर्द्धमानश्चैवं पठित्वा 'निशातनं तीक्ष्णीकरणम्'इति चाभिधाय 'निशामने इति केचित् निशामनं दर्शनमित्याहुः'। स्वामिशाकटायनौ वर्द्धमानवदेव, तत्र प्रज्ञपयति शरमित्युदाहरणम्, तीक्ष्णीकरोतीत्यर्थः। अत्र मित्त्वं बोधिन्यासकारो न सहते; यदाह—'प्राचीनास्तु निशानं नेच्छन्ति'इति। एवं काश्यपसम्मताकारादयोऽपीति मैत्रेयाद्यङ्गीकृतो निशामनपाठ एव ज्यायान्। यत्तूक्तं 'श्लाघह्नुङ्'इत्यत्र 'ज्ञीप्स्यमानो ··· बोधयितुमभिप्रेतः'इति वृत्तिग्रन्थमुपादाय हरदत्तेन 'निशामनं ज्ञानमात्रं न चक्षुर्विज्ञानमेव, यदाह बोधयितुमभिप्रेतः' इति। कथं तर्हि प्रयुज्यते 'तज्ज्ञापयत्याचार्यः, विज्ञापना भर्तृषु सिद्धमेति' इति ? तस्मान्निशानेष्विति पाठः। शो तनूकरणे, ल्युट्। ज्ञीप्स्यमानो ज्ञपयितुमिष्यमाण इति प्रयोगः 'ज्ञप मिच्च' इति चुरादिणिजन्तस्येति नात्र ज्ञापयतिप्रयोग उपोद्बलं निशानमिति पाठाङ्गीकारस्य, यदस्माभिस्तत्सिद्धिरन्यथैवादौ साधिता। अपरे तु प्रतिपन्नाः—'निशामनं ज्ञानमात्रम्, ज्ञापयतिप्रयोगो ज्ञा नियोगे इति चौरादि-

१. दै० ८ का०।

कस्य; धातूनामनेकार्थत्वात्' इति। अनेकार्थताङ्गीकारे ज्ञान इव मारणतोषणयोरपि ज्ञापयतीति स्यात् ॥८११॥

५३६. कम्पने चलिः। चल कम्पन इति ज्वलादौ, तस्य मित्त्वार्थ एवानुवादः। चलयति शाखाम्। कम्पयतीत्यर्थः। अन्यत्र शीलं चालयति, अन्यथा करोतीत्यर्थः। 'हरतीत्यर्थः' इति स्वामी। सूत्रं चालयति। 'क्षिपतीत्यर्थः' इति सुधाकरः ॥८१२॥

५३७. छदिरूर्जने। ऊर्जनं प्राणनं बलनं वा। ऊर्ज बलप्राणनयोरिति हि धातुः। छद अपवारणे इति यौजादिकस्य स्वार्थे णिजभावे मित्त्वार्थोऽयमनुवादः। धातूनामनेकार्थत्वात् ऊर्जने वृत्तिः। छदन्तं प्रयुङ्क्ते छदयति। बलवन्तं करोतीत्यर्थः। अन्यत्र छादयति—अपवारयन्तं प्रयुङ्क्ते इत्यर्थः। यदा च छादयतीति स्वार्थे ण्यन्तस्तदा बलीभवति प्राणीभवति; अपवारयतीवेत्यर्थः। अत्र बलप्राणनयोरपि 'नान्ये मितोऽहेतौ' इत्यमित्त्वम्। अत्र स्वाम्यादयः छदि संवरणे इति चौरादिकं छदेत्यनिदितं पठन्तः 'तस्यायमूर्जने मित्त्वार्थोऽनुवादः' इत्याहुः; तदयुक्तम्; तस्यानिदित्पाठेऽपि नित्यण्यन्तत्वात् कर्तरि णिचोऽभावात् स्वार्थेऽपि णौ 'नान्ये मितः' इति मित्वं निषिद्धमेव। अत्र देवः—छदिं धात्वन्तरं मन्यते। यदाह—

"यौ वा णावपवारणे छदत इत्येकं द्वितीयं छदेद्,
अन्यच्छादयतिच्छदेदिति पुनः स्यादूर्जनेऽर्थे मितः"। इत्यादि[1]।

चौरादिकस्यैव स्मरत्यादिवत् अनेकार्थत्वाङ्गीकरणात् ऊर्जनेऽपि छदतीति सिद्धे धात्वन्तराऽङ्गीकरणं परस्मैपदमेव यथा स्यादिति तन्मतम्। अनुवादे हि तस्य स्वरितेत्त्वाच्छदतीतिवत् छदते इत्यपि स्यात्। यद्यप्येतत्फलं भवति, अथापि 'अन्यत्र पठितानामिह पाठो मित्त्वमात्रफल इति घटतौ व्यवस्थापितत्वात् पृथग्धातुत्वं न सुलभम्। किं चेह धातुनिर्देशार्थमिकारनिर्देशादवश्यमनुवादत्वमेष्टव्यम्, यत्फलमुक्तम्—'नित्यं परस्मैपदमेव यथा स्यात्' इति, तच्छाकटायनमतेनैव प्रयोजनम्; यतः चौरादिकः परस्मैपद्येव ॥८१३॥

५३८. जिह्वोन्मथने लडिः। लड विलासे इति पठितस्य मित्त्वार्थोऽयमनुवादः। उन्मथनं क्षोभणम्। अत्र मैत्रेयस्य 'जिह्वया उन्मथने' इति मतम्, यदाह—'लडयति जिह्वाम्' इति। अयमेव पक्षो गुप्तस्यापि[2]। पुरुषकारे—तु 'जिह्वायां उन्मथने, लडयति जिह्वाम्' इत्युक्तं भवति। अपरे[3] तु—जिह्वा चोन्मथनमिति समाहारद्वन्द्वं व्याचक्षते, जिह्वाशब्देन तद्विषयो व्यापार उच्यते। तत्र चोन्मथने चेति लडयति शत्रुम्, लडयति दधि चेति भवति। धनपालस्त्वेवं पठित्वा 'आर्याणां जिह्वोन्मथनयोरिति पाठः' इति। स्वामी तु 'जिह्वोन्मथनयोर्लडिः' इति, मन्थनमेव मथनम्। अन्यत्र लाडयति पुत्रम्। चल्यादीनां त्रयाणामिकारो धातुनिर्देशार्थः ॥८१४॥

---

१. दै० ११३ का०। २. दै० ६६ पृ०। ३. कौमारा इत्यर्थः। द्र०—दै० ६६ पृ०।

५३९. मदी हर्षग्लेपनयोः। दैवादिकस्य मित्त्वार्थोऽयमनुवादः। मदयति। हर्षयति ग्लेपयति वेत्यर्थः। ग्लेपनं दैन्यम्। अन्यत्र मादयति चित्तविकारमुत्पादयतीत्यर्थः। निमादयति अक्षरव्यञ्जनानि स्पष्टमुच्चारयतीत्यर्थः। तथा च प्रातिशाख्यम्—'उपलब्धिर्निमदः' इति, अक्षरव्यञ्जनानामिति शेषः ॥८१५॥

५४०. ध्वन शब्दे[1]। भाव्ययं मित्त्वार्थमनूद्यते। ध्वनयति घण्टाम्। अन्यत्र ध्वानयति अस्पष्टाक्षरमुच्चारयतीत्यर्थः। तथा च प्रातिशाख्यम्—'अक्षरव्यञ्जनानामुपलब्धिर्ध्वनिः' इति। अत्र भोजः—'दलिवलिस्खलिरणिध्वनित्रपिक्षपयश्च' इति पपाठ। तत्र ध्वनिर्वर्द्धमानानुसारेण पठितः, उदाहृतश्च। तथा रणिरपि। दल विदारणे, वल संवरणे, स्खल सञ्चलने, त्रपूष् लज्जायामिति गताः। तेषां णौ दलयति, वलयति, स्खलयति, त्रपयति इति भवति। क्षपीति क्षै क्षय इति वक्ष्यमाणस्य कृतात्वस्य पुकि निर्देशः। तथा च सुधाकरः—'क्षै क्षये णिचि पुकि मित्त्वे क्षपयति' इति ॥८१६॥

५४१. स्वन अवतंसने। स्वनयति, अन्यत्र स्वानयति। अयं शब्दार्थः पठिष्यते। अत्र मैत्रेयः—'ध्वन शब्दे। स्वन अवतंसन इत्येके' इति ॥८१७॥

५४२. घटादयो मितः। मित्संज्ञका इत्यर्थः।

५४३. जनीजॄष्क्नसुरञ्जोऽमन्ताश्च। चशब्दान्मित इत्यपेक्ष्यते। जनी प्रादुर्भावे, जॄष् वयोहानौ, क्नसु ह्वरणदीप्त्योः—दिवादयः। रञ्ज रागे—भूवादिश्च। अम् शब्दोऽन्ते येषां ते अमन्ताः, यथासम्भवं सर्वेषु विकरणेषु। ते च मितः। जनयति। जरयति। जॄषिति षिन्निर्देशात् जॄणातेरमित्त्वात् जारयति इति बोधिन्यासादौ। मैत्रेयो जॄणातेः स्थाने 'झॄ इत्येके' इति चतुर्थादिं च वक्ष्यति। क्नसयति। रजयति मृगान् रमयतीत्यर्थः। 'रञ्जेर्णौ मृगरमण उपसंख्यानम्' इति नलोपः। मृगादन्यत्र नलोपो न भवति—रञ्जयति पक्षिणः। तथा रमणादन्यत्र न नलोपः—रञ्जयति मृगान् तृणादिदानेन। नलोपाभावे मित्त्वफलम्—अरञ्जि, अराञ्जि इत्यादौ 'चिण्णमुलोः' इति दीर्घविकल्पः। अमन्ताः खल्वपि—क्रमयति, गमयति इत्यादि। अत्र केचित्—'जनीजॄष्णसु' इति अक्कारं सूत्रं पठन्तः षकारञ्चोत्तरधातोरादिं व्याचक्षाणाः दैवादिकस्य निरसनार्थस्य स्नस्यतेः स्नसयति इति मित्त्वमाहुः। तथा च दिवादौ आत्रेयमैत्रेयौ—'ष्णसु निरसन इत्येके मित्' इति।

५४४. ज्वलह्वलह्मलनमामनुपसर्गाद्वा। ज्वलादीनां वा मित्त्वं भवति। उपसर्गात् परेषां नायं विकल्प इत्यर्थः। क्वचित्तु पठ्यते—'ज्वलह्वलह्मलनमोऽनुपसर्गाद् वा' इति, तत्र न क्लेशः। मित इति सम्बन्धः। ज्वलादीनां पूर्वत्र पाठात् प्राप्तिः, नमेस्त्वमन्तत्वात्। ज्वलयति, ज्वालयति। ह्वलयति, ह्वालयति। ह्मलयति, ह्मालयति[2]।

---

१. क्षीरस्वामी नेदं सूत्रं पठति। 'ध्वन स्वन शब्दे' इति मैत्रेयः। २. 'ह्मलचल' इति क्षीरस्वामी।

नमयति, नामयति। उपसृष्टे तु नित्यं मित्त्वे—प्रज्वलयति इत्यादि। उन्नामयति इति प्रयोगो घञन्तात् 'तत्करोति' इति णौ। एवमन्येषामपीदृशां निर्वाहः। 'मितां ह्रस्वः' इत्यत्र वृत्तौ "'वा चित्तविरागे' इत्यतो वेत्यनुवृत्तेर्व्यवस्थितविभाषाविज्ञानाच्च संक्रामयति इत्यादि सिद्धिः" इति। यत्तु सुधाकरोक्तम् 'घञन्तादुत्क्रामशब्दात् 'तत्करोति'इति णिचि उत्क्रामयति इति, तदयुक्तम्; 'नोदात्तोपदेशस्य'इति वृद्धिनिषेधात् उत्क्रामशब्दस्यैवाभावात्।

५४५. 'ग्लास्नावनुवमां च। 'अनुपसर्गाद्वा'इति वर्त्तते। पूर्ववद् व्याख्यानम्। अत्रापि पूर्ववत् क्वचित् 'ग्लास्नावनुवमश्च'इति प्रथमान्तं पठ्यते। ग्लै हर्षक्षये। अत्र स्नेति 'ष्णै शौचवेष्टनयोः' इति वक्ष्यमाणस्य 'ष्णा शौचे' इत्यादादिकस्य च ग्रहणम्, श्रा पाक इत्यत्रोक्तन्यायेन। 'वनु च नोच्यते' इति इह पठितो वनतिः अनन्तरस्य विधिरिति न्यायादनूद्यते, न तु तानादिको वनोतिः। टुवम उद्गिरणे, अमन्तश्चायम्। वन्वमोः प्राप्ते, ग्लास्नोरप्राप्ते इत्युभयत्रविभाषेयम्। ग्लपयति, ग्लापयति। स्नपयति, स्नापयति। वनयति, वानयति। वमयति, वामयति। ग्लास्नोरुपसृष्टयोर्मित्त्वाभावात्—प्रग्लापयति, प्रस्नापयति इत्येव। वनुवमोस्तु—नियमितत्वात् प्रवनयति। प्रवमयतीत्येव।

५४६. न कम्यमिचमाम्। कमु कान्तौ, अम गत्यादौ, चमु अदने—एषाममन्तत्वात् मित्त्वे प्राप्ते निषिध्यते। कामयते। आमयति। आचामयति।

५४७. शमोऽदर्शने। शम उपशमने दिवादिः। अयं च दर्शने न मिदमन्तोऽपि। निशामयति रूपम्। 'अत्युत्कृष्टमिदं तीर्थं भारद्वाज निशामय' इति। 'शम लक्ष आलोचने' इति चौरादिकः। अस्मात् कारिते णावर्थो न सङ्गच्छते। दर्शनादन्यत्र निशमयति वचः। अत्र स्वामी—'नेत्यनपेक्ष्य अदर्शन इति पदं दर्शनादन्यत्र मित्' इति व्याचष्ट। एवमप्यत्र न फलभेदः ॥८१८॥

५४८. यमोऽपरिवेषणे। 'यम उपरमे' इत्यग्रे। अयं परिवेषणादन्यत्र भोजनाया[1] अन्यत्रामन्तोऽपि न मित्। आयामयति। द्राघयति व्यापारयति वेत्यर्थः। परिवेषणे तु यमयति ब्राह्मणान्। अत्र स्वाम्यादयो नेत्यनपेक्ष्य 'परिवेषणादन्यत्र मित्'इति व्याचक्षते, तद्वृत्तिविरुद्धम्। तथा हि—'न पादमि'[2]इत्यत्र आयामयति इत्युदाहृत्य 'यमोऽपरिवेषणे इति मित्संज्ञा प्रतिषिध्यते' इति। तत्र न्यासे च—"तत्र हि 'न कम्यमिचमाम्'इत्यतो नेति प्रतिषेधोऽनुवर्त्तते"इति। तथा मैत्रेयादयोऽपि 'न' इत्यनुवृत्त्यैव व्याचक्षते। नियमयतीति प्रयोगोऽबन्तात् 'तत्करोति' इति णौ द्रष्टव्यः ॥८१९॥

५४९. स्वदिरवपरिभ्यां च। न मिदिति शेषः। अवस्वादयति। परिस्वादयति।

---

१. युजन्तोऽयं भोजनाशब्दः, तस्य च भोजनानुकूलव्यापार इत्यर्थः। २. 'यमः समुपनिविषु च' (पा० सू० १।३।६३) इत्यत्र।

'अपावपरिभ्यः' इति बोधिन्यासे। अत्रापि स्वाम्यादयो नेत्यनपेक्ष्य 'स्खदेः पूर्वं पाठात् सामान्येन प्राप्तं मित्वमुपसृष्टाद्यदि भवति अवाद्युपसृष्टादेव' इति व्याचक्षाणाः प्रस्खादयतीत्यादौ मित्त्वं नेच्छन्ति, इदं वृत्तिकारादीनामनभिमतम्; यतस्तैः सर्वत्र नेत्यपेक्ष्यते। एवं हि निषेधानन्तरं पाठ उपपद्यते; अन्यथा 'स्खद स्खदने' इत्यस्यानन्तरमेव अवपरिभ्यां चेति पठेत्। एवं हि द्विः स्खदिग्रहणं न कर्त्तव्यं भवति ॥८२०॥

५५०. फण गतौ। 'नेति निवृत्तम्, असम्भवात्' इति मैत्रेयः। 'निषेधात्पूर्वमपाठः फणादिकार्यानुरोधात्' इति च। फणति। पफाण। पफणतुः, फेणतुः। पफणिथ, फेणिथ। पफण, फेण। पफाण, पफण। पफणिव, फेणिव। पफणिम, फेणिम—'फणां च सप्तानाम्' इति किति लिटि थलि च सेटि एत्त्वाभ्यासलोपविकल्पः। फणिता इत्यादि। अफणीत्, अफाणीत्—'अतो हलादेः' इति वृद्धिविकल्पः। पिफणिषति। पम्फण्यते—अनुनासिकत्वान्नुक्। पम्फणीति, पम्फाण्टि। पम्फाण्टः—'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः। पम्फाण्हि इत्यत्र हेर्झलः परत्वाभावात् धिभावो न भवति। फणयति। अपीफणत्। 'अन्यत्र फाणयति तक्रम् निस्नेहयतीत्यर्थः'[1] इति स्वामिसम्मताकारौ। फाण्टम्—'क्षुब्धस्वान्त' इत्यादिना अनायासेऽनिट्त्वं निपात्यते। अत्रानायासशब्देनाल्पप्रयाससाध्यः कषायविशेष उच्यते। तथा हि—औषधस्य पञ्च कल्पनाः—रसः, कल्कः, शृतः, शीतः, क्वाथः। शीतो नाम क्षुण्णमौषधमुदके प्रक्षिप्य रात्रावधिवासितं यदुदकं प्रातः पीयते सः; तदेवोष्णोदके प्रक्षिप्य सद्योऽभिषुत्य पूत्वा पीयते स फाण्ट इति तद्विदः ॥८२१॥

५५१. वृत्। समाप्तो घटादिर्वृत्त इत्यर्थः। 'अस्मात्पूर्वं वृदित्येके' इति मैत्रेयः।

५५२. ज्वरादय उदात्ता उदात्तेतः।
५५३. राजृ दीप्तौ।
५५४. उदात्तः स्वरितेत्।

राजति। रराज। रेजतुः, रराजतुः। रेजिथ, रराजिथ। राजिता इत्यादि। तङि—राजते। रराजे। इत्यादि पूर्ववत्। रिराजिषति। रिराजिषते। राराज्यते। राराष्टि—व्रश्चादिना षत्वं झलि पदान्ते च। राजयति। अरराजत्—'नाग्लोपि' इत्यृदित्त्वादुपधाह्रस्वनिषेधः। सम्यक् राजते इति सम्राट्—'सत्सूद्विष' इत्यादिना क्विप्। 'मो राजि समः क्वौ' इति समो मकारस्य मकारः क्विबन्तेऽस्मिन् परे मोऽनुस्वरापवादः। सम्राजोऽपत्यं साम्राज्यः—'सम्राजः क्षत्रिये' इति कुर्वादिपाठात् क्षत्रियवचनादस्मादपत्ये ण्यः, अक्षत्रियादणि साम्राजः। राजत इति राट्—'अन्येभ्योऽपि दृश्यते' इति क्विप्। राष्ट्रम्—'ष्ट्रन्' इति ष्ट्रन्।

---

1. एतादृशः पाठः क्षीरतरङ्गिण्यां नोपलभ्यते।

'तितुत्र' इतीण्णषेधः। षित्त्वात् स्त्रियां राष्ट्री—स्वामिनीत्यर्थः। राष्ट्रियः—'राष्ट्रावारपाराद् घखौ' इति भावादौ शैषिकश्छापवादो घः। राजा—'कनिन्युवृषि' इत्यादिना कनिन्। दन्तानां राजा राजदन्तः—'राजदन्तादिषु परम्' इति षष्ठ्यन्तस्य परप्रयोगः। राजन्यः क्षत्रियः—'राजश्वशुराद्यत्' इति अपत्येऽर्थे यति व्युत्पत्तिः, जातिवचनस्त्वयम्। तथा च तत्र वार्त्तिकम्—'राज्ञोऽपत्ये जातिग्रहणम्' इति। जातिश्चेह क्षत्रियजातिरुच्यते। 'ये चाभावकर्मणोः' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपाभावः। क्षत्रियजातेरन्यत्राणि राजनः—'अन्' इति प्रकृतिभावः। राज्ञां समूहो राजकम्—'नस्तद्धिते' इति टिलोपः। 'गोत्रोक्षोष्ट्रोरभ्रराज' इति वुञ्। एवं राजन्यकम्—"आपत्यस्य च तद्धितेऽनाति" इति यकारस्य अनाति तद्धिते भसंज्ञानिमित्ते विधीयमानो लोपः 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' इति प्रकृतिभावान्न भवति। यद्वा—अयं यकारो 'राज्ञोऽपत्ये जातिग्रहणम्' इत्युक्तत्वान्नापत्यः। राज्ञ इदं राजकीयम्—'राज्ञः क च' इति छप्रत्ययः शैषिकः। कश्चान्तादेशः। राज्ञः कर्म भावो वा राज्यम्—पत्यन्तपुरोहितादिषु 'राजाऽसे' इति पाठादसमासोऽयम्। यकारस्य भावकर्मविषयत्वात् प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपः। समासे तु ष्यञ्—आधिराज्यम्। ब्राह्मणादिषु राजन्शब्दः पठ्यते, स हि तदन्तात् ष्यञर्थः; केवलस्य यको विधानात्। इदमेव 'राजासे' इत्येतद्वचनं ज्ञापकमत्र तदन्तत्वे। अत्रैके 'ब्राह्मणादेराकृतिगणत्वात् राजन्शब्दान्तात् ष्यञि सिद्धे तत्र राजन्शब्दस्य पाठसामर्थ्यात् केवलात् ष्यञपि भवति' इत्याहुः। तथा चावेष्ट्यधिकरणे शाबरभाष्यम्—'राज्यम्, तस्य कर्मणि ष्यञ्' इति। अधिको राजा अधिराजः—'कुगतिप्रादयः' इति समासः। 'राजाहःसखिभ्यष्टच्' इति राजाद्यन्तात् तत्पुरुषाट्टचि टिलोपः। अत्र 'लघ्वक्षरं पूर्वं निपतति' इति 'द्वन्द्वे घि' इति च लघ्वक्षरत्वात् घ्यन्तत्वात् सखिशब्दस्य पूर्वनिपाते कर्तव्ये राजन्शब्दं पूर्वं निपात्य सवर्णदीर्घेण निर्देशात् यस्य राजन्शब्दस्य सवर्णदीर्घप्रसङ्गस्तस्यैव टजिति ज्ञापनाल्लिङ्गविशिष्टपरिभाषया अधिराज्ञी इत्यादौ टज्न भवति। अयं समासान्तसमासार्थादुत्तरपदादकृत एव समासे भवतीत्युक्तम्, तेन पञ्चराजी इत्यादौ अकारान्तोत्तरपदसमाहारद्विगुत्वेन स्त्रियां ङीप् भवति। शोभनो राजा सुराजा, अतिराजा इत्यत्र 'न पूजनात्' इति समासान्तनिषेधः। तत्र 'स्वती पूजायाम्' इति परिगणितम्। प्रतिराजा इत्यत्र तु 'प्रतेरंश्वादयस्तत्पुरुषे' इति प्रतेः परेषामंश्वादीनामाद्युदात्तविधौ प्रतिराजा इति पाठात् समासान्ताभावः। किंराजा, अराजा इत्यत्र 'किमः क्षेपे', 'नञस्तत्पुरुषात्' इति समासान्ताभावः। महाराजो देवता अस्य माहाराजिकः—'महाराजप्रोष्ठपदाट्ठञ्' इति प्रथमान्ताद्देवतोपाधिकात् अस्येत्यर्थे ठञ्। महाराजो भक्तिर्भजनीयो यस्य माहाराजिकः—'महाराजाट्ठञ्'

इति प्रथमान्तात् भक्त्युपाधिकाद् अस्येत्यर्थे ठञ्। शोभनो राजा यस्यास्ति स राजन्वान्—'राजन्वान् सौराज्ये' इति मतुपि नलोपाभावो निपात्यते॥८२२॥

५५५. टुभ्राजृ[1] टुभ्राशृ टुम्लाशृ दीप्तौ।

५५६. उदाता अनुदात्तेतः।

अत्र स्वामी आद्यावधिकृत्य 'टुरुभयस्येत्येके' इत्याह। 'त्रयोऽपि टूवितः' इति मैत्रेयः। वृत्तिकारोऽप्यत्रैवानुकूलः। यदाह—'वा भ्राश' इत्यत्र 'टुभ्राशृ टुभ्लाशृ' इति। तथा 'फणां च सप्तानाम्' इत्यत्र न्यासपदमञ्जर्योः त्रयोऽपि टूवितः पठ्यन्ते। तस्मादयमेव पाठो बहूनां सम्मतः। भ्राजतेः पठितस्यापीह पाठः फणादित्वेन किति लिट्येत्वाभ्यासलोपविकल्पार्थः। टूवित्त्वं तु न फलं भवति; तत्रापि टुशब्दस्यासङ्क्तुं शक्यत्वात्। अनेनैव सिद्धे तस्य पाठो व्रश्चादिषत्वनिवृत्त्यर्थं इति तत्रैवोक्तम्। भ्राजते। बभ्राजे। भ्रेजे। भ्राजिता इत्यादि। बाभ्राष्टि। अबाभ्राट् इत्यादौ व्रश्चादिषत्वम्। भ्राजथुः—'ट्वितोऽथुच्'। न भ्राजते इति नभ्राट्—'नभ्राण्नपात्' इति नञः प्रकृतिभावः। चङ्परे णौ 'भ्राज' इत्यादिना उपधाह्रस्वविकल्पनात् अबभ्रजत्, अबभ्राजत्। अस्यापि ऋदित्त्वं पूर्ववत् अनुदात्तेत्त्वमात्रफलम्। भ्राष्ट्रम्—ष्ट्रन्। भ्राष्ट्रमिन्ध इति भ्राष्ट्रमिन्धः—कर्मण्यण्। 'भ्राष्ट्राग्न्योरिन्धे' इति मुम्॥ भ्राशते। बभ्राशे। भ्रेशे। भ्राशिता। भ्राशिष्यते। भ्राशताम्। अभ्राशत। भ्राशेत। आशिषि—भ्राशिषीष्ट। अभ्राशिष्ट। सार्वधातुके 'वा भ्राश' इत्यादिना पक्षे शपोऽपवादे श्यनि भ्राश्यते। भ्राश्यताम्। अभ्राश्यत। भ्राश्येत इति भवति। बिभ्राशिषते। बाभ्राष्टि। भ्राशयति। अबभ्राशत्—ऋदित्त्वान्नोपधाह्रस्वः॥ म्लाशते, सर्वं भ्राशतिवत्। भ्राशथुः। म्लाशथुः—टूवित्त्वादथुच्॥८२३-८२५॥

५५७. स्यमु स्वन ध्वन[2] शब्दे। स्यमादयः क्षरत्यन्ता उदात्ता उदात्तेतः। स्यमति। सस्याम। सस्यमतुः, स्येमतुः। सस्यमुः, स्येमुः। सस्यमिथ, स्येमिथ। इत्यादि। अस्यमीत् इत्यत्र 'अतो हलादेः' इति वृद्धिः 'ह्म्यन्त' इति निषिध्यते। सिस्यमिषति। सेसिम्यते—'स्वपिस्यमिव्येञां यङि' इति सम्प्रसारणे द्विर्वचने अभ्यासस्य गुणः। संस्यमीति, संस्यन्ति—यङो लुका लुप्तत्वात् तत्परत्वाभावान्न सम्प्रसारणम्। 'नुगतोऽनुनासिकान्तस्य' इति अभ्यासस्य नुक्। संस्यान्त इत्यादौ 'अनुनासिकस्य क्विझलोः' इति दीर्घः। संस्यन्मि—'मो नो धातोः' 'म्वोश्च' इति नत्वम्। संस्यांहि इत्यत्र पूर्वमनुनासिकस्य दीर्घे पश्चात् 'नश्चापदान्तस्य झलि' इत्यनुस्वारः। असंस्यन् इत्यत्र पदान्तत्वात् 'मो नो धातोः' इति नः। स्यमयति। असिस्यमत्—अमन्तत्वान्मित्त्वम्—स्यमित्वा, स्यान्त्वा—उदित्त्वादिड्विकल्पः। अनिट्पक्षे 'अनुनासिकस्य' इति दीर्घः। स्यान्तः—'यस्य विभाषा' इत्यनिट्त्वम्। स्यमन्तको

---

१. 'भ्राजृ' इति क्षीरस्वामी। २. 'स्तन ध्वन' इति क्षीरस्वामी।

मणिः—बाहुलकाऽभ्मचि संज्ञायां कन्। अयं चुरादौ वितर्कार्थः ॥ स्वनति। सस्वान। सस्वनतुः, स्वेनतुः। स्वनिता इत्यादि। अस्वनीत्, अस्वानीत्—'अतो हलादेः' इति वा वृद्धिः। सिस्वनिषति। संस्वन्यते। संस्वन्ति। संस्वान्तः। स्वानयति। असिस्वनत्। शब्दे अघटादित्वान्न मित्त्वम्। विष्वणति। अवष्वणति—'वेश्च स्वनः' इति षत्वम्। चकारेणावादित्यनुकृष्यते। विष्वणनं सशब्दभोजनम्। तथा च वृत्तौ—'अभ्यवहारक्रियाविशेषोऽभिधीयते यत्र स्वननमस्ति, सशब्दं भुङ्क्ते इत्यर्थः' इति। पिनाकी तु 'भुञ्जानः किञ्चिच्छब्दं करोति' इति। काश्यपस्तु भोजनमेवार्थमाह। बोधिन्यासेऽपि पक्षत्रयमपि दर्शितम्। विषष्वाण। विषिष्वणिषति इत्यादौ 'स्थादिष्वभ्यासेन' इत्युभयत्र षत्वम्। तच्चाषोपदेशार्थमवर्णाभ्यासार्थं षणि प्रतिषेधार्थं चेत्युक्तम्। व्यष्वणत्—'प्राक्सितात्' इति षत्वम्। अवषंष्वण्यत इत्यादौ 'नुम्विसर्जनीयः' इति 'वेश्च स्वनः' इति षत्वम्। उक्तं च—'अयोगवाहानामट्सु णत्वम्','शर्षु जश्भावषत्वे' इति। अयोगवाहाश्चानुस्वारविसर्जनीयोपध्मानीयजिह्वामूलीययमा उक्ताः। षत्वे कृते सर्वत्र 'रषाभ्याम्' इति णत्वम्। विषंष्वन्ति इत्यत्र णत्वस्य पूर्वत्रासिद्धत्वात् 'नश्चापदान्तस्य झलि' इत्यनुस्वारे परसवर्णो नकारः। तस्य पुनर्णत्वं न भवति, असिद्धत्वादेव। स्वनः, स्वानः—'स्वनहसोर्वा' इति वा अप्, तदभावे घञ्। उपसृष्टात्तु प्रस्वान इत्येव। निस्वानः, निस्वनः—'नौ गदनद' इत्यादिना घञपौ। स्वान्तम्—'क्षुब्धस्वान्त' इत्यादिना [1]निष्ठायामनिट्त्वं निपात्यते, मनोऽभिधानं चेत्। अन्यत्र स्वनितो मृदङ्गः। आङ्पूर्वादस्मात् 'रुष्यमत्वरसंघुषा' इति निष्ठायामिड्विकल्पः। इयं चोभयत्रविभाषेति मनसि, अन्यत्र च आस्वानितम, आस्वनितमिति ॥ फणादयो गताः ॥ ध्वनति। दध्वान। ध्वनिता इत्यादि स्वनिवत्। ध्वान्तम्—'क्षुब्धस्वान्त' इति तस्य निष्ठायामनिट्त्वम्। अन्यत्र ध्वनितम्। ध्वनिः। अयं कथादिश्च। अत्र स्वनिध्वन्योर्मध्ये ष्टनेति क्वचित्[2] पठ्यते। ष्टन वन शब्दे इति पूर्वमेव गतत्वादयमनार्षः। केचित्पौनरुक्त्यपरिहाराय दन्त्यादिं पठन्ति, सोऽप्यनार्षः; षोपदेशलक्षणविरोधात्। अत एव 'फणां च' इत्यत्र 'सप्तानामिति किम्' इत्युक्त्वा ध्वनिः प्रत्युदाह्रियते, तथा च न्यासे—फणादीन् ध्वन्यन्तानष्ट पठित्वा 'वनिवर्जिताः शेषाः फणादयः सप्त' इत्युक्तम्। पदमञ्जर्यां चैवमष्ट पठित्वा 'अन्त्यवर्जं फणादयः' इत्युक्तम् ॥८२६-८२८॥

५५८. षम ष्टम वैक्लव्ये। समति। ससाम। सेमतुः। सेमिथ। समिता। सिसमिषति। संसम्यते। संसमीति। सम्सन्ति। ससान्तः। समयति। असीषमत् ॥ स्तमति। तस्ताम। तस्तमतुः। स्तमिता। तिस्तमिषति। तंस्तम्यते। तंस्तन्ति। स्तमयति। अतिष्टमत्। अत्र स्वाम्यादयः 'केचिदेतदन्ता घटादयः' इति। बोधिन्यासे तु 'ध्वन्यन्ताः'

---

१. म० भा०, ६ शि० सू०। २. 'ष्टन इति चन्द्रः' इति क्षीरतरङ्गिण्यामुक्तम्।

इति। तत्र फणतौ मित्त्वे न विवादः। राजादीनां त्वनन्तराणां चतुर्णां णौ चङ्युधाह्रत्वनिषेधार्थादृदित्करणालिङ्गान्न मित्त्वं भविष्यति। स्यमेरमन्तत्वात्स्वनिध्वन्योश्च पूर्वत्र पाठान्मित्त्वं सिद्धम्। सर्वैरपि शब्दार्थत्व एव मित्त्वं यथा स्यादिति पूर्वत्र पाठोऽङ्गीकृतः। षमिष्टम्योरप्यमन्तत्वादेव मित्त्वं सिद्धमिति आहोपुरुषिकामात्रमेवैतत्। ध्वन्यन्ताः, ष्टम्यन्ता घटादय इति मतद्वयम्। यत्तु तैरुक्तम्—'षमिष्टम्योरमन्तयोः पुनः पाठेनामन्तलक्षणस्य मित्त्वस्यानित्यत्वज्ञापनादुत्कामयतीत्यादिसिद्धिः' इति, तदस्माभिः 'अमन्ताश्च' इति मित्त्वविधौ प्रकारान्तरेणोपपादितम्[1] ॥८२९-८३०॥

५५९. ज्वल दीप्तौ। ज्वलति। जज्वाल। जज्वलतुः। ज्वलिता। अज्वालीत्—'अतो ल्रान्तस्य' इति वृद्धिः। जिज्वलिषति। जाज्वल्यते। जाज्वलीति, जाज्वल्ति। ज्वालयति, ज्वलयति, प्रज्वलयति—घटादिपाठान्नित्यं मित्त्वं सोपसर्गत्वे, अन्यदा तु 'ज्वलह्वल' इति विकल्पेन। घटादिपाठादेव ज्वालयतीति सिद्धाविहास्य पाठः—'ज्वलितिकसन्तेभ्यो णः' इति पाक्षिके णप्रत्यये ज्वाल इति यथा स्यादिति। ज्वलितीति इति शब्द आद्यर्थे। णाऽभावे पचाद्यचि ज्वलः। ज्वलनः—'जुचंक्रम्य'इति तच्छीलादौ युच् कर्त्तरि ॥८३१॥

५६०. चल कम्पने। चलति। चचाल। चेलतुः। चेलुः। चलिता इत्यादि पूर्ववत्। कम्पने घटादिपाठात् चलयति। अन्यत्र चालयति। चलः, चालः—'ज्वलिति'इति णविकल्पः। चलाचलः,चल इत्यर्थः। 'चरिचलिपतिवदीनां द्वित्वमच्याक्चाभ्यासस्य'इति द्विर्वचनम्, अभ्यासस्याागमश्च। चाचलिः—'सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ' इति तयोरन्यतरः। 'अतो लोपः', 'यस्य हलः' इति अल्लोपयलोपौ। चलनः—'चलनशब्दार्थादकर्मकाद्युच्' इति युच्। चल विलसने इति तुदादौ, चल गताविति चुरादौ ॥८३२॥

५६१. जल घातने[2]। 'घातनं तैक्ष्ण्यम्' इति स्वामी। जलति इत्यादि पूर्ववत्। जलः। जालः। लडयोरेकत्वस्मरणात् जडः। जडस्यापत्यं जाडारः—गोधाशब्दाद्ढ्रकापि गौधार इति सिद्धे 'आरगुदीचाम्' इत्यारग्वचनं 'जाडारः, पाण्डार इति सिद्ध्यर्थम्'इति तत्र स्थितम्। जाड्यम्। जडिमा-'वर्णदृढादिभ्यः ष्यञ्'इति ष्यञ्। दृढादित्वात् भावकर्मणोः ष्यञिमनिचौ। जल अपवारणे इति चुरादौ ॥८३३॥

५६२. टल ट्वल वैक्लव्ये। टलति इत्यादि चलतिवत्॥ ट्वलति। टट्वाल। ट्वलतुः। ट्वलिता। अट्वालीत् इत्यादि। ट्वालः, ट्वलः ॥८३४-८३५॥

५६३. ष्ठल[3] स्थाने। स्थानं प्रतिष्ठा। स्थलति। तस्थाल। स्थलिता। अस्थालीत्

---

१. पूर्वं २००-१ पृष्ठयोरवलोकनीयम्। २. 'घात्ये' इति क्षीरस्वामी। 'घान्ये' इति मैत्रेयः। ३. 'स्थल' इति क. पुस्तके, क्षीरतरङ्गिण्याञ्च।

इत्यादि। तिस्थलिषति। 'स्तौतिण्योरेव' इति न षत्वम्। तास्थल्यते। तास्थल्ति। स्थालयति। अतिष्ठलत्। स्थालम्, स्थलम्। स्थली—'जानपद' इत्यत्राकृत्रिमायां भूमौ ङीष्। अन्यत्र—स्थला। स्थाली—गौरादित्वात् ङीष्। विष्ठलम्—'विकुशमिपरिभ्यः स्थलम्' इति मूर्द्धन्यः। एवं कादिभ्यः। कपिष्ठलो गोत्रम्—'कपिष्ठलो गोत्रे' इति मूर्द्धन्यो निपात्यते। अन्यत्र कपीनां स्थलं कपिस्थलम् ॥८३६॥

५६४. हल विलेखने। विलेखनं कर्षणम्। हलति। जहाल। हलिता। अहालीत् इत्यादि। हलम्। हालम्। हलिः—इन्। हलिं गृह्णाति हलयति। अजहलत्—'मुण्डमिश्र' इत्यादिना गृह्णातीत्यर्थे णिचि "हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थम्" इतीकारस्यात्वे वृद्धौ कृतायामकृतायां वा लोपेऽग्लोप्यङ्गमित्यभ्यासस्य सन्वदित्वं न भवति। हलानां समूहो हल्या—'पाशादिभ्यो यः' इति पाशादिपाठात् समूहे यः। हलस्येदं हालिकम्—'हलसीराट्ठक्' इति षष्ठ्यन्तात् इदमर्थे ठक्। हलं वहति हालिकः बलीवर्दः—'हलसीराट्ठक्' इति द्वितीयान्ताद्वहतीत्यर्थे ठक्। हलस्य कर्षः हल्यः—कर्षः कर्षणं कृष्यमाणं वा। 'मतजनहलात् करणजल्पकर्षेषु' इति षष्ठ्यन्तात् कर्षेऽर्थे यत्। द्विहल्या भूः—'रथसीताहलेभ्यो यद्विधौ' इति तदन्तविधिः। न विद्यते हलिर्यस्य असौ अहलः—'नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम्' इति पक्षेऽच् समासान्तः। एवं दुःसुपूर्वपदादपि। अत्र हलिहलशब्दाभ्यां बहुव्रीहिणा रूपद्वये सिद्धे पक्षे समासान्तविधानम् 'शेषाद्विभाषा' इति हल्यन्तात् कन्मा भूदिति। यस्माद्बहुव्रीहेः समासान्तो नोक्तः स शेषः। न चात्र हलिग्रहणमर्थभेदनिबन्धनं मन्तव्यम्। महद्धलं हलिः, हलमात्रं त्वन्यदिति नायमर्थभेदः किञ्चित्करः। यस्मादकारान्तेनापि समासो न दण्डवारित इति प्रकरणादिवशेनैवार्थविशेषावगतिः ॥८३७॥

५६५. णल गन्धने। 'बन्धने' इति काश्यपः। प्रणलति इत्यादि। नालः, नलः। नाली, प्रणाली—गौरादिर्ङीष्। डलयोरेकत्वस्मरणात् नडः। 'अव्युत्पन्नं प्रातिपदिकम्' इति हरदत्तः। नडानां समूहो नड्या—'पाशादिभ्यो यः' इति यः। नडा अस्मिन् देशे सन्तीति नड्वलः नड्वान्—'कुमुदनडवेतसेभ्यो ड्मतुप्', 'नडशादाड्ड्वलच्' इति चातुरर्थिको ड्मतुप् ड्वलच्च। नलिनम्—'द्रुदक्षिभ्यामिनन्' इति इनन् बाहुलकादस्मादपि। नलिनी—गौरादिषु दर्शनात् 'जातेरस्त्रीविषयात्' इति वा ङीष्। यद्वा—नलशब्दात् 'पुष्करादिभ्यो देशे' इति मत्वर्थीय इनौ ङीपि द्रष्टव्यः। नलं गन्धं ददातीति नलदं लामज्जकम् ॥८३८॥

५६६. पल गतौ[1]। पलति इत्यादि। पलम्—उन्मानविशेषः। पललं मांसम्—'कलत्रपश्च' इत्यत्र 'प्राक्प्रत्ययनिर्देशादन्येभ्यो भवति' इति कुण्डलादिवदस्मादपि

---

१. इतः पूर्वं मैत्रेयः 'गल गरणे' इत्यधिकं सूत्रं पठति।

कलप्रत्ययः। पलालम्—'स्था चति' इत्यालच् बाहुलकादस्मादपि। महत् पलालं पलाली—पिप्पलादित्वात् ङीष्। पलाली यस्यास्तीति पलालिनः—'शाकीपलालिदद्रुवां ह्रस्वत्वं च' इति पामादिपाठान्नप्रत्ययो ह्रस्वत्वं च। पाल रक्षणे इति चुरादौ ॥८३९॥

५६७. बल प्राणने धान्यावरोधे च। प्राणनं जीवनम्। धान्यमवरुध्यते यत्र कुसूलादौ तद्धान्यावरोधनम्, तद्व्यापार इत्यर्थः। बलति इत्यादि। बालः। बलम्—करणस्य कर्तृत्वोपचारादच्। बाला—अजादिपाठात् 'वयसि प्रथमे' इति ङीषं बाधित्वा टाप्। बलवान्। बलूलः—'वातदन्तबलललाटानामूङ् च' इति सिध्मादिपाठाल्लच्प्रत्यय ऊङ् चागमः। बलः पुरुषः—'अर्शआदिभ्योऽच्' इति मत्वर्थेऽच्। बाहुबली। ऊरुबली—'बलाद्बाहूरुपूर्वपदात्' इति पुष्करादिपाठादिनिर्मत्वर्थे। सर्वबली—तत्रैव 'सर्वादेश्च' इति पठ्यते। बलिः-'इन्' इतीन्प्रत्ययः। बल्यर्थास्तण्डुला बालेयाः-"छदिरुपधिबलेर्ढञ्"इति छदिबलिभ्यां विकृतवाचिभ्यां विकृत्यर्थायां प्रकृतौ ठञिति ठञ्। उपधेस्तु स्वार्थेऽयं प्रत्ययः। कुबेराय बलिः कुबेरबलिः—'चतुर्थी तदर्थार्थ' इति चतुर्थ्यन्तस्य तदर्थादिभिस्तत्पुरुषः। तदर्थेत्यर्थग्रहणम्, तस्मा इदं तदर्थम्। अन्यानि तु प्रातिपदिकानि। अयं चुरादौ मित् ॥८४०॥

५६८. पुल महत्त्वे। पोलति। पुपोल। पोलिता। पुपुलिषति। पुपोलिषति। पुलित्वा, पोलित्वा—'रलो व्युपधात्' इति क्त्वविकल्पः। पोपुल्यते। पोपुलीति। पोपोल्ति। पोलयति। अपूपुलत्—'उदुपधात्' इति भावादिकर्मणोर्निष्ठायाः सेटः कित्त्वविकल्पनात्—पुलितमनेन, पोलितमनेन इत्यादि। पोलः। णाभावे इगुपधलक्षणः कः–पुलः। पुलकः–संज्ञायां क्वुन्। पुलिनम्–बाहुलकादिननि गुणाभावः। पुलाकः—'बलाकादयश्च' इत्याकनन्तो निपातितः। अयं चुरादावपि। तुदादावपीति क्षीरस्वामी ॥८४१॥

५६९. कुल संस्त्याने बन्धुषु च। 'संस्त्यानं सङ्घातः' इति स्वामी। क्वचित्[1] 'सन्ताने' इति पठ्यते। सन्तानो विजातीयैरविच्छिन्नः प्रवाहः। बन्धुशब्देन तद्व्यापारः सम्बन्धोऽभिधीयते। कोलति इत्यादि पोलतिवत्। कुलस्यापत्यं कुलीनः। कुल्यः। कौलेयः। कुलशब्दो वृत्तौ तद्वति वर्तते। 'कुलात्खः', 'अपूर्वपदादन्यतरस्यां यड्ढकञौ' इति खयड्ढकञः। अत एवापूर्वपदग्रहणात् खस्तदन्तादपि। ब्राह्मणकुलीनः। महाकुलशब्दात् 'महाकुलादञ्खञौ' इति अञ्खञौ। अन्यतरस्यांग्रहणानुवृत्तेः खश्चेति माहाकुलः। माहाकुलीनः। महाकुलीनः इति भवति। दुष्कुलशब्दात् 'दुष्कुलाड्ढक्' इति ढक्—दौष्कुलेयः। अत्रान्यतरस्यांग्रहणानु-

---

१. मैत्रेयरक्षितविरचिते धातुप्रदीपे।

वृत्तेः खे दुष्कुलीनः। कौलेयकः श्वा—'कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु' इति यथासङ्ख्याच्छुन्यभिधेये कुलाड्ढकञ्। अमुष्य कुलस्य भावः आमुष्यकुलिका—मनोज्ञादिपाठाद् वुञ्। 'आमुष्यायणामुष्यपुत्रिकामुष्यकुलिका इत्युपसङ्ख्यानम्' इति षष्ठ्या अलुक्। स्वभावात्स्त्रीलिङ्गः। कौलकम्—अयं मनोज्ञादिः। निष्कुलाकरोति पशुम् निष्कुष्णातीत्यर्थः। 'निष्कुलान्निष्कोषणे' इति कृञो योगे निष्कोषणार्थान्निष्कुलशब्दाद् डाच्। निष्कोषणमन्तरवयवानां बहिर्निस्सारणम्। नास्ति कुलमस्य नकुलः—'नभ्राण्नपात्'इति नञः प्रकृतिभावः। कुलकम्—श्लोकसङ्घातविशेषः। संज्ञायां वुन्। कुलशब्दात्कन्वा ॥८४२॥

५७०. शल हुल पत्लृ गतौ।

५७१. हुल हिंसासंवरणयोश्च। अत्र मैत्रेयः—'चकारोऽत्रान्वाचये, गतावस्य तावत्प्रयोगः। क्वचित्तु हिंसासंवरणयोश्च' इति। क्वचित्तु पठ्यते 'शल ह्वल ह्मल पत्लृ गतौ। हुल हिंसासंवरणयोश्च' इति। अत्र पाठे चकाराद्गतौ चेति व्याख्येयम्। ह्वलतेर्ह्मलतेश्च घटादिपठितस्यापीह पाठो न विकल्पार्थः, घटादिपाठस्त्वर्थविशेषे मित्त्वार्थं इति बोद्धव्यम्। शलति। शशाल। शलिता इत्यादि। शालः। शाला। शल इति चलनसंवरणयोर्गतः॥ होलति इत्यादि पोलतिवत्॥ पतति। पपात। पेततुः। पतिता। अपप्तत्—लृदित्त्वादङ्। 'पतः पुम्' इत्यङि परे पुमागमः। पिपतिषति। 'तनिपतिदरिद्रातीनामुपसङ्ख्यानम्' इति वा इडागमः। अनिट्पक्षे 'सनि मीमाघुरभलभशकपतपदामच इस्' इति सकारादौ सनि विधीयमाने इस्भावे 'सस्यार्धधातुके' इति सस्य तत्वे पिच्छब्दस्य द्विर्वचने 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासस्य लोपः। 'अत्र' ग्रहणं 'सनिमीमा' इत्यादिचतुःसूत्रीविषये अभ्यासलोपार्थमिति स्थितम्। अभ्यासलोपोऽनर्थकत्वादन्त्यस्य न भवति, 'नानर्थकेऽलोन्त्यविधिः' इति। अन्ये तु—'अत्र' ग्रहणं सर्वाभ्यासलोपार्थमाहुः। तत्र मतेऽभ्यासलोपस्य सनिमीमादिचतुःसूत्रीविषयत्वमधिकाराद् बोद्धव्यम्। पित्सति। पनीपत्यते, पनीपत्ति—'नीग्वञ्चु' इति अभ्यासस्य नीक्। प्रणिपतति—'नेर्गद' इति णत्वम्। अड्व्यवायेऽपीदमिष्यते—प्रण्यपतत्। पतापतः—'चरिचलिपतिवदीनां द्वित्वमक् चाभ्यासस्य' इति पक्षे द्विर्वचनमक् चाभ्यासस्य। उत्पतिष्णुः—'अलङ्कृञ्' इत्यादिना इष्णुच्। पतनः—'जुचङ्क्रम्य' इत्यादिना युच्। पातुकः—'लषपतपद' इत्यादिना उकञ्। पतत्यनेनेति पत्त्रम्—'दाम्नीशस्' इत्यादिना करणे ष्ट्रन्। सर्वपत्त्रं व्याप्नोतीति सर्वपत्त्रीणः सारथिः—'तत्सर्वादेः' इत्यादिना सर्वपत्त्रं व्याप्नोतीत्यर्थे खः। सपत्त्राकरोति—सपत्त्रं शरं मृगकाये प्रवेशयतीत्यर्थः। निष्पत्त्राकरोति—सपत्त्रं शरमपरभागे निष्क्रामयतीत्यर्थः। 'सपत्त्र-

---

१. 'शलते' इति ख० पुस्तके।

निष्प्रत्त्रादतिव्यथने' इति कृञो योगे डाच्। अतिव्यथनमतिपीडा। गेहानुप्रपातमास्ते—"विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः" इति कर्मण्युपपदे व्याप्यमानत्वे आसेव्यमानत्वे च गम्यमाने णमुल्। तत्र व्याप्तिर्गुणेन क्रियया वाऽनवयवेन द्रव्याणां सम्बन्धः। सा चेह विश्यादिक्रियादिभिर्गेहादेः कर्मणः। आसेवा पौनःपुन्यम्, तच्च स्वभावात्क्रियायाः। तदयमर्थः—गेहङ्गेहमनुप्रपत्य आस्ते, गेहमनुप्रपत्यानुप्रपत्यास्ते' इति वा। आसिप्रयोगो धातुसम्बन्धे प्रत्ययविधानात्। तत्र व्याप्त्यासेवनयोः समासेनैवोक्तत्वात् 'नित्यवीप्सयोः' इति द्विर्वचनं न भवतीति भाष्यादौ स्थितम्। यदा 'तृतीयाप्रभृतीनि' इति समासाभावः, तदा गेहंगेहमनुप्रपातमास्ते, गेहमनुप्रपातमनुप्रपातम् इति द्विर्वचनं भवत्येव। तत्र नित्यता पौनःपुन्यम्, तच्च क्रियाविषयमिति तत्र क्रियावाचिनो द्विर्वचनम्। वीप्सा तु व्याप्तुमिच्छा, सा च द्रव्यविषयेति द्रव्यवचनस्य। अत्रासेवायाम् 'आभीक्ष्ण्ये णमुल् च' इति क्त्वाणमुलोर्विधानादेव णमुलि सिद्धे पुनर्विधानं द्वितीयान्तस्योपपदत्वार्थम्। तेन पाक्षिकः समासो भवति। क्त्वो निवृत्त्यर्थं तु न भवति, इष्टत्वात्तस्येति हि स्थितम्। आपततीति आपात्यः—'भव्यगेय'इति निपातनात्पक्षे कर्त्तरि ण्यत्। वावचनेन यथाप्राप्ताभ्यनुज्ञानात् आपात्यमनेन इति भावेऽपि ण्यद्भवति। पतितः—गत्यर्थत्वात्कर्त्तरि क्तः। नरकं पतितः नरकपतितः—'द्वितीयाश्रित' इति द्वितीयान्तस्य श्रितादिभिः समासः। स्वर्गात्पतितः स्वर्गपतितः—'अपेतापोढ' इति पञ्चमीतत्पुरुषः। 'अल्पशः' इति अल्पायाः पञ्चम्याः समासविधानात् क्वचित्समासो न भवति प्रासादात्पतित इत्यादौ। अत एव निपातनान्निष्ठायामिट्। अन्यथा 'तनिपति' इति सूत्रे विकल्पेट्कत्वात् 'यस्य विभाषा' इति इट्प्रतिषेधः स्यात्। अन्ये तु—कृतिप्रभृतीनां 'सेऽसिचि' इत्यादिना सकारादाविड्विकल्पनादेव निष्ठायामप्यनिट्त्वसिद्धावनिट्त्वार्थमिदिस्करणात् 'यस्य विभाषा' इत्यस्यानित्यत्वज्ञापनादित्याहुः। पापतिः—'सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ' इति किकिनोरन्यतरः। 'अतो लोपः', 'यस्य हलः' इति अल्लोपयलोपौ। अभ्यासस्य 'नीग्वञ्चु' इत्यादिना नीग् न भवति, सासह्यादीनां निपातनमिति वार्त्तिककारवचनात्। सन्निपातः—घञ्। तस्य शमनं कोपनं वा सान्निपातिकम्—'सन्निपाताच्चेति वक्तव्यम्' इति ठक्। पतङ्गः—'पतेरङ्गच् पक्षिणि' इत्यङ्गच्। पतत्रम्—'पतेरत्रन्' इत्यत्रन्। पतत्रिः—'पतेरत्रिच' इति त्रिन्प्रत्ययः, अगागमश्च। पतत्रिन्शब्दः पतत्रशब्दादिनौ मत्वर्थे। पातालम्—'पतिचण्डाभ्यामालञ्' इत्यालञ्, बाहुलकाद् वृद्धिः। केचिद् वृद्ध्यर्थमालञिति पठन्ति; तत् 'तद्युक्तादित्यत्राण्प्रकरणे कुलालवरुडकर्मारनिषादचण्डालमित्रामित्रेभ्यः छन्दसि' इति चण्डालात्स्वार्थेऽण्विधानादयुक्तम्। पताका—पिनाकादिर्बलाकादिर्वा आकप्रत्ययान्तः। पताकी—मत्वर्थीय इनिः। व्रीह्यादित्वात् पन्थाः—

'पतेस्थ च' इतीन्प्रत्ययः, तकारस्य च थकारः। 'पथिमथ्यृभुक्षामात्' इति आकारादेशोऽन्त्यस्य सौ परे 'इतोऽत्सर्वनामस्थाने' इति पथ्यादीनामिकारस्याकारे सवर्णदीर्घः। "थो न्थः" इति पथिमथोस्थस्य न्थादेशः सर्वनामस्थाने। पन्थानौ—सर्वनामस्थाने दीर्घः। शसाद्यजादौ पथः इत्यादि। "भस्य टेर्लोपः" भसंज्ञकानां पथ्यादीनां टेर्लोप इति टिलोपः। हलादौ नलोपः—पथिभ्याम् इत्यादि। विपथम्। कापथम्—'कुगतिप्रादयः' इति तत्पुरुषः। 'का पथ्यक्षयोः' इति पथ्यक्षयोरुत्तरपदयोः कुशब्दस्य कादेशः। त्रयाणां पन्थाः त्रिपथम्—'ऋक्पूरब्धूः' इति समासमात्रेऽकारः समासान्तः 'नस्तद्धिते' इति टिलोपः। 'पथः संख्याव्ययादेः' इति नपुंसकत्वम्। इदञ्च परवल्लिङ्गतापवाद इति विपथो देशः। विपथा नगरी इति बहुव्रीहौ न भवति। तथा पन्थानमतिक्रान्तः अतिपथ इत्यादौ 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इत्यादिना तत्पुरुषेऽपि न भवति। अत्र हि 'द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधः' इति परवल्लिङ्गता प्रतिषिध्यते। 'पथः संख्याव्ययात् परः' इति यदमरसिंहेन[1] नपुंसकत्वमुक्तं तदप्युत्तरपदार्थप्राधान्य एव। तथा च तत्र व्याख्यातारः—"प्रधानलिङ्गापवादत्वात् क्लीबविधानप्रस्तावादिह न भवति—अपथा नगरी, उत्पथो देश इति। कथं तर्हि 'व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः' इति[2] विपथकापथयोः पुंस्त्वमुक्तम्? तत्रैव व्याख्येयम्—"अस्त्यन्योऽकारान्तः पथिपर्यायः पथशब्दोऽर्द्धर्चादिपाठादुभयलिङ्गः। तेन समासात्पुंस्त्वम्" इति। 'विपथकापथौ पुन्नपुंसके' इति चाहुः सुभूतिचन्द्रादयः। पठितश्च काण्डशेषे अकारान्तः पथशब्दः—'पथः पन्थाश्च मार्गः स्यात्' इति[3]। शाक्यमुनिस्तु संख्याव्ययाभ्यां परस्य पथशब्दस्य पुंस्त्वमेवाह, तत् 'पथः संख्याव्ययादेः' इति वार्त्तिकविरोधात् तत्रत्यभाष्यकैयटवृत्त्यादिमहाग्रन्थविरोधात् अमरसिंहविरोधाच्च दुःस्थम्। अत्र कृतसमासान्तस्य निर्देशात् 'न पूजनात्', 'किमः क्षेपे', 'नञस्तत्पुरुषात्' इति यदा समासान्तो निषिध्यते तदा 'परवल्लिङ्गम्' इति पुंस्त्वमेव—सुपन्थाः, किंपन्थाः, अपन्थाः इति। 'न पूजनात्' इत्यत्र स्वत्योः परिगणनात् सत्पथ इत्यादौ समासान्तो भवति। 'अव्ययीभावश्च' इत्यत्र सुपथम् इति यदुदाहरणं तत्र सुशब्दस्य वैपुल्यमर्थो न पूजेति समासान्तलाभः। अपथम् इत्यत्र 'नञस्तत्पुरुषात्' इति निषेधस्य 'पथो विभाषा' इति विकल्पनात् समासान्तः। 'अपथं नपुंसकम्' इति नपुंसकत्वम्। 'पथः संख्याव्ययादेः' इत्येव सिद्धे किं सूत्रेणेत्याशङ्कायां कैयटः—'पूर्वकालत्वात् सूत्रस्य नायं दोषः' इति। यत्तूक्तम्—'अस्त्यकारान्तः पथशब्दः' इति, तत् 'पथो विभाषा' इति

---

१. अमरसिंहेन क्व नपुंसकत्वमुक्तमिति विद्वांस एव प्रमाणम्। सर्वत्र पुस्तकेषु पाठस्त्वेतादृगेवोपलभ्यते। २. अ० को० २।१।१६। ३. 'वाटः पथश्च मार्गश्च' इति मुद्रितत्रिकाण्डकोश(२।१।१९)पाठः।

इति सूत्रविरुद्धम्। सति हि तेन अपथम् इति सिद्ध्यति, नकारान्तेन च अपन्था इति, तत्किं सूत्रेण! पथि जातः पन्थकः—'पथः पन्थ च' इति सप्तम्यन्ताज्जातार्थे वुन्, पथश्च पन्थादेशः। पथोऽनपेतं पथ्यम्—'धर्मपथ्यर्थन्यायादनपेते' इति पञ्चम्यन्तादनपेतेऽर्थे यत्। पथि साधु पाथेयम्—'पथ्यतिथि' इति ढञ्। पन्थानं गच्छतीति पथिकः। पथिकी—'पथः ष्कन्' इति द्वितीयान्ताद्गच्छतीत्यर्थे ष्कन्, षित्त्वात् स्त्रियां ङीष्। पन्थानं नित्यं गच्छतीति विवक्षायाम् 'पन्थो ण नित्यम्' इति णप्रत्यये पान्थः। अत एव निर्देशात् णसन्नियोगेन पन्थादेशः। शतपथमधीते वेद वा शतपथिकः। एवं षष्टिपथिकः—'शतषष्टेः पथः षिकन्' इति द्वितीयान्तात् अध्येतृवेदित्रोः षिकन्। षित्त्वात् स्त्रियां शतपथिकी। पन्थानं पन्थानं प्रति प्रतिपथम्—'अव्ययं विभक्ति' इत्यादिना वीप्सायामव्ययीभावः। पथोऽभिमुखमिति वा प्रतिपथम्—"लक्षणेनाभिप्रती आभिमुख्ये" इति, लक्षणं चिह्नम्, तद्वाचिनाऽभिप्रती आभिमुख्ये गम्यमाने समस्येते, स चाव्ययीभावसमास इति। प्रतिपथमेति प्रतिपथिकः, प्रातिपथिको वा—'प्रतिपथमेति ठँश्च' इति द्वितीयान्तादेतीत्यर्थे ठञ्ठकौ। पन्थानं प्रतिगत इति समासेनाभिधानान्नेमौ प्रत्ययाविति व्याख्यातारः। सर्वपथं व्याप्नोति सर्वपथीनः पथिकः—'तत्सर्वादेः' इति खः। उत्तरपथेनाहृतं गच्छति वा औत्तरपथिकः—'उत्तरपथेनाहृतं च' इति तृतीयान्ताद्गच्छत्याहृतं वेर्थे ठञ्। 'आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वादुपसङ्ख्यानम्' इति वार्यादिपूर्वपदादपि ठञ् भवति वारिपथिकम् इत्यादि। आजिपथिकः। शाङ्कुपथिकः—'अजपथशङ्कुपथाभ्यां च' इति 'तेनाहृतम्' इत्यत्रैव विषये ठञ्। स्थलपथेनाहृतं मधुकं मारिचं वा स्थालपथम्—'मधुकमरिचयोरण् स्थलादिभ्यः' इत्यण्। देवपथ इव प्रतिकृतिः देवपथः—'इवे प्रतिकृतौ' इति इवार्थे सादृश्ये वर्त्तमानात् प्रथमान्तात्कन्। तस्य च सदृशस्य प्रतिकृतित्वे सतीति सूत्रार्थः। तदेतदुक्तं भवति—प्रतिकृतिरूपे सदृशे वर्त्तमानात् कन्निति। देवपथ इव कश्चिद् देवपथः—'संज्ञायां च' इतीवार्थे वर्त्तमानात् कन्। उभयत्र 'देवपथादिभ्यश्च' इति कनो लुक्। परिपन्थशब्दस्तु परिपथपर्यायोऽव्युत्पन्नः, उक्तं च 'परिपन्थं च तिष्ठति' इत्यत्र वृत्तौ समर्थविभक्तिप्रकरणे—'पुनर्द्वितीयोच्चारणं लौकिकवाक्यप्रदर्शनार्थं परिपथशब्दपर्यायः परिपन्थशब्दोऽस्तीति ज्ञापयति स विषयान्तरेऽपि प्रयोक्तव्यः' इति। एवं 'पथः पन्थाश्च मार्गः स्याद्' इति काण्डशेषे पथिपर्यायो यः पथशब्दः उक्तः स नास्तीति प्रतीयते। सति हि तस्मिन् परिपथशब्दवत् परिपन्थशब्दस्यापि सिद्धेः किं ज्ञापकवर्णनेन! 'पन्थो ण नित्यम्' इत्यत्र प्रत्ययसन्नियोगेन पथः पन्थादेशकथनं प्रकृत्यन्तराभाव एव घटते। अयं कथादावपि ॥ ८४३-८४६ ॥

५७२. क्वथे निष्पाके । क्वथति । चक्वाथ । क्वथिता । अक्वथीत् । क्वाथः । क्वथयतीति घटादिपाठात् ॥८४७॥

५७३. पथे गतौ । पथति । पपाथ । पेथतुः । अपथीत् । पथः । पाथः । पथि गताविति चुरादौ ॥८४८॥

५७४. मथे विलोडने । मथति । ममाथ । मेथतुः । अमथीत् । माथः । मथः । क्वथ्यादीनां त्रयाणामेदित्त्वात् 'ह्म्यन्त' इति सिचि न वृद्धिः । दण्डमाथं धावति दाण्डमाथिकः । माथः । मन्थाः । दण्ड इव ऋजुरित्यर्थः । 'माथोत्तरपदपदव्यनुपदं धावति' एभ्यो द्वितीयान्तेभ्यो धावतीत्यर्थे ठगिति ठक् ॥८४९॥

५७५. टुवम उद्गिरणे । उद्गिरणमन्तर्गतस्य मुखेन निःसारणम् । अत्र सुधाकरः—'उद्गिरणे' इति पठन् 'निपातनात् तत्र ऋत इत्' इत्याह । वमति । ववाम । ववमतुः वादित्वान्नेत्वाभ्यासलोपौ । भागवृत्तौ त्वनयोर्विकल्पेन वेमतुरित्युदाहृतम्, तद्भाष्यादिषु चिरन्तनेषु कुत्रापि न दृष्टम् । वमिता । अवमीत्—'ह्म्यन्त' इति न वृद्धिः । विवमिषति । वंवम्यते । वंवन्ति । वंवान्तः । हेरपित्त्वात् ङित्त्वात् 'अनुनासिकस्य' इति दीर्घेऽनुस्वारे वंवांहि । अवंवन् । वमयति । वामयति—'ग्लास्नावनुवमामनुपसर्गाद्वा' इति मित्त्वविकल्पः । वामः—'नोदात्तोपदेशस्य' इति वृद्धिनिषेधस्य 'अचिमिकमिवमीनाम्' इति निषेधः । वान्तः । वान्तवान्—'आदितश्च' इति चकारस्यानुक्तसमुच्चयार्थत्वात् निष्ठायामनिट्त्वमिति वृत्तौ । भाष्यवार्तिकयोरनुक्तमपीदं 'प्रयोगबाहुल्यादुक्तम्' इति हरदत्तः । तदेवं काश्यपादीनामुदित्पाठः प्रत्युक्तः । वमथुः—ट्वित्त्वादथुच् ॥८५०॥

५७६. भ्रमु चलने । भ्रमति । बभ्राम । बभ्रमतुः, भ्रेमतुः । बभ्रमुः, भ्रेमुः । बभ्रमिथ, भ्रेमिथ—'वा जॄभ्रमुत्रसाम्' इति किति लिटि थलि च सेटि वा एत्वाभ्यासलोपौ । भ्रमिता । भ्रमिष्यति । भ्रमतु । अभ्रमत् । भ्रमेत् । भ्रम्यात् । अभ्रमीत् । शिद्विषये 'वाभ्राश' इति पक्षे श्यनि—भ्रम्यति । भ्रम्यतु । अभ्रम्यत् । भ्रम्येत् । भ्राम्यति इति दिवादौ शमादिपठितस्यानवस्थानार्थस्य 'शमामष्टानाम्' इति दीर्घः । बिभ्रमिषति । बम्भ्रम्यते । अनुनासिकान्तत्वान्नुक्—बम्भ्रन्ति । बम्भ्रान्तः । लोटि हौ बम्भ्रांहि । लङि अबम्भ्रन्—'मो नो धातोः' इति मकारस्य नकारः । भ्रमयति—अमन्तत्वान्मित्त्वम् । घञि[1] भ्रमः—'नोदात्त' इति वृद्धिनिषेधः । प्रयोजनं तु भ्रमितुं न शक्तः अभ्रम इत्यत्र 'अच्कावशक्तौ' इति अजन्तस्य कान्तस्य च नञः परस्योत्तरपदस्य तत्पुरुषे अशक्तौ गम्यमानायां विधीयमानस्यान्तोदात्तत्वस्याभावः । तेन "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः" इति तत्पुरुषे तुल्यादिपूर्वपदस्य विधीयमानः प्रकृतिस्वरो भवति, स च निपातत्वादाद्युदात्त-

१ 'णेऽपि' इति ख. पुस्तके ।

मेव। अचि तु 'अच्कौ' इत्यन्तोदात्तमेव। भ्रमित्वा, भ्रान्त्वा। भ्रान्तः—'भ्रान्तं देशमनेकदुर्गविषमम्' इत्यत्र 'देशश्चाकर्मकाणाम्' इति देशस्य कर्मत्वम्। क्तेनाभिधानं तु भवतावेवोपपादितम्। भ्रमणः—चलनार्थत्वाद्युच्। भ्रम इति शमादिपठितस्य घिनुणि। भ्रमरः—'अर्त्तिकमिचमिभ्रमिदेविवासिभ्यश्च' इत्यरप्रत्ययः। भ्रमलः अक्षिरोगः—'भ्रमिमस्योरुच्चोपधायाः' इति कलप्रत्ययः, उपधायाश्चोकारः। भ्रूः—'भ्रमेर्डूः' इति डूः। डित्त्वाट्टिलोपः। भ्रुवौ। भ्रुवः—अजादौ 'अचि श्नुधातुभ्रुवाम्' इत्युवङ्। हे भ्रूः इत्यत्र 'नेयङुवङ्स्थानावस्त्री' इति नदीसंज्ञानिषेधात् 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वाभावः। ङिद्वचनेषु 'ङिति ह्रस्वश्च' इति नदीत्वविकल्पः। ङिद्वचनेषु इयङुवङ्स्थानेष्वीदन्तमूदन्तमिकारोकारान्तं च स्त्र्याख्यं वा नदी, स्त्रीशब्दं वर्जयित्वेति सूत्रार्थः। तेन नदीसंज्ञायाम् 'आण्नद्याः' इत्याटि वृद्धावुवङि भ्रुवै इत्यादि। अन्यदा तु केवलमुवङि भ्रुवे इत्यादि। आमि—स्त्रीशब्दव्यतिरिक्तयोरियङुवङ्स्थानयोः 'वामि' इति नदीनिषेधविकल्पनात् भ्रूणाम्, भ्रुवाम् इति। भ्रूर्नाम काचित्तस्या अपत्यं भ्रौवेयः—'भ्रुवो वुक् च' इति ढक्, तत्सन्नियोगेन वुगागमः। लेखाभ्रेयः—'शुभ्रादिभ्यश्च' इत्यपत्ये ढक्। '"ढे लोपोऽकद्र्वाः"' इति ढे परे कद्रूवर्जितस्योवर्णान्तस्याङ्गस्योकारस्य लोप इत्यूकारलोपः। अक्षिणी च भ्रुवौ च अक्षिभ्रुवम्—'अचतुर' इत्यादिनाऽचि समासान्ते निपातितः। भ्रूकुलम्। भ्रूभङ्ग इत्यादौ "इको ह्रस्वोऽङ्यो गालवस्य" इति इगन्तस्याङ्यन्तस्य उत्तरपदे विधीयमानो ह्रस्वस्तत्रानुवृत्तस्यान्यतरस्यांग्रहणस्य व्यवस्थितविभाषात्वान्न भवति। भ्रूकुंसः, भ्रुकुंसः। भ्रूकुटिः, भ्रुकुटिः इत्यत्र पक्षे ह्रस्वो भवति। अत्र भाष्ये—"अपर आह 'अकारो भ्रुकुंसादीनां वक्तव्यः' भ्रकुंसः, भ्रकुटिः" इति ॥ ८५१ ॥

५७७. क्षर संचलने[1]। क्षरति। चक्षार। क्षरिता। अक्षारीत्—'अतो ल्रान्तस्य' इति वृद्धिः। चिक्षरिषति। चाक्षर्यते। चाक्षर्ति। चाक्षर्हि। अचाक्षः—हल्ङ्यादिलोपः। क्षारः। क्षरः। क्षरेजः, क्षरजः—'विभाषा वर्षक्षरशरवरात्' इति जशब्दे उत्तरपदे विभाषा सप्तम्या अलुक्। अत्र 'क्ष्वल सञ्चलने' इति क्वचित्पठ्यते। तदपि क्षरिवत् ॥८५२॥

५७८. स्यमादय उदात्ता उदात्तेतः।

५७९. षह मर्षणे।

५८०. उदात्तोऽनुदात्तेत्[2]।

सहते। सेहे। सहिता, सोढा। 'तीषसहलुभ' इतीड्विकल्पः। इडभावे ढत्वधत्वष्टुत्वढलोपाः। 'सहिवहोरोदवर्णस्य' इति ढलोपे अवर्णस्यौ-

---

१. भ० श० ३।६। २. इत ऊर्ध्वं क्षीरस्वामी 'क्षल सञ्चये च' इति पृथक् सूत्रं पठति।

कारः। सिसहयिषते—'स्तौतिण्योरेव' इत्यषत्वम्। सिसाहयिषति—इत्यत्र 'स्तौति' इति नियमं बाधित्वा 'सः स्वदिस्विदिसहीनाम्' इति सत्वं भवति। सासह्यते। सासोढि। सासोढः। पूर्ववद् ढत्वादि। सासक्षि—'षढोः कः सि' इति कत्वम्। लोटि हेर्धिभावे ढत्वष्टुत्वढलोपौत्वेषु सासोढि इति भवति। साहयति। असीषहत्। परिषहते। निषहते। विषहते—'परिनिविभ्यः' इति षत्वम्। इदं च 'सिवादीनां वाड्व्यवायेऽपि' इति अड्व्यवाये विकल्प इति पर्यषहत, पर्यसहत इति। 'स्थादिष्वभ्यासेन च' इत्यत्र 'प्राक्सितात्' इत्यनुवर्त्तनात् परिषिसहिषते इत्यत्रोत्तरखण्डस्य षणि प्रतिषेध एव भवति। अत एव 'प्राक्सितात्' इत्यनुवर्त्तनात्तत्र 'अभ्यासस्य' इति योगभेदेन 'स्थादिष्वेवाभ्यासस्य षत्वम्' इति क्रियमाणो नियमोऽस्मिन्प्राक्सितीये नेति षत्वमभ्यासस्य भवत्येव। तथा च तत्र वृत्तौ—प्राक्सितीयः सुनोत्यादिरेव प्रत्युदाहृतः। आत्रेयस्तु सामान्येन नियममिच्छन् पत्वमाह। तत् 'स्तम्भुसिवुसहां चङि' इति अभ्यासस्य षत्वनिषेधवैयर्थ्यप्रसङ्गात् वृत्त्यनाञ्जस्याच्च हेयम्। परिसोढा इत्यादौ सहेः सोड्रूपत्वात् 'सोढः' इति षत्वं निषिध्यते। परिषासोढि इत्यत्राभ्यासस्यासोड्रूपत्वान्नायं निषेधः। पर्यसीषहत् इत्यादौ 'स्तम्भुसिवुसहां चङि' इति 'परिनिविभ्यः' इति षत्वं निषिध्यते। परस्य तु 'इण्कोः' इति भवत्येव। 'दाश्वान्साह्वान्' इत्यत्र वृत्तौ—'साह्वान् इति निपातनमस्य' इत्युक्तम्। यदाह—'परस्मैपदमुपधादीर्घत्वमनिट्त्वं च निपात्यते' इति। कैयटे तु "'आधृषाद्वा' इति विभाषितणिचः" इत्युक्तम्। एवं पदमञ्जर्यामपि। अत्र मते तस्य सहेः परस्मैपदित्वात्क्वसुर्निपात्यः। सह्यम्—'शकिसहोश्च' इति कर्मणि यत्। साहयतीति साहयः—'अनुपसर्गाल्लिम्प' इत्यादिना शप्रत्ययः। शपि गुणायौ। साहः। सहः—णाभावेऽच्। सर्वसहा वसुमती—'संज्ञायां भृतॄवृजि' इत्यादिना खच्, 'अरुर्द्विषत्' इति मुम्। सर्वं सहत इति सर्वंसहः—'पूःसर्वयोः' इति यथासङ्ख्यादस्य सर्वशब्दे कर्मण्युपपदे खच्। सहिष्णुः—'अलङ्कृञ्' इत्यादिनेष्णुज्। सहनः—'अनुदात्तेतः' इति युच्। सासहिः—'सहिवहिचलिपतिभ्यो यङन्तेभ्यः क्किकनौ' इति क्किकनोरन्यतरः। सहित्रम्—'अर्तिलूधूसूखनसहचर इत्रः' इति करणे इत्रप्रत्ययः। षट्—'सहेः षष् लुक् च' इति सहेः षषादेशः, कनिनश्च लुक्। 'ष्णान्ताः षट्' इति षट्संज्ञायां 'षड्भ्यो लुक्' इति जश्शसोर्लुक्। षण्णाम् इत्यत्र 'षट्चतुर्भ्यश्च' इति षट्संज्ञकत्वादामो नुट्। षण्णां पूरणः षष्ठः—"तस्य पूरणे डट्" इति षष्ठ्यन्तात्पूरणे सङ्ख्यान्तरस्योत्पादकेऽर्थे डडिति डटि 'षट्कतिकतिपयचतुरां थुक्' थुगागमे ष्टुत्वम्। टित्वात् स्त्रियां षष्ठी। यदा तु पूरणो भागो भवति तदा 'षष्ठाष्टमाभ्यां ञ च' इति स्वार्थे ञप्रत्ययः। चकारादन् च—षाष्ठः। षष्ठः। यदा तु पूरणो भागो मानं भवति

तदा "मानपश्वङ्गयोः कन्लुकौ च" इति यथासङ्ख्यात् षष्ठस्य माने कन्, अष्टमस्य लुक्। स च 'षष्ठाष्टमाभ्यां ञ च' इति विहितयोर्ञाञोः। चकारादू १.थाप्राप्तौ ञाञौ। तेन षष्ठकं मानं षाष्ठम्, षष्ठम् इति त्रीणि रूपाणि भवन्ति। 'पूरणगुण' इति पूरणार्थेन समासनिषेधात् 'तान्युञ्छषष्ठ' इत्यादिप्रयोगश्चिन्त्यः। षट् दन्ता अस्य षोडन्—'वयसि दन्तस्य दतृ' इति दन्तान्तस्य बहुव्रीहौ वयसि गम्यमाने दत्रादेशः। उगित्त्वान्नुम्। षट् च दश च षोडश—'चार्थे द्वन्द्वः' इति द्वन्द्वः। समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः, तत्रासामर्थ्यात् समुच्चयान्वाचययोर्न समास इति स्थितम्। षोढा—'संख्याया विधार्थे धा', 'अधिकरणविचाले च' इति धाप्रत्ययः। तत्र 'षष उत्वं दतृदशधासूत्तरपदादेष्टुत्वं च' इति षषोऽन्त्यस्य उत्वम्, उत्तरपदादेः ष्टुत्वम्। 'धासु वा' इति वचनादू उत्वष्टुत्वे धाप्रत्यये पक्षे न भवत इति षड्धा इत्यपि भवति। अत्र षकारस्य धाप्रत्यये 'स्वादिषु' इति पदत्वाज्जश्त्वं डकारः। धकारस्य तु ष्टुत्वम् 'न पदान्तात्' इति निषेधान्न भवति। पदान्ताट्टवर्गात् परस्यानाम्वर्जितस्य स्तोः ष्टुत्वं नेति सूत्रार्थः ॥८५३॥

५८१. रम क्रीडायाम्।

५८२. अनुदात्तोऽनुदात्तेत्। रमते। रेमे। रेमिषे। रेमिध्वे—क्रादिनियमादिट्। रन्ता। रंस्यते। रमताम्। अरमत। रमेत। रंसीष्ट। अरंस्त। रिरंसते। रंरम्यते। रंरन्ति। रंरन्तः—प्रकृतिग्रहणन्यायेन 'अनुदात्तोपदेश' इत्यनुनासिकलोपः। रंरंसि। रंरण्मि। रंरण्मः—'म्वोश्च' इति नत्वे णत्वम्। रंरहि इत्यत्र अनुनासिकलोपस्यासिद्धत्वात् 'अतो हेः' इति लुङ् न भवति। अरंरन्—'मो नो धातोः' इति नत्वम्। रमयति। अरीरमत्। विरमति। आरमति। परिरमति—'व्याङ्परिभ्यो रमः' इति परस्मैपदम्। उपरमति—'उपाच्च' इति परस्मैपदम्। इदं च सकर्मकविषयम्। अकर्मकत्वे उपरमति, उपरमते इति; 'विभाषाकर्मकात्' विकल्पस्योक्तत्वात्। अन्तर्भावितण्यर्थोऽयं सकर्मकः। विरराम। विरेमतुः। विरेमिथ, विररन्थ। थलि—'उपदेशेऽत्वतः' इति उपदेशेऽत्वतस्तासौ सतस्तत्र नित्यानिटस्थलीण्निषेधेऽपि इह भारद्वाजनियमादिट्पक्षे भवति। लुङि—'यमरमनमातां सक् च' इति परस्मैपदपरे सक्, सिचश्चेट्, 'इट ईटि' इति सिज्लोपः—व्यरंसीत्। व्यरंसिष्टाम्। रमः। रामः—'ज्वलितिकसन्तेभ्यो णः' इति णः। मान्तत्वेऽप्यनुदात्तोदेशत्वात् वृद्धिनिषेधाभावः। रमणः—नन्द्यादित्वात् ण्यन्ताल्युः। स्तम्बेरमः—'स्तम्बकर्णयोरमिजपोः' इति स्तम्ब उपपदेऽच् प्रत्ययः। 'हस्तिसूचकयोः' इति वचनात् हस्तिविषयश्चायम्। 'तत्पुरुषे कृति' इति सप्तम्या अलुक्। रन्तिः—'न क्तिचि दीर्घश्च' इति दीर्घानुनासिकलोपनिषेधः। 'अयमुदित्' इति केचित् क्त्वायामिड्विकल्पमुदाहरन्ति, तन्महान्तो न सहन्ते। रत्नम्—'रमेस्तश्च' इति नप्रत्ययस्तकारश्चान्तादेशः। रमतिः स्वर्गः—'रमेर्नित्'

इत्यतिप्रत्ययः। सुरतः कामः—'सौ रमे क्तः' इति क्तः। सूरतः कृपावान्—'रमेः पूर्वपदस्य च दीर्घः' इति क्ते पूर्वपदस्य दीर्घः। रथः—'हनिकुषि' इत्यादिना क्थन्। रथ्या। रथकट्या—'खलगोरथात्', 'इनित्रकट्यचश्च' इति यकट्यचौ 'तस्य समूहः' इति विषये। स्वभावात् स्त्रीलिङ्गता। रथस्येदं रथ्यम्—'रथाद्यत्' 'तस्येदम्' विषये यत्। अत्र वृत्तौ 'रथाङ्ग एवेष्यते' इति 'रथसीताहलेभ्यो यद्विधौ तदन्तविधिः' इत्युक्तत्वात् परमरथ्यम इत्याद्यपि भवति। आश्वरथः—"पत्रपूर्वादञ्" इति वाहनवाचिपूर्वपदात् रथान्तात् अञ्। यतोऽपवादः। अयमपि रथाङ्ग एवेष्यते। रथं वहति रथ्यम्—'तद्वहति रथयुगप्रासङ्गात्' इति द्वितीयान्तात् वहतीत्यर्थे यत्। रथाय हिता रथ्या—'खलयवमाषतिलवृषब्रह्मणश्च' इति चकारस्यानुक्तसमुच्चयार्थत्वात् चतुर्थ्यन्ताद्धितार्थे यत्। वामरथस्यापत्यं वामरथ्यः—'कुर्वादिभ्यो ण्यः' इति ण्यः, तत्र 'वामरथस्य कण्वादिवत् स्वरवर्जम्' इति पठ्यते। तस्यायमर्थः—वामरथ्यशब्दस्य गर्गाद्यन्तर्गणस्य यञन्तस्य कण्वादेर्यत्कार्यं तद्भवति स्वरं वर्जयित्वेति; तेन 'यञञोश्च' इति गोत्रबहुत्वे विधीयमानो लुगस्यापि भवति—वामरथा इति। तथा 'यञश्च', 'प्राचां ष्फ तद्धितः' इति स्त्रियां विधीयमानो ङीष् ष्फश्चास्यापि भवतः—वामरथी। वामरथ्यायनी इति। ष्फस्य षित्त्वान्ङीष्। 'हलस्तद्धितस्य' इति यलोपः। 'यस्येति च' इत्यल्लोपः। तथा यूनि 'यञञोश्च' इति विधीयमानः ष्फगत्रापि भवति वामरथ्यायनः इति। 'आपत्यस्य' इति यलोपस्तत्रैव 'अनाति' इति निषेधान्न भवति। तथा 'सङ्घाङ्कलणेष्वञ्यञिञामण्' इति यञन्तात् सङ्घाङ्कलक्षणेषु विधीयमानोऽण् अस्मादपि भवति—वामरथानि सङ्घाङ्कलक्षणानीति। तत्र घोषग्रहणं चोदितम्, तेन वामरथो घोषः इत्यपि भवति। 'आपत्यस्य' इति यलोपः। तथा "कण्वादिभ्यो गोत्रे" इति गोत्रापत्यवाचिभ्यो यञन्तेभ्यः कण्वादिभ्यो विधीयमानोऽण् अस्मादपि भवति—वामरथाः छात्रा इति। 'स्वरवर्जम्' इत्युक्तत्वात् 'ञ्नित्यादिर्नित्यम्' इति प्रकृतेराद्युदात्तत्वं न भवति, प्रत्ययस्वर एव भवति ॥८५४॥

५८३. षद्लृ विशरणगत्यवसादनेषु। अयं शदिक्रुशी चानुदात्ता उदात्तेतः। सीदति—'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः' इति शिति प्रत्यये परे यथासङ्ख्यात् सदेः सीदादेशः। ससाद। सेदतुः। ससत्थ, सेदिथ—थलि भारद्वाजनियमादिट्पक्षे 'थलि च सेटि' इत्येत्वाभ्यासलोपौ। सेदिव। सेदिम—क्रादिनियमान्नित्यमिट्। सत्ता। सत्स्यति। असीदत्। सीदेत्। सद्यात्। असदत्—लृदित्त्वादङ्। सिषत्सति। सासद्यते—भावगर्हायां 'लुपसद' इति यङ्। सासत्ति। लङि सिपि 'दश्च' इति वा रुत्वम्—असासद, असासः। सादयति। असीषदत्। निषीदति—'सदिरप्रतेः' इति अप्रतेरिण्णन्तादुपसर्गात् परस्य षत्वम्। न्यषीदत—'प्राक् सितादड्व्यवायेऽपि' इति षत्वम्। निषि-

षत्सति। न्यषीषदत् इत्यत्र 'स्थादिष्वभ्यासेन च' इत्युभयत्र षत्वम्। यद्वा—अभ्यासस्य 'सदिरप्रतेः', 'प्राक्सितादड्व्यवायेऽपि' इति षत्वम्। उत्तरस्य तु 'इण्कोः' इति। निषसाद इत्यत्र तु 'सदिष्वञ्जोः परस्यं लिटि' इति उत्तरखण्डस्य षत्वनिषेधः। निषेदतुः इत्यादौ अभ्यासस्य लोपे सति अभ्यासात्परत्वाभावान्नायं निषेधः। सेदिवान्—'भाषायां सदवसश्रुवः' इति भूतसामान्ये वा लिट्, तस्य च क्वसुः। अस्मादेव वचनात् भूतसामान्ये सदादिभ्यो लिडनुमीयते। इदं चानुमानं विकल्पेन। अस्य च लिटो नित्यं क्वसुरिति न तिङां श्रवणम्, नापि लुङो धातुसामान्यविहितस्य सदादिविशेषविहितेनानेन बाधः। न च सदादौ भूतसामान्ये सावकाशस्यास्य लिटः 'अनद्यतने लङ्', 'परोक्षे लिट्' इति भूतविशेषविहिताभ्यां सदादिभ्योऽन्यत्र सावकाशाभ्यां बाधः; तद्विधानेऽप्यस्यानुवर्त्तनादिति भाष्यादौ स्थितम्। क्रादिनियमादिट्, उगित्त्वान्नुम्। 'सान्तमहतः' इति असम्बुद्धौ सर्वनामस्थाने दीर्घे सोः 'हल्ङ्याब्भ्यः' इति लोपः। सकारस्य संयोगान्तत्वाल्लोपः। भसंज्ञायां वसोः संप्रसारणे 'संप्रसारणाच्च' इति परस्य पूर्वत्वे सेदुषः इत्यादि। सम्प्रसारणविषये नेडागमः प्रवर्तते, पश्चात् निमित्तविघातो भविष्यतीति। हलादौ—'वसुस्रंसु' इत्यादिना दत्वे सेदिवद्भ्याम् इति परिषत्—'सत्सूद्विष' इति क्विप्। पर्षच्छन्दस्तु पृषोदरादित्वाद् परेरिकारलोपे पर्षदा कृतं पारिषदकम्—'कुलालादिभ्यो वुञ्' इति तेन कृतमिति विषये वुञ्। परिषद इदं पारिषदम्—'पत्राध्वर्युपरिषदश्च' इति तस्येदमर्थेऽञ्। परिषद्वलः—'रजः कृष्यासुतिपरिषदो वलच्' इति मत्वर्थे वलच्। परिषदं समवैति, तत्र साधुर्वा पारिषद्यः—'परिषदो ण्यः' इति योगाभ्यां 'तं समवैति', 'तत्र साधुः' इति विषये ण्यः। एकदेशविकृतस्यानन्यत्वात् कृतेकारलोपस्याप्येते प्रत्यया भवन्ति। तथा च भाष्यम् 'एओङ्' इत्यत्र—"पार्षदकृतिरेषा तत्र भवताम्' इति। तथा 'सम्प्रति पर्षद्वलोक्तम्' इति भारते वलच् दृश्यते। भट्टिकाव्ये 'पर्षद्वलः[1]' इति वलच्। विविषत्—पूर्ववत् क्विप्। 'तत्पुरुषे कृति बहुलम्' इति अलुक्। सुषामादिपाठात् षत्वम्। बहुलग्रहणात् लुकि द्युषत्—'दिव उत्' इति पदत्वे उत्वम्। सदः। सादः। निषीदत्यस्मिन् पापमिति निषादः—'हलश्च' इति अधिकरणे घञ्। 'उपसर्गस्य घञि' इति दीर्घस्तत्रैव 'अमनुष्ये' इति प्रतिषेधान्न भवति। निषादस्यापत्यं नैषादकिः—'अत इञ्', 'सुधातुरकङ्' इत्यत्र 'व्यासवरुडनिषाद' इति अकङादेशः। सद्रुः—'दाधेट्सिशदसदो रुः' इति तच्छीलादौ रुः। निषद्या—'संज्ञायां समज' इत्यादिना स्त्रियामकर्त्तरि क्यप्। सदः—असुन्। सत्त्रम्—'गुधृविपचिवचियमिसदिभ्यश्च' इति त्रप्रत्ययः। पापं चिकीर्षति सत्त्रायते—'सत्त्रकक्ष'

---

१. 'पर्षद्वलान् महाब्रह्मैराट नैकटिकाश्रमान्।'—भ० का० ४।१२।

इत्यादिना कण्वचिकीर्षायां क्यङ् । कण्वं पापम् । 'सत्त्रादयो वृत्तिविषये पापार्थाः' इत्युक्तम् । निषद्वरः कामकर्दमौ—'नौ सदेः' इति वरच् । सद्म—मनिन् । सूकर-सद्मन इमे सौकरसद्माः—'नान्तस्य टिलोपः' इत्यादिना अन्निति प्रकृतिभावाप-वादट्टिलोपः । सादिः—'वसिवपिराजिध्रूषिसदिहनिवाशिवदिभ्यः इञ्' इतीञ् प्रत्ययः । अयं तुदादावपि । उभयत्र पाठे प्रयोजनं उञ्छतिवन्नेयम् । चुरादौ चायम् ॥८५५॥

५८४. शद्लृ शातने । अत्र मैत्रेयः—'शद्लृ शातने विशीर्णतायां वर्त्तते, शातनं च विषयभावेन निर्दिश्यते, प्रसिद्धत्वात्' इति । शीयते—'पाघ्रा' इत्यादिना शीयादेशः । 'शदेः शितः' इति शिद्भाविनोऽस्मात्तङ् । शशादः । शेदतुः । शशत्थ, शेदिथ । शेदिव—क्रादिनियमादिट् । थलि भारद्वाजनियमादिड्विकल्पः । शत्ता । शत्स्यति । शीयताम् । अशीयत । शीयेत । आशिषि—शद्यात् । अशदत्—लृदित्त्वादङ् । शिशत्सति—शिद्भाव्येव शदिरात्मनेपदनिमित्तं न केवल इति प्रकृतेरतङ्निमित्तत्वात् 'पूर्ववत्सनः' इति न भवति । शाशद्यते । शाशत्ति । शातयति—'शदेरगतौ तः' इति णौ तत्वम् । गतौ तु गाः शादयति गोपालक इति तत्वं न भवति । अयमेव गतौ तत्वप्रतिषेधो गत्यर्थत्वे प्रमाणम् । शादः । शदः । शाद्वलम्—'नडशादाड्ड्वलच्' इति ड्वलच् चातुरर्थिकः, डित्त्वाट्टिलोपः । शद्रुः—'दाधेट्सिशदसदो रुः' । शातयतीति शत्रुः—'तृशदिभ्यां त्रुन्' इति त्रुन् । बाहुलकात् णेर्लोपो वृद्ध्यभावश्चेति प्रत्ययलक्षणेन णिज्निमित्तं तत्वम् ॥८५६॥

५८५. क्रुश आह्वाने रोदने च ।

५८६. सदादयस्त्रयोऽनुदात्ता उदात्तेतः । तथा च व्याघ्रभूतिः—

अर्दि हृदि स्कन्दिभिदिच्छिदिक्षुदीन् सदिं शदिं स्विद्यतिपद्यती खिदिम् ।
तुदिं नुदिं विद्यति विन्त इत्यपि प्रतीहि दान्तान् दश पञ्च चानिटः ॥
दिशिं दृशिं दंशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम् ।
लिशिं च शान्ताननिटः पुराणगाः पठन्ति पाठेषु दशैव नेतरान् ॥

क्रोशति । चुक्रोश । चुक्रुशतुः । चुक्रोशिथ । चुक्रुशिव । चुक्रुशिम—क्रादिनियमादिट् । क्रोष्टा । क्रोक्ष्यति । क्रोशतु । अक्रोशत् । क्रोशेत् । आशिषि—क्रुश्यात् । अक्रुक्षत्—'शल इगुपधाद्' इति क्सः । चुक्रुक्षति—'हलन्ताच्च' इति कित्त्वम् । चोक्रुश्यते । चोक्रोष्टि । ह्यौ—चोक्रुड्ढि । घित्वषत्वष्टुत्वजश्त्वानि । लङि तिप्सिपोः—अचोक्रोट् । क्रोशयति । अचुक्रुशत् । आक्रोशकः—'देविक्रुशोश्चोपसर्गे' इति तच्छीलादौ वुञ् । हे क्रोष्टो—'सितनिगमि' इत्यादिना तुन् । अस्य 'तृज्वत्क्रोष्टुः' इति असम्बुद्धौ सर्वनामस्थाने तृजन्तरूपातिदेशात्—क्रोष्टा, क्रोष्टारौ इत्यादि । शसि क्रोष्टून् । अन्यत्र 'विभाषा तृतीयादिष्वचि' इति तृज्वद्भावविकल्पनात्—क्रोष्ट्रा,

क्रोष्टुना इत्यादि। आमि—'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' इति नुटि अनजादित्वात् तृज्वद्भावाभावे 'नामि' इति दीर्घे क्रोष्टूनाम् इति भवति। क्रोष्ट्री—'स्त्रियां च' इति तृज्वद्भावः। 'मतिबुद्धि' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् आक्रुष्टः—वर्त्तमाने क्तः। क्रोशः। क्रुशः—णाभावे इगुपधत्वात्कः ॥८५७॥

५८७. कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु[1]। एतदादयः कसन्ता उदात्ता उदात्तेतः। रुहिस्त्वनुदात्तः। कोचति। 'कुच शब्दे तारे' इति पठितस्यापीह पाठः सम्पर्चनादावेव कोच इति ज्वालादिनिबन्धनो णो यथा स्यादिति ॥८५८॥

५८८. बुध अवगमने[1]। बोधति। बुबोध। बोधिता इत्यादि। बुबुधिषति, बुबोधिषति। बोधित्वा, बुधित्वा—'रलो व्युपधात्' इति कित्त्वविकल्पः। 'रुधिस्सराधियुधिबन्धिसाधयः क्रुधिक्षुधी शुद्ध्यतिबुध्यती व्यधिः' इत्यत्र श्यना निर्देशात् दैवादिकस्य ग्रहणम्, नास्य; नापि 'बुधिर् बोधने' इति वक्ष्यमाणस्य। बोबुध्यते। बोबोद्धि—'झष स्तथोः' इति धत्वे जश्त्वम्। बोभोत्सि—'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इति भष्त्वे 'खरि च' इति चर्त्वम्। लोटि हेर्धिभावे जश्त्वे च—बोबुद्धि। बोबुधानि—'नाभ्यस्तस्य' इति गुणनिषेधः। लङि तिपि—अबोभोत्। पदत्वाद् भष्भावो जश्त्वं च। सिपि तु 'दश्च' इति वा रुत्वे अबोभोः इत्यपि भवति। बोधयति देवदत्तः। अबूबुधत्—'अणावकर्मकात्' इति परस्मैपदम्। यदायमणावचित्तवत्कर्तृकस्तदापि 'बुधयुध' इति परस्मैपदमेव। न च तत्र युधादिसाहचर्यात् बुध्यतेरेव ग्रहणमिति वाच्यम्; एवं बुधिग्रहणं व्यर्थं स्यात्, यतो बोधने बोधयते इति दुर्वारम्। न च बोधतिबुध्यत्योरर्थभेदः। एवम्—'दीपजन' इति लुङि तशब्दे वा चिण्विधावपि श्यन्विकरणैरात्मनेपदिभिश्च साहचर्यात् बुध्यतिबोधत्योर्द्वयोर्ग्रहणमिति व्यत्यबोधि, व्यत्यबोधिष्ट इति द्वयमपि भवति। असत्यपि वाऽस्य ग्रहणे न विशेषः; यतो दैवादिकेनैव व्यत्यबोधि, व्यत्यबोधिष्ट इति रूपद्वयं दुर्वारम्। भावादिकर्मणोः बुधितमनेन, बोधितमनेन इत्यादि ॥८५९॥

५८९. रुह बीजजन्मनि प्रादुर्भावे[2] च[2]। अनुदात्त उदात्तेत्। रोहति। रुरोह। रुरोहिथ। रुरुहिव। क्रादिनियमादिट्। रोढा—गुणढत्वधत्वष्टुत्वढलोपाः। रोक्ष्यति—'षढोः कः सि' इति कत्वम्। रोहतु। अरोहत्। रोहेत्। आशिषि—रुह्यात्। अरुक्षत्—'शल इगुपधादनिटः क्सः'। रुरुक्षति। रोरुह्यते। रोरोढि। रोरूढः—'ढ्रलोपे' इति दीर्घः। रोरोक्षि। लोटि सेर्हित्वे धित्वष्टुत्वलोपदीर्घेषु—रोरूढि। लङि—अरोरोट्। अरोरूढाम्। रोहयति। अरूरुहत्। रोपयति। अरूरुपत्। 'रुहः पोऽन्यतरस्याम्' इति पक्षे हकारस्य पकारः। आरूढो वृक्षम्। आरूढो वृक्षः—'गत्यर्थाकर्मक' इत्या-

---

१-१. सूत्रद्वयमिदं क्षीरस्वामी 'रुह बीजजन्मनि' इत्येतदनन्तरं पठति।

२-२. क्षीरस्वामी न पठति।

दिना कर्तृकर्मणोः क्तः । रोहितिः—'हृसृरुहियुषिभ्य इतिः' इतीतिः । रोहितः, लोहितः—'रुहेरितश्च लो वा' इति इतः । पक्षे रेफस्य लत्वम् । अलोहितो लोहितो भवति लोहितायते, लोहितायति—'लोहितादिडाज्भ्यः क्यष्' इति च्व्यर्थविषयाद्-च्व्यन्तात् भवत्यर्थे क्यष् । 'वा क्यषः' इति पक्षे तङ् । लोहित एव लोहितको मणिः—"लोहितान्मणौ" इति मणौ वर्तमानाल्लोहितशब्दात्स्वार्थे कन् । लोहितकं मुखं कोपेन—'वर्णे चानित्ये' इति अनित्यवर्णे वर्तमानाल्लोहितशब्दात् स्वार्थे कन् । स्त्रियाम्—'लोहिताल्लिङ्गबाधनं वा' इत्युक्तत्वात् 'वर्णादनुदात्तात्' इति पक्षे कनो न ङीब्विधिरिति लोहितिका इति भवति । अन्यदा तु ङीम्नकारयोर्लिङ्गविशिष्टपरिभाषया कनि ह्रस्वे च लोहिनिका इति । लोहितेन रक्तो लोहितकः पटः—'रक्ते' इति लाक्षादिना रक्तेऽर्थे वर्त्तमानात् लोहितशब्दात्स्वार्थे कन् । अत्रापि स्त्रियाम्—'लोहिताल्लिङ्ग-बाधनं वा' इत्यस्यानुवर्तनात्त लोहितिका पटी, लोहिनिका पटी इत्युभयं भवति । रोहिषो मृगभेदः—'रुहेर्वृद्धिश्च' इति टिषचि वृद्धिः । स्त्रियां रौहिषी ॥८६०॥

५९०. कस गतौ । कसति । चकास । कसिता । अकसीत्, अकासीत् । चिकसिषति । चनीकस्यते । चनीकसीति । चनीकधि इत्यत्र हेर्धित्वे 'धि च' इति सलोपः । तस्यासिद्धत्वात् 'अतो हेः' इति लुङ् न भवति । लङि तिपि 'तिप्यनस्तेः' इति सकारस्य पदान्तत्वात् दत्वे अचनीकत् । 'सिपि धातोरुर्वा' इति रुत्वम् । 'नीग्वञ्चु' इत्यभ्यासस्य नीक् । कासयति । अचीकसत् । कस्वरः—'स्थेशभास' इति वरच् । शब्दकुत्सायां कसते इति गतम् ॥८६१॥

५९१. कुचादय उदात्ता उदात्तेतः ।

५९२. रुहिस्त्वनुदात्तः ।

५९३. वृत् । ज्वलादयो वृत्ता इत्यर्थः ।

अथोभयपदिनः—

५९४. हिक्क अव्यक्ते शब्दे । एतदादयो गूहत्यन्ता उदात्ताः स्वरितेतः । हिक्कति । जिहिक्क । हिक्किता । हिक्किष्यति । हिक्कतु । अहिक्कत् । हिक्केत् । हिक्क्यात् । अहिक्कीत् । जिहिक्किषति । जेहिक्क्यते । जेहिक्ति । 'स्कोः' इति कलोपस्य असिद्धत्वात् अलघूपधत्वान्न गुणः । हिक्कयति । अजिहिक्कत् । हिक्कते । जिहिक्के । हिक्किताசे । हिक्किष्यते । हिक्कताम् । अहिक्कत । हिक्केत । हिक्किषीष्ट । अहिक्किष्ट । जिहिक्किषते—'पूर्ववत्सनः' इति तङ् ॥८६२॥

५९५. अञ्चु गतौ याचने च । अञ्चति इत्यादि । 'अञ्चु गतिपूजनयोः' इत्यत्रैवोदाहृतम् । अञ्चते । आनञ्चे । अञ्चितासे । अञ्चिचिषते । पूर्वत्र गतौ पाठः क्रियाफलस्य कर्तृगामित्वे परस्मैपदार्थः । 'अचु इत्येके' इति मैत्रेयः । क्षीरस्वामी तु 'अञ्चु

गतौ, अञ्चि गतौ' इति द्वौ धातू पपाठ। तत्र इदित्त्वप्रयोजनम् अञ्चित इत्यादौ नलोपाभावमाह। काश्यपमैत्रेयसम्मताकारास्त्वस्य इदित्त्वं नानुमन्यन्ते। 'अञ्चू' इति पठन् शाकटायनोऽपि उदित्पक्ष एवानुकूलः. तेन ह्युदित्स्थान एव ऊदित्पठ्यते ॥८६३॥

५९६. टुयाचृ याच्ञायाम्। याचति। ययाच। याचिता। याचते। ययाचे। यियाचिषते। यायाच्यते। यायाचीति, यायाक्ति। याचयति। अययाचत्—'नाग्लोपि' इति ह्रस्वनिषेधः। न याचत इति अयाची। ग्रहादिषु 'याचृव्याहृव्रजवदवसां प्रतिषिद्धानाम्' इति पाठाण्णिनिः। प्रतिषिद्धानां नञ्पूर्वाणामित्यर्थः। याचथुः—'ट्वितोऽथुच्'। केचित् ड्वितं पठन्ति, तदपि प्रमाणम्। तेन याचित्रम् इत्यपि भवति। याचितेन निर्वृत्तं याचितकम्—'अपमित्ययाचिताभ्यां यक्कनौ' इति तृतीयान्तात् निर्वृत्तमित्यर्थे यथासंख्यात् कन्। अपमित्यशब्दस्य अव्ययत्वात् न तृतीयास्ति। याच्ञा—'यजयाचयत' इत्यादिना नङ्; 'स्तोः श्चुना' इति श्चुत्वम्। याच्यम्—'यजयाचरुचप्रवचर्चश्च' इति ण्यति कुत्वनिषेधः। 'निष्ठायामनिट्त्वे कुत्ववचनम्' इति वार्त्तिकमते कुत्वस्य नैव प्रसङ्गः ॥८६४॥

५९७. रेटृ परिभाषणे। रेटति। रिरेट। रेटिता। रिरेटिषते। रेरेट्यते। रेरेट्टि। रेटयति। अरिरेटत्। ऋदित्त्वान्नोपधाह्रस्वः। रेटते। रिरेटे। रेटिता इत्यादि। रेटित्वा। रेटितः ॥८६५॥

५९८. चते चदे[1] याचने च। चतति। चचात। चेततुः। चतिता। अचतीत्—एदित्त्वान्न वृद्धिः। चिचतिषति। चाचत्यते। चाचत्ति। चातयति। अचीचतत्। चतते। चेते। चिचतिषते इत्यादि। चतित्वा। चतितः। चत्यम्—'तकिशसिचति' इति यत्। चतुरः—'मन्दिवाशि' इत्यादिनोरच्। न चतुरः अचतुरः, अविद्यमाना वा चतुरा यस्य अचतुरः, तस्य भावः आचातुर्यम्—ब्राह्मणादिपाठात् ष्यञ्। 'न नञ्पूर्वात् तत्पुरुषात्' इति निषेधोऽत्रैव अचतुरेति पर्युदासात् न भवति। चत्वारः—'चतेरुरन्' इत्युरन्। 'चतुरनडुहोरामुदात्तः' इति सर्वनामस्थाने आमागमः। तदन्तविधेरत्रेष्टत्वात् प्रियचत्वाः, प्रियचत्वारौ इत्यादावप्याम् भवति। हे प्रियचत्वः—इत्यत्र तु 'अम् सम्बुद्धौ' इत्यमागमः। अयं समास एव; केवलस्य नित्यबहुवचनान्तत्वात् सम्बुद्ध्यभावात्। आमि—'षट्चतुर्भ्यश्च' इति नुटि चतुर्णाम्। अत्रापि तदन्तविधिना परमचतुर्णाम् इत्यत्रापि नुट् भवति। 'षट्चतुर्भ्यश्च' इति बहुवचननिर्देशाद्यत्र सङ्ख्यायाः प्राधान्यं तत्रैवायमिति प्रियचतुराम्

---

१. 'अचि गतौ' इति मुद्रित-क्षीरतरङ्गिणीपाठः। २. ख. पुस्तके मूले नोपलभ्यते। 'चदे च याचने' क्षीरस्वामी। यद्यपि सायणेन चदेधातुमधिकृत्य न किञ्चिदपि व्याख्यातमित्यनुचित एवात्रास्य पाठस्तथापि अन्यत्र पाणिनीयधातुपाठेषु सर्वत्रास्योपलम्भात्प्रामाणिकोऽयं पाठ इति मनसिकृत्यास्माभिरप्ययं स्वीकृतः। —सम्पादकः

इत्यादौ अप्रधाने नुण्न भवति। चतुर्षु इत्यत्र 'रोः सुपि' इति नियमान्न विसर्जनीयः। स्त्रियाम्—'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति विभक्तौ चतस्रादेशे 'अचि र ऋतः' इति अजादावृकारस्य पूर्वसवर्णदीर्घापवादे च रेफे चतस्रः इत्यादि। 'ऋन्नेभ्यो ङीप्' इति स्वस्रादिपाठात् 'न षट्स्वस्रादिभ्यः' इति निषिध्यते। चतसृणाम् इत्यत्र 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' इति नुट्। अजादिविभक्त्यभावान्न रेफादेशः। नामि दीर्घो 'न तिसृचतसृ' इति प्रतिषेधान्न भवति। चतस्रादेशस्तदन्तेऽपि भवतीति परमचतस्रः इत्यादि भवति। यत्र बहुव्रीह्यादिना समासस्यान्यलिङ्गत्वं तत्रापि चतुरर्थस्त्रीत्वाश्रयोऽयमादेशो भवति। प्रियाश्चतस्रो यस्य प्रियचतसा ब्राह्मणः। प्रियचतस्रौ इत्यादि। सावानङादेशः। अजादौ 'अचि र ऋतः'। अयं परत्वात् पूर्वसवर्णत्वं बाधते, 'ऋतो ङि सर्वनामस्थानयोः' इति गुणं पूर्वविप्रतिषेधेन। तेनाजादौ सर्वत्र रेफ एव भवति। अत्र 'नद्यृतश्च' इति कप् सन्निपातपरिभाषया न भवति। कपि हि प्रकृतिविभक्त्योरानन्तर्यं विहन्यते। प्रियाश्चत्वारोऽस्याः प्रियचत्वाः स्त्री। प्रियचत्वारौ—इत्यत्र अङ्गस्य स्त्रीत्वेऽपि चतुरर्थस्यास्त्रीत्वात् चतस्रादेशो न भवति। चतुर्णां पूरणः चतुर्थः—'तस्य पूरणे डट्' इति डटि 'षट्कतिकतिपयचतुरां थुक्' इति थुगागमः। तुर्यम्, तुरीयम्—'चतुरश्छयतावाद्यक्षरलोपश्च' इति पूरणार्थे छयतौ, आद्यक्षरलोपश्चेति चशब्दस्य लोपः। तुरीयं भिक्षायाः तुरीयभिक्षा। चतुर्थं भिक्षायाः चतुर्थभिक्षा—'द्वितीयतृतीयचतुर्थतुरीयाण्यन्तरस्याम्'' इति द्वितीयादीन्येकदेशवाचिना षष्ठ्यन्तेन सह वा समस्यन्ते इति तत्पुरुषः एकदेशिसमासः। अन्यदा षष्ठीसमासे भिक्षातुरीयम्, भिक्षाचतुर्थम् इत्यपि भवति पूर्वनिपातभेदः। चतुष्टयम्—''सङ्ख्याया अवयवे तयप्'' इति अवयवे वर्त्तमानायाः सङ्ख्याया अवयविनि तयप्। 'खरवसानयोः' इति रेफस्य विसर्जनीये 'ह्रस्वात्तादौ तद्धिते' इति तस्य षत्वं ष्टुत्वं तकारस्य। जसि 'प्रथमचरमतय' इति वा सर्वनामत्वात् चतुष्टये, चतुष्टयाः। स्त्रियां 'टिड्ढाणञ्' इत्यादिना ङीप्—चतुष्टयी। चतुर्भुङ्क्ते चतुरो वारान् भुङ्क्ते इत्यर्थः। 'द्वित्रिचतुर्भ्यः सुच्' इति क्रियाभ्यावृत्तिगणने सुच्। 'रात्सस्य' इति सकारलोपः। एककर्तृकाणां तुल्यजातीयानां क्रियाणां जन्मसङ्ख्यानं क्रियाभ्यावृत्तिगणनम्। स्वाद्युत्पत्तिः। स्वरादिषु सुजिति पाठात् अव्ययत्वात् सुब्लुक्। चतुःकरोति, चतुष्करोति—''द्विस्त्रिश्चतुरिति कृत्वोर्थे'' इति कृत्वोर्थे वर्तमानानामेषां विसर्जनीयस्य कुप्वोर्वा षत्वम्। अन्यदा तु 'कुप्वोः ≍क≍पौ च' इति विसर्जनीयजिह्वामूलीयौ। चतुष्कपालम्। चतुष्पात्—''इदुदुपधस्य चाप्रत्ययस्य'' इकारोकारोपधस्य यो विसर्जनीयोऽप्रत्ययसम्बन्धी तस्य कुप्वोः षत्वमिति षत्वम्। अविद्यमानानि विशिष्टानि शोभमानानि चत्वारि यस्य सः अचतुरः। विचतुरः। सुचतुरः—'अचतुर' इत्यादिना बहु-

व्रीहौ अचि निपात्यन्ते। त्रयश्चत्वारो वार्थोऽन्यपदार्थः। त्रिचतुराः। वृत्तिस्वाभाव्यात् संदिग्धेष्वस्य वृत्तिः। चतुर्णां समीपभूता उपचतुराः—"सङ्ख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये" अव्ययादीनि पूर्वपदानि सङ्ख्येयवाचीनि सङ्ख्यया समस्यन्त इति बहुव्रीहिः। 'चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानम्' इत्यच् समासान्तः। चात्वालम्—यत उत्तरवेद्यर्थाः पांसवो ह्रियन्ते तदुच्यते। 'स्थाचतिमृजेरालज्वालज्वालीयचः' इति यथासङ्ख्यात् वालञ्। चत्वरम्—'छित्वरचत्वर' इति ष्वरचि निपात्यते। उणादिवृत्तौ 'छद अपवारणे' इत्यस्य निपातनमुक्तम्। अयं द्वितीयादिश्च पठ्यते। छदति। छदते इत्यादि ॥८६६-८६७॥

५९९. प्रोथृ पर्याप्तौ। प्रोथति। पुप्रोथ। प्रोथिता। प्रोथते इत्यादि। पुप्रोथिषति, पुप्रोथिषते। पोप्रोथ्यते। पोप्रोथीति, पोप्रोत्ति। प्रोथयति। अपुप्रोथत्—ऋदित्त्वान्नोपधाह्रस्वः। 'प्रोथदश्वो न यवसे' इत्यत्र 'प्रोथति सूदति अश्व इवायमग्निः' इति भट्टभास्करः। अयमेव "'अपप्रोथ दुन्दुभे दुच्छुनान्' इत्यत्र 'प्रोथय मारय दुच्छुनान् दुरवलिप्तान्' उपसर्गान्तरविकारः। प्रोथृ पर्याप्तिगतौ" इत्याह। क्षुरे तु 'अपप्रोथनं हुङ्करणम्' इति। प्रोथः—'हलश्च' इति करणे घञ् ॥८६८॥

६००. मिदृ मेदृ मेधाहिंसनयोः। अयं पाठो देवादीनाम्। मेदति। मिमेद। मेदिता। मेदिष्यति। मिमिदिषति, मिमेदिषति। मिदित्वा, मेदित्वा। मेमिद्यते। मेमिदीति, मेमेत्ति। मेदयति। अमिमेदत्। मेदते इत्यादि। द्वितीयस्य तु मिमेदतुः इत्यादौ क्ङितोरेकारश्रवणं विशेषः। क्षीरस्वामी 'थान्तावेतौ'। भिदादिसूत्रे मेधाशब्दं व्युत्पादयन् न्यासकारो धान्तावाह। भोजराजस्तु मेधिं नानुमन्यते। यदाह—'अङ्विधौ रिखिलिखिसिधिमिधिगुधिभ्यो गुणश्च' इति। कौमाराश्चात्रैवानुकूलाः। मेदत इति घृतादौ स्नेहने गतः ॥८६९-८७०॥

६०१. मेधृ सङ्गमे च। मेधति। मिमेध। मेधिता। मेधते इत्यादि। मेधा—भिदादित्वादङ्। गृहमेधो देवतास्य गृहमेध्यम्। गृहमेधीयम्—'द्यावापृथिवी' इत्यादिना छयतौ ॥८७१॥

६०२. णिदृ णेदृ कुत्सासन्निकर्षयोः। नेदति इत्यादि मिदृमेदृवत्। प्रणेदति—'उपसर्गात्' इति णत्वम्। निन्दतीति कुत्सायां गतम् ॥८७२-८७३॥

६०३. शृधु मृधु उन्दने। उन्दनं क्लेदनम्। शर्धति। शशर्ध। शशृधतुः। शर्धिता। शर्धते। शशृधे इत्यादि। शिशर्धिषति। शरीशृध्यते। शरीशर्द्धि। 'झषस्तथोः' इति धत्वे जश्त्वम्। लोटि हौ शरीशृद्धि। लङि तिपि अशरीशर्त्—'रात्सस्य' इति नियमात् न संयोगान्तलोपः। सिपि तु जश्त्वे 'दश्च' इति वा रुत्वे 'रो रि' लोपो 'ढ्रलोपे' इति दीर्घे अशरीशाः इत्यपि भवति। एवं रुग्रिकोरपि। शर्धयति। अशशर्धत्, अशीशृधत्। उच्छर्द्धा। शर्धित्वा, शृद्ध्वा। शृद्धः। एवं मर्धति इत्यादि। शृधेर्वतादौ

पाठः शब्दकुत्सायां क्रियाफलस्य अकर्तृगामित्वेऽपि आत्मनेपदार्थः। तथा 'वृद्भ्यः स्यसनोः' इति स्यसनोर्लुटि च क्रियाफलस्य कर्तृगामित्वेऽपि परस्मैपदार्थः। तथा 'पुषादिद्युतादि' इत्यङर्थश्च। वृतादिश्च द्युताद्यन्तर्गणः। तथा 'न वृद्भ्यश्चतुर्भ्यः' इति स्यसनोः परस्मैपद इण्निषेधार्थश्च ॥८७४-८७५॥

६०४. बुधिर् बोधने। बोधति। बुबोध। बोधिता। अबुधत्, अबोधीत्—'इरितो वा' इत्यङ् विकल्पेन। बोधते। बुबुधे इत्यादि। क्षीरस्वामी तु बुधेत्यनिरितं पपाठ। बोधतीति ज्वलादिः परस्मैपदी अवगमने गतः। अस्य तशब्दे 'दीपजन'- इति चिण् नेति अबोधिष्ट इत्येव भवति। तत्र दैवादिकैर्नित्यमात्मनेपदिभिरकर्मकैः साहचर्यात् तादृश एव बुधिर्गृह्यते। तथा 'बुधयुध' इत्यत्र युधनशजनैरकर्मकैः साहचर्यान्नास्य ग्रहः। स्पष्टं चैतदेवं तत्र वृत्तौ। तेन बोधयति, बोधयते इति भवति ॥८७६॥

६०५. उ बुन्दिर् निशामने। निशामनं चक्षुर्विज्ञानम्। बुन्दति। बुबुन्द। बुन्दिता। अबुन्दत्। अबुन्दीत्। बुबुन्दिषति। बोबुन्द्यते। बोबुन्ति। ह्रौ ङित्त्वादनुनासिकलोपे—बोबुद्धि। बुन्दते। बुबुन्दे इत्यादि। उदित्त्वात्क्त्वायामिड्विकल्पनात्—बुन्दित्वा, बुन्त्वा। निष्ठायां बुन्नम्—नलोपे 'रदाभ्याम्' इति निष्ठानत्वम्। बुद्बुदम्—घञर्थे के नलोपे 'क्वादीनां के द्वे भवतः' इति द्विर्वचनम्। पृषोदरादित्वान्न हलादिःशेषः ॥८७७॥

६०६. वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु। 'वादित्रग्रहणं नाम वादित्रस्य वाद्यभाण्डस्य वादनार्थं ग्रहणम्' इति क्षीरस्वामी। वेणति। विवेण। वेणिता। विवेणिषति। वेवेण्यते। वेवेण्टि। वेणयति। अविवेणत्। वेणते। विवेणे इत्यादि। वेणिः। वेणी—इन्। 'कृदिकारादक्तिनः' इति ङीष्वा। 'उत माता महिषमन्ववेनत्' इत्यत्र भाष्यकारास्तवर्गपञ्चमान्तममुं पेठुः ॥८७८॥

६०७. खनु अवदारणे। खनति। चखान। चख्नतुः—'गमहन' इत्याजादौ क्ङित्युपधालोपः। तस्य 'द्विर्वचनेऽचि' इति स्थानिवत्त्वात् द्विर्वचनम्। खनिता। खनिष्यति। अखनत्। खनेत्। आशिषि—खन्यात्, खायात्—'जनसनखनां सञ्झलोः', 'ये विभाषा' इत्यात्वम्। धातुपारायणे तु—"लोपो यि' इतिवत् 'ये विभाषा' इति वर्णमात्रे निर्देष्टव्ये य इत्यत्वतो निर्देशाद् इदमात्वं यग्यङोरेव, न तु यासुटि' इत्युक्तम्। अखनीत्, अखानीत्। चिखनिषति। चङ्खन्यते, चाखायते। चङ्खन्ति। चङ्खातः—'अनुनासिकस्य' इति दीर्घं परत्वाद् बाधित्वा 'जनसनखनाम्' इत्यात्वं भवति। तत्र झल्ग्रहणं सनोऽर्थम्, तस्यैव झलादेः सनः सम्भवात्। तेन चिखनिषति इत्यत्रात्वाभावः। खानयति। अचीखनत्। खनते। चख्ने इत्यादि। खेयम्—'ई च खनः' इति क्यपि तत्सन्नियोगेन ईकारेऽन्तादेशे आद्गुणः। इ इ इति प्रश्लेषेणेकारद्वयं विधीयते। एकस्मिन्विधीयमाने 'ये विभाषा' इत्यात्वाभावपक्षे सावकाशोऽसौ परेणान्तरङ्गेण चात्वेन बाध्येत; यतो हि यकारादौ बुद्धिस्थ एव विधानादन्तरङ्ग-

मात्वम्, ईकारस्तु क्यप्सन्नियोगेन विधानाद् बहिरङ्गः। यदा तु—'ये विभाषा' इति परसप्तमी, तदात्वमेव बहिरङ्गम्; ईत्वं तु क्यप्संन्नियोगेनान्तरङ्गमिति नार्थः प्रश्लेषेणात्वबाधनार्थेन इकारान्तविधानेन। एवं च सूत्रेऽपि ह्रस्व एव पठितव्यः। नन्वेवमेकादेशस्य 'षत्वतुकोरसिद्धः' इत्यसिद्धत्वात् ह्रस्वाश्रयस्तुक् स्यात्, नैतत्; 'पदान्तपदाद्योरेकादेशोऽसिद्धः' इत्येवं तत्र व्यवस्थापनात्। खनकः, खनकी—'शिल्पिनि ष्वुन्' इति ष्वुन्। तत्र च 'नृतिखनिरञ्जिभ्यः' इति परिगण्यते। परितः खाता परिखा—'अन्येष्वपि दृश्यते' इति डः। खायतेऽनेनेति खनित्रम्—'अर्ति' इत्यादिना करणे इत्रः। खात्वा, खनित्वा—उदित्त्वादनिट्पक्षे झलादिकित्परत्वात् पूर्ववदात्वम्। निखाय, निखन्य—'ये विभाषा' इत्यात्वं वा। खातः—'यस्य विभाषा' इत्यनिट्त्वम्। खन्यतेऽनेन अत्रेति वा खनः—'खनो घ च' इति करणाधिकरणयोर्घः। चकरात् घञि—आखानः। आखः—'डो वक्तव्यः' इति डः। आखरः—'डरो वक्तव्यः' इति डरः। आखनिकः—'इको वक्तव्य' इतीकः। आखनिकबकः—'इकबको वक्तव्यः' इति इकबकः। आखादयः खनित्रवचनाः। परिखा भवेदस्मिन्नस्य वा पारिखेयं स्थलम्—'परिखाया ढञ्' इति प्रथमान्तात् सम्भावनोपाधिकाद् अस्यास्मिन्नित्यर्थे ढञ्। आखनतीति आखुः—'आङ्परयोः खनिशृभ्यां डिच्च' इति डप्रत्यये डित्त्वाट्टिलोपः। मुखम्—'डित् खनेर्मुट् चोदात्तः' इत्यच्प्रत्यये डित्त्वाट्टिलोपः, धातोर्मुडागमश्च। मुखे भवं मुख्यम्—'दिगादिभ्यो यत्' इति यत्प्रत्ययः। इह पाठोऽशरीरावयवार्थः। शरीरावयस्य तु 'शरीरावयवाच्च' इत्येव सिद्धः। मुखमिव मुख्या—'शाखादिभ्यो यः' इति इवार्थे यः। मुखतो भवं मुखतीयम्—'मुखपार्श्वतसोर्लोपः' इति गहादिपाठाच्छप्रत्यये सलोपे 'यस्येति' इति लोपः। परिमुखं भवं पारिमुख्यम्—'अव्ययीभावाच्च' इति यः। तत्र हि—'परिमुखादिभ्य उपसङ्ख्यानम्' इति वार्त्तिकम्, तेन परिमुखादेरेवाव्ययीभावदयं प्रत्ययः। परिमुखं वर्त्तते पारिमुखिकः सेवकः—'परिमुखं च' इति द्वितीयान्ताद् अस्माद्वर्त्तते इत्यस्मिन्नित्यर्थे ठक्। मुखस्य सदृशं यथामुखं प्रतिबिम्बम्। समं मुखं सम्मुखम्। समशब्दः सर्वपर्यायः। यथामुखं दर्शनः यथामुखीनः आदर्शादिः। एवं सम्मुखस्य दर्शनः सम्मुखीनः—'दर्शने' इत्यधिकरणे ल्युट्। "यथामुखसम्मुखस्य दर्शनः खः" इति षष्ठ्यन्ताभ्यामाभ्यां दर्शन इत्यर्थे खः। अत एव निर्देशात् सादृश्येऽपि यथामुखम् इत्यव्ययीभावः। तथा समोऽन्त्यलोपश्च। 'अयं च लोपः प्रत्ययसन्नियोगेनेति केवलो न प्रयोगार्हः' इति व्याख्यातारः। 'यथामुखीनः सीतायाः'[1] इति भट्टिप्रयोगश्चिन्त्यः। गौरमुखा

---

१. भ० का० ५।४८।

नाम काचित्—'नखमुखात् संज्ञायाम्' इति स्वाङ्गलक्षणस्य ङीषो निषेधात् टाबेव। असंज्ञायां तु सुमुखी, सुमुखा। इत्युभयं भवति ॥८७९॥

६०८. चीवृ आदानसंवरणयोः। चीवति। चिचीव। चीविता। चिचीविषति। चेचीव्यते। चीवयति। अचिचीवत्। चीवते। चिचीवे इत्यादि। ऊदित्वाभावान्नास्य यङ्लुगस्ति। अनृदिदित्येके। चीवरम्—'छित्वर' इत्यादिना वरचि वलोपः। चिनोतेर्वा निपातनम्। सञ्चीवरयते भिक्षुः चीवरमर्जयति परिधत्ते इति वार्थः। 'पुच्छभाण्डचीवराण्णिङ्' इति णिङ्। तत्र 'चीवरादर्जने परिधाने' इति वृत्तिः। अयं चुरादौ च ॥८८०॥

६०९. चायृ पूजानिशामनयोः। चायति। चचाय। चायिता। चिचायिषति। चेकीयते—'चायः की' इति यङ्यङ्लुकोः कीभावः। दीर्घोच्चारणं यङ्लुगर्थमिति स्थितम्। चेकयीति, चेकेति। चेकीतः। चाययति। अचचायत्। चायते। चचाये इत्यादि। चायित्वा। अपचितः—'अपचितश्च' इति निष्ठायामनिट्त्वं चिभावश्च पक्षे निपात्यते, अन्यदा—अपचायितम्। 'क्तिनि नित्यं चिभावो वक्तव्यः'—अपचितिः। चनः अन्नम्—'चायतेर्ह्रस्वश्च' इत्यसुनि नुडागमो ह्रस्वश्च, वलिलोपः ॥८८१॥

६१०. व्यय गतौ। व्ययति। वव्याय। व्ययिता। विव्ययिषति। वाव्ययते। वाव्ययीति, वाव्यति। व्याययति। अविव्ययत्। व्ययते। वव्यये इत्यादि। व्ययते इति वित्तत्यागे नित्यमात्मनेपदी। अयं चुरादावदन्तः ॥८८२॥

६११. दाशृ दाने। दाशति। ददाश। दाशिता। दिदाशिषति। दादाश्यते। दादाष्टि। दाशयति। अददाशत्। दाशते। ददाशे इत्यादि। दाश्वान्—'दाश्वान् साह्वान्' इति। क्वसावद्वित्वमनिट्त्वं च निपात्यते। दाशतेऽस्मै इति दाशः—'दाशगोघ्नौ संप्रदाने' इति अचि निपात्यते। पुरो दाश्यत इति पुरोडाशः। तत्सहचरितग्रन्थोऽपि पुरोडाशः। पुरोडाशस्य संस्कारकः 'मखस्य शिरोऽसि' इत्यादि मन्त्रः पौरोडाशः। पुरोडाशस्य पौरोडाशस्य च व्याख्यानं तत्र भवं वा पुरोडाशिकम्, पौरोडाशिकम्—'पौरोडाशपुरोडाशात्ष्ठन्' इति प्रत्येकं सप्तमीषष्ठ्यन्ताभ्यामाभ्यां भवव्याख्यानयोरर्थयोष्ठन्। अत्रैव निर्देशात् दाशेर्दकारस्य डकारः। अस्मादनन्तरं स्वामिकाश्यपावयतिं पठतः, तदनार्षं प्रतीयते; यदाह 'उपसर्गस्यायतौ' इत्यत्र हरदत्तः—'अयतिरनुदात्तेत्' इति ॥८८३॥

६१२. भेषृ[1] भये। क्वचित् गतावपीति पठ्यते। भेषति। बिभेष। भेषिता। बिभेषिषति। बेभेष्यते। बेभेष्टि। भेषयति। अबिभेषत्। भेषते। बिभेषे इत्यादि ॥८८४॥

---

१. 'भेषृ भ्रेषृ' क्षीरस्वामी। 'भ्लेषृ' इति क. पुस्तके।

६१३. भ्रेषृ गतौ। 'भेषृ इत्यपि' इति मैत्रेयः। क्वचित्तु पठ्यते[1]—'चलने' इति। भ्रेषति इत्यादि पूर्ववत्। भ्रेषः ॥८८५॥

६१४, भ्रस गतिदीप्त्यादानेषु। भ्रसति। भ्रास। भ्रसिता। भ्रसिसिषति। भ्रासयति। भ्रासिसत्। भ्रासते। भ्रासे इत्यादि। 'अष इत्येके' इति क्षीरस्वामिमैत्रेयौ। शाकटायनस्तूभावपि ॥८८६॥

६१५. स्पश बाधनस्पर्शनयोः[2]। 'स्पाशनं ग्रन्थनम्' इति स्वामी। ग्रहणश्लेषणयोरयं चुरादौ। स्पशति। पस्पाश। स्पशिता। अस्पाशीत्, अस्पशीत्। पिस्पशिषति। पास्पश्यते। पास्पष्टि। पस्पशा—यङ्लुगन्तादचि टाप्, 'संज्ञापूर्वको विधिरनित्यः' इति नाभ्यासस्य दीर्घः। स्पाशयति। अपस्पशत्—'अत्स्मृदृत्वर' इत्यादिनाभ्यासस्यात्वम्। स्पशते। पस्पशे। अत्र स्वामी 'पष इत्येके इति, तेन पाषण्डः, पाषाणः' इत्याह। दुर्गशाकटानयोरप्ययमेव पक्षः, अनयोः पाठे 'प्रतिस्पशो विसृज तूर्णितमः', 'यतो व्रतानि पस्पशे' 'अपसर्पश्चरस्पशः', 'शब्दविद्येव नो भाति राजनीतिरपस्पशा[3]' इत्यादिप्रयोगोऽनुगुणः। पाषण्डपाषाणप्रयोगस्तु 'अनुपसर्गात्' इति कथादेर्भविष्यति। यद्वा—पष बन्धने इति युजादेः। अस्ति चायं युजादौ। यद्वक्ष्यति चुरादौ 'पश बन्धने' इत्यत्र मैत्रेयः—'पष बन्धने इति युजादावेके पठन्ति' इति। अत्र स्वामिकाश्यपादयः—पाशादिदर्शनात् पशेति पठन्ति। पाशादयोऽपि चौरादिकेन बन्धनार्थेनापि सिद्धाः। पशुशब्दस्तु पशेर्कुत्पादयिष्यते। पसेति दन्त्यान्तस्सौत्रो धातुः, तस्य पसति इत्यादि। पसेर्यङ्यङ्लुकोः 'जपजभ' इत्यादिना अभ्यासस्य नुकि पंपस्यते। पंपसीति इत्यादि। पंपस्यति—इति कण्ड्वादेः। दुःखायते इत्यर्थः ॥८८७॥

६१६. लष कान्तौ। कान्तिरिच्छा। लषति। ललाष। अलषीत्, अलाषीत्। लिलषिषति। लालष्यते। लालष्टि। लाषयति। अलीलषत्। लषते। लेषे इत्यादि। 'वा भ्राश' इत्यादिना शब्विषये वा श्यनि—लष्यति, लष्यते इत्यादि। लषणः—'जुचङ्क्रम्य' इत्यादिना युच्। लाषुकः—'लषपत' इत्यादिनोकञ्। विलाषी। अपलाषी—'अपे च लषः' इति घिनुण्। चशब्दाद्द्वौ च। त्रयोऽपि ताच्छीलिकाः ॥८८८॥

६१७. चष भक्षणे। चषति इत्यादि लषतिवत्। चषकम् 'क्वुन् शिल्पिसंज्ञयोः' इति क्वुन्। चाषः—घञ् ॥८८९॥

६१८. छष हिंसायाम्। छषति इत्यादि पूर्ववत्। चच्छाष। चच्छषतुः इत्यादौ अभ्यासस्य जश्त्वम्। 'चर्त्वमेत्वतुकोः सिद्धं वक्तव्यम्' इत्यत्र यथासंख्याश्रयणात् एत्वाभ्यासलोपयोरपि चर्त्वस्य सिद्धत्वादादेशादित्वान्नैत्वाभ्यासलोपौ ॥८९०॥

---

1. 'चलने च' क्षीरस्वामी। २, ०स्पाशनयोः इति क्षीरस्वामी। ३. शिशु० २।११२।

६१९. ऋष आदानसंवरणयोः । ऋषति । ऋषते इत्यादि लषिवत् । अयं हिंसार्थः परस्मैपदिषु गतः ॥८९१॥

६२०. म्लक्ष अदने । 'भ्रक्ष' इति क्षीरस्वामी । 'भक्ष' इति मैत्रेयः । तत्र 'गति-बुद्धि' इत्यत्र 'भक्षेरहिंसार्थस्य प्रतिषेधः' इति वार्त्तिकस्य भक्षयति पिण्डीं देवदत्तः । भक्षयति पिण्डीं देवदत्तेन इति ण्यन्ताद्धेतुमण्णौ प्रयोज्यस्य कर्मत्वाभावं दर्शयता भाष्यकृता भक्षतिरनभिहितः । सति हि 'अणि कर्त्ता स णौ' इत्यसामञ्जस्याद-स्मादेव हेतुमण्णावुदाहृतं स्यात् । तथा वृत्तितद्व्याख्यानेष्वपि 'भक्षेरहिंसा-र्थस्य' इत्यत्र चुरादिण्यन्तादेव भक्षेर्हेतुमण्णावुदाह्रियते । म्लक्षति । बम्लक्ष । म्लक्षिता । बिम्लक्षिषति । बाम्लक्ष्यते । बाम्लष्टि । 'स्कोः' इति कलोपः । लोटि हौ बाम्लड्ढि—धित्वष्टुत्वजश्त्वानि । लङि तिप्सिपोर्हल्ङ्यादिलोपे—अबाम्लट् । म्लक्षयति । अबम्लक्षत् । म्लक्षते । बम्लक्षे इत्यादि । योऽत्र 'प्लक्ष' इति केषाञ्चित् पाठः, सोऽपि प्रक्षरतीति प्लक्ष इति प्रपूर्वात् क्षरतेः प्लक्षशब्दस्य भाष्यकारेण व्युत्पादितत्वादनार्ष एव । तथा च श्रुतिरपि 'तस्य शिरश्छित्वा मेधं प्राक्षा-रयन्त्स प्रक्षोऽभवत्तत्प्रक्षस्य प्रक्षत्वं यत् प्लक्षशाखा' इति । अत्र लत्वं कपिलकादित्वाद् द्रष्टव्यम् ॥८९२॥

६२१. दासृ दाने । दासति । ददास । दासिता । दासते इत्यादि दाश-तिवत् ॥८९३॥

६२२. माहृ माने । माहति । ममाह । माहिता । माहते । ममाहे । मिमाहिषते । मामाह्यते । मामाढि—धित्वढत्वष्टुत्वढलोपाः । माहयति । अममाहत् ॥८९४॥

६२३. गुहू संवरणे । गूहति । जुगूह—'ऊदुपधाया गोहः' इति अजादौ प्रत्यये ऊकारः । स च 'गोहः' इति विकृतनिर्देशात् गुणविषय एव, तेन जुगुहतुः इत्यादौ न भवति । गूहिता । ऊदित्त्वादनिट्पक्षे धत्वढत्वष्टुत्वढलोपगुणेषु—गोढा । ढत्वादेरसिद्धत्वात्पूर्वमेव गुण इति ढलोपदीर्घाप्रसङ्गः । गूहिष्यति, घोक्ष्यति—ढत्वभष्भावयोः 'षढोः कः सि' इति कत्वम् । गूहतु । अगूहत् । गूहेत् । आशिषि—गुह्यात् । अगुणविषयत्वादनजादित्वाच्च ऊत्वं न भवति । अगूहीत् । इडभावे 'शल इगुपधात्' इति क्सढत्वभष्भावेषु—अघुक्षत् । गूहते । जुगुहे । गूहिता, गोढा । गूहिष्यते, घोक्ष्यते । गूहताम् । अगूहत । गूहेत । आशिषि—गूहिषीष्ट । इडभावे 'लिङ्सिचौ' इति कित्त्वान्न गुणः । अत एव गोहिरूपाप्रसङ्गात् अजादित्वा-भावाच्च ऊत्वं न भवति—घुक्षीष्ट इति । अगूहिष्ट । इडभावे 'लुग्वा दुहदिहलिहगुहा-मात्मनेपदे दन्त्ये' इति दन्त्यादावात्मनेपदे पक्षे लुक्, धत्वष्टुत्वढलोपदीर्घेषु अगूढ । अगूढाः । अत्र 'तौ' इति वक्तव्ये दन्त्यग्रहणस्य दन्त्योष्ठ्यस्यापि परिग्रहार्थ-त्वात् अगुह्वहि इत्यत्रापि लुग्भवति । अलुक्पक्षे ढत्वभष्भावकत्वष्टुत्वेषु—

अघुक्षत् । अघुक्षाताम् इत्यादि । 'क्सस्याचि' इत्यजादावल्लोपः । कर्मण्येकवचने चिणि—अगूहि । अन्यत्र कर्तृवत् । सनि 'सनि ग्रहगुहोश्च' इति इण्निषेधे 'हलन्ताच्च' इति कित्त्वढत्वादौ—जुघुक्षति । जोगुह्यते । जोगुहीति । 'नाभ्यस्तस्य' इति गुणनिषेधादूत्वाभावः । जोगढि—अनजादित्वादूत्वाभावः । गूहयति । अजूगुहत् । 'ऊदिति तपरकरणाण्णौ चङ्युपधाह्रस्वत्वं बाध्यते' इति केचिदाहुः । एतद् भाष्यवार्तिकादौ न दृश्यते । अपरे तु ब्रुवते—"'निगूह्य गतः' इत्यत्र 'ल्यपि लघुपूर्वात्' इति णेरयादेशे कर्त्तव्ये 'असिद्धवदत्र' इत्यूत्वस्यासिद्धत्वनिवृत्त्यर्थम्" इति, नैतद्युक्तम्; व्याश्रयत्वेनासिद्धत्वाप्रसङ्गात् । ल्यपि णेरयादेशः, ऊत्वं तु णावुपधायाः । गुह्यम्—'शासिदुहिगुहिभ्यो वेति वक्तव्यम्' इति क्यप् । तदभावे ण्यति गोह्यम् । काकेभ्यो गुह्यन्त इति काकगुहास्तिलाः—'मूलविभुजादिभ्य उपसङ्ख्यानम्' इति कः । गूहन्तेऽत्रानयेति वा गुहा—'गिर्योषध्योः' इत्यङ् । गूढिः अन्यत्र । गूहित्वा, गूढ्वा । गूढः ॥८९५॥

६२४. हिक्कादय उदात्ताः स्वरितेतः ।

अथाजन्तानुभयपदिन आह—

६२५. श्रिञ् सेवायाम् ।

६२६. उदात्तः । श्रयति । शिश्राय । शिश्रियतुः । शिश्रियुः । शिश्रयिथ । शिश्राय, शिश्रय । शिश्रियिव । अचि क्ङितीयङादेशः । अन्यत्र वृद्धिगुणौ । अत्र 'असंयोगाल्लिट्' इति लिटः कित्त्वात् 'श्र्युकः किति' इति प्राप्तस्येटो निषेधस्य क्रादिनियमेन बाधः । श्रयिता । श्रयिष्यति । श्रयतु । अश्रयत् । श्रयेत् । आशिषि श्रीयात्—'अकृत्सार्वधातुकयोः' इति दीर्घः । अशिश्रियत्—'णिश्रि' इति चङ् । लघूपधगुणादन्तरङ्गत्वादियङ् । श्रयते । शिश्रिये इत्यादि । शिश्रयिषति । शिश्रीषति—'सनीवन्तर्ध' इत्यादिना इड्विकल्पः । अनिट्पक्षे 'अज्झन' इति दीर्घः । 'इको झल्' इति कित्त्वादगुणत्वम् । शेश्रीयते । शेश्रयीति, शेश्रेति । श्राययति । अशिश्रयत्—वृद्ध्यायौ । णौ कृतस्य स्थानिवत्त्वात् श्रीशब्दस्य द्विर्वचनम् । श्रायः—'श्रिणी भुवोऽनुपसर्गे' इति घञ् । उच्छ्रायः—'उदि श्रयतियौतिपूद्रुवः' इति घञ् । कथं 'पतनान्ताः समुच्छ्रयाः' इति ? 'कृत्यल्युटो बहुलम्' इति वचनात् 'एरच्' । एवं च 'उदि श्रयति' इति तिपा निर्देशात् यङ्लुगन्तात् उच्छ्रयः इति अजेव । विश्रयी—'जिदृक्षिविश्रि' इति ताच्छीलिक इनिः । श्रित्वा । श्रितः—'श्र्युकः किति' इति इण्निषेधः । कष्टश्रितः—'द्वितीयाश्रितातीत' इति समासः । श्रेणिः—वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो निः' इति निः । श्रेणी—कृदिकारत्वात् ङीष् । अश्रेणयः श्रेणयः कृताः श्रेणीकृताः—'श्रेण्यादयः कृतादिभिः' इति तत्पुरुषः । 'श्रेण्यादिषु च्व्यर्थवचनम्' इति तत्र वार्त्तिकम् । श्रीः—'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च' इति क्विब्दीर्घौ । इयङ्स्थानित्वात्, नदीत्वाभावात् हे श्रीः

इत्यत्र 'अम्बार्थनद्योर्ह्रस्वः' इति न ह्रस्वः। ङिद्वचनेषु 'ङिति ह्रस्वश्च' इति पक्षे नदीत्वादाटि ङेश्चामि श्रियै। श्रियाः। श्रियाम् इत्यादि। अन्यदेयङि श्रिये। श्रियः। श्रियि। श्रिमन्यं ब्राह्मणकुलम् इत्यत्र भाष्यंकारवचनात् श्रीशब्दस्य ह्रस्वः मुम्भावश्च। श्मश्रु-'श्यनि श्रयतेः डरुन्' इति श्यन्शब्दे उपपदे ड्रुन्, टिलोपः। श्मश्रुणः—पामादित्वान्नः॥८६६॥

६२७. भृञ् भरणे। एतदादयो नयत्यन्ता अनुदात्ता उभयपदिनः। भरति। बभार। बभ्रतुः। बभर्थ। बभृव—क्रादिनियमादिडभावः। पिति गुणः, वृद्धिः, अन्यत्राजादौ यण्। भर्त्ता। भरिष्यति—'ऋद्धनोः स्ये' इतीट्। भरतु। अभरत्। भरेत्। आशिषि भ्रियात्—'रिङ्शयग्लिङ्क्षु' इति रिङादेशः। रीङि प्रकृते रिङ्ग्रहणात् 'अकृत्सार्वधातुकयोः' इति न दीर्घः। अभार्षीत्। भरते। बभ्रे। भर्त्तासे। भरिष्यते। भरताम्। अभरत। भरेत। आशिषि भृषीष्ट-'उश्च' इति आत्मनेपदविषययोर्झलाद्योर्लिङ्सिचोः कित्त्वान्न गुणः। अभृत—'ह्रस्वादङ्गात्' इति सिचो लोपः। सिजाश्रयो गुणः 'उश्च' इति कित्त्वान्न भवति। बिभरिषति-'सनीवन्त' इत्यादिना वेट्। इडभावे सनो झलादित्वात् 'इको झल्' इति कित्त्वे 'अज्झनगमाम्' इति दीर्घे 'उदोष्ठ्यपूर्वस्य' इति उत्वरपरत्वयोः 'हलि च' इति दीर्घे बुभूर्षति। बेभ्रीयते—'रीङ् ऋतः' इति परत्वाद्रीङि कृते द्विर्वचनम् बर्भर्त्ति। लोटि हेर्ङित्त्वादगुणत्वे—बर्भृहि। लङि हल्ङ्यादिलोपः—अबर्भः। एवं रिग्रीकोरपि। 'सनीवन्त' इत्यत्र भरेति शपा निर्देशात् यङ्लुकि नेड्विकल्प इति बर्भरिषति इत्येव भवति। अत एव 'शपा निर्देशाद्, आचार्याः शब्विकरणं नेच्छन्ति' इति मतं प्रत्युक्तम्। तथा च वर्द्धमानसुधाकरशिवस्वाम्यादयो भरेति शपा निर्देशाद् 'भृञ् भरणे' इति भौवादिकस्य ग्रहणमिच्छन्ति। भारयति। अबीभरत्। भर्त्ता। भर्तुर्भावकर्मणी भात्रम्—उद्गात्रादित्वादञ्। ग्रामभर्ता—याजकादित्वात् समासः। चारं भरति इति चारभरः—चारभरेति पचादिपाठादच्। भृत्यः भरणीयः—'भृञोऽसंज्ञायाम्' इति क्यपि तुक्। 'सम्पूर्वाद् विभाषा' इत्युक्तत्वात् ण्यदपि भवतीति सम्भृत्यः, सम्भार्यः इति क्यब्ण्यतौ भवतः। संज्ञायां तु ण्यदेव भवति—भार्या इति पाणिगृहीतीत्यर्थः। सम्भर्यम् गवामयनो हविर्विशेषः। भृत्या भरणविशेषः—'संज्ञायां समज' इत्यादिना स्त्रियां भावे क्यप्। 'कर्मणि भृतौ' इति निर्देशाद् भृतिः इति क्तिन्नपि भवति। आत्मम्भरिः—'फलेग्रहिरात्मम्भरिश्च' इति इन्प्रत्ययान्तो निपातितः। चकारात् 'कुक्षिम्भरिश्च' इति वृत्तौ। अत एव चकारात् 'ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः' इत्यपि निर्वाह्यम्। विश्वम्भरा—'संज्ञायां भृतृवृजि' इत्यादिना खचि मुमागमः। भारः—घञ्। वंशभारं वहति वांशभारिकः—"तद्धरतिवहत्यावहति भाराद्वंशादिभ्यः" वंशादिपूर्वपदाद् भारान्तात् प्रातिपदिकात्

द्वितीयासमर्थात् वहत्यादिष्वर्थेषु ठगिति ठक्। अपो भरतीति अभ्रम्—मूलविभुजादित्वात् कः। अभ्रं करोति अभ्रायते—'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे' इति द्वितीयान्तात् करणे क्यङ्। करणं क्रिया। 'अकृत्सार्वधातुकयोः' इति दीर्घः। भरुः, भर्त्री—'भृमृशि'इत्युप्रत्ययः। बभ्रुः—पिङ्गललोचनो नकुलश्च। 'कुर्भ्रश्च' इति कुप्रत्यये द्वित्वम्। भरतः—'पृभृदृशियजि' इत्यतच्। टुविदयं जुहोत्यादौ। ऋकारान्तो भर्त्सनादौ क्र्यादौ ॥८९७॥

९२८. हृञ् हरणे। हरणं प्रापणं स्वीकारः स्तेयं नाशनं च। यथा भारं हरति ग्रामम्। अंशं हरति, सुवर्णं हरति चौरः। पापं हरतीति। विहाराहारप्रहारादावर्थान्तराभिधानं तूपसर्गवशात्। तत्र यदा प्रापणमर्थस्तदा 'अकथितं च' इति द्विकर्मकोऽयम्। तत्रास्य लादयः प्रधानकर्मणि भवन्ति—ह्रियते भारो ग्रामम्। हर्त्तव्यः। हृतः। सुहर इति। कृद्योगलक्षणा षष्ठी द्वितीयावद् उभयत्र भवति—हर्त्ता भारस्य ग्रामस्य इति। 'उभयथा गोणिकापुत्रः' इति भाष्ये उक्तत्वात् गुणकर्मणि द्वितीयापि द्रष्टव्या—हर्त्ता भारस्य ग्रामम् इति। हर्त्तव्यो भारो ग्रामं देवदत्तेन इत्यत्र 'कर्तृकर्मणोः कृति' इति प्राप्ता षष्ठी 'कृत्यानां कर्त्तरि वा' इत्यत्र 'कृत्यानाम्' इति योगं विभज्य 'उभयप्राप्तौ न' इति चानुवर्त्य 'उभयप्राप्तौ कृत्ये षष्ठी न' इति भाष्ये प्रतिपादनान्न भवति। स्पष्टं चैतत्तत्र कैयटादौ। हरति, हरते इत्यादि भरतिवत्। हारयति। अजीहरत् भारं देवदत्तं यज्ञदत्तः देवदत्तेन इति वा। 'हृक्रोरन्यतरस्याम्' इत्यणौ कर्तुर्णौ वा कर्मत्वम्। इयं च विभाषा यदायं गत्यर्थोऽभ्यवहारार्थो वा तदा पूर्वेण नित्ये कर्मत्वे प्राप्ते, अन्यदा त्वप्राप्त इत्युभयत्रविभाषा द्रष्टव्या। हारयति भारम् इत्यत्र प्रापणार्थत्वेऽप्यस्ति गतिप्रतीतिरिति गत्यर्थत्वेन प्राप्तिरुक्ता। स्पष्टं चैतत् 'हृक्रोः' इत्यत्र न्यासपदमञ्जर्योः। कैयटकारस्य त्वत्र गत्यर्थत्वमनभिमतमेव। यदाह 'न वेति विभाषा' इत्यत्र-'हृक्रोः' इत्यस्य उभयत्रविभाषोक्तौ प्रत्युदाहरणप्रदर्शने 'विपूर्वो हरतिर्गत्यर्थः' इति। संप्रहरन्ते राजानः इत्यत्र हरतेर्हिंसार्थत्वेऽपि 'न गतिहिंसा' इति निषेधस्य 'हृवह्योरप्रतिषेधः' इति तङ्। अत्र हरदत्तः—"अर्थग्रहणसामर्थ्याद्ये शब्दान्तरनिरपेक्षा गतिहिंसनयोर्वर्त्तन्ते ते इह गृह्यन्ते, इत्युपसर्गवसेन हिंसार्थत्वात् 'हरतेरप्रतिषेधः' इत्याहुः" इति। एवं हि अभ्यवहारयति इत्यत्र 'निगरणचलनार्थेभ्यः' इति परस्मैपदनियमो न स्यात्। तथा 'इदमेषामभ्यवहृतम्' इत्यत्र 'क्तोऽधिकरणे च' इति क्तो न स्यात्। किं चार्थग्रहणमन्तरेणाऽपि न्यायत एवान्यानपेक्षया तदर्थाभिधायिनां ग्रहणस्य सिद्धत्वादर्थग्रहणं यथाकथञ्चित्तदर्थाभिधायिनां ग्रहण एव प्रत्युत प्रमाणम्। एवं हि 'उपमानं शब्दार्थप्रकृतावेव' इति प्रकृतिग्रहणमप्यर्थवत्। तस्येदं हि प्रयोजनम्-यत्र णिनिप्रकृतिरेव शब्दार्थः तत्रैवायं स्वरो यथा स्यात्; यत्र तूपसर्गाद्यपेक्षया शब्दार्थत्वं गर्दभोच्चारिपदौ तत्र मा भूदिति। यद्यर्थग्रहणमप्यन्यानपेक्षयोपात्तार्थाभिधा-

यिनां ग्रहणार्थं स्यात्, किं प्रकृतिग्रहणेन! तथा च तत्र वृत्तिरपि—'प्रकृतिग्रहणं किम्, प्रकृतिरेव यत्रोपसर्गनिरपेक्षा शब्दार्थो भवति' इति। एवं तत्र न्यासपदमञ्जर्योरपि। तस्मादर्थग्रहणं यथाकथञ्चिदुपात्तार्थाभिधायिनो ग्रहण एव प्रमाणम्। अत एव 'न गतिहिंसा' इत्यत्र पदमञ्जर्याम् 'आहुः' इति कर्त्रन्तरनिर्देशः। 'ततः संप्रहरिष्यन्तौ दृष्ट्वा कर्णधनञ्जयौ' इत्यत्र युद्धाभिमुख्यमात्रमर्थं इति कर्मव्यतिहारस्याभावात् परस्मैपदम्। पैतृकमश्वा अनुहरन्ते पितुरागतं प्रकारं सततं शीलयन्तीत्यर्थः। 'हरतेर्गतताच्छील्ये' इति तङ्। गतं प्रकारः। ताच्छील्यं तत्स्वभावता। न्यासे तु गतीति पठ्यते। यदाह—"गतौ ताच्छील्यम्" इति। शतस्य व्यवहरति—शतं पणते, क्रीणाति विक्रीणीते इति वार्थः। 'व्यवहृपणोः समर्थयोः' इति शेषे कर्मणि षष्ठी। द्यूते क्रयविक्रयव्यवहारे समानार्थत्वमनयोः। अन्यत्र शलाकां व्यवहरति इति द्वितीयैव, विक्षिपतीत्यर्थः। प्रतिहर्त्ता, तस्य भावकर्मणी प्रातिहर्त्रम्—उद्गात्रादित्वादञ्। अवहारः ग्राहः—'श्याद्व्यध' इत्यादिना णः। अंशहरः—'हरतेरनुद्यमनेऽच्' इति कर्मण्युपपदेऽच्। अनुद्यमनमनुत्क्षेपणम्। उद्यमने तु भारहार इत्येव। कवचहरः—"वयसि च" इति कर्मोपपदात् हरतेरच् वयसि गम्यमाने। कालकृतशरीरावस्था यौवनादिर्वयः। उद्यमनार्थोऽयमारम्भः। 'यदुद्यमनं क्रियमाणं सम्भाव्यमानं वा वयो गमयति' इति वृत्तिः। पुष्पाहरः-'आङि ताच्छील्ये' इति कर्मोपपदात् आङुपसृष्टात् ताच्छील्येऽच् प्रत्ययः। दृतिहरिः पशुः। नाथहरिः पशुः—'हरतेर्दृतिनाथयोः पशौ' इति दृतिनाथयोः कर्मणोरुपपदयोः हृञः पशौ कर्त्तरि इन् प्रत्ययः। संह्रियन्तेऽनेनात्रेति वा संहारः—'अध्यायन्यायोद्यावसंहाराधारावायाश्च' इति करणाधिकरणयोर्घञ् निपात्यते। हरणं हारा—'हाराकाराबन्धने' इतिं भिदादिपाठादङ्, गुणो दीर्घत्वं च। आह्रियन्तेऽस्माद्रस इति आहारः—'अकर्त्तरि च कारके' इति घञ्। हरिः—इन्प्रत्ययः। प्राहिः कूपः—'प्रहरतेः कूपः' इति प्रोपसृष्टादस्मादिकारप्रत्ययः। तत्र डिदित्यनुवृत्तेः टिलोपः। हृदयम्—'वृन्हृञोष्षुक्दुकौ च' इति कयप्रत्ययो दुगागमः। हृदयस्य प्रियं हृद्यम्—'हृदयस्य प्रियम्' इति षष्ठ्यन्ताद्यत्। हृदयस्य बन्धनो हृद्यो मन्त्रः—'बन्धने चर्षौ' इति षष्ठ्यन्ताद्यत्। बध्यतेऽनेनेति बन्धनम्। ऋषिर्वेदः। हृदये भवं हार्दम्—'प्राग्दीव्यतोऽण्'। हृदयं लिखतीति हृल्लेखः। हृदयस्य लासो हृल्लासः—'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदादेशः। तत्र वृत्तौ लेखेत्यणन्तस्य ग्रहणम्। घञि तु हृदयलेख इति। हृदयस्य शोको हृच्छोकः, हृदयशोकः। सुहृदयस्य[1] भावकर्मणी सौहृदय्यम्, सौहार्दम्—ब्राह्मणादिपाठात्ष्यञ्। एवं दौर्हृदय्यम्, दौहार्दम्। हृदयस्य[1] रोगः हृद्रोगः,

---

१. अयं पाठः क. पुस्तके व्यत्ययेन पठितः, अशुद्धश्च।

हृदयरोगः—'वा शोकष्यञ्रोगेषु' इति हृदादेशविकल्पः। ष्यञि हृद्भावपक्षे 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः। सुहृत्। दुर्हृत्—'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति बहुव्रीहौ हृदयस्य हृदादेशः समासान्तः। मित्रामित्राभ्यामन्यत्र सुहृदयः, दुर्हृदयः इति भवति। सुहृदः सुहृदयस्य च भावकर्म्मणी सौहार्दम्—'हायनान्तयुवादिभ्योऽण्' इति अण्। 'हृद्भग' इत्युभयपदवृद्धिः। 'हृदयस्य हृल्लेख' इत्यादिना हृदयस्य हृद्भावः। हृदयस्य भावकर्मणी हार्दम्—युवादिषु 'हृदयासे' इति पाठात् अणि हृद्भावः। हृदयमस्यास्तीति हृदयालुः—'हृदयाच्चालुजन्यतरस्याम्' इति मत्वर्थीय आलुच्। तदभावे इनिठनौ—हृदयी, हृदयिकः इति। हरिणः—'शास्त्याहृश्विभ्य इनच्' इतीनच्। हरिणी—'जातेरस्त्रीविषयात्' इति ङीष्। हरेणुः गन्धद्रव्यविशेषः—'कृहृभ्यामेणुः' इति एणुः प्रत्ययः। हरितः—'हृश्याभ्यामितन्' इति इतन्। हरिणी ब्राह्मणी—'वर्णादनुदात्तात्तोपधात्तो नः' इति स्त्रियां वा ङीष् तकारस्य च नकारः। अयमितनो नित्त्वादुदात्तादिस्तकारोपधश्च भवति। ङीबभावे टापि हरिता ब्राह्मणी। हरित्—'हृसृरुहियुषिभ्य इतिः' इति इतिप्रत्ययः ॥८९८॥

६२९. धृञ् धारणे। धरति इत्यादि भरतिवत्। 'धारेरुत्तमर्णः' इत्यत्र 'धृञ् अनवस्थाने' इति तौदादिकस्य ग्रहणमिति न्यासपदमञ्जर्यादिषु। "'इङ्धार्योः' इत्यत्राप्यस्य" इति न्यासे। 'अध्यायन्याय'इति निपातनमपि तस्येति वृत्तिकारेण दर्शितम्। धारयतीति धारयः—'अनुपसर्गाल्लिम्पविन्द' इत्यादिना शे शपि गुणायौ। वसु धारयतीति वसुन्धरा—'संज्ञायां भृतॄवृजि' इति खचि 'खचि ह्रस्वश्च' इति ह्रस्वत्वे मुमागमः। धारा—'धारा प्रपतन' इति भिदादिपाठादङि गुणो दीर्घत्वं च। 'द्रवद्रव्यनिपातनं धारा' इति न्यासे। खड्गधारादावुपमानात् प्रयोगः। धर्मः—'अर्त्तिस्तुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्' इति मन्। धर्मं चरति धार्मिकः—'धर्मं चरति' इति द्वितीयान्तात् चरतीत्यर्थे ठक्। तत्र 'अधर्माच्चेति वक्तव्यम्' इत्युक्तत्वात् आधर्मिकः अपि। धर्मेण प्राप्यं धर्म्यम्—'नौवयोधर्म' इति तृतीयान्तात् प्राप्येऽर्थे यत्। धर्मादनपेतमपि धर्म्यम्—'धर्मपथ्यर्थे' इति यत्। कल्याणो धर्मोऽस्येति कल्याणधर्मा—'धर्मादनिच् केवलात्' इति धर्मान्तात् बहुव्रीहेरनिच्। अत्र केवलादिति बहुव्रीह्याक्षिप्तस्य पूर्वपदस्य विशेषणम्, तेन पूर्वपदीभवतः केवलादन्यनिरपेक्षात्परो यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरिति सूत्रार्थः। तेन परमस्स्वो धर्मोऽस्य परमस्वधर्म इति त्रिपदे बहुव्रीहावनिच् न भवति। तत्रान्यसापेक्ष एव स्वशब्दः पूर्वपदं भवति। 'सर्वनामसङ्ख्ययोरुपसङ्ख्यानम्'इति स्वशब्दस्य पूर्वनिपातो न भवतिः आहिताग्न्यादेराकृतिगणत्वात्। यदा स्वो धर्मः स्वधर्मः, परमः स्वधर्मोऽस्येति बहुव्रीहिस्तदा यद्यपि पूर्वपदं केवलं

भवति, तथापि ततः परो न धर्मशब्द इति समासान्ताभावः। 'निवृत्तिधर्मा हि स्थानी' इत्यत्र निवृत्तिशब्दो बहुव्रीहेः पूर्वपदं भवन्नान्यमपेक्षत इति केवलादस्मात् परो धर्मशब्द इति अनिच् सम्भवति। एवं 'साध्यसमानधर्मा धर्मी पक्षः' इत्याद्यपि निर्वाह्यम्—साध्येन समानः साध्यसमानः, साध्यसमानः धर्मोऽस्येति। ब्राह्मणस्य धर्मो ब्राह्मणधर्मः, सोऽस्यास्तीति ब्राह्मणधर्मी—'धर्मशीलवर्णान्ताच्च' इति मत्वर्थीय इनिः। सिद्धे सति वचनं ठनो निवृत्त्यर्थम्। 'धृञ् अवध्वंसने' इतीहैवाग्रे। 'धृञ् धारणे' इति चुरादौ क्षीरस्वामी, तद्भाष्यकारस्यानभिमतम्; यदाह भिदादौ—'धारा प्रपतने, धृतिरन्या' इति। यद्ययं चुरादिः स्यादस्मादेवाङि धाराशब्दं व्युत्पाद्य धारणान्येति ब्रूयात्। एवं हि दीर्घनिपातनक्लेशोऽपि न भवति। न चास्यास्त्यर्थभेदः। तथा न्यासहरदत्तावपि न सहेते, यदाहतुः—'दीर्घत्वं निपातनात्' इति। तथा 'अनुपसर्गाल्लिम्प' इत्यत्र न्यासे धृञ् हेतुमण्ण्यन्त उक्तः। पार्यादयस्तूभयथा। यदाहुः—"पारस्तीरकर्मसमाप्तौ, चुरादिण्यन्तः"। अथ वा—'पॄ पालनपूरणयोर्हेतुमण्ण्यन्तः' इत्यादि। हरदत्तोऽपि "'धृञ् धारणे, 'धृङ् अनवस्थाने ण्यन्तौ। विद चेतनाख्याननिपातनेषु, चुरादिः। ज्ञानाद्यर्थानामन्यतमो वा हेतुमण्ण्यन्तः" इति। यदि धरतिः चुरादिश्च स्यात्, इतरवच्चुरादिण्यन्तौ वेति ब्रूयाताम्। अत्र केचित्[1] 'कृञ् करणे' इति धातुं पठन्ति, तदनार्षम्; यदाहतुर्न्यासकारहरदत्तौ—"'कः करत् करति' इत्यत्र व्यत्ययेन शप्" इति। किञ्च यद्ययं स्यात् अकरदित्येवमर्थं 'कृमृदृरुहिभ्यः छन्दसि' इति करोतेरङ्विधानमनर्थकं स्यात्, अस्मात् लङि शपि अस्य रूपस्य सिद्धेः। 'छन्दसि लुङ्लङ्लिटः' इति लुङादीनामेकत्र विधानात् नास्त्यर्थभेदः ॥८९९॥

६३०. णीञ् प्रापणे। इह प्रापणं गमनं भवति। प्रणयति। प्रन्तर्णयति। अन्तश्शब्दस्याङ्किविधिणत्वेषूपसर्गत्वमुक्तम्। निनाय—वृद्धयायौ। 'द्विर्वचनेऽचि' इति स्थानिवद्भावान्नीशब्दो द्विरुच्यते। निन्यतुः—इयङः स्थानिवद्भावान्नीशब्दे द्विरुक्ते पुनरुत्तरखण्डस्येयङ् भवति। अस्यां दशायामनेकाच्त्वात् 'एरनेकाचः' इति यणा बाधादिति 'इटकिट' इत्यत्रोपपादितम्[2]। निनयिथ। निनेथ। निन्यथुः। निन्य। निनाय, निनय—गुणवृद्ध्योरयायौ। निन्यिव—क्रादिनियमादिट्। थलि तु भारद्वाजनियमाद्विकल्पः। नेता। नेष्यति। नयतु। अनयत्। नयेत्। नीयात्। अनैषीत्। निनीषति। नेनीयते। नेनयीति, नेनेति। नेनीतः। नाययति। अनीनयत्। नाययति अजां यज्ञदत्तेन देवदत्तः—'नीवह्योः प्रतिषेधः' इति प्रयोज्यस्य कर्मत्वनिषेधः।

१. क्षीरस्वामिप्रभृतयः।　　२. अत्रैव ११२ पृष्ठेऽवलोकनीयम्।

अत्र हरदत्तः—'यद्यपि नैतयोर्गतिरर्थः, तथापि गतिफलं प्रापणमर्थ इति फलतया गतिः प्रतीयते इति मत्वा प्रतिषेधः' इति। तथा च कैयटेऽनयोर्यद्गत्यर्थत्वमुक्तं तत्फलतया प्रतीयमानगत्यपेक्षम्। नयते। निन्ये। निन्यिषे। निन्यिध्वे, निन्यिढ्वे। निन्यिवहे। नेतासे। नेष्यते। नयताम्। अनयत। नयेत। नेषीष्ट। अनेष्ट। "सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु निवः" अकर्त्रभिप्रायार्थोऽयमारम्भः। सम्माननं पूजनम्। उत्सञ्जनमुत्क्षेपणम्। आचार्यकरणमाचार्यक्रिया। ज्ञानं प्रमेयनिश्चयः। भृतिर्वेतनम्। विगणनमृणादेः प्रतिनिर्यातनम्। व्ययो धर्मादिप्रयोजनो विनियोगः। तत्र सम्माननाचार्यकरणादयो धात्वर्थविशेषणानि, अन्ये तु धात्वर्थाः। ईदृशार्थान्नयतेस्तङ् स्यात्। नयते शास्त्रे। अर्थान्युक्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रतिपादयतीत्यर्थः। इह पूजा शास्त्रार्थस्य युक्तिभिः स्थिरीकरणम्। शिष्याणां चैवंविधा प्रतिपादना। पुत्रमुदानयते उत्क्षिपतीत्यर्थः। माणवकमुपनयते शास्त्रीयेन विधिनात्मसमीपं प्रापयतीत्यर्थः। नयते शास्त्रे तं प्रमेयं निश्चिनोतीत्यर्थः। अत्रायमकर्मकः; कर्मणो धात्वर्थान्तर्भावात्। कर्मकरानुपनयते भृतिदानेनात्मनः समीपे प्रापयतीत्यर्थः। ऋणं विनयते निर्यातयतीत्यर्थः। शतं विनयते धर्मादौ विनियुङ्क्त इत्यर्थः। "कर्तृस्थे चाशरीरे कर्मणि" नयत्यर्थस्य यः कर्त्ता तत्स्थे शरीरैकदेशवर्जिते कर्मणि कारके सति नयतेस्तङ् स्यात्। "इह शरीरं तदेकदेशः' इति वृत्तौ। मन्युं विनयते। कर्तृग्रहणाद् देवदत्तस्य मन्युं विनयति इत्यत्र न भवति। तथा शरीरग्रहणात् गडुं विनयतीत्यत्र न भवति। 'अयमकथितेप्सिततमाभ्यां द्विकर्मकः' इत्युक्तम्। तत्र लादयः प्रधाने कर्मणि भवन्ति, षष्ठी तूभयत्र अप्रधाने। पक्षे द्वितीयापि। 'उभयप्राप्तौ कृत्ये कर्तृकर्मणोः षष्ठी न' इति। सर्वमेतद्धरदत्तावुक्तमुदाहृतं च, इहापि तथैवोदाहरणं नेयम्। 'अकथितं च' इत्यत्र न्यासे नीवहिहृकृषिजिदण्डीन्प्रस्तुत्य ग्रामादीनामप्यजादिवत् क्रियाजन्यफलभाक्त्वेऽपि तदविवक्षायामकथितत्वमुक्तम्। यदाह—'अकथितेष्वेषां ग्रहणं यदा ग्रामादीनामीप्सिततमत्वमनीप्सिततमत्वं च न विवक्ष्यते, किन्तु कर्तुरीप्सिततमत्वमात्रमेव, तदर्थम्' इति। न्यासोद्द्योते च—'अजादीनां ग्रामादीनामीप्सिततमत्वमविशिष्टम्' इत्युक्तम्, तदयुक्तम्; तत्र नीवहिहृरीणां प्रापणमर्थः इति। तथा च 'न गतिहिंसा' इत्यत्र भाष्यम्—"देशान्तरप्रापणक्रिया वहतिः' इति। तत्रैव कैयटे—'देशान्तरप्राप्त्युपसर्जनं प्रापणमस्य वाच्यम्, तत्र गतिर्नान्तरीयकत्वात्प्रतीयते, न त्वसौ धात्वर्थः' इति। 'गतिबुद्धि' इत्यत्र नीवही प्रकृत्य पदमञ्जर्याम्—'एतयोर्गतिफलं प्रापणमर्थः' इति। तस्मादत्र गतेरधात्वर्थत्वादकर्तृव्यापारत्वात्तफलसंयोगाप्यमानत्वेऽपि ग्रामादीनां न कर्मतोपपत्तिः। अजादीनां तु धात्वर्थकर्तृव्यापारप्रापणफलगतिद्वारेणाप्यमानत्वाद्युक्तं कर्मत्वम्। न चैवं वाच्यम्—'अजादिभिः स्वव्यापारे गतौ

कर्तृभिस्तत्संयोगद्वारेणाप्तुमिष्यमाणत्वादस्तीप्सितकर्मत्वम्' इति; यतः 'कर्तुरीप्सिततमम्' इत्यत्र कर्तृग्रहणं कर्मणः स्वव्यापारद्वारेणाप्तुमिष्यमाणत्वमस्य कर्मत्वनिवृत्त्यर्थमिति स्थितम्। अत एव माषेष्वश्वं बध्नातीत्यत्र बन्धनकर्मणाऽश्वेन स्वव्यापारेण भक्षणेनाप्तुमिष्यमाणानामपि माषाणां कर्मत्वं न भवति। कथं तर्हि 'गत्यर्थलोटा' इत्यत्र भाष्यवृत्त्योः 'उह्यन्तां देवदत्तेन' इति वहिर्गत्यर्थ उदाहृतः ? नैष दोषः; तत्र गतिलोटीत्युच्यमानेऽपि अर्थाद् गत्यर्थलोटीति सिद्धेऽर्थग्रहणस्य प्रतीयमानगतीनामीदृशामपि संग्रहार्थत्वात्। यच्च 'हृक्रोरन्यतरस्याम्' इत्यत्र "हरतेः 'गतिबुद्धि' इति नित्ये प्राप्ते विकल्पः" इति हरदत्तादिवचनम्, तत्र 'गतिबुद्धिः' इत्यत्रार्थग्रहणस्य पूर्ववन्नयत्याद्यर्थपरिग्रहार्थत्वाद्युक्तमेव प्रतीयमानानां गतीनामपि तत्र ग्रहणम्। नैवं नीवह्योः प्रतिषेध उपपद्यते। 'न गतिहिंसा' इत्यत्र त्वर्थग्रहणेन प्रतीयमानगतीनां ग्रहणं भाष्यकारस्य नेष्टम्; यत्तत्र 'हृवह्योरप्रतिषेधः' इति वार्त्तिकस्थवहिग्रहणं 'न वहिर्गत्यर्थः' इति प्रत्याचष्टे। विनीयः कल्कः। कल्कश्च पिष्टौषधे पक्वान्नतैलादीनामृजीषे पाके च वर्त्तते। 'विपूयविनीयजित्यामुञ्जकल्कहलिषु' इति विपूर्वादस्मात्कल्के क्यपि निपात्यते। आनाय्यः—गार्हपत्यादाहवनीयादानीतप्रणीतो दक्षिणाग्निः। तस्य हि योनिर्विकल्प्यते 'वैश्यकुलाद्वित्तवतो भ्राष्ट्राद् गार्हपत्याद्वा' इति 'आनाय्योऽनित्ये' इति आङ्पूर्वादस्मात् ण्यदायौ निपात्येते। अनित्यत्वं चास्य नित्यमज्वलनात्। निपातनस्य रूढ्यर्थत्वाद्घटादावन्ययोनौ च दक्षिणाग्नौ आनेय इति भवति। प्रणाय्यः—अपूज्यो निष्कामो वा। "प्रणाय्योऽसम्मतौ" इति प्रपूर्वादस्माण्ण्यदायौ। सम्मतिः पूजाभिलाषो वा, सा यस्य नास्तीत्यसावसम्मतिः। सम्मतौ तु यति प्रणेयः। सान्नाय्यं हविः, तच्च दधिपयसी। 'पाय्यसान्नाय्य' इति हविषि ण्यदायौ। उपसर्गस्य दीर्घत्वं च। नयतीति नायः—'दुन्योरनुपसर्गे' इति अनुपसृष्टादस्मात्कर्त्तरि णः। उपसृष्टात्तु उन्नयः—पचाद्यच्। प्रणीः—'सत्सूद्विष' इत्यादिना क्विप्। ग्रामणीः—इत्यत्र पूर्ववत् क्विपि 'अग्रग्रामाभ्यां नयतेरुपसङ्ख्यानम्' इति णत्वम्। नायः—'श्रिणीभुवोऽनुपसर्गे' इति घञ्। उपसृष्टात्तु—निर्णयः। दुर्णयः। निर्नाय इत्येतत्तूपसर्गप्रतिरूपकात्परस्य नियो घञि। णत्वं चानुपसर्गत्वादेव न भवति। कथं नय इति ? बाहुलकादच्। अवनायः। उन्नायः—'अवोदोर्नियः' इति घञ्। उन्नयः पदार्थानाम् इति बाहुलकादचि। परिणायः—समन्ताच्छारिनयनम्[1]। "परिन्योर्नीणोर्द्यूताभ्रेषयोः" इति यथासङ्ख्यात्परावुपपदे द्यूते नियो घञ्। अक्षादिभिः क्रीडनं द्यूतम्। भ्रेषश्चलनम्, अचलनमभ्रेषः। अनपचार इति यावत्। आनायः—'जालमानायः' इति जाले घञि निपात्यते। नेमिः—'नियो

१. 'समन्तादक्षादिना यद् द्यूतम्' इति क. पुस्तके पाठः।

मिः' इति मिः। नेमः—'अर्त्तिस्तु' इत्यादिना मन्। अस्य सर्वादित्वात् तत्कार्ये पूर्वशब्दवत्। नीथो यज्ञः—'हनिकुषि' इत्यादिना थन्। नेष्टा—'नयतेः षुक् च' इति तृनि गुणे धातोः षुगागमः। 'अप्तृन्' इत्यादिना 'ऋतो ङि' इत्यादिना च यथायोगं गुणदीर्घौ सर्वनामस्थाने ॥९००॥

६३१. भरत्यादयश्चत्वारोऽनुदात्ता उभयपदिनः।

अथाजन्ताननिटः परस्मैपदिन आह—

६३२. धेट् पाने। एतदादयो जयत्यन्ता अनुदात्ता उदात्तेतः। धयति। दधौ। दधतुः। दधुः। दधाथ। दधिथ। दधिव "आदेच उपदेशेऽशिति" इति एजन्तो यो धातुरुपदेशे तस्यात्वमिति सर्वत्राकारे 'आत औ णल' इति औत्वे वृद्धिः। अन्यत्र क्ङित्यजादावार्द्धधातुके 'आतो लोपः' इत्याल्लोपः। इटि च तस्य 'द्विर्वचनेऽचि' इति स्थानिवत्त्वाद्धाशब्दस्य द्विर्वचनम्। क्रादिनियमादिट्। थलि भारद्वाजनियमादिड्विकल्पः। धाता। धास्यति। धयतु। अधयत्। धयेत्। आशिषि धेयात्—'एर्लिङि' घुमास्थागापाजहातिसामाकारस्यैकारः। "दाधा घ्वदाप्" इति दाण् दाने, देङ् रक्षणे, डुदाञ् दाने, दो अवखण्डने, धेट् पाने, डुधाञ् धारणादौ इत्येते घुसंज्ञकाः; दैप् शोधने, दाप् लवने इत्येतौ वर्जयित्वा। प्रकृतिवदनुकरणं भवतीत्यात्वेनैजन्तानुकरणमपि दाधारूपमिति लक्षणप्रतिपदोक्तपरिभाषाया नेह प्रसङ्गः। एवं हि अदाबिति सामान्यग्रहणार्थं दैपः पित्त्वमर्थवद्भवति। अदधत्। अदधताम्—"विभाषा धेट्श्व्योः" इति कर्तृवाचिनि लुङि च्लेर्विभाषया चङि 'आतो लोप इटि च' इत्याल्लोपस्य स्थानिवत्त्वात् 'चङि' इति धाशब्दस्य द्विर्वचनम्। चङभावे सिचि 'यमरमनमाताम्'इति सकि सिचश्चेटि अधासीत्। अधासिष्टाम् इत्यादि। यदा 'विभाषा घ्राधेट्शाच्छासः' इति घ्रादिभ्यः परस्मैपदपरस्य सिचो लुक् तदा अधात्। अधाताम्। अधुः इत्यादि। 'आतः' इति 'झेर्जुस्' सिज्लुगन्ताद्यदि भवति आत एव'इति नियमार्थमिदं सूत्रमित्युक्तम्। यदा कर्मव्यतिहारे तङ् तदा व्यतिधयते व्यतिदधे इत्यादि। "आदेच उपदेशे"इत्यत्राशितीति कर्मधारये नञ्तत्पुरुषः; श एव इत् शित्, न शित् अशित् इति। तेन 'यस्मिन् विधिस्तदादावल्ग्रहणे' इतीत्संज्ञकशकारादावयं पर्युदास इति एशि आत्वमेव भवति। लुङि तु 'विभाषा धेट्श्व्योः' इति वा चङि—अदधत। अदधेताम्। अन्यदा "स्थाघ्वोरिच्च" इति आत्मनेपदपरस्य सिचः कित्वे धातोश्चेत्वे 'ह्रस्वादङ्गात्' इति झल्परत्वेन सिचो लोपे व्यत्यधित। व्यत्यधिषाताम्। व्यत्यधिषत। सिचः कित्त्वाद् गुणो न भवति। इत्त्वविधानं तु गुणविधानार्थमेव स्यात्। 'स्थाघ्वोरेः' इति एकारस्याविधानमपि ह्रस्वादिति सिचो लोपार्थं लघ्वर्थञ्च स्यात्। इदं चेत्वं न सिचीत्युच्यते, किं तर्हि ? इकारश्चान्तादेशः सिच्च किद् भवति इत्येतावत्।

तेनास्यासिज्निमित्तत्वात् सन्निपातपरिभाषया सिज्लोपो न स्यादिति नाशङ्कनीयम्। कर्मणि लुङ्येकवचने—अधायि। 'आतो युक् चिण्कृतोः' इति युक्। चिणि ञिति णिति कृति परे आकारान्ताङ्गस्य युगित्यर्थः। द्विर्वचनादौ चिण्वदिट्पक्षे युकि अधायिषाताम् इत्यादि। अन्यदा अधिषाताम् इत्यादि। धित्सति—'सनिमीमा' इत्यादिना अच इसिः 'सः स्यार्द्धधातुके' इति तत्वे 'अत्र लोपोऽभ्यासस्य' इति लोपः। देधीयते—"घुमास्थागापाजहातिसां हलि" इति एषां हलादौ क्ङित्यार्द्धधातुके परे आकारस्येकार इतीकारे द्विर्वचनम्। दाधेति—ईटि 'आद्गुणः'। अन्यदा दाधाति। दाद्धः—"श्नाभ्यस्तयोरातः" अनयोराकारस्य क्ङिति सार्वधातुके लोप इति लोपे 'झषस्तथोः' इति धत्वे जश्त्वम्। 'ई हल्यघोः' इतीत्वमत्रैवाघोरिति निषेधान्न भवति। आकारलोपस्य पूर्वस्मादपि विधाविति स्थानिवद्भावः 'पूर्वत्रासिद्धे न स्थानिवत्' इति निषिध्यते। अत एव हि 'अधः' इति दधातिः पर्युदस्यते। धयतेस्त्वयं पर्युदासोऽस्मात् झषन्तात्परयोरसंभावान्न भवति। न च यङ्लुकि सम्भवात्तदर्थोऽयं पर्युदासः स्यादिति वाच्यम्; दधातौ चरितार्थत्वात्। तथा च तत्र वृत्तिः—'दधातिं वर्जयित्वा' इति। काश्यपवर्षसेनौ तु 'अधः' इति पर्युदासमिच्छतः। दाधति—आल्लोपः। दाधेषि, दाधासि। दाधेमि, दाधामि। दाध्वः। लोटि हौ 'घ्वसोरेद्धावभ्यासलोपश्च' इति अन्तस्यैकारोऽभ्यासलोपश्च। अत्र लोपस्य शित्त्वात्सर्वादेशत्वम्, तेन धेहि इति भवति। लङि—अदाधात्। अदाद्धाम्। अदाधुः—'सिजभ्यस्त' इति झेर्जुस् नित्यम्। परत्वात् 'लङः शाकटायनस्यैव' इति आकारान्तनिबन्धनो विकल्पो नाशङ्क्यः, अस्मात्परत्वान्नित्यत्वाच्च 'श्नाभ्यस्तयोरातः' इति पूर्वमेवाल्लोपे आकारन्तस्याभावात्। लिङि दाध्यात्—'श्नाभ्यस्तयोः' इत्याल्लोपः। आशिषि–'एर्लिङि' इत्येत्वम् दाधेयात्। लुङि अदाधात्–'गातिस्था' इति नित्यं सिचो लुक्। 'विभाषा घ्राधेट्' इति विकल्पस्तु सानुबन्धकनिर्देशान्न भवति। अत एव 'विभाषा धेट्श्व्योः' इति चङपि न भवति। धापयति, धापयते शिशुम्। आत्वे पुक्। 'पादिषु धेट उपसङ्ख्यानम्' इति 'निगरणचलन' इति परस्मैपदं निषिध्यते। अदीधपत् इत्यत्राकाराश्रयः पुक् तस्योपधात्वसम्पादनेन 'णौ चङि' इति ह्रस्वस्य निमित्तं न स्यादिति नाशङ्क्यम्; 'मारणतोषणनिशामनेषु ज्ञा' इति जानातेर्णौ पुकि ह्रस्वार्थात् मित्त्वविधानाल्लिङ्गात्। उद्धयः। धयः—'पाघ्राध्माधेट्दृशः शः' इति उपसृष्टादनुपसृष्टाच्च कर्त्तरि शः। स्तनन्धयः। नासिकन्धयः—'नासिकास्तनयोर्ध्माधेटोः' इति खशि मुमागमः। नासिकायाः 'खित्यनव्ययस्य' इति ह्रस्वश्च। धेटष्टित्त्वमवयवेऽचरितार्थत्वात् स्तनन्धयी इति समुदाये ङीबर्थम्। अत्र हरदत्तः—'स्तनन्धयीत्यत्रैव ङीबिष्यते नान्यत्रेत्याहुः' इति। 'इदं खश्प्रत्ययान्तोपलक्षणम्'

इत्येके। तथा च क्षीरस्वामी—'स्तनन्धयीत्यादौ ङीबर्थः' इति। वर्द्धमानोऽपि "शुनिन्धयी स्तनन्धयीति खश्प्रत्ययान्त एव ङीप्" इति। नाडिन्धयः। मुष्टिन्धयः—'नाडिमुष्ट्योश्च' इति खश्। शुनिन्धयः—'खश्प्रकरणे वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्य उपसङ्ख्यानम्' इति शुनीशब्द उपपदे खश्। घटिन्धयः। खरिन्धयः—खरी गर्दभी। वातन्धयः—'खरीघटिवातेषु' इति वक्तव्यात् खश्। केचित्तु—खरीशब्दस्थाने खारीशब्दं परिमाणवचनं पठन्ति। 'वातशब्दो भाष्ये न दृश्यते' इति हरदत्तः। धारुर्वत्सो मातरम्—'दाधेट्सी' इति रुः। 'न लोकाव्यय' इति कर्मणि षष्ठ्या निषेधः। तत्र हि उकारोऽपि प्रश्लिष्यते— उ उक इति। धयन्ति तामिति धात्री स्तनपायिका—'धः कर्मणि ष्ट्रन्' इति ष्ट्रन्। कर्मणीतीहाभिधेयनिर्देशः। षित्वं ङीषर्थम्। धीत्वा—'घुमास्था' इतीत्वम्। प्रधाय—'न ल्यपि' इतीत्वनिषेधः। 'ईत्वमवकरादौ' इति भाष्ये स्थितमिति। क्विप्यपि—धाः। सन्धिः—'उपसर्गे घोः किः' इति किप्रत्ययः। धीयन्ते इति धानाः—'धापॄवस्यज्यतिभ्यो नः' इति नः। धेनुः—'धेट इच' इति नुप्रत्ययः, इकारश्च धातोरिति। ङिद्वचनेषु 'ङिति ह्रस्वश्च' इति पक्षे नदीसंज्ञायामाट्—धेन्वा इति। धेन्वाम् इत्यत्र 'इदुद्भ्याम्' इति इकारोकाराभ्यां परस्य ङेरामादेशः। घिसंज्ञापक्षे गुणादौ धेनवे, धेनोः इति। धेनावित्यत्र 'अच्च घेः' इति ङेरौत्वम्, घेश्चाकारः। धेनूनां समूहो धैनुकम्—'अचित्तहस्तिधेनोष्ठक्' इति ठकि 'इसुसुक्तान्तात् कः' इति कादेशः। साम्मूहिकेषु तदन्तविधिरिष्यते, तेन गोधेनूनां समूहो गौधेनुकम् इति भवति। 'जङ्गलधेनुबलजान्तस्य विभाषितमुत्तरम्' इति वृद्धिनिमित्ते तद्धिते उत्तरपदस्य वा वृद्धिः, पूर्वपदस्य तु नित्यम्। 'पोटायुवति' इत्यादिना समासः। अधेनूनां समूह आधेनवम्, आधैनवम् इत्यत्र 'धेनोरनञः' इति ठञ्निषेधात् प्राग्दीव्यतीय उत्सादिलक्षणोऽञ्। धेनुष्या—धेनुर्बन्धकीकृता, पीतदुग्धेति यस्याः प्रसिद्धिः। 'संज्ञायां धेनुष्या' इति यत् प्रत्ययः षुगागमश्च निपात्यते। धेनुर्भविष्यतीति धेनुम्भव्या—'धेनोर्भव्ये मुम्' इति मुमागमः ॥९०१॥

९३३. ग्लै म्लै हर्षक्षये। हर्षक्षयो धातुक्षयः। ग्लायति। जग्लौ। जग्लतुः। जग्लाथ, जग्लिथ। जग्ल, जग्लौ। जग्लिव। जग्लिम। ग्लाता। ग्लास्यति। ग्लायतु। अग्लायत्। ग्लायेत्। आशिषि—ग्लायात्, ग्लेयात्—'वाऽन्यस्य संयोगादेः' इति स्थोऽन्यस्य संयोगादेरार्द्धधातुके किति लिङि वा एत्वम्। अग्लासीत्—सगिटौ। जिग्लासति। जाग्लायते। जाग्लेति। जाग्लीतः—'ई हल्यघोः' इति क्ङिति सार्वधातुके श्नाप्रत्ययस्य चाघोरभ्यस्तस्य चाकारस्य ईकारविधानादीत्वम्—लोटि हेरपित्त्वान्ङित्त्वादीत्वम्—जाग्लीहि। ग्लपयति, ग्लापयति। अजिग्लपत्। प्रग्लापयति। 'ग्लास्नावनुवमां च' इति अनुपसृष्टस्य वा मित्त्वमुक्तम्। सुग्लायतीति सुग्लः—'आदेचः' इत्यात्वं

प्रागेव प्रत्ययोत्पत्तेरनैमित्तिकमिति 'आतश्चोपसर्गे' इति उपसृष्टादाकारान्ताद् विहितः को भवति। ग्लानः—'संयोगादेरातो धातोर्यण्वतः' इति निष्ठानत्वम्। ग्लास्नुः—'ग्लाजिस्थश्च ग्स्नुः'। सुग्लानं भवता—'आतो युच्' इति ईषदादिषु कृच्छ्राकृच्छ्रार्थेषूपपदेषु युच्। स्त्रियां ग्लानिः—'ग्लाम्लाज्याहात्वरिभ्यो निः' इति निः। ग्लौः—'ग्लानुदिभ्यां डौः' इति डौः, डित्त्वात् टिलोपः। 'च्विरव्ययम्' 'अयं च्व्यन्त एवाव्ययम्' इति नियमात् 'कृन्मेजन्तः' इत्यव्ययत्वाभावात्। तेन ग्लावौ, ग्लावः इत्यादि यथासम्भवं नेयम्॥ एवं म्लायति इत्यादि। 'म्लै गात्र-विनामे' इति कैचित्पठ्यते, गात्रविमानः कान्तिहानिः॥९०२-९०३॥

६३४. द्यै न्यक्करणे। 'न्यङ्गविधाने' इति क्षीरस्वामी। 'न्यङ्गं कुत्सिताङ्गम्' इति च। द्यायति। दद्यौ इत्यादि ग्लायतिवत्॥९०४॥

६३५. द्रै स्वप्ने।

६३६. ध्रै तृप्तौ।

६३७. ध्यै चिन्तायाम्। द्रायति। ध्रायति। ध्यायति इत्यादि ग्लायतिवत्। निद्रालुः—'स्पृहिगृहि' इत्यालुचि 'द्रा कुत्सायां गतौ' इत्यादादिकस्य ग्रहणमिति वृत्तौ। निद्रा—'आतश्चोपसर्गे' इत्यङ्। अनिद्रो निद्रावान् भवति निद्रायति, निद्रायते—'लोहितादिडाज्भ्यः क्यष्' इति लोहितादेराकृतिगणत्वादस्मात् च्व्यर्थे भवत्यर्थे वा क्यष्। 'वा क्यषः' इति पक्षे तङ्। 'निद्राशब्दो वृत्तिविषये तद्वति वर्तते' इति न्यासकैयटपदमञ्जर्यादिषु। निद्रातीति निद्रः—'आतश्चोपसर्गे' इति कर्तरि कः, अस्माद्वा क्यष्। उक्तं चैतत् 'द्रा कुत्सायां गतौ' इत्यत्र आत्रेयेण। निद्राणः—अकर्मकत्वात् कर्तरि निष्ठा, 'संयोगादेः' इति निष्ठानत्वम्। निद्रितः—इति तारकादेराकृतिगणत्वादितच्। सुष्ठु ध्यायतीति 'ध्यायतेः सम्प्रसारणं च' इति क्विप्सम्प्रसारणयोः 'सम्प्रसारणाच्च' इति परपूर्वत्वे 'हलः' इति दीर्घः—सुधीः। सुधियौ इत्यादौ 'एरनेकाचः' इति यणः 'न भूसुधियोः' इति निषेधात् 'अचिश्नु' इति इयङ्। ध्यातः—'संयोगादे' इति निष्ठानत्वम् 'न ध्याख्या' इति निषिध्यते। धीवा—'ध्याप्योः सम्प्रसारणं च' इति क्वनिपि सम्प्रसारणे परपूर्वत्वदीर्घत्वे। स्त्रियाम्—'वनोरच' इति ङीब्रेफयोः—धीवरी॥९०५-९०७॥

६३८. रै शब्दे। रायति। ररौ इत्यादि पूर्ववत्। कीति रायति इति कीरः—'सुपि स्थः' इत्यत्र 'सुपि' इति योगाविभागात्कः। एवमीदृशा अन्येऽपि निर्वाह्याः। 'रा दाने' इत्यदादौ॥९०८॥

६३९. स्त्यै ष्ट्यै शब्दसङ्घातयोः। एको दन्त्यादिः। अपरो मूर्द्धन्यादिः। षोप-देशलक्षणपर्युदास एक एव गृह्यते; उभयोः पाठवैयर्थ्यप्रसङ्गात्। तत्रार्थयोर्यथा-सङ्ख्यं न भवति, पृथगनिर्देशात्। स्त्यायति। तस्त्यौ इत्यादि ग्लैवत्।

१. क्षीरतरङ्गिण्याम्।

षोपदेशस्यापि 'धात्वादेः षः सः' इति इदमेव रूपम्। प्रयोजनं तु तिष्ट्यासति, प्रतिष्ट्यपत् इत्यादावादेशसकारत्वात् षत्वम्। यत्तु मैत्रेयसम्मताकारकाश्यपादिभिरुक्तम्—'पुनः पाठफलं धात्वादेः षः सः इति सत्वाभावः' इति तत् 'अज्दन्त्यपराः सादयः षोपदेशाः' इति लक्षणस्याव्याप्तिप्रसङ्गादुपेक्ष्यम्। पाठे षोपदेशानां प्रयोगे सादित्वादज्दन्त्यपरत्वं हि लक्षणम्, व्यापकेन च नाम लक्षणेन भवितव्यम्। प्रस्तीतः, प्रस्तीमः। प्रस्तीतवान्, प्रस्तीमवान्—'स्त्यः प्रपूर्वस्य' इति निष्ठायां सम्प्रसारणे परपूर्वत्वदीर्घत्वयोः 'प्रस्त्योऽन्यतरस्याम्' इति प्रोपसृष्टादस्मात्पराया निष्ठायास्तकारस्य पक्षे मकारः। मकाराभावे 'संयोगादेः' इति निष्ठानत्वस्य 'स्त्य' इति सम्प्रसारणे पूर्वत्रासिद्धत्वात् कृते च तस्मिन् यण्वत्त्वाकारान्तत्वयोरभावादप्रसङ्गः। 'प्रस्त्य' इति लघुवक्तव्ये 'स्त्यः प्रपूर्वस्य' इति वचनम् 'प्रशब्दो यस्माद्धातूपसर्गसमुदायात्पूर्वः' इत्याश्रयणार्थम्। तेन प्रसंस्तीत इत्यादावन्योपसर्गव्यवधानेऽपि सम्प्रसारणं भवति। मत्वं तु 'प्रस्त्यः' इति निर्देशाद्व्यवहिते न भवति। स्त्यानः, संस्त्यानः इत्यादौ प्रस्त्याभावान्न सम्प्रसारणम्, नापि मत्वम्। 'सम्प्रसारणविधौ षोपदेशोऽप्ययं स्त्यारूपो गृह्यते' इति वृत्त्यादौ, तेन तस्यापि निष्ठायामुक्तान्येवोदाहरणानि द्रष्टव्यानि। येऽस्य सत्वं नेच्छन्ति तेषां स्त्यारूपमापन्नयोर्द्वयोर्ग्रह इति, वृत्त्यादिमहाग्रन्थविरोधश्च। न चास्त्यस्य प्रकृतिवदनुकरणमिति स्त्यारूपत्वम्; यतस्त्यैप्रकृतावेव सत्वं नाभ्युपगम्यते। स्त्यायति संहन्यतेऽस्यां गर्भ इति स्त्री—संस्त्याने 'स्त्यायतेर्ड्रट्' इति ड्रटि डित्त्वाट्टिलोपे वलिलोपे च टित्त्वान्ङीप्। द्विवचनाद्यजादौ 'स्त्रियाः' इतीयङि—स्त्रियौ इत्यादि। अम्शसोस्तु 'वाम्शसोः' इति इयङ्विकल्पनात्—स्त्रीम्, स्त्रियम्। स्त्रियः, स्त्रीः इति प्रथमयोः पूर्वसवर्णदीर्घोऽपि भवति। 'नेयङुवङ्' इत्यत्र 'अस्त्री' इतिनिषेधादियङ्स्थानत्वेऽपि नदीत्वात् स्त्रियै, स्त्रियाः। स्त्रियाम् इत्यत्र 'आण्नद्याः' इति ङिद्वचनस्याऽऽडागमो 'ङेराम्' ङेराम् भवति। तथा स्त्रीणाम् इत्यत्र 'ह्रस्वनद्यापो' इति नुड् भवति। तथा हे स्त्रि इत्यत्र 'अम्बार्थनद्योः' इति ह्रस्वो भवति। स्त्रियाः सम्बन्धि स्त्रैणम्—'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' आभ्यां यथासङ्ख्यं प्राग्भवनीयार्थेषु तत्तदर्थानुकूलसमर्थविभक्तिभ्यां नञ्स्नञाविति नञ्। स्त्रीत्वम्। स्त्रीता—'आ च त्वात्' चकारेण त्वतलोरभ्यनुज्ञानात् त्वतलौ। 'स्त्रीवन्मा भूम' इति भाष्यकारप्रयोगाद्वृत्तिस्साधुः। 'स्त्री पुंवच्च' इत्यादिनिर्देशस्य प्रयोगापेक्षत्वाद्वा। अत्र विषये 'बाधकान्येव निपातनानि' इति नञ्स्नञौ वतिना बाध्येते, 'यथा सर्वनाम' इत्यत्रणत्वम्। परस्त्रिया अपत्यं पारशवः—'परस्त्री परशुं च' इति शिवादिपाठादपत्ये परशुभावश्च। पारस्त्रैणेयः—'कल्याण्यादीनामिनङ्' इति ढकीनङादेशोऽन्त्यस्य। अनुशतिकादित्वादुभयपदवृद्धिः। कुस्त्रिया भावः कर्म वा कौस्त्रम्—युवादित्वादण्।

एवं सौत्रम् । दौत्रम् । स्नीतरा, स्नितरा—'नद्याः शेषस्य' इति ह्रस्वो वा । सूत्रार्थश्चेलत्यादौ द्रष्टव्यः । स्तूपः उच्छ्रायः—'स्त्यः सम्प्रसारणमुच्च' इति पप्रत्ययः, प्रसारणपूर्वत्वे तस्य चेकारस्य उकारो दीर्घश्च । 'ऊ च' इत्येव वक्तव्ये दीर्घविधानं ह्रस्वस्यापि श्रवणार्थम्, तेन स्तुपः इत्यपि भवति ॥९०९-९१०॥

६४०. खै खदने । खदनं स्थैर्यं हिंसा च । खायति । चखौ । खाता इत्यादि ॥९११॥

६४१. क्षै जै षै क्षये । क्षायति । चक्षौ । क्षाता इत्यादि । क्षामः । क्षामवान्—'क्षायो मः' इति निष्ठातो मः । णौ क्षपयति । अयं मिदिति घटादौ ध्वनतावुक्तम् ॥ एवं जायति, जजौ, जाता ॥ सायति । ससौ । साता । 'घुमास्था' इत्यत्र साग्रहणेन स्यतेर्ग्रहणं नास्येति आशीर्लिङि 'एर्लिङि' इत्येत्वाभावात् सायात् इति भवति । अत एव सायतेः सासायते इत्यादौ 'घुमास्था' इति ईत्वं न भवति । तथा च तत्र न्यासे गामादाग्रहणेष्वविशेषमुक्त्वा 'षो अन्तकर्मणि' इत्ययमेवोपात्तः । तथा च तन्त्रान्तरे—'स्थास्यति जहातिमाति' इति स्पष्टः 'षो अन्तकर्मणि' इत्ययमेव निर्दिश्यते । 'विभाषा घ्राधेट्शाच्छासः' इति सिचो लुग्विधावपि श्यन्विकरणाभ्यां साहचर्यात्स्यतिरेव गृह्यते—इत्यस्मात्सिचि सकि च असासीत् इत्येव भवति । सिषासति—आदेशसकारत्वात् षत्वम् । सापयति । असीषपत्—'शाच्छासा' इति युग्विधावपि श्यन्विकरणाभ्यां शाच्छासाभ्यां साहचर्यात् स्यतिरेव गृह्यते इति अस्य पुगेव भवति । केचिदमुं दन्त्यादिं पठन्ति । तत् षोपदेशलक्षणविरोधादुपेक्ष्यम् ॥९१२-९१४॥

६४२. कै गै शब्दे । इह शब्दः शब्दविशेषः । उक्तं चैवं स्वामिना । कायति । चकौ । काता । काकः—'इणभीक' इति कन् । गायति । जगौ । गाता इत्यादि । 'घुमास्था' इत्यत्र 'गामादाग्रहणेष्वविशेषः' इति लाक्षणिकगारूपस्य गायतेरपि ग्रहणात् आशीर्लिङि एत्वे गेयात् इति भवति । 'गातिस्था' इत्यत्र 'गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम्' इति वृत्तावुक्तत्वात् अस्मात्सिचो लुगभावात् अगासीत् इति भवति । गाथकः । गायनः—'गस्थकन्' इति 'ण्युट् च' इति कर्त्तरि थकन्, ण्युट् च । ण्युटो णित्त्वात् 'आतो युक्' इति युक् । टित्त्वात् स्त्रियाम्—गायनी । वासरूपेण ण्वुल्तृचोः—गायकः, गाता इति भवति । उद्गाता, तस्य भावकर्मणी औद्गात्रम्—'उद्गात्रादिभ्योऽञ्' इति अञ् । साम गायतीति सामगः—'गापोष्टक्' इति कर्मण्युपपदे टक् । टित्त्वात् स्त्रियाम्—सामगी । गीत्वा । गीतम्—'घुमास्था' इति ईत्वम् । प्रगीतिः—'स्थागापापचो भावे' इति स्त्रियां भावे क्तिन् । 'स्त्रियां क्तिन्' इत्येव सिद्धे पुनर्वचनं 'आतश्चोपसर्गे' इत्याङो बाधनार्थम् । गाथा पद्यविशेषः—'उषिकुषिगार्तिभ्यः थन्' इति थन् । अवगथः प्रातस्सवनं सोमो वा—'निशीथगोपीथावगथाः' इत्यवपूर्वादस्मात्थनि धातोर्ह्रस्वत्वं च निपात्यते । उद्गीथः—'गदचोदि' इति उदुपसृष्टास्थन् । 'घुमास्था' इतीत्वम् ॥९१५-९१६॥

६४३. शै[1] श्रै[1] पाके । इह पाको विक्लित्तिः । तथा च 'श्रृतं पाके' इत्यत्र वृत्त्यादावुक्तम् । शायति । शशौ । शाता ॥ श्रायति । शश्रौ । श्राता इत्यादि गायतिवत् । श्रपयति इति घटादित्वात्पाके मित्त्वम् । अन्यत्र श्रापयति स्वेदयतीत्यर्थः । शृतं क्षीरम्—'शृतं पाके' इति क्ते शृभावो निपात्यते । अत्र पाको विक्लित्तिः, तत्फलको व्यापारश्च । तत्र तत्फलके व्यापारे णिचमन्तरेण वृत्तेरभावात् श्रपेरप्ययं शृभाव इति शृतं क्षीरं देवदत्तेन इति भवति । तथा च तत्र वार्त्तिकम्—'श्राश्रप्योः शृभावो निपात्यते' इति । यस्तु श्रपेर्णिचि श्रपिशब्दः, न तस्यायमादेशः, 'पाक' इति वचनात् । अत्र पाचनार्थः पाकस्तु गुणभूतः । अयं शृभावो व्यवस्थितविभाषाविज्ञानात् क्षीरहविषोर्नित्यं भवति । अन्यत्र तु न भवति—श्राणा यवागूः, श्रपिता यवागूः इति । 'संयोगादेः' इति निष्ठानत्वम् । श्राणास्मै नियमेन दीयते श्राणिकः—'श्राणामांसौदनाट्टिठन्' इति नियमेन दीयमानोपाधिकार्थात्प्रथमान्तात्तदस्मै दीयते चतुर्थ्यर्थे टिठन् । टित्त्वात् स्त्रियाम्—श्राणिकी । श्राति इत्यादादिकस्य, श्रापयति इति चौरादिकस्य ॥९१७-९१८॥

६४४. पै ओ वै शोषणे । पायति । 'पाघ्रा' इत्यत्र नास्य ग्रहणम् ; पारूपस्य लाक्षणिकत्वात् । ऐकारोपदेशसामर्थ्यात् शिति पारूपस्यैवाभावाच्च । पपौ । पाता । पास्यति । पायतु । अपायत् । पायेत् । आशिषि पायात्–'घुमास्था' इतीत्वम् , तद्विषयं 'एर्लिङि' इत्येत्वं चास्य न भवति, पारूपस्य लाक्षणिकत्वात् । अत एव 'गातिस्था' इति सिज्लुग्विधावपि अस्याग्रहणात् अपासीत् इति भवति । पिपासति । पापायते—'ई हल्यघोः' इत्यभ्यस्ताश्रयमीत्वं क्ङित्सार्वधातुकविषयमितीह न भवति । पापाति, पापेति—ईटि गुणः । पापीतः—'ई हल्यघोः' इति क्ङित्सार्वधातुकपरत्वादीत्वम् । पापति—'श्नाभ्यस्तयोः' इत्याल्लोपः । लङि—अपापेत्, अपापात् । अपापाताम् इत्यादि । 'सिजभ्यस्त' इति नित्यं जुस्भावे—अपापुः । 'लङः शाकटायनस्यैव' इति विकल्पो नेति धयतावुक्तम् । आशीर्लिङि—आर्द्धधातुकत्वात् 'ई हल्यघोः' इतीत्वाभावात् पापायात् इति भवति । 'घुमास्था' इति ईत्वमस्य नेति प्रागेवोक्तम् । पाययति—'शाच्छासाह्वाव्यावेपां युक्' इति णौ युगागमः । तत्र लाक्षणिकपारूपस्य ग्रहणमिति वृत्तिन्यासपदमञ्जर्यादिषु । पीत्वा । पातं[2] सरः । पा इति पानार्थ इहाग्रे । रक्षणार्थोऽदादौ ॥ वायति । ववौ इत्यादि पायतिवत् । णौ—वापयति सरः । आत्वे पुक् । 'वो विधूनने जुक्' इत्यत्र 'वा गतिगन्धनयोः' इत्यादादिकस्यैव ग्रहणम् , तस्यैव विधूनने वृत्तिसम्भवादिति व्याख्यातारः । 'शाच्छासा' इति युक्तु तत्रैव 'वे' इति निर्देशात् 'वेञ् तन्तु-

---

१-१. श्रै स्रै इति ख. पुस्तके; रूपाण्यपि तथैव बोध्यानि । 'स्रै श्रै' इति क्षीरस्वामी । २. 'पानं' इति क. पुस्तके; तच्च अधिकरणे ल्युट्त्वाद्बोध्यः ।

सन्ताने' इत्यग्रे पठिष्यमाणस्यैव, न त्वस्य प्रसजति। वानं फलम्—ओदित्त्वान्नत्वम् ॥९१९-९२०॥

६४५. ष्टै वेष्टने। स्तायति। तस्तौ। स्ताता। स्तापयति। अतिष्टपत् इत्यादि। अयं च पाठो मैत्रेयस्य। भट्टभास्करोऽप्यत्रैवानुकूलः, यदाह—"'स्तायूनां पतये नमः' इत्यत्र छद्मना वस्त्रादीनपहरन्ति ते स्तायवः। 'ष्टै वेष्टने' इत्यस्माद्बाहुलकादुण्" इति। स्वाम्यादयस्तु बहवः 'ष्णै वेष्टने' इति पठन्ति। तथा च निरुक्तम्—'उष्णीषं स्नायतेः[1]' इति। व्याचख्युश्चैवम्—'उष्णीषं शिरोवेष्टनम्। स्नायतेः शौचार्थस्य वेष्टनार्थस्य वा, उभयत्रापि सम्भवात्[2]' इति। अत एव व्याख्यानात् 'ष्णै शोभने' इत्यपि भूवादौ द्रष्टव्यः। प्रयुज्यते च भारते—

पाञ्चाल्याः पद्मपत्राक्ष्याः स्नायन्त्याः जघनं घनम्।
याः स्त्रियो दृष्टवत्यस्ताः पुम्भावं मनसा ययुः॥

इति। क्रियानिघण्टौ च 'स्नाति स्नायत्याप्लवते' इति। दैवे च—'स्नातीति शौचे स्नः स्नापयेदिति चेच्छन्ति केचन[3]' इति ॥९२१॥

६४६. दैप् शोधने। पकारोऽदाबिति विशेषणार्थः। अयमेव लाक्षणिकानामपि घुसञ्ज्ञकानां ग्रहणे लिङ्गम्। दायति इत्यादि पायतिवत्। णिचि—दापयति। अदीदपत्। दाण् दाने, 'देङ् रक्षणे' इतीहैवाग्रे। 'दाप् लवने' इत्यदादौ। 'डुदाञ् दाने' इति जुहोत्यादौ। दो 'अवखण्डने' 'दीङ् क्षये' इति च दिवादौ॥ ९२२॥

६४७. पा पाने। पिबति—'पाघ्रा' इत्यादिना पिबादेशः। 'पिबेर्गुणप्रतिषेधः' इति कात्यायनः। वर्द्धमानस्तु—"'लोपः पिबतेः' इति लिङ्गाद् गुणो न" इति। वृत्तौ तु 'अकारान्तोऽयमादेश आद्युदात्तः' इति; अतो लघूपधत्वाभावान्न गुणप्रसङ्गः। पपौ। पाता। पास्यति। पिबतु। अपिबत्। पिबेत्। आशिषि—पेयात्—'एर्लिङि' इत्येत्वम्। अपात्—'गातिस्था' इति सिचो लुक्। पिपासति। पेपीयते—'घुमास्था' इत्यादिनेत्वे द्वित्वम्। पापेति। पापाति। पापीतः—'ई हल्यघोः' इतीत्वम्। पापति—'श्नाभ्यस्तयोः' इत्याल्लोपः। पापिता—इत्यादाविटि 'आतो लोप इटि च' इत्याल्लोपः। लङि 'सिजभ्यस्त' इति नित्यं जुसि—अपापुः। 'लङः शाकटायनस्यैव' इति विकल्पो नेति धयतावुक्तम्। लिङि—पापायात्। अनार्धधातुकत्वात् 'घुमास्था' इतीत्वं न भवति। आशिषि आर्द्धधातुकत्वादीत्वापवादे 'एर्लिङि' इत्येत्वम्—पापेयात्। 'लुङि—'गातिस्था' इति सिचो लुकि अपापात्। अपापुः—'आतः' इति जुस्। पाययति। पाययते—'न पादमि' इति निगरणचलनार्थेभ्यश्च' इति परस्मैपदस्य प्रतिषेधः। 'शाच्छासा' इत्यादिना युक्। णेश्चङि

---

१. नि० ७।१२।६। २. स्कन्दस्वामिकृतव्याख्यानमिदम्। ३. दै० १२ का०।

'लोपः पिबतेरीच्चाभ्यासस्य' इत्युपधाया आकारस्य लोपः। युक्त्यथमुपधा भवति। अल्लोपस्य 'णौ कृतं स्थानिवत्' इति स्थानिवत्त्वात्पाय्शब्दस्य द्विर्वचने 'ईच्चाभ्यासस्य' इतीकारे अपीप्यत् इति भवति। तत्र पिबतेरिति तिपा निर्देशाद् यङ्लुकि अपापयत् इति भवति। उत्पिबः—'पाघ्राध्माधेट्दृशशः' इति कर्तरि श-प्रत्यये पिबादेशः। सुरापः। शीधुपः—'गापोष्टक्' इति कर्मण्युपपदे टक्। टित्वा-त्स्त्रियां सुरापी। अत्र 'पिबतेः सुराशीध्वोः' इत्युपपदनियमादुपपदान्तरे 'आतोऽनुपसर्गे कः' इति को भवति। विशेषः स्त्रियां ङीबभावः—क्षीरपा ब्राह्मणी इति। द्वाभ्यां पिबतीति द्विपः—'सुपि स्थः' इत्यत्र सुपीति योगविभागात्तत्र च 'आत' इत्यनुवर्त्तनादाकारान्तादस्मात्सुप्युपपदे कप्रत्ययः। एवं कच्छपादयः। प्रपिबन्ते स्यामिति प्रपा—'घञर्थे कविधाने स्थास्नापाव्यधियुध्यर्थम्' इत्यधिकरणे क। प्रपीतिः—'स्थागापापचो भावे' इति भावे क्तिन्। 'स्त्रियां क्तिन्' इत्येव सिद्धे वच-'आतश्चोपसर्गे' इत्यङ्बाधनार्थम्। पीत्वा—'घुमास्था' इतीत्वम्। प्रपाय—'ल्यपि' इतीत्वनिषेधः। निपीय इति—पीङो रूपम्। पीत्वास्थिरकः—'मयूरव्यंसकादयश्च' इति तत्पुरुषः। 'समासेऽनञ्पूर्वे' इति क्त्वो ल्यबादेशोऽत्र मयूरव्यंसकादिपाठान्न भवति। यद्वा—'अनञ्' इति नञ्सदृशमव्ययं परिगृह्यते, तेन नञोऽन्येनाव्ययेन क्त्वान्तस्य समासेऽयं ल्यब्विधिरिति इह नैव प्रसजति। पीतिः पानं, पीयतेऽनेनेति वा पानम्, क्षीरस्य पानं क्षीरपानम्, क्षीरपाणम् इति वा—'वा भावकरणयोः' इति पूर्वपदस्थान्निमित्तादुत्तरस्य भावकरणविषये पाननका-रस्य णत्वविकल्पः। क्षीरं पानं येषां ते क्षीरपाणा उशीनराः—इत्यत्र 'पानं देशे' इति पूर्वपदस्थान्निमित्तादुत्तरस्य भावकरणविषयपाननकारस्य देशेऽभिधेये नित्यं णत्वम्। 'पयः पानं भुजङ्गानाम्' इत्यत्र "कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम्" येन कर्मणा संस्पृश्यमानस्य कर्तुः शरीरस्य सुखं भवति तस्मिन्कर्म-ण्युपपदे धातोर्भावे ल्युडिति ल्युट्। एवं चोपपदसमासः सिद्धः। 'ल्युट् च' इति ल्युटि तु 'षष्ठी' इति समासस्य 'कर्मणि च' इति निषेधः स्यात्। समाना पीतिः सपीतिः—विशेषणसमासः। 'समानस्य छन्दसि' इति समानस्येति योगविभागात्स-मानस्य सभावः। कथं पीता गाव इति; यतः प्रत्यवसानार्थत्वात्कर्त्तरि निष्ठया न भाव्यम्? उच्यते, पानं पीतमेषामस्तीत्यर्शआद्यजन्तोऽयं द्रष्टव्यः। पायुः—'कृवापाजि' इत्युण्। सोमपीथः सोमपानम्—'पातॄतुदिवचिरिचिसिचिभ्यः थक्' इति थक्। पेरुः आदित्यः—'मापोरुरिच्च' इति रुप्रत्ययः, इकारश्चान्ता-देशः, तस्य च गुणः। पापम्—'पानीविषिभ्यः पः' इति पः। पाथः—'पाते-र्थुन्' इत्यसुन्प्रत्ययः थुगागमश्च। पयः—'पिबतेरीच्च' इत्यसुनि ईकारेऽन्तादेशे गुणायादेशौ। पय इवाचरति पयायते पयस्यते—'कर्तुः क्यङ्' इति क्यङ्।

'ओजसोऽप्सरसो नित्यं पयसस्तु विभाषया' इति पक्षे सलोपः। 'नः क्ये' इति 'नान्तस्यैव क्ये पदसंज्ञा' नियमात् 'ससजुषोरुः' इति न भवति। पयसो विकारः पयस्या—'गोपयसोर्यत्' इति यत्। पाकः अर्भकः—'इण्भीपाका' इंति इति कन्। पात्रम्—ष्ट्रन्। षित्त्वात् स्त्रियां ङीष—पात्री। पञ्चानां पात्राणां समाहारः पञ्चपात्रम्—'तद्धितार्थे' इति समाहारे द्विगुः। 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इति स्त्रीत्वम् 'पात्रादिभ्यः प्रतिषेधः' इति निषिध्यते। 'स नपुंसकम्' इति समाहारद्विगुद्वन्द्वनिबन्धनं नपुंसकत्वमेव भवति। पात्रस्य वापः क्षेत्रं पात्रिकम्। उप्यतेऽस्मिन्निति वापः। 'पात्रात् ष्ठन्' इति षष्ठ्यन्ता-द्वापेऽर्थे ष्ठन्। षित्त्वात् ङीषि—पात्रिकी क्षेत्रभक्तिरिति। पात्रं परिमाणविशेषः, पात्रं सम्भवति अवहरति पचति वा पात्रीणा स्थाली—'आढकाचितपात्रात्खोऽन्यत-रस्याम्' इति द्वितीयान्तात्सम्भवत्यादिष्वर्थेषु खः। खाभावे, प्राग्वतीये ष्ठनि पात्रिकी। आधारप्रमाणादाधेयप्रमाणानतिरेकः सम्भवः। उपसंहरणमभ्यवहारः। विक्लेदनं पाकः। द्वे पात्रे सम्भवति अवहरति पचति वा द्विपात्रिकी, द्विपात्रीणा। 'द्विगोष्ठँश्च' इति आढकाचितपात्रान्तात् द्विगोर्द्वितीयान्तात् सम्भवत्यादिष्वर्थेषु ष्ठन्, चकारात् खश्च। अत्रान्यतरस्यांग्रहणानुवृत्तेः प्राग्वतीयष्ठञपि भवति। तस्य चार्हीयप्रत्ययत्वात् 'अध्यर्द्धपूर्व' इति लुकि 'द्विगोः' इति ङीपि द्विपात्री स्थाली इत्यपि भवति। ठन्खञोस्तु विधानसामर्थ्यान्न लुक्। पात्रमर्हति पात्रियः, पात्र्यः—'पात्राद् घँश्च' इति द्वितीयान्तादर्हतीत्यर्थे घन्यतौ। इह पात्रं भाजनं परिमाणं च। सर्वपात्रं व्याप्नोति सर्वपात्रीणः सूपः—'तत्सर्वादेः' इति खः। पात्रे समितः, पात्रेबहुलः। 'पात्रेसमितादयश्च' इति क्षेपे सप्तमीतत्पुरुषः। अत्रैव पाठादलुक्। अत्रावधारणेन क्षेपः पात्र एव समितो न पुनः क्वचित्कार्ये इति। अयस्पात्रम्—'अतः कृकमिकंस' इत्यादिना अकारात्परस्य विसर्जनीयस्य पात्रे परतः सत्वम्। अत्र करोतिर्धातुः कमिश्च, अन्यानि प्रातिपदिकानि। लिङ्गविशिष्ट-परिभाषया अयस्पात्री इत्यत्रापि भवति। पायतीति शोषणे गतम्॥९२३॥

६४८. घ्रा गन्धोपादाने। जिघ्रति—'पाघ्रा' इत्यादिना जिघ्रादेशः शिति। जघ्रौ। जघ्रिथ। घ्राता इत्यादि। आशीर्लिङि घ्रायात्, घ्रेयात्—'वान्यस्य' इति एत्व-विकल्पः। लुङि अघ्रात्, अघ्रासीत्—'विभाषा घ्राधेट्' इति सिचो वा लुक् परस्मैपदे। आत्मनेपदे तु—अघ्रायि। 'अघ्रासाताम् सुमनसौ' इति नित्यं सिचः श्रवणमेव। जिघ्रासति। जिघ्रीयते। 'ई घ्राध्मोः' इति यङीत्वम्। जाघ्रेति, जाघ्राति। जाघ्रीतः—'ई हल्यघोः' इतीत्वम्। घ्रापयति। अजिघ्रपत्; अजिजिघ्रपत्—'जिघ्रतेर्वा' इति चङ्परे णावुपधाया वेत्वम्। श्तिपा निर्देशात् यङ्लुकि अजाघ्रपत् इत्येव। आजिघ्रतीति आजिघ्रः—'पाघ्रा' इत्यादिना उपसृष्टादस्माच्छे शपि जिघ्रादेशः।

व्याजिघ्रतीति व्याघ्रः—'जिघ्रतेः संज्ञायाम्' इति कः। 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति सुबुत्पत्तेः प्रागेवात्र समासः। तेन स्त्रियां 'जातेरस्त्रीविषयात्' इति अदन्तलक्षणो ङीष्भवति व्याघ्री इति। सुबन्तेन तु समासे पूर्वमेव स्त्रियां टापि ततस्सुपि अदन्तत्वाभावात् ङीष् न स्यात्। व्याघ्रस्य विकारश्चर्म वैयाघ्रम्—"प्राणिरजतादिभ्योऽञ्"इति प्राणिवाचिभ्यो रजतादिभ्यश्च षष्ठ्यन्तेभ्यो यथायोगं विकारावयवयोरर्थयोरञित्यञि' 'न य्वाभ्याम्' इति वृद्धिनिषेधः, ऐजागमश्च। वैयाघ्रेण परिवृतो रथो वैयाघ्रः—'द्वैपवैयाघ्रादञ्' इति द्वैपवैयाघ्रशब्दाभ्यां तृतीयान्ताभ्यां 'परिवृतो रथः' इति विषयेऽञ्। प्राग्दीव्यतीयस्याणोऽपवादः। घ्राणम्। घ्रातम्—'नुदविद' इति निष्ठानत्वविकल्पः ॥९२४॥

९४९. ध्मा शब्दाग्निसंयोगयोः। इहाग्निसंयोगो मुखवायुनाऽग्निसंयोगः। धमति—'पाघ्रा' इत्यादिना धमादेशः शिति। दध्मौ। ध्माता इत्यादि। लिङि—धमेत्। आशिषि ध्मायात्, ध्मेयात्—'वान्यस्य' इत्येत्वविकल्पः। दिध्मासति। देध्मीयते—'ई घ्राध्मोः' इति यङीत्वम्। दाध्मेति—'ई हल्यघोः' इतीत्वम्। दाध्मति—'श्नाभ्यस्तयोः' इत्याल्लोपः। ध्मापयति। अदिध्मपत्। उद्धमः—'पाघ्राध्मा' इत्युपसृष्टाच्छे शपि धमादेशः। नासिकन्धमः—'नासिकास्तनयोः' इति नासिकायां कर्मण्युपपदेऽस्मात् खश्। नाडिन्धमः। मुष्टिन्धमः—'नाडीमुष्ट्योश्च' नाडीमुष्ट्योः कर्मणोरुपपदयोः खश्प्रत्ययः। अत्र ध्यन्तस्य मुष्टिशब्दस्यापूर्वनिपाताल्लक्षणव्यभिचारात् लिङ्गात् ध्माधेटोरुपपदयोश्च यथासङ्ख्यं न भवति। पाणयो ध्मायन्ते येषु पाणिन्धमाः पन्थानः—'उग्रंपश्येरंमदपाणिन्धमाश्च' इति खशि निपात्यते। ध्मात्वा। ध्मातम् ॥९२५॥

९५०. ष्ठा गतिनिवृत्तौ। तिष्ठति—'पाघ्रा' इति तिष्ठादेशः शिति। तस्थौ। अधितष्ठौ—'स्थादिष्वभ्यासेन चाभ्यासस्य' इति षत्वम्। स्थाता। स्थास्यति। अधिष्ठाता। अधिष्ठास्यति—'उपसर्गात्' इत्यादिना षत्वम्। तिष्ठतु। अतिष्ठत्। तिष्ठेत्। आशिषि स्थेयात्—'एर्लिङि' इत्येत्वम्। 'वाऽन्यस्य' इति विकल्पस्तु न भवति; अन्यग्रहणेन घुमास्थादिपर्युदासात्। अस्थात्—'गातिस्था' इति सिचो लुक्। अध्यष्ठात्—'प्राक्सितादड्व्यवायेऽपि' इति षत्वम्। तिष्ठासति। तेष्ठीयते—'घुमास्था' इतीत्वे द्वित्वम्। तास्थाति। तास्थीतः—'ईहल्यघोः' इतीत्वम्। तास्थति—'श्नाभ्यस्तयोः' इत्याल्लोपः। स्थापयति। अतिष्ठिपत्—'तिष्ठतेरित्' इति चङ्परे णौ उपधाया इत्वम्। श्तिपा निर्देशात् अतास्थपत् इत्यत्र न भवति। सन्तिष्ठते। सन्तस्थे। संस्थाता। संस्थास्यते। सन्तिष्ठताम्। समतिष्ठत। सन्तिष्ठेत। आशिषि संस्थासीष्ट—'समवप्रविभ्यस्थः' इति तङ्। लुङि—समस्थित। समस्थिषाताम् इत्यादि। 'स्थाघ्वोरिच्च' इति सिचः कित्त्वं तिष्ठतेश्चेकारः। 'ह्रस्वादङ्गात्' इति झलि किति सिज्लुक् सन्निपातपरिभाषया

नेति धयतावुक्तम्। सिचः किस्वात्प्रत्ययलक्षणेन गुणो न भवति। एवम् अवतिष्ठते प्रतिष्ठते इत्यादि। नित्यं शब्दम् आतिष्ठते—प्रतिजानातीत्यर्थः। 'आङः स्थः प्रतिज्ञाने' इति तङ्। अर्थस्वभावादयमाङ्पूर्वः। तिष्ठते कन्या छात्रेभ्यः—स्थानेन स्वाभिप्रायं प्रकाशयतीत्यर्थः। प्रकाशनमर्थोऽनेकार्थत्वाद्धातूनामिति कश्चित्। 'श्लघह्नुङ्' इत्यत्र पदमञ्जर्यां तु 'स्थानेन स्वाभिप्रायप्रकाशनमर्थः' इत्युक्तम्। 'श्लाघह्नुङ्' इति ज्ञीप्स्यमानस्य सम्प्रदानत्वम्। धर्माध्यक्षे तिष्ठते। तत्त्वनिर्णयमपेक्षमाणस्तिष्ठतीत्यर्थः। 'प्रकाशनस्थेयाख्ययोश्च' इति तङ्। प्रकाशनं स्वाभिप्रायाविष्करणम्। स्थेयस्याख्या स्थेयाख्या, तिष्ठत्यस्मिन्निति स्थेयः। रूढश्चायं विवादपदस्य निर्णेतरि। तिष्ठत्यस्मिन्निति स्थेय इत्यत्र प्रकरणादिना विवादपदनिर्णेतुः प्रतीतिः, न तु शाब्दीत्यात्मनेपदाभावो हरदत्तेनोक्तः। कुटुम्ब उत्तिष्ठते तदर्थं घटते इत्यर्थः। 'उदोऽनूर्ध्वकर्मणि' इति तङ्। ऊर्ध्वकर्मणि—आसनात् उत्तिष्ठति। अत्र 'उद ईहायाम्' इत्युक्तत्वात् अनूर्ध्वकर्मण ईहया विशेषणाद् 'अस्माद् ग्रामाच्छतमुत्तिष्ठति' इत्यत्र ईहाभावात्तङ् न भवति। उत्पद्यत इति ह्यत्रार्थः। ऐन्द्र्या गार्हपत्यमुपतिष्ठते, ऐन्द्र्या ऋचा गार्हपत्यमभिधत्ते इत्यर्थः। 'उपान्मन्त्रकरणे' इति तङ्। मन्त्रः करणं यस्यार्थस्य स मन्त्रकरणः। तदर्थादुपोपसृष्टात् स्थस्तङिति सूत्रार्थः। आदित्यमुपतिष्ठते, पूजयतीत्यर्थः। गङ्गा यमुनामुपतिष्ठते, संश्लिष्यते इत्यर्थः। राजकीयानुपतिष्ठते, मित्रीकरोतीत्यर्थः। अयं पन्थाः स्रुघ्नमुपतिष्ठते, प्राप्नोतीत्यर्थः। 'उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वक्तव्यम्' इति तङ्। 'आज्ञां प्रतीषुर्विनयादुपास्थुः'[1] इत्यत्र भट्टिश्लोके देवपूजादिभ्योऽन्योऽर्थ इति तङ् न कृतः। अर्थी राजानमुपतिष्ठते, उपतिष्ठति इति वा। लिप्सुरुपसर्पतीत्यर्थः। उपोपसृष्टोऽयमर्थान्तरवृत्त्या सकर्मकः। 'वा लिप्सायाम्' इति तङ्विकल्पः। यावद्भुक्तमुपतिष्ठते—वीप्सायामव्ययीभावः। भोजने भोजने सन्निधत्त इत्यर्थः। 'अकर्मकाच्च' इति उपोपसृष्टादस्मादकर्मकात्तङ्। तिष्ठतीति स्थायी—ग्रहादित्वाण्णिनिः। समे तिष्ठतीति समस्थः—'सुपि स्थः' इत्यत्र सुपीति योगं विभज्य आकारान्तानां कर्त्तरि कविधानात्कः प्रत्ययः। अत्र 'स्थः' इति वचनं तिष्ठतेरप्याकारान्तत्वात्पूर्वेणैव कस्य सिद्धत्वात् 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' इति न्यायेन भावे कविधानार्थम्। तेनाखूनामुत्थानम् आखूत्थः। शलभोत्थः इति भवति। 'उदः स्थास्तम्भोः पूर्वस्य' इति सकारस्य पूर्वसवर्णस्तकारः। शं सुखम्, तत्र तिष्ठतीति शंस्थः—'स्थः क च' इति कप्रत्ययः। चकारात् क्विपि—शंस्थाः। 'घुमास्था' इति ईत्वं भाष्यकारप्रयोगान्न भवति। 'ईत्वमवकारादौ' इति तु न स्थितम्। ननु 'सुपि स्थः' इत्यत्र योगविभागात्कः सिद्धः, 'क्विप्च' इति क्विबपि वासरूपेण,

---

१. भ० का० ३।४३।

तत्र किं 'स्थः क च' इति सूत्रेण ? उच्यते ; 'शमि धातोः संज्ञायाम्' इत्यत्र धात्वधिकारादेव धातुग्रहणे सिद्धे पुनर्धातुग्रहणं बाधकबाधनार्थमित्युक्तम्। तेन यथा शङ्करा नाम परिव्राजिका तच्छीला चेत्यत्र 'कृञो हेतुताच्छील्ये' इति टं बाधित्वाज् भवति, तथा कक्विपावपि बाधित्वात्राप्यच् स्यात्। कं तु परत्वादपि बाधेतेति, तन्मा भूदित्यारब्धव्यमेव 'स्थः क च' इति सूत्रम्। एवमपि किं क्विपो विधानेन; यतो वासरूपेणायमपि भविष्यति ? नैतत् ; अस्याविधाने यथा कः अचं बाधते, तथाऽमुमपि बाधेत। स्थास्नुः—'ग्लाजिस्थश्च' इति तच्छीलादौ क्स्नुः, 'घुमास्था' इतीत्वम् 'स्था आ' इत्याकारप्रश्लेषेणाकारान्तस्य विधानान्नेति भाष्ये स्थितम्। अन्ये तु—"गिदयम् , तेनेत्वस्य न प्रसङ्गः। जिष्णुः इत्यत्र गुणाभावस्तु 'न धातुलोप आर्द्धधातुके', 'क्ङिति च' इति संहितया सूत्रपाठात् कृतचर्त्वस्य गकारस्यापि तत्र निर्देशात्। तथा 'श्युकः किति' इत्यत्रापि चर्त्वेन गकारस्यापि निर्देशाद् भूष्णुः इत्यत्रेडभावः" इत्याहुः। उक्तं च—

स्नोर्गित्वान्न स्थ इकारः किङ्तोरीत्वशासनात्।
गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं कगोरितोः॥ इति।

स्थायुकः—'लषपतपद' इत्यादिनोकञ्। स्थावरः—'स्थेशभास' इति वरच्। प्रस्थास्यते इति प्रस्थायी—'प्रे स्थः' इति णिनिः। णित्त्वाद्युगागमः। गम्यादिषु पाठात् 'भविष्यति गम्यादयः' इति भविष्यत्कालता। स्थित्वा। स्थितम्। उपस्थितो गुरुं शिष्यः। उपस्थितो गुरुः शिष्येण 'गत्यर्थ' इत्यादिना कर्तृकर्मणोः क्तः। उपपूर्वोऽयं सकर्मकः। 'द्यतिस्यतिमास्थाम्' इति 'घुमास्था' इतीत्वापवाद ईकारः। प्रस्थाय इत्यत्र 'अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब् बाधते' इति ल्यपः पूर्वमीत्वं न न प्रवर्त्तते। पश्चात्तु निमित्ताभावान्नास्य प्रसङ्गः। प्रतिष्ठतेऽस्मिन्निति प्रस्थः—'घञर्थे कविधानम्' इति कः। माहकिप्रस्थो नाम उदीच्यग्रामः, तत्र भवो माहकिप्रस्थः—'प्रस्थोत्तरपदपलद्यादिकोपधादण्' इति प्रस्थोत्तरपदलक्षणोऽण् शैषिकः। 'उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्' इति अञोऽपवादः। अणञोः स्वरे विशेषः। इन्द्रप्रस्थे भवः ऐन्द्रप्रस्थः—अनुदीच्यग्रामत्वात् प्रागदीव्यतीयोऽण्। मालाप्रस्थे भवः मालाप्रस्थकः—'प्रस्थपुरवहान्ताच्च' इति प्रस्थाद्यन्ताद्देशवाचिनः शेषेऽर्थे वुञ्। छस्यापवादः। प्रतिष्ठत्यग्रे गच्छतीति प्रष्ठः—'आतश्चोपसर्गे' इति कः। 'प्रष्ठोऽग्रगामिनि' इति षत्वम्। अग्रगामिनोऽन्यत्र प्रस्थः। प्रस्थितिः—'स्थागापापचो भावे' इति क्तिन्। 'आतश्चोपसर्गे' इत्यङोऽपवादः 'द्यतिस्यतिमास्थामित्ति किति' इति इत्वम्। कथं तर्हि आस्था इति ? 'व्यवस्थायामसंज्ञायाम्' इति निर्देशात् ज्ञापकादुत्सर्गोऽङपि भवति। आस्था शीलमस्य आस्थः—'छत्रादिभ्यो णः' इति शीलोपाधिकारप्रथमान्ताच्छत्रादेरस्येत्यर्थे णप्रत्ययः। यद्यपि

छत्त्रादिषु स्थाशब्दः पठ्यते, तथापि केवलस्याभावात् सोपसर्गादेव प्रत्ययः। छत्त्रादिणान्तस्य कार्मशब्दस्य 'अन्' इति अणिबन्धनप्रकृतिभावबाधनार्थात् 'कार्मस्ताच्छील्ये' इति टिलोपनिपातनाल्लिङ्गात् 'छत्त्रादिभ्यो णेऽण्कार्यं भवति' इति ज्ञापनात् स्त्रियां ङीपि आस्थी इति भवति। तिष्ठत्यस्मिन्निति स्थानीयम्—बाहुलकादधिकरणेऽनीयर्। उपस्थानीयः इति 'भव्यगेय' इत्यादिना कर्तृकर्मणोः। भीरूणां स्थानं भीरुष्ठानम्—'भीरोः स्थानम्' इति समासे षत्वम्, असमासे तु 'सात्पदाद्योः' इति निषेधं एवं भवति। प्राप्तिस्त्वस्त्येव 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति। गोः स्थाने जातः गोस्थानः–'स्थानान्त' इत्यादिनाणो लुक्। स्थिरम्–'अजिरशिशिरशिथिरस्थिर' इति किरचि निपातितः। स्थेष्ठः। स्थेयान्—'प्रियस्थिर' इत्यादिना वा इष्ठेमेयस्सु स्थादेशे 'प्रकृत्यैकाच्' इति प्रकृतिभावाट्टिलोपाभावे 'आद्गुणः'। 'स्थिरशब्दस्य पृथ्वादिषु अपाठादिमनिच् नास्त्येव' इति वृत्तौ स्थितम्। तेन स्थेमशब्दश्चिन्त्यः। स्थिरं करोति स्थापयति–'णाविष्ठवत्' इति इष्ठवद्भावाण्णौ स्थादेशे वृद्धिपुकौ। गविष्ठिरः, युधिष्ठिरः—'गवियुधिभ्यां स्थिरः' इति षत्वम्। 'हलदन्तात्सप्तम्याः' इति अलुक्। अम्बेव तिष्ठतीति अम्बष्ठः–'सुपि स्थः' इति कः। उपपदसमासे वृत्तिस्वभावात् इवार्थोऽन्तर्भूतः। न्यासे—'अम्बायां तिष्ठति' इति व्युदपादि। 'ङ्यापोः संज्ञाछन्दसोः' इति पूर्वपदस्य ह्रस्वः। "'अम्बाम्बगोभूमि' इति अम्बादिभ्यः परस्य स्थः सकारस्य षत्वम्। एवम् आम्बष्ठादीन्युदाहार्याणि। तत्र रूढिषु यथाकथञ्चिद् व्युत्पत्तिः। सर्वत्र 'सुपि स्थः' इति कः। गोष्ठः इत्यत्र तु गावः तिष्ठन्त्यस्मिन्निति प्रथमान्ते गोशब्दे उपपदे घञर्थे कः' इत्यधिकरणे कः। भूतपूर्वं गोष्ठम् गौष्ठीनम्—'गोष्ठात् खञ् भूतपूर्वे' इति भूतपूर्वत्वोपाधिकार्थात् गोष्ठात् स्वार्थे खञ्। गोष्ठी—इति गौरादित्वात् ङीषि। सव्येष्ठः—इत्यत्र 'हलदन्तात्' इत्यलुक्। एवं परमेष्ठि-दिविष्ठयोरपि। यद्वा—अत्रैव सविभक्तिकनिर्देशसामर्थ्यात् अलुक्। अपष्ठ इति वृत्तिमुपादाय 'अपाष्ठः' इति क्वचित् पाठः। तत्र "'अन्येषामपि दृश्यते' इति दीर्घः" इति न्यासे उक्तम्। 'कुष्ठः' इत्यत्र यदा कुशब्दो निपातस्तदा प्रथमान्तेऽस्मिन्नुपपदे विधिः। अथानिपातस्तदा सप्तम्यन्तः' इति च न्यासे। सव्येष्ठा। सव्येष्ठौ। सव्येष्ठा सारथिः। 'स्थास्थिन्स्थूणामिति वक्तव्यम्' इति षत्वम्। अत्र स्थाशब्दे विवदन्ते—"'सव्ये स्थश्छन्दसि' इति ऋन्नन्तस्य च 'नयतेर्डिच्च' इत्यतः डिदित्यनुवर्तनाड्डित्वाट्टिलोपे 'ऋदुशनस्' इति अनङि सर्वनामस्थानदीर्घत्वम्" इति न्यासे। प्रदीपादौ तु "स्थाशब्दः क्विबन्तः 'ईत्वे वकारादौ प्रतिषेधः' इति घुमास्थादिनेत्वं न भवति" इति। अनयोः क्विबन्तपक्षो न्याय्यः, ऋन्नन्तत्वे स्था इत्येव स्थृशब्दस्यापि षत्वे सिद्धे तदुपादानमनर्थकं स्यात्, हर्म्येष्ठाः, रथेष्ठा इत्यादयश्च प्रयोगा नोपपद्येरन्। तत्र 'ईत्वे वकारप्रतिषेधः' इत्यस्य भाष्ये प्रत्याख्यानाद् अत्रैव स्थेत्यस्य निर्देशात् ईत्वाभाव इति वाच्यम्।

परमेष्ठी इत्यत्र 'परमे स्थः किच्च' इतीन्प्रत्ययः। कित्वादाकारलोपः। सुष्ठु, दुष्ठु—'अपदुःसुषु स्थः' इति कुप्रत्ययः। "मृगय्वादित्वात् कुप्रत्ययः" । इति न्यासकारवचनादयं योग ऊहितः प्रतीयते। 'सुषामादिषु च' इति षत्वम्। 'उपसर्गात्सुनोति' इत्येव सिद्धे सुषामादिष्वनयोः पाठोऽनुपसर्गार्थः। यदा सुशब्दः पूजार्थस्तदा 'सुः पूजायाम्' इति कर्मप्रवचनीयत्वात् एकसंज्ञाधिकारात् अनुपसर्गः। दुरतूपसर्गप्रतिरूपकः। सौष्ठवम्, दौष्ठवम्—युवादित्वात् भावकर्मणोरण्। अपष्ठु—अयमपि सुषामादिषु द्रष्टव्यः। स्थाणुः—'स्थाणुः' इति णुः। स्थविरः—'अजिरशिशिर' इत्यादिना किरचि अवादेशोऽन्त्यस्य निपात्यते। स्थविरस्य भावकर्मणी स्थाविरम्—युवादित्वादण्। दधित्थः। कपित्थः—'सुपि स्थः' इति कः। पृषोदरादित्वात् सकारस्य दकारः। स्थाम बलम्—मनिन्। अश्वस्येव स्थामास्य अश्वत्थामा। अयमपि पृषोदरादिः। अश्वत्थाम्नोऽपत्यम् अश्वत्थामः–'स्थाम्नोऽकारः' इति 'दित्यदित्यादित्य' इत्यत्र पाठादकारप्रत्ययः। अत्र केवलस्य स्थाम्नोऽपत्येन सम्बन्धाभावात्तदन्तविज्ञानम्। स्थलम्—'स्थाचति' इत्यादिना लः। स्थाली—गौरादिपाठात् ॥९२६॥

६५१. म्ना अभ्यासे। आमनति—'पाघ्रा' इत्यादिना मनादेशः शिति। अन्यत्र ग्लैवत्। मम्नौ इत्यादि। आम्नायः—घञि युक्। आम्नातः। आम्नातमनेन। आम्नाती व्याकरणे—'इष्टादिभ्यश्च' इति प्रथमान्तादनेनेत्यर्थे इनिः। सप्तमीविधाने 'क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम्' इति कर्मणि सप्तमी। नीचभावमभ्यस्यतीति निम्नम्—सुपीति योगविभागात् 'आतोऽनुपसर्गे' इति वा कः। नेर्नीचभाववचनत्वेन मन्यत्यर्थस्याविशेषणान्न तं प्रतीहोपसर्गत्वम्। दिने आम्नायत इति द्युम्नम्। द्युशब्दो दिनवचनः। दृश्यते च 'धारयेरनु द्यून्' इति। सुतरामाम्नायत इति सुम्नं सुखम्—घञर्थे कः ॥९२७॥

६५२. दाण् दाने। यच्छति–'पाघ्रा' इति यच्छादेशः शिति। अत्रैव दाणिति विशेषणार्थो णकारः। प्रणियच्छति—घुत्वात् 'नेर्गद' इति णत्वम्। ददौ। दाता। दास्यति। यच्छतु। अयच्छत्। यच्छेत्। आशिषि देयात्—घुत्वात् 'एर्लिङि' इति एकारः। अदात्—'गातिस्था' इति सिचो लुक्। प्रणययच्छत्। प्रणयदात्—'अड्व्यवायेऽपि' इति नेर्गदादिषु णत्वमिति उक्तम्। दित्सति–'सनि मीमा' इति इस्भावः। 'अत्र लोपः' इत्यभ्यासस्य लोपः। 'सस्यार्द्धधातुके' इति तत्वम्। देदीयते–'घुमास्था' इतीत्वे द्विर्वचनम्। दादेति, दादाति। दात्तः–'श्नाभ्यस्तयोः' इत्याल्लोपे चर्त्वम्। 'पूर्वत्रासिद्धे' इति वा चर्त्वविधिं प्रतीति चाल्लोपस्य न स्थानिवत्त्वम्। लोटि हौ 'घ्वसोरेद्धौ' इत्यन्त्यविकारे अभ्यासलोपे च देहि। दापयति। अदीदपत्। दास्या मालां सम्प्रयच्छते कामुकः, स तां तस्यै ददातीत्यर्थः। "दाणश्च सा चेच्चतुर्थ्यर्थे" इति समुपस-

ष्टात्तृतीयायुक्तादस्मात्तङ्, सा चेत्तृतीया चतुर्थ्यर्थे। उच्यते च चतुर्थ्यर्थे तृतीया 'अशिष्टव्यवहारे चतुर्थ्यर्थे' इति। पूर्वसूत्रे 'समः' इति षष्ठ्यन्तमित्युक्तम्। तदेवात्रानुवर्तत इति प्रेण व्यवधानेऽपि तङ् भवति—दास्या मालां सम्प्रयच्छते। सम्प्रादित। 'स्थाघ्वोरिच्च' इति सिचः कित्त्वम् इत्वं च। 'ह्रस्वादङ्गात्' इति सिचो लोपो झलि। 'दाणः' इति सानुबन्धकनिर्देशाद्यङ्लुकि नायं तङ्विधिरिति दास्या मालां सम्प्रददाति इति भवति। गां प्रयच्छतीति गोप्रदः—'प्रे दाज्ञः' इति कर्मण्युपपदे प्रोपसृष्टादस्मादणोऽपवादः कः। ननु 'आतश्चोपसर्गे' इति कप्रत्ययेन प्रदशब्दं कृत्वा गोशब्देन षष्ठीसमासे गोप्रद इति सिद्धम्, किं सूत्रेण? उच्यते; गां प्रयच्छतीति विवक्षायामपि गोप्रदाय इति स्यात्, यथा प्रादन्येनोपसृष्टाद् गोसम्प्रदाय इति, स मा भूदिति। गोदः—'आतोऽनुपसर्गे' इति अनुपसृष्टत्वे कः।

'तं रत्नदायं जितमृत्युलोका रात्रिञ्चराः कान्तिसृतोऽन्वसर्पन्'[1]।

इति भट्टिप्रयोगोऽयं 'दय दाने' इत्यस्यापि द्रष्टव्यः। यद्वा—'श्याद्व्यधा' इत्याकारान्तलक्षणे णे दायशब्दं व्युत्पाद्य तेन रत्नस्य दायो रत्नदाय इति षष्ठीसमासो विधेयः। दारुः—'दाधेट्सिशदसदो रुः' इति रुः। दानीयो ब्राह्मणः—'कृत्यल्युटो बहुलम्' इति सम्प्रदानेऽनीयर्। उपदीयत इति उपदा—'आतश्चोपसर्गे' इत्यङ्। देयम्—'अचो यत्' इति यति 'ईद्यति' इतीत्वे गुणः। दत्त्वा। दत्तः। दत्तवान्। दत्तिः—'दो दद् घोः' इति तकारादौ किति दद्भावः। प्रत्तम्—"अच उपसर्गात्तः" इति अजन्तादुपसर्गात्परस्य दा इत्यस्य योऽच् तस्य तकारस्तादौ किति इत्याकारस्य तकारे 'खरि च' इति दकारस्य तकारः। अत्र 'अचः' इति द्विरावर्त्तते; तत्रैकेनोपसर्गो विशेष्यते, परेण स्थानी निर्दिश्यते इत्याकारस्य स्थानित्वलाभः। अन्यथा 'आदेः परस्य' इति दकारस्यैव तकारः स्यात्। अन्ये तु—"'उपसर्गात्तः' इति द्वितकारकोऽयमादेशो निर्दिश्यते" इति अनेकाल्त्वात्सर्वादेशं कुर्वन्ति, तेषाम् 'अपो भि' इत्यत्रैकस्तकारोऽनुवर्त्यः, अन्यथा अद्भिरित्यादावपि देशत्वं स्यात्। नीत्तम्। सूत्तम्—"दस्ति" दा इत्यस्य यस्तकारस्तदादावुत्तरपदे इगन्तस्योपसर्गस्य दीर्घ इति दीर्घः। चर्त्वस्याश्रयात्सिद्धत्वात्तकारादौ द्वित्वमुत्तरपदस्य। येषाम् "उपर्गात्तः' इति द्वितकारक आदेशस्तेषामाश्रयात् सिद्धिरनपेक्ष्या।

'अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि। सुदत्तमनुदत्तं च निदत्तमिति चेष्यते'[2]॥

इति वचनादवदत्तादौ अच उपसर्गात्तो न भवति। अत्रैव वार्त्तिके चकारादवदत्तादीनामबाधः। अत्र 'आदिकर्मणि' इत्यर्थात्प्रदत्तविशेषणम्। अन्ये तु—"अव

१. भ० का० १२।११। २. म० भा० ७।४।४६ (पा० सू०)।

दत्तादावववादय उपसर्गप्रतिरूपका निपाता न तूपसर्गाः, इति तत्वस्य नास्ति प्रसङ्गः" इति आहुः। मरुद्भिर्दत्तो मरुत्तः। 'मरुच्छब्दस्योपसङ्ख्यानम्" इति उपर्गसंज्ञाविधानसामर्थ्यादनजन्तत्वेऽपि तत्वं भवतीति व्याख्यातारः। प्रदाय—'न ल्यपि' इति 'घुमास्था" इतीत्वं निषिध्यते। ल्यपः पूर्वम् 'अच उपसर्गात्तः' इति तो न भवति, 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यप् बाधते' इति। दानुः—'दाभाभ्यां नुः' इति नुप्रत्ययः। देष्णुः दानशीलः–'गादाभ्यां च' इतीष्णुः। दायतीति शोधने गतम् ॥६२८॥

६५३. ह्वृ कौटिल्ये। ह्वरति। जह्वार। जह्वरतुः। जह्वर्थ। जह्वरिव—क्रादिनियमादिट्। थलि तु 'अचस्तास्वत्' इति निषिध्यते। 'ऋतश्च संयोगादेर्गुणः' इति गुणः। अयं च वृद्ध्या पूर्वविप्रतिषेधेन स्वविषये बाध्यते। ह्वर्ता। ह्वरिष्यति—'ऋद्धनोः स्ये' इति इट्। ह्वरतु। अह्वरत्। आशिषि ह्वर्यात्—"गुणोर्त्तिसंयोगाद्योः" इति अर्तेॠकारान्तस्य संयोगादेर्यकि यकारादावार्द्धधातुके लिङि च गुण इति गुणः। अह्वार्षीत्। अह्वर्ष्म। यकि—ह्वर्यते, लिङीव गुणः। यदाशीर्लिङि लुङि चात्मनेपदं तदा 'लिङ्सिचोरात्मनेपदे' इत्यधिकृत्य 'ऋतश्च संयोगादेः' इति पक्षे—इटि व्यतिह्वरिषीष्ट। व्यतिह्वरिषीयास्ताम्। व्यत्यह्वरिष्ट। व्यत्यह्वरिषाताम् इत्यादि। इडभावे–व्यतिह्वृषीष्ट। व्यत्यह्वर्त इत्यादि। 'लिङ्सिचावात्मनेपदेषु' इति अधिकृत्य 'उश्च' इति कित्त्वविकल्पनात् न गुणः। झलि सिज्लोपः। जुहूर्षति—'अज्झनगमां सनि' इति दीर्घे 'उदोष्ठ्यपूर्वस्य' इत्युत्वे रपरत्वे च 'हलि च' इति दीर्घः। जाह्वर्यते—'गुणोऽर्त्तिसंयोगाद्योः' इत्यधिकृत्य 'यङि च' इति गुणः। जह्वर्त्ति। जह्वृतः। इत्यादि। लोटि हेर्ङित्त्वात् जह्वृहि। उत्तमे जह्वराणि। लङि अजह्वः। ह्वृतम् ॥६२९॥

६५४. स्वृ शब्दोपतापयोः। स्वरति। सस्वार। सस्वरतुः। सस्वर्थ, सस्वरिथ। सस्वरिव, सस्वरिम–'स्वरतिसूति' इति वलादाविड्विकल्पः। अत एव तासौ नित्यानिट्त्वाभावात् 'अचस्तास्वत्' इति निषेधो न भवति, नापि 'ऋतो भारद्वाजस्य' इति निषेधः; यतोऽयम् 'अचस्तास्वत्', 'उपदेशेऽत्वतः' इति निषेधावृकारान्तैकविषयाविति नियमयन्नर्थादनृकारान्तेषु पाक्षिकत्वमात्रफलः। 'श्र्युकः किति' इति निषेधेन पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्यात् परस्यापि स्वरत्यादिविकल्पस्यापि बाधाद् वंसमसोः क्रादिनियमेन नित्यमिडेवेति। न च मन्तव्यम्–'श्र्युकः किति' इति निषेधस्य बाधकं क्रादिनियमं स्वरत्यादिविकल्पः परत्वात् बाधेत' इति; अस्मिन् प्रसक्ते पुनर्बाधकस्य निषेधस्यापि प्रसङ्गात्। अस्ति च लिङ्गं पुरस्तादारभ्यमाणेनापि प्रतिषेधेन स्वरत्यादिविकल्पस्य बाधने, यदयं स्वरतेः 'सनीवन्त' इत्यादिना विकल्पं शास्ति। इदं च 'सनि ग्रहगुहोश्च' इति उगन्तानां सन्यारभ्यमाणेन

निषेधेन परस्यापि स्वरत्यादिविकल्पस्य बाधेनाऽर्थवत्। येषां तु दर्शनम्—'यावान् कश्चनेडभावः प्रतिषेधनिबन्धनो वा विकल्पनिबन्धनो वा स सर्वः क्रादिसूत्रेण नियम्यते' इति, तेषामत्र थल्यपि नित्यमिटा भाव्यम्। स्वर्ता, स्वरिता। स्वरिष्यति—'ऋद्धनोः स्ये' इति नित्यमिट् विप्रतिषेधेन। स्वरतु। अस्वरत्। स्वरेत्। आशिषि स्वर्यात्—'गुणोऽर्त्तिसंयोगाद्योः' इति गुणः। अस्वारीत्। अस्वारिष्टाम्। अस्वार्षीत्। अस्वार्ष्टाम्। सिस्वरिषति। सुस्वूर्षति—'सनीवन्त' इत्यादिना इड्विकल्पः। इडभावे 'अज्झनगमाम्' इति दीर्घे 'उदोष्ठ्यपूर्वस्य' इति उत्वे रपरे 'हलि च' इति दीर्घः। सास्वर्यते—'गुणोऽर्त्तिसंयोगाद्योः' 'यङि च' इति गुणः। सस्वर्त्ति। सस्वृ॑तः इत्यादि। सस्वंरिता इत्यादौ स्वरत्यादिविकल्पस्य न प्रसङ्गः, स्वरतीति श्तिपा निर्देशात्। स्वारयति। प्रसिस्वरत्। संस्वरते—'समो गम्यृच्छिप्रच्छिस्वरत्यर्त्तिश्रुविदिभ्यः' इति समुपसृष्टादकर्मकादस्मात्तङ्। संसस्वरे। संसस्वरिषे—किति लिटि स्वरत्यादिविकल्पो नेत्युक्तम्। तेन क्रादिनियमान्नित्यमिट्। संस्वरितासे, संस्वर्त्तासे। संस्वरिष्यते—'ऋद्धनोः स्ये' इति नित्यमिट्। संस्वरताम्। संस्वरेत। आशिषि—संस्वरिषीष्ट, संस्वृषीष्ट। लुङि—समस्वरिष्ट। समस्वृत। इडभावे ह्वरतिवत्। 'उश्च' इति कित्त्वादगुणत्वं तङ्विधौ स्वरतीति तिपा निर्देशात् संसस्वर्ति इत्यादौ न तङ्। स्वृत्वा। स्वृतः—'श्युकः किति' इति नित्यमिण्निषेधः। स्वरुः—यूपे छिद्यमाने प्रथमपतितशकलः, वज्रश्च। 'शृस्वृस्निहि' इत्यादिना उप्रत्ययः ॥९३०॥

६५५. स्मृ चिन्तायाम्। [1] मातुः स्मरति इत्यादि ह्वरतिवत्। 'अधीगर्थ' इति कर्मणि शेषे षष्ठी। सुस्मूर्षते—'ज्ञाश्रुस्मृ' इति तङ्। स्मारयति इत्याध्याने घटादिपाठात्। अन्यत्र स्मारयति। असस्मरत्—'अत्स्मृदृत्वर' इत्यभ्यासस्याकार इत्वापवादः। अयमनेकार्थत्वात् विस्मरणे चित्तादपक्रमणे च वर्त्तते। अनन्तरं 'द्वृ वरे' इति क्वचित्पठ्यते। द्वरति इत्यादि, ह्वरतिवत्। द्वर्यते संह्रियते इति द्वारम्। द्वारे नियुक्तो दौवारिकः—'तत्र नियुक्तः' इति ठकि 'द्वारादीनां च' इति वृद्धिप्रतिषेध ऐजागमश्च। द्वारादिषु तदादिविज्ञानात् द्वारपालस्येदं दौवारपालम् इत्यत्रापि वृद्धिप्रतिषेध ऐजागमश्च भवति। द्वाः इति ण्यन्तात् क्विपि ॥९३१॥

६५६. सृ गतौ। सरति। ससार। सस्रतुः। सस्रुः। ससर्थ। सस्रुव। अजादाववृद्धिविषये यण्। क्रादिपाठादनिट्त्वम्। सर्त्ता। सरिष्यति—'ऋद्धनोः स्ये' इति इट्। असरत्। सरेत्। स्रियात्—'रिङ् शयग्लिङ्क्षु' इति रिङादेशः। असार्षीत्। असार्ष्टाम्। 'सर्तिशास्ति' इत्यङ्विधौ अविद्यमानशपा शासिना साहचर्यात् सर्त्यर्त्योरप्य-

---

१. क्षीरतरङ्गिण्यादौ।

विद्यमानशपोर्जौहोत्यादिकयोर्ग्रहणमिति नास्याङस्ति। सिसीर्षति—'अज्झन' इति दीर्घे 'सन्यतः' इतीत्वे रपरे 'हलि च' इति दीर्घे द्विर्वचनम्। सेस्रीयते—'रीङ् ऋतः' इति रीङ्। सर्सर्त्ति। सस्र्तः इत्यादि। सारयति। असीसरत्। यदायं सरतिर्वेगितगमने वर्त्तते तदा पाघ्रादिना शित्प्रत्यये धावादेशे धावति इत्यादि। उपसर्या गर्भग्रहणे प्राप्तकाला 'उपसर्या काल्या प्रजने' इति यति निपात्यते। प्रजनं गर्भग्रहणं तत्र प्राप्तकाला चेदित्यर्थः। अन्यत्र ण्यति उपसार्या। सूर्यः—'राजसूयसूर्य' इति क्यपि उत्वे निपात्यते, सुवतेर्वा रुडागमे। सूर्यशब्दात् प्रत्ययाः सुवतौ प्रदर्शयिष्यन्ते। साधु सरतीति सरकः—'प्रुसृल्वः समभिहारे वुन्' इति वुन्। समभिहारेणात्र साधुकारित्वमुच्यते। तथा च वार्त्तिकम्—'साधुकारिणि वुन्विधानम्' इति। पुरः सरतीति पुरःसरः—'पुरोऽग्रतोऽग्रेषु सर्त्तेः' इति टः। एवम् अग्रतस्सरः, अग्रेसरः इति। 'तत्पुरुषे कृति' इति सप्तम्या अलुक्। अत्र न्यासात्रेययोः 'अग्रे इत्येकारान्तत्वं निपातनात्' इत्युक्तम्। 'अग्रस्सरति अग्रेण सरतीत्यादावपि एकारान्तत्वं फलम्' इति च। एवं हि 'सवरुणावरुणाग्रसरं रुचा', 'आयोधनाग्रसरतां त्वयि वीर याते' इत्यादयः प्रयोगाश्चिन्त्याः स्युः। पूर्वः सरतीति पूर्वसरः—"पूर्वे कर्त्तरि" इति कर्तृवाचिनि पूर्वशब्द उपपदे सर्त्तेष्टः। कर्तुरन्यत्राणेव। पूर्वदेशं सरतीति पूर्वसारः इति। उदासारी। प्रत्यासारी—'उत्प्रतिभ्यामाङि सर्त्तेरुपसङ्ख्यानम्' इति णिनिः। परिसारी—'सम्पृच' इत्यादिना घिनुण्। सरणः—'जुचङ्क्रम्य' इत्यादिना युच्। सृमरः—'सृघस्यदः क्मरच्' इति क्मरच्। सृत्वरः—'इण्नशजिसर्त्तिभ्यः क्वरप्' इति क्वरप्। सृत्वरी—'टिड्ढाणञ्' इति ङीप्। सस्रिः—'भाषायां धाञ्कृसृगमिजनिभ्यः' इति किकिनोरन्यतरः। लिड्वद्भावाद् द्विर्वचनम्। सारः—कालान्तरस्थायी। 'सृ स्थिरे' इति कर्त्तरि घञ्। स्थिरादन्यत्र सर्ता। भावादौ घञि—सारः। अयमुत्कर्षे पुंल्लिङ्गः। न्यायादनपेते नपुंसकलिङ्गः। अतिसारो व्याधिः। विसारो मत्स्यः। सारो बलम्—'व्याधिमत्स्यबलेषु' इति घञ्। अस्थिरार्थमिदं वचनम्। अतीसारः—'उपसर्गस्य घञ्यमनुष्ये' इति दीर्घः। अतीसारोऽस्यास्तीति अतीसारकी—'वातातीसाराभ्यां कुक्च' इति मत्वर्थे इनिः कुगागमश्च। प्रसारः। आसारः—भावे 'अकर्त्तरि च कारके संज्ञायाम्' इति घञ्। 'रुद्धोरुदन्तमुसलप्रसरं निपेते'[2] इति माघे बाहुलकादप्। एवं विसर इत्यपीत्यात्रेयः। उपसरो गवाम्। स्त्रीगवीषु पुंगवानां गर्भाधानाय प्रथममुपसरणमुच्यते। 'प्रजने सर्त्तेः' इत्यप्। परिसरः। अवसरः—'पुंसि संज्ञायाम्' इति करणाधिकरणयोर्घः। परितः सरणं परिसर्या—'इच्छा' इत्यत्र 'परिचर्यापरिसर्यामृगया' इति भावे शे यकि गुणः। वैसारिणो मत्स्यः—"विसारिणो मत्स्ये" इति विसारिन्शब्दान्मत्स्यवृत्तेः

१. तुदादौ 'पू प्रेरणे' इति सूत्रव्याख्यावसर इत्यर्थः। २. शिशु० ५।३६।

स्वार्थेऽण्प्रत्ययः। 'इनण्यनपत्ये' इति प्रकृतिभावः। अस्मादेव 'विसारिणः' इति निर्देशादण्सन्नियोगेन णिनिः। "ग्रहादित्वाण्णिनिः" इत्यात्रेयः। एवं हि पृथक् प्रयोगार्हः स्यात्। ग्रहादिषु तु न दृश्यते च। प्रतिषिद्धश्चास्य न्यासपदमञ्जर्योः पृथक्प्रयोगः। पृथक्प्रयोगमसहमानेनैव न्यासकारेणापि 'ग्रहादित्वाण्णिनिः' इत्युक्त्वा 'अत एव निपातनाद्' इत्युक्तम्। निपातनं च प्रत्ययसन्नियोगेनैव। सृणीका लाला—'सर्त्तेर्नुट् च' इति ईकन्प्रत्ययः, नुडागमश्च। सार्थः—'सर्त्तेर्णिच्च' इति थन्प्रत्ययः, णित्त्वाद्वृद्धिः। सर्वः—'सर्वनिघृष्व' इत्यादिना वन्। अत्र वक्तव्यं सर्वं पर्वतावुक्तम्। सरयूः—'सर्त्तेरयूः' इत्ययूः। सरय्वां भवं सारवम्—'दाण्डिनायन' इत्यादिना अण्प्रत्ययेऽयूशब्दलोपो निपात्यते। सरणिः—'अर्तिसृसुहु' इत्यादिना अनिप्रत्ययः। सरित्—'हृसृरुहि' इत्यादिनेतिप्रत्ययः। सृणिः—'सृवृषिभ्यां किच्च' इति निप्रत्ययः। सरः—असुन्। सरसी—'वर्तमाने पृषद्बृहन्महज्जगत्सरसां शतृवच्च' इति शतृवद्भावात् ङीप्। सारङ्गः—'सृवृभ्योर्वृद्धिश्च' इति अङ्गच्प्रत्यये वृद्धिः। अद्भ्यः सृता इति अप्सराः—'अङ्गिरा अप्सराः' इत्यसुनि निपात्यन्ते। उणादिवृत्तौ तु 'अप' इति सौत्रो धातुः, अस्मात् परः सुन् प्रत्यय इत्युक्तम्। 'स्त्रियां बहुष्वप्सरसः' इति बहुत्ववचनं प्रायिकम्। तदुक्तम्-'अप्सरःसुमनस्सिकतावर्षाणां बहुत्वं प्रायिकम्' इति। अप्सरा इव आचरति अप्सरायते–'कर्तुः क्यङ् सलोपश्च' इति क्यङि सलोपः। तत्र विभाषाग्रहणस्य व्यवस्थितविभाषाश्रयत्वाद् इह नित्यं सलोपः। उक्तं च—'ओजसोऽप्सरसो नित्यं, पयसस्तु विभाषया' इति। सारथिः—'सर्तेर्णित्' इति अथिन्प्रत्यये णित्त्वात् वृद्धिः॥९२३॥

६५७. ऋ गतिप्रापणयोः। ऋच्छति—'पाघ्रा' इत्यादिना शिति ऋच्छादेशः। आर। आरतुः। आरिथ। आरिव—लिटीत्यधिकृत्य 'ऋच्छत्यॄताम्' इति गुणः। तत्र हि—'ऋच्छत्यॄताम् इति सवर्णदीर्घेणार्त्तिऋॄकारान्ताश्च निर्दिश्यन्ते। वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिः। तत्र गुणवृद्ध्योः 'द्विर्वचनेऽचि' इति स्थानिवत्त्वात् ऋशब्दस्य द्विर्वचने अभ्यासस्योरदत्वे हलादिशेषे च 'अत आदेः' इति दीर्घे पुनरुत्तरखण्डस्य गुणवृद्ध्योः सवर्णदीर्घः। वलादौ च क्रादिनियमादिट्। थलि तु 'ऋतो भारद्वाजस्य' इति नियमं बाधित्वा 'इडत्यर्तिव्ययतीनाम्' इति इट्। अर्ता। अरिष्यति—'ऋद्धनोः स्ये' इति इट्। ऋच्छतु। आर्च्छत्। ऋच्छेत्। आशिषि अर्यात्—'गुणोर्तिसंयोगाद्योः' इति गुणः। सर्वत्रार्तिग्रहणेषु भौवादिकह्रोजौत्यादिकयोर्द्वयोरपि ग्रहणमिति स्थितं व्याख्यानेषु। अत एव 'अर्ति' इति साधारणनिर्देशः कृतः। भौवादिकमात्रग्रहणे ऋच्छतीति वक्तव्यम्, जौहोत्यादिकस्य तु शपः श्लौ इयर्तीति। 'अर्तिपिपर्त्योश्च' इत्यत्र 'श्लौ' इत्यधिकारात् भौवादिकस्य न

---

१. अत्रैव ग्रन्थे १९६-१९७ पृष्ठयोः।

सम्भवः। 'सर्तिशास्त्यर्तिभ्यश्च' इत्यङ्विधावपि शासिना अविद्यमानशपा साहचर्यात् 'सर्त्यर्ती अप्यविद्यमानशपौ गृह्येते' इति ह्युक्तम्, तेनास्य लुङि-आर्षीत्, आर्ष्टाम् इत्यादि भवति। अरिरिषति-'स्मिपूङ्रञ्ज्वशां सनि' इति इट्। अत्र 'ऋ' इति भौवादिकजौहोत्यादिकयोर्द्वयोरपि ग्रहणम्, 'ऋच्छत्यृताम्' इतिवत्। अत्र द्विर्वचनात् पूर्वं गुणे रपरत्वे 'अजादेर्द्वितीयस्य' इति रिशब्दस्य द्विर्वचनम्। 'द्विर्वचनेऽचि' इति नात्र स्थानिवत्त्वम्; 'सन्यङोः' इत्यस्य षष्ठ्यन्तत्वात्। न च कार्यी निमित्तत्वेनाश्रीयते। अत्र हरदत्तः—'यत्र सप्तम्या निमित्तं श्रुतं तन्निमित्तं न तु तद्भावितामात्रम्' इति। अरार्यते—'सूचिसूत्रि' इत्यादिना यङि 'यङि च' इति गुणे 'न न्द्राः' इति निषेधस्य यकारपररेफस्य प्रतिषेध इति बाधात् रेफादेर्द्विर्वचने 'दीर्घोऽकितः' इति दीर्घः। अरर्ति। अरर्ति—ऋशब्दस्य द्विर्वचने अभ्यासस्योरदत्वे हलादिशेषे 'ऋतश्च' इति रुग्रीग्रिकः। उत्तरखण्डस्य गुणः। अत्र रीग्रिकोर्न रूपभेदः; उभयत्रापि 'अभ्यासस्यासवर्णे' इतीयङा भाव्यत्वात्। इट्पक्षे अररीति। अर्यरीति। तसादौ ङित्त्वादुत्तरखण्डस्य न गुण इति अर्ऋतः, अरियृतः इत्यादि। झौ ऋशब्दस्य द्विर्वचने अभ्यासकार्ये रुकि च 'अदभ्यस्तात्' इति झेरद्भावे परखण्डस्य यणि 'रो रि' इति रेफस्य लोपे 'ढ्रलोपे' इति दीर्घे-आरति इति भवति। 'पूर्वत्रासिद्धे न स्थानिवत्' इति निषेधात् 'रो रि' इति लोपे 'अचः परस्मिन्' इति न यणः स्थानिवद्भावः। रिग्रीकोर्ऋकारमाश्रित्य इयङि पश्चादद्भावमाश्रित्य तस्य यणि अरियृति इति भवति। न च 'लोपो व्योर्वलि' इति यलोपप्रसङ्गः; 'अचः परस्मिन्' इति यणः स्थानिवत्त्वात्। न चास्ति यलोपं प्रति न स्थानिवदिति; 'स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत्' इति वचनात्। अरर्षि, अरर्यर्षि। अरर्मि, अरियर्मि। अर्ऋवः, अर्यृवः। अर्ऋमः, अर्यृमः। अरराञ्चकार, अरियराञ्चकार। अररिता, अरियरिता। अररिष्यति, अरियरिष्यति। अरर्तु, अरियर्तु। अर्ऋहि, अर्यृहि ङित्वान्न गुणः। अरराव, अरियराव—आटि पित्त्वाद् गुणः। लङि—अभ्यासस्य रुकि परस्य गुणे तिप्सिपोर्हल्ङ्यादिलोपे रेफस्य विसर्जनीये अङ्गस्याटि आटः रिग्रीकोरियङि—आरियः। आर्ऋताम्, आरियृताम्। बहुवचने 'जुसि च' इति गुणे—आररुः, आरियरुः। लिङि—अर्ऋयात्, अरियृयात्। आशिषि आरियात्—'रिङ् शयग्लिङ्क्षु' इति रिङादेशे 'रो रि' इति लोपे ढ्रलोपदीर्घः। रिग्रीकोरियङि परस्य रिङादेशस्य स्थानिवत्त्वाद् यलोपाभावे अरियृतात्। यलोपविधिं प्रति न स्थानिवदिति तु न भवति; तस्य लोपाजादेशविषयत्वात्। 'गुणोऽर्ति' इति गुणः शितपानिर्देशात् न भवति। लुङि—आरारीत्, आरियारीत् इत्यादि। अर्पयति—'अर्त्तिह्री' इति पुक्। 'पुगन्तलघूपधस्य' इति गुणः। मा भवानृपिपत्—'उर्ऋत्' इति पक्षे ऋकारो गुणापवादः। णिलोपस्य

'द्विर्वचनेऽचि' इति स्थानिवत्त्वात् पिशब्दस्य द्विर्वचनम्। ऋकाराभावपक्षे गुणे 'न न्द्राः' इति रेफस्य द्विर्वचननिषेधात् पिशब्दद्विर्वचने मा भवानर्पिपत् इति भवति। श्तिपा निर्देशाद्यङ्लुकि पुगभावात् अरारयति इति भवति। रिग्रीक्पक्षे अरियारयति इति। उपार्च्छति—"उपसर्गादृति धातौ" इति अवर्णान्तादुपसर्गात् ऋकारादौ धातौ परे पूर्वपरयोर्वृद्धिः। सा च ऋवर्णस्थानिका इति रपरत्वम्। अर्यः—'अर्यः स्वामिवैश्ययोः' इति यति निपात्यते। स्वामिवैश्याभ्यामन्यत्र 'ऋहलोर्ण्यत्' इति ण्यत्—आर्यः। स्त्रियाम्—आर्या। आर्याणी—'आर्यक्षत्रियाभ्यां वा' इति ङीषानुकौ। पक्षे 'विना पुंयोगं स्वार्थ एवायं विधिः' इति वृत्तिः, तेन पुंयोगे नित्यं ङीष् भवति—आर्यी इति। अरित्रम्—'अर्त्तिलू' इति करणे इत्रः। आरा—प्रतोदः। 'आरा शस्त्रम्' इति भिदादिपाठात् अङ् वृद्धिश्च। अन्यत्र आर्त्तिः—'उपसर्गात्' इति वृद्धिः। ऋणम्—'ऋणमाधमर्ण्ये' इति निष्ठानत्वं निपात्यते। अधम ऋणे अधमर्णः। अत एव निर्देशात् सप्तम्यन्तेन समासः। अधममृणमस्येति बहुव्रीहिर्वा। निष्ठान्तस्य परनिपातः अत एव निर्देशात्। तस्य भावः आधमर्ण्यम्। इदं च कालान्तरदेयविनिमयोपलक्षणार्थम्, तेन 'उत्तमर्णः इत्यपि भवति' इति वृत्तिः। 'धारेरुत्तमर्णः' इति निपातनात् वा। पूर्ववत् समासः। प्रगतं प्रवृद्धं वा ऋणं प्रार्णम्—'प्रादयो गत्याद्यर्थे प्रथमया' इति समासः। वत्सतरार्णम्। कम्बलार्णम्। वसनार्णम्—विशेषणसमासः। 'प्रवत्सतरकम्बलवसनार्णदशानामृणे' इति वृद्धिः। ऋणार्णम्—ऋणापाकरणार्थं यदुपादीयते तदुच्यते। षष्ठीसमासः। दशार्णो देशो नदी च। विशेषणसमासः यथाकथञ्चिद् व्युत्पाद्यः। 'ऋणदशाभ्यां च' इति वृद्धिः। दशार्णमपहाय सर्वे बहुव्रीहयो वा। लिङ्गन्तु विशेषणायत्तं द्रष्टव्यम्। आधमर्ण्यादन्यत्र—ऋतः। सुखेन ऋतः सुखार्तः—'ऋते च तृतीयासमासे' इति वृद्धिः। अन्यत्र परमर्त्तः। आर्त्तः—इत्यत्राङ्युपपदे 'उपर्गादृति' इति वृद्धिः। आत्रेयस्तु—सौत्रादृतेः धातोरचि प्रज्ञाद्यणि व्युत्पादयति। अन्यथापि सिद्धे कोऽयं यत्न इति न जानीमः! अरुः—अर्तिपृवपियजितनिधनितृपिभ्यो नित्' इत्युसिप्रत्ययः। अरूकरोति—'अरुर्मनः' इति च्विप्रत्यये सलोपः। 'च्वौ च' इति दीर्घः। अर्शः—'अर्तेर्गुणश्शुट् च' इत्यसुन्प्रत्ययः, शुडागमश्च। अर्शोऽस्यास्तीति अर्शसः—'अर्शआदिभ्योऽच्' इति अच् मत्वर्थे। अर्म—'अर्तिस्तु' इत्यादिना मनिन्। अररुः—असुरविशेषः। 'अर्त्तेररुः' इत्यरुः। अर्भः बालः—'अर्त्तिगृभ्यां भन्' इति भन्। अर्भकः—स्वार्थे कन्। अर्थः—'उषिकुषिगार्तिभ्यस्थन्' इति थन्। ऊर्मिः—'अर्त्तेरु च' इति मिन्प्रत्यय उकारश्चान्तादेशः। अर्वा—'स्नामदिपद्यर्तिपृशकिभ्यो वनिप्' इति वनिप्। अर्वन्तौ—अर्वणस्त्रसावनञः' इति असौ तृ इत्यादेशः। ऋदित्वात् 'उगिदचाम्' इति नुम्। अर्वती इत्यत्र ङीष् च भवति।

'अनच:' इति वचनात् अनर्वाणौ इत्यत्र नायमादेशः । निर्ऋथः साम—'अर्त्तेर्निरि' इति निर्युपपदे थक् प्रत्ययः । अरणिः—'अर्त्तिसृधृधमि' इत्यादिना अनिप्रत्ययः । अरुणः-'अर्त्तेश्च' इति उनन्प्रत्ययः । ऋतुः-'अर्त्तेश्च तुः' इति तुप्रत्ययः । किदिति तत्रानुवृत्तेर्न गुणः । ऋतुः प्राप्तोऽस्य आर्त्तवं पुष्पम्—'ऋतोरण्' इति 'तदस्य प्राप्तम्' इत्यस्मिन् विषये अण्प्रत्ययः । ऋतुर्देवता अस्य ऋतव्यम्–'वाय्वृतुपित्रुषसो यत्' इति 'सास्य देवता' इति विषये यत्, 'ओर्गुणः' 'वान्तो यि प्रत्यये' इत्यवादेशः । अररं कवाटम्—'अर्त्तिकमि' इत्यादिना अरप्रत्ययः । इरिणम् ऊषरम्–'अर्त्तेः किदिनश्च' इतीन् प्रत्ययः । किन्त्ववचनान्न गुणः, धातोरिकारादेशश्च । अर्णः—अर्तेर्नुट् च' इत्यसुन्प्रत्ययः, नुडागमश्च । अर्णवः—'अर्णसो लोपश्च' इति मत्वर्थीये वप्रत्यये सलोपः ॥९३३॥

६५८. गृ घृ सेचने । गरति । जगार । जग्रतुः । जगर्थ । जग्रिव । गर्ता । गरिष्यति । गरतु । अगरत् । गरेत् । आशिषि ग्रियात्—'रिङ् शयग्' इति रिङ् । अगार्षीत् । जिगीर्षति—'अज्झन' इति दीर्घे ऋत इत्वे रपरे 'हलि च' इति दीर्घः । जेग्रीयते—'रीङ् ऋतः' इति रीङ् । जर्गर्त्ति । गारयति । अजीगरत् । गर्त्तः—'हसिमृग्रीण्वमि' इति तन् ॥ घरति । 'घृतम्, घृणा, घर्मं, इत्येवं विषयः' इति 'तृज्वत्क्रोष्टुः' इत्यत्रोक्तं भाष्ये । गॄ इति दीर्घान्तस्तुदादौ निगरणार्थः । क्र्यादौ शब्दार्थः । ज्ञानार्थश्चुरादौ । घृ क्षरणदीप्त्योरिति जुहोत्यादौ । घृ स्रवणे इति चुरादौ ॥९३४-३५॥

६५९. ध्वृ हूर्च्छने । हूर्च्छनं कौटिल्यम् । 'भ्रातृव्यमेव तदपध्वरति' इत्यादौ हिंसायामपि दृश्यते । ध्वरति इत्यादि स्मृवत् ॥९३६॥

६६०. स्रु गतौ । स्रवति । सुस्राव । सुस्रुवतुः–उवङादेशोऽगुणवृद्धिविषये । सुस्रोथ । सुस्रुव । क्रादिषु पाठादनिट्त्वम् । थल्यपि पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्याद् भारद्वाजनियमं बाधित्वाऽयमेव निषेधः प्रवर्त्तते । द्रवतावयमर्थः प्रपञ्चयिष्यते[1] । स्रोता । स्रोष्यति । स्रवतु । अस्रवत् । स्रवेत् । आशिषि स्रूयात्—'अकृत्सार्वधातुकयोः' इति दीर्घः । असुस्रुवत्—'णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्' अत्र च लघूपधगुणादन्तरङ्गत्वादुवङ् । सुस्रूषति—'इको झल्' इति सनः कित्त्वान्न गुणः । 'अज्झन' इति दीर्घः । सोस्रूयते । सोस्रोति—'उतो वृद्धिर्लुकि हलि' इति न भवति, 'नाभ्यस्तस्य' इत्यनुवृत्तेः । सोस्रुतः । सोस्रुवति । स्रावयति—'बुधयुध' इत्यादिना नित्यं परस्मैपदम् । असुस्रवत्, असिस्रवत्—'स्रवतिशृणोति' इत्यादिना अभ्यासोकारस्य वेत्त्वम् । आस्रावः, संस्रावः–'श्याद्व्यधा' इत्यादिना आङ्सम्भ्यामुपसृष्टाद् अस्माण्णः । प्रस्रावी—'प्रे लप' इत्यादिना घिनुण् । आत्रेयस्तु 'प्रे लपसु' इति पाठं प्रतिपद्य सर्तेः प्रसारी इत्युदाजहार । प्रस्रावः—'प्रे द्रुस्तुस्रुवः' इति

१. अग्रेवाग्रे २६४ पृष्ठे ।

घञ्। स्रवत्यस्मात् घृतमिति स्रुवः। स्रुक्—'स्रुवः कः', 'चिक्च' इति कचिकौ प्रत्ययौ। इकारककारावनुबन्धाविती। एतौ भीमादित्वादपादाने। स्रोतः—'स्रुरीभ्यां तुट् च' इति असुन्तुडागमश्च। अत्र स्वामी—'श्रु गतौ'[1] इति तालव्यादिममुं पपाठ। 'श्रु श्रवणे' इत्येतं तु दन्त्यादिं न्यासकारादयः। सर्वे विरुद्धमेव पठन्ति। स्रवणम्, स्रुतिः, श्रोत्रम्, श्रुतिः, श्रवणमित्यादौ च लोकप्रसिद्धोऽर्थो न सङ्गच्छत इति यत्किञ्चिदेतत्। अत्र मैत्रेयः—सु इत्यरेफमपि धातुं पठित्वा सवतीत्युदाजहार। देवोऽपि अमुमेव पाठमाश्रित्याह—'गतौ तयोश्च सवतिर्द्विरुक्त्यैकस्य सो न षः'[2] इति। अयमस्यार्थः—'सु गतौ, षु प्रसवैश्वर्ययोश्च इति चकारेणैव गतावपि सवतिः सिध्यति, सु गतौ षु प्रसवैश्वर्ययोरिति सवतेर्द्विः पाठो गत्यर्थस्याषोपदेशत्वार्थ इति। तत् षोपदेशलक्षणस्याव्यापकत्वप्रसङ्गात् अयुक्तमिति पुरुषकारेण दूषितम्। अपरे[3] पुनः 'शु' इति तालव्यादिमाद्यं पठन्ति, तद्युक्तम्; यदुणादौ 'सुसिचिमीनां दीर्घश्च' इति शवतेः क्नि शूरशब्दो व्युत्पाद्यते। तथा शाकटायनेनापि 'श्रु द्रु स्रु गतौ' इति पठ्यते ॥९३७॥

६६१. षु प्रसवैश्वर्ययोः। 'प्रसवोऽभ्यनुज्ञा' इति पुरुषकारे। सवति। सुषाव। सुषुवतुः। सुषोथ। सुषविथ। सुषुविव। सुषुविम—क्रादिनियमादिट्। थलि भारद्वाजनियमाद्विकल्पः। गुणवृद्ध्योरविषये उवङ्। सोता इत्यादि पूर्ववत्। 'स्तुसुधूञ्भ्यः परस्मैपदेषु' इति सिच इड्विधौ स्तौतिना लुग्विकरणेन साहचर्यान्न सूतेर्ग्रहणम्, नाप्यलुग्विकरणेन धूञा परेण साहचर्यात् सवतिसुनोत्योर्द्वयोरपि; किन्तु पूर्वपराभ्यां ङिद्भ्यां साहचर्यात् स्वादेर्ङितो ग्रहणमिति नास्येडागमः। अत एव तत्र न्यासे—'सु इति षुञ् अभिषवे' इत्युक्तम्। तथात्रेयमैत्रेयावपि तमेव सेटमुदाहार्ष्टाम्, नेतरौ। न च निरनुबन्धकपरिभाषया इड्विधौ सवतेरेव ग्रहणं युक्तमिति वाच्यम्; यतस्तदपेक्षया साहचर्यस्यैव प्राबल्यम्। तथा च 'सत्सूद्विष' इत्यत्र वृत्तौ—'सु इति द्विषा साहचर्यात् सूतेरादादिकस्य ग्रहणम्' इति दर्शितम्। वर्द्धमानस्तु—'साहचर्यनिरनुबन्धकपरिभाषयोरनित्यतामाश्रित्य लुग्विकरणत्वात् सौतिमपहाय सुवतिसुनोत्योर्द्वयोरपि ग्रहणम्' इति द्वयोरपीटमाह। तन्मते—असावीत् इति भाव्यम्। अन्येषां तु असौषीत् इति। सुसूषति—'स्तौतिण्योरेव' इत्यषत्वम्। सोषूयते। सोषोति—'उतो वृद्धिः' 'नाभ्यस्तस्य' इत्यनुवृत्तेर्न भवति। कर्मणि—सूयते। असावि। असोषताम् इत्यादि। कर्मकर्त्तरि—'अचः कर्मकर्त्तरि' इति तशब्देऽपि पक्षे सिचो विधानात् असौष्ट इत्यपि भवति। स्यादिषु कर्मकर्त्तरि चिण्वद्पक्षे असाविष्यत इत्याद्यपि द्रष्टव्यम्। आसीव्यम्—'अचो यत्' इति यति गुणे 'वान्तो यि' इत्यवा-

---

१. क्षीरतरङ्गिण्यां नैतादृशः पाठ उपलभ्यते। २. दै० २१ का०।

३. क्षीरस्वामिप्रभृतयः।

देशः। 'आसुयुवपि' इति ण्यद्विधौ सुनोतेर्ग्रहणमिति वृत्तिकारहरदत्तादयः। एवं 'सुयजोर्ङ्वनिप्' इत्यत्रापि। सुत्वा। सुतम् ॥६३८॥

६६२. श्रु श्रवणे[1]। शृणोति। शृणुतः। शृण्वन्ति। शृणोषि। शृणोमि। शृणुवः, शृण्वः। शृणुमः, शृण्मः। 'श्रुवः शृ च' इति शब्विषये श्नुप्रत्ययः, शृभावश्च धातोः। श्नोः शित्त्वात् सार्वधातुकत्वात् अपित्त्वात् ङित्त्वान्न गुणः प्रकृतेः। स्वस्य तु भवत्यक्ङिति। शृण्वन्ति—इत्यत्रन्तादेशे "हुश्नुवोः सार्वधातुके" इति यणादेश उवङोऽपवादः। सूत्रार्थस्तु—जुहोतेः श्नुप्रत्ययान्तस्य चानेकाचोऽङ्गस्यासंयोगपूर्वो य उकारः तस्याजादौ सार्वधातुके यणिति। श्नोरुकारस्य वस्मसोः 'लोपश्चास्यान्यतरस्यां म्वोः' इति पक्षे लोपः। शुश्राव। शुश्रुवतुः। शुश्रुवुः। शुश्रोथ। शुश्रुव। शुश्रुम। पित्सु वृद्धिगुणयोरावावौ। अन्यत्राजादावुवङ्। क्रादिषु पाठात् स्रवतिवत् थल्यप्यनिट्। श्रोता। श्रोष्यति। शृणोतु। शृणु—'उतश्च प्रत्ययादसंयोगपूर्वात्' इति हेर्लुक्। शृणवानि—आटि गुणावौ। अशृणोत्। अशृणुताम्। शृणुयात्। आशिषि श्रूयात्—'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घः। अश्रौषीत्। शुश्रूषते—'ज्ञाश्रुस्मृदृशां सनः' इति तङ्। प्रतिशुश्रूषति, आशुश्रूषति इत्यत्र 'प्रत्याङ्भ्यां श्रुवः' इति सन्निमित्तस्य तङो निषेधः। इह प्रत्याङोरुपसर्गयोर्ग्रहणात् देवदत्तं प्रतिशुश्रूषते, भाष्यादाशुश्रूषते इत्यत्र च तङेव भवति। अत्र हि—प्रत्याङौ कर्मप्रवचनीयौ, 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' 'आङ् मर्यादावचने' इत्येकसंज्ञाधिकारात् कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञा बाध्यते। लक्षणं चिह्नम्। कञ्चित् प्रकारं प्राप्त इत्थम्भूतस्तस्याख्यानमित्थम्भूताख्यानम्। भागः स्वीक्रियमाणोंऽशः। उक्ता वीप्सा। विना तेनेति मर्यादा। सह तेनेत्यभिविधिः। वचनग्रहणादभिविधिरपि गृह्यते। तत्र प्रतिशुश्रूषते इत्यस्य देवदत्तः शुश्रूषाया लक्षणमित्यर्थः, देवदत्तसकाशे शुश्रूषत इति यावत्। एवं भाष्यादाशुश्रूषत इत्यस्य विनापि भाष्येण सह वा तेन शुश्रूषते इत्यर्थः। शोश्रूयते। शोश्रवीति, शोश्रोति—'उतो वृद्धिः' 'नाभ्यस्तस्य' इत्यनुवर्त्तनात् नेत्युक्तम्। श्रावयति। अशुश्रवत्। अशिश्रवत्—णौ कृतस्य स्थानिवत्त्वात् श्रुशब्दस्य द्विर्वचनम्। 'स्रवतिशृणोति' इति पक्षे अभ्यासस्येत्वम्। संशृणुते। संशृण्वाते। संशृण्वते। संशृण्वे। संशृणुवहे, संशृण्वहे। संशुश्रुवे। संश्रोता। संश्रोष्यते। संशृणुताम्। समशृणुत। संशृण्वीत। आशिषि—संश्रोषीष्ट। समश्रोष्ट। झलि सिज्लोपस्य पूर्वत्रासिद्धत्वाद् गुणे ह्रस्वाभावान्न सिज्लोपप्रसङ्गः। कर्मकर्तरि—स्रवतिवत्। शुश्रुवान्—'भाषायां

---

१. इदं सूत्रं क्षीरस्वामी नात्र पठति। पाठाभावे कारणार्थं क्षीरतरङ्गिण्या १४२ पृष्ठस्था पञ्चमी टिप्पणी द्रष्टव्या।

सदवसश्रुवः' इति लिटः क्वसुः। अयं च लिट् लुङ्लङ्लिड्विषयः पाक्षिकश्च। क्वस्वादेशस्तु नित्यः। तेनानेन लिटा मुक्ते यथायोगं ते लुङ्लङ्लिटो भवन्तीति। सर्वं चैतत् सीदतावुपपादितम्। भसंज्ञायां सम्प्रसारणे सवर्णदीर्घं बाधित्वा धातुवर्णत्वादुवङि—शुश्रुवुषः इत्यादि। पदत्वे 'वसुस्रंसु' इत्यादिना दत्वे—शुश्रुवद्भ्याम् इत्यादि। देवदत्ताय गां प्रतिशृणोत्याशृणोति वा। याचितः सन् तस्मै ददामीति प्रतिजानीत इत्यर्थः। "प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता" प्रत्याङ्भ्यामुपसृष्टस्य शृणोतेः प्रयोगे प्रतिशृणोत्याशृणोतिक्रियापेक्षया पूर्वस्याः क्रियायाः कर्त्ता सम्प्रदानमिति देवदत्तस्य सम्प्रदानत्वाच्चतुर्थी। प्रत्याङ्भ्यामुपसृष्टः शृणोतिः प्रतिश्रवणार्थं इति अर्थात् पूर्वा क्रियेह याचनम्। निश्रावी—'रक्षश्रुवसवपशां नौ' इति ग्रहादिपाठाण्णिनिः। विश्रावः—'वौ क्षुश्रुवः' इति घञ्। श्रूयतेऽनया इति श्रुतिः—'श्रुयजिस्तुभ्यः करणे' इति क्तिन् स्त्रियाम्, ल्युटोऽपवादः। अस्त्रियाम्—श्रूयते अनेनेति श्रवणं श्रोत्रम्। यदा नक्षत्रवचनस्तदा श्रवणेन युक्ता रात्रिरिति विगृह्य 'नक्षत्रेण युक्तः कालः' इति विहितस्याणः 'संज्ञायां श्रवणाश्वत्थाभ्याम्' इति लुपि श्रवणा रात्रिरिति भवति। अत्र 'लुपि युक्तवद्व्यक्तिवचने' इति प्रकृत्यर्थेलिङ्गं न भवति, 'विभाषा फाल्गुनीश्रवणा' इति निर्देशात्। लुबिति लुप्संज्ञया लुप्तप्रत्ययार्थ उच्यते। तत्र युक्तवद्व्यक्तिवचने भवत इति सूत्रार्थः। युक्तः प्रकृत्यर्थः प्रत्ययार्थेन सम्बद्ध इति कृत्वा। व्यक्तिर्लिङ्गम्, वचनमेकत्वादि। यदाऽयं श्रवणाशब्दः पौर्णमासीवचनस्तदा 'श्रवणा पौर्णमासी अस्मिन्मासे' इति विगृह्य 'विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः' इति अण्ठञोः कृतयोः—श्रावणः, श्रावणिकः इति भवति। श्रवः—असुन्। विश्रवसोऽपत्यं वैश्रवणः, रावणश्च। शिवादिषु 'विश्रवणरवणे' इति पाठात् अपत्येऽणि तत्सन्नियोगेन विश्रवणरवणावादेशौ। श्रोत्रम्—ष्ट्रन्। श्रोणिः—'वहिश्रुश्रियुद्रुग्लाहात्वरिभ्यो नित्' इति नित्प्रत्ययः ॥९३९॥

६६३. ध्रु स्थैर्ये। ध्रवति। दुध्राव। दुध्रुवतुः। दुध्रोथ, दुध्रविथ। दुध्रुविव क्रादिनियमादिट्, थलि भारद्वाजनियमादिड्विकल्पः। शेषं स्रवतिवत्। ध्रुवः— इति बाहुलकात्कः, यद्वा 'ध्रुवमपाये' इति निर्देशात् साधुः। अयं तुदादौ गत्यर्थश्च। तस्माद्वा अचि ध्रुवः। स हि कुटादिः ॥९४०॥

६६४. दु द्रु गतौ। दवति। दुदाव। दुदुवतुः। दुदोथ, दुदविथ। दुदुविव। दोता इत्यादि पूर्ववत्। लिटि क्रादिनियमादिट्—थलि भारद्वाजनियमादिड्विकल्पः। दवः—पचाद्यच्। 'दुन्योरनुपसर्गे' इति णविधौ दुनोतिरेव वृत्तौ गृहीतः। पदमञ्जर्यां च 'नयतिना साहचर्यात् सानुबन्धकस्य दुनोतेरिह ग्रहणम्' इति। सन्दावः— 'समि युद्रुदुवः' इति घञ्। दूनः—'ल्वादिभ्यः' इत्यत्र 'दुग्वोर्दीर्घश्च' इति वचनान्निष्ठानत्वं दीर्घत्वं च। दूतः—'दुतनिभ्यां दीर्घश्च' इति तन्, दीर्घश्च। दूतस्य

भावकर्मणी द्रूत्यम्—'दूतवणिग्भ्यां चेष्यते' इति यः। 'द्रु दु उपतापे' इति स्वादौ ॥ द्रवति। दुद्राव। दुद्रुवतुः। दुद्रोथ। दुद्रुव। क्रादिपाठादनिट्त्वम्। ननु स्तुद्रुस्तुश्रुवां निषेधस्य थलोऽन्यत्र चरितार्थत्वात् थलि भारद्वाजनियमाद्विकल्पः स्यात्। न चैवं शक्यते वक्तुम्—'स्वादिव्यतिरिक्तानां ग्रहणं नियमार्थम्, स्वादीनां तु भारद्वाजनियमप्राप्तस्यैवेटो निषेधार्थम्' इति; एवं हि क्रादिनियमात् थलोऽन्यत्र नित्यमिट् स्यात्। एवं तर्हि स्वादीनां ग्रहणं यः क्रादिनियमात् इट् प्राप्तो यश्चापि भारद्वाजनियमात् तयोर्द्वयोर्निषेधार्थं भविष्यति। न च मन्तव्यम्—'येन नाप्राप्तिन्यायेन क्रादिनियमप्राप्तस्यैवेटो निषेधो युक्तः' इति; 'पुरस्तात् प्रतिषेधकाण्डारम्भादुभयोर्निषेधः' इति वृत्तावुक्तत्वात्। अथ वा—सर्वेषां नियमार्थत्वेऽपि न दोषः; अनेन नियमेन यः क्रादिव्यतिरिक्तानां नित्यमिट् प्राप्तः सः 'अचस्तास्वत्' इति निषिध्यते। 'यत्र चायं निषेधस्तत्रैव भारद्वाजनियमः' इत्यर्थादस्य नियमस्य क्राद्यष्टकव्यतिरिक्तविषयत्वलाभात्। द्रोता। द्रोष्यति इत्यादि पूर्ववत्। लुङि—'णिश्रिद्रुस्रुभ्यः' इति चङि अदुद्रुवत्। लघूपधगुणादन्तरङ्गत्वादुवङित्युक्तम्। दुद्रूषति। दोद्रूयते। दोद्रोति। द्रावयति। अदुद्रवत्, अदिद्रवत्—'श्रवतिशृणोतिद्रवति' इत्यभ्यासस्य वेत्वम्। 'बुधयुध' इत्यादिना नित्यं परस्मैपदम्। सन्द्रावः—'समि युद्रुदुवः' इति घञ्। उद्द्रावः—'उदि श्रयति' इत्यादिना घञ्। प्रद्रावः—'प्रे द्रुस्तुस्रुवः' इति घञ्। हरिद्रुः। मितद्रुः। शतद्रुः—डुप्रकरणे 'मितद्र्वादिभ्य उपसंख्यानम्' इति डुः। हरिद्रुणा प्रोक्तं छन्दोऽधीते हारिद्रविणः—'कलापिवैशम्पायनान्तेवासिभ्यश्च' इति प्रोक्तार्थे णिनिः। तदन्तात् 'छन्दोब्राह्मणानि' इति नियमादध्येतृवेदितृप्रत्ययान्तमेवेत्युत्पन्नस्याणः 'प्रोक्ताल्लुक्' इति लुक्। कलाप्यन्तेवासिनश्च—

हरिद्रुरेषां प्रथमस्ततश्छगलितुम्बुरू। उलपेन चतुर्थेन कालापकमिहोच्यते ॥

इत्युक्ताः। द्रविणम्—'द्रुदक्षिभ्यामिनन्' इति इनन्। द्रोणः परिमाणादिः। 'कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्' इति नप्रत्ययः। स्त्रियां गौरादिपाठात्—द्रोणी। द्रोणस्य गोत्रापत्यं द्रौणायनः। द्रौणिः—'द्रोणपर्वतजीवन्तादन्यतरस्याम्' इति फक्। तदभावे 'अत इञ्'। द्रोणं पचतीति द्रौणः, द्रौणिकः—'तत्पचतीति द्रोणादण् च' इति अण्ठञौ। द्विद्रोणेन धान्यं क्रीणाति—तृतीयाविधाने 'प्रकृत्यादिभ्य उपसङ्ख्यानम्' इति तृतीया ॥६४१-६४२॥

६६५. जि ज्रि[1] अभिभवे। अभिभवो न्यूनीकरणम्। जयति। जिगाय इत्यादि तिङन्तं 'जि जये' इतिवत्। पुनः पाठे फलं तत्रैवोक्तम्[2]। अध्ययनात्पराजयते—

---

१. 'जृ' इति क्षीरस्वामी। २. पूर्वं १९४ पृष्ठे।

पराजिरत्र न्यूनीभावे वर्त्तते। अत्रायमकर्मकः। अध्येतुं ग्लायतीत्यर्थः। तत्र षष्ठ्यां प्राप्तायाम् "पराजेरसोढः" इति अध्ययनस्यापादानत्वात् पञ्चमी। परापूर्वस्य जयतेः प्रयोगे असोढः सोढुमशक्यो योऽर्थस्तत्कारकमपादानमिति सूत्रार्थः। धनञ्जयः—'संज्ञायां भृतॄवृजि' इति खचि मुमागमः पूर्वपदस्य। शत्रुजित्। प्रजित्—'सत्सूद्विष' इत्यादिनोपसर्गेऽप्यनुपसर्गेऽपि सुबन्ते उपपदे क्विप्। जिष्णुः—'ग्लाजिस्थश्च ग्स्नुः' इति ग्स्नुः। जयी—'जिदृक्षि' इति इनिप्रत्ययः। जित्वरः—'इण्नशजि' इति क्वरप्। त्रयोऽपि ताच्छीलिकाः। जैत्रम्—बाहुलकात् त्रण् प्रत्ययः॥ ज्रयति। जिज्राय। जिज्रियतुः। जिज्रयिथ, जिज्रेथ। जिज्रियिव। ज्रेता। ज्रेष्यति। ज्रयतु। अज्रयत्। ज्रयेत्। आशिषि—ज्रीयात्। अज्रैषीत्। जिज्रीषति—'इको झल्' इति सनः कित्त्वान्न गुणः। 'अज्झनगमाम्' इति दीर्घः। जेज्रीयते। जेज्रेति। ज्राययति। अजिज्रयत्। 'जु' इति सौत्रो धातुः। जवति इत्यादि। अयं गत्यर्थः। 'वेगवचने' इत्यपरे। जवनः—'जुचङ्क्रम्य' इत्यादिना युच्। प्रजवशीलः प्रजवी—'प्रजोरिनिः' इतीनिप्रत्ययः। जूः—'भ्राजभास' इत्यादिना क्विप्। तत्रैव 'जू' इति पाठात् क्विप्सन्नियोगेन दीर्घः। जवः—अप्। जूतिः—'ऊतियूतिजूति' इति निपातनात् क्तिनि दीर्घः॥६४३-६४४॥

६६६. धयत्यादयोऽनुदात्ता उदात्तेतः[1]।

६६७. श्रयतिस्तूदात्तः[1]।

६६८. तथा ञित उभयपदिनः[1]।

६६९. ष्मिङ् ईषद्धसने। एतदादयः त्रायत्यन्ता अनुदात्ता आत्मनेपदिनः। स्मयते। सिष्मिये। सिष्मियिषे। सिष्मियिढ्वे, सिष्मियिध्वे। सिष्मिये। सिष्मियिवहे—'अचि श्नुधातु' इत्यादिना इयङ्। स्मेता। स्मेष्यते। स्मयताम्। अस्मयत। स्मयेत। स्मेषीष्ट। अस्मेष्ट। सिष्मयिष्यते—'स्तौतिण्योरेव' इत्यषत्वम्। 'स्मिपूङ्रञ्ज्वशां सनि' इतीट्। सेष्मीयते। सेष्मेति। मुण्डो विस्मापयते। असिष्मपत्—'नित्यं स्मयतेः' इति हेत्वेककारके स्मयत्यर्थे आत्वम् तत्र पुक्, 'भीस्म्योर्हेतुभये' इति हेत्वेककारकार्थयोर्नित्यं तङ्। तत्र भयग्रहणं चित्तविकारोपलक्षणम्, तेन 'बिभेतेर्हेतुभये, स्मयतेर्हेतुस्मये' इत्यर्थो भवति। यदा तु हेतुत एव स्मयो न भवति तदात्वं न, नापि तङ्नियम इति मुण्डो रूपेण विस्माययति इति भवति। स्मेरं मुखम्—'नमिकम्पि' इति रः। स्मित्वा। स्मितम्। अयमनादरे चुरादिः॥६४५॥

६७०. गुङ् अव्यक्ते शब्दे। गवते। जुगुवे। जुगुविषे। जुगुविवहे। गोता। गोष्यते। गवताम्। अगवत। गवेत। आशिषि—गोषीष्ट। अगोष्ट। अगोष्यत। जुगूषते—

1. क्षीरस्वामी तु नेदं सूत्रत्रयं पठति।

'अज्झन' इति दीर्घः। जोगूयते—'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घः। जोगोति। गावयति। अजूगवत्—णौ कृतस्य स्थानिवत्त्वाद् गुशब्दस्य द्विर्वचनम्। गुत्वा। गुतः—'हुग्वोदीर्घश्च' इत्यत्र निरनुबन्धस्य तौदादिकस्य 'गु पुरीषोत्सर्गे' इत्यस्य ग्रहणमिति नात्र निष्ठानत्वदीर्घत्वे भवतः। गोत्रम्—'गुधृवीपचि' इत्यादिना त्रप्रत्ययः। ब्राह्मणगोत्रा—'कुत्सितानि कुत्सनैः' इति समासः। 'वृत्तिविषये गोत्र-शब्दः कुत्सनवचने' इति चेलतावुक्तम्[1]। 'घरूप' इत्यादिना पूर्वपदस्य ह्रस्वः। गवाक्षः क्रमुकवचनः—पिनाकादिपाठादाकप्रत्ययः। गवलं माहिषं शृङ्गम्—बाहुलकादलप्रत्ययः। अनन्तरं 'धृञ् धारणे' इति क्वचित् पठ्यते, वर्धमानोऽमुं न सहते; यदाह—"केचित् 'धृञ् धारणे' इति पठन्ति, सोऽनार्षः; धरति, धरते इति प्रयोगदर्शनात्"। तत्साहसमात्रम्। उपादीयते च 'अनुपसर्गाल्लिम्प' इत्यत्र न्यासपदमञ्जर्योः 'धृञ् धारणे' इति। दैवे च—"धारणार्थे तु धरते धरतीत्युभे' इति[2]। अस्माभिस्तु मैत्रेयाद्यनुसारेण ञित्प्रकरणे हरतेरनन्तरं पठित्वाऽयमु-दाहृतः॥६४६॥

६७१. गाङ् गतौ। गाते। त्रिष्वपि वचनेषु समानं रूपम्। गा आ आतामिति स्थिते अत्रान्तरङ्गत्वाद्धातुशपोरेकादेशे सवर्णदीर्घे ङिदवयव आकारोऽतः परो न भवतीति 'आतो ङितः' इतीयादेशो न भवति। न च सवर्णदीर्घस्यादिवद्भावे-नातः परत्वमकारस्य; 'अन्तादिवद्भावो वर्णाश्रये न' इति स्थितत्वात्। न च मन्तव्यम्—'वार्णादाङ्गं बलीयः' इति सवर्णदीर्घात् प्रागेव इयादेशः स्याद्' इति; यदयमङ्गात् परस्येत्यङ्गस्य न भवति। बहुवचने झस्य 'आत्मने-पदेष्वनतः' इति अद्भावः। अत्रापि 'अनतः' इति पर्युदास आदिवद्भावेन न भवति, वर्णाश्रयत्वात्। गासे। गाथे। गाध्वे। गै। गावहे। गामहे। इटि टेरत्वे वृद्धिः। धातुशपोरेकादेशस्यादिवद्भावात् 'अतो गुणे' इति पररूपं वर्णाश्रयत्वादेव न भवति। 'आतो लोप इटि च' इत्यत्र आर्द्धधातुकस्यागम-स्येटो ग्रहणात् नाल्लोपप्रसङ्गः। जगे। जगाते। जगिषे। जगिध्वे। जगे। जगिवहे—'आतो लोप इटि च' इत्याल्लोपः। गाता। गास्यते—'गाङ्कुटादिभ्योऽञ्णिन्ङित्' इत्यत्र गाङिति इङादेशग्रहणात् अस्मात् परस्याञ्णितः प्रत्ययस्य ङित्त्वाभावात् न 'घुमास्थागा' इतीत्वम्। गाताम्। गास्व। गै। गावहै। अगात। अगाताम्। अगात—झस्याद्भावः। अगाथाः। अगे—'आद्गुणः'। अगावहि। गेत। गेयाताम्। गेथाः। गेय—'लिङः सलोपः', आद्गुणः', यलोपः। आशिषि—गासीष्ट। अगास्त। अगा-साताम्। अगासत। अगास्थाः। अगासि। जिगासते। जेगीयते—'घुमास्थागा' इतीत्वम्।

---

१. पूर्वं १४९ पृष्ठे। २. दै० २८ का०।

गापयति। अजीगपत्। 'गोपोष्टक्' इत्यत्र न्यासपदमञ्जर्योः 'अयं धातुरादादिकः' इति स्थितम्। शपि पाठे चास्य प्रयोजनं नास्ति। अस्माभिस्तु 'क्वापि पठितव्यः' इति मैत्रेयाद्यनुसारेणेह पठितः। गायतीति गतं शब्दे ॥९४७॥

६७२. कुङ् घुङ् उङ् ङुङ्[1] शब्दे। कवते। चुकुवे॥ घवते। जुघुवे इत्यादि गवतिवत्। कोकूयते इत्यत्र 'न कवतेर्यङि' इति अभ्यासस्य चुत्वनिषेधः। 'यङि' इति वचनात् तल्लुकि—चोकोति इति चुत्वं भवति। 'अयमव्यक्तशब्दे' इति न्यासे। तथा देवश्च—'अव्यक्तशब्दे कवते' इति[2]। अयमार्त्तशब्दे तुदादौ। शब्दमात्रे ऽदादौ॥ अवते। अवेते। अवन्ते। अवसे। अवे। ऊवे। ऊवाते। ऊविषे। ऊवे। ऊविवहे—अत्रोवङि तस्य 'द्विर्वचनेऽचि' इति स्थानिवत्त्वात् उशब्दस्य द्विर्वचने वार्णादान्त-रङ्गादपि सवर्णदीर्घात्पूर्वं बहिरङ्गेऽप्युवङि 'वार्णादाङ्गं बलीयः' इति कृते पश्चात् सवर्णदीर्घः। ओता। ओष्यते। अवताम्। आवत। अवेत। आशिषि—ओषीष्ट। माभवानोष्ट। ऊषिषते—'इको झल्' इति सनः कित्त्वान्न गुणः। 'अज्झन्'इति दीर्घः। सन्यङोः' इति षष्ठ्यन्तत्वात् षशब्दस्य द्वितीयस्यैकाचो द्विर्वचनम्। आवयति। मा भवानविवत्—वृद्ध्यावौ। चङि णेर्लोपे 'णौ चङि' इति ह्रस्वे 'चङि' इति द्विर्वचने णिलोपस्य 'द्विर्वचनेऽचि' इति स्थानिवत्त्वाद् द्वितीयस्यैकाचो विशब्दस्य द्विर्वचनम्॥ ङवते। ङुङुवे इत्यादि गवतिवत् ॥९४८-९५१॥

६७३. च्युङ्[3] ज्युङ् प्रुङ् प्लुङ् गतौ। च्यवते। चुच्युवे। चुच्युविषे। चुच्युविढ्वे। चुच्युवे—'अचि श्नुधातु' इति उवङ्। च्योता। च्योष्यते। च्यवताम्। अच्यवत। च्यवेत। च्योषीष्ट। अचोष्ट। चुच्यूषते—'इको झल्' इति कित्त्वे 'अज्झन्' इति दीर्घः। चोच्यूयते। चोच्योति। च्यावयति। अचुच्यवत्, अचिच्यवत्—'स्रवतिशृ-णोति' इत्यादिना अभ्यासस्य वेत्वम्। च्यवनः—चलनार्थत्वात् युच्। च्योत्नम्—बाहुलकात्त्रण्॥ ज्यवते इत्यादि च्यवतिवत्। अत्र नन्दी 'जु' इत्ययकारं पठति, तत् 'जु इति सौत्रो धातुः' इति वृत्तिन्यासपदमञ्जर्यादिष्वभिधानादनार्षमिव प्रतीयते॥ प्रवते। पुप्रुवे॥ प्लवते। पुप्लुवे इत्यादि गवतिवत्। अत्र मैत्रेयः—'क्लुङ् इत्येके'। क्लवते, चुक्लुवे इत्यादि। क्लब इति विक्लब इति च बवयोरभेदाद् द्रष्टव्यम्। 'क्रुङ्' इति क्वचित्पठ्यते ॥९५२-९५५॥

६७४. रुङ् गतिरेषणयोः। रवते। रुरुवे इत्यादि गवतिवत्। रावयति। अरीरवत्—'ओः पुयण्जि' इति यणपरत्वादभ्यासस्येत्वे दीर्घः। 'रु शब्दे' इत्य-दादौ। अस्यैव निरनुबन्धकस्य 'उपसर्गे रुवः', 'विभाषा ङिरुप्लुवोः' इत्यत्र ग्रहणं वृत्त्यादौ कृतम् ॥९५६॥

---

१. क्षीरस्वामी न पठति। २. दै० २३ का०। ३. 'च्युङ् छ्युङ' इति क्षीरस्वामी।

६७५. घुङ् अवध्वंसने । घरते । दघ्रे इत्यादि धृङ्वत् ॥९५७॥

६७६. मेङ् प्रणिदाने । प्रणिदानं विनिमयः । प्रत्यर्पणमित्यपरे । अपमयते । प्रणिमयते—'नेर्गद' इति णत्वम् । तत्र 'माङ्मेङोर्ग्रहणम्' इति वृत्तिः । 'मेङ आत्वाभावेऽपि णत्वम्' इति हरदत्तः । ममे । ममिषे—'आतो लोपः' इत्याल्लोपः । माताते । मास्यते । मयताम् । अमयत । मयेत । मासीष्ट । प्रण्यमास्त—'अड्व्यवायेऽपि' इति णत्वमिष्यते । मित्सते—'सनि मीमा' इतीस् । अभ्यासस्य लोपः । 'स स्यार्द्ध-धातुके' इति तत्वम् । मेमीयते—'घुमास्था' इतीत्वम् । मामाति । मामीतः—'ई हल्यघोः' इतीत्वं हलादौ क्ङिति । अजादौ तु 'श्नाभ्यस्तयोः' इत्याल्लोपः । मापयति । अमीमपत् । मितम्—'द्यतिस्यतिमा' इतीत्वम् । अपमित्य याचते, अप-माय याचते—'न ल्यपि' इतीत्वनिषेधः । 'मयतेरिदन्यतरस्याम्' इति पक्षे इकारः । 'उदीचां माङो व्यतीहारे' इति व्यतीहारार्थादस्मात् क्त्वा । अपूर्व-कालार्थं वचनम् । याचित्वा ह्यसावपमयते । अत्र 'उदीचाम्' ग्रहणात् यथा-प्राप्तमपि भवति—याचित्वा अपमयते इति, अन्यथा येननाप्राप्तिन्यायेन अपूर्वकाल-क्त्वया पूर्वकालक्त्वो बाधः स्यात् । अपमित्य निर्वृत्तम् आपमित्यकम्—'अप-मित्ययाचिताभ्यां कक्कनौ' इति निर्वृत्ते यथासङ्ख्यादस्मात् कक् । धान्यमायः—'ह्वावामश्च' इति कर्मण्युपपदेऽणि युक् । अत्र वृत्तौ 'माङ् माने' इत्युपादाय "'गामादाग्रहणेष्वविशेषः' इति मेङोऽप्युपलक्षणम्" इति हरदत्तः ॥९५८॥

६७७. देङ् रक्षणे । दयते । दिग्ये । दिग्याते । दिग्यिषे । दिग्ये—'दयतेर्दिगि लिटि' इति दिग्यादेशे 'एरनेकाचः' इति यण् । 'दिग्यादेशेन द्विर्वचनस्य बाध-नमिष्यते' इति वृत्तिः । दाता इत्यादि । अदित । अदिथाः—'स्थाघ्वोरिच्च' इति सिचः कित्वं मित्वं च । प्रदाय—'घुमास्था' इतीत्वं 'न ल्यपि' इति निषिध्यते । शेषं मयतिवत् ॥९५९॥

६७८. श्यैङ् गतौ । श्यायते । शश्ये । शश्याते । शश्यिषे । श्याता । श्यास्यते । श्यायताम् । अश्यायत । श्यायेत । आशिषि—श्यासीष्ट । अश्यास्त । शिश्यासते । शाश्या-यते । शाश्याति । श्याययति । अशिश्ययत् । अवश्यायः । प्रतिश्यायः—'श्याद्व्यधा' इति णः । श्यैङोऽवश्यतेश्चाकारान्तत्वादेव णे सिद्धे प्रतिपदोपादनं सोपसर्गार्थ-मिति स्थितम् । शीनं मेदः, शीतो वायुः—'द्रवमूर्त्तिस्पर्शयोः श्यः' इति द्रवस्य मूर्तौ काठिन्ये स्पर्शगुणे च वर्त्तमानस्य श्यायतेर्निष्ठायां परतः संप्रसारणे 'हलः' इति दीर्घः । तत्रास्पर्शे 'श्योऽस्पर्शे' इति निष्ठानत्वम् । द्रवमूर्तिस्पर्शाभ्यामन्यत्र श्यानो वृश्चिक इति सम्प्रसारणं न भवति । निष्ठानत्वं 'संयोगादेरातः' इत्येव सिद्धम् । प्रतिशीनः—'प्रतेश्च' इति श्यैङः प्रतेः परस्य निष्ठायां सम्प्रसारणम् । 'श्योऽस्पर्शे' इत्यत्र स्पर्शग्रहणेन गुणो निषिध्यते, न तु रोग इत्यत्रापि निष्ठानत्वं भवति ।

अभिशीनः । अभिश्यानः । अवशीनः, अवश्यानः—'विभाषाभ्यवपूर्वस्य' इति श्यैङो निष्ठायां वा सम्प्रसारणम् । अत्राभ्यवाभ्यामिति वक्तव्ये पूर्वग्रहणं व्यवहितेऽपि यथा स्यादिति । तेन अभिसंशीनः, अवसंशीनः इत्याद्यपि भवति । मूर्तिस्पर्शयोः परत्वादियमेव विभाषा भवति । सर्वत्र सम्प्रसारणपक्षे स्पर्शादन्यत्र 'श्योऽस्पर्शे' इति निष्ठानत्वम् । अन्यत्र 'संयोगादेरातः' इति ॥६६०॥

६७९. प्यैङ् वृद्धौ । प्यायते । पप्ये इत्यादि श्यैवत् ॥६६१॥

६८०. त्रैङ् पालने । चौरात् त्रायते—'भीत्रार्थानां भयहेतुः' इति भयहेतोश्चौरस्यापादानत्वम् । तत्रे इत्यादि पूर्ववत् । त्राणम् , त्रातः-'नुदविद' इत्यादिना निष्ठानत्वं वा । इदं च व्यवस्थितविभाषाविज्ञानादेव त्रातः इत्यादौ न भवति ॥६६२॥

६८१. स्मिङ्प्रभृतय एतदन्ता अनुदात्ता आत्मनेभाषाः ।

६८२. पूङ् पवने । एतदादयो डयत्यन्ता उदात्ता आत्मनेपदिनः । पवते । पुपुवे । पविता । पविष्यते । पवताम् । अपवत । पवेत । पविषीष्ट । अपविष्ट । पिपविषते—'सनि ग्रहगुहोश्च' इति चकारेणोगन्तानां समुच्चयात् निषेधे प्राप्ते तदपवादः 'स्मिपूङ्' इति इट् । 'द्विर्वचनेऽचि' इति गुणावादेशयोः स्थानिवत्त्वात्पूशब्दस्य द्विर्वचने 'ओः पुयण्जि' इत्यभ्यासस्येत्वम् । पोपूयते । पोपोति । पावयति । अपीपवत् । पूत्वा, पवित्वा । पूतवान्, पवितवान् । पूतम्, पवितम्—'पूङश्च' इति क्त्वानिष्ठयोर्वेडागमः । 'पूङः क्त्वा च' इति सेटोः क्त्वानिष्ठयोर्नित्यमकित्त्वम् । 'पूङ्' इति सानुबन्धकनिर्देशात् यङ्लुकि निष्ठायां कित्त्वमेव—पोपुवितः । पोपुवितवान् इति । क्त्वायां तु 'न क्त्वा सेट्' इति कित्त्वनिषेधात् पोपवित्वा इति भवति । पवमानः–'पूङ्यजोः शानन्' इति शानन्प्रत्ययः । पोत्रम् हलस्य सूकरस्य वा मुखम्—'हलसूकरयोः पुवः' इति करणे ष्ट्रन् । तच्चेत् करणं हलसूकरयोरवयवो भवति । 'तितुत्र' इतीण्निषेधः । पवित्रं दर्भः—'पुवः सञ्ज्ञायाम्' इति करणे इत्रः । पूयतेऽनेनेति पवित्रम् ऋषिर्मन्त्रश्च । पवत इति पवित्रम् , अग्न्यादिः । 'कर्त्तरि चर्षिदेवतयोः' इति ऋषौ करणे देवतायां कर्त्तरि पवतेरित्रः । यदायमित्रः कर्त्तरि तदा नपुंसकलिङ्ग एवोदाहृतः । पूङ् क्र्यादौ, तस्यापि ष्ट्रनित्रयोर्विधौ सामान्येन ग्रहणमित्युक्तानि रूपाणि तस्यापि ॥६६३॥

६८३. मूङ् बन्धने । मवते इत्यादि पवतिवत् । मुमूषते । मूत्वा । मूतः—इत्यत्र 'श्र्युकः किति' 'सनि ग्रहगुहोश्च' इति इण्निषेधः ॥६६४॥

६८४. डीङ् विहायसा गतौ । 'विहायसां गतौ' इति क्वचित्पठ्यते । तदाकाशगमने इति पठद्भ्यां चन्द्रधनपालाभ्यां प्रत्युक्तम् । 'व्योमोरोभ्यां गमने डयते मंहते च' इति पठन् केशवस्वाम्यत्रैवानुकूलः । अयमेव पाठो मैत्रेयादीनामपि । डयते । डिड्ये । डिड्यिषे—'एरनेकाचः' इति यण् । डयिता । डयिष्यते । डयताम् । अडयत ।

डयेत । डयिषीष्ट । अडयिष्ट । डिडयिषते । डेडीयते । डेडेति । डाययति । अडीडयत् । डयित्वा । 'निष्ठा शीङ्' इत्यत्र 'निष्ठा' इति योगविभागात् डयितम् इत्यपि भवतीति पारायणे । डीन शब्दो दैवादिकस्य ॥९६५॥

९८५. पूङादयस्त्रय एते उदात्ता आत्मनेपदिनः ।

९८६. तॄ प्लवनतरणयोः ।

९८७. उदात्तः परस्मैभाषः । तरति । ततार । तेरतुः । तेरुः । तेरिथ । तेरथुः । तेर । ततार । तेरिव । तेरिम—'ऋच्छत्यॄताम्' इति गुणः, वृद्ध्या तु स्वविषये पूर्वविप्रतिषेधेनायं बाध्यते । 'तॄफलभजत्रपश्च' इति किति लिटि थलि च सेटि एत्वाभ्यासलोपौ । तरिता, तरीता । तरिष्यति, तरीष्यति—"वॄतो वा" इति इटो वा दीर्घः । वृङ्वृञ्भ्यामॄदन्ताच्च परस्येटो वा दीर्घ इति सूत्रार्थः । अत्र 'अलिटि' इत्यनुवृत्तेर्न लिटि दीर्घः । अतरत् । तरेत् । आशिषि तीर्यात्—'ऋत इद्धातोः' इति इत्वरपरत्वयोः 'हलि च' इति दीर्घः । 'इत्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन' इत्युक्तत्वात् न तयोर्विषये इत्वम् । अतारीत् । अतारिष्टाम् । अतारीः । अतारिष्म । अतारिष्ट—'वॄतः' इतीटो दीर्घः 'सिचि च परस्मैपदेषु' इति बाध्यते । तितीर्षति, तितरिषति, तितरीषति—'वॄतो वा' इत्यधिकृत्य 'इट् सनि वा' इति इटो विकल्पनात् 'सनि ग्रहगुहोश्च' इति निषेधोऽत्र न भवति । इडभावे 'इको झल्' इति सनः कित्वादगुणत्वे 'ऋतः' इति इत्वरपरत्वयोः 'हलि च' इति दीर्घः । इट्पक्षे 'वॄतः' इति दीर्घविकल्पः । तेतीर्यते । तातर्त्ति—अभ्यासस्योरदत्वे हलादिशेषे 'दीर्घोऽकितः' इति दीर्घः । 'रुग्रिकौ च' इति रुग्रिग्रीको न भवन्ति; 'ऋतश्च' इति तपरकरणेन ऋकारान्तस्याभ्यासे तद्विधानात् । तातीर्तः । तातिरति । तातर्षि । तातर्मि । तातीर्वः—अगुणविषये इत्वरपरत्वे, हल्परत्वे तु दीर्घश्च । लोटि—तातर्तु । तातर्तात् । तातीर्तम् । तातिरतु । तातीर्हि । ताताराणि । ह्यितातङी ङित्त्वादगुणः, इतीत्वादि । लङि तिप्सिपोर्हल्ङ्यादिलोपे—अतातः । अतातीर्तम् । अतातरुः—अत्र 'जुसि च' इति गुणेन परत्वादित्वं बाध्यते । तातीर्यात् । तातीर्याताम् । आशिषि सलोपाभावो विशेषः—तातीर्यास्ताम् इत्यादि । तारयति । अतीतरत् । व्यतितरते । व्यतितेरे । व्यतितरिता, व्यतितरीता । व्यतितरिष्यते, व्यतितरीष्यते । व्यतितरताम् । व्यत्यतरत । व्यतितरेत । व्यतितरिषीष्ट, व्यतितीर्षीष्ट—'लिङ्सिचोरात्मनेपदेषु' इति ऋत इटो विकल्पनात् पक्षे इट् । तस्य च दीर्घत्वम् 'न लिङि' इति निषेधान्न भवति । इडभावे 'उश्च' इति लिङ्सिचोः कित्त्वादगुणत्वे इत्वादि । लुङ्यपि पूर्ववत् सिच इडभावे कित्त्वेत्वयो व्यत्यतीर्ष्ट इति । इट्पक्षे दीर्घविकल्पे व्यत्यतरिष्ट, व्यत्यतरीष्ट इत्यादि । अयं च दीर्घविकल्पः प्रकृतस्येट इति चिण्वदिटो न भवति । तेन तारिता, तरिता, तरीता । तारिष्यते, तरिष्यते, तरीष्यते इति त्रीणि रूपाणि भवन्ति । लिङि तु शुद्धोऽपीट् पाक्षिकः, तस्य च न दीर्घ इति तारिषीष्ट, तरीषीष्ट, तरीषीष्ट इति

त्रीणि रूपाणि । लुङि तेकवचने अतारि । अन्यत्र चिण्वदिटि अतारिषाताम् । शुद्धे पुनरिटि दीर्घविकल्पनात्, अतरिषाताम्, अतरीषाताम् । अयं चेट् 'लिङसिचोरात्मनेपदेषु' इति पक्षे न भवति तदा 'उश्च' इति कित्त्वेत्वादौ अतीर्षाताम् इत्यपीति चातूरूप्यं भवति । ध्वमि तु चिण्वदिटि शुद्धेटश्च दीर्घादीर्घयोः 'विभाषेटः' इति मूर्द्धन्यविकल्पनात् अतारिध्वम्, अतारिढ्वम्; अतरिध्वम्, अतरिढ्वम्; अतरीध्वम्, अतरीढ्वम् इति षड् रूपाणि । इडभावे तु नित्ये मूर्द्धन्ये अतीढ्वंमिति आहत्य सप्त रूपाणि । रथन्तरं साम—'सञ्ज्ञायां भृतृवृजि' इति-खच् । अवतारः—'अवे तृस्त्रोर्घञ्' इति करणाधिकरणयोर्घञ् । तीर्त्वा । तीर्णः । तीर्णवान्—'श्र्युकः किति' इतीण्निषेधः । निष्ठायामित्वरपरत्वदीर्घत्वेषु 'रदाभ्याम्' इति नत्वम् । तीर्णिः—'ऋकारल्वादिभ्यःक्तिन् निष्ठावद् भवति' इति नत्वम् । तरुणः—'कृवृतृदारिभ्य उनन्' इति उनन् प्रत्ययः । कवयस्तु तरुणिमा इतीमनिचं प्रयुञ्जते । नास्य लक्षणमस्ति । तरुणी—'वयसि प्रथमे' इति ङीप् । तलुनी सुरा—'कपिलकादीनां सञ्ज्ञाछन्दसोर्वा रो लत्वमापद्यते'इति लत्वम्, 'नञ्स्नञ्वीकक्तरुणतलुनानामुपसङ्ख्यानम्' इति ङीप् । नञ्स्नञ्वीकः प्रत्ययाः, इतरे प्रातिपदिके । तरुः—'भृमृशि' इत्यादिनोप्रत्ययः । तालु—'त्रो रश्च लः' इति ञुण्प्रत्यये रेफस्य च लत्वम् । तीर्थम्—'पातृतुदि' इत्यादिना क्थे ऋत इत्वादि । तर्षं उत्साहः सूर्योऽभिलाषश्च—'पातृवदि' इत्यादिना सः । तरणिः—'अर्त्तिसृ' इत्यादिना अनिप्रत्ययः ॥९६६॥

६८८. गुप गोपने ।

६८९. तिज निशाने[1] ।

६९०. मान पूजायाम् ।

६९१. बध बन्धने ।

गुप गोपनकुत्सनयोरिति मैत्रेयः । एते च गुपादयः 'गुप्तिज्किद्भ्यः सन्' 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' इति नित्यसन्नन्ताः । तथा च भाष्यम्—'नैतेभ्यः प्राक् सन आत्मनेपदम्, नापि परस्मैपदं पश्यामः' इति । तथा च 'पूर्ववत्सनः' इत्यत्र वार्त्तिकम्—पूर्वस्यात्मनेपददर्शनात् । सनन्तादात्मनेपदमिति चेत् गुपादिष्वप्रसिद्धिः' इति । 'अयं च सन् गुपेर्निन्दायाम् तिजेः क्षमायाम्, बन्धेर्वैरूप्ये' इति वृत्तावुक्तत्वात् अत्रापठितेष्वर्थेषु न च सन् अस्ति, न चैषां केवलानां पठितेष्वर्थेषु प्रयोगः; पूर्वोक्तभाष्यवार्त्तिकविरोधात् । किञ्च भाष्येऽनुबन्धकरणसामर्थ्यात् 'अवयवेऽकृतं लिङ्गं समुदायस्य विशेषकं भवति' इति सन्नन्तादात्म-

---

१. 'क्षमायाञ्च' इत्यधिकं पठति क्षीरस्वामी ।

नेपदसमर्थनं च विरुध्येत। तथा निन्दादेरन्यत्र केवलानां गुपादीनां प्रयोगे तत्रै-वानुबन्धासञ्जनस्यात्मनेपदार्थत्वेन चरितार्थत्वात् कथं सामर्थ्यं कथं वा कृतत्वम्! एवं च 'गोपते, तेजते' इति स्वाम्युक्तः केवलात् तिङः प्रयोगः प्रत्युक्तः। अत्र नन्दिमैत्रेयौ 'नह्येतेभ्यः' इत्यादिना भाष्येण तिङामभावः प्रतीयते, इति निन्दादेर-न्यत्र कृतमुदाजह्रतुः। हरदत्तस्त्वेतन्नानुमन्यते; यदाह—'पूर्ववत्सनः' इत्यत्र—"कथं तर्हि जुगुप्सादेः समुदायस्यानुदात्तेत्त्वमत आह—अवयव इति। अवयवे ह्यचरितार्थं लिङ्गं सामर्थ्यात्समुदायस्य विशेषकं भवति। यद्येवं गोपयति तेजयति इत्यादावपि प्रसङ्गः। अथ यं समुदायं योऽवयवो न व्यभिचरति तत्र कृतं लिङ्गं तस्य विशेषकं भवति, णिजन्तं च व्यभिचरति; विनापि तेन जुगुप्सते इति गुपेः प्रयोगादित्युच्येत। यद्येवम्, सन्नन्तादपि न स्यात्; विनापि तेन गोपयतीति गुपेः प्रयोगात्। वक्तव्यो वा विशेषः। अयमुच्यते—गुप गोपने इत्यस्य सन्विधौ ग्रहणम्, तस्माच्च नित्यः सन्नेव भवति नापरः प्रत्ययः। गोपयतीत्यादिकस्तु प्रयोगो 'गुप रक्षणे' इत्यस्य, स चान्य एव। अवश्यं चैतदेवं विज्ञेयम्—अन्य एव सन्प्रकृति-स्तस्माच्च सनेव भवतीति; अन्यथा निन्दाया अन्यत्र यथा णिज्भवति तथा लङा-दिरपि स्यात्। एवं तिजिप्रभृतयोऽपि क्षमाद्यर्थे यत्र सन्निष्यते तत्रानुदात्तेतो नित्य-सन्नन्ताश्च। क्षमादिभ्योऽन्यत्र तु यत्र णिजिष्यते तत्राननुबन्धका एव चुरादौ पठितव्याः" इति। अत्रैव मते 'अवयवेऽकृतं लिङ्गम्' इति भाष्योपपत्तिः। यदि हि कृतः स्युस्तर्हि अनुदात्तेत्त्वं युजर्थं स्याद् इति कथमकृतार्थत्वोक्तिः! अथोदा-हरणानि—जुगुप्सते। जुगुप्साञ्चक्रे। जुगुप्सिता। जुगुप्सिष्यते। जुगुप्सताम्। अजुगुप्सत। जुगुप्सेत। जुगुप्सिषीष्ट। अजुगुप्सिष्ट—अत्रास्य सनो धातुसंशब्दनेनाविधानादार्धधातु-कत्वान्नेड्गुणौ॥ एवं तितिक्षते इत्यादि। मीमांसते इत्यादौ—'मान्बध' इत्यभ्यासस्य दीर्घः। अयं च 'अभ्यासविकारेष्वपवादा नोत्सर्गान्विधीन् बाधन्ते' इति अभ्यास-स्य हलादिशेषह्रस्वादिषु कृतेष्वेव॥ एवं बीभत्सते इत्यादावपि। अत्र 'एकाचो बशः' इति बकारस्य भकारः। धकारस्य 'खरि च' इति चर्त्वे तकारः। गोपायतीति रक्षणे गतम्॥९६७-९७०॥

९९२. गुपादयश्चत्वार एतेऽनुदात्तेतः।

९९३. रभ राभस्ये। राभस्यमुपक्रमः। एतदादयो हदत्यन्ता अनुदात्ता अनुदात्तेतः। आरभते। आरेभे। आरेभिषे। आरेभिवहे। क्रादिनियमादिट्। एत्वा-भ्यासलोपौ। आरब्ध—'झषस्तथोः' इति धत्वे 'झलां जश् झशि' इति जश्त्वं भकारस्य बकारः। आरप्स्यते—'खरि च' इति चर्त्वम्। आरभताम्। आरभत। आशिषि-आरप्सीष्ट। आरब्ध-सिज्लोपधत्वजश्त्वे। आरिप्सते-'सनि मीमा' इत्या-दिना अच इस्। 'स्कोः' इति सलोपः। 'अत्र लोपः' इत्यभ्यासलोपः—आरारम्यते। आरारम्भीति, आरारब्धि। ईटपक्षे 'रभेरशब्लिटोः' शब्लिड्भ्यामन्यत्राजादौ

नुम्विधानान्नुमि अनुस्वारपरसवर्णौ। आरारब्धः। आरारभति—अत्राद्भावेऽजादित्वात् कृतस्य नुमः 'अनिदिताम्' इति नलोपः। आरारम्भाणि। आरारम्भाव। आरारम्भाम। आट्यजादित्वान्नुम्, पित्त्वान्नलोपाभावः। लङि तिप्सिपोर्हल्ङ्याादिलोपे जश्त्वचर्त्वयोः—आरारप्। आरम्भयति। आररम्भत्। अत्र परामपि वृद्धिं नित्यत्वान्नुम् बाधते। आरम्भः। आरम्भणम्—अजादित्वान्नुम्। रम्भा—पचाद्यचि टाप्। रभसः—'अत्यवि' इत्यादिनाऽसच्। बाहुलकान्नुमभावः। राभस्ये इति निपातनाद् वा ॥९७१॥

९९४. डुलभष् प्राप्तौ। लभते इत्यादि सर्वं रभतिवत्। अस्यापि शब्लिड्वर्जिते अजादौ 'लभेश्च' इति नुम्। आलम्भ्या गौः—'आङो यि' इति आङ्पूर्वाल्लभेर्यकारादौ नुम्। अत्र यीत्यस्य विषयसप्तमीत्वात् प्रागेव प्रत्ययोत्पत्तेः पूर्वं नुमि अदुपधत्वाभावात् 'पोरदुपधात्' इति यन्नेति ण्यद् भवति। ण्यद्यतोश्च स्वरे विशेषः। ण्यति 'गतिकारकोपपदात् कृत्' इति कृदन्तोत्तरपदप्रकृतिस्वरः 'तित्स्वरितम्' इति स्वरितत्वं भवति। यति तु उत्तरपदप्रकृतिस्वरत्वेन 'यतोऽनावः' इति यदन्तं द्व्यच्कमाद्युदात्तं स्यात्। अत्र च विषयसप्तमीत्वम् 'इदितो नुम् धातो' इत्यतः धातोरित्यनुवृत्त्या भाष्ये प्रतिपादितम्। उपलम्भ्या विद्या—'उपात् प्रशंसायाम्' इति लभेर्यकारादौ विषये नुम्। अत्र धात्वर्थस्य प्राप्तेः प्रशंसापादनद्वारेण वा प्राप्यमाणद्वारेण वा प्रशंसाया अन्यत्र नुमभावात् 'पोरदुपधात्' इति यति 'उपलभ्यमस्मात् वृपलान्न किञ्चिद्' इति भवति। अत्रापि ण्यद्यतोः स्वरे विशेषः। ईषत्प्रलम्भः। सुप्रलम्भः—'उपसर्गात्खल्घञोः' इति नुम्। 'लभेश्च' इति सिद्धे वचनमिदं नियमार्थम् 'खल्घञोरजाद्योर्यदि भवति उपसर्गात् परस्यैव' इति। तेन ईषल्लभः, लाभः इत्यत्र नुम् न भवति। सुलभः, दुर्लभः, सुलाभः, दुर्लाभः इत्यत्र तु उपसर्गात्परत्वेऽपि 'न सुदुर्भ्यां केवलाभ्याम्' इति नुम्निषेधः। अत्र केवलशब्दश्शब्दोपात्ताभ्यां सुदुर्भ्यामन्यस्य सजातीयोपसर्गस्याभावमाह। तेन सुदुर्भ्यामन्योपसर्गरहितस्य लभेः खल्घञोर्नुम्न भवतीति सूत्रार्थः। उपसर्गान्तरयोगे तु अतिसुलम्भ इति नुम् भवत्येव। सुदुर्लभम्, अतिसुलभम्, सुदुर्लभः, अतिदुर्लभः—इति प्रयोगास्तु 'सुः पूजायाम्', 'अतिरतिक्रमणे च' इति स्वत्योः कर्मप्रवचनीयत्वे द्रष्टव्याः। अतिक्रमणं फलप्राप्तावपि क्रियानुपरतिः। उक्तेषु सर्वेषूदाहरणेषु खल्घञोर्न बाधः; विषयभेदात् कर्मणि खल्, भावे तु घञ् इति। यद्वा—सुरत्र क्षेपे; यथा—'सुषिक्तं किं तवात्र' इति। दुर्निन्दायां यथा—'दुर्ब्राह्मणः' इति। तेन कृच्छ्राकृच्छ्रार्थत्वाभावात् खलभावः। अलाभि, अलम्भि। लाभंलाभं, लम्भंलम्भम्—'विभाषा चिण्णमुलोः' इति लभेर्नुम्विकल्पः। व्यवस्थितविभाषाविज्ञानात् सोपसर्गस्य नित्यं नुम् भवति—प्रालम्भि, प्रलम्भंप्रलम्भम् इति। लाभेन निर्वृत्तं लब्धिमम्—'ड्वितः क्त्रिः' 'क्त्रेर्मम्नित्यम्' इति मप्। षित्त्वादङ्—

लभा । लब्धिः—'क्तिन्नाबादिभ्यः' इति क्तिन् ॥९७२॥

६६५. ष्वञ्ज परिष्वङ्गे । स्वजते—'दंशसञ्जस्वञ्जां शपि' इति अनुनासिकलोपः । सस्वजे, सस्वञ्जे । सस्वजिषे, सस्वञ्जिषे—'इन्धिभवतिभ्याञ्च' इत्यत्र 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां वेति वक्तव्यम्' इति लिटः कित्त्वविकल्पनात् पक्षेऽनुनासिकलोपः । तथा च 'सदिस्वञ्ज्योः' इत्यत्र वृत्तितद्व्याख्यानेषु स्वञ्जेः संयोगान्तादपि लिटो विभाषा कित्त्वमिच्छन्तीति । स्वङ्क्ता । स्वङ्क्ष्यते । स्वजताम् । अस्वजत । स्वजेत । स्वङ्क्षीष्ट । अस्वङ्क्त । सिस्वङ्क्षते—'स्तौतिण्योरेव' इत्यषत्वम् । सास्वज्यते । सास्वजीति, सास्वङ्क्ति । सास्वक्तः । सास्वजति । लोटि हौ सास्वग्धि । लङि तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे च—असास्वन् । स्वञ्जयति । असस्वञ्जत् । प्रतिष्वजते—'उपसर्गात्सुनोति' इत्यादिना षत्वम् । प्रत्यष्वङ्क्त—'प्राक्सितादड्व्यवायेऽपि' इति षत्वम् । परिष्वजते । निष्वजते । विष्वजते—'परिनिविभ्यः' इत्यादिना षत्वम् । 'उपसर्गात्सुनोति' इत्यादिनैव सिद्धे स्तुस्वञ्ज्योरुपादानम् 'सिवादीनां वाड्व्यवायेऽपि' इति परिनिविभ्यः परत्वे अड्व्यवाये सिवादित्वादनयोः षत्वविकल्पो यथा स्यादिति । तेन पर्यष्वजत, पर्यस्वजत इत्याद्युभयं भवति । प्रतिषस्वजे, प्रतिषस्वञ्जे इत्यादौ 'स्थादिष्वभ्यासेन' इत्यभ्यासात्परस्य प्राप्तं षत्वं 'सदिष्वञ्ज्योः परस्य लिटि' इति निवार्यते ॥९७३॥

६६६. हद पुरीषोत्सर्गे । हदते । जहदे । जहदिषे । हत्ता । हत्स्यते । हदताम् । अहदत । हदेत । हत्सीष्ट । अहत्त ॥ जिहत्सते । जाहद्यते । जाहदीति, जाहत्ति । हादयति । अजीहदत् । हत्त्वा । हन्नः—'रदाभ्याम्' इति नत्वम् ॥९७४॥

६६७. रमादयश्चत्वारोऽनुदात्ता अनुदात्तेतः । नन्दी तु हदिं विभाषानुदात्तेतमाह ।

६६८. ञिक्ष्विदा अव्यक्ते शब्दे ।

६६९. अयमुदात्त उदात्तेत् । क्ष्वेदति । चिक्ष्वेद । चिक्ष्वेदिथ । चिक्ष्विदिव । तासौ नित्यानिटो भारद्वाजनियम इत्युक्तम् । क्ष्वेदिता । क्ष्वेदिष्यति । क्ष्वेदतु । अक्ष्वेदत् । क्ष्वेदेत् । क्ष्विद्यात् । अक्ष्वेदीत् । चिक्ष्विदिषति, चिक्ष्वेदिषति—'रलो व्युपधात्' इति कित्त्वविकल्पः । चेक्ष्विद्यते । चेक्ष्वेत्ति । क्ष्वेदयति । अचिक्ष्विदत् । क्ष्विदित्वा, क्ष्वेदित्वा । क्ष्विण्णः—'ञीतः क्तः' इति वर्त्तमाने क्तः, 'आदितश्च' इति इडभावः । 'रदाभ्याम्' इति निष्ठानत्वम् । क्ष्विण्णमनेन, क्ष्वेदितमनेन । प्रक्ष्विण्णः, प्रक्ष्वेदितः—'विभाषा भावादिकर्मणोः' इतीड्विकल्पः । 'निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः' इति सेटो निष्ठाया अकित्त्वात् गुणः । 'ञिक्ष्विदा स्नेहनमोचनयोः' इति दिवादौ ॥९७५॥

६६९. स्कन्दिर् गतिशोषणयोः[1] । इतो मिहान्ता उदात्तेतोऽनुदात्ताः । स्कन्दति ।

---

१. 'शोषणे' इति क्षीरस्वामी ।

चस्कन्द । चस्कन्दिथ, चस्कन्थ । चस्कन्दिव । क्रादिनियमादिट् । थलि भारद्वाज-नियमाद् विकल्पः । स्कन्ता । स्कन्त्स्यति । स्कन्दतु । अस्कन्दत् । स्कन्देत् । स्कद्यात्—'किदाशिषि' इति कित्त्वात् 'अनिदिताम्' इति नलोपः । अस्कदत् । अस्कदताम्—'इरितो वा' इति वाङि नलोपः । अङोऽभावे—अस्कान्त्सीत् । अस्कान्ताम् । अस्कान्त्सुः । 'वदव्रज' इति वृद्धिः । झलादौ—'झलो झलि' इति सिज्लोपः । चिस्कन्त्सति । चनी-स्कद्यते—'नीग्वञ्चु' इत्यादिना नीक् । चनीस्कन्दीति, चनीस्कन्ति । चनीस्कत्तः । चनीस्क-दति । स्कन्दयति । अचस्कन्दत् । गेहावस्कन्दमास्ते —'विशिपति' इत्यादिना णमुल् । तृतीयाप्रभृतित्वाद्वा समासः । तेनैवोक्तत्वात् 'नित्यवीप्सयोः' इति न द्विर्वचनम् । असमासे वीप्सायां द्रव्यवचनस्य द्विर्वचनम् । नित्यत्वे क्रियावचनस्येति गेहंगेह-मवस्कन्दम्, गेहमवस्कन्दमवस्कन्दम् इति । 'क्रियाभेदे क्त्वापीष्यते' इत्युक्तत्वात् गेहंगेहमवस्कन्द्य इत्याद्यपि भवति । विष्कन्ता, विस्कन्ता—'वेः स्कन्देरनिष्ठायाम्' इति वा षत्वम् । 'अनिष्ठायाम्' इति पर्युदासे नञिवयुक्तन्यायेन कृत्येवायं विकल्पः । तथा वृत्तिकारेणापि पर्युदासो व्याख्यातः, कृतश्चोदाहृताः । निष्ठायाम्—विस्कन्नः—'रदाभ्याम्' इति निष्ठानत्वम् । परिष्कन्ता, परिस्कन्ता—'परेश्च' इति वा षत्वम् । 'पृथग्योगकरणात् अनिष्ठायामिति नानुवर्त्तते' इति वृत्तिः, तेन परिष्कण्णः परिस्कन्नः इति भवति । अत एव पर्युदासाभावात् नञिवयुक्तन्यायो नास्तीति तिङ्यपि भवत्येव विकल्पः—परिष्कन्दति, परिस्कन्दति इति । परिस्कन्दः—'परिस्कन्दः प्राच्यभरतेषु' इत्यषत्वम्, अस्य प्रयोगस्य प्राच्यभरतविषयत्वे । स्कन्त्वा । प्रस्कन्द्य—'क्त्वि स्कन्दिस्यन्दोः' इति नलोपाभावः । उत्कन्दो नाम रोगः—'उदः स्थास्तम्भोः' इत्यत्र 'रोगे चेति वक्तव्यम्' इति वचनात् स्कन्देः सकारस्य पूर्वसवर्णस्तकारो भवति ॥९७६॥

७००. यभ विपरीतमैथुने । 'विपरीत इति विपरीतानुष्ठित इत्यर्थः'[1] इति मैत्रेयः । पुरुषकारे तु 'यभ विपरीतो मैथुने इति विपरीत इति यभेरर्थः' इति । क्वचित्पठ्यते 'यभ मैथुने' इति । यभति । ययाभ । येभतुः । येभिथ, ययब्ध । येभिव — क्रादिनियमा-न्नित्यमिट् । थलि भारद्वाजनियमाद् विकल्पः । यब्धा । यप्स्यति । यभतु । अयभत् । यभेत् । यभ्यात् । अयाप्सीत् । अयाब्धाम् । यियप्सति । यायभ्यते । यायब्धि । याभयति । अयीयभत् । यब्ध्वा । यब्धम् । यभ्यम्—'पोरदुपधात्' इति यत् । 'जभेत्येके' इति मैत्रेयः । 'जभ च' इति धनपालकाश्यपौ । 'जप जभ' इति शाकटायनः । तत्र जभेः पाठो न्यासपदमञ्जरीकृतोरनभिमतः । सति ह्यस्मिन् 'लुपसदचरजपजभ-दहदशभञ्जपशां च', 'रधिजभोरचि' इत्यादौ जभजृम्भीतिवदमुमप्युपाददीयाताम् । किञ्च इह जभेःपाठेऽनेनाप्यनिटा भाव्यत्वात्, 'रभिश्च भान्तेष्वथ मैथुने यभि-

---

१. दै०, पृ० ११ ।

स्ततस्तृतीयो लभिरेव नेतरः' इति व्याघ्रभूतिवचनेनापि विरोधः स्यात्। तृतीयश्च यभिरेव, तत्र वृत्तौ 'यब्धा'इत्युदाहरणात्। जम्भत इति गात्रविनामे गतः ॥६७७॥

७०१. णम प्रह्वत्वे शब्दे[1]। नमति। ननाम। नेमतुः। नेमिथ, ननन्थ। नन्ता। नंस्यति। नमतु। अनमत्। नमेत्। नम्यात्। अनंसीत्। अनंसिष्टाम्—'यमरमनमाताम्' इति सगिटौ परस्मैपदे। निनंसति। नंनंस्यते। नंनमीति, नंनन्ति। नंनन्तः। नंनमति। नन्नन्वः, नन्नन्मः—'म्वोश्च' इति मकारस्य नत्वम्। लङि अनंनन्। अनन्नताम्—'मो नो धातोः' इति पदान्ते नत्वम्। नमयति, नामयति—'ज्वलह्वलह्मलनमामनुपसर्गाद्वा' इति मित्त्वविकल्पः। सोपसर्गात्तु अमन्तत्वान्नित्यं मित्त्वम्—प्रणयमति। 'उपसर्गादसमासेऽपि' इति णत्वम्। अनीनमत्। नमते दण्डः स्वयमेव। अनंस्त दण्डः स्वयमेव—'न दुहस्नुनमाम्' इति यक्चिणोर्निषेधः। नम्रः—'नमिकम्पि' इति रः। नेमिः—'भाषायां धाञ्कृसृगमिजनिनमिभ्यः' इति किकिनोरन्यतरः। तस्य लिड्वद्भावादेत्वाभ्यासलोपौ। नतम्—'अनुदात्तोपदेश' इत्यनुनासिकलोपः। प्रणत्य, प्रणम्य—'वा ल्यपि' इत्यनुनासिकलोपविकल्पः। नृन् नमयतीति नृनमो नाम कश्चित्—'क्षुभ्नादिषु च' इति पाठाण्णत्वाभावः। नमः—असुन्। नमस्यति देवान्। पूजयतीत्यर्थः—'नमोवरिवश्चित्रङः' इति क्यच्। 'नमसः पूजायाम्' इति तत्र वृत्तिः। नमस्कृत्य, नमस्कृत्वा—'साक्षात्प्रभृतीनि च' इति कृञो योगे पक्षे गतिसंज्ञा, गतित्वे 'कुगतिप्रादयः' इति समासः। 'नमस्पुरसोर्गत्योः' इति विसर्जनीयस्य सत्वं च। नमो देवेभ्यः—'नमस्स्वस्तिस्वाहास्वधालंवषड्योगाच्च' इति नमोयुक्ताच्चतुर्थी। नाकुः वल्मीकः—'फलपाटिनमि' इत्यादिना उप्रत्ययो नाकादेशश्च। नप्ता—'नप्तृनेष्टृ' इत्यादिना तृनि मकारस्य पकारो निपात्यते। नप्तारौ इत्यादौ असम्बुद्धौ सर्वनामस्थाने 'अप्तृन्' इत्यादिना उपधादीर्घः ॥६७८॥

७०२. गम्लृ सृप्लृ गतौ। गच्छति—'इषुगमियमां छः' इति इत्संज्ञकशकारादौ शपि छः। 'छे च'इति तुक्। जगाम। जग्मतुः। जगन्थ, जगमिथ। जग्मिव। जग्मिम—क्रादिनियमादिट्। थलि भारद्वाजनियमाद् विकल्पः। ङितोरजाद्योः 'गमहन' इत्युपधालोपे तस्य 'द्विर्वचनेऽचि'इति स्थानिवत्त्वाद् द्वित्वम्। गन्ता। गमिष्यति—'गमेरिट् परस्मैपदेषु'इति सकारादेरिट्। गच्छतु। अगच्छत्। गच्छेत्। आशिषि—गम्यात्। अगमत्—लृदित्वाद् अङ्। 'गमहन' इत्यत्रानङिति पर्युदासात् नोपधालोपः। जिगमिषति। जिगमिष त्वम्—इत्यत्र हेर्लुका लुप्तत्वात् परस्मैपदाभावे भाष्यवार्त्तिकयोः 'सिद्धं तु गमेरात्मनेपदेन समानपदस्थस्येटः प्रतिषेधात्' इति न्यासान्तरेण आत्मनेपदेन समानपदस्थस्य गमेः सकारादेरिण्निषेधात् इड् भवति। एवं जिगमिषिता इत्यादौ कृत्यपीट् भवति। इदं च भाष्यं वार्त्तिकं च

1. क्षीरस्वामी न पठति।

आत्मनेपदेऽपीण्निषेधे सिद्ध एवारभ्यमाणमर्थादन्यत्रेटं बोधयति। अत एव भाष्यवार्त्तिकविरोधात् 'गमेरिट्' इत्यत्र परस्मैपदग्रहणं गम्युपलक्षणार्थम्। परस्मैपदेषु यो गमिर्निर्दिष्ट इति पदशेषकारदर्शनमुपेक्ष्यम्। वृत्तावयं पक्षः प्रतिक्षेपार्थमेव उपक्षिप्तः। यदाह तत्र हरदत्तः—'न पुनरयं पक्षः स्थापितो भाष्यवार्त्तिकविरोधाद्' इति। कः पुनरत्र फलभेदः? उच्यते, सम्पूर्वस्याकर्मकस्य गमेः 'समो गम्यृच्छि' इत्यात्मनेपदित्वात् परस्मैपदेष्वदर्शनात् संजिगमिषिता इत्यादौ इण्न स्यात्। तथा जिगमिषाञ्चक्रे इत्यत्र भावकर्मविषयस्य गमेः परस्मैपदेष्वदर्शनात् इण्न स्यात्। अथ मतम्—'परस्मैपदेषु दृष्ट एव गमिः उपसर्गादिवशेनाऽऽत्मनेपदेऽपीति इड्भविष्यति' इति; तर्ह्यस्य गमेः सर्वत्रेट् स्यात्, 'गंस्यते स स्त्रियः' इति भाष्यप्रयोगश्च विरुध्यते। कथं तर्ह्यात्मनेपदेन समानपदस्थस्येण्निषेधे जिगमिषितेवाचरति जिगमिषितीयते इति हरदत्तादयः? बहिरङ्गस्य आत्मनेपदस्य प्रतिषेधाभाव इति। अयं च प्रकारोऽस्माभिः क्रमतावुपपादितः[2]। जङ्गम्यते—'नित्यं कौटिल्ये गतौ' इति गतिवचनत्वात् कौटिल्ये एव यङ्। 'नुगतः' इत्यभ्यासस्य नुक्यनुस्वारपरसवर्णौ। जङ्गमीति, जङ्गन्ति। जङ्गतः—'अनुदात्तोपदेश' इत्यनुनासिकलोपः। जङ्गमति—प्रकृतिग्रहणन्यायेन 'गहमन' इत्युपधालोपः। जङ्गन्मि। जङ्गन्वः—'म्वोश्च' इति नत्वम्। जङ्गहि इत्यत्रानुनासिकलोपे तस्य 'असिद्धवदत्र' इत्यसिद्धत्वात् 'अतो हेः' इति लुग् न भवति। अत्र सुधाकरः—"अनुदात्तोपदेशा यम्यादय इति यम्यादेर्गणत्वेन निर्देशात् 'निर्दिष्टं यद्गणेन च' इत्यनुनासिकलोपाभावमुक्त्वा यदा धातुपाठ एव गणस्तदा भवितव्यमेव लोपेन" इत्याह 'हन्तेर्जः' इत्यत्र जङ्गहीत्युदाहरणे। न्यासकारोऽपि व्याख्यातृनिर्देशेन गणिनिर्देशं नानुमन्यते। अत एव न्यासकारसुधाकरविरोधात् 'श्तिपा शपा' इत्यत्र 'यत्रोपदेशग्रहणम्' इति यः क्वचित्पाठः स उपेक्ष्यः। अजङ्गन्—'मो नो धातोः' इति नत्वम्। गमयति। अजीगमत् ग्रामं देवदत्तं यज्ञदत्तः, ग्रामायेति वा—'गतिबुद्धि' इति प्रयोज्यस्य कर्मत्वम्, अत्र 'गत्यर्थकर्मणि' इति ग्रामाद् द्वितीयाचतुर्थ्यौ। ग्रामश्चात्र गमेरेव कर्म, यतो ग्रामकर्मिकायां गतौ प्रेष्यते ग्रामं गच्छेति; प्रयोज्यस्तु ण्यन्तस्य कर्म, न गमेरिति न तत्र चतुर्थी भवति। अत्र कर्मणि लादयो 'ण्यन्ते कर्तुश्च कर्मणः' इत्यभिधानात् प्रयोज्ये भवन्ति। गम्यते ग्रामं देवदत्तः, गमयितव्य इत्यादि, अत्र कृद्योगलक्षणा षष्ठी 'गत्यर्थकर्मणि' इत्यत्र चतुर्थी चेति वक्तव्ये द्वितीयाग्रहणात् बाध्यते। यद्वा—'कृत्यानाम्' इत्यत्र योगविभागेन 'उभयप्राप्तौ कृत्ये षष्ठी न' इत्युक्तत्वात् कर्तृवत् कर्मण्यपि षष्ठ्या नैव प्रसङ्गः। ग्रामं गन्ता गमयिता इत्यादौ तु पुनर्द्वितीयाग्रहणादेव षष्ठ्या बाधः। अत्र 'अनध्वनि' इति पर्युदासात् अध्ववचनेभ्यो यथायोगं द्वितीयाषष्ठ्यावेव भवतः—अध्वानं गच्छति, पन्थानं

---

१. 'पुरुषकार०' क. पुस्तके। २. प्रकारोऽयं पूर्वं १३६-१३७पृष्ठयोरवलोकनीयः।

गच्छति, अध्वनो गन्ता, पथो गन्ता इति। अयं च 'अनध्वनि' इति प्रतिषेधः 'आस्थितप्रतिषेधश्चायं विज्ञेयः' इति वृत्तावुक्तत्वात् आस्थितविषयः। आस्थितः प्रथममेव स्वीकृतः। तेन यदोत्पथेन पन्थानं गच्छति तदा ग्रामादिवत् द्वितीयाचतुर्थ्यौ द्वे अप्युदाहार्ये, द्वितीयया षष्ठ्या बाधोऽपि। चेष्टाग्रहणं मनसा पाटलिपुत्रं गच्छति इत्यादौ चतुर्थीनिवृत्त्यर्थम्। आगमयते माणवकः, कालं हरति न त्वरते इत्यर्थः। 'आगमेः क्षमायामात्मनेपदं वक्तव्यम्' इति ण्यन्तात्तङ्। क्षमा उपेक्षा, कालहरणमिति वृत्तिः। ण्यन्त एवायमत्रार्थे च वर्त्तते इति तस्यैवोदाहरणम्। सङ्गच्छते — 'समो गम्यृच्छि' इत्यकर्मकात् सङ्गमेः तङ्। सञ्जग्मे। सञ्जग्माते — 'गमहन' इत्युपधालोपः। सङ्गन्ता। सङ्गंस्यते। सङ्गच्छताम्। समगच्छत। सङ्गच्छेत। आशिषि — संङ्गंसीष्ट. संङ्गसीष्ट। लुङि — समगत, समगंस्त। समगंसाताम् — 'वा गम' इति झलाद्योर्लिङ्सिचोरात्मनेपदविषययोर्वा कित्त्वे तदाश्रयः 'अनुदात्तोपदेश' इत्यनुनासिकलोपः। झलि 'ह्रस्वादङ्गात्' इति सिज्लोपः। न चास्मात् पूर्वम् 'अतो लोपः' इत्यल्लोपस्य प्रसङ्गः; आर्द्धधातुकोपदेशेऽनकारान्तत्वात् 'असिद्धवदत्र' इत्यनुनासिकलोपस्यासिद्धत्वाद्वा, सर्वत्र गमेरात्मनेपदेन समानपदस्थत्वात् सकारादेरिडभावः। सञ्जिगंसते — 'अज्झन' इति दीर्घो न भवति; अत्र आदेशस्य गमेर्ग्रहणात्। यत्तु-तरङ्गिण्यां दीर्घप्रदर्शनम्, तद् 'गमेर्दीर्घे इङ्ग्रहणम्, अग्रहणे ह्यनादेशस्यापि दीर्घत्वप्रसङ्गः' इति वार्त्तिकविरोधादुपेक्ष्यम्। गम्यम् — 'पोरदुपधात्' इति यत्। सुतङ्गमो नाम कश्चित् — 'गमश्च' इति सुप्युपपदे संज्ञायां खच्, 'अरुर्द्विषदजन्तस्य मुम्' इति पूर्वपदस्य मुम्। सुतङ्गमेन निर्वृत्तः सौतङ्गमिः — 'वुञ्छणकठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः' इति यथासङ्ख्यात् सुतङ्गमादेश्चातुरर्थिक इञ्। अन्तगः — 'अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः' इति अन्तादिषु कर्मसूपपदेषु गमेर्डः। डित्त्वसामर्थ्यादभत्वेऽपि टिलोपः। एवम् — अत्यन्तग इत्युदाहार्यम्। सर्वत्रगः। पन्नगः — 'सर्वत्रपन्नयोरुपसङ्ख्यानम्' इति डः। उरसा गच्छतीति उरगः — 'उरसो लोपश्च' इति डप्रत्ययः, उरसः सलोपश्च। सुखेन गच्छन्त्यस्मिन्निति सुगः। दुर्गः — सुदुरोरधिकरणे' इति डः। अत्र न्यासे — वासरूपविधिना पक्षे ल्युडप्युक्तः, तदयुक्तम्; 'क्तल्युट्तुमुन्खलर्थेषु वासरूपविधेः प्रतिषेधः' इत्युक्तत्वात्। अधिकरणादन्यत्र सुगमः इति खलेव भवति। निर्गच्छन्त्यत्रेति निर्गो देशः — 'निसो देशे' इति डः। देशादन्यत्र निर्गमनम् इति ल्युड् भवति। ग्रामगः — 'डोऽन्यत्रापि दृश्यते' इति डः। मितं गच्छतीति मितङ्गमो हस्ती — 'खच्प्रकरणे गमेः सुप्युपसङ्ख्यानम्' इति खच्। विहङ्गमः — 'विहायसो विह च' इति खचि विहायसश्च विहादेशे मुमागमः। विहङ्गः — 'खश्च डिद्वा वक्तव्यः' इति खचो वा डित्त्वाट्टिलोपः। विहगः —

'डे च विहायसो विहादेशः' इति विहादेशः। अस्मादेवानुवादात् 'डोऽन्यत्रापि दृश्यते' इति वा डः। गामुकः—'लषपत' इत्यादिना उकञ्। गत्वरः—'गत्वरश्च' इति क्वरपि अनुनासिकलोपो निपात्यते। गत्वरी—'टिड्ढाणञ्' इत्यादिना ङीप्। जग्मिः—'भाषायां धाञ्कृसृगमि' इति किकिनोरन्यतरस्मिन् उपधालोपः, लिड्वद्भावात् द्विर्वचनम्। जगत्—'द्युतिगमिजुहोतीनां द्वे च' इति द्विर्वचनम्। 'गमः क्वौ' इत्यनुनासिकलोपः। स्त्रियाम्—'वर्त्तमाने पृषद्बृहन्महज्जगत्सरसां शतृवच्च' इति शतृवद्भावान्ङीष्। उत्सादिषु जगतीति पाठाद्वा। जगत्या अपत्यादि जागतम्—'उत्सादिभ्योऽञ्' इति प्राग्दीव्यतीयोऽञ्प्रत्ययः। जगत इदं जागतम् इत्यत्र 'अन्नामादेरचो वृद्ध्या उपधालक्षणा वृद्धिर्बाध्यते' इति वृत्तिः। जगत्येव जागतं छन्दः—'छन्दसः प्रत्ययविधाने नपुंसके स्वार्थे उपसङ्ख्यानम्' इत्यञ्। अध्वगत्। कलिङ्गगत्—'अन्येभ्योऽपि दृश्यते' इति क्विपि अनुनासिकलोपः। अग्रे गच्छतीति अग्रेगूः—'ऊङ् च गमादीनाम्' इति क्वौ अनुनासिकलोपे अकारस्योकारः। अयं च धातोरूकार इति अग्रेग्वौ इत्यादावुवङादेशे प्राप्ते 'ओः सुपि' इति यण्। 'तत्पुरुषे कृति' इत्यलुक्। गमी—'गमेरिनिः' इति 'भविष्यति गम्यादयः' इति भविष्यदर्थोऽयम्। आगामी—'आङि च णित्' इति इनिः, णित्त्वात् वृद्धिः। अयमपि गम्यादिपाठाद् भविष्यत्कालः। अयं बाहुलकात् केवलादपीति गामी इत्यपि भवति। ग्रामगमी ग्रामगामी—'श्रितादिषु गमिगाम्यादीनामुपसङ्ख्यानम्' इति द्वितीयातत्पुरुषः। 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति कृद्योगलक्षणं षष्ठीं बाधित्वा एतयोर्योगे द्वितीया। गमः—'ग्रहवृदृनिश्चिगमश्च' इति भावेऽकर्त्तरि च कारके अप्प्रत्ययः। एकाह्नेन गम्यत इति एकाहगमः—'अश्वस्यैकाहगमः' इति निपातनादप्। अन्यथाऽत्र 'परिमाणाख्यायां सर्वेभ्यः' इति परिमाणस्य गम्यमानत्वाद् घञ् स्यात्। अत्र च सर्वग्रहणमजपोर्बाधनार्थमित्युक्तम्। निगमः—'गोचर' इत्यादिना करणाधिकरणयोर्घः। गत्वा—'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः। आगम्य, आगत्य—'वा ल्यपि' इति अनुनासिकलोपविकल्पः। गतम्—'क्तोऽधिकरणे च' इति कर्त्तृकर्मभावाधिकरणेषु क्तः। ग्रामगतः—'द्वितीयाश्रित' इति तत्पुरुषः। गतं च तत्प्रत्यागतञ्च गतप्रत्यागतम्—'कृतापकृतादीनामुपसङ्ख्यानम्' इति तत्पुरुषः। गतमेव तत्कालं भूयः प्रत्यागमनेन गतप्रत्यागतमुच्यते। गन्तुः—'सितनिगमि' इत्यादिना तुन्। गान्त्रम् चर्म—'भ्रस्जिगमिनमिहनिविष्यशां वृद्धिश्च' इति ष्ट्रनि वृद्धिः। गन्त्री—कम्बलिवाह्यं शकटम्। बाहुलकात् वृद्ध्यभावः। तृन्तृचावित्यादिना संज्ञायां तृन्तृचोरन्तरो वा। कम्बलः सास्ना तद्योगान्मत्वर्थीयेनिना कम्बलिनो बलीवर्दा उच्यन्ते। तथा च रभसः—'प्रवारेऽप्युत्तरासङ्गे सास्नायामपि कम्बलः' इति। गात्रम्—'गमेरा च' इति त्रनि मकारस्याकारः। सुगात्री। सुगात्रा—'स्वाङ्गाच्चोपसर्जनात्' इत्यत्र

'अङ्गगात्रकण्ठेभ्यः' इति पक्षे ङीष्। गौः—'गमेर्डोः' इति डोप्रत्यये डित्त्वात् टिलोपः। 'गोतो णित्' इति सर्वनामस्थानस्य णित्त्वाद् वृद्धिः। अम्शसोस्तु 'औतोऽम्शसोः' इति पूर्वपरयोराकारे गाम्। गाः इति—'तस्माच्छसो नः पुंसि' इत्यत्र तच्छब्देन प्रथमयोः पूर्वसवर्णदीर्घस्य परामर्शनादिह नत्वं न भवति। ङसिङसोस्तु 'ङसिङसोश्च' इति ङसोरेङश्च पूर्वरूपे गोः इति। गवां समूहो गव्या। गोत्रा—'खलगोरथात्' इति यः, 'इनित्रकट्यचश्च' इति यथासंख्यात्त्रः। स्वभावात् स्त्रीलिङ्गौ। यकारादौ प्रत्यये 'वान्तो यि' इत्यवादेशः। गोत्रोऽस्यास्तीति गौत्रिकः—'एकगोपूर्वाट्ठञ् नित्यम्' इति मत्वर्थे ठञ्। गोमी—'ज्योत्स्नातमिस्रा-शृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः' इति मत्वर्थे मिनिप्रत्यये निपात्यते। गोर्विकारोऽवयवो वा गव्यम्—'गोपयसोर्यत्' इति षष्ठ्यन्तात् विकारावयवयोर्यत्। गोः पुरीषं गोमयम्—'गोश्च पुरीषे, इति मयट्। गवे हितं गव्यम्—'उगवादिभ्यो यत्' इति प्राक्क्रीतीयो यत्। गोर्निमित्तं संयोग उत्पातो वा गव्यः—प्राणिनां शुभस्य अशुभस्य वा सूचको महाभूतविकार उत्पातः। "गोद्व्यचोऽसङ्ख्यापरिमाणाश्वादेर्यत्" इति यत्। गोशब्दात्सङ्ख्यापरिमाणाश्वादिवर्जिताद् द्व्यचश्च 'तस्य निमित्तं संयोग उत्पातो वा' इति विषये यदिति सूत्रार्थः। गोरिदं गव्यम्—'सर्वत्र गोरजादिप्रत्ययप्रसङ्गे यद्वक्तव्यः' इति प्राग्दीव्यतीये चार्थे यत्। एवं च तत्र तत्रार्थे सूत्रेण यद्विधानं प्रपञ्चार्थं भवति। दाराश्च गावश्च दारगवम्—द्वन्द्वात् 'अचतुर' इत्यादावचि निपातितम्। अनुगवं शकटम्—गौर्यथा आयतस्तथायतमित्यर्थः। 'अनुगवमायामे' इति अनुगुशब्दादच्चि निपात्यते। इह 'आयाम' इति अर्शआद्यजन्तः, तद्वति वर्त्तते। अनुगुशब्दश्चायं 'यस्य चायामः' इति अव्ययीभावः, अनुर्यस्यायामवाची तेनान्यस्यायामवतो लक्षणभूतेन समस्यते इति सूत्रार्थः। इह च गोरायामः शकटायामस्य लक्षणं भवति। आगवीनः—गवा भृतो य आ तस्य प्रत्यर्पणात् कर्म करोति स एवमुच्यते। 'आगवीन' इति आगुशब्दात् कर्मकारिणि खप्रत्यये निपात्यते। आगुशब्दश्च 'आङ्मर्यादाभिविध्योः' इतीहाङो मर्यादावचनस्य पञ्चम्यन्तेन गोशब्देन गोप्रत्यर्पणे वर्त्तमानेनाव्ययीभावे पञ्चमी च 'आङ् मर्यादावचने' इति आङः कर्मप्रवचनीयत्वे तद्युक्तात् 'पञ्चम्यपाङ्परिभिः' इति विधीयते। गोः पश्चात् अनुगु—'अव्ययं विभक्ति' इत्यादिना पश्चादर्थेऽव्ययीभावः। अनुग्वलं पर्याप्तं गन्तुं शीलमस्य अनुगवीनो गोपालकः—'अनुग्वलङ्गामी' इति क्रियाविशेषणाद् द्वितीयान्तादलङ्गामीत्यर्थे खः। तिष्ठन्ति गावो यस्मिन् काले दोहनाय यः स कालः तिष्ठद्गु, वहन्ति आगच्छन्ति गावो दोहनाय यस्मिन् स कालः वहद्गु, अयन्ति यस्मिन्काले गोदोहनाय स कालः अयद्गु इति, आयन्ति यस्मिन् काले दोहनाय स कालः आयतीगवम्—'तिष्ठद्गुप्रभृतीनि च' इति अव्ययीभावे

निपात्यन्ते। परमगवः—'सन्महत्परम' इति तत्पुरुषे 'गोरतद्धितलुकि' इति टच्। टित्वात्स्त्रियाम्-परमगवी। अतद्धितलुकीति वचनात् पञ्चभिर्गोभिः क्रीतः पञ्चगुः पटः इत्यत्र टच् न भवति। अत्र हि 'आर्हादगोपुच्छसङ्ख्यापरिणाट्ठक्' इति गोपुच्छादिव्यतिरिक्तात् प्रातिपदिकात् यथायथं समर्थविभक्तियुक्तात् आर्हीयेष्वर्थेषु विहितस्य ठकः 'अध्यर्द्धपूर्वाद् द्विलुंगसंज्ञायाम्' इति लुक्क्रियते। द्विगुत्वं च 'तद्धितार्थोत्तरपदसमाहारे च' इति समासे 'सङ्ख्यापूर्वो द्विगुः' इति द्विगोः, 'द्विगुश्च' इति तत्पुरुषत्वाद् अस्ति टचः प्रसङ्गः। पञ्चगवधन इत्यत्र पञ्च गावो धनमस्येति त्रिपदे बहुव्रीहौ 'तद्धितार्थोत्तरपद' इति पूर्वयोः समासे सङ्ख्यापूर्वत्वेन द्विगुत्वात् तत्पुरुषत्वे टच्। पञ्चानां गवां समाहारः पञ्चगवम्–'तद्धितार्थ' इत्यादिना समासे पूर्ववद् द्विगुतत्पुरुषयोः टच्। अत्र समासार्थादुत्तरपदादकृत एव समासे 'समासान्ताः' इति अकारान्तोत्तरपदद्विगुत्वात् 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्यते' इति प्राप्तस्य स्त्रीत्वस्य 'पात्रादिभ्यः प्रतिषेधः' इति निषेधः। चित्रा गावो यस्य चित्रगुः—'गोस्त्रियोरुपसर्जनस्य' इति उपसर्जनगोशब्दान्तप्रातिपदिकत्वाद् ह्रस्वः। अत्र 'गोः पूर्वणित्त्वात्वस्वरेषु' इति स्थानिवत्त्वनिषेधात् न 'गोतः' इति णित्त्वम्। ननु अतत्कालव्यावृत्त्यर्थाद् 'गोतः' इति तपरकरणादेव न भविष्यति, अस्त्वत्र परिहारः; चित्रगो चित्रगव इत्यत्र तु 'सम्बुद्धौ च' 'जसि च' इति गुणेऽविकृतं गोरूपमिति स्याण्णित्त्वम्। नन्वेवमत्राप्यनेन निषेधेन स्थानिवत्त्वकृतमेव णित्त्वं निवार्यताम्, न तु स्वाश्रयमपीति गोरूपस्याव्याहतत्वात् तदाश्रयं णित्त्वं स्यादेव, नैष दोषः; यदस्य गोरूपस्य लाक्षणिकत्वाल्लक्षणप्रतिपदोक्तपरिभाषया तदपि न भविष्यति। वृत्तौ तु "'गोतः' इति षष्ठ्यन्तमाश्रित्य 'गोशब्दार्थसम्बन्धि सर्वनामस्थानं णिद्'" इति व्याख्यातम्, अत्र मते न कुत्रापि णित्त्वप्रसङ्गः। यदत्र सर्वनामस्थानं तदन्यपदार्थस्य सम्बन्धिनो गोशब्दार्थस्य, तपरकरणं त्वोकारान्तोपलक्षणार्थम्, वर्णनिर्देशेषु प्रसिद्धत्वात्। तेन द्योशब्दस्यापि णित्कार्यं भवति। 'अपरे तु—ओत इति पठन्ति' इति चोक्तं वृत्तौ। गोऽग्रम् गोअग्रम्–'सर्वत्र विभाषा गोः' इति छन्दसि भाषायां चाति परे वा प्रकृतिभावः। अन्यदा 'एङः पदान्तादति' इति पूर्वत्वम्। गवाग्रम्—'अवङ् स्फोटायनस्य' इति अवङादेशः। अयं च व्यवस्थितविभाषात्वाद् गवाक्षम् इत्यत्र नित्यः। चित्रग्वग्रम् इत्यत्र 'गोः पूर्व' इति स्थानिवत्त्वनिषेधान्न प्रकृतिभावादि। गवाश्वम्। गवाविकम्। गवैडकम्—अत्र 'गवाश्वप्रभृतीनि च' इति समाहार एव द्वन्द्वः। अयं च नियतो 'गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तम्' इति वृत्तावुक्तत्वात् अवङभाव इति। 'विभाषा वृक्ष' इत्यादिना पशुद्वन्द्वं विभाषैव, तेन गोश्वम्, गोश्वा इत्यादि। गङ्गा—'गन् गम्यद्योः' इति गन् प्रत्ययः। गङ्गाया अपत्यं गाङ्गेयः—'शुभ्रादिभ्यश्च' इत्यत्र चकारेणाकृतिगणत्वद्योतनाड्ढक्। तिकादिपाठादपत्येऽपि फिनि गाङ्गायनिः

इत्यपि भवति ॥ सर्पति । ससर्प । ससृपतुः । ससर्पिथ । ससृपिव—क्रादिनियमादिट् । स्रप्ता, सर्प्ता । स्रप्स्यति, सर्प्स्यति—'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इति झलादावकिति प्रत्यये पक्षे मित्त्वादन्त्यादचः परेऽमागमे यणादेशः । अन्यदा गुणः । सर्पतु । असर्पत् । सर्पेत् । आशिषि—सृप्यात् । असृपत् । असृपताम्—लृदित्त्वादङ् । सिसृप्सति—'हलन्ताच्च' इति सनः कित्त्वान्न गुणः, नाप्यमागमः । सरीसृप्यते—'रीगृत्वतः' इति रीक् । सरीसृपीति, सरीसर्प्ति, सरीस्रप्ति—प्रकृतिग्रहणन्यायेन 'अनुदात्त' इति अमागमः । सरीसृपः—पचाद्यचि 'यङोऽचि च' इति यङो लुकि 'न धातुलोपः' इति लघूपधगुणाभावः । यङ्लुगन्तात् इगुपधलक्षणः को वा । सर्पयति । असससर्पत् , असीसृपत्—'उर्ऋत्' वा । सृप्यः—'ऋदुपधाच्च' इति क्यप् । सर्पः—पचादित्वादच् । स्रप्ता । सृप्तः । पीठेन स्रप्तुं शीलमस्येति पीठसर्पी—णिनिः 'सुप्यजातौ' इति । पीठसर्पिण इमे पैठसर्पाः—'इनण्यनपत्ये' इति प्रकृतिभावं बाधित्वा 'नान्तस्य टिलोपे पीठसर्पि' इत्यादिना टिलोपः । सर्पिः—'अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः' इतीस्प्रत्ययः । प्रियसर्पिष्कः—उरःप्रभृतित्वान्नित्यं कप् । 'इणः षः' इति अपदाद्योः कुप्वोर्विसर्जनीयस्य षत्वम् । सृप्रः—'ऋज्रेन्द्र' इत्यादिना रक् ॥९७९-९८०॥

७०३. यम उपरमे । अत्र मैत्रेयः—'उदित्त्वमस्य केचिदिच्छन्ति' इति । यच्छति—'इषुगमियमाम्' इति छः शिति । ययाम । येमतुः । ययन्थ, येमिथ । यन्ता । यंस्यति । यच्छतु । अयच्छत् । यच्छेत् । आशिषि—यम्यात् । अयंसीत्—'यमरम' इति सगिटौ । यियंसति । यंयम्यते । यंयन्ति । यंयन्तः । यमयति । अयीयमत् भोजयतीत्यर्थः । अमन्तत्वात् मित्त्वम् । अस्य च 'यमोऽपरिवेषणे' इति परिवेषणादन्यत्र मित्त्वनिषेधात् आयामयते, आयामयति इति भवति—'न पादमि' इत्यत्रायामग्रहणेन 'अणावकर्मकात्' इति कर्त्रभिप्रायप्राप्तस्य परस्मैपदस्य निषेध इति यथायोगमत्रात्मनेपदपरस्मैपदे भवतः । आयच्छते—दीर्घो भवति, व्याप्रियते इति वार्थः । आयच्छते स्वरूपाणि द्राघयति व्यापारयति वेत्यर्थः । 'आङो यमहनः' इति 'स्वाङ्गकर्मकाच्चेति वक्तव्यम्' इति अकर्मकात्स्वाङ्गकर्मकाच्चाङ्पूर्वादस्मात्तङ् । इह स्वमङ्गं स्वाङ्गं न तु 'अद्रवन्मूर्त्तिमद्' इत्यादिना लक्षितं पारिभाषिकमिति देवदत्तस्य पाणिमायच्छति इत्यत्र न भवति । उपयच्छते कन्याम्, परिणयतीत्यर्थः । 'उपाद्यमः स्वकरणे' इति तङ् । अत्र भाष्यम्—"इह कस्मान्न भवति स्वं शाटकान्तमुपयच्छति ? अयं यदा स्वं करोति तदा भवितव्यमेव" । अत्र वृत्तिकारशिवस्वामिभ्यामिदं भाष्योक्तमस्वस्य स्वत्वेन करणं प्रसिद्धिवशात्पाणिग्रहणविशेष उपसंहृतम् । कैयटे तु 'निष्पादनलक्षणोऽत्र करोत्यर्थो गृह्यते' इति । सामान्येनापि स्वकरणे पाणिग्रहणविशिष्टं स्वकरणं शिवस्वामिजयादित्यावूचतुः, प्रसिद्धत्वात् उपायंस्त नतीरित्यादिप्रयोगस्तु साधर्म्यात् । भाष्यकारस्तु स्वकरणमात्रे विशिष्टे स्थित इत्युक्तम् । भट्टिकाव्ये च 'शास्त्राण्युपायंस्त जित्वराणि' इति[1] सामान्येन

१. 'उपायंस्त महास्त्राणि' इति भ० का० (१५।२१) पाठः ।

प्रयुज्यते। संयच्छते व्रीहीन्, उपयच्छते भारम्, आयच्छते वस्त्रम्—'समुदाङ्भ्यो यमोऽग्रन्थे' इति समादिभ्यो यमेस्तङ्। यदा तु कर्त्रभिप्रायत्वमुपपदेन प्रतीयते तदा 'विभाषोपपदेन प्रतीयमाने' इति स्वान् व्रीहीन् संयच्छति इत्यपि। इहाङो-ऽग्रहणमस्वाङ्गकर्मकार्थम्। स्वाङ्गकर्मकात् 'आङो यमहनः' इत्येव सिद्धम्। 'अग्रन्थे' इति वचनात् उद्यच्छति चिकित्सां वैद्यः इति अत्र परस्मैपदमेव। विचिकित्सामधिगन्तुमुद्यमं करोतीत्यर्थः। यदायं यमिर्गन्धने वर्तते, गन्धनं सूचनं परेण प्रच्छाद्यमानस्य आविष्करणम्, तदा 'यमो गन्धने' इत्यात्मनेपदम्। परस्मैपदस्य सिचः किन्त्वादनुनासिकलोपः—उदायत। उदायसाताम् इत्यादि। झलि सिज्लोपः। उपयमनार्थत्वे तु 'विभाषोपयमने' इति तङ्। तङ्परस्य यमेः सिचः किन्त्वविकल्पनात् उपायत कन्याम्, उपायंस्त कन्याम् इत्युभयं भवति। उपयमनमिह दारकर्म। यम्यम्—'गदमद' इत्यादिना यत्। उपसृष्टात्तु ण्यति—विनियाम्यम् इति। 'त्वया नियम्या' इति प्रयोगः नियमशब्दात् 'तत्करोति' इति णौ यति द्रष्टव्यः। धातोर्णौ 'यमोऽपरिवेषणे' इति मित्त्वनिषेधाद् वृद्ध्या भाव्यम्। वाचंयमः—'वाचि यमो व्रते' इति खच्। 'वाचंयमपुरन्दरौ च' इति निपातनादलुक्। संयमः, संयामः—'यमस्समुपनिविषु च' पक्षेऽच्, तदभावे घञ्। एवं समुपनिविभ्योऽप्युदाहार्यम्। संयत्—सम्पदादित्वात् 'अन्येभ्योऽपि दृश्यते' इति वा क्विपि 'गमः क्वौ' इत्यत्र 'गमादीनामिति वक्तव्यम्' इति उक्तत्वात् अनुनासिकलोपे तुक्। यच्छतीति यमः—अच्। याम्यम्—प्राग्दीव्यतीयेष्वर्थेषु 'यमाच्चेति वक्तव्यम्' इति ण्यः। यमुना—'अर्जियमिशीङ्भ्यश्च' इति उनन् प्रत्ययः। यन्त्रम्—'गुधृवि' इत्यादिना त्रः प्रत्ययः ॥९८१॥

७०४. तप सन्तापे। तपति। तताप। तेपिथ, ततप्थ। तप्ता। तप्स्यति। तपतु। अतपत्। तपेत्। तप्यात्। अताप्सीत्। अताप्ताम्—'झलो झलि' इति सिज्लोपः। तितप्सति। तातप्यते। तातप्ति। तापयति। अतीतपत्। चोरं सन्तापयति इत्यत्र—'रुजार्थानां भाववचनानामज्वरेः' इति कर्मणि षष्ठी न भवति; तत्र 'अज्वरिसन्ताप्योः' इति निषेधात्। उत्तपते, वितपते—'उद्विभ्यां तपः' इत्यकर्मकात्स्वाङ्गकर्मकाच्च तङ्। अकर्मकत्वं भासनार्थत्वेन। यदाऽयमस्वाङ्गकर्मकस्तदा उत्तपति सुवर्णम् इत्येव भवति। तप्यते तपस्तापसः। अतप्त तपस्तापसः—'तपस्तपःकर्मकस्यैव' इति तपःकर्मकस्य तपेः कर्तुः कर्मवद्भावाद्यगात्मनेपदे। अत्र तपेरर्जनमर्थ इति तापसस्तत्र कर्त्ता। यत्रासौ कर्म उपवासादीनि तपांसि तापसं सन्तपन्ति इति, तत्र तपिर्दुःखानुभवार्थ इति कर्मणस्तापसस्य व्यापारो दुःखजननमिति क्रियाभेदाद्विध्यर्थमेवत्। एवकारः सूत्रे सर्ववाक्यानां सावधारणार्थत्वादर्थप्राप्तस्यैवावधारणस्यानुवादकः। अत्र 'तपोऽनुतापे च' इति चकारेण कर्मकर्त्तरि चिणो निषेधात्सिच्। अत्रानुतापग्रहणस्याकर्मकर्त्रर्थत्वाद् अन्ववातप्त पापेन कर्मणा इत्यत्रापि चिण्न भवति,

अनुतापादन्यत्र उदतापि सुवर्णं सुवर्णकारेण इति भवितव्यमेव चिणा। तप्यम्-'पोर-दुपधात्' इति यत्। ललाटन्तप आदित्यः—'असूर्यललाटयोर्दृशितपोः' इति यथासङ्ख्यात् ललाटे कर्मण्युपपदे तपेः खशि मुम्। शत्रुन्तपः—'सञ्ज्ञायां भृतॄवृजि'इत्यादिना खचि पूर्वपदस्य मुमागमः। द्विषन्तपः। परन्तपः-'द्विषत्परयोस्तापे' इति खचि णिल्लोपे 'खचि ह्रस्वः' इति ह्रस्वः। द्विषतस्तकारस्य मुमि संयोगान्त-लोपः। अत्र 'द्विषत्परयोः'इति द्वितकारनिर्देशात्तकारान्त एव द्विषच्छब्द उपपदेऽयं प्रत्ययः, न तु लिङ्गविशिष्टपरिभाषया द्विषतीशब्द उपपद इति तत्र कर्मण्यणि द्विषतीताप इति भवति। तथा तापेरिति ण्यन्तस्य ग्रहणात्केवलादप्यणेव भवति। असंज्ञायां द्विषत्तापः इति। संज्ञायां तु 'सञ्ज्ञायां भृतॄवृजि' इत्यादिना खजुक्तः। तपः—असुन्। तश्चरति तपस्यति—"कर्मणो रोमन्थतपोभ्यां वर्तिचरोः" इति रोमन्थतपोभ्यां कर्मभ्यां यथासङ्ख्यं वर्त्तिचरोरर्थयोः क्यङिति क्यङ्। 'कर्मणः' इति प्रत्येकसम्बन्धापेक्षमेकत्वम्। 'तपसः परस्मैपदं च' इति परस्मैपदम्। तपस्या—क्यङन्तत्वात् 'अः प्रत्ययात्' इति स्त्रियामकारः। तपः शीलमस्य तापसः—'छत्रादिभ्यो णः' इति णः। अत्र 'णेऽकृतं कार्यं भवति' इति प्रागेवो-क्तम्, तेन तापसी इत्यत्र ङीप् भवति। तपस्वी –' तपःसहस्राभ्यां विनीनी' इति मत्वर्थे विनिः। अत्रैवार्थे 'अण्च' इत्यणि तापसः। तपस्वी इत्यत्र 'तसौ मत्वर्थे' तकारान्तं च मत्वर्थे प्रत्यये भमिति भसञ्ज्ञयाऽऽकडारीययाऽनवकाशया 'स्वादिष्वसर्वनामस्थाने' इति पदसञ्ज्ञाया बाधात् 'ससजुषोरुः' इति रुत्वं न भवति। तापः—घञ्। सन्तापाय प्रभवति सान्तापिको रोगः—'तस्मै प्रभवति सन्तापादिभ्यः' इति चतुर्थ्यन्तात्सन्तापशब्दात्प्रभवत्यर्थे ठञ्। निष्टपति। निष्टप्तम्—'निसस्तपतावनासेवने' इति षत्वम्। आसेवनं पौनःपुन्यम्, ततोऽन्यदनासेव-नम्। अयमैश्वर्ये दिवादौ। दाहे चुरादौ॥६८२॥

७०५. त्यज हानौ। त्यजति। तत्याज। तत्यजतुः। तत्यजिथ, तत्यक्थ। तत्यजिव। त्यक्ता। त्यक्ष्यति। त्यजतु। अत्यजत्। त्यजेत्। त्यज्यात्। अत्याक्षीत्। अत्याक्ताम्। तित्यक्षति। तात्यज्यते। तात्यक्ति। त्याजयति। अतित्यजत्। त्यागशीलः त्यागी—सम्पृचादित्वात् घिनुण्। 'चजोः कुघिण्ण्यतोः' इति कुत्वम्। त्याज्यम्—इत्यत्र 'ण्यत्प्रतिषेधे त्यजेरुपसङ्ख्यानम्' इति कुत्वाभावः। त्यद्—'त्यजियजितनिभ्यो डित्' इत्यदि प्रत्यये डित्त्वाट्टिलोपः। स्यः—'त्यदादीनामः' इति त्यदाद्य-र्थविभक्तिनिमित्तनिबन्धनेऽन्त्यस्यात्वे पररूपे च त्यदादीनामित्यधिकारे 'तदोः सः सावनन्त्ययोः' इति तकारस्य सकारः। त्यौ, त्ये—इत्यादौ सर्वनामकार्यं पूर्व-वत्। 'अत्वादिस्त्यदादिप्राधान्येऽपीष्यते' इति परमस्यः इत्यादि भवति। अप्रा-धान्ये तु अतित्यद् इत्यादि। त्यस्येदं त्यदीयम्—'त्यदादीनि च' इति वृद्धत्वात् 'वृद्धाच्छः' इति छः। त्यस्यापत्यं त्यादायनिः—'उदीचां वृद्धादगोत्रात्' इति

फिञ्। अगोत्रप्रत्ययान्ताद् वृद्धादपत्ये फिञुदीचां मतेनेति सूत्रार्थः। स्यश्च देवदत्तश्च त्यौ—'त्यदादीनि सर्वैर्नित्यम्' इति त्यदः शेषः। स च त्यश्च तौ इत्यत्र त्यदादीनां यत्परं तच्छिष्यते इति परस्य तदः शेषः। स्त्रियाम्—'त्यदादीनामः' इति विभक्तावत्वे टापि 'हल्ङ्याभ्यः' इति सुपो लोपे स्या इति भवति। सन्निपातपरिभाषया 'न यासयोः' इति निर्देशाल्लिङ्गादनित्यत्वज्ञापनाच्च भवति। 'अयं ण्यन्तो द्विकर्मकः' इति सुधाकरादिमतेन न्नाथतावुक्तम्। दृश्यते च प्रयोगः—'त्याजितैः फलमुत्खातैः'[1] 'पूषोष्मणा त्याजितमात्रभावः' इत्यादिः। 'अकथितं च' इत्यत्र गौः पयस्त्यजति, गवा पयस्त्याजयति इति प्रयुञ्जानयोः कैयटहरदत्तयोः प्रयोज्यस्य कर्मत्वमनभिमतम् ॥९८३॥

७०६. षञ्ज सङ्गे। सजति—शपि 'दंशसञ्जस्वञ्जाम्' इत्यनुनासिकलोपः। ससञ्ज। ससञ्जतुः। ससङ्क्थ, ससञ्जिथ। ससञ्जिव--'असंयोगाल्लिट् कित्' इति कित्त्वनिषेधात् 'अनिदिताम्' इत्युपधालोपो न भवति। सङ्क्ता। सङ्क्ष्यति। सजतु। असजत्। सजेत्। आशिषि कित्वादुपधालोपे — सज्यात्। असाङ्क्षीत्। असाङ्क्ताम्—'वदव्रज' इति वृद्धिः। तत्र 'हल्ग्रहणं हल्समुदायप्रतिपत्त्यर्थम्' इत्युक्तम्। सिसङ्क्षति—'स्तौतिण्योरेव' इत्यषत्वम्। अभिषजति —'उपसर्गात्' इति षत्वम्। अभ्यषजत् इत्यादौ तु 'प्राक्सितादड्व्यवायेऽपि' इति षत्वम्। अभिषिषङ्क्षति इत्यत्र 'स्तौतिण्योरेव' इति नियमं बाधित्वा 'स्थादिष्वभ्यासेन च' इत्यादिना परस्य षत्वम्, पूर्वस्य तु 'उपसर्गात्' इत्यनेनैव सिद्धम्। अङ्गुली सङ्गो यस्याः अङ्गुलिषङ्गा यवागूः—'समासेऽङ्गुलेः' इति षत्वम्। प्रासङ्गं वहति प्रासङ्ग्यः—'तद्वहति रथयुगप्रासङ्गम्' इति द्वितीयान्तात् वहतीत्यर्थे यत्। प्रासङ्गो युगाद्युगम्। निषङ्गधिः—'नौ सञ्जेर्घधिन्' इति घधिन् प्रत्ययः। घित्त्वात् कुत्वम्। सक्थि —'असिसञ्जिभ्यां क्थिन्' इति क्थिन्। अजादौ विभक्तौ 'इकोऽचि' इति नुमि सक्थिनीत्यादि। तृतीयाद्यजादौ तु 'अस्थिदधिसक्थि' इत्यादिना ङित्त्वादन्त्यस्य अनङादेशे 'अल्लोपोऽनः' इत्यल्लोपे सक्थ्ना इत्यादि। सप्तम्येकवचने तु अल्लोपस्य 'विभाषा ङिश्योः' इति विकल्पितत्वात् सक्थ्नि, सक्थनि इत्युभयं भवति। अङ्गाधिकारे तदन्तविधेरभ्युपगमात् प्रिया सक्थ्ना इत्यादावप्यनङ् भवति। यदत्रानङ्विधौ नपुंसकस्येत्यनुवृत्तं तदस्थ्यादीनां विशेषणं नाङ्गस्येति प्रियसक्थ्ना शुनेत्यादौ लिङ्गान्तरेऽपि भवति। नपुंसकानुवृत्तिस्तु 'बहूनामङ्गानां पुल्लिङ्गानामस्थ्यादीनामनङ् मा भूद्' इति अस्थिर्नाम कश्चिदित्याह। ननु—
'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः। शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु ॥'

इति नास्ति प्रसङ्ग इति चेत्, तर्हि मन्दधियामनुग्रहायैव तदुक्तिरिति ॥ अत्रोदाहरणे सक्थिशब्दोऽस्वाङ्गवाची द्रष्टव्यः। स्वाङ्गवाचित्वे तु 'बहुव्रीहौ

---

१. रघु० ४।३३।

सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षचा समासान्ततेन भाव्यम्—प्रियसक्थ इति। स्वमङ्गं चेह स्वाङ्गं न तु पारिभाषिकम्। उत्तरसक्थम्, मृगसक्थम्, पूर्वसक्थम्—'उत्तरमृगपूर्वाच्च सक्थ्नः' इति तत्पुरुषे टच् समासान्तः। अत्र चकारेणोपमाना-दित्यनुवृत्तौ फलकमिव सक्थि फलकसक्थमित्यत्रापि भवति। अस्मादेव ज्ञापकात् असामान्यवचनेनापि सक्थिशब्देन उपमानस्य समासः। न विद्यते सक्थि यस्य असक्थि, असक्थः। 'नञ्दुस्सुभ्यो हलि सक्थ्योरन्यतरस्याम्' इति पक्षेऽच् समासान्तः। एवं सुदुरोरुदाहार्यम्। एवं सुसक्थः। गौर्याः सक्थीव सक्थि यस्य गौरिषक्थः—'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षच्। यदा गौर्याः सक्थीति षष्ठीसमासस्तदा 'अच् प्रत्यन्वव' इत्यत्र अजिति योगविभागादजुभयत्र। सुषामादिषु 'गौरिसक्थः संज्ञायाम्' इति पाठात् षत्वं पूर्वपदस्य ह्रस्वत्वं च ॥९८४॥

७८७. दृशिर् प्रेक्षणे। पश्यति—'पाघ्रा' इत्यादिना पश्यादेशः इत्संज्ञकशकारादौ अचि। ददर्श। ददृशतुः। ददर्शिथ, दद्रष्ठ। ददृशिव। 'विभाषा सृजिदृशोः' इति थलि इडभावपक्षे 'सृजिदृशोर्झल्यमकिति' इति अकिति झलादौ अमागमविधानात् अमि यणि 'व्रश्च' इत्यादिना षत्वं ष्टुत्वं च। द्रष्टा। द्रक्ष्यति—षत्वम्, 'षढोः कः सि' इति कत्वम्। पश्यतु। अपश्यत्। पश्येत्। आशिषि—दृश्यात्। अदर्शत्। अदर्शताम्—'इरितो वा' इत्यङि 'ऋदृशोऽङि गुणः' इति गुणः। अङभावे 'न दृशः' इति क्सनिषेधात् सिच्यमि यणादेशे हलन्तलक्षणायां वृद्धौ—अद्राक्षीत्। दिदृक्षते—'ज्ञाश्रुस्मृदृशां सनः' इति सनन्तात्तङ्। 'हलन्ताच्च' इति सनः कित्त्वात् न गुणः, नाप्यमागमः। दरीदृश्यते-रीक्। दरीदृष्टि। दरिद्रष्टः। दर्द्रष्टि। दर्द्रष्टः। लोटि हेर्धित्वेऽमागमे षत्वष्टुत्वजश्त्वेषु—दर्द्रड्ढि। दर्दृशानि—आटि 'नाभ्यस्तस्य' इति गुणनिषेधः। लङि तिप्सिपोः—अदर्द्रक्। 'क्विन्प्रत्ययस्य कुः' इत्यत्र 'क्विनः कुः' इति वक्तव्ये प्रत्ययग्रहणं यस्मात् क्विनस्ति तस्य सर्वत्र पदान्ते कुत्वार्थमिति षत्वं बाधित्वा शकारस्यान्तरतम्यात्कुत्वेन खकारे 'वाऽवसाने' इति चर्त्वे ककारः। दर्शयति रूपतर्कं कार्षापणम्। अदीदृशत्। अददर्शत्—'उऋत्' वा। 'दृशेः सर्वत्र' इति प्रयोज्यस्य रूपतर्कस्य कर्मत्वम्, यदायं दृशिश्चक्षुःसाधने ज्ञानविशेषे वर्त्तते तदेदमुपसङ्ख्यानम्। यदा तु ज्ञानमात्रवचनस्तदा बुद्ध्यर्थत्वादेव सिद्धम्। तत्र बुद्ध्यर्था ज्ञानसामान्यवचना न तु विशेषवचना इति स्थितम्। यदा तु ण्यन्तादात्मनेपदं तदा 'अभिवादिदृशोरात्मनेपद उपसंख्यानम्' इति प्रयोज्यस्य कर्मत्वविकल्पनात् दर्शयते रूपतर्केण कार्षापणम्, रूपतर्कम् इत्युभयं भवति। पश्यन्ति भृत्या राजानम्, दर्शयते भृत्यान् राजा भृत्यैरिति वा। संपश्यते—'दृशेश्चेति वक्तव्यम्' इति संपूर्वात् अकर्मकात् दृशेस्तङ्। संददृशे। संद्रष्टा। संद्रक्ष्यते। संपश्यताम्। समपश्यत। संपश्येत। आशिषि—संदृक्षीष्ट। समदृक्षत। समदृक्षाताम्—लिङ्सिचोः कित्त्वात् न गुणः, नाप्यमागमः। झलि सिज्लोपे प्रत्ययलक्षणेन 'षढोः कः सि' इति कत्वं न

भवति, सिज्लोपस्य प्रत्ययलक्षणेऽसिद्धत्वादिति तत्रतत्रोक्तम्। कर्मणि—दृश्यते। अदर्शि इत्यादि। स्यादिषु पक्षे चिण्वदिडपीति दर्शिष्यते, द्रक्ष्यते। अदर्शिषाताम्, अदृक्षाताम्। दर्शिषीष्ट, दृक्षीष्ट। दर्षिता, द्रष्टा इत्युभयं भवति। दृश्यम्—'ऋदुपधाच्च' इति क्यप्। उत्पश्यः—'पाघ्राध्माधेट्दृशः शः' इति उपसृष्टात् कर्त्तरि शे पश्यादेशः। दर्शनंपश्यः—अत्र 'पश्यार्थैः' इति निपातनात् भावे शः। 'अदर्शनम्' इत्यादिनिर्देशात् ल्युडपि भवति। असूर्यंपश्या राजदाराः। गुप्तिपरं चैतत्। एवं नाम गुप्ता यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्ति इति। 'असूर्यललाटयोः' इति खश्। अत एवासूर्येति निर्देशात् दृशिना नञ्सम्बन्धेन असमर्थत्वेऽपि समासः। उग्रंपश्यः—'उग्रंपश्य' इत्यादिना क्रियाविशेषणे कर्मण्युग्रशब्दे उपपदे खशि निपात्यते। तादृशः, तादृक्—'त्यदादिषु दृशोऽनालोचने कञ् च' त्यदादिषु कर्मसूपपदेषु आलोचनात् चक्षुर्विज्ञानाद् अन्यत्र वर्त्तमानाद् दृशेः कञ् प्रत्ययः। चकारात् क्विन्। कञः कित्वात् न गुणः। तादृशी—'टिड्ढाणञ्' इत्यादिना ङीप्। तादृक्षः—'क्सश्च वक्तव्यः' इति क्सश्च। 'आ सर्वनाम्नः' इति दृग्दृशवतुषु परतः सर्वनाम्नोऽन्त्यस्याकारः। 'दृक्षे चेति वक्तव्यम्' इति चाकारः। सदृक्। सदृशः। सदृक्षः—'दृग्दृशवतुषु' इति समानस्य सभावे 'दृक्षे चेति वक्तव्यम्' इति दृशे च सभावः। अत एव दृगादिषु सभाववचनात् 'समानान्ययोश्च' इतिवक्तव्याद्वा कञ्क्विन्क्साः समानान्ययोरपि उपपदयोर्भवन्तीति। सदृशी इत्यत्र पूर्ववन्ङीप् भवति। परलोकदृश्वा—'दृशेः क्वनिप्' इति कर्मण्युपपदे भूते क्वनिप्। स्त्रियां 'वनो र च' इति ङीब्रेफयोः—परलोकदृश्वरी। सुदर्शनः दुर्दर्शनः—'भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वक्तव्यः' इति खलोऽपवादो युच्। कन्यादर्शं वरयति यां यां कन्या पश्यति तां तां वरयतीत्यर्थः—'कर्मणि दृशिविदोः साकल्ये' इति कर्मण्युपपदेऽस्मात् साकल्ये गम्ये णमुल्। पशुः—'अर्जिदृशि' इत्युप्रत्ययः, पशादेशश्च। यदायमसत्त्ववचनस्तदा चादित्वान्निपातत्वम्, यथा—'लोधं नयन्ति पशु मन्यमानाः' इति, पशु सम्यगिति ह्यत्रार्थः। दर्शनः—'भूदृशि' इत्यादिनाऽनच्। दृक्-संपदादित्वात् क्विप्। 'क्तिनपीष्यते' इति क्तिनि दृष्टिः॥९८५॥

७०८. दंश दंशने। दंशनं दंष्ट्राव्यापारः। 'अत एव निर्देशादनुनासिकलोपः' इति स्वामी। दशति—'दंशसञ्ज' इति अनुनासिकलोपः शपि। ददंश। ददंशतुः। ददंशिथ, ददंष्ठ। ददंशिव। दंष्टा। दङ्क्ष्यति। दशतु। अदशत्। दशेत्। दश्यात्—'किदाशिषि' इति यासुटः कित्त्वादनुनासिकलोपः। अदाङ्क्षीत्। अदांष्टाम्—'वदव्रज' इति वृद्धिः। दिदङ्क्षति। दन्दश्यते—'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्' इति यङ् भावगर्हायाम्। 'जपजभदहदश' इत्यभ्यासस्य नुक्। दन्दंशीति, दन्दंष्टि। दन्दष्टः—यङ्विधौ नुग्विधौ च 'दश' इति कृतनलोपस्य

निर्देशात् यङ्लुकि अक्ङित्यपि नलोपो नुक् च भवति। दंशयति। अददंशत्। दन्दशूकः—'यजजपदशां यङः' इति यङन्तादूकप्रत्यये 'अतो लोपः', 'यस्य हलः' इत्यल्लोपयलोपौ। दंष्ट्रा—'दाम्नी' इत्यादिना ष्ट्रन्। अजादिषु दर्शनात् टाप्। अत्रैव पाठात् नलोपाभावश्च। ष्ट्रनि 'दश' इति नलोपनिर्देशस्तु करणे ल्युडर्थः—दंशन इति। दंष्ट्री—'व्रीह्यादिभ्यश्च' इति मत्वर्थीय इनिः। मूलकोपदंशं भुङ्क्ते, मूलकेन उपदंशम् इति वा—'उपदंशस्तृतीयायाम्' इति णमुल्। 'तृतीयाप्रभृतीनि' इति समासविकल्पः। वासरूपविधिना क्त्वाऽपि भवति। मूलकेनोपदंश्य इति। उक्तं च—'सर्वत्रैवात्र प्रकरणे क्रियाभेदे सति वासरूपविधिना क्त्वाऽपि भवति' इति। ननु मूलकोपदंशमित्यत्र मूलकस्य भुजिनैवान्वयो नोपदंशिना। न ह्यत्र मूलकेन करणेनान्य उपदंश्य भुङ्क्त इत्यर्थः, तेन तृतीयान्तस्योपदंशिना सामर्थ्याभावात् उपपदत्वं नेति कथं प्रत्ययः, वचनं च दशनोपदंशं भुङ्क्तइत्यत्र सावकाशम्? उच्यते; यद्यत्रैव स्यात् 'करणे' इत्येव ब्रूयात्, 'तृतीयायाम्' इति वचनात्तु सर्वत्रापि भविष्यति। तद्धि तृतीयान्तस्योपदंशिना आर्थेऽप्यन्वये यथा स्यादिति। अस्ति चात्रार्थोऽन्वयः, कर्मापेक्षस्योपदंशेः सन्निहितेन मूलकेन सम्बन्धात्॥९८६॥

७०६. कृष विलेखने। विलेखनमिहाकर्षणम्। तथा च पुरुषकारे 'कर्षतिस्त्वाकर्षणे प्रसिद्धः'[1] इति। द्विकर्मकोऽयम्—कर्षति शाखां ग्रामम्। चकर्ष। चकृषतुः। चकर्षिथ। चकृषिव। क्रष्टा, कर्ष्टा—'अनुदात्तस्य चर्दुपधस्य' इत्यमागमविकल्पः। कर्क्ष्यति, क्रक्ष्यति। कर्षतु। अकर्षत्। कर्षेत्। कृष्यात्। अकृक्षत्। अकृक्षताम्—'शल इगुपधाद्' इति क्सः। यदा 'स्पृशमृशकृषतृपदृपां सिज्वा' इति सिच् तदा पूर्ववदमागमविकल्पे हलन्तलक्षणायां वृद्धौ आकार्क्षीत्। अकार्ष्टाम्। अक्राक्षीत्। अक्राष्टाम् इत्यादि। चिकृक्षति—'हलन्ताच्च' इति सनः कित्त्वान्न गुणः, नाप्यमागमः। चरीकृष्यते। चरिकृषीति, चरिकर्ष्टि, चरिक्रष्टि। चरीकृष्टः, चरिकृष्टः इत्यादि। लोटि हेर्धित्वे ष्टुत्वजश्त्वयोरमागमपक्षे चरिक्रड्ढि। अन्यदा चरिकृड्ढि। लङि तिप्सिपोः हल्ङ्यादिलोपे च अचरीकट्। 'रात्सस्य' इति नियमान्न संयोगान्तलोपः। अमागमपक्षे अचरीक्रट्। एवं वचनान्तरेषु सर्वेषु लकारेषु रुग्रीकोश्च उदाहार्यम्। कर्षयति शाखां ग्रामं देवदत्तं यज्ञदत्तः। अचीकृषत्, अचकर्षत्—'उर्ऋद्वा'। अत्र कृषेः प्रापणार्थत्वेऽपि अस्ति फलतया गतिप्रतीतिरिति गत्यर्थत्वात् 'गतिबुद्धि' इति प्रयोज्यस्य कर्मत्वम्। अत्रैवाणि ग्रहणमुपसर्जनीभूतयापि गत्या तदर्थत्वे लिङ्गम्, अन्यथा ण्यन्तस्य गमनार्थ इति किं णिग्रहणेन! अत एव तत्र नीवह्योः प्रतिषेधः कृतः। कर्मणि लादयो नयत्यादिवन्नेयाः।

---

1. दै० १०९ पृ०।

कृष्यम्—'ऋदुपधाच्च' इति क्यप्। कर्षतीति कृषः—इगुपधलक्षणः कः। पाण्युपकर्षं पयः पिबति—पाणिना उपकृष्य, पाणावुपकृष्य वा पयः पिबतीत्यर्थः। 'सप्तम्यां चोपपीडरुधकर्षः' इति सप्तम्यन्ते चशब्दात् तृतीयान्ते च उपपदे उपपूर्वाद् अस्मात् णमुल्। तृतीयाप्रभृतित्वात् समासविकल्पनात् पाणावुपकर्षम्, पाणिनोपकर्षम् इत्यपि भवति। क्रियाभेदे वासरूपेण क्त्वापि भवतीति प्रागेवोक्तम्। अत्र णमुल्विधावुपसर्गग्रहणं पीडेरेव विशेषणमिति भागवृत्तौ। भट्टिकारस्त्वतन्त्रं मन्यते, यदाह—'धनुररिभिरसह्यमुष्टिपीडं दधाने'[1] इति। इदं तावत्साहसमात्रं यदाचार्येण प्रयुक्तस्यातन्त्रत्वाङ्गीकरणम्, यदपि पीडिनैव सम्बन्धकथनं तदपि न न्याय्यम्; बह्वच्कस्यास्य पूर्वनिपातायोगात्। अत एव वृत्तिन्यासपदमञ्जर्यादिषु सर्वैरुपस्य सम्बन्धोऽङ्गीकृतः। कर्ष्टा शाखाम्, क्रष्टा शाखाम्—अत्र तृनि 'ञीत्यादेर्नित्यम्' इति प्रकृतेराद्युदात्तत्वेऽप्युपदेशावस्थायां कृषेरनुदात्तत्वाद् अमागमविधौ चोपदेशग्रहणानुवर्तनात् पक्षेऽमागमो भवत्येव। अयं तुदादावपि ॥९८७॥

७१०. दह भस्मीकरणे। दहति। ददाह। देहतुः। देहिथ, ददग्ध—थलि भारद्वाजनियमादिड्विकल्पः। तत्रानिट्पक्षे 'दादेर्धातोर्घः', 'झषस्तथोर्धोऽधः', 'झलां जश् झशि' इति घत्वधत्वजश्त्वानि। दग्धा। धक्ष्यति—हकारस्य घत्वे, 'एकाचः' इति भष्भावेन दकारस्य धकारे, घकारस्य 'खरि च' इति चर्त्वम्। दहतु। अदहत्। दहेत्। दह्यात्। अधाक्षीत्—घत्वादि पूर्ववत्। अदाग्धाम्—झलि सिज्लोपः। दिधक्षति। दंदह्यते—'लुपसद' इत्यादिना यङ्। 'जपजभ' इति नुक्—दंदग्धि। दाहयति। अदीदहत्। परिदाही—'सम्पृच' इत्यादिना घिनुण्। निदाघः। अवदाघः। पर्यायौ। 'संज्ञायां मेघनिदाघावदाघार्घाः' इति न्यङ्क्वादिपाठात् कुत्वम्। दहनम् ॥९८८॥

७११. मिह सेचने। मेहति। मिमेह। मिमेहिथ। मिमिहिव—क्रादिनियमादिट्। मेढा—ढत्वधत्वष्टुत्वढलोपगुणाः। मेक्ष्यति—ढत्वकत्वे। मेहतु। अमेहत्। मेहेत्। मिह्यात्। अमिक्षत्—'शल इगुपधाद्' इति क्सः। मिमिक्षति—'हलन्ताच्च' इति सनः किस्वान्न गुणः। मेमिह्यते। मेमेढि। मेमीढः—'ढ्रलोपे' इति दीर्घः। मेहयति। अमीमिहत्। मेढ्रम्—'दाम्नी' इत्यादिना ष्ट्रन्। मेघः-अचि 'संज्ञायां मेघ' इति न्यङ्क्वादिषु पाठात् कुत्वम्। मीढ्वान्—'दाश्वान्साह्वान्मीढ्वांश्च' इति क्वसावद्वित्वानिट्त्वोपधादीर्घत्वढत्वानि निपात्यन्ते। मिहिरः-'इषिमदि' इत्यादिना किरच् ॥९८९॥

७१२. स्कन्धादय एतदन्ता अनुदात्ता उदात्तेतः[2]

७१३. कित निवासे रोगापनयने च।

७१४. अयमुदात्तेत्। गुपिवद्वयमपि नित्यसन्नन्तः। चिकित्सति—'गुप्तिज्'

---

१. भ० का० १।२६। २. सूत्रमिदं क्षीरस्वामिना 'कित निवासे' इत्यस्यानन्तरं पठितम्।

इति सन्। अस्य सनोऽनार्द्धधातुकत्वान्नेटः प्रसङ्गः, नापि गुणस्य। अत्र वृत्तौ—'व्याधिप्रतीकारे सन्' इति यदुक्तं तदुपलक्षणम्; यतः स्वयमेव 'क्षेत्रियच् परक्षेत्रे चिकित्स्यः' इत्यत्र निग्रहापनयननाशनाद्यर्थान् वक्ष्यति। तथा च 'य एवं विद्वान्विचिकित्सति' इत्यादौ संशयेऽपि प्रयुज्यते। निघण्टुरपि—'विचिकित्सा तु संशयः' इति[1]। चिकित्सिषति—इच्छासनन्तादेव सन्प्रतिषेधः। केतयतीति चौरादिकस्य। अत्राभरणकारो गुपादिसूत्रे 'गुप्तिज्किद्भ्यः' इत्यनुक्रम्य "'गुपादिष्वनुबन्धकरणमात्मनेपदार्थम्' इति भाष्ये वार्त्तिके चोक्तत्वात् कितिः परस्मैपदिषु पठितोऽपि आत्मनेपदी। न च गुपादिष्विति बहुवचनं वक्ष्यमाणमर्थपेक्षमिति वक्तुं युक्तम्; यतस्तु खलु तत्र गुप्तिज्किदित्यनुक्रम्य गुपादिष्वित्युक्तम्'' इत्याह। कैयटे तु 'क्रमदर्शनाय कितिः पठितो न त्वयमनुदात्तेत्' इति। हरदत्तोऽपि–'गुपादिष्विति बहुवचनं मान्बधसूत्राभिप्रायं कितिस्तु परस्मैपदी' इत्याह। इन्दुरपि 'गुप्तिजावनुदात्तेतौ न कितिः, तस्य चिकित्सतीत्येव प्रयोगः' इति। एवं स्वामिकाश्यपादयोऽपि। एवं बहुभिर्महाग्रन्थैर्विरोधात्परस्मैपदिषु पाठादाभरणाद्युक्तं यत्किञ्चित् ॥९९०॥

७१५. दान अवखण्डने।

७१६. शान तेजने।

७१७. इमावपि नित्यसनन्तौ स्वरितेतौ। दीदांसति। दीदांसते॥ शीशांसति। शीशांसते—'मान्बध' इत्यादिना सनीत्वे च कृतेऽभ्यासस्य दीर्घः। सन्नयं नार्द्धधातुक इति नेट्प्रसङ्ग इत्युक्तम्। 'दानेरार्जवे, शानेर्निशाने' इति वृत्तावर्थविशेषेऽयं सनुक्तः। दानयति। शानयतीत्यादि चौरादिकस्य ॥९९१-९९२॥

७१८. डुपचष्[2] पाके। इतो वहत्यन्ता अनुदात्ताः स्वरितेतः। पचति। पपाच। पेचतुः। पपक्थ, पेचिथ। पक्ता। पक्ष्यति। पचतु। अपचत्। पचेत्। पच्यात्। अपाक्षीत्॥ पचते। पेचे। पक्ता। पक्ष्यते। पचताम्। अपचत। पचेत। पक्षीष्ट। अपक्त। अपक्षाताम्—झलि सिज्लोपः। स्वामिदासौ पचतः इत्यत्र दासधर्मस्य स्वामिन्यारोपात् परस्मैपदम्। 'पचते इत्यत्र स्वामिधर्मस्य दासे समारोपात्तङ्' इति कैयटादौ। पिपक्षति, पिपक्षते, पापच्यते। पापक्ति। पापक्तः। कृष्टे स्वयमेव पच्यन्ते इति कृष्टपच्याः—राजसूयादौ क्यपि निपात्यते। 'कर्मकर्त्तरि निपातनम्' इति वृत्तिः। पचः—अच्। श्वानं पचतीति श्वपचः—पचादिपाठसामर्थ्यात्कर्मोपपदादप्यच्। उक्तञ्च—

अज्विधिः सर्वधातुभ्यः पठ्यन्ते च पचादयः। अण्बाधनार्थमेव स्यात् सिध्यन्ति श्वपचादयः॥

इति। श्वपाकः। मांसपाकः। पिण्डपाकः। कपोतपाकः—अत्र न्यङ्क्वादिपाठात्

---

१. अ० को० १।५।३। २. 'डुपचँष्' इति क्षीरतरङ्गिण्यां प्रामादिकः पाठः। स्वाम्यनुरोधेन 'डुपचँष्' इति स्यात्।

कर्मण्यणि कुत्वम् । दूरेपाकः । फलेपाकः—न्यङ्क्वादिपाठादचि वृद्धिकुत्वे । 'तत्पुरुषे कृति' इत्यलुक् । 'न्यङ्क्वादिपाठादेव चेमौ कर्मकर्त्तरि' इति वृत्तौ । क्षणेपाक इति इति केचित्पठन्ति । दूरेपाका फलेपाका इति टाबन्तावन्ये । उकारान्तावपरे—दूरेपाकुः फलेपाकुरिति । उप्रत्ययो निपातनादिति वृत्तौ । प्रस्थंपचः । मितंपचः । नखंपचः—'परिमाणे पचः' 'मितनखे च' इति परिमाणवाचिनि कर्मण्युपपदे मितनखयोश्च खच् । उत्पचिष्णुः—'अलंकृञ्' इत्यादिनेष्णुच् । पचेलिमाः माषाः—'केलिमर उपसङ्ख्यानम्' इति केलिमर् । 'अयं कर्मकर्त्तरि' इति वृत्तिः । रेफः 'उपोत्तमं रिति' स्वरे विशेषणार्थः । पक्त्रिमम्—'ड्वितः क्त्रिः' इति क्त्रिप्रत्यये 'क्त्रेर्मम्नित्यम्' इति मप् । पाकेन निर्वृत्तं पाकिमम्—'भावप्रत्ययान्तादिमप् वक्तव्यः' इति इमप् । पक्तिः—'स्थागापापचः' इति क्तिन् । षित्वादङि—पचा । पक्वः, पक्ववान्—'पचो वः' इति निष्ठातकारस्य वकारः । तस्य पूर्वत्रासिद्धत्वाज्झलपरत्वात् 'चोः कुः' इति कुत्वम् । प्रपक्वानि फलानीत्यत्र 'कुमति च' इति कवर्गवत्युत्तरपदे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य प्राप्तं णत्वम् 'युवादीनां प्रतिषेधः' इति न भवति । पाकः । पचनम् । मांसस्य पाको मांस्पाकः, मांसपाकः । एवं मांसस्य पचनं मांस्पचनम्, मांसपचनम् । 'मांसस्य पचि युड्घञोः' इति पक्षेऽन्तलोपः । पचनः—'भृशि' इत्यादिना युच् । 'अयं द्विकर्मकः' इति नाथतावुक्तम्, तेन तण्डुलानोदनं पचतीति भवति । अत्र कैयटकारः—'अत्र विक्लेदनोपसर्जननिवर्तनार्थो धातुरिति तण्डुलानां विक्लेदनापेक्षं कर्मत्वम् । ओदनस्य तु प्रधानभूतनिवर्त्तनापेक्षम्' इति तण्डुलानोदनं पचतीति प्रयोगः प्रकृतिविकारभावविवक्षायाम् । तण्डुलैरोदनं पचतीति साधकतमत्वविवक्षायाम् । उदुम्बरः फलं पच्यते—'दुहिपच्योर्बहुलं सकर्मकयोः' इति कर्तुः कर्मवद्भावः । अत्र कैयटः—'वृक्षस्य कर्तृत्वविवक्षायामत्यन्तमप्राप्ते वचनम्' । अन्ये त्वाहुः—"पचिरत्र विषये द्विकर्मकः । वृक्षस्य पाकमन्तरेण फलपाकासम्भवात् वृक्षोऽकथितं कर्म । तस्यैव च यदा कर्तृत्वविवक्षा तदाऽयं कर्मवद्भावः । एवंविधे विषये कर्मवद्भाव इष्यते, न पुनरोदनं पचतीत्यादौ" इति । व्यक्तीकरणे पक्ष्यते इत्यादि गतम् ॥९६३॥

७१९. षच समवाये । केचिदमुं न पठन्ति । ते 'ब्रुविशासिगुणेन च यत्सचते' इति भाष्यप्रयोगं 'ऋदूदरेण सख्या सचेय' इत्यादिप्रयोगं च षच सेचने इत्यस्यानुदात्तेतो धातूनामनेकार्थत्वात्समवायार्थस्य सम्बध्यमानकर्तृके व्यापारे वर्त्तमानस्य समर्थयन्ते । अन्ये तु 'षप समवाये, रप लप व्यक्तायां वाचि' इति परस्मैपदिषु गतस्य पकारान्तस्य स्थानेऽमुं पठन्ति । यदाह 'अकथितं च' इत्यत्र हरदत्तः 'सचते ...... सम्बध्यते' इति वृत्तिमुपादाय—"षच समवाये स्वरितेत् । केचित्तु परस्मैपदिभिः सह धातुमेनं पठन्ति । 'षच समवाये, रपलप व्यक्तायां

वाचि' इति ते आहुः । षच सेचने इत्यस्यानुदात्तेतोऽनेकार्थत्वाद्धातूनां समवाये वृत्तिरिति" इति । पुरुषकारे तु हरदत्तोक्तमनुक्रम्य–'सचते इति भाष्यानौचित्यात्परस्मैपदिषु पाठोऽयुक्तः' इत्युक्तम् । एवं 'षच सेचने इत्यस्यानुदात्तेतोऽनेकार्थत्वाद्धातूनां समवाये वृत्तिः' इति हरदत्तोक्तं प्रौढिवादमात्रम् । न्यासे तु—सचते इत्यस्य 'षच समवाये' इत्येव धातुरुक्तः, एवञ्च षपेत्येव परस्मैपदिषु पाठः । पान्तकाण्डं चैवमनुसृतं भवति । एवमेव मैत्रेयरक्षितादयः । शाकटायनक्षीरस्वामिनौ तु सप्न, सप्निरित्युदाहृत्य 'सचेति केचित्पठन्ति' इत्याहतुः । 'सचति सचिवः इत्यप्याह' इत्युक्तम् । एवं च न्यासकारादीनां बहूनामभिमतत्वादयं धातुरस्माभिः पठितः । अयं च 'पचिं वचिम्' इत्यादौ व्याघ्रभूतिकारिकायां चकारान्तानामनिटां परिगणनात्सेट् । अनिटां मध्ये पाठस्तु स्वरितेत्त्वसाम्यात् । सचति । ससाच । सेचतुः । सेचिथ । सेचिव । सचिता । सचिष्यति । सचतु । असचत् । सचेत् । आशिषि—सच्यात् । असचीत्, असाचीत्–'अतो हलादेः' इति वा वृद्धिः । सिसचिषति–'स्तौतिण्योरेव' इत्यषत्वम् । सासच्यते । सासक्ति । साचयति । असीषचत् । सिषाचयिषतीत्यत्र णेः सनि षत्वम् । सचते इत्यादि सेचनार्थवत् ॥९९४॥

७२०. भज सेवायाम् । भजति । बभाज । भेजतुः । भेजिथ, बभक्थ । भेजिव—'तॄफलभजत्रपश्च' इति किति लिटि सेटि थलि च परत्वादेत्वाभ्यासलोपौ । भक्ता । भक्ष्यति । भजतु । अभजत् । भजेत् । भज्यात् । अभाक्षीत् । बिभक्षति । बाभज्यते । बाभक्ति । भाजयति । अबीभजत् ॥ भजते । भेजे । भक्तासे । भक्ष्यते । भजताम् । अभजत । भजेत । भक्षीष्ट । अभक्त । अभक्षाताम् । बिभक्षते । विभक्तव्यः । विभज्यः—'द्विवचनविभज्योपपदे' इति निपातनाद्यत् । जन्मभाक्—'भजो ण्विः' इति कर्मोपपदादस्मण्ण्विः । भागी—सम्पृचादित्वाद्घिनुण् । भागः—'खनो घ च' इति चशब्दात् घञः कुत्वम् । सुभगस्य भावकर्मणी सौभाग्यम्—ब्राह्मणादिपाठात् ष्यञ्, 'हृद्भग' इत्युभयपदवृद्धिः । एवं दौर्भाग्यम् अपि । सुभगाया अपत्यं सौभागिनेयः—'कल्याण्यादीनामिनङ्' इति ढकीनङादेशोऽन्त्यस्य, पूर्ववदुभयपदवृद्धिः । एवं दौर्भागिनेयः । भागः—घञ् । भागोऽस्मिन् वृद्धिरायो लाभः शुल्क उपदा वा दीयते । भाग्यं शतम्, भागिकं शतम्—'भागाद्यच्च' इति दीयमानवृद्ध्यायादीनामन्यतमोपाधिकात्प्रथमान्तादस्मिन्निति सप्तम्यर्थे यत् ; चकाराट्ठञ्च । भाग एव भागधेयम्—'भागरूपनामभ्यो धेयः' इति स्वार्थे धेयः । भ्राता—'नप्तृनेष्टृ' इत्यादिना तृनि आदेशो निपात्यते । भ्रातरौ इत्यादौ सर्वनामस्थाने 'अप्तृन्' इति दीर्घो न भवति, तृन्नन्तत्वादेव नप्त्रादीनां दीर्घे सिद्धे तेषां पुनर्ग्रहणादौणादिकानां संज्ञाशब्दानामेषामेवेति नियमार्थत्वात् । 'भ्रातृपुत्रौ' इत्यत्र तु भाष्ये 'बिभर्तीति भ्राता' इति व्युदपादि । भ्रातुरपत्यं भ्रातृव्यः । भ्रात्रीयः—'भ्रातुर्व्यच्च' इति व्यच्छौ । भ्रातृव्यः सपत्नः—'व्यन्सपत्ने' इति व्यन् । सौभ्रात्रम् । दौर्भ्रात्रम्—युवा-

दिपाठाद्भावकर्मणोरण्। भ्राता च स्वसा च भ्रातरौ—'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' इति भ्रातुः शेषः। कल्याणी भक्तिरस्य कल्याणीभक्तिः—प्रियादिषु भक्तिशब्दस्य पाठात् 'स्त्रियाः पुंवत्' इति पुंवद्भावो न भवति। दृढभक्तिः इत्येतत् कुक्कुटाण्डादिवत्स्त्रीपूर्वपदस्याविवक्षितत्वात्सिद्धम्। प्रतिपादितं चैतद् भाष्यादौ। 'भञ्जो आमर्दने' इति रुधादौ। 'भज विश्राणने', 'भाज पृथक्कर्मणि' इति द्वयं चुरादौ। तथात्रैव भजतिः भाषार्थो दण्डके ॥९९५॥

७२१. रञ्ज रागे। रजति—'रञ्जेश्च' इति शप्यनुनासिकलोपः। ररञ्ज। ररञ्जतुः। ररङ्क्थ, ररञ्जिथ। ररञ्जिव—क्रादिनियमादिट्। थलि भारद्वाजनियमादिड्विकल्पः। रङ्क्ता। रङ्क्ष्यति। रजतु। अरजत्। रजेत्। आशिषि रज्यात्—'किदाशिषि' इति कित्त्वादनुनासिकलोपः। अराङ्क्षीत्। अराङ्क्ताम्। अराङ्क्षुः॥ रजते। ररञ्जे। ररञ्जिषे। रङ्क्तासे। रङ्क्ष्यते। रजताम्। अरजत। रजेत। रङ्क्षीष्ट। अरङ्क्त। अरङ्क्षाताम्। रिरङ्क्षति, रिरङ्क्षते। रारज्यते। रारङ्क्ति। रारक्तः—तसो ङित्त्वादनुनासिकलोपः। रजयति मृगान्, रमयतीत्यर्थः। अरीरजत्—'रञ्जेर्णौ मृगरमणे' इति नलोपः। 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वाद् ह्रस्वः। मृगादन्यत्र—रञ्जयति पक्षिणः। तथा रमणादन्यत्रापि रञ्जयति मृगान्, तृणादिदानेन वशीकरोतीत्यर्थः। कर्मकर्त्तरि—'कुषिरञ्जोः प्राचां श्यन्परस्मैपदं च' इति पक्षे श्यन्परस्मैपदयोः—रज्यति वस्त्रं स्वयमेव। रज्यतु। अरज्यत्। रज्येत् इति भवति। अन्यदा यगात्मनेपदयोः रज्यते इत्यादि। श्यनो ङित्त्वाद्यकः कित्त्वाच्च नलोपः। श्यन्विधानं रज्यन्तीत्यत्र 'शप्श्यनोर्नित्यम्' इति नित्यनुमर्थम्। एते च श्यन्परस्मैपदे प्राचांग्रहणस्य व्यवस्थितविभाषात्वाद्यग्विषये। तथा च वार्त्तिकम्—'कुषिरञ्जोः श्यन्विधाने लसार्वधातुकवचनमवचने हि लिङ्लिटोः प्रतिषेधः स्यादिविषये च' इति। अत्र लिङाशीर्विषयः, स हि सार्वधातुकप्रतियोगी। तेन रङ्क्षीष्ट वस्त्रं स्वयमेव। ररञ्जे। रङ्क्तासे। रङ्क्ष्यते। अरञ्जि। अरङ्क्षाताम् इत्यत्र श्यन्परस्मैपदे न भवतः। रजकः—'शिल्पिनि ष्वुन्', 'रजकरजनरजःसूपसङ्ख्यानम्' इति नलोपः। 'रजकस्य वस्त्रं ददाति' इति भाष्ये प्रयोगादिति न्यासे। 'ष्वुन्यकिङत्यपि रञ्जेर्मित्त्वविधानाल्लिङ्गान्नलोपः' इति तरङ्गिणीपदमञ्जर्योः। इदं प्रौढिवादमात्रम्; यतो मित्त्वं 'रञ्जेर्णौ' इति नलोपे 'रजयति मृगान्' इत्यत्र ह्रस्वार्थं स्यात्। तथा नलोपाभावेऽपि अरञ्जि, अराञ्जि; रञ्जंरञ्जम्, राञ्जंराञ्जम् इत्यत्र 'चिण्णमुलोः' इति दीर्घविकल्पार्थं स्यात्। 'दंशसञ्जस्वञ्जां शपि' इत्यत्र भाष्ये तु 'रजकरजनरजःसुपसङ्ख्यानम्' इति नलोपं चोदयित्वा 'कित एवैते त्वौणादिकाः' इति परिहृतम्। अत्र कैयटे—"रजक इति 'क्वुन् शिल्पिसंज्ञयोः' इति क्वुन्प्रत्ययः। रजकी इति तु 'पुंयोगादाख्यायाम्' इति ङीषि। अपुंयोगे तु ङीषा न भाव्यमिति भाष्यकाराभिप्रायः। रजनमित्यत्र 'रञ्जेः क्युन्' इति क्युन्प्रत्ययः, स च बाहुलकात् टिद् द्रष्टव्यः। तेन रजनीति ङीप्

भवति। रज इत्यत्र 'भूरञ्जिभ्यां कित्' इत्यसुन्प्रत्ययः किद्भवति" इत्युक्तम्। एवमेव तत्र पदमञ्जर्यामपि। रागी—सम्पृचादित्वात् घिनुण्। अत्रैव रजेति निर्देशान्नलोपः। रजनं रागः, रज्यतेऽनेनेति वा—'घञि च भावकरणयोः' इति नलोपः। अन्यत्र स्वयमेव रज्यन्ति प्रेक्षकानां मनांसि यत्रेति रङ्गः—'हलश्च' इति घञ्। विरागमर्हति वैरङ्गिकः—'छेदादिभ्यो नित्यम्' इति तदर्हतीति विषये ठक्। अत्र 'विरागो विरङ्गं च' इति पाठाद्विरङ्गादेशः। रजः—असुनुक्तः। विरजीकरोति—'अरुर्मनः' इत्यादिना च्विसलोपौ। 'अस्य च्वौ' इत्यकारस्येकारः। सरजसम्—'अव्ययं विभक्ति' इत्यादिना साकल्येऽव्ययीभावः, अव्ययीभावे चाकाले' इति सहस्य सः, 'अचतुर' इत्यादिपाठादच्। 'अयमव्ययीभावे' इति वृत्त्यादौ। तेनान्यत्र सरजस्कं पङ्कजमित्येव भवति। यस्तु बहुव्रीहौ 'सरजसम्' इति[1] भारविप्रयोगः, स वामनालङ्कारे दूषितः—'न सरजसमित्यनव्ययीभावे' इति[2]। रजोऽस्यास्तीति रजस्वला—'रजः कृष्यासुति' इत्यादिना मत्वर्थे वलच्। 'तसौ मत्वर्थे' इति भसंज्ञया पदसंज्ञाया बाधनात्सकारस्य न रुत्वम्। रजतम्—'पृषिरञ्जिभ्यां कित्' इत्यतच्। रजतस्य विकारो राजतम्—'प्राणिरजतादिभ्योऽञ्' इति षष्ठ्यन्ताद्विकारेऽञ्प्रत्ययः। अत्र 'अनुदात्तादेः' इत्येवाञि सिद्धे पुनरञ्विधानं 'मयड्वैतयोः' इति विकारमयटो बाधनार्थम्। अयं दिवादावपि ॥६६६॥

७२२. शप आक्रोशे। इहाक्रोशो विरुद्धानुध्यानम्। शपति। शशाप। शेपतुः। शशप्थ, शेपिथ। शेपिव—क्रादिनियमादिट्। थलि भारद्वाजनियमादिड्विकल्पः। शप्ता। शप्स्यति। शपतु। अशपत्। शपेत्। शप्यात्। अशाप्सीत्। अशाप्ताम्॥ शपते। शेपे। शप्तासे। शप्स्यते। शपताम्। अशपत। शपेत। शप्सीष्ट। अशप्त। अशप्सातम्। शिशप्सति। शाशप्यते। शाशप्ति। शापयति। अशीशपत्। देवदत्ताय शपते, देवदत्तं शपथेन किञ्चित्प्रत्याययतीत्यर्थः—'शप उपालम्भने' इति अकर्त्रभिप्राये तङ्, 'श्लाघह्नुङ्' इत्यादिना ज्ञीप्स्यमानस्य सम्प्रदानत्वाच्चतुर्थी। 'वाचा शरीरस्य स्पर्शनमुपलम्भनम्' इति वृत्तिः। अत्र हरदत्तः—'त्वत्पादौ स्पृशामि नैतन्मयाकृतमित्येतद्रूपः शपथविशेषः" इति। भागवृत्तिकारस्तु—'उपलम्भनं प्रकाशनम्। देवदत्ताय शपते, किञ्चित्प्रकाशयतीत्यर्थः। वाचा शरीरस्य स्पर्शनमित्यदः कस्यचित्काव्यम्' इति। कैयटे च-'उपलम्भनं प्रकाशनम्' इति। शाकटायनस्तु-'उपलम्भनं प्रकाशनम्, देवदत्ताय शपते एवम्भूतोऽसाविति देवदत्तमाचष्ट इत्यर्थः। अथ वा-स्वाभिप्रायस्य परत्राविष्करणमुपलम्भनं शपथः। देवदत्ताय शपते, वाचा मात्रादिशरीरस्पर्शनेन देवदत्ते स्वाभिप्रायं प्रकाशयतीत्यर्थः'इति। चन्द्रभोजकौमारास्तु 'प्रोषितस्य देवदत्तस्य

---

१. 'सरजसमपहाय केतकीनाम्' इति किरा० १०।२६। २. वामनकृतका० सू० ५।२।६३।

भावाभावयोरुपलब्धव्ययोः किञ्चिदासेवनमुपलम्भनम्, देवदत्ताय शपत इति 'प्रोषितस्य देवदत्तस्य भावाभावायोरुपलब्धव्ययोः किञ्चिदासेवते इत्यर्थः। भोजीयास्तु[1]......। शपः शपथ इति, शीङः शपथ इति वा—'शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः' इत्यथः प्रत्ययः। शबलः—'शपेर्बश्च' इति कलप्रत्यये बकारश्चान्तादेशः। शब्दः—'शाशपिभ्यां ददनौ' इति दन्, 'शब्दवैर' इति निपातनात् बत्वम्। शब्दं करोति शब्दायते—'शब्दवैर' इति क्यङ्। शब्दं करोति शाब्दिकः—'शब्ददर्दुरं करोति' इति द्वितीयान्तात्करोतीत्यर्थे ठक्। माशब्द इत्याह माशब्दिकः—'तदाहेति माशब्दादिभ्य उपसङ्ख्यानम्' इति ठक्। एवं नैत्यशब्दिक इत्यादि। अयं दिवादावपि ॥९९७॥

७२३. त्विष[2] दीप्तौ। त्वेषति। तित्वेष। तित्विषतुः। तित्वेषिथ। तित्वषिव—क्रादिनियमादिट्। त्वेष्टा। त्वेक्ष्यति। त्वेषतु। अत्वेषत्। आशिषि—त्विष्यात्। अत्विक्षत्। अत्विक्षाताम्—'शल इगुपधादनिटः' इति क्सः॥ त्वेषते। तित्विषे। त्वेष्टासे। त्वेक्ष्यते। त्वेषताम्। अत्वेषत। त्वेषेत। त्विक्षीष्ट। अत्विक्षत। अत्विक्षाताम्। अत्विक्षन्त-'क्सस्याचि' इत्यल्लोपः। तित्विक्षति, तित्विक्षते। तेत्विक्ष्यते। तेत्वेष्टि। तेत्विष्टः। त्वेषयति। अतित्विषत्। त्वष्टा-'त्विषेर्देवतायामकारश्चोपधायाः' इति तृनि उपधाया अत्वम्। त्वष्टारौ—'ऋतोऽङि' इति गुणे 'अप्तृन्' इत्यादिना दीर्घोऽसम्बुद्धौ सर्वनामस्थाने तृन्नन्तत्वादेव सिद्धे नप्त्रादीनां ग्रहणमव्युत्पत्तिपक्षे विध्यर्थं व्युत्पत्तिपक्षे नियमार्थं संज्ञाशब्दानामेषामेव' इति वृत्तौ। त्वष्टुरिदं त्वाष्ट्रम्—'अचामादेरचो वृद्धिरन्त्यलक्षणां वृद्धिं बाधते' इति वृत्तौ। त्विट्—सम्पदादित्वात् क्विप्। 'अवपूर्वोऽयं दाननिरसनयोः' इति मैत्रेयादयः ॥९९८॥

७२४. यज देवपूजासङ्गतिकरणदानेषु। यजति। इयाज। ईजतुः। इयजिथ, इयष्ठ। ईजिव—क्रादिनियमादिट्। थलि भारद्वाजनियमादिड्विकल्पः। इडभावे झलपरत्वात् 'व्रश्च' इत्यादिना षत्वम्। किति 'वचिस्वपियजादीनां किति' इति सम्प्रसारणे पुनःप्रसङ्गविज्ञानाद् द्विर्वचनम्, अकिति 'लिट्यभ्यासस्योभयेषामिति सिद्धे पुनस्तत्करणं विध्यत्यादौ परमपि हलादिशेषं बाधित्वा सम्प्रसारणं यथा स्यादिति। यष्टा। यक्ष्यति। यजतु। अयजत्। यजेत्। आशिषि कित्त्वात्सम्प्रसारणे—इज्यात्। अयाक्षीत्। अयाष्टाम्। यजते। ईजे। यष्टासे। यक्ष्यते। यजताम्। अयजत। यजेत। यक्षीष्ट। अयष्ट। अयक्षाताम्। यियक्षति। यियक्षते। यायज्यते। यायष्टि। याजयति। अयीयजत्॥ इज्यते-यकि संप्रसारणम्। ऐज्यत इत्यत्र

---

१. अत्र ख. पुस्तके 'भोजीयास्तु'—इति पठित्वा टिप्पण्याम् 'अत्र ग्रन्थो गलित इव भाति' इत्युल्लिखितम्, वयमप्येतदेवानुमिनुमः। २. 'त्विषा' इति क्षीरतरङ्गिणीपाठश्चिन्त्यः।

लमङ्गं चापेक्षमाणादडागमादन्तरङ्गत्वात्पूर्वं लादेशः। कृते च लादेशे नित्यत्वादटः पूर्वं यक्। अत्र यगटोरुभयोरपि कृताकृतप्रसङ्गित्वाविशेषेऽप्यडागमो यकि कृते तदन्तस्याङ्गस्य, अकृते तु केवलस्येति शब्दान्तरप्राप्त्या नित्यः। कृते च यकि नित्यत्वात्सम्प्रसारणे पश्चादजादित्वादाडागमः। नन्वत्राटः प्राप्तिराटा बाध्यते, न तु संप्रसारणेनैवेति 'यस्य च लक्षणान्तरेण निमित्तं व्याहन्यते न तदनित्यम्' इति अट् कथमनित्यः? अत्र हरदत्तः—"'यस्य च लक्षणान्तरेण' इति न्यायोऽनित्यत्वादिह नाश्रीयते" इति; यद्वा—"'सम्प्रसारणं सम्प्रसारणाश्रयं च बलवत्' इति अटः पूर्वमेव सम्प्रसारणं भविष्यति"; अथ वा—'परित्यज्यापवादविषयमुत्सर्गोऽभिनिविशते' इत्याट् पश्चाद्भविष्यति'' इत्यडागमो नैवात्र प्रसजति। याज्यम्—ण्यति 'यजयाच'इति कुत्वनिषेधः। यागः—घञि 'चजोः कुघिण्ण्यतोः' इति कुत्वम्। सोमेनेष्टवान् सोमयाजी—'करणे यजः' इति करणवाचिन्युपपदे भूते णिनिः। यज्वा—'सुयजोर्ङ्वनिप्' इति भूते ङ्वनिप्। यजमानः—'पूङ्यजोः शानन्' इति शानन्। शानचि चैवम्। यजमानस्य भावकर्मणी याजमानम्—युवादित्वादण्। यायजूकः—'यजजपदशां यङः' इति यङन्तादूकः प्रत्ययः, अल्लोपयलोपौ च। इष्टिः—'श्रुयजीषिस्तुभ्यः करणे' इति क्तिन्। इज्या—'व्रजयजोर्भावे क्यप्' इति क्यप्। यज्ञः—'यजयाच' इति नङ्प्रत्यये श्चुत्वम्। यज्ञविद्यामधीते वेद वा याज्ञविद्यिकः-'क्रतूक्थादिसूत्रान्ताट्ठक्' इति उक्थादिषु पाठाट्ठक्। याज्ञिकानां धर्म आम्नायो वा याज्ञिक्यम्—'छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः' इति षष्ठ्यन्ताद्धर्माम्नाययोर्ञ्यः। यज्ञमर्हतीति यज्ञियो यजमानः—'यज्ञर्त्विग्भ्यां घखञौ' इति द्वितीयान्तादर्हतीत्यर्थे घः। यज्ञकर्मार्हति यज्ञिय ऋत्विक्—'यज्ञर्त्विग्भ्यां तत्कर्मार्हतीति चोपसङ्ख्यानम्' इति घः। ऋत्विक्—ऋतौ यजति, ऋतुं यजति, ऋतुप्रयुक्तो वा यजतीति 'ऋत्विक्' इत्यादिना क्विनि निपातितः। नवयज्ञोऽस्मिन्वर्तते नावयज्ञिकः—'तदस्मिन्वर्तत इति नवयज्ञादिभ्य उपसङ्ख्यानम्' इति ठक्। एवं पाकयज्ञिकः। इष्टमनेन इष्टी—'इष्टादिभ्यश्च' इति प्रथमान्तात्तृतीयार्थे इनिः। यजुः—'अर्तिपूवपि' इत्यादिनोसिप्रत्ययः। ऋग्यजुषम्—'अचतुर' इत्यादिना द्वन्द्वेऽजन्तो निपात्यते। यद्—'त्यजियजितनिभ्यो डित्' इत्यदिप्रत्यये डित्वाट्टिलोपः। त्यच्छब्दवत्सर्वनामकार्यं त्यदादिकार्यं च। यस्मिन्काले यदा—'सर्वैकान्य' इत्यादिना दाप्रत्ययः। 'प्राग्दिशो विभक्तिः' इति विभक्तित्वात्त्यदाद्यत्वम्। यस्मिन्काले यर्हि—'अनद्यतने र्हिल्' इति र्हिल्। पूर्ववद्विभक्तित्वात्त्यदाद्यत्वम्। यत्परिमाणमस्य यावान्—'यत्तदेतेभ्यः परिमाणे वतुप्' इति परिमाणोपाधिकात्प्रथमान्ताद्यदादेरस्येत्यर्थे षष्ठ्यर्थे वतुप्। अर्थादिह षष्ठ्यर्थः परिमाणी। 'आ सर्वनाम्नः' इति दृग्दृशवतुषु परेष्वित्याकारः। सौ 'अत्वसन्तस्य' इति दीर्घः, 'उगिदचाम्' इति नुम्, हल्ङ्यादिसंयोगान्तलोपौ। 'उगितश्च' इति

ङीपि—यावती। 'बहुगणवतुडति सङ्ख्या' इति सङ्ख्यात्वात् यावतां पूरण इति विगृह्य 'तस्य पूरणे डट्' इति षष्ठ्यन्तात्सङ्ख्याशब्दात्पूरणे डटि कृते 'वतोरिथुक्' इति इथुगागमः—यावतिथः। यतरो भवतो देवदत्तः स आगच्छतु—'किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच्' इति द्वयोर्मध्ये जातिक्रियासञ्ज्ञाभिरेकस्य निर्धारणे पृथक्करणे गम्यमाने स्वार्थे डतरच्। महाविभाषयास्य विकल्पनाद् यो भवतोरित्यपि भवति। यतमो भवतां ब्राह्मणः स आगच्छतु—"वा बहूनां जातिपरिप्रश्ने डतमच्" जातिश्च परिप्रश्नश्च जातिपरिप्रश्नं समाहारद्वन्द्वः, तद्विषयेभ्यः किंयत्तद्भ्यो बहूनामेकस्य निर्द्धारणे वा डतमजिति डतमच्। अत्र जातिग्रहणं सर्वैरभिसम्बध्यते। परिप्रश्नग्रहणं तु यत्तदोरसम्भवात्किम एव। वाग्रहणमकजर्थम्। यको भवतां ब्राह्मण इति वाक्यं तु महाविभाषया भविष्यति। डतरडतमेति सर्वादौ पाठादेतदन्तयोस्सर्वनामकार्यं पूर्ववत्। नपुंसकाभ्यामनुपसर्जनाभ्यां डतरडतमान्ताभ्यां परयोः स्वमोरमादेशापवादे 'अद्ड्डतरादिभ्यः पञ्चभ्यः' इत्यदड्डादेशे डित्त्वाट्टिलोपे च यतरत्, यतमत् इति भवति। यद्ययं डिन्न स्यात्सोरदादेशे कृते 'अतो गुणे' इति पररूपत्वं बाधित्वा 'प्रथमयोः पूर्वसवर्णः' इति दीर्घः स्यात्। अमोऽदादेशे तु स्थानिवद्भावेन 'अमि पूर्वः' भविष्यतीति न दोषः। एवं तर्हि पूर्वसूत्रादमनुवर्त्त्य सोरप्यमं कृत्वा 'अद्ड्डतरादिभ्यः' इति पञ्चम्याः षष्ठीं प्रकल्प्य द्वयोरमोः स्थानेऽदादेशः कार्यः, किं डकारेण? किञ्चैवेमकारेणापि नार्थः, दकार एव तु विधेयः, स च 'आदेः परस्य' इत्यमोऽकारस्य भविष्यति, मकारस्य च संयोगान्तलोपे यतरत् यतमदितीष्टं सेत्स्यति? सत्यं सिध्यति; हे यतरदित्यादौ हे कुण्डेत्यादिवत् 'एङ्ह्रस्वात्' इति सम्बुद्धिसम्बन्धिनो हलो विधीयमानो लोपः स्यात्तस्मादयं डित्ववानकारवांश्च कर्त्तव्यः। यका—'प्रत्ययस्थात्' इतीत्वं 'न यासयोः' इति निषिध्यते। यथा, यः प्रकारः—'प्रकारवचने थाल्' इति थाल्प्रत्ययः। यथायथम्—यो य आत्मा यद्यदात्मीयमिति वाक्यार्थः। 'यथास्वे यथायथम्' इति यथाशब्दस्य द्विर्वचनं नपुंसकत्वं चोक्तेऽर्थे निपात्यते। आयथातथ्यम्, अयाथातथ्यम्; आयथापुर्यम्, अयाथापुर्यम्—यथातथायथापुरयोः शब्दयोरव्ययीभावे नञा समासे ब्राह्मणादिपाठात् ष्यञि 'यथातथयथापुरयोः पर्यायेण' इति पूर्वोत्तरपदयोः पर्यायेण वृद्धिः। भाष्ये तु—अयथातथाभाव अयथापुराभाव इति विगृह्यते। तत्र 'सुप्सुपा' इति समासो द्रष्टव्यः॥९९९॥

७२५. डुवप् बीजसन्ताने। वपति। उवाप। उवप्थ, उवपिथ। उवपिव इत्यादि यजिवत्। प्रणिवपति—'नेर्गद' इति णत्वम्। प्रण्यवपत्—'अड्व्यवायेऽपीष्यते' इति णत्वम्। प्रवपाणि—'आनि लोट्' इति उपसर्गस्थान्निमित्तात्परस्य लोट्सम्बन्धिन आनेर्नकारस्य णत्वम्। वाप्यम्—'आसुयुवपि' इति ण्यत्। निवापी—'रक्षश्रुवपीनाम्' इति ग्रहादिपाठाण्णिनिः। उप्त्रिमम्—'ड्वितः क्त्रिः' सम्प्रसारणम्,

'क्त्रेर्मम्नित्यम्' इति मप्। वापिः पृथिवी—'इन् स्वपिवपिभ्यः' इति इतीन्। वापी—'कृदिकारादक्तिनः' इति ङीष्। वप्रः—'वृधिवपिभ्यां रन्' इति रन् प्रत्ययः। बीजसन्तानः क्षेत्रे बीजविकिरणम्। अयं गर्भाधानेऽपि दृश्यते, यथा—'म वः क्षेत्रे परबीजान्यवाप्सुः'। छेदनेऽपि दृश्यते 'केशान्वपति' इति ॥१०००॥

७२६. वह प्रापणे। वहति। उवाह। ऊहतुः। उवहिथ, उवोढ। ऊहिव—क्रादिनियमादिट्। थलि भारद्वाजनियमादिडभावपक्षे ढत्वधत्वष्टुत्वढलोपेषु 'सहिवहोरोदवर्णस्य' इत्योत्वे उवोढ इति भवति। एवमन्यत्रापि तवर्गादौ ढत्वादि। यजिवत्सम्प्रसारणम्। वोढा। वक्ष्यति—'षढोः कः सि' इति कत्वे षत्वम्। वहतु। अवहत्। वहेत्। आशिषि कित्त्वात्सम्प्रसारणे—उह्यात्। अवाक्षीत्। अवोढाम्। अवाक्षुः—अत्र ढत्वादीनामसिद्धत्वात्पूर्वमेव हलन्तलक्षणायां वृद्धौ पश्चाड्ढत्वादीति। अवोढामित्यत्राकारस्य 'सहिवहोः' इत्योत्वे पुनर्वृद्धिः प्रागेव कृतत्वान्न भवति॥ वहते। ऊहे। ऊहिषे। वोढा। वक्ष्यते। वहताम्। अवहत। वहेत। वक्षीष्ट। अवोढ। अवक्षाताम्। अवक्षत। अवोढाः। अवोढम्। अवक्षि। प्रवहति—'प्राद्वहः' इति कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदम्। केचित् 'परेर्मृषः' इत्यत्र वहिमनुवर्त्त्य परिपूर्वादपि नित्यं परस्मैपदमेवाहुः परिवहति इति। प्रणिवहति—'नेर्गद' इत्यादिना णत्वम्। इदमड्व्यवायेऽपीति प्रण्यवहत् इत्यत्रापि भवति। प्रवहाणि—'आनि लोट्' इति णत्वम्। कर्मणि—उह्यते। औह्यत—अत्र यजिवद्भावेशे यकि सम्प्रसारणे आडागमः। विवक्षति। विवक्षते। वावाह्यते। वावोढि। वावोढः। वावहीति इत्यादि। वाहयति भारं देवदत्तेन; अवीवहत्—अत्र प्रयोज्यस्य 'नीवह्योः प्रतिषेधः' इति कर्मत्वनिषेधः। गत्यादिसूत्रे तु फलतया प्रतीयमानगतयोऽपि गत्यर्थत्वेन गृह्यन्ते इत्ययं प्रतिषेधः। अयं च 'वहेरनियन्तृकर्तृकस्य' इति वचनान्नियन्तृकर्तृकस्य न भवतीति वाहयति यवान्बलीवर्दान् इत्यत्र प्रयोज्यः कर्मैव। नियन्ता सारथिः। वहत्यनेनेति वह्यं शकटादि—'वह्यं करणम्' इति यति निपात्यते। अन्यत्र ण्यति—वाह्यम्। कूलमुद्वहः—'उदि कूले रुजिवहोः' इत्युत्पूर्वाद्वहेः कूलशब्द उपपदे खश्। वः नेनेति वहः—'गोचर' इत्यादिना करणे घः। पुरुषवाहं वहति—पुरुषप्रेष्यो भूत्वा वहतीत्यर्थः। 'कर्त्रोर्जीवपुरुषयोर्नशिवहोः' इति यथासङ्ख्यात् कर्तृवाचिनि पुरुष उपपदे णमुल्। कषादित्वात्तस्यैव धातोरनुप्रयोगः। ऊढः। ऊढिः—निष्ठाक्तिनोः सम्प्रसारणे ढत्वादि। कल्पनाया अपोढः कल्पनापोढः—'अपेतापोढमुक्तपतितापत्रस्तैरल्पशः' इत्यनेन पञ्चमीसमासः। प्रौढः, प्रौढिः—'प्रादूहोढोढ्येषैष्येषु वृद्धिर्वक्तव्या' इति वृद्धिः। प्रवाहणः—ण्यन्तात् नन्द्यादिपाठाल्ल्युः। 'कृत्यचः', 'णेर्विभाषा' इति णत्वम्, 'पूर्वपदात् संज्ञायाम्' इति वा। प्रवाहणस्यापत्यम् प्रावाहणेयः, प्रवाहणेयः—'शुभ्रादिभ्यश्च' इति ढकि 'प्रवाहणस्य ढे' इति पूर्वपदस्य वा वृद्धिः। उत्तरपदस्य तु

नित्या। स्वत एवोत्तरपदस्य वृद्धिमत्त्वेऽपि पुनर्वृद्धिविधानं पूर्वपदवृद्ध्यभावपक्षेऽपि प्रवाहणेयीभार्यं इत्यत्र 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इति पुंवद्भावनिषेधो यथा स्यादिति 'स्त्रियाः पुंवत्' इति पुंवत्त्वं रक्तविकारव्यतिरिक्तार्थे वृद्धिनिमित्ततद्धितान्तस्य स्त्रीप्रत्ययान्तस्य नेति सूत्रार्थः। ननु प्रवाहणेयीशब्दस्य गोत्राभिधायित्वाद् 'गोत्रं च चरणैः सह' इति जातित्वात् 'जातेश्च' इति पुंवद्भावनिषेधस्य सिद्धत्वात्किं तदर्थेन. वृद्धिविधानेन ? एवं तर्हि 'जातेश्च' इत्यस्यानित्यत्वमनेन ज्ञाप्यते। तेन हस्तिनीनां समूहो हास्तिकमित्यत्र लिङ्गविशिष्टपरिभाषया 'अचित्तहस्तिधेनोष्ठक्' इति ठकि 'भस्याऽढे तद्धिते' इति पुंवद्भावो भवति। प्रवाहणेयस्यापत्यं प्रावाहणेयः—"तत्प्रत्ययस्य" इति ढान्तस्य प्रवाहणेयशब्दस्य ञिति णिति किति वा तद्धिते परतः पूर्वपदस्य वा वृद्धिः, उत्तरपदस्य तु नित्या। अत्र बाह्यतद्धितनिमित्ता नित्या वृद्धिः पक्षे बाध्यते। इक्षुवाहणम्—उपरि निपतितेक्षुकं वाहनमित्यर्थः। इक्षुशब्द आहितेष्विक्षुषु वर्त्तते। "वाहनमाहितात्" इति णत्वम्। वाहने यदारोपितं तदाहितमित्युच्यते, तादृक्पूर्वपदस्थान्निमित्तात् परस्य वाहनशब्दस्थनकारस्य णकार इति सूत्रार्थः। आहितादन्यत्र दाक्षिवाहनम्। वह्निः—'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' इति निप्रत्ययः। नित्त्वादाद्युदात्तः। वधूः—'वहेर्धश्च' इति ऊकारप्रत्ययो धश्चान्तादेशः। वध्वा भावकर्मणी वाधवम्–उद्गात्रादित्वादण्। अनड्वान्–'अनसि वहेः' इति क्विप्, 'डश्चानसः' इति उणादिसूत्रेण अनस्युपपदे वहेः क्विप्। अनसोऽन्त्यस्य डकारश्च सम्प्रसारणपूर्वत्वे सौ 'सावनडुहः' इति नुम्। अयं च आदित्यधिकारेणावर्णान्ताद् विधानात् 'चतुरनडुहोः' इत्यामं न बाधते; अन्यथा सर्वनामस्थानमात्रे सावकाशमामं सौ विशेषविहिते नुम् बाधेत। हकारस्य संयोगान्तलोपः। 'वसुस्रंसु' इत्यादिना दत्वं पूर्वत्रासिद्धत्वात् न भवति। हे अनड्वन् इत्यत्र आमं बाधित्वा 'अम् सम्बुद्धौ' इति अमागमः। अनेनापि नुमो न बाधः, आदित्यधिकारादेव। अनडुद्भ्यामित्यादौ पदत्वे 'वसुस्रंसु' इत्यादिना दत्वम्। अनडुही, अनड्वाही—गौरादिपाठात् ङीष्यपि पक्षे आमागमः। प्रियोऽनड्वान् यस्य प्रियानडुत्कः—उरःप्रभृतिषु 'अनड्वान्' इति पाठात् कप्। अस्मिन् स्वादौ पदत्वात् दत्वम्, चर्त्वम्। अत्रैकवचनान्तस्य तस्य पाठाद् वचनान्तरेण विग्रहे 'शेषाद्विभाषा' इति कपो विकल्पनात् प्रियानड्वान् इत्यपि भवति। 'अङ्गाधिकारे तस्य च तदन्तस्य' इत्युक्तत्वादत्रापि नुमादि भवति। धेनुश्च अनड्वाँश्च धेन्वनडुहम्–'अचतुर' इत्यादिना द्वन्द्वेऽजन्तो निपातितः।१००१।

७२७. पचादयोऽनुदात्ताः स्वरितेतः।

७२८. सचतिस्तूदात्तः।

७२९. वस निवासे।

७३०. अनुदात्त उदात्तेत्। वसति। ग्राममुपवसति, ग्रामे वसतीत्यर्थः—'उपा-

न्वध्याङ्वसः’ इति उपाद्युपसृष्टस्य वसेराधारस्य कर्मत्वात् द्वितीया। एवं ग्राममनुवसति इत्यादि। ग्रामे उपवसति, अशननिवृत्तिं करोतीत्यर्थः। अत्र ‘वसेरश्यर्थस्य प्रतिषेधः’ इति कर्मत्वनिषेधः। अत्र अशिशब्देन अशननिवृत्तिरुच्यते, यद्वार्थशब्दो निवृत्तिवचनः, यथा—‘श्लेष्मणोऽर्थे कटुकमौषधम् प्रयुञ्जीत’ इति, तेनाशननिवृत्तेः सम्बन्धिनो वसेरित्यर्थो भवति। उवास। ऊषतुः। उवसिथ, उवस्थ। ऊषिव—यजिवत् सम्प्रसारणमिट् च। वस्ता। वत्स्यति—‘सः स्यार्द्धधातुके’ इति सकारे तत्वम्। वसतु। अवसत्। वसेत्। उष्यात्। अवात्सीत्। अवात्ताम्। अवात्सुः। तकारादौ ‘झलो झलि’ इति सिज्लोपस्य पूर्वत्रासिद्धत्वात् ‘सस्यार्द्धधातुके’ इति तत्वे कृते पश्चात् सलोपः। क्व भवानुषितः? अहमत्रावात्सम्—‘वसेर्लुङ् रात्रिशेषे जागरणसन्ततौ’ इति लुङ्। यदि कश्चित् केनचित् रात्रिशेषे तुर्ये यामे पृष्टो यामत्रयवासं प्रतिवक्ति तदा लुङित्यर्थः। यामत्रयस्याद्यतनत्वाल्लङि प्राप्ते वचनम्। भूतसामान्यविवक्षयैव लुङि सिद्धे वचनमिदं लङ्निवृत्त्यर्थम्। ‘जागरणसन्ततौ’ इति वचनात् सुप्त्वा प्रतिबुद्ध्य प्रतिवचने नायं नियमः। विवत्सति। वावस्यते। वावस्ति। लङि ‘तिप्यनस्ते’ इति सकारस्य पदान्तत्वाद्दत्वे—अवावत्। सिपि तु ‘सिपि धातो रुर्वा’ इति रुत्वकृतेति अवावः इत्यपि भवति। वासयति। अवीवसत्। अत्र ‘अणावकर्मकात्’ इति परस्मैपदस्य ‘न पादमि’ इत्यादिना निषेधाद् वासयते इत्यपि भवति। उषिवान्—‘भाषायां सदवस’इति भूतसामान्ये लिटो नित्यं क्वसुः। अस्मादेवादेशविधानाद् भूतसामान्ये पक्षे लिडनुमीयते। परस्तादनुवृत्तेर्लङ्, लिड्विषयेऽप्ययं लिडिति सीदतावुपपादितम्। वास्तव्यः—‘वसेस्तव्यत्कर्त्तरि णिच्च’ इति वक्तव्यात् णिद्वद्भावाद् वृद्धिः। अमा सह वसतः सूर्याचन्द्रमसावत्रेति अमावस्या—‘अमावस्यदन्यतरस्याम्’ इति ण्यति पक्षे वृद्ध्यभावो निपात्यते, अन्यदा वृद्धिः—अमावास्या। अमावास्यायां जातम् अमावास्यकम्, अमावास्यम्—‘अमावास्याया वा’ ‘अ च’ इति सप्तम्यन्ताज्जातार्थे वुनकारौ। ‘च’ ग्रहणात् ‘सन्धिवेला’ इत्यादिना शैषिकेऽणि आमावस्यमिति भवति। एकदेशविकृतमिति न्यायेन त्रय एते प्रत्यया अमावस्याशब्दादपि भवन्ति—अमावास्यकम्। अमावास्यम्। आमावास्यम् इति। आवासी—‘याचृव्याहृसंव्याहृव्रजवदवसां प्रतिषिद्धानाम्’ इति ग्रहादिपाठाण्णिनिः। प्रतिषिद्धानां नञ्पूर्वाणामित्यर्थः। प्रवासी—‘प्रे लप’ इत्यादिना घिनुण्। अनुषितो गुरुं शिष्यः, अनुषितो गुरुः शिष्येण—‘गत्यर्थाकर्मक’ इत्यादिना कर्तृकर्मणोः क्तः। अत्र वसिग्रहणं सकर्मकार्थम्। अकर्मकत्वे तु ‘क्तोऽधिकरणे च’ इति कर्तृभावाधिकरणेषु क्तो भवति। उषितः। उषितमनेन। इदमेषामुषितम् इति। उषित्वा। उषितः। उषितवान्—‘वसतिक्षुधोरिट्’ इति क्त्वानिष्ठयोरिट्। ‘न क्त्वा सेट्’ इति निषेधं बाधित्वा ‘मृडमृद’ इत्यादिना सेटः क्त्वः कित्त्वविधानात् सम्प्रसारणम्। उपवस्त्रात्प्राप्तोऽस्य औपवस्त्रम्—‘उपवस्त्रादिभ्य उपसङ्ख्यानम्’ इति तदस्य प्राप्त-

मिति विषयेऽण्प्रत्ययः । प्रवासाय प्रभवति प्रावासिकः । एवम् औपवासिकः–'तस्मै प्रभवति सन्तापादिभ्यः' इति चतुर्थ्यन्तात्प्रभवत्यर्थे ठञ् । वत्सरः । संवत्सरः । परिवत्सरः–'वसेश्च','सम्परिपूर्वाच्च' इति सम्परिपूर्वात्सरप्रत्ययः । चकारादनुवत्सरादयः । संवत्सरे जातं फलं पर्व वा सांवत्सरम्–सन्धिवेलादिषु 'संवत्सरात्फलपर्वणोः' इति पाठाच्छैषिकोऽण्प्रत्ययः । कालाट्ठञोऽपवादः । संवत्सरे देयमृणं सांवत्सरिकम् । सांवत्सरकम्—'संवत्सराग्रहायणीभ्यां ठञ्च' इति सप्तम्यन्ताद् देये ऋणे ठञ्वुञौ । अत्र संवत्सराग्रहायणीभ्यां चेत्युच्यमानेऽप्यनुवृत्त्या ठञ् भविष्यति, तद्विकल्पनात् कालाट्ठञपि । एवं सिद्धे ठञ्चेति प्रतिपदमनयोर्विधानं यदा देयमृणं फलं भवति तदा 'संवत्सरात् फलपर्वणोः' इति प्राप्तस्याणो बाधनार्थम् । द्विसंवत्सरीणः । द्विसांवत्सरिकः—'रात्र्यहःसंवत्सराच्च' इति रात्र्याद्यन्तात् द्विगोः 'तेन निर्वृत्तम्', तमधीष्टो भृतो भूतो भावी' इति विषये खप्रत्ययष्ठञ्च । ठञि 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य च' इति उत्तरपदवृद्धिः । अधीष्टः सत्कृत्य व्यापारितः । भृतो वेतनेन क्रीतः । भूतभाविनौ प्रसिद्धौ । अनुसंवत्सरं दीयते कार्यं वा आनुसांवत्सरिकम्—'तत्र च दीयते कार्यं भववत्' इत्यतिदेशेन कार्यदीयमानयोर्भवलक्षणः कालाट्ठञ् । 'अनुशतिकादीनां च' इति उभयपदवृद्धिः । आवसथः—'उपसर्गे वसेः' इत्यथः । आवसथे वसति आवसथिकः—'आवसथात् ष्ठल्' इति ष्ठल् । षित्वात् स्त्रियाम्—आवसथिकी । आवसतिः—'वहिवस्यर्तिभ्यः कित्' इत्यतिप्रत्ययः । वसतौ साधु वासतेयम्—'पथ्यतिथिवसति' इति ढञ् । वस्नं मूल्यम्—'धापॄवस्यज्यतिभ्यो नः' इति नः । वस्नं हरत्यावहति वा वस्निकः—'वस्नद्रव्याभ्यां ठन्कनौ' इति द्वितीयान्ताद्वस्नाद्धरत्यादिष्वर्थेषु यथासङ्ख्यात् कन् । वस्नेन जीवति वस्निकः—'वस्नक्रयविक्रयाट्ठन्' इति तृतीयान्तात् जीवत्यर्थे ठन् । वसन्तः—'तॄभूवहिवसि' इति झच् । वसन्तसहचरितोऽपि ग्रन्थो वसन्तः, तमधीते वेद वा वासन्तिकः—'वसन्तादिभ्यष्ठक्' इति द्वितीयान्ताद् अध्येतृवेदित्रोष्ठक् । वसन्ते पुष्प्यन्ति वासन्त्यः कुन्दलताः—'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इति सप्तम्यन्ताच्छैषिकोऽण् । एवं साधुपच्यमानयोरपि । वसन्ते उप्तं वासन्तम् , वासन्तकम्—'ग्रीष्मवसन्तादन्यतरस्याम्' इति तत्रोप्तमित्येतस्मिन्विषये वुञणौ । वस्तिः—'वसेस्तिः' इति तिः । वस्तिरिव वास्तेयम्—'वस्तेर्ढञ्' इतीवार्थे ढञ् । वस्तौ भवमपि वास्तेयम्—'दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्' इति सप्तम्यन्ताद् भवार्थे ढञ् । वस्तु—'वसेस्तुन्' इति तुन् । वास्तु—'अगारे णिच्च' इति तुनोर्णित्त्वाद् वृद्धिः । वस्त्रम्—ष्ट्रन् । वस्त्रं समाच्छादयति संवस्त्रयति—'मुण्डमिश्र' इत्यादिना णिच् । 'वस्त्रात्समाच्छादने' इति वृत्तिः । वासिः—'वसिवपियजिराजिव्रजिध्वजिवदिवजिसदिहनिवाशिवारिभ्य इञ्' इतीञ्प्रत्ययः । वसु—'शॄस्वृस्निहि' इत्यादिना उप्रत्ययः । वसुमत्तमो वसिष्ठः । वसुमत्तरो वसीयान्—मतुबन्तादिष्ठनी-

सुनोः 'विन्मतोर्लुक्' इति मतुपो लुकि 'तुरिष्ठेमेयस्सु' इति वर्त्तमाने 'टेः' इति टिलोपः। अस्मादेव लुग्विधानाद् गुणवचनादपि मत्वन्तादिष्ठन्नीयसुनावनुमीयेते। वासिष्ठः। वासिष्ठौ। वसिष्ठाः—'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यपत्यार्थेऽण्। तस्य 'अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च' इति बहुषु लुक्। श्वो वसीयः श्वोवसीयसम्—'श्वसो वसीयः श्रेयसः' इति समासान्तोऽच्। आच्छादनेऽयमदादिः। स्तम्भने दिवादिरुदित्। स्नेहनादौ कथादिश्चुरादिश्च। वास उपसेवायाम्, निवास आच्छादने इति च कथादिः॥१००२॥

७३१. वेञ् तन्तुसन्ताने। वयति। वयते। उवाय। ऊयतुः। ऊयुः। उवयिथ। ऊयथुः। ऊय। उवाय, उवय। ऊयिव। ऊयिम—'वेञो वयिः' इति लिटि वा वयादेशः। तस्य किति 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च' इति सम्प्रसारणम्। चकारात् किदनुकृष्यते। अकिति तु 'लिट्यभ्यासस्योभयेषाम्' इति अभ्यासस्य सम्प्रसारणम्। सर्वत्र यकारस्य 'लिटि वयो यः' इति निषेधान्न सम्प्रसारणम्। सर्वत्र क्रादिनियमादिट्। थलि 'अचस्तास्वत्' इति निषेधो न भवति; वयेस्तासावसत्त्वात्। अत एव भारद्वाजविकल्पोऽपि न भवति। किति लिटि 'वश्चास्यान्यतरस्यां किति' इति पक्षे यकारस्य वकारे–ऊवतुः, ऊवुः इत्यादि। वयादेशस्य स्थानिवद्भावेन ञित्त्वात्तङि—ऊये। ऊयाते। ऊयिषे। ऊयिढ्वे, ऊयिध्वे। ऊयिवहे। ध्वमि 'विभाषेटः' इति मूर्द्धन्यविकल्पः। अत्रापि वकारादेशपक्षे—ऊवे। ऊवाते इत्यादि। वयादेशाभावपक्षे 'आदेचः' इत्यात्वे ववौ। ववतुः। ववाथ, वविथ। ववथुः। वव। ववौ। वविव। क्रादिनियमादिट्। थलि भारद्वाजनियमाद्विकल्पः। 'आत औ णलः' इति णल औत्वम्। अन्यत्र 'आतो लोप इटि च' इत्याल्लोपः। 'वचिस्वपियजादीनां किति' इति 'लिट्यभ्यासस्योभयेषाम्' इति च प्राप्तं सम्प्रसारणं 'वेञः' इति लिटि निषिद्ध्यते। तङि— ववे। ववाते इत्यादि। वाता। वास्यति, वास्यते। वयतु, वयताम्। अवयत्, अवयत। वयेत्, वयेत। आशिषि—ऊयात्। वासीष्ट—यासुटि 'किदाशिषि' इति कित्त्वे सम्प्रसारणे परपूर्वत्वे च 'अकृत्सार्वधातुकयोः' इति दीर्घः। अवासीत्, अवासिष्टाम्। अवास्त, अवासाताम् इत्यादि। परस्मैपदे 'यमरमनमाताम्' इति सगिटौ। विवासति, विवासते। वावायते। वावाति, वावेति। वावीतः—'ई हल्यघोः' इतीत्वम्। वावति—'श्नाभ्यस्तयोः' इत्याल्लोपः। लोटि ह्यावीत्त्वे—वावीहि। वाययति। अवीवयत्—'शाच्छा' इति युक्। प्रवाय—'न ल्यपि' इति वेञः सम्प्रसारणनिषेधः। तन्तुवायः—'ह्वावामश्च' इति कर्मण्युपपदेऽण् 'आतोऽनुपसर्गे कः' इत्यस्यापवादः। उत्वा। उतम्-सम्प्रसारणपरपूर्वत्वे। निष्प्रवाणिः—नवं वासः प्रोयतेऽस्यामिति प्रवाणी तन्तुवायशलाका भण्यते। निर्गताः प्रवाण्यो यस्मादिति

बहुव्रीहौ 'निष्प्रवाणिश्च' इति निपातनात्कबभावः। 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः ॥१००३॥

७३२. व्येञ् संवरणे। व्ययति। व्ययते। विव्याय। विव्यतुः। विव्युः। विव्ययिथ। विव्याय 'न व्यो लिटि' इत्यात्त्वनिषेधः। णिति वृद्धावायादेशे तस्य 'द्विर्वचनेऽचि' इति स्थानिवत्त्वाद् व्येशब्दस्य द्विर्वचने 'लिट्यभ्यासस्योभयेषाम्' इत्यभ्यास-यकारस्य सम्प्रसारणे परपूर्वत्वम्। सम्प्रसारणं चोभयेषांग्रहणाद्धलादिशेषं बाधित्वा भवति। 'न सम्प्रसारणे सम्प्रसारणम्' इति वकारस्य सम्प्रसारणं न भवति। किति 'वचिस्वपि' इत्यादिना सम्प्रसारणे परपूर्वत्वे द्विर्वचने 'एरने-काचः' इति यण्। थलि 'इडत्यर्त्तिव्ययतीनाम्' इतीट् नित्यम्। अन्यत्र क्रादिनियमादिट्। विव्ये। विव्याते। विव्यिषे। विव्यिध्वे, विव्यिढ्वे। विव्यि-वहे। सर्वत्र 'वचिस्वपि' इत्यादिना सम्प्रसारणे परपूर्वत्वे च द्वित्वम्। व्याता। व्यास्यति, व्यास्यते। व्ययतु, व्ययताम्। अव्ययत्, अव्ययत। व्ययेत्, व्ययेत। आशिषि-वीयात्, व्यासीष्ट—यासुटः कित्त्वात्सम्प्रसारणपरपूर्वत्वयोः 'हलः' इति दीर्घः। अव्यासीत्। अव्यास्ताम्—परस्मैपदे सगिटौ। विव्यासति, विव्यासते। वेवीयते—"स्वपिस्यमिव्येञां यङि' इति सम्प्रसारणे परपूर्वत्वे 'हलः' इति दीर्घे च द्विर्व-चनम्। वाव्येति, वाव्याति। वाव्यीतः। वाव्यति—क्ङितोः 'श्नाभ्यस्तयोः' इत्याकार-लोपः। हलादौ—'ई हल्यघोः' इतीत्वम्। व्याययति—'शाच्छास' इत्यादिना युक्। संव्याय—'व्यश्च' इति ल्यपि सम्प्रसारणनिषेधः। परिपूर्वत्वे तु "विभाषा परेः' इति सम्प्रसारणविकल्पनात् परिवीय, परिव्याय इत्युभयं भवति। नीविः—'नौव्यो यलोपः पूर्वपदस्य च दीर्घः' इति इकारप्रत्यये डित्त्वाट्टिलोपयलोपयोः पूर्वपददीर्घः। नीवी—'कृदिकारादक्तिनः' इति वा ङीष् ॥१००४॥

७३३. ह्वेञ् स्पर्धायां शब्दे च। ह्वयति। ह्वयते। जुहाव। जुहुवतुः। जुहुविथ, जुहोथ। अत्र 'अभ्यस्तस्य च' इत्यभ्यस्तीभविष्यतो ह्वेञः प्रागेव द्विर्वचनात्स-म्प्रसारणेऽन्तरङ्गत्वात्परपूर्वत्वे पश्चाद् द्विर्वचनम्। पूर्वं तु द्विर्वचने 'न सम्प्रसारणे सम्प्रसारणम्' इत्यभ्यासस्य सम्प्रसारणं न स्यात्। व्यवधानान्नायं निषेधः स्यादिति न वाच्यम्; तत्र समानाङ्गग्रहणस्य चोदितत्वात्। तत्र णलि वृद्ध्यवा-देशयोः स्थानिवत्त्वाद्धुशब्दस्य द्विर्वचनम्। अत्र पूर्वं परपूर्वत्वाभावे 'आत औ णलः' इति औत्वं स्यात्। जुहुवतुरित्यादौ 'अचि श्नुधातु' इत्यादिनोवङादेशः। तत्रापि सम्प्रसारणेऽन्तरङ्गत्वात्परपूर्वत्वमवश्यमेवेष्टव्यम्। अन्यथा 'आतो लोपः' इत्याल्लोपे तस्य स्थानिवत्त्वाद् द्विर्वचने 'असिद्धवदत्र' इत्यसिद्धत्वाद्व्यव-धानादुवङ् न स्यात्। थलि गुणः, भारद्वाजनियमादिड्विकल्पः। उत्तमे णलि णित्त्वाभावपक्षे गुणेऽवादेशः। जुहुवे। जुहुवाते। जुहुविषे। जुहुविध्वे, जुहुविढ्वे। ह्वाता, ह्वातासे। ह्वास्यति, ह्वास्यते। ह्वयतु, ह्वयताम्। अह्वयत्, अह्वयत। ह्वयेत्, ह्वयेत।

आशिषि हूयात्, ह्वासीष्ट—यासुटि क्त्विात्सम्प्रसारणे 'हलः' इति दीर्घः। अह्वत। अह्वताम्—'लिपिसिचिह्वश्च' इति परस्मैपदे सिजपवादोऽङ्। आत्मनेपदे तु—'आत्मनेपदेष्वन्यतरस्याम्' इत्यङो विकल्पनात्—अह्वत। अह्वेताम्। अह्वन्त। अह्वास्त। अह्वासाताम्। अह्वासत इत्युभयं भवति। अङि सर्वत्र 'आतो लोप इटि च' इत्याल्लोपः। इदमङ्विकल्पनं कर्त्तरीति, कर्मणि—अह्वायि। अह्वासाताम् इत्यादौ चिण्सिचावेव भवतः। चिण्वदिटि—अह्वायिषातामित्यादि। एवं स्य-सिच्सीयुट्तासिष्वपि ह्वायिष्यते। ह्वायिषीष्ट। ह्वायिता इत्यादि द्रष्टव्यम्। कर्मकर्त्तरि तु—तशब्दे 'अचः कर्मकर्त्तरि' इति चिणो विकल्पनात्तदभावे 'आत्मनेपदेष्वन्यतरस्याम्' इति पक्षेऽङ्। तदभावे सिच्। तस्य च पक्षे चिण्वदिटि—अह्वायि, अह्वत, अह्वास्त, अह्वायिष्ट इति चातूरूप्यम्भवति। निह्वयते। संह्वयते। उपह्वयते। विह्वयते। आह्वयते-'निसमुपविभ्यो ह्वः', 'स्पर्द्धायामाङः' इत्यत्र कर्त्रभिप्राये तङ्। अत्र 'स्पर्द्धा धात्वर्थस्य शब्दनस्य हेतुतया विषयः' इति वृत्त्यादौ स्थितम्। स्पर्द्धमान आह्वानं करोतीत्यर्थः। अत्र च 'ह्वः' इति न प्रयोगस्थस्याकारान्तस्यानुकरणम्, किन्तु धातारेवैजन्तस्य; आत्वन्तु लक्षणवशादिति निह्वयते इत्यादौ तङ् भवति। एकदेशविकृतस्यानन्यत्वान्निह्वास्यते इत्यादिष्वपि। जुहूषति, जुहूषते—'अभ्यस्तस्य च' इति प्रसारणे परपूर्वत्वे 'हलः' इति दीर्घे धातोरिगन्तत्वात् 'इको झल्' इति सनः कित्त्वाद् गुणो न भवति। जोहूयते। जोहोति। जोहूतः। जोहुवति—'हुश्नुवोः सार्वधातुके' इति यणत्र हुरूपस्य लाक्षणिकत्वादनर्थकत्वाच्च न भवति। ह्वाययति। जुहावयिषति। अजूहवत्। अजूहवताम्। अजूहवन्। अत्र 'ह्वः संप्रसारणम्' इति सन्परे चङ्परे णौ च प्रसारणे परपूर्वत्वे वृद्ध्यावादेशयोः 'णौ कृतं स्थानिवत्' इति स्थानिवत्त्वाद्धुशब्दस्य ह्वौशब्दस्य वा द्विर्वचनम्। चङ्युपधाया ह्रस्वः। इदं च सम्प्रसारणम् 'सम्प्रसारणं तदाश्रयं च कार्यंबलवत्' इति वा 'णौ च संश्चङोः' इत्यस्य विषयसप्तमीत्वाद्वा 'आतो युक्' इति युकः प्राक् प्रवर्त्तते। कृते चान्तरङ्गत्वात्परपूर्वत्वमिति युग्न भवति। नन्वत्र 'अभ्यस्तस्य च' इति अभ्यस्तकारणस्य ह्वयतेः संप्रसारणविधानात्सिद्धमेव तदिति किं 'ह्वः सम्प्रसारणम्' इत्यनेनेति? ज्ञापनार्थम्—'अभ्यासनिमित्तप्रत्ययेन व्यवधाने यदि भवति णावेव' इति। तेन ह्वायकमिच्छति ह्वायकीयिषति, ह्वायकीयतेः सन् जिह्वायकीयिषतीत्यादौ सम्प्रसारणं न भवति। एवञ्च सन्परे चङ्परे णौ 'अभ्यस्तस्य च' इत्येव सम्प्रसारणम्। तच्चाभ्यस्तीभविष्यत इति जुहावयिषति, अजूहवत् इत्यत्रापि णिजुत्पत्तेः प्रागेव प्रसारणेऽन्तरङ्गत्वात्परपूर्वत्वे च नैव युक्तः प्रसङ्गः। आह्वः—'आतोऽनुपसर्गे कः' इत्यत्र भाष्ये 'सर्वत्र प्रसारणिभ्यो डो वक्तव्यः' इति डप्रत्यये टिलोपमुक्त्वा "'आतोऽनुपसर्गे कः' इति कप्रत्यये वा परत्वादाल्लोपे सम्प्रसारणे यणि आह्व इति सिद्धम्' इत्युक्तम्। उवङ् तु आल्लोपस्य 'असिद्धवदत्र' इत्यसिद्धत्वाद्व्यवधानान्न भवति। निहवः। अभिहवः। उपहवः। विहवः। आहवः

हवनम् हवः—ह्वःसम्प्रसारणं च न्यभ्युपविषु', 'आङि युद्धे', 'भावेऽनुपसर्गस्य' इत्यप्प्रत्यये प्रसारणम्। आहावः—'निपानमाहावः' इत्यपि प्रसारणे वृद्धौ निपात्यते। निपानमुपकूपं जलाशयः। यत्र गावः पानार्थमाहूयन्ते। आह्वा—'आतश्चोपसर्गे' इति स्त्रियामङ्यालोपः। आहूतिः संहूतिः इति बाहुलकात् क्तिन् ॥१००५॥

७३४. वेञादयस्त्रयोऽनुदात्ता उभयतोभाषाः।

७३५. वद व्यक्तायां वाचि। वदति। उवाद। ऊदतुः। ऊदुः। उवदिथ। ऊद। उवाद, उवद। ऊदिव। यजादित्वात्किति सम्प्रसारणम्। पिति 'लिट्यभ्यासस्य' इत्यभ्यासस्य। वदिता। वदिष्यति। वदतु। अवदत्। वदेत्। आशिषि—उद्यात्। अवादीत्—'वदव्रज' इति वृद्धिः। विवदिषति। वावद्यते। वावदीति, वावत्ति। वादयति। अवीवदत्। वादयते। अवीवदत। वदेः कर्माविवक्षायाम् 'अणावकर्मकात्' इति प्राप्तं परस्मैपदम् 'न पादमि' इत्यादिना निषिध्यते। अभिवदति गुरुं देवदत्तः। अभिवादयते गुरुं देवदत्तं देवदत्तेन वा—'अभिवादिदृशोरात्मनेपद उपसङ्ख्यानम्' इति पक्षे प्रयोज्यस्य कर्मत्वम्। परस्मैपदे तु कर्तृत्वात्तृतीयैव। वदते व्याकरणे यज्ञनारायणार्यः, भासमानस्तत्र सूत्रार्थं वक्तीत्यर्थः। कर्मकरानुपवदते, उपसान्त्वयतीत्यर्थः। वदते यज्ञनारायणार्यः, जानाति वदितुमित्यर्थः। गेहे वदते, तद्विषयमुत्साहमाविष्करोतीत्यर्थः। गेहे विवदन्ते, विमतिपतिता विचित्रं भाषन्ते इत्यर्थः। कुलभार्यामुपवदते, उपच्छन्दयतीत्यर्थः। 'भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः' इति तङ्। भासनं दीप्तिः, उपसम्भाषणमुपसान्त्वनम्, ज्ञानं सम्यगवबोधः। यत्न उत्साहः, विमतिर्नानामतिः। उपमन्त्रणं रहस्युपच्छन्दनम्। एषु उपसान्त्वनमुपच्छन्दनं च धातोरर्थतया विशेषणम्, अन्यद् धात्वर्थस्य। संप्रवदन्ते राजानः, सम्भूयोच्चारयन्तीत्यर्थः—'व्यक्तवाचां समुच्चारणे' इति तङ्। व्यक्तवाचो मनुष्यः। समुच्चारणं सम्भूयोच्चारणम्। अर्थस्वभावादुपसर्गयोगः। अव्यक्तवाक्षु पर्यायोच्चारणे च परस्मैपदमेव—संप्रवदन्ति कुक्कुटाः। ब्राह्मणो वदति, क्षत्रियो वदति इति। अनुवदते कठः कलापकस्य। अनुः सादृश्ये, यथा कलापोऽधीयानो वदति तथा कठ इत्यर्थः—'अनोरकर्मकात्' इति अनुवदतेस्तङ्। अत्र 'अनुः सादृश्ये' इति सादृश्यप्रतिपादनपरत्वादकर्मकत्वम्। अयमपि योगो व्यक्तवाग्विषये एव इति अनुवदति वीणा गायकस्येत्यत्र न तङ्। अकर्मकादित्युक्तेः पूर्वोक्तमनुवदतीत्यत्र च न भवति। विप्रवदन्ते विप्रवदन्ति वा मौहूर्तिकाः, युगपत्परस्परविरुद्धं भाषन्ते इत्यर्थः—'विभाषा विप्रलापे' इति तङ्विकल्पः। विप्रलापो विरुद्धभाषणम्। 'व्यक्तवाचां समुच्चारणे' इति प्राप्ते इयं विभाषेत्यव्यक्तवाक्कर्तृके विरुद्धभाषणे तङ् न भवति—विप्रवदन्ति शकुनयः इति। तथा व्यक्तवाक्कर्तृके विरुद्धभाषणे क्रमिकेऽपि न तङ्—मौहूर्तिकाः क्रमेण विप्रवदन्तीति। धनकामो न्यायमपवदते, धनार्थी न्यायं नाद्रियते इत्यर्थः। 'अपाद्वदः' इति कर्त्रभिप्राये तङ्। अवद्यं पापम्—'अवद्यपण्य' इत्यादिना यति

गर्ह्ये निपात्यते । ब्रह्मोद्यम्, ब्रह्मणो वदनमित्यर्थः—'वदः सुपि क्यप् च' इत्यनुपसर्गे सुप्युपपदे क्यपि प्रसारणम् । चकाराद्यति—ब्रह्मवद्यम् । अनुपसर्गादुपसृष्टाच्च ण्यति वाद्यम्, प्रवाद्यम् इति । मृषोद्यम्—'राजसूय' इत्यादिना भावकर्मणोः क्यपि निपात्यते । अवादी—ग्रह्यादिषु 'याचिव्याहृ' इत्यादिसूत्रेण नञ्पूर्वाण्णिनिः । वदः, वदावदः—पचाद्यचि 'चरिचलिपतिवदीनाम्' इत्यादिना द्विर्वचनमभ्यासस्य त्वागागमः । प्रियंवदः । वशंवदः—'प्रियवशे वदः खच्' इति खच् । परिवादी—सम्पृचादित्वाद् घिनुण् । प्रवादी—'प्रे लप' इत्यादिना घिनुण् । परिवादकः—'निन्दहिंस' इत्यादिना ण्यन्ताद् वुञ् । वावदूकस्यापत्यं वावदूक्यः—'कुर्वादिभ्यो ण्यः' इति ण्यः । कुर्वादिपाठादेव यङन्ताद्वदेरूकप्रत्ययः । प्रवावदूकादयः प्रयोगाश्चिन्त्याः । उदित्वा—'मृडमृद' इत्यादिना सेटः क्त्वः कित्त्वात्प्रसारणम् । अच्छोद्य—'अच्छ गत्यर्थवदेषु' इति अच्छशब्दस्य गतित्वात् समासे ल्यपि प्रसारणम् । वादिः—'वसिवपि' इत्यादिना इञ्प्रत्ययः । वत्सः—'वृतृवदि' इत्यादिना सप्रत्ययः । वत्सलः कामवान्—'वत्सांसाभ्यां कामबले' इति लच्प्रत्ययो मत्वर्थीयः । कामबलशब्दावत्र आद्यजन्तौ तद्वति वर्तेते । वत्सांसशब्दौ वृत्तौ कामबलार्थौ । वत्सतरः—प्रथमवयोऽतिक्रान्त इत्यर्थः । 'वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे' इति प्रवृत्तिनिमित्ततनुत्वोपाधिकार्थादस्माद्वत्सादेः स्वार्थे ष्टरच् । वत्सशब्दस्य प्रवृत्तिनिमित्तं प्रथमवयःसम्बन्धः । षित्त्वान् ङीप् स्त्रियाम्—वत्सतरी । वत्सानां समूहो वात्सकम्—'गोत्रोक्ष' इत्यादिना वुञ् । वादित्रम्—'अशित्रादिभ्य इत्रोत्रौ' इति ण्यन्तादित्रः । अण्यन्ताद्वा हुलकाद् वृद्धिः । वदान्यः—'वदेरान्यः' इत्यान्यप्रत्ययः । अयमाधृषीयश्च ॥१००६॥

७३६. टु ओ श्वि गतिवृद्धयोः ।

७३७. अयं वदतिश्च परस्मैभाषावुदात्तेतौ । श्वयति । शुशाव । शुशुवतुः । शुशुवुः । शुशविथ । शुशुवथुः । शुशुव । शुशाव, शुशव । शुशुविव । शुशुविम—'विभाषा श्वेः' इति लिड्यङोः सम्प्रसारणविकल्पः । अत्र 'सम्प्रसारणं सम्प्रसारणाश्रयकार्यं च बलीयः' इति वा, 'लिड्यङोश्च' इति विषयसप्तमीत्वाद्वा पिद्वचनेषु गुणवृद्धिभ्यामन्यत्र यङश्च पूर्वं सम्प्रसारणेऽन्तरङ्गत्वात् पररूपत्वे च यथायोगं वृद्धिगुणयोरावादेशौ । कित्सु उवङादेशः । 'द्विर्वचनेऽचि' इति स्थानिवत्त्वाच्छुशब्दस्य द्विर्वचनम् । प्रसारणाभावपक्षे—शिश्वाय । शिश्वियतुः । शिश्वियुः । शिश्वयिथ । शिश्वियथुः । शिश्विय । शिश्वाय, शिश्वय । शिश्वयिव । शिश्वयिम । यथायोगं वृद्धिगुणयोरायवौ । कित्स्वियङ् पूर्ववत् । स्थानिवत्त्वाच्छ्विशब्दस्य द्विर्वचनम् । पित्त 'लिट्यभ्यासस्योभयेषाम्' इत्यभ्यासस्य सम्प्रसारणं 'श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः' इति वचनान्न भवति । श्वयिता । श्वयिष्यति । श्वयतु । अश्वयत् । श्वयेत् । आशिषि शूयात्—कित्त्वात् 'वचिस्वपियजादीनाम्'

इत्यादिना प्रमाणे 'हलः' इति दीर्घः। अत्र—'जृम्भम्भु' इत्यङ् वा; तत्र परे 'श्वयतेरः' इतीकारस्याकारे अतो लोपः पररूपं च। अङोऽभावे 'विभाषा धेट्श्व्योः' इति पक्षे चङि द्विर्वचने इयङि—अशिश्वियत। अशिश्वियताम्। अशिश्वियन्। अशिश्वियः। अशिश्वियम्। अशिश्विय। अशिश्वियाव। चङङोरभावे सिचि-अश्वयीत्। अश्वयिष्ट इत्यादि। 'ह्म्यन्तक्षण' इति वृद्धिनिषेधः। शिशिवयिषति। शेश्वीयते। शोशूयते—यङि 'लिड्यङोः' इति वा सम्प्रसारणम्। शेश्वयीति, शेश्वेति। शेश्वितः। शेश्वियति। लुङि प्रकृतिग्रहणन्यायेनाङ्चङोः अशेश्वियत् इत्यादि। अङि 'श्वयतेरः' इत्यत्वं श्तिपा निर्देशान्न भवति इति तदेव रूपम्। यङ्लुकि 'लिड्यङोः' इति च सम्प्रसारणं लुका विषयापहारान्न भवति। सिच्पक्षे अशेश्वयीत्। श्वाययति। अशिश्वयत्, अशूशवत्। शिश्वाययिषति, शुशावयिषति-अत्र 'विभाषा श्वेः' 'णौ संश्चङोः' इति सन्परे चङ्परे णौ भाविनि पक्षे सम्प्रसारणे अन्तरङ्गत्वात्परपूर्वत्वे वृद्ध्यायौ। तयोः स्थानिवत्त्वात् शुशब्दस्य शौशब्दस्य वा द्विर्वचनम्। श्वयथुः—'ट्वितोऽथुच्'। शूनः। शूनवान्-'श्वीदितो निष्ठायाम्' इत्यनिट्त्वम्। अत्र पदमञ्जर्यादौ—'ओदितश्च' इति आदितोऽनन्तरस्य निष्ठातकारस्य नत्वविधानादेवेडभावस्य सिद्धे श्वयतिग्रहणं शक्यमकर्तुम्' इति। उदकेन श्वयत इति उदश्वित्—'क्विप् च' इति क्विप्। 'उदश्वितः' इति निर्देशान् प्रसारणाभावः। 'उदकस्योदः संज्ञायाम्' इति उदकस्योदभावः। उदश्विति संस्कृतम् औदश्वित्कम्—'उदश्वितोऽन्यतरस्याम्' इति सप्तम्यन्तात् संस्कृतमित्यर्थे ठक्। ठस्य 'इसुसुक्तान्तात्कः' इति कादेशः। ठगभावे प्राग्दीव्यतीयेऽणि औदश्वितम्। श्वा—'श्वन्नुक्षन्' इति निपात्यते। शुनः पश्येत्यादौ 'श्वयुवमघोनामतद्धिते' इति तद्धितवर्जिते भसंज्ञानिमित्ते प्रत्यये प्रसारणे परपूर्वत्वम्। 'अतद्धित' इति वचनात् 'प्राणिरजतादिभ्योऽञ्' इति विकारावयवयोः प्राणिलक्षणेऽञि 'नस्तद्धिते' इति टिलोपे 'द्वारादीनां च' इत्यैजागमे च शौवं मांसमिति भवति। शौवः सङ्कोचः—अत्र प्राग्दीव्यतीयेऽणि 'शुनः सङ्कोचे उपसङ्ख्यानम्' इति 'अन्' इति प्रकृतिभावं बाधित्वा टिलोपः। सङ्कोचादन्यत्र शौवनम्। शुने हितं शून्यम्—शुनः सम्प्रसारणं वा च दीर्घत्वम्' इति गवादिपाठाद्यति प्रसारणे वा दीर्घः। अत्र 'नस्तद्धिते' इति टिलोपः कस्मान्न भवति? न च प्रसारणस्य सामर्थ्यादिति वाच्यम्; यतः कृते परपूर्वत्वे टिलोपार्थमेव तत् स्याद्, अन्यथा 'ये चाभावकर्मणोः' इति प्रकृतिभावः स्यात्; दीर्घविधानसामर्थ्यान्न भविष्यति। अस्तु अत्रैवम्, अदीर्घपक्षे कस्मान्न भवति? तदुच्यते; द्वौ चकारौ क्रियेते—वा च दीर्घत्वं चेति। तत्रान्त्यः सांनियोगार्थः, आद्यो भिन्नक्रमः सम्प्रसारणमित्यनेन सम्बध्यते—प्रसारणं चेति। तत्रान्यस्य समुच्चेयस्याभावात् पुनरपि प्रसारणं समुच्चीयते, तच्चाव्यवस्थापनार्थं सत् टिलोपं बाधिष्यते। शुनी—गौरादिपाठान् ङीष्। शुन इव शेपमस्य

शुनःशेपः । एवं शुनःपुच्छः । शुनोलाङ्गूलः—'शेपपुच्छलाङ्गूलेषु शुन उपसङ्ख्यानम्' इति अलुक् । अकारान्तोऽप्यस्ति शेपशब्दो न केवलं सकारान्त इति कैयटपदमञ्जर्यादिषु । शुनो दन्तः श्वादन्तः—'शुनो दन्तदंष्ट्राकर्णवराहपुच्छपदेषु' इति पूर्वपदस्य दीर्घः । एवं दंष्ट्रादिषूदाहार्यम् । श्वादंष्ट्रस्यापत्यं श्वादंष्ट्रिः श्वभस्त्रस्यापत्यं श्वाभस्त्रिः-- * अत्र 'श्वादेरिञि' इति द्वारादिलक्षण ऐजागमो वृद्धिप्रतिषेधश्च निषिध्यते । अयमेव निषेधो द्वारादौ तदादिविधिज्ञापकः । श्वन्शब्दोऽपि तत्र पठ्यते, 'श्वादेरिञि' इत्यत्र वार्त्तिके 'इकारादिग्रहणं च गणिकाद्यर्थम्' इति श्वगणेन चरति श्वागणिकः—'श्वगणाट्ठञ् च' इति चरत्यर्थे तृतीयान्ताट्ठक्ठञौ । आदिशब्देन श्वायूथिकः इत्यादिगृह्यते । अत्र च 'प्राग्वतेः' इति ठक् इञाद्यन्ताद्यदान्यस्तद्धित उत्पद्यते तदापि 'श्वादेरिञि' इति प्रतिषेधो भवत्येव । तथाच तत्र वृत्तिः— 'तदन्तस्य चान्यत्रापि तद्धिते प्रतिषेध इष्यते' इति । तेन श्वाभस्त्रेरिदमिति विगृह्य 'इञश्च' इत्यणि कृते ऐजागमवृद्धिनिषेधयोरभावात् श्वाभस्त्रम् इति भवति । यदा पुनरिकारादेरन्यस्तद्धितो भवति तदा श्वदंष्ट्रायां भवो मणिः शौवादंष्ट्र इति वृद्धिप्रतिषेध ऐजागमश्च भवति । श्वापदे भवः शौवापदः, श्वापदः—'पदान्तस्यान्यतरस्याम्' इति श्वादेः पदशब्दान्तस्य द्वारादिलक्षण ऐजागमो वृद्धिप्रतिषेधश्च पक्षे निषिध्यते । शुनः समीपम् उपशुनम्—'अव्ययं विभक्तिसमीप' इत्यव्ययीभावेऽचतुरादिषु निपातनादच्, टिलोपाभावः, सम्प्रसारणं च । गोष्ठे श्वेव गोष्ठश्वः—अयमप्यचतुरादिषु निपातितः । श्वानमतिक्रान्तः अतिश्वः—'अतेः शुनः' इति टच् अतेरितिवचनात् निश्वा लोष्ट इत्यादौ न भवति । श्वेव पाषाणः पाषाणश्वः— 'उपमितं व्याघ्रादिभिः' इति समासः । "उपमानादप्राणिषु" उपमानवाची यः श्वन्शब्दोऽप्राणिषु वर्त्तते तदन्तात्तृजिति टचि 'नस्तद्धिते' इति टिलोपः । अत्र श्वशब्दः सादृश्यात्पाषाणवृत्तिरित्यप्राणिवचनः । 'अप्राणिषु' इति वचनात् श्वेव वानरः वानरश्वा इत्यादौ टज् न भवति । मातरि सर्वस्य परिच्छेत्तर्याकाशे वर्द्धते इति मातरिश्वा वायुः—'श्वन्नुक्षन्' इत्यादिना मातरि पूर्वपदे श्वयतेः कनिन् इकारलोपो लुक्च निपात्यते, 'तत्पुरुषे कृति वहुलम्' इति चालुक्सिद्धिः ॥१००७॥

७३८ वृत् । यजादयो वृत्ता इत्यर्थः । भूवादिस्त्वशिष्यते इति व्याख्यातारः । तेन चुलुम्पति इत्येवमादीनामाकृतिप्रयोगसिद्धानां संग्रहः सिद्धो भवति ।

इति पूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसङ्गमराजमहामन्त्रिणा मायणपुत्रेण माधवसहोदरेण सायणेन विरचितायां माधवीयायां धातुवृत्तौ शब्विकरणा भ्वादयः ।

* शुभं भूयात् *

---

*इत आरभ्य प्रकरणसमाप्ति यावत् ख. पुस्तके पाठो भ्रष्टः ।

# २. अदादिगणः

१. अद भक्षणे । अत्ति । अत्तः । अदन्ति । अत्सि । अत्थः । अत्थ । अद्मि । अद्वः । अद्मः—'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । 'खरि च' इति चर्त्वम् । जघास । जक्षतुः । जक्षुः । जघसिथ । जक्षथुः । जक्ष । जघास, जघस । जक्षिव । जक्षिम—'लिट्यन्यतरस्याम्' इत्यदेः पक्षे घस्लादेशः । णिति वृद्धिः । उत्तमे तु णिद्विकल्पः । अपित्सु 'असंयोगाल्लिट् कित्' इति कित्त्वे 'गमहन' इत्युपधालोपः, तस्य 'द्विर्वचनेऽचि' इति स्थानिवत्त्वाद् द्विर्वचनम् । 'शासिवसिघसीनां च' इति सकारस्य इण्कोः परत्वे षत्वम्, अत्रोपधालोपस्य पूर्वस्मादपि विधाविति न स्थानिवत्त्वम्, षत्वविधानवैयर्थ्यप्रसङ्गात् । 'पूर्वत्रासिद्धे न स्थानिवत्' इति वा न भवति । घकारस्य 'खरि च' इति चर्त्वात्ककारः । अत्राप्युपधालोपस्य न स्थानिवत्त्वम्, 'न पदान्त' इत्यादिना वा, 'पूर्वत्रासिद्धे न स्थानिवत्' इत्येव वा तन्निषेधात् । 'अचस्तास्वत्' इति थलीण्निषेधस्तासौ सत इत्युक्तम्, तेन घस्लादेशस्य तासावसत्त्वान्नात्र स निषेधः । अत एव तद्विषयो भारद्वाजनियमोऽपि न भवति । अथवा—स्थानिवद्भावात् 'इडत्त्यर्ति' इति नित्यमिड् भविष्यति । नन्वस्ति प्रकृत्यन्तरं घसिस्तासौ सन्नित्यानिट् च तस्मात्थलि जघस्थेति दुवारम्, मैवम्; प्रकृत्यन्तरस्य घसेर्यत्र लिङ्गं वचनं वास्ति तत्रैव प्रयोगो न सर्वत्रेति तत्रैव धातावुपपादितत्वात् । अतो नास्ति लिटि प्रयोगः । घस्लादेशाभावे—आद । आदतुः । आदुः । आदिथ । आदिव—क्रादिनियमादिट् । थलि भारद्वाजनियमः 'इडत्त्यर्तिव्ययतीनाम्' इति बाध्यते । 'अत आदेः' इत्यभ्यासादेर्दीर्घः । अत्ता । अत्तासि । अत्तास्मि । अत्स्यति । अत्स्यसि । अत्स्यामि । अत्तु, अत्तात् । अद्धि । अदानि । आदत् । आदः । आदम्—'अदः सर्वेषाम्' इत्यदोऽङ्गात्परस्य सार्वधातुकापृक्तस्याडागमः । अद्यात् । अद्युः । अद्याम् । आशिषि—अद्यात् । अन्यत्र तु सलोपाभावो विशेषः—अद्यास्ताम् इत्यादि । अघसत् । अघसताम् । अघसन् । अघसः । अघसतम् । अघसत । अघसम् । अघसाव । अघसाम—'लुङ्सनोर्घस्लृ' इति घस्लादेशे लृदित्त्वादङ् । जिघत्सति—घस्लादेशे 'सस्यार्द्धधातुके' इति तत्वम् । आदयतेऽन्नं देवदत्तेनादयति इति वा । आदिदत् । आदिदत्—णिलोपस्य स्थानिवत्त्वाद्दिशब्दस्य द्विर्वचनम् । 'निगरणचलन' इति कर्त्रभिप्राये प्राप्तस्य परस्मैपदस्य 'अदेः प्रतिषेधः' इति निषेधः । 'आदिखाद्योः प्रतिषेधः' इति प्रयोज्यस्य कर्तुः कर्मत्वनिषेधः । व्यत्यत्ते । व्यत्यदाते । व्यत्यदते—'कर्त्तरि कर्मव्यतिहारे' इति तङ् । 'आत्मनेपदेष्वनतः' इति झस्यादादेशः, अनकारान्तादङ्गात्परत्वात् । 'व्यत्यदन्ति वृका मेषान्' इति हिंसायां

द्रष्टव्यम्। तत्र हि 'न गतिहिंसा' इति तङ् निषिध्यते। व्यतिजक्षे। व्यत्यादे। व्यत्यत्ता। व्यत्यत्स्यते। व्यत्यत्ताम्। व्यत्यात्त। व्यत्यदीत। आशिषि—व्यत्यत्सीष्ट। व्यत्यघत्त। व्यत्यात्त—'सस्यार्द्धधातुके' इति तत्वे 'झलो झलि' इति सिचो लोपः। कर्मणि—अद्यते इत्यादि। अदतीं—शत्रन्तात् 'उगितश्च' इति ङीप्। नित्यत्वादन्तरङ्गत्वाच्च नुमः पूर्वं शपो लुगिति 'शप्श्यनोः' इति नुमत्र न भवति। न च प्रत्ययलक्षणमस्ति, तत्रादित्यधिकाराद्वर्णाश्रयत्वाद्वर्णाश्रये च तन्निषेधात्। जग्धः। प्रजग्ध्य—'अदो जग्धिर्ल्यप्ति किति' इति जग्ध्यादेशः। पुत्रो जग्धो यया सा पुत्रजग्धी—'राजदन्तादिषु परम्' इति निष्ठान्तस्य परनिपातः। 'अस्वाङ्गपूर्वपदाद्वा' इत्यस्वाङ्गवाचिपूर्वपदात् क्तान्तादन्तोदात्ताद् बहुव्रीहेर्वा ङीष्। 'वा हृतजग्धपरेषु' इति पुत्रतकारस्य वा द्वित्वम्। अन्नं लब्धा आन्नः—'अन्नाण्णः' इति द्वितीयान्ताद् लब्धेत्यर्थे णप्रत्ययः। अत एवान्नादिति निर्देशात्संज्ञायां न जग्ध्यादेशः। सर्वप्रकारमन्नं भक्षयति सर्वान्नीनो भिक्षुः—'अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु' इति द्वितीयान्तादस्माद्यथासंख्याद् भक्षयतीत्यर्थे खः। काकादनी। गवादनी—ल्युटि गौरादित्वान् ङीष्। प्रात्तीति प्रघसः - अच्, 'अच्युपसङ्ख्यानम्' इति घस्लादेशः। सस्यमत्तीति सस्यात्—'अदोऽनन्ने' इत्यन्नादन्यस्मिन्कर्मण्युपपदे विट्। अन्ने तूपपदे कर्मणि—अन्नादः। सस्याद इति वासरूपेणाणि। क्रव्यात्—'क्रव्ये च' इति विट्। 'अदोऽनन्ने' इत्येव सिद्धे पुनर्विधानं वासरूपबाधनार्थमिति भाष्यादौ स्थितम्। क्रव्यादशब्दस्तु 'कृत्तविकृत्तपक्वमांसशब्दे उपपदेऽणि पृषोदरादित्वादुपपदस्य क्रव्यभावः' इति वृत्त्यादौ। 'व्याप्तं गुहाशयैः क्रूरैः क्रव्यादैः रनिशाचरैः[१]' इत्याममांसभक्ष्ये व्याघ्रादौ भट्टिप्रयोगश्चिन्त्यः। 'राक्षसः काणपः क्रव्यात् क्रव्यादः[२]' इत्यादौ कृत्तविकृत्तपक्वमांसस्यापि भक्षणं सम्भवतीति क्रव्यादव्यवहारः। पुत्रादिनी—'सुप्यजातौ' इति णिनिः। अत्र पुत्रतकारस्य प्राप्तम् 'अनचि च' इति द्वित्वं 'नादिन्याक्रोशे पुत्रस्य' इत्यादिनीशब्दे उत्तरपदे आक्रोशे गम्यमाने नेति निषिध्यते। 'तत्परे च' इतिवचनात्पुत्रपुत्रादिनीत्यत्रापि द्वित्वं न भवति। अद्मरः—'सृघस्यदः क्मरच्' इति क्मरच्। घासः—'अकर्तरि च कारके' इति घञि 'घञपोश्च' इत्यदेर्घस्लादेशः। महत्या घासो महाघासः—'महदात्वे घासकरविशिष्टेषूपसंख्यानम्' इति पुंवद्भाव आत्वञ्च। विघसः—'उपसर्गेऽदः' इत्यप्। नौ तूपपदे 'नौ ण च' इत्यब्णौ भवतः। न्यादः। निघसः—'घञपोश्च' इत्यपि घस्लादेशः। अन्धोऽन्नम् 'अदेर्नुम् धश्च' इत्यसुनि नुमागमः, दकारस्य धकारः। अत्री, अत्ता—राक्षसादिरुच्यते। अत्रिः, ऋषिः—'अदेस्त्रिनि च' इति त्रिनिप्रत्ययः, चकारात्तिप् च। त्रिनेरिकारो नकारपरित्राणार्थः। अत्रेरपत्यम् आत्रेयः—'इतश्चा-

१. भ० का० ६।९३।
२. अ० को० १।१।५९।

नियः' इति ढक्। अस्य बहुत्वे 'अत्रिभृगुकुत्स' इति लुकि अत्रयः—इति भवति। अद्यते फलमूलादिकमत्रेति अद्रिः—'अदिसधिभूशुषिभ्यः क्रिन्' इति क्रिन् प्रत्ययः। अध्वा—'अदेर्धं च' इति कनिप्। दकारस्य च धकारः। अध्वानमलङ्गच्छतीति अध्वन्यः, अध्वनीनः—'अध्वनो यत्खौ' इति द्वितीयान्तादलङ्गामीत्यर्थे यत्खौ। यति 'ये चाभावकर्मणोः' इति, खे तु 'आत्माध्वानौ खे' इति प्रकृतिभावः। विहीनोऽध्वा व्यध्वः। एवं दुरध्वः—'उपसर्गादध्वनः' इत्यच् समासान्तः। उपसर्गग्रहणं प्राद्युपलक्षणम्। प्राध्वं शब्दो मान्तोऽव्ययमानुकूल्यं वर्तते॥ १॥

२. हन हिंसागत्योः। हन्ति। हतः। घ्नन्ति। हन्सि। हथः। हथ। हन्मि। हन्वः। हन्मः—झलादौ क्ङित्यनुदात्तोपदेशेत्यनुनासिकलोपः। झावन्तरङ्गत्वादन्तादेशेऽजादित्वात् 'गमहन' इत्युपधालोपे 'हो हन्तेर्ञ्णिन्नेषु' इति ङिति णिति प्रत्यये नकारे च परे कुत्वविधानात्सोष्मणो घोषवतो नादवतो महाप्राणस्य हकारस्य तादृशो घकारः। अत्रोपधालोपस्य स्थानिवत्त्वं नकारे परतः कुत्वविधानसामर्थ्यान्न भवति। सत्यपि वा स्थानिवत्त्वे वचनसामर्थ्यादीदृशं व्यवधानमाश्रयिष्यते। जघान। जघ्नतुः। जघनिथ, जघन्थ। जघ्नथुः। जघान, जघन। जघ्निव—क्रादिनियमादिट्। थलि भारद्वाजनियमाद्विकल्पः। अचि यत्रोपधालोपस्तत्र 'द्विर्वचनेऽचि' इति स्थानिवत्त्वाद् द्विर्वचनम्। जघ्निवान्, जघन्वान्—'विभाषा गमहनविदविशाम्' इति क्वसोरिड्विकल्पः। इटि 'गमहन' इत्युपधालोपे 'हो हन्तेः' इति कुत्वम्। अनिटि तु 'अभ्यासाच्च' इत्यभ्यासादुत्तरस्य हन्तिहकारस्य कुत्वम्। चान्द्रास्तु भाषायामस्य प्रयोगमिच्छन्ति। हन्ता। हनिष्यति—'ऋद्धनोः स्ये' इतीट्। हन्तु, हतात्। हताम्। घ्नन्तु। जहि, हतात्। हतम्। हनानि—तातङि तस्य ङित्वादनुनासिकलोपः। हौ 'हन्तेर्जः' इति जादेशः। अस्य 'असिद्धवदत्राभात्' इत्यसिद्धत्वात् 'अतो हेः' इति लुङ् न भवति। हतात्त्वमित्यत्र जादेशात्परत्वात्तातङि तस्य स्थानिवद्भावेन हित्वात्पुनर्जादेशः सकृद्गतिपरिभाषया न भवति। अहन्। अहताम्। अघ्नन्। अहन्। अहतम्। अहत। अहनम्। अहन्व—हल्ङ्यादिना तिंस्योर्लोपः। हन्यात्। हन्याताम्। हन्युः। हन्याम्। हन्याव। आशिषि—वध्यात्। वध्यास्ताम्। वध्याः। वध्यास्तम्। वध्यासम्—'हनो वध लिङि' 'आर्द्धधातुके' इति वधादेशे 'ण्यल्लोप' इत्यादिना 'अकृत्सार्वधातुकयोः' इति दीर्घमतो लोपो बाधते। अवधीत्। अवधिष्टाम्। अवधिषुः। अवधीः। अवधिषम्। अवधिष्ट—'लुङि च' इति वधादेशः। अल्लोपस्य स्थानिवत्त्वाद्धलन्तलक्षणा वृद्धिर्न भवति, वधादेशस्यानेकाच्त्वादुदात्तत्वनिपातनादनुदात्तत्वाभावाद्वा सिचो वलादिलक्षण इड् भवति। यङ्लुगन्तस्यापि हन्तेर्लिङ्लुङोः प्रकृतिग्रहणन्यायेन वधादेशे वध्यात्। अवधीत् इत्येव रूपम्। अल्लादेशस्य स्थानिवत्त्वेन यङन्तत्वाद् द्विर्वचनं

स्यादिति न वाच्यम्; एवं हि प्रकृतिगतं साभ्यासत्वमप्यतिदिश्येत, ततश्च 'अनभ्यासस्य' इति निषेधः स्यात् ।

आहते । आघ्नाते । आघ्नते । आहसे । आघ्नाथे । आहध्वे । आघ्ने । आहन्वहे आहन्महे—पूर्ववज्झलादावनुनासिकलोपः । अजादौ तूपधालोपः । 'आङो यमहनः' इत्यकर्मकात् 'स्वाङ्गकर्मकाच्च' इति तङ् । आजघ्ने । आजघ्नाते । आजघ्निषे । आहन्तासे । आहनिष्यते । आहताम् । आघ्नाताम् । आहन्व । आहनै—आटि पित्वान्नोपधालोपः । आहत । आघ्नाताम् । आहथाः । आघ्नि । आहन्वहि । आघ्नीत । आघ्नीयाताम् । आघ्नीथाः । आघ्नीय—लिङस्सलोपः । आशिषि—आवधिषीष्ट । आवधिषीयास्ताम्—'हनो वध लिङि' इति वधादेशे इडागमः । आवधिष्ट । आवधिषाताम् । आवधिष्ठाः । आवधिषिढ्वम् । आवधिषि - 'आत्मनेपदेष्वन्यतरस्याम्' इति पक्षे वधादेशः । अन्यदा—आहत । आहसाताम् । आहसत । आहथाः । आहध्वम् । आहसि । आहन्वहि—अत्र 'हनः सिच्' इति झलादेरात्मनेपदपरस्य 'सिचः' कित्वादनुनासिकलोपे 'ह्रस्वादङ्गात्' इति झलि सिचो लोपः । 'आङो यमहनः' इति तङ् अकर्मकात्स्वाङ्गकर्मकाच्चेत्युक्तम् । अथ कथम् 'आजघ्ने विषमविलोचनस्य वक्षः' इति ? अत्र केचिदाज इति पदं छित्त्वा घ्न इति भावे क्विपि चतुर्थ्येकवचनान्तमुक्त्वा 'घ्ने हन्तुमाज आजगामेत्यर्थः' इति समर्थयन्ते, तदयुक्तम्; 'अजेर्व्यघञपोः' इति लिट्यार्द्धधातुके वीभावेन भाव्यत्वात् । अन्ये तु—'विषमविलोचनस्य समीपमेत्य स्वं वक्ष आस्फालितवानित्यर्थः' इति । मल्लो ह्युत्साहाविष्करणाय स्वं वक्ष आस्फालयतीति । भागवृत्तौ तु नैवायं साधुरिति 'आयोधः' इति पाठान्तरमुक्तम् । एवं च 'आहध्वं मा रघूत्तमम्' इति भट्टिप्रयोगोऽपि चिन्त्यः । तथा 'मदर्थेऽरीन् निजघ्निथ' इति च । अत्र सिपः पित्वात् 'असंयोगाल्लिट् कित्' इत्यत्र चापिदित्यधिकारात् कित्त्वाभावादुपधालोपोऽपि दुर्लभः । अपिदधिकारश्च 'इन्धिभवतिभ्यां च' इत्यत्र भवतिग्रहणाज्ज्ञायते । तथाच तत्र वार्त्तिकम्—'इन्धेः संयोगार्थं वचनं भवतेः पिदर्थम्' इति । 'आङो यमहनः' इति तङ् प्रकृतिग्रहणन्यायेन यङ्लुगन्तादपि भवतीति आजङ्घ्ने । आजङ्घाञ्चक्रे इत्यादि भवति । अत्रापि लिङ्लुङोर्वधादेशे प्रकृतिवदेव रूपम्—आवधिषीष्ट । आवधिष्ट इति । लुङि वधादेशाभावे आजङ्घनिष्ट इत्यादि—'हनः सिच्' इत्यत्र झलीत्यधिकारादिडादेरकित्त्वादुपधालोपाभावः । जिघांसति—'अज्झनगम' इति दीर्घः । 'अभ्यासाच्च' इति कुत्वम् । जङ्घन्यते—'नुगतोऽनुनासिकान्तस्य' इति नुक् । इदं चानुस्वारोपलक्षणार्थं पदान्तवदिति च प्रागेवोक्तम् । तेन 'वा पदान्तस्य' इति परसवर्णो विकल्पेनोदाहार्यः । यङि 'हन्तेर्हिंसायां घ्नीभावो वक्तव्यः' इति घ्नीभावविधानाद् हिंसायां जेघ्नीयते इति भवति । जङ्घनीति, जङ्घन्ति । जङ्घतः । जङ्घ्नति । अत्र सुधाकरः—''के पुनरनुदात्तोपदेशाः ? यम्यादय इति

व्याख्यातृभिर्गणत्वेन निर्देशान्निर्दिष्टं यद्गणेन चेति यङ्लुकि अनुनासिकलोपाभावा-दनुनासिकस्येति दीर्घे—जङ्घान्तः'' इत्युक्त्वा ''न क्वचिदाचार्येणानुदात्तोपदेशानां गणेन निर्देशः कृत इति भवितव्यमेवानुनासिकलोपेन'' इत्याह। 'हन्तेर्जः' इत्यत्र न्यासे च—'हन्तेरिति तिपा निर्देशाद् यङ्लुकि जभावाभावाज्जङ्घहि इति भवति'इति कृतानुनासिकलोपः प्रत्युदाहृतः। अत्र 'असिद्धवदत्र' इत्यनुनासिकलोपस्यासिद्धत्वाद्धिलुङ् न भवति। अत्राक्षेपः—'न्यासे प्रत्युदाहरणं जङ्घनीहि' इति पठन् 'भाषायां हेरपित्त्वादीडभावाच्छान्दसमुदाहरणम्' इत्याह। घातयति। अजीगतत्—'हनस्तो चिण्णलोः' इति हन्तेर्ञिति णिति प्रत्यये चिण्णल्वर्जिते परे नकारस्य तकारः। प्रकृतिग्रहणन्यायेन यङ्लुगन्तेऽपि तत्त्वे—जङ्घातयति।

कर्मणि—हन्यते। जघ्ने। हन्ता, घानिता। हनिष्यते, घानिष्यते। हन्यताम्। अहन्यत। हन्येत। आशिषि—घानिषीष्ट, वधिषीष्ट। अवधि, अघानि। अवधिषाताम्, अहसाताम्, अघानिषातामित्यादि। स्यादिषु चिण्वद्भावपक्षे वृद्धिकुत्वे। नन्ववधीत्यत्र चिणि वधभावो दृश्यते इति चिण्वद्भावेन स कस्मान्नातिदिश्यते? उच्यते; नात्र चिणि दृष्टमात्रमतिदिश्यते, किन्त्वाङ्गं चिणि दृष्टमिति वधादेशो न भवति। लिङ्लुङोः कर्तृवद्वधादेशतद्विकल्पौ। लिङि चिण्वत्पक्षे वधादेशो न भवति; यतश्चिण्वदिट् परत्वेन पूर्वं वधादेशं बाधते, कृते च सकृद्गतिपरिभाषया न भवति। ननु द्वितीयाध्याये 'आर्द्धधातुके' इति विषयसप्तमी, तेन प्रागेव प्रत्ययोत्पत्तेर्वधभावेन भाव्यम्, चिण्वद्भावस्तु भावकर्मविषयेषु स्यादिषु परतो विधीयत इति कथमन्तरङ्गबहिरङ्गयोर्विप्रतिषेधः? नैष दोषः; यत्रार्द्धधातुकसामान्यं निमित्तत्वेनोपादीयते 'अस्तेर्भूः' इत्यादौ तत्रैव विषयसप्तम्याश्रयणात्, न पुनर्यत्र विशेष उपादीयते 'हनो वध लिङि'इत्यादौ तत्रापीति। उक्तं चैवं चिण्वत्सूत्रे व्याख्यातृभिः। वार्त्तिकं च 'वधभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेन' इति। कैयटे तु विषयसप्तम्याश्रयणेनापि परिहार उक्तः[1]। यथा—'''एकाच उपदेशेऽनुदात्तात्' इत्यत्र वक्ष्यति भाष्यकारः। 'वधिषीष्टेत्यत्र निपातनस्वरं प्रत्ययस्वरो बाधिष्यते, आर्धधातुकीयाः सामान्येन भवन्ति' इत्येवं ब्रुवता लिङीति विषयसप्तम्येवाभ्युपगता, ततश्चान्तरङ्गत्वाद्वधभावः प्राप्नोति। प्रतिपदविधेर्बलीयस्त्वाच्चिण्वद्भावो भवति'' इति। कर्मकर्त्तरि—आहते माणवकः स्वयमेव, आवधिष्ट माणवकः स्वयमेवेत्यत्र 'यक्चिणोः प्रतिषेधः' इत्यादिना यक्चिणोर्निषेधात् शप्सिचौ भवतः। अत्र हरदत्तेन—''आत्मनेपदविधावकर्मका ये धातवो निर्दिष्टास्ते यदान्तर्भावितण्यर्थाः सकर्मका भवन्ति त आत्मनेपदाकर्मका आहन्ति माणवकमिति, तदा सकर्मकत्वादनुदाहरणमिति केचित्। अन्ये त्वात्मनेपदाकर्मकेति धातूपलक्षकत्वात्कर्माविवक्षायामात्मनेपदस्य निमित्तत्वात्सकर्मकेऽप्यविरुद्धः

1. म. भा. प्र. ६।४।६२ (पा० सू०)।

मुदाहरणमित्याहुः। इदमत्राविगीतमुदाहरणम्—'वेः शब्दकर्मणः', 'अकर्मकाच्च' विकुर्वते सैन्धवाः, वल्गन्तीत्यर्थः, तान्यदाऽन्यो वल्गयति तदा तेषां कर्मत्वम्, पुनः सौकार्यातिशयाय कर्तृत्वविवक्षायां विकुर्वते सैन्धवाः स्वयमेव वल्गन्ति[१]" इत्युक्तम्। चोरस्य निप्रहन्ति, चोरस्य निहन्ति, चोरस्य प्रहन्ति, चोरस्य प्रणिहन्ति—अत्र 'नेर्गद' इति णत्वम्, 'जासिनिप्रहण' इति कर्मणि शेषषष्ठी। तत्र निप्रग्रहणं संघातविगृहीतविपर्यस्तार्थमित्युक्तम्। प्रहण्मि। प्रहन्वः, प्रहण्वः। प्रहन्मः, प्रहण्मः अत्र 'हन्तेरत्पूर्वस्य' इत्युपसर्गस्थान्निमित्तात्परस्यात्पूर्वस्य हन्तिनकारस्य विधीयमानं णत्वं प्रहण्यते, प्रहणानि इत्यादाविव नित्यप्राप्तं 'वमोर्वा' इति इकारवकारयोः परयोर्विकल्प्यते। प्राघ्नन्ति इत्यत्र 'अत्पूर्वस्य' इति तपरकरणाण्णत्वस्य न प्रसङ्गः। प्राहन् इत्यत्र तु 'पदान्तस्य' इति निषेधः। प्रहंन्ति इत्यत्रानुस्वारे कर्त्तव्ये णत्वं 'पूर्वत्रासिद्धम्' इति न भवति। कृते तु परसवर्णे तस्यासिद्धत्वात्पुनर्णत्वं न भवति। 'अन्तःशब्दस्याङ्किविधिणत्वेषूपसङ्ख्यानम्' इत्युपसर्गसंज्ञोपसङ्ख्यानात्तत्पूर्वस्यापि सर्वमिदं णत्वं द्रष्टव्यम्, अन्तर्णिहन्ति इत्यादि। एवं च 'अन्तरदेशे' इति हनो नकारस्य णत्ववचनमर्थाद्देशे णत्वनिषेधार्थं भवति, अन्तर्हननो नाम वाहीकेषु देशविशेषः। अन्यत्र अन्तर्हणनम् इति णत्वं भवति, मध्ये हननमित्यर्थः। सर्वमिदं णत्वं श्तिपानिर्देशाद्यङ्लुकि न भवति, प्रनिजङ्घन्ति इत्यादि। 'जासिनिप्रहण' इति षष्ठी तु भवत्येव—चोरस्य प्रनिजङ्घन्तीत्यादि। अन्तर्हत्य, मध्ये हत्वेत्यर्थः—'अन्तरपरिग्रहे' इत्यन्तरो गतित्वात् 'कुगतिप्रादयः' इति तत्पुरुषे ल्यपि 'वा ल्यपि' इत्यनुनासिकलोपे तुक्। वाग्रहणस्य व्यवस्थितविभाषात्वात् 'मान्तेषु विकल्पितोऽनुनासिकलोपोऽन्यत्र नित्यः' इत्युक्तम्। परिग्रहे त्वगतित्वात् अन्तर्हत्वा मूषिकां श्येनो गत इति भवति, परिगृह्येत्यर्थः। अत्र न्यासोद्द्योते—'अन्तश्शब्दो धातोः परिग्रहे वृत्तिं करोति' इति। एवं चान्तरपि परिग्रहस्यैव द्योतक इत्युक्तं भवति। कणेहत्य पयः पिबति, मनोहत्य पयः पिबति—'कणेमनसी श्रद्धाप्रतीघाते' इति कणेमनःशब्दयोर्गतित्वे समासादि पूर्ववत्। अत्र 'कणेशब्दः सप्तमीप्रतिरूपको निपातोऽभिलाषातिशये वर्तते। मनश्शब्दोऽपि साहचर्यादभिलाषवृत्तिरेव' इति न्यासपदमञ्जर्यौः। हन्तिरत्रावधीकरणाङ्गे निवृत्तौ वर्त्तते, सा च सन्निधानात्कणेमनश्शब्दार्थयोः। तौ च निवर्त्यमानतयाऽवधी इति तयोः प्रतिघातो विषयतया विशेषणम्। तदयमर्थः—'अभिलाषनिवृत्तिपर्यन्तं पयः पिबति' इति। उक्तञ्च न्यासोद्द्योते—'प्रतीघाते हन्तिरवधिकरणाङ्गे निवृत्तौ वर्त्तते, अभिलाषनिवृत्तिमवधीकृत्य पयः पिबति' इति। हरदत्तोऽपि—'अतिशयेन अभिलष्य तन्निवृत्तिपर्यन्तं पयः पिबतीत्यर्थः' इति। एवं चात्राभिलाषनिवृत्तेरवधीकरणस्य पयःपानात्पूर्व-

---

१. प. म. ३।१।८९ (पा० सू०)।

स्वांत्क्त्वोपपत्तिः । श्रद्धाप्रतीघातादन्यत्र कणे हत्वा, मनो हत्वा । कणशब्दः सूक्ष्मे तण्डुलावयवे वर्त्तते, मनःशब्दस्तु चेतसि । योगद्वयमिदमर्थस्वभावाद्धन्तिविषयम् । वध्यः—'हनो वध च'' इति कर्मणि यत्, तत्संनियोगेन वधादेशश्च । घात्य इति ण्यति । ब्रह्महत्या—'हनस्त च' इत्यनुपसर्गे सुप्युपपदे क्यपि तत्संनियोगेन नकारस्य तकारः । सोपसर्गादनुपपदाच्च नायं विधिरिति घातः, सङ्घातः इति घञ् भवति । तयोरेवेति भावलक्षणो ण्यदत्रानभिधानान्न भवतीति आत्रेयः । असिहत्यायां भवमासिहात्यम्—'अनुशतिकादीनां च' इत्युभयपदवृद्धिः । अत्र केचिद् अश्वहत्येति पठन्ति । ततो विमुक्तादित्वादश्वहत्याशब्दोऽस्मिन्नध्यायेऽस्तीति आश्वहात्य इति भवति । 'हत्याशतं पानसहस्रम्' इत्यादावनुपपदे क्यबार्षः । घनाघनः—'हन्तेर्घत्वं च' इत्यचि द्विर्वचनमभ्यासस्यागागमो हकारस्य घकारः, परस्य 'अभ्यासाच्च' इति कुत्वम् । आको दीर्घोच्चारणसामर्थ्यान्न हलादिशेषः, यदि स्यादकमेव विदध्यात्, सवर्णदीर्घेणाकारो भविष्यति । पररूपं त्वग्विधानसामर्थ्यान्न भविष्यति । शत्रुहः, शत्रुं वध्यादित्यर्थः—'आशिषि हनः' इत्याशिषि गम्यमानायां कर्मण्युपपदे डप्रत्ययः । डित्त्वसामर्थ्याट्टिलोपः । दार्वा हन्तीति दार्वाघाटः—'दारावाहनोऽण्यन्तस्य च टः संज्ञायाम्' इत्याङ्पूर्वाद्धन्तेः कर्त्तर्यण्, नकारस्य च टकारः । चार्वा हन्तीति चार्वाघाटः, चार्वाघातो वा—'चारौ वा' इति चारौ कर्मण्युपपदेऽण्प्रत्यये नकारस्य वा टकारः । तदभावे 'हनस्तोऽचिण्णलोः' इति तत्वम् । क्रियाविशेषणत्वाच्चारोः कर्मत्वम् । वर्णान्संहन्तीति वर्णसङ्घाटः, वर्णसङ्घातो वा—'कर्मणि समि च' इति कर्मणि समि चोपपदेऽणि वा अन्त्यस्य च टकारः । क्लेशापहः, तमोऽपहः—'अपेः क्लेशतमसोः' इति क्लेशतमसोः कर्मणोरुपपदयोरपपूर्वाद्धन्तेर्डः, 'स्रगियं यदि जीवितापहा'' इति प्रयोगस्तु 'क्विप् च' इति सार्वकालिके क्विपि । 'ऋन्नेभ्यः' इति ङीब् न भवति, बह्वादिषु ङीष्विकल्पार्थं हन्निति पठात् । यदि हि ङीषभावे ङीप्स्याद्, गौरादिष्वेव हन्निति पठित्वा नित्यं ङीषमेव विदध्यात् । अथवा तदपि न कुर्यात्; ङीपैव सिद्धत्वात् । नात्र ङीषङीपो रूपे विशेषोऽस्ति । नापि स्वरे; जीवितापहशब्दस्य 'गतिकारकोपपदात् कृत्' इत्युत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वेऽन्तोदात्तस्य ङीपः 'अल्लोपोऽनः' इत्युदात्तलोपनिमित्तस्य 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्युदात्तत्वात् । तस्माद्बह्वादिषु हन्निति ङीष्विकल्पसामर्थ्यात्तदभावे ङीब् न भवति । ज्वरापहादिवत् 'अन्येष्वपि दृश्यते' इति डो वा । कुमारघाती, शीर्षघाती—'कुमारशीर्षयोर्णिनिः' इत्यनयोः कर्मणोरुपपदयोर्हन्तेः कर्त्तरि णिनिः । अस्मादेव निर्देशात्प्रत्ययसंनियोगेन शिरसः शीर्षभावः । जायाघ्नो ब्राह्मणः, जायाहननहेतुलक्षणयुक्त इत्यर्थः । एवं पतिघ्नी वृषली । 'लक्षणे जायापत्योष्टक्' इत्यनयोः कर्मणोरुपपदयोर्हन्तेर्हनन-

१. रघु० ८।४९ ।

लक्षणवति कर्त्तरि टक्। लक्षणमात्रे उत्तरसूत्रेण सिद्धत्वात्तद्वानिह लक्षणशब्देनोच्यते। कित्त्वात् 'गमहन्' इत्युपधालोपः, टित्त्वान्ङीप्। जायाघ्नः तिलकालकः। पतिघ्नी पाणिरेखा। श्लेष्मघ्नं मधु—'अमनुष्यकर्तृके च' इति कर्मण्युपपदमनुष्यादन्यकर्तृके हन्त्यर्थे टक्। मनुष्ये त्वणेव—आखुघातः शूद्रः इति। कृतघ्नो ब्रह्मघ्नः, गोघ्नो ब्राह्मण इत्यादिषु 'कृत्यल्युटो बहुलम्' इति बहुलवचनाट्टक्। मूलविभुजादित्वात्क इत्येके। अनयोः स्त्रियां विशेषो ङीप्टाब्भ्याम्। चोरघाती हस्तीत्यत्रामनुष्ये कर्तर्यप्यस्मादेव बहुलवचनादण् भवति। हस्तिघ्नो भटः, हस्तिहनने शक्त इत्यर्थः। एवं कवाटघ्नः चोरः—'शक्तौ हस्तिकवाटयोः' इत्येतयोः कर्मणोरुपपदयोश्शक्तौ गम्यमानयां हन्तेष्टक्। अशक्तौ विषेण हस्तिनं हन्ति हस्तिघात इत्यण् भवति। पाणिघः, ताडघः शिल्पिविशेषौ—'पाणिघताडघौ शिल्पिनि' इति पाणिताडयोः कर्मणोरुपपदयोर्हन्तेष्टकि टिलोपघत्वे च निपात्येते। शिल्पिनोऽन्यत्र पाणिघातः। सूत्रद्वयमिदं मनुष्यकर्तृकार्थम्। राजानं हन्तीति र जघस्तीक्ष्ण उच्यते। 'राजघ उपसङ्ख्यानम्' इति पूर्ववन्निपात्यते। पितृव्यं हतवान् पितृव्यघाती — कर्मणि हनः' इति कर्मण्युपपदे कुत्सिते कर्त्तरि भूते णिनिः। अकुत्सिते चौरघात इत्यणेव। ब्रह्माणं हतवान् ब्रह्महा। एवं भ्रूणहा, वृत्रहा—'ब्रह्मभ्रूणवृत्रेषु क्विप्' इति हन्तेर्ब्रह्मादिषूपपदेषु भूते क्विप्। 'क्विप्च' इति सामान्येन क्विपि सिद्धे नियमार्थं सूत्रम्। चतुर्विधश्चात्र नियमः–धातूपपदप्रत्ययकालविषयः, तेन हिमहा इत्यादौ 'क्विप् च' इति क्विप् सार्वकालिकः। 'सौ च' इति दीर्घः। ब्रह्महणौ इत्यादिषु "इन्हन्पूषार्यम्णां शौ' इति शावेव प्रत्यय उपधालक्षणमात्रो दीर्घो नान्यत्रेति नियमात्सर्वनामस्थाने दीर्घो न भवति, नापि क्विपमाश्रित्य 'अनुनासिकस्य क्विझलोः' इति। ननु सर्वनामस्थानदीर्घनिषेधसामर्थ्यादेव क्विबाश्रयोऽपि दीर्घो न भविष्यति, सत्यम्; इह वृत्रहणी इति सप्तम्येकवचने वृत्रहणी ब्राह्मणकुले इति नपुंसकद्विर्वचनयोश्च 'अल्लोपोऽनः' इत्यन्नन्तस्य भस्य विधीयमाने लोपे 'विभाषा ङिश्योः' इति विकल्पिते क्विपमाश्रित्य 'अनुनासिकस्य क्वौ' इति दीर्घः स्यात्। अयं दीर्घनियम उपधालक्षणस्यैव नान्यस्येति वृत्रहेवाचरति वृत्रहायते इत्यत्र 'अकृत्सार्वधातुकयोः' इति दीर्घो भवति। वृत्रहणौ इत्यादौ "एकाजुत्तरपदे णः" इति णत्वम्। एकाजुत्तरपदं यस्य तत्र समासे उत्तरपदप्रातिपदिकान्तनुम्विभक्तिस्थनकारस्य पूर्वपदस्थान्निमित्तात्परस्य नित्यं णः इति सूत्रार्थः। भसंज्ञायामल्लोप उत्तरपदमनच्कम्, स्थानिवद्भावश्चाल्विधित्वान्नेत्येकाजुत्तरपदत्वाभावादिति 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति विकल्पो भवति वृत्रघ्नः, वृत्रघ्णः इति। अत्राधिकृत्य पूर्वपदस्य सम्बन्धिशब्दत्वात्तेनाक्षिप्तेनोत्तरपदेन प्रातिपदिकस्य विशेषणादुत्तरपदप्रातिपदिकान्ते नुमि विभक्तौ च स्थितस्य नकारस्य पूर्वपदस्थान्निमित्तादुत्तरस्य वा णः इति सूत्रार्थः। तेन गर्गाणां भगिनी गर्गभगिनी इत्यत्र-

यदुत्तरपदं भगिनीशब्दो न तत्प्रातिपदिकं नापि नान्तम्, यन्नान्तं भगिन्निति प्रातिपदिकं न तदुत्तरपदमिति णत्वं न भवति। गर्गभगिणीशब्दस्तु गर्गाणां भगो गर्गभग: सोऽस्यास्तीतीनि प्रत्यये 'रषाभ्याम्' इति णत्वे। नन्वस्य 'पूर्वपदात्संज्ञायामगः' इति पूर्वपदस्थान्निमित्तादुत्तरे यदि भवति संज्ञायामेवेति नियमात् कुतः प्रसङ्गः? नैष दोषः; यतोऽत्र पूर्वपदग्रहणेन सम्बन्धिन उत्तरपदस्याक्षेपात्तत्स्थस्यैवायं नियम इति। अत्र च नकारो नोत्तरपदस्थः, किन्तु समासप्रातिपदिकाद्विहितेनिप्रत्ययस्थः। एवं च मातृभोगीणः इत्यादौ भोगोत्तरपदलक्षणे खे नित्यं णत्वं भवति। माषानभीक्ष्णं वपति माषवापिणी, माषवापिनी इत्यत्र 'बहुलमाभीक्ष्ण्ये' इति सुप्युपपदे आभीक्ष्ण्ये गम्यमाने णिनौ 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति कृदन्तावस्थायामेव समासे पश्चात्ततो ङीबिति णिनेर्नकार उत्तरपदप्रातिपदिकान्तस्थ इति णत्वविकल्पः। अभ्याघाती—'सम्पृच' इत्यादिना घिनुण्। घातुकः—'लषपत' इत्यादिनोकञ्। विघ्नः—'घञर्थे कविधानम्' इति कः। वधः—'हनश्च वधः' इत्यनुपसृष्टाद्धनो भावेऽप्प्रत्ययस्तत्सन्नियोगेन वधादेशश्च। 'हनश्च' इति चकारो भिन्नक्रमोऽनुवृत्तस्यापोऽनन्तर इति घञपि भवति घात इति। भावादन्यत्रोपसृष्टात् भावे च घञेव–हन्यत इति घातः, आहन्यते आहननमिति वा आघातः। ननु वधिः प्रकृत्यन्तरमस्ति, तस्मात्सिद्धं घञि 'जनिवध्योश्च' इति ञिति णिति कृति यदुक्तं तन्नेति वृद्धिनिषेधाद्वध इति भविष्यति, हन्तेश्च घात इति, किं 'हनश्च वध' इत्यनेन! उक्तं च 'जनिवध्योः' इत्यत्र वृत्तौ—'वधिः प्रकृत्यन्तरं व्यञ्जनान्तोऽप्यस्ति तस्यायं प्रतिषेधो विधीयते' इति; तथा च हरदत्तोऽपि 'वध हिंसायामिति, भूवादौ पाठात्' इति? सत्यम्; एवं वध इति रूपं सिद्धयति, स्वरस्तु भिद्यते। अयं ह्यादेशोऽकारान्तोदात्तः, तत्रापमाश्रित्यातो लोप उदात्तनिवृत्तिस्वरेणाप उदात्तत्वादन्तोदात्तो वधशब्दः, घञि त्वाद्युदात्तः। एवं च कर्मण्युपसर्गेऽपि हनो वधादेशाभावस्य प्रयोजनमन्तोदात्तवधशब्दनिवृत्तिर्भवति, प्रकृत्यन्तरेणाद्युदात्तो भवत्येव। अभ्रघनः; अभ्रस्य काठिन्यमित्यर्थः—'मूर्त्तौ घनः' इति हनोऽप्प्रत्ययेऽपि घनादेशः। मूर्त्तिरिह काठिन्यम्; घनं दधीत्यादौ धर्मशब्देन धर्मी भण्यते। अन्तर्घनो वाहीकेषु देशविशेषः–'अन्तर्घनो देशे' इत्यन्तःपूर्वस्य हनोऽपि घनादेशो निपात्यते। केचिद् अन्तर्घण इति णकारं पठन्ति तदपि ग्राह्यमेव' इति वृत्तितद्व्याख्यानेषु। देशादन्यत्र अन्तर्घातः। प्रघणः, प्रघाणः—'अगारैकदेशे प्रघणः प्रघाणश्च' इति प्रपूर्वस्य हनोऽपि घनादेशो वा वृद्धिश्च निपात्यते। अत्रागारैकदेशशब्दो निपातनस्य रूढ्यर्थत्वाद्वाह्ये द्वारप्रकोष्ठके वर्त्तते। प्रघाणः इत्यत्र णत्वमपि निपातनात्, 'हन्तेरत्पूर्वस्य' इति तु तपरकरणान्न प्राप्नोति। अगारैकदेशादन्यत्र प्रघातः। उद्घनः–'उद्घनोऽत्याधानम्' इति निपात्यते। उदुपरि यस्य निधायान्यत्काष्ठं तक्ष्यते तदिहात्याधानम्। अपघनः पाणिः पादश्च—

'अपघनोऽङ्गम्' इत्यपपूर्वस्य हनोऽपि घनादेशो निपात्यते। अयो हन्यते येन स अयोघनः। विहन्यते येन स विघनः, समीकरणसाधनम्। द्रुर्हन्यते येन स द्रुघनः—'करणेऽयोविद्रुषु' इत्ययोविद्रुषूपपदेषु हनोऽपि घनादेशः। अत्र वृत्तौ "द्रुघण इति केचिदुदाहरन्ति तत्र कथं णत्वम्? अरीहणादिपाठात् 'पूर्वपदात्संज्ञायाम्' इति वा भवति"। अन्यत्राथोघात इत्यादि। स्तम्बघ्नः, स्तम्बघनः दात्रादिः—'स्तम्बे क च' इति स्तम्बशब्दे उपपदे करणे हनः कः प्रत्ययः, चकारादप्, तत्सन्नियोगेन घनादेशश्च। अत्र स्त्रियां विप्रतिषेधेन क्तिन् प्राप्नोति, तं बाधित्वा 'करणाधिकरणयोः' इति ल्युड् भवति। अत्र भाष्यम्—"अथ यथा इषीकया स्तम्बो हन्यते कथं तत्र भवितव्यम्? केचिदाहुः—स्तम्बघ्नेति भवितव्यम्। अपरे आहुः—स्तम्बहेतिरिति, 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' इति निपातनादिति। अपरे आहुः—स्तम्बहननीति भवितव्यम्, वक्ष्यत्येतत् 'अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेन'" इति। अत्र कैयटे—"स्तम्बघ्नेति कप्रत्यये रूपम्, तस्य सर्वापवादत्वादिति भावः। स्तम्बहेतिरिति, निपातनस्य सर्वापवादत्वादिति भावः" इति। अत्र हरदत्तः—"कारो: प्रतिपदविधानस्य सर्वापवादत्वात् 'कृत्यलुटो बहुलम्' इति बाहुलकाद्वेति स्त्रियां स्तम्बघ्ना, स्तम्बहनेति भवतः" इति। परिघः—'परौ घः' इति परावुपपदे करणे हनोऽप्रत्ययो घश्चादेशः। 'परेश्च घाङ्कयोः' इति परे रेफस्य वा लत्वे—पलिघः। 'प्रतिघः इति बाहुलकाद्' इति आत्रेयः। उपघ्नः प्रत्यासन्नः—'उपघ्न आश्रये' इत्युपपूर्वाद् घनोऽप्युपधालोपो निपात्यते। इहाश्रयशब्दः प्रत्यासन्नवचनः। सङ्घः प्राणिसमुदायः, उद्घः प्रशस्तः—'सङ्घोद्घौ गणप्रशंसयोः' इति समुद्भ्यां हनोऽपि टिलोपो घत्वं च गणेऽभिधेये, प्रशंसायां च गम्यमानायाम्। हनो गत्यर्थत्वाद्गत्यर्था बुद्ध्यर्था इत्युक्तम्; 'उद्धन्यते उत्कर्षेण ज्ञायते' इति व्युत्पत्त्या प्रशंसावगतिः। इह गणशब्देन 'प्राणिनां गणः' उच्यते। सङ्घशब्दस्य तत्रैव प्रसिद्धत्वात्तेनान्यत्र समूहे सङ्घात इति भवति। ब्राह्मणसङ्घात इत्यादौ प्राणिविषयत्वं पदान्तरकृतं न तु स्वाभाविकमित्यदोषः। आत्रेयस्तु 'हन्त्यर्थाश्च' इति चुरादिपाठाद् णावेव सङ्घातशब्दमाह। सङ्घस्य पूरणः सङ्घतिथः—'तस्य पूरणे' इति डटि 'बहुपूगगणसङ्घस्य तिथुक्' इति तिथुगागमः। निघः समारोहपरिणाहः। आरोह उच्छ्रायः, परिणाहो विस्तारः—'निघो निमित्तम्' इत्यपि निपात्यते। निमित्तं समन्तान्मितम्, आरोहपरिणाहाभ्यां तुल्यत्वेन ज्ञातमिति व्युत्पत्तिः, पूर्ववद्धनो ज्ञानार्थत्वम्।

हेतिः—'ऊतियूति' इत्यादिना क्तिनि नलोप एत्वं च निपात्यते। 'हिनोतेर्वा' गुणे एतन्निपातनम्। केचिदनुशतिकादिष्वस्यहेतिरिति पठन्ति, ततः 'प्रयोजनम्' इति ठकि आस्यहैतिक इति भवति। अत्रैव पाठाद्वाक्यादप्प्रत्ययः। समूलघातं हन्ति—"समूलाकृतजीवेषु हन्कृञ्ग्रहः" इति समूलादिषु कर्मसूपपदेषु यथासङ्ख्यं

हनादिभ्यो णमुल्प्रत्ययो भवति, कषादित्वाद्यथाविध्यनुप्रयोगः। पाणिघातं वेदिं हन्ति, पाणिना हन्तीत्यर्थः—'करणे हनः' इति णमुल्, पूर्ववदनुप्रयोगः। अहिंसार्थोऽयमारम्भः। हिंसा प्राण्युपघातः[1]। अत्रापि 'हिंसार्थानाम्' इति णमुलं बाधित्वा पूर्वविप्रतिषेधेनानेनैव णमुलिष्यते। अन्यथा असिघातं हन्तीत्यादौ 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति समासविकल्पः स्यात्। कथं तर्हि हिंसार्थानामित्यत्र वृत्तौ 'दण्डोपघातं गाः कालयति, दण्डेनोपघातमिति च' इत्युदाहृतम्? उच्यते; 'हिंसार्थानां च' इति चकारेण पुनर्विधानार्थेन पूर्वविप्रतिषेधेन प्राप्तस्य 'करणे हनः' इति णमुलो बाधात्। एवं च पूर्वविप्रतिषेधवचनं तस्यैवानुप्रयोगे नित्यसमासार्थं भवति। गौर्यस्मै दातुं हन्यते स गोघ्नः अतिथिः—'दाशगोघ्नौ सम्प्रदाने' इत्यच्युपधालोपो निपात्यते। 'केचित्तु टकं निपातयन्ति, तन्मते स्त्रियां गोघ्नी' इति आत्रेयः। जङ्घा - यङ्लुगन्तात्पचाद्यचि 'नासिकोदरौष्ठ' इति निपातनाट्टिलोपः इत्यात्रेयः। कण्ठपृष्ठग्रीवेत्यत्र न्यासे तु—यङ्लुगन्तादेवाचि टिलोपमुक्त्वा 'हन्तेर्जङ्घ च' इत्यचि जङ्घादेशे व्युत्पादितः। 'जङ्घाभ्यां स्वाहा' इत्यादावाद्युदात्तत्वं व्यत्ययेन। अत एवाद्युदात्तत्वदर्शनात् घञि निपातनमस्त्विति न वाच्यम्, 'कण्ठपृष्ठग्रीवाजङ्घं च' इति बहुव्रीहौ संज्ञायां जङ्घाशब्दस्योत्तरपदाद्युदात्तत्ववचनात्। घञि ह्युत्तरपदप्रकृतिस्वरमेव विदध्यात्। विस्तीर्णजङ्घा, विस्तीर्णजङ्घी—'नासिकोदरौष्ठ' इत्यादिना वा ङीप्। वधमर्हति वध्यः—'दण्डादिभ्य' इति यत्। अत्र केचित् 'यः' इत्यतकारान्तं पठन्ति। तत् 'अचो यत्' इत्यत्र 'हनो वा वध च तद्धितो वा' इति वार्त्तिकविरोधादुपेक्ष्यम्। तदिदानीं किमर्थम्? 'कर्तृकरणे कृता बहुलम्' इति समासे असिवध्य इति यथा स्यादिति। दण्डादियता तु न सिध्यति, तत्र केवलस्य वधशब्दस्य पाठात्तदन्तविध्यभावाच्च। अयं तर्हि किमर्थः? न वध्यः अवध्य इत्यत्र 'ययतोश्चातदर्थे' इति नञः परस्यातदर्थयत्तद्धितान्तस्योत्तरपदस्य विधीयमानमाद्युदात्तत्वं यथा स्यादिति। कृदन्तेन तु समासे 'तत्पुरुषे तुल्य' इति पूर्वपदाद्युदात्तत्वं स्यात्। पुत्रहतः—'वा हतजग्धपरेषु' इति पुत्रतकारस्य वा द्वित्वम्। कुमारिहता—'कुत्सितानि कुत्सनैः' इति कर्मधारये 'घरूप' इत्यादिना ह्रस्वः। कुमार्या हतेत्यत्र तु वैयधिकरण्यान्न ह्रस्वः, तेन कुमारीहता इति भवति। स्त्रीहता, स्त्रिहता। ब्रह्मबन्धूहता, ब्रह्मबन्धुहता—'नद्याश्शेषस्य' इति वा ह्रस्वः। लक्ष्मीहता इत्यत्र तु 'कृन्नद्याः प्रतिषेधः' इति प्रतिषेधान्न ह्रस्वः। विदुषीहता, विदुषिहता। श्रेयसीहता, श्रेयसिहता—'उगितश्च' इति वा ह्रस्वः। विद्वच्छ्रेयसोः पुंवद्भावश्च वृत्तावुक्तः—विद्वद्धता, श्रेयोहता—इति। आत्रेये तु 'महच्छब्दस्य पुंवद्भाव उच्यते महद्धता' इति। पादाभ्यां हन्यते

1. यद्यपि सर्वेष्वेव पुस्तकेषु 'हिंसायां तु प्राण्युपघातः' इत्येव पाठ उपलभ्यते तथापि काशिकाद्याकरग्रन्थविरुद्धत्वात्प्रकरणासङ्गतत्वाच्च स उपेक्ष्यः।

इति पद्धतिः—'हिमकाषिहतिषु च' इति पादस्य पद्भावः। पद्धतिः—बाह्वादित्वाद्वा ङीष्। वार्त्रघ्नः—'तस्येदम्' इत्यादिनाऽणि 'षपूर्वहन्धृतराज्ञामणि' इत्यल्लोपः। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् 'हनस्तः' इति तत्वं न भवति। भ्रौणहत्यम्—'दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि' इति नकारस्य तत्वं ष्यञि निपात्यते। हथो विषण्णः—'हनिकुषि' इत्यादिना क्थनि 'अनुदात्तोपदेश' इत्यनुनासिकलोपः। हिमम्-'हन्तेर्हि च' इति मकि हिभावः। हिमं न सहते हिमेलुः—'हिमाच्चेलुर्वक्तव्यः' इति 'तन्न सहते' इति विषये चेलुः। महद्धिमं हिमानी—'इन्द्रवरुण' इत्यादिना ङीषानुकौ। तत्र 'हिमारण्ययोर्महत्त्वे' इति पठ्यते। हेमन्तः—'हन्तेर्मुट् हि च' इति झच्प्रत्यये मुडागमः, धातोर्हिभावे गुणः, झस्य चान्तादेशः। हेमन्ते भवं हैमन्तिकम्—'हेमन्ताच्च' इति शैषिकष्ठञ्। यद्यप्यत्र सूत्रे छन्दोग्रहणमनुवर्त्तितं वृत्तौ, तथाप्युत्तरसूत्रे सर्वत्र ग्रहणादयं भाषाविषयोऽपीति वृत्तावेवोक्तम्। हैमनम्—'सर्वत्राण् च तलोपश्च' इत्यणि तलोपः। अत्र चकारेण ऋत्वणोऽभ्यनुज्ञानाद् हैमन्तमित्यपि भवति। तलोपोऽत्र न भवति, सर्वत्राणिति विधीयमानाण्सन्नियोगशिष्टत्वात्तस्य। हनुः—'शॄस्पृस्निहि' इत्यादिना उप्रत्ययः। परिहनु भवं पारिहनव्यम्—अव्ययीभावाच्च' इति भवार्थे ञ्यः। तत्र 'परिमुखादिभ्य उपसङ्ख्यानम्' इति परिमुखादिरेवाव्ययीभावः परिगण्यते। हनुल—'सिध्मादिभ्यश्च' इति मत्वर्थे लच्। हनूमान् - 'शरादीनाञ्च' इति संज्ञायां मतौ दीर्घः। अत्रैव पाठान्मतुपः 'संज्ञायाम्' इति वत्वं यवादेराकृतिगणत्वान्न भवति। हंसः—'वृतॄवदि' इत्यादिना सः। आगत्य हन्तीति अहः—'आङि श्रिहन्तिभ्यां ह्रस्वश्च' इतीण्प्रत्ययः, स च डित्। डित्वाट्टिलोपः, आङो ह्रस्वः। अहौ भवम् आहेयम्-'दृतिकुक्षि' इत्यादिना ढञ्। अहीवती—शरादित्वाद्दीर्घः। 'संज्ञायाम्' इति वत्वम्। उपहत्नुः -- 'कृहनिभ्यां क्त्नुः' इति क्त्नुः, कित्त्वादनुनासिकलोपः। अनेहाः, अनेहसौ—'नञि हन एह च' इति नञ्युपपदे असुन्, एहादेशश्च हनः। 'नलोपो नञः' इति उत्तरपदे नञो नलोपे 'तस्मान्नुडचि' इति लुप्तनकारान्नञः परस्याजादेरुत्तरपदस्य नुडागमः। 'ऋदुशनः' इत्यादिनाऽनङादेशः, सावसम्बुद्धौ 'सर्वनामस्थाने च' इति दीर्घः। सम्बुद्धौ तु हे अनेहः। जघनम्—'हन्तेश्शरीरावयवे द्वे च' इति द्वित्वम्, 'अभ्यासाच्च' इति कुत्वम्। जघने भवं तस्मै हितं वा जघन्यम्—'दिगादिभ्यो यत्', 'शरीरावयवाच्च' इति योगाभ्यां यत्। शरीरावयवत्वादेव यति सिद्धे, दिगादावस्य पाठोऽशरीरावयवार्थः। प्लीहा—'श्वन्नुक्षन्' इत्यादिना कनिनन्तो निपातितः। 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इति व्युत्पत्तिकार्याभावात् 'इन्हन्पूषा' इति नियमाभावात्सर्वत्र सर्वनामस्थाने दीर्घो भवति—प्लीहा। प्लीहानौ इत्यादि ॥ २ ॥

३. अदिहनी अनुदात्तावुदात्तेतौ[1] ।

४. द्विष अप्रीतौ । लिह्यन्ता अनुदात्ताः स्वरितेतः । द्वेष्टि । द्विष्टः । द्विषन्ति । द्वेक्षि । द्विष्ठः । द्विष्ठ । द्वेष्मि । द्विष्वः । द्विष्मः ॥ द्विष्टे । द्विषाते । द्विषते । द्विक्षे । द्विड्ढ्वे । द्विषे । द्विष्वहे—ष्टुत्वं तवर्गादौ । सकारादौ ष्टुत्वस्य पूर्वत्रासिद्धत्वात् 'षढोः कः सि' इति कत्वे षत्वम् । दिद्वेष । दिद्विषतुः । दिद्वेषिथ । दिद्विष । दिद्वेष । दिद्विषिव । दिद्वेषे । दिद्विषिषे । दिद्विषिवहे । क्रादिनियमादिट् । द्वेष्टा, द्वेष्टासे । द्वेक्ष्यति, द्वेक्ष्यते । द्वेष्टु, द्विष्टात् । द्विष्टाम् । द्विषन्तु । द्विड्ढि । द्वेषाणि । द्वेषाव । द्विष्टाम् । द्विक्ष्व । द्विड्ढ्वम् । द्वेषै—'द्विषश्च' इति लङि विधीयमानो जुस्भावो 'लोटो लङ्वत्' इत्यतिदेशान्न भवति; 'लङः शाकटायनस्यैव' इत्यत्र लङ्ग्रहणं मुख्यलङ्ग्रहणार्थमिति स्थितत्वात् । हौ हेर्धित्वे ष्टुत्वे च षकारस्य जश्त्वेन डकारः । उत्तम आटि पित्त्वादङित्त्वाद्गुणः । अद्वेट् । अद्विष्टाम् । अद्विषुः । अद्विषन् । अद्वेट् । अद्वेषम् । अद्विष्व ॥ अद्विष्ट । अद्विषाताम् । अद्विषत । अद्विष्ठाः । अद्विषि—तिप्सिपोर्हल्ङ्यादिलोपे गुणे जश्त्वचर्त्वे । 'द्विषश्च' इति झेर्वा जुस्भावः । द्विष्यात् । द्विष्याताम् । द्विष्याः । द्विष्याम् ॥ द्विषीत । द्विषीयाः । द्विषीय । द्विषीवहि—अपित्सार्वधातुकत्वान्न गुणः । आशिषि सलोपाभावो विशेषः । द्विक्षीष्ट—गुणाभावो 'लिङ्सिचौ' इति कित्त्वात् । अद्विक्षत् । अद्विक्षताम् । अद्विक्षन्, अद्विक्षुः । अद्विक्षम् । अद्विक्षाव ॥ अद्विक्षत । अद्विक्षाताम् । अद्विक्षन्त । अद्विक्षथाः । अद्विक्षि । अद्विक्षावहि—'शल इगुपधादनिटः' इति क्सः, अचि 'क्सस्याचि' इत्यल्लोपः । दिद्विक्षति, दिद्विक्षते—'हलन्ताच्च' इति सनः कित्त्वान्न गुणः । देद्विष्यते । देद्विषीति, देद्वेष्टि—ईटि 'नाभ्यस्तस्याचि पिति' इति गुणाभावः । लङि 'सिजभ्यस्त' इति नित्यं झेर्जुस्भावे परत्वात् प्रकृतिग्रहणन्यायेन 'द्विषश्च' इति विकल्पे अदेद्विषुः, अदेद्विषन् इत्युभयं भवति । यङ्लुगन्तस्य सेट्त्वाल्लुङि क्साभावाद् अदेद्वेषीदिति सिजेव । तथा क्त्वासनोरपि सेट्त्वे 'रलो व्युपधात्' इति कित्त्वविकल्पनाद् देद्वेषिषति, देद्विषिषति; देद्वेषित्वा, देद्विषित्वा—इति भवति । द्वेषयति । अदिद्विषत् । कर्मणि—द्विष्यते इत्यादि । विप्रद्विट्, प्रद्विट्—'सत्सूद्विष' इति सोपपदात्सोपसर्गाच्च क्विप् । द्विट्शब्दस्तु 'अन्येभ्योऽपि दृश्यते' इति ताच्छीलिके क्विपि । द्वेषी—सम्पृचादिना घिनुण् । शत्रुं द्विषन्, शत्रोर्वा द्विषन्—'द्विषोऽमित्र' इति शता । अयमलादेशः । 'द्विषः शतुर्वा' इति कर्मणि षष्ठीविकल्पः । द्वेषणः इति बाहुलकात्कर्तरि ल्युडिति आत्रेयः । द्विष्ट्वा । द्विष्टः, द्विष्टवान् ॥ ३ ॥

५. दुह प्रपूरणे । दोग्धि । दुग्धः । दुहन्ति । धोक्षि । दुग्धः । दुग्ध । दोह्मि । दुह्वः । दुह्मः ॥ दुग्धे । दुहाते । दुहते । धुक्षे । धुग्ध्वे । दुहे । दुह्वहे—झलि पदान्ते च 'दादेः'

1. 'अनुदात्तावनुदात्तेतौ' इति मुद्रितक्षीरतरङ्गिणीपाठश्चिन्त्यः ।

इति हकारस्य घकारः, 'झषस्तथोः' इति तकारथकारयोर्धकारः, 'झलां जश् झशि' इति घकारस्य गकारः। सकारादौ ध्वे पदान्ते च 'एकाचो बशो भष्' इति भष्भावेन दकारस्य धकारः। तत्र सकारादौ 'इण्कोः' इति षत्वे 'खरि च' इति चर्त्वम्। दुहन्ति, दुहते इत्यत्र पूर्वत्रासिद्धत्वादन्तरङ्गत्वाद्वा प्रागेवान्तादादेशयोर्झल्परत्वाभावान्न घत्वप्रसङ्गः। दुदोह। दुदुहतुः। दुदोहिथ। दुदुहथुः। दुदुह, दुदोह। दुदुहिव॥ दुदुहे। दुदुहिषे। दुदुहिढ्वे, दुदुहिध्वे। दुदुहिवहे—क्रादिनियमादिट्। ध्वमि 'विभाषेटः' इति मूर्द्धन्यविकल्पः। दोग्धा, दोग्धासे। धोक्ष्यति, धोक्ष्यते। दोग्धु, दुग्धात्। दुग्धाम्। दुग्धि। दोहानि। दोहाव॥ दुग्धाम्। दुहाताम्। धुक्ष्व। धुग्ध्वम्। दोहै—हेरपित्वान्न गुणः। आटि तु पित्त्वाद्गुणः। अधोक्, अधोग्। अदुग्धाम्। अदुहन्। अधोक्। अदुग्धम्। अदुग्ध। अदोहम्। अदुह्व॥ अदुग्ध। अदुहाताम्। अदुग्धाः। अदुग्ध्वम्। अदुहि। अदुह्वहि—तिप्सिपोर्हल्ङ्यादिलोपे पदान्तत्वात् 'दादेः' इति हकारस्य घकारः, 'एकाचो बशः' इति दकारस्य धकारः, जश्त्वचर्त्वे, प्रत्ययलक्षणेन लघूपधगुणः। दुह्यात्। दुह्याताम्। दुह्युः॥ दुहीत। दुहीथाः। दुहीय—अपित्सार्वधातुकत्वान्न गुणः। आशिषि सलोपाभावो विशेषः—दुह्यात्। दुह्यास्ताम्। धुक्षीष्ट इत्यादि। तङि 'लिङ्सिचौ' इति कित्त्वान्न गुणः। घत्वभष्भावौ। धुक्षीध्वम् इत्यत्र 'इणः षीध्वम्' इति मूर्द्धन्यो न भवति, घत्वे षित्वस्य पूर्वत्रासिद्धत्वात्षीध्वमोऽभावात्। कृते तु घत्वादौ षीध्वमिणः परो न भवति। अधुक्षत्। अधुक्षताम्। अधुक्षन्। अधुक्षः। अधुक्षम्। अधुक्षाव॥ अधुक्षत। अधुक्षाताम्। अधुक्षन्त। अधुक्षथाः। अधुक्षि। अधुक्षावहि—'शल इगुपधादनिट क्सः' 'क्सस्याचि' इत्यल्लोपः। अत्र केचित्—क्सस्य भाविनीमनकारान्ततामाश्रित्य झस्याद्भावे 'क्सस्याचि' इत्यल्लोपेऽधुक्षत इतीच्छन्ति, तदसत्; तत्राचीत्यस्य परसप्तमीत्वात्। तत्र दन्त्यादौ तङि 'लुग्वा दुहदिह' इत्यादिना क्सस्य वा लुकि अदुग्ध, अदुग्धाः, अदुह्वहि इति भवति। अत्रात्मनेपदे ताविति वक्तव्ये दन्त्यग्रहणाद्दन्त्यौष्ठ्योऽपि वकारो दन्त्यग्रहणेन गृह्यते। दुधुक्षति, दुधुक्षते दोदुह्यते। दोदुहीति, दोदोग्धि इत्यादि द्विषिवत्। दोहयति। अदूदुहत्। अयं द्विकर्मकः, गां दोग्धि पय इति। तत्र पुरुषप्रवृत्तेः पयोऽर्थत्वात्पयः प्रधानं कर्म, अन्यदप्रधानम्। तत्र 'अप्रधाने दुहादीनाम्' इति वचनात् कर्मणि लादयोऽप्रधाने भवन्ति— दुह्यते गौः पयो देवदत्तेन, अदोहि गौः, दोग्धव्या, सुदोहा, दुग्धा इति—कृद्योगलक्षणा षष्ठी द्वितीयावदुभयोरपि कर्मणोर्भवति दोग्धा गोः पयस इति। 'उभयथापि गोणिकापुत्रः' इति भाष्ये उक्तत्वादप्रधाने द्वितीयापि भवति—दोग्धा गां पयस इति। दोग्धव्या गौः पयो देवदत्तेनेत्यत्रानभिहिते कर्मणि कर्त्तरि च 'कर्तृकर्मणोः' इति षष्ठी न भवति, उभयप्राप्तौ कृत्ये षष्ठीनिषेधस्योक्तत्वात्। अप्रधाने द्वितीयापि भवति। उपपादितं चैतन्नाथतौ। कर्मकर्तरि—'न दुहस्नुनमाम्' इति

निषेधाद्यगस्य न भवति—दुग्धे गौः पयः स्वयमेव, अदुग्धम्, अदुग्ध, दुहीत—इति, पयो मुञ्चतीत्यर्थः। चिण् तु 'दुहश्च' इति विकल्पनात्पक्षे भवत्येव—अदोहीति। अन्यदा कर्तृवत् क्से तस्य च वा लुकि अधुक्षत, अदुग्ध इति भवति। एवं च 'न दुह' इति चिण्निषेधो दुहिव्यतिरिक्तार्थो भवति। अस्ति च दुहेः सकर्मकस्यापि कर्मवद्भावः, 'दुहिपच्योर्बहुलं सकर्मकयोः' इति। 'न दुह' इति निषेधः 'दुहश्च' इति चिण्विकल्पश्च प्रकृतिग्रहणन्यायेन यङ्लुगन्तेऽपि भवति—दोदुग्धे गौः पयः। अदोदोहि, अदोदोहिष्ट इति। यङ्लुगन्तस्य सेट्कत्वाद् न क्सोऽस्तीति 'च्लेः सिच्' इति सिजेव। दुह्यम्, दोह्यम्—'शंसिदुहिगुहिभ्यो वेति वक्तव्यम्' इति क्यब्ण्यतौ। गोधुक्, प्रधुक्—'सत्सूद्विष' इत्यादिना सोपपदात्सोपसर्गाच्च क्विप्। कामदुघा—'दुहः कब्घश्च' इति कप्प्रत्ययो हस्य च घः। दोही—'सम्पृच' इत्यादिना घिनुण्। दुहिता—'नप्तृनेष्टृ' इत्यादिना तृचीटि गुणाभावो निपात्यते। 'ऋन्नेभ्य' इति ङीप् स्वस्रादिपाठान्न भवति। दुहितरौ इत्यादौ सर्वनामस्थाने 'अप्तृन्' इति दीर्घो न भवति, तत्र नप्त्रादीनां ग्रहणम् 'संज्ञाशब्दानामौणादिकानामेषामेव दीर्घः' इति नियमार्थमित्युक्तत्वात्। सौ तु 'ऋदुशनस्' इत्यनङि नान्तत्वात् 'सर्वनामस्थाने च' इति दीर्घः। दुहितुरपत्यं दौहित्रः—विदादित्वादञ्। स्त्रियां दौहित्री—'शार्ङ्गरवाद्यञः' इति ङीन्। सूतपुत्री सूतदुहिता—'सूतोग्रराजभोजभ्यो दुहितुः पुत्रड् वा वक्तव्यः' इति पुत्रडादेशः। टित्त्वान् ङीप्। एवमुग्रपुत्रीत्याद्यपि भवति। 'वाचंयम' इत्यत्र[1] वृत्तौ पुत्रडादेशमुक्त्वा "केचित्तु शार्ङ्गरवादिषु पुत्रशब्दं पठन्ति तस्य पुत्रीति भवति। अन्यत्रापि हि दृश्यते शैलपुत्री" इत्युक्तम्। कथं तर्हि 'वा सूतकापुत्रकावृन्दारकाणाम्' इतीत्वविकल्प उक्तः ? अत्र हरदत्तः—"पुत्रिकेति शार्ङ्गरवादिपाठान् ङीनि स्वार्थे कनि 'केऽणः' इति ह्रस्व अकारस्तस्य पक्षेऽयं विधीयते" इति। इरिदयमर्दनार्थः शपि गतः ॥ ४ ॥

६. दिह उपचये[2]। देग्धि। दिग्धे—इत्यादि पूर्ववत्। प्रणिदेग्धि—'नेर्गद' इति णत्वम्। अत्र देग्धीति श्तिपा निर्देशात् प्रनिदेदेग्धीत्यत्र णत्वं न भवति। देहः—'अकर्तरि च कारके' इति कर्मणि घञ्। देहोऽस्यास्तीति देही—'अत इनिठनौ' इतीनिः। यद्यपि 'एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ' इतीनिठनौ कृदन्तान्निषिध्येते, तथापि 'तदस्यास्त्यस्मिन्' इत्यत्र इतिकरणस्यानुवर्त्तनात् तस्य च विषयनियमार्थत्वात्कार्यीत्यादिवदत्रेनिर्भविष्यति। उक्तं च वृत्तौ—'इतिकरणो विषयनियमार्थः सर्वत्र सम्बध्यते' इति। दिह्यते उपलिप्यते इति देहनी—बाहुलकात् कर्मणि ल्युट्। गौरादित्वान् ङीष् ॥ ५ ॥

---

१. वस्तुतस्तु एतदुत्तरसूत्रे 'कारे सत्यागदस्य' (६।३।७०) इत्यत्र वृत्तावयं पाठः—इति विद्वद्भिर्ध्येयम्।

२. 'उपतापे' इति मैत्रेयः।

७. लिह आस्वादने। लेढि। लीढः। लिहन्ति। लेक्षि। लीढः। लीढ॥ लीढे। लिहाते। लिहते। लिक्षे। लिहाथे। लीढ्वे। लिहे। लिह्वहे—झलि 'हो ढः' 'झषस्तथो' इति तथोर्धत्वे 'ष्टुना ष्टुः' इति ष्टुत्वे तस्य चाश्रयासिद्धत्वाड् ढो-ढेलोपे 'ढ्रलोपे पूर्वस्य दीर्घः' इति दीर्घः। सकारादौ 'षढोः' इति कत्वम्। तिपि ढत्वस्य पूर्वत्रासिद्धत्वात्पूर्वमेव गुणे ढत्वादि। लिहन्ति, लिहते इत्यत्राप्यसिद्ध-त्वादिना पूर्वमेवान्तादादेशयोर्झल्परत्वाभावाड् ढत्वं न भवति। लिलेह। लिलि-हतुः। लिलिहुः। लिलेहिथ। लिलिहिव। लिलिहिम॥ लिलिहे। लिलेहिषे। लिलिहिढ्वे, लिलिहिध्वे। लिलिहिवहे—क्रादिनियमादिट्। लेढा, लेढासे। लेक्ष्यति, लेक्ष्यते। लेढु, लीढात्। लीढाम्। लिहन्तु। लीढि। लेहानि। लीढाम्। लिह[ा]-ताम्। लिक्ष्व। लीढ्वम्। लेहै—हौ धित्वे ष्टुत्वादि। अलेट्। अलीढाम्। ... अलिहन्। अलेट्। अलीढम्। अलीढ। अलेहम्। अलिह्व॥ अलीढ। अलिहाताम्। अलिहत। अलीढाः। अलीढ्वम्। अलिहि। अलिह्वहि। लिह्यात्। लिह्या[ता]म्। लिह्याम्॥ लिहीत। लिहीथाः। लिहीय—अत्र अपित्सार्वधातुकत्वान्न गुणः। ... आशिषि—लिह्यात्। लिह्यास्ताम्। लिक्षीष्ट—इत्यादि। 'लिङ्सिचौ' इति ... कित्त्वान्न गुणः। लिक्षीध्वमित्यत्र ढत्वे षत्वस्यासिद्धत्वान्न षीध्वमस्ति। कृते च ढत्वे कत्वषत्वयोश्च नेणः परः षीध्वमिति नास्ति मूर्द्धन्यप्रसङ्गः। अलिक्षत्। अलिक्षताम्। अलिक्षन्। अलिक्षः। अलिक्षम्। अलिक्षाव। अलिक्षत। अलिक्षाताम्। अलिक्षथाः। अलिक्षि। 'लुग्वा दुह' इत्यादिना दुहिवत् क्सस्य वा लुकि—अलीढ। अलीढाः। अलीढ्वम्। अलिह्वहि—इत्यपि भवति। लिलिक्षति, लिलिक्षते। लेलिह्यते। लेलिहीति, लेलेढि। लेलिहानः—इति चानशि। लेहयति। अलीलिहत्। लेहः—श्याद्व्यध' इतीगुपधलक्षणस्य कस्यापवादो णः। वहंलिहः। अभ्रंलिहः—'वहाभ्रे लिहः' इति वहाभ्रयोः कर्मणोरुपपदयोः खश्। "अरुर्द्विषदजन्तस्य" इति पूर्वपदस्य मुम्, खशः शित्त्वेनापित्सार्वधातुकत्वेन ङित्वात् न गुणः। शपस्तु लुका लुप्तत्वान्न तदपेक्षोऽपि। अत्र आत्रेयः—"गणकार्यस्यानित्यत्वात् 'सृक्कण्यौ-लिहति जिह्वया कदाचित्' इति 'संज्ञापूर्वको विधिरनित्यः' इति गुणाभावोऽपि। एवं वैद्यके अलिहदित्यादयः" इति। श्वलिड्ढौकते इत्यत्र हो ढे पदान्तरनिरपेक्षत्वे-नान्तरङ्गत्वाज्जश्त्वमिति ढलोपो न भवति। लिक्षा—बाहुलकात् क्सः। यूकालि-क्षम्—'क्षुद्रजन्तवः' इति नित्यं समाहारद्वन्द्वे नपुंसकत्वम्॥ ६॥

८. द्विषादयोऽनुदात्ताः स्वरितेतः।

अथात्मनेपदिनः—

९. चक्षिङ् व्यक्तायां वाचि।

१०. उदात्तोऽनुदात्तेत्। अयं दर्शनकर्मा च, यथा—'विश्वारूपाभिचष्टे शचीभिः' इति। प्रायेणायमाङ्पूर्वः। आचष्टे—'स्कोः' इति कलोपः। आचक्षाते। आचक्षते।

आचक्षे । कलोपे 'षढोः कः सि' इति कत्वम् । आचड्ढ्वे—कलोपष्टुत्वयोर्जश्त्वं षो ढः । चचक्षे । चचक्षाते । चचक्षिरे । चचक्षिषे । चचक्षिध्वे । चचक्षे । चचक्षिवहे ।। चख्ये । चख्याते । चख्यिरे । चख्यिषे । चख्यिध्वे । चख्ये । चख्यिवहे । चख्यिमहे—'वा लिटि' इति ख्याञादेशो वा । उभयत्र क्रादिनियमादिट् । 'आतो लोप इटि च' इत्याल्लोपोऽजादौ क्ङिति इटि च । ध्वम्याल्लोपे इणन्तादङ्गात्पर इति 'विभाषेटः' इति मूर्द्धन्यविकल्पाभावः परस्तादुपपादयिष्यते । ख्याञो ञित्त्वात्पक्षे परस्मैपदमपि भवति । चख्यौ—'आत औ णलः' । चख्यतुः । चख्युः । चख्यिथ, चख्याथ । चख्यथुः । चख्य । चख्यौ । चख्यिव—थलि 'अचस्तास्वत्', 'ऋतो भारद्वाजस्य' इतीड्विकल्पः । 'क्शादिरप्ययमादेश इष्यते' इति वृत्तौ, तेन चक्शे । चक्शाते । चक्शिषे । चक्शिध्वे । चक्शे । चक्शिवहे । चक्शौ । चक्शतुः । चक्शुः । चक्शिथ, चक्शाथ । चक्श । चक्शौ । चक्शिव इति च भवति । भाष्ये तु ख्याञ्क्शाञावुक्त्वोभयोः संग्राहकमादेशान्तरमुक्तम्, यथा—'ख्शादिर्वा । अथवा ख्शादिर्भविष्यति ? चर्त्वेन । अथ ख्यादिः कथम् ? असिद्धे शस्य यवचनं विभाषा' इति । 'असिद्धे शस्य' इत्यस्य कैयटः—"'पूर्वत्रासिद्धम्' इत्यधिकारे णत्वविधानानन्तरं शस्य यत्वं विभाषा वक्तव्यम्'' इति । हरदत्तोऽप्येवम् । सुधाकरस्तु "वाशब्दोपजीवनाय 'यरोऽनुनासिकेऽनुनासिको वा' इत्यस्यानन्तरम्" इति । अस्याश्च कल्पनायाः प्रयोजनानि सुप्रख्यस्य भावः सौप्रख्यमित्यत्र "योपधाद्गुरूपोत्तमाद्वुञ्' इति योपधलक्षणे वुञि, यत्वस्य पूर्वत्रासिद्धत्वेनायोपधत्वाद् वुञभावात् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ् । तथा सुप्रख्येन निर्वृत्तो देशस्सौप्रख्यस्तत्र भवः सौप्रख्यीय इत्यत्र 'धन्वयोपधाद्वुञ्' इति वुञ् न भवति, यत्वस्यासिद्धत्वात्तदभावे वृद्धाच्छः । पुंसः ख्यानं पुंख्यानमित्यत्र च संयोगान्तत्वेन सलोपे 'सम्पुंकानां सो वक्तव्यः' इत्यम्परे खयि मकारस्य विधीयमानः सकारो यत्वस्यासिद्धत्वादम्परत्वाभावान्न भवति । चख्यिध्वे—इत्यत्र ध्वमि इट्याल्लोपे 'इणः षीध्वम्' 'विभाषेटः' इति मूर्द्धन्यो यत्वस्यासिद्धत्वाद् न भवति । 'नमः ख्यात्रे' इत्यत्रापि यत्वस्य 'शर्परे खरि विसर्जनीयः' इति विसर्जनीये कर्त्तव्येऽसिद्धत्वादस्ति शर्परतेति विसर्जनीयः, अन्यथा 'कुप्वोः ≍क≍पौ च' इति विसर्जनीयजिह्वामूलीयौ द्वौ स्याताम् । किं च—ख्यातमित्यत्र 'संयोगादेरातो धातोः' इति निष्ठानत्वे कर्त्तव्ये यत्वस्यासिद्धत्वान्नत्वाभावः । तथा पर्याख्यानमित्यत्र 'कृत्यचः' इति नत्वे यत्वस्यासिद्धत्वादनटा शकारेण व्यवधानाद् णत्वाभावः । ननु ख्यातम् इत्यत्र 'न ध्याख्या' इति नत्वप्रतिषेधस्य सिद्धत्वात्कथमिदं भाष्ये प्रयोजनमुक्तम् ? अत्र कैयटः—'न ध्याख्या' इति तु प्रतिषेधः 'ख्या प्रकथने' इत्यस्यैव, प्रतिपदोक्तत्वाद्; अस्य तु शस्य यत्वेन लाक्षणिकत्वादिति मन्यते' इति । ननु 'नमः ख्यात्रे' इत्यत्र जिह्वामूलीयस्याभावः कथं प्रयोजनमुक्तम् ? यस्मात्स दुर्वारः । तथाहि—'ख्या प्रकथने'

इत्यस्मादपि वृचि ख्यातृशब्दस्य सद्भावात्तत्स्थस्य यकारस्यानादेशत्वादसिद्धत्वाभावात् न शर्परत्वमिति 'शर्परे खरि विसर्जनीयः' इत्यस्याप्रसङ्गात् 'कुप्वोः' इति प्राप्तस्य पाक्षिकस्य जिह्वामूलीयस्य बाधकाभावात्, नैष दोषः; ख्यातिरप्यार्द्धधातुके क्शादिः, 'असिद्धे शस्य यवचनं विभाषा' इत्येतदपि तस्यापि साधारणमिति। अत्र च प्रमाणं 'सस्थानत्वं नमः ख्यात्रे' इत्यत्र सस्थानत्वं न भवतीति भाष्यवार्त्तिकयोः सस्थानाभावस्य प्रयोजनत्वेन कथनम्। सस्थानमिति जिह्वामूलीयस्य संज्ञा। तथा चाह पदमञ्जर्यां हरदत्तः—"ख्या प्रकथने इति वक्ष्यते, सोऽपि क्शादिः। असिद्धे शस्य यवचनं विभाषा' इत्यपि तस्यापि साधारणं द्रष्टव्यम्" इति। आत्रेयोऽपि 'सर्वत्रार्द्धधातुके चक्षे इति वास्य रूपम्' इति। एवं च चक्षिङिव ख्यातिरपि निष्ठायां क्शादिः। शकारस्य च 'असिद्धे शस्य यवचनं विभाषा' इति वा यत्वम्, तच्च 'संयोगादेरातः' इति निष्ठानत्वेऽसिद्धमिति यत्वस्याभावान्नत्वस्य नैव प्रसङ्गः इति 'न ध्याख्या' इति प्रतिषेधः ख्यात्यर्थोऽपि न कर्त्तव्यो भवति। अत्रेदं विचार्यते—चक्शावित्यादौ यत्वाभावे चर्त्वे 'खयो द्वितीयाः शरि पौष्करसादेः' इति खकारो भवति, वा न वेति? नेत्याह; अस्मिन्कर्त्तव्ये चर्त्वस्य पूर्वत्रासिद्धत्वाद् द्वितीयभाविनः खयोऽभावात्। 'खयो द्वितीयाः' इत्येतत् 'नादिन्याक्रोशे पुत्रस्य' इत्यत्र हि पठ्यते। न चैवं भ्रमितव्यं 'क्शादिरप्ययमादेश इष्यते' इति वृत्तौ ककारादिरयमादेश उच्यत इति द्वितीयभाविनः खयः सम्भवादस्ति 'खयो द्वितीया' इत्यस्य प्राप्तिरिति; यतो वृत्तिकारनिर्देशो भाविचर्त्वापेक्षः। अन्यथा- "अथ वा क्शादिर्भविष्यति। केनेदानीं क्शादिर्भविष्यति? चर्त्वेन" इत्यादि भाष्यविरोधप्रसङ्गः। ख्याता, ख्यातासे, ख्याताहे। क्शाता, क्शातासे, क्शाताहे। ख्याता, ख्यातासि, ख्यातास्मि। क्शाता, क्शातासि, ख्यातास्मि—'चक्षिङः ख्याञ्' इत्यार्द्धधातुके ख्याञादेशः, लिड्वत् क्शादित्वमनुसन्धेयम्। ख्यास्यते। ख्यास्यसे। ख्यास्ये। ख्यास्यति इत्यादि क्शादिपक्ष उदाहार्यम्। चष्टाम्। चक्षाताम्। चक्षताम्। चक्ष्व। चक्षाथाम्। चड्ढ्वम् कलोपादि लङ्वत्। चक्षै। अचष्ट। अचक्षाताम्। अचक्षत। अचष्ठाः। अचड्ढ्वम्। अचक्षि। अचक्ष्वहि। चक्षीत। चक्षीयाताम्। चक्षीरन्। चक्षीथाः। चक्षीयाथाम्। चक्षीध्वम्। चक्षीय। आशिषि—ख्यासीष्ट। ख्यासीयास्ताम्। ख्यासीष्ठाः। ख्यासीध्वम्। ख्यासीय। ख्येयात्। ख्येयास्ताम्। ख्येयासुः। ख्येयाः। ख्येयास्तम्। ख्येयासम्—'एर्लिङि', 'वान्यस्य संयोगादेः' इति वा लिट्यार्द्धधातुके एत्वम्। एत्वाभावे—ख्यायात्। ख्यायास्ताम्। ख्यायाः। ख्यायासम्। क्शासीष्ट। क्शायात्, क्शेयात्— इत्यादि चोदाहार्यम्। अख्यत। अख्येताम्। अख्यन्त। अख्यथाः। अख्यध्वम्। अख्ये। अख्यावहि॥ अख्यत्। अख्यताम्। अख्यन्। अख्यः। अख्यम्। अख्याव— 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङादेशः। 'ख्या इति प्रकथनार्थस्य चादेशस्य च ग्रहणम्' इति न्यासः। 'आतो लोप इटि च' इत्याल्लोपोऽङि। अख्येतामित्यादौ

'आतो ङितः' इतीयादेशः। यत्रादौ 'अतो दीर्घः'। अङ्विधौ ख्यातीति कृतयत्वायाः विकृतेर्निर्देशादकृतयत्वायाः प्रकृतेरग्रह इति यदा क्शादित्वं तदा सिजेव। अक्शास्त। अक्शासाताम्। अक्शासत। अक्शास्थाः। अक्शासि। अक्शास्वहि। अक्शासीत्। अक्शासिष्टाम्। अक्शासिषुः। अक्शासीः। अक्शासिषम्—'यमरमननाताम्' इति सगिटौ। ननु '"निसमुपविभ्यो ह्वः' इति कृतात्वस्यानुकरणेन विधीयमानस्तङ् निह्वास्यते इत्यादावाकारान्ते एव स्यान्न तु प्रकृतेरेदन्तस्य ह्वे इत्यस्येति निह्वयते इत्यादि सिद्ध्यर्थं विकृतिरपि प्रकृतिं गृह्णात्येव। कथं विज्ञायते ? यदयं 'न व्यो लिटि' इत्यात्वभूतस्य वेञो निर्देशेनात्वप्रतिषेधं शास्ति ततो ज्ञायते" इत्युक्तं न्यासे, तद्वदिहापि विकृत्या प्रकृतेर्ग्रहणादङ् स्यात्, मैवम्; न तत्र विकृत्या प्रकृतिग्रहणात्तङ्, किन्तु एजन्तैव प्रकृतिरनुक्रियते इति। अनुकरणस्यात्वं तु लक्षणवशात्। 'न व्यो लिटि' इत्यत्राप्यनुकार्यमेजन्तमेव लक्षणवशादनुकरणमात्वभूतमिति न विकृत्या प्रकृतिग्रहणस्येदं ज्ञापकम्। सर्वमेतत्प्रपञ्चितं ह्वयतौ। अख्यास्यत। अख्यास्यत्। अक्शास्यत। अक्शास्यत्। कर्मणि—ख्यायते। क्शायते इत्यादि। स्यादिषु वा चिण्वदिटि ख्यायिष्यते। अख्यायिष्यत। ख्यायिषीष्ट। ख्यायिता इत्यादि। इडभावे—ख्यास्यते। अख्यास्यत। ख्यासीष्ट। ख्याता इत्यादि। क्शादिरप्युदाहार्यः। एवं कर्मकर्त्तर्यपि। लुङि तु तशब्दे कर्मणि नित्यश्चिण्, कर्मकर्त्तरि तु 'अचः कर्मकर्त्तरि' इति पाक्षिकः। तदभावे द्विवचनादौ च 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यङ्। अख्यायि। अख्यत। अख्येताम् इत्यादि। क्शादित्वे त्वङ् नास्तीत्युक्तम्। तेन अक्शायि इति चिणि तदभावे सिचि चिण्वदिटो भावाभावाभ्याम् अक्शायिष्ट, अक्शास्त; अक्शायिषाताम्, अक्शासाताम् इत्यादि। तदेवं क्शादिपक्षे तशब्दे त्रैरूप्यम्। सनि—चिख्यासते, चिख्यासति। चिक्शासति, चिक्शासते। चाख्यायते, चाक्शायते। यङ्लुकि 'न लुमता' इत्यत्र लुमता लुप्तप्रत्ययनिमित्ते आङ्गे चानाङ्गे च कार्ये प्रत्ययलक्षणनिषेधाद्यङ्परत्वाभावान्न ख्याञादेशः। नन्वार्धधातुक इति विषयसप्तमीति प्रागेव तदुपपत्तेः ख्याञादेशेन भाव्यम्, मैवम्; लुका तद्विषयत्वमेवापह्रियते। तथा च 'न लुमताङ्गस्य' इत्यत्र कैयटे—"न लुमता तस्मिन्निति चेद्धनि णिङादेशा न सिद्ध्यन्तीति भाष्यवार्त्तिकयोरुक्तेः 'लुङि च' इत्यादौ विषयसप्तम्याश्रयणेनादेशाः सेत्स्यन्ति" इत्याशङ्क्य "लुका लुङो विषयापहारात् विषयसप्तम्याश्रयणेऽप्यसिद्धिः" इत्युक्तम्। एवं चाङ्विधौ ख्यातीति शितपा निर्देशः प्रकथनार्थस्य यङ्लुक्यङ्निवृत्त्यर्थो भवति। यदुक्तं वर्द्धमानेन—'ख्यातीति शितपा निर्देशाद् यङ्लुकि अचाख्यासीत्' इति, तदपि प्रकथनार्थपरं व्याख्येयम्। ख्यापयति, क्शापयति। अचिख्यपत्, अचिक्शपत्। आख्येयम्, आक्शेयम्—'आर्द्धधातुके' इत्यस्य विषयसप्तमीत्वात् प्रागेव प्रत्ययोत्पत्तेः ख्याञादेश इति अजन्तलक्षणो यद्भवति। 'ईद्यति' इतीत्वे गुणः। संचक्ष्यः

वर्जनीय इत्यर्थः—'वर्जने प्रतिषेधः' इति ख्यात्रभावे हलन्तलक्षणो ण्यत्। शोभनं प्रचष्टे सुप्रख्यः—उपसृष्टादकर्मोपपदाच्च 'आतश्चोपसर्गे' इति कः। उपसृष्टात् कर्मोपपदात्तु कर्मण्यणि युकि गोप्रख्यायः इति। गां संचष्टे गोसंख्यः इत्यत्र तु 'समि ख्यः' इति कर्मणि समि चोपपदेऽणोपवादः कः। तथा स्त्रियमाचष्टे स्त्र्याख्य इत्यत्र 'मूलविभुजादिभ्यः' इति कोऽपि भवति। तथानुपसृष्टात् कर्मोपपदात् 'आतोऽनुपसर्गे कः' इति के गोख्यः। अनुपसृष्टादनुपपदात्तु 'श्याद्व्यध' इत्याकारान्तलक्षणे णे युकि ख्याय इति। गोख्यायो व्रजति, गोसंख्यायो व्रजति, स्त्रियाख्येयो व्रजति इत्यत्र "अण्कर्मणि च" इति कर्मणि क्रियायां क्रियार्थायां चोपपदे विधीयमानोऽण् 'आतोऽनुपसर्गे कः', 'समि ख्यः', 'मूलविभुजादिभ्य उपसंख्यानम्' इति च विधीयमानं कं परत्वाद् बाधते। तथाच वृत्तिः—"कर्मणि सामान्यविहितोऽपि वासरूपविधेरभावाद् ण्वुला बाधितः पुनरण् विधीयते, सोपपदत्वाद् ण्वुलं बाधते, परत्वाच्च कादीन्। तेनापवादविषयेऽपि भवत्येव" इति। वासरूपाभावश्च 'क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिप्रतिषेधः' इति।

ईषदाख्यानम्—'आतो युच्' इति युच् ईषदादिषु कृच्छ्राकृच्छ्रार्थेषु उपपदेषु। आख्या—"आतश्चोपसर्गे' इत्यङ्। सर्वेष्वेषु कृत्सु क्तादिरप्युदाहार्यः। अत्रेकारे विप्रतिपद्यन्ते—"अयमनुदात्तः, प्रयोजनं विचक्षण इत्यत्र 'अनुदात्तेतश्च' इति युच्" इति कैयटपदमञ्जरीकारादयः। अत्र 'असनयोश्च प्रतिषेधः' इति ख्यात्रभावः। 'इदितो नुम्' इति नुमिह न भवति, अन्तग्रहणानुवृत्तेरन्तेदित एव तद्विधानात्। अयं चासनयोश्चेति ख्याञ्प्रतिषेधः संज्ञायाम्। यदाह भाष्यकारः—'बहुलं तणीति वक्तव्यम्, अन्नवधकगात्रविचक्षणाजिराद्यर्थम्, किमिदं तणीति? संज्ञाच्छन्दसोर्ग्रहणम्' इति, तेनासंज्ञायां भावादौ ल्युटि आख्यानमिति भवति। अत्रानुदात्तेत्वादेव तङि सिद्धे ङकारोऽन्तेदित्त्वविघातायेति केचित्। एवं हि चक्ष इत्यकारमेवानुदात्तमितमासजेत्। तस्मादन्तेदित्त्वाभावार्थः सन् 'अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यम्' इति ज्ञापनार्थोऽयं ङकारः। तेन 'तालैः शिञ्जद्वलयसुभगैः'[1], 'तृष्णे जृम्भसि', 'प्रार्थयन्ति शयनोत्थितं प्रियाः' इत्यादयः प्रयोगा उपपद्यन्ते। ननु शिङ्क्ते इति शिञ्जः, जृम्भते इति जृम्भः, तद्वदाचरतीति क्वौ शतरि सिपि च शिञ्जन्, जृम्भसीति सिद्ध्यतः। तथा प्रार्थनं प्रार्थः, तत्करोति णौ प्रार्थयन्तीति, तत् किमनेन ज्ञापनेन? सत्यम्; शब्दाः सिद्ध्यन्ति, अर्थास्तु सहृदयहृदयङ्गमा न भवन्ति। अत्र आत्रेयः—'ङित्करणमेकानुबन्धस्यात्मनेपदस्यानित्यत्वज्ञापनार्थम्' इति, नेहाप्यार्जवं पश्यामः। यस्मादवश्यं युजर्थमनुदात्तेत्त्वं कर्त्तव्यम्, तेनैव च तङि सिद्धे पुनस्तङर्थः क्रियमाणो ङकारोऽनुदात्तेत्त्वप्रयुक्तस्य तङोऽनित्यत्वज्ञापनायैव भवति। तथा "गणकृतमात्मनेपदमनित्यम्' इति ज्ञापनार्थम्" इति तरङ्गिणीग्रन्थोऽप्येतेनैव

१. उत्तरमेघ० १६ श्लो०।

प्रत्युक्तः। सम्मताकारस्तु 'इकार उच्चारणार्थः' इति। तन्मते विचक्षण इत्यत्र युज्न स्यात्। ल्युट्येव ख्याञभावोऽस्त्विति न शक्यते वक्तुम्; 'सूर्या उभा चन्द्रमसा विचक्षणाः' इत्यन्तोदात्तावेक्षणात्, ल्युटि हि मध्योदात्तेन भाव्यम्। न चान्नवधकगात्रविचक्षणेति निर्देशो युचमपि कल्पयेत्; यस्मादयमार्द्धधातुके ख्याञभावमात्रपर इति ल्युट्येव ख्याञभावेऽपि चरितार्थः। 'अन्नवधक' इत्यत्र 'विचक्षण इति ल्युटि' इति वदन् न्यासकारोऽपि स्वरविरोधेनैव प्रत्युक्तः। नृचक्षाः राक्षसः—'असुन्, इत्यसुन्प्रत्ययः। 'असनयोश्च' इति ख्याञभावः। चक्षुः—'चक्षेः शिच्च' इत्युस्प्रत्ययः। तस्य शित्त्वात्सार्वधातुकत्वात् ख्याञभावः। अचक्षुः चक्षुः करोति चक्षूकरोति—'अरुर्मनः' इत्यादिना च्वौ सलोपे 'च्वौ च' इति दीर्घः॥ ७॥

शब्दतन्त्रस्वतन्त्रेण प्रक्रियेयं प्रपञ्चिता। तस्या निःशेषतस्सन्तु बोद्धारो भाष्यपारगाः॥

११. ईर गतौ कम्पने च। इतः पृचिपर्यन्ता उदात्ता अनुदात्तेतः। ईर्ते। ईराते। ईरते। ईर्षे। ईराथे। ईर्ध्वे। ईरे। ईराञ्चक्रे—'इजादेश्च गुरुमतः' इत्याम्। अत्र केचित् 'इन्धिभवतिभ्यां च' इति इन्धेः परस्य लिटः कित्त्वविधानाज्ज्ञापकादामः पाक्षिकत्वं ज्ञापयन्तः 'रथचरणादिभिरीरिरेथ वीराः' इति प्रयोगं समर्थयन्ते। न च 'समीधे दस्यु हन्तमम्' इत्यादौ मन्त्रत्वादामो निषेधे श्रूयमाणस्य लिटः कित्त्वार्थं सूत्रं स्यात्; यस्मादत्र 'छन्दस्युभयथा' इति सार्वधातुकत्वात् 'सार्वधातुकमपित्' इति ङित्त्वेनैव कित्कार्यम् 'अनिदिताम्' इत्युपधालोपः सिद्धयति, तस्माज् ज्ञापकमेवेति? सत्यम्; एवं शक्यते कल्पयितुम्, भाष्यकारवार्त्तिककारयोस्तु नेष्टम्, यत्सूत्रमेवैतत्प्रत्याचख्यतुः—'इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यम्' इति। ईरिता। ईरितासे। ईरिताहे। ईरिष्यते। ईरिष्यसे। ईरिष्ये। ईर्त्ताम्। ईर्ष्व। ईर्ध्वम्। ईरै। ऐर्त। ऐराताम्। ऐरत। ऐर्थाः। ऐरि। ऐर्वहि। ईरीत। ईरीयाताम्। ईरीथाः। ईरीय। आशिषि—ईरिषीष्ट। ईरिषीष्ठाः। ईरिषीध्वम्, ईरिषीढ्वम्—'विभाषेटः'। ऐरिष्ट। ऐरिषाताम्। ऐरिष्ठाः। ऐरिध्वम्, ऐरिढ्वम्—'धि च' इति सलोपे 'विभाषेटः'। ऐरिषि। ऐरिष्वहि। कर्मणि – ईर्यते इत्यादि। ईरिरिषते। ईरयति। मा भवानीरिरत्। समीरणः—'अनुदात्तेतः' इति युच्। 'ण्यन्तान्नन्द्यादित्वेन ल्युः' इत्यात्रेयः। निम्नमीर्तं इति नीरम्—निःशब्दोऽयं वृत्तौ निम्नवचनः। तस्मिन्नुपपदे 'कर्मण्यण्' इत्यण्। 'इगुपधलक्षणः कः' इत्यात्रेयः। 'अकारादनुपपदात् कर्मोपपदो विप्रतिषेधेन' इत्युक्तत्वात्तच्चिन्त्यम्। स्वेनाभिप्रायेणेरितुं शीलमस्येति स्वैरी—ताच्छील्ये णिनिः। ईरणमीरः, स्वेनाभिप्रायेणेरोऽस्मिन्निति स्वैरम्—स्वभावादयं क्रियाविशेषणं नपुंसकलिङ्गश्च। उभयत्र 'स्वादीरेरिणोर्वृद्धिर्वक्तव्या' इति वृद्धिः। ईर्मं व्रणम्—बाहुलकान्मः, दक्षिणमीर्ममस्य दक्षिणेर्मा मृगः—व्याधेन दक्षिणे पार्श्वे वृणित इत्यर्थः। ईर्मशब्दो वृत्तौ धर्मिणि वर्त्तते। 'दक्षिणेर्मा लुब्धयोगे' इत्यनिजन्तो बहुव्रीहौ

निपात्यते। अन्यत्र लुब्धयोगाद् दक्षिणेर्म शकटमिति भवति। 'ईर क्षेपे' इत्याधृषीयः ॥ ८॥

१२. ईड स्तुतौ। ईट्टे—ष्टुत्वचर्त्वे। ईडाते। ईडिषे। ईडिध्वे। ईडे। ईड्वहे—'ईडजनोर्ध्वे च' अत्र 'ईश' इति वर्त्तते, 'से' इति च; इशीडिजनां सेध्वेशब्दयोः सार्वधातुकयोः इतीट्। ईडाञ्चक्रे। ईडिता, ईडितासे। ईडिताहे। ईडिष्यते। ईट्टाम्। ईडाताम्। ईडिष्व। ईडिध्वम्। ईडै—"सवाभ्यां वामौ" इति वामयोः कृतयोरप्येकदेशविकृतस्यानन्यत्वात् सेध्वेशब्दावेवेतीट्। ऐट्ट। ऐडाताम्। ऐट्ठाः। ऐड्ढ्वम्—विकृतिग्रहणे प्रकृतिग्रहणाभावान्नेट्। ऐडि। ऐड्वहि। ईडीत। ईडीथाः। ईडिध्वम्। ईडीय। आशिषि—ईडिषीष्ट। ईडिषीष्ठाः। ईडिषीध्वम्। ईडिषीय। ऐडिष्ट। ऐडिध्वम्। ऐडिषि। कर्मणि—ईड्यते इत्यादि। ईडिडिषते। ईडयति। मा भवानीडिडत्। इडा—'गुरोश्च हल' इत्यकारः, 'इडाया वा' इति निर्देशाद् ह्रस्वः। ईड्यः स्तुत्यः—ण्यत्। 'ईडवन्दवृशंसदुहां ण्यतः' इत्याद्युदात्तत्वम्। इडेन्यः—औणादिक एन्यप्रत्ययो बाहुलकात्। अयं चुरादौ च ॥ ९॥

१३. ईश ऐश्वर्ये। धनस्येष्टे। ईशिषे। ईशिध्वे—व्रश्चादिना षत्वे ष्टुत्वं झलि पदान्ते च। 'अधीगर्थदयेशां कर्मणि' इति कर्मणि शेषे षष्ठी। अशेषत्वविवक्षायां धनमीष्टे। ईशाञ्चक्रे इत्यादि पूर्ववत्। ईशानः—लटः शानच्, ताच्छीलिकश्चानश्वा। वाचामीशो वागीशः—'इगुपधलक्षणः कः' इति कः। ननु कर्मणि शेषत्वेन विवक्षिते षष्ठ्यां सिद्धायां पुनस्तद्विधानं समासनिवृत्त्यर्थमिति कथमधीगर्थषष्ठ्याः समासः? सत्यम्; नायमधीगर्थषष्ठ्याः समासः, किन्तु 'कर्तृकर्मणोः कृति' इत्यशेषषष्ठ्याः। तदुक्तम्—'कृद्योगा च षष्ठी समस्यते' इति। ईश्वरः—'स्थेशभासपिसकसो वरच्' इति वरच्। 'नेड्वशि कृति' इतीडभावः। ईश्वरा—टाप्। ईश्वरी—इत्यौणादिके वरटि टित्त्वान्ङीबित्याश्रेयादयः। धनेष्वीश्वरः, धनानामीश्वरः—'स्वामीश्वर' इति षष्ठीसप्तम्यौ शेषे। कथं धनेश्वर इति, यावता 'प्रतिपदविधाना षष्ठी न समस्यते' इत्युक्तम्? सत्यम्; नात्र चकारेण षष्ठी पुनर्विधीयते, किन्त्वनया सप्तम्या मा बाधीत्यभ्यनुज्ञायते। यद्वा—पूर्ववत् 'कर्तृकर्मणोः कृति' इति षष्ठ्या समासः। त्रैरूप्यं चेह साध्यम्। न ईश्वरः अनीश्वरः, न विद्यते वा ईश्वरो यस्य सोऽनीश्वरः, तस्य भावोऽनैश्वर्यम्, आनैश्वर्यम्—ब्राह्मणादित्वात् ष्यञ्। 'नञः शुचीश्वरक्षेत्रज्ञ' इत्यादिनोत्तरपदस्य नित्यं वृद्धिः, पूर्वपदस्य तु वा। तत्पुरुषादपि 'न नञ्पूर्वात्' इति निषेधं बाधित्वा ब्राह्मणादित्वात् ष्यञ्। बहुव्रीहेः सामान्येनैव सिद्धत्वात्तत्पुरुषार्थः स पाठः ॥ १०॥

१४. आस उपवेशने। आस्ते—अत्र 'अनचि च' इति द्वित्वपक्षे द्वौ सकारौ, अन्यदा त्वेकः। न च द्वित्वे 'स्कोः' इति सलोपप्रसङ्गः, द्वित्वस्यासिद्धत्वात्। आस्से—इत्यत्र द्वित्वपक्षे त्रयः सकाराः। न च 'झरो झरि' इति

लोपाद् द्वावेवेति मन्तव्यम्; तस्यापि विकल्पितत्वात्। आध्वे—'धि च' इति सलोपे धकारस्य द्वित्वे जश्त्वम्। आसे। आसाञ्चक्रे—'दयायासश्च' इत्याम्। आसिता, आसितासे। आसिताहे। आसिष्यते। आस्ताम्। आस्व। आध्वम्। आसै। आस्त। आसाताम्। आस्थाः। आध्वम्। आसि। आस्वहि। आसीत। आसीथाः। आसीय। आशिषि—आसिषीष्ट। आसीषीष्ठाः। आसीषीय। आसिष्ट। आसिषाताम्। आसिष्ठाः। आसिड्ढ्वम्—'धि च' इति सिचो लोपे 'इणः षीध्वम्' इति मूर्द्धन्यः। आशिषि तु इटः प्रत्ययभक्तत्वेनाङ्गस्यानिटत्वात् आसिषीध्वम् इत्येव। सनि आसिसिषते। आसयति। मा भवानासिसत्। ग्राममध्यास्ते—'अधिशीङ्स्थासां कर्म' इति आधारस्य कर्मत्वम्। मासमास्ते मासमासनेन व्याप्नोतीत्यर्थः। सकर्मकव्यापनरूपधात्वर्थाङ्ग आसने धातोर्वृत्त्या व्यापनापेक्षं मासस्य कर्मत्वम्। एवञ्चास्य मासादिना सकर्मकत्वेऽपि तत्रतत्राकर्मकग्रहणेषु कालभावाध्वगन्तव्यदेशव्यतिरिक्तेन कर्मणा अकर्मकाणां ग्रहणमिति आसयति मासं देवदत्तमिति प्रयोज्यस्य 'गतिबुद्धि' इति कर्मत्वं भवति। तथा 'अणावकर्मकात्' इति नित्यं परस्मैपदं च। एवं 'लः कर्मणि च' इत्यादिना विधीयमाना लादयोऽप्यस्य वस्तुतो मासादिना सकर्मकत्वादकर्मत्वादकर्मकग्रहणेन ग्रहणाच्च भावकर्मणोरुभयोरपि भवन्ति—आस्यते मासं देवदत्तेन, आस्यते मासो देवदत्तेन, आसितव्यं मासम्, आसितव्यो मासः। स्वासं मासम्, स्वासो मास इति—तव्यखलोः 'न लोकाव्यय' इति कर्मणि षष्ठ्याः निषेधः। अयं च प्रकारः 'अकथितं च' 'कालाध्वनोः' इत्यादौ भाष्यकैयटपदमञ्जर्यादिषु सहस्रशः स्फोरितः। अस्माभिरपि भवतौ प्रपञ्चितः। ननु कटे आस्ते इत्यादौ मासादिवत् व्याप्त्यपेक्षया कटादेरपि कर्मत्वेन भाव्यम्? अत्र कैयटः—'नियतत्वाच्च प्रयोगस्य कटे आस्ते इत्यादौ त्वासनमात्रेऽनङ्गीकृतक्रियान्तरे आसिर्वर्त्तत इत्यतिप्रसङ्गो नोद्भावनीयः' इति। आसीनः—'ईदासः' इति आसेः परस्यानस्यादेरीकारः। आसना—'ण्यासश्रन्थो युच्' इति युच्। आस्या—वासरूपविधिना ण्यत्। अस्त्रियामिति निषेध उभयोरपि स्त्र्यधिकारविहितत्वे एवेति। बाहुलकात् क्तिन्नपि भवति उपास्तिः इति। उपासितो गुरुं शिष्यः, उपासितो गुरुः शिष्येण वा—'गत्यर्थाकर्मक' इत्यादिना कर्तृकर्मणोः क्तः; उपसर्गवशात् कालादिव्यतिरिक्तेनापि सकर्मकत्वात्। कैलासः—केलिः प्रयोजनमस्य कैलः, 'चूडादिभ्य उपसङ्ख्यानम्' इत्यण्; आस्यतेऽस्मिन्निति आसः—'हलश्च' इत्यधिकरणे घञ्; कैलश्चासावासश्चेति 'विशेषणं विशेष्येण' इति संज्ञात्वाल्लोहितशाल्यादिवत् समासो नित्यम्॥ ११॥

१५. आङःशासु इच्छायाम्। आशास्ते। आशासाते। आशास्से। आशाध्वे। आशासे—'शास इदङ्हलोः' इत्यङि हलादौ क्ङिति च विधीयमानमुपधाया ईत्वमस्य न भवति, संयोगस्य विशेषस्मृतिहेतुत्वाद् अङ्सम्बन्धिन एव शासेस्तत्र

ग्रहणाद्; अस्य च नास्त्यङ्सम्बन्धः, 'र्तिशास्ति' इत्यत्र सर्त्यातिभ्यां पस्मैप-दिभ्यां साहचर्यात्तादृश एव परस्मैपदिनः शासेर्ग्रहणमिति । आशशासे । आशशा-साते । आशशासिरे । आशशासिषे । आशशासिध्वे । आशशासे । आशशासिवहे । आसिवदन्ये लकाराः । आशशासिषते । आशाशास्यते । आशाशासीति, आशाशास्ति । आशासयति । आशीः —'आङश्शासः क्वौ' इतीत्वम्, सकारस्य रुत्वे 'र्वोरुपधायाः' इति दीर्घः । 'क्षियाशीः' इति निर्देशाद्वेत्वम् । आशिषौ इत्यादौ 'शासिवसिघसि' इत्यादिना षत्वम् । तत्र हि न केवलं शासनार्थस्य ग्रहणं किंत्वस्यापि । तथा च 'आशिषि लिङ्लोटौ' इति निर्दिश्यते । आशिषा—'आपं चैव हलन्तानाम्' इत्यात्रेयः । अन्या आशीः अन्यदाशीः—"अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीरा-शास्थास्थितोत्सुकोतिकारकरागच्छेषु" षष्ठीतृतीयाव्यतिरिक्तविभक्त्यन्तस्यान्य-शब्दस्याशीरादिषूत्तरपदेषु छे च प्रत्यये दुगिति दुगागमः । षष्ठीतृतीयान्तत्वे तु अन्याशीः । अत्र 'अषष्ठ्यतृतीयास्थस्य' इति निषेधः कारकच्छव्यतिरिक्तविषयः । उक्तं च—

'दुगागमोऽविशेषेण कर्तव्यः कारकच्छयोः । षष्ठीतृतीययोर्नेष्ट आशीरादिषु सप्तसु ॥'

इति । आशिषं करोति आशिषयतीत्यत्र सोपसर्गात् संग्रामयतेरेवेति नियमात् शीशब्दादेव णिजुत्पत्तौ 'प्रकृत्यैकाच्' इति प्रकृतिभावाण्णाविष्ठवदिति टिलोपो न भवति । अत्रात्रेयमैत्रेयस्वामिकाश्यपा अमुमुदितं पठित्वा "नाग्लोपिशास्वृदिताम्' इत्यत्रास्यापि सामान्येन ग्रहणात् आशशासदित्युपधाह्रस्वनिषेधो भवति" इति । आत्रेयमैत्रेयौ तु प्रयोजनान्तरं चाहतुः—"'क्त्वापि छन्दसि' इति ल्यपोऽपवादे क्त्वादेशे आशास्त्वा, आशासित्वेतीड्विकल्पः । निष्ठायां 'यस्य विभाषा' इति निषेधादिड् न भवति आशास्त, आशास्तवान् इति भवति" इति । वर्द्धमानसंमताकारहरदत्तगर्गादयस्त्वनुदितं पठित्वा "'नाग्लोपि' इत्यत्रोदितोऽनुशासनार्थस्यैव ग्रहणादस्य ह्रस्वनिषेधाभावाद् आशिशसदिति ह्रस्वेन भाव्यम्" इत्याहुः । वर्द्धमानादिमते निष्ठायामाशासित इति च भवितव्यम् । अत्र हरदत्तेन—

'शक्यः शासिग्रहोऽकर्तुमृदिदेष पठिष्यते । ऋशासु अनुशिष्टावित्येवमेके प्रचक्षते ॥'

इत्यनुशासनार्थस्य शासेर्मतान्तरसिद्धमृदित्पाठमाश्रित्य ऋदित्त्वादेवोपधाह्रस्वनिषेधसिद्धेः शासिग्रहणं न कर्तव्यमित्यभिधानात् तन्मतेऽप्यस्य शासेरुदित्त्वमनभिप्रेतं प्रतीयते । उदित्त्वे शास्वित्युकारानुबन्धकरणमेतदर्थं स्यादिति कथं प्रत्याख्यायेत ! एवमृदित्त्ववादिनां शासिग्रहणे निरर्थके यन्मतान्तरेण फलमुक्तं हरदत्तेनैव—

'वदन्त्यन्ये तु सूत्रेऽस्मिन् शासिं निरनुबन्धकम् ।
पठन्तः प्रतिषेधोऽस्य यङ्लुक्यपि भवेदिति ॥'

तदयुक्तम्; प्रकृतौ निरर्थकत्वे विकृत्यर्थं शासिग्रहणं स्यात्, इह त्वाशा-सेर्मुक्तानुबन्धकस्यानुवादत्वेन प्रकृत्यर्थत्वं शक्यते वक्तुम्। "प्रायेणायमाङ्पूर्व इति 'नमो वाकं प्रशास्महे'[1] इति भवभूतिप्रयोगोपपत्तिः" इत्यात्रेयः। 'एतिस्तुशास्वृ' इत्यत्रोदितो निर्देशान्नास्मात् क्यपः प्रसङ्ग इति आशास्यम् इति ण्यदेव। येषा-मस्याप्युदित्त्वेन तत्र ग्रह इष्टस्तेषामप्याशास्यमित्येवं रूपम्, यस्मात् 'शास इदङ्-हलोः' इतीत्वमस्य नास्तीति प्रागेवोक्तम्। आशासा—'गुरोश्च हल' इत्यकारः। आशंसते इतीच्छायाम्। शंसतीति स्तुतौ। शसतीति हिंसायां शपि। शास्तीत्य-नुशासनेऽग्रे ॥ १२ ॥

१६. वस आच्छादने। निवासे वसतीति गतं शपि। वस्ते। वस्से। वध्वे। वसे। ववसे। ववसिषे। ववसिवहे—'न शसददवादि' इत्येत्वाभ्यासलोपनिषेधः। वसिता इत्याद्यासिवदुदाहार्यम्। विवसिषते। वावस्यते। वावसीति, वावस्ति। वासयति वस्त्रं देवदत्तेन, वासयते इति वा। यदा तु व्यापारान्तरनिवृत्तिपरायां चोदनायामविवक्षितकर्मकोऽयमकर्मकस्तदा 'अणावकर्मकात्' इति परस्मैपदमेव। 'गतिबुद्धि' इत्यादिना प्रयोज्यस्य कर्मत्वं देवदत्तं वासयति इति। 'न पादमि' इत्यत्र लुग्विकरणत्वान्नास्य ग्रह इत्युक्तम्। अत एव 'प्रे लपसृद्रुमथवदवस' इत्यादावपि नास्य ग्रहः। वसित्वा। वसितम्—इत्यत्र 'वचिस्वपि' इति सम्प्र-सारणस्य नात्र प्रसङ्गः; अस्यायजादित्वात्। वस्यते आच्छाद्यतेऽनेनेति वसनम्—करणे ल्युट्। यद्वा—वस्ते आच्छादयतीत्यनुदात्तेत इति कर्त्तरि युच्। वस्त्रम्—ष्ट्रन्। वस्त्रेण समाच्छादयति संवस्त्रयति—'मुण्डमिश्र' इत्यादिना णिच्। 'वस्त्रात्समाच्छादने' इति वृत्तिः। वासः, वाससी—'वसेर्णिच्च' इत्यसुनि णित्वात् वृद्धिः। कृत्तिर्वासोऽस्येति कृत्तिवासाः—'अत्वसन्तस्य' इत्यत्वन्तस्यासम्बुद्धौ सौ दीर्घः। अकारान्तस्तु कृत्तिं वस्त इति कर्मण्यणि। चर्मवः इत्यादि प्रयोगश्चर्म वस्त इति 'क्विप् च' इति क्विपि 'क्विबन्ता धातुत्वं न जहति' इति अधातोरिति निषेधात् 'अत्वसन्तस्य' इति न दीर्घः। अयमेवाधातोरिति निषेधः 'क्विबन्ता धातुत्वं न जहति' इत्यस्य मूलम्। वसा शरीरान्तर्गतस्नेहद्रव्यम्—पचाद्यचि टाप्। तद्धि तद्व्याप्य तिष्ठति ॥ १३ ॥

१७. कसि गतिशासनयोः। कंस्ते। कंसाते। कंसते। कंस्से। कन्ध्वे—'धि च' इति सलोपः। अत्र 'अयोगवाहानामट्सु णत्वमविशेषेण संयोगोपधासंज्ञाऽलोन्त्य-द्विर्वचनस्थानिवत्प्रतिषेधाः'[2] इति यत्र यत्र प्रयोजनं तत्र तत्रायोगवाहानामुप-देशस्य चोदितत्वादनुस्वारस्याच्त्वाश्रयेण दकारस्य 'अनचि च' इति वा द्विर्वचने

---

१. उत्तररा० १।१।

२. म० भा० ( ५ शि० सू० )

पूर्वस्य जश्त्वेऽनुस्वारस्य च परसवर्णे नकारदकारधकारवकाराः संयुज्यन्ते। द्विर्वचनाभावे तु दकारस्याभावादन्ये त्रयः। ननु द्वित्वपक्षेऽपि 'झरो झरि सवर्णे' इति दकारस्य लोपात्त्रयाणामेव संयोगः स्यात्, मैवम्; अस्य विभाषितत्वात्। एवं कंस्त इत्यादावपि सकारस्य झल्परत्वे पक्षे द्विर्वचनं द्रष्टव्यम्। न च 'स्कोः' इति सलोपस्य विद्यमानत्वाद् द्विर्वचनमकृतसममिति मन्तव्यम्, अस्मिन् द्विर्वचनस्यासिद्धत्वात्, कंस्वहि इत्यादौ झल्परत्वाभावाच्च न सलोपप्रसङ्गः। नापि 'झरो झरि' इति सलोपेन वैयर्थ्यमाशङ्कनीयम्, तस्य विकल्पितत्वात्। एवमुदाहरणेषु द्वौ सकारावेको वा। मध्यमैकवचने द्वित्वे त्रयः सकाराः। अद्वित्वे 'झरो झरि' इति यदा लोपस्तदैकः। अन्यदा तु द्वौ। चकंसे। चकंसिपे। चकंसिवहे। कंसिता। कंसिष्यते। कंस्ताम्। कंस्व, कन्ध्वम्। कंसै। अकंस्त। अकंस्थाः। अकंसि। कंसीत। कंसीथाः। कंसीय। आशिषि—कंसिषीष्ट। अकंसिष्ट। अकंसिष्ठाः। अकंसिषि। चिकंसिषते। चाकंस्यते। चाकंस्ति, चाकंसीति। लङि अटि तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे अचाकन्। कंसयति। अचकंसत्—सर्वत्रेदित्त्वान्नुम्। अत एव चाकंस्यते इत्यादौ लोपाभावः। अयं पाठो मैत्रेयादीनाम्। अन्ये तु व्याख्यान्तरेऽमुं तालव्यान्तमनिदितं मन्यन्ते। तथा च 'प्रतिष्कशश्च कशेः' इत्यत्र वृत्तिः—'कश गतिशासनयोः' इति। भूवादिसूत्रे सुधाकरश्च—"पारायणिकैरयमिदिहृत्यान्त्यः उदाहारि। अन्यैस्तु 'प्रतिष्कशश्च कशेः' इति दर्शनात्तालव्यान्तः समाम्नायि" इति। 'घृतस्य धारा अभिचाकशीमि' इत्यत्र भट्टभास्करश्च 'कशेर्गतिकर्मणो यङ्लुकि रूपम्' इति। तथा 'नाभ्यस्तस्य' इत्यत्र च वृत्तौ 'पस्पशाते, चाकशीति, वावसीति' इत्युदाहृत्य 'छान्दसं ह्रस्वत्वं द्रष्टव्यम्, पस्पशाते इत्यभ्यासह्रस्वत्वं च, प्रकृत्यन्तराणां वा स्पशिवशिकशीनामेतानि रूपाणि' इत्युक्तम्। अत्र हरदत्तादयः—'स्पाशिर्वार्त्तिककारवचनादपठितोऽपि धातुरस्ति, काश्‌ृ दीप्तौ वास्‌ृ शब्दे' इत्याद्युक्त्वा प्रकृत्यन्तराणामिति विवृण्वाना आहुः 'कश गतिशासनयो' इति। कैयटे च—'स्पशिवशिकशयः प्रकृत्यन्तराणि' इति भाष्यमुपादाय 'स्पश बाधनस्पर्शनयोः कश गतिशासनयोरिति केचित्पठन्ति। अन्ये तु कस गतिशासनयोरिति तन्मते कसिः सौत्रो धातुर्द्रष्टव्यः' इत्युक्तम्। अत्र धातौ क्षीरस्वामी 'कसेत्येके' इति दन्त्यान्तमनिदितमपि पपाठ। प्रदेशान्तरे चाह—'कशि गतिशासनयोरितीकारान्तः शकारान्तश्च पठ्यते' इति। कष्टे—'व्रश्च' इत्यादिना षत्वं ष्टुत्वम्। कशाते। कक्षे—षत्वकत्वे। कड्ढ्वे—षत्वे धकारस्य ष्टुत्वे षकारस्य जश्त्वं डकारः। कशे। कश्वहे। चकशे। चकशिषे। चकशिवहे। कशिता। कशिष्यते। कष्टाम्। कक्ष्व। कशै। अकष्ट। अकष्ठाः। कशीत। कशीथाः। कशीय। आशिषि—कशिषीष्ट। अकशिष्ट। अकशिष्ठाः। अकशिषि। चिकशिषते। चाकश्यते। चाकशीति, चाकष्टि। काशयति। अचीकशत्। कशा—पचाद्यचि टाप्। कशामर्हतीति कश्यम्

अश्वानां मध्यम्—दण्डादित्वाद्यत्। प्रतिष्कशः वार्त्तापुरुषः सहायः पुरोयायीति वा—'प्रतिष्कशश्च कशेः' इति प्रतिपूर्वस्य कशेरचि सुट् सस्य षत्वञ्च निपात्यते। 'प्रतिष्कशः' इत्येतावत्येव सूत्रयितव्ये 'कशेः' इति वचनं प्रतेः कशिसम्बन्धित्वे निपातनं यथा स्यादिति। तेन कशां प्रति गतः प्रतिकशोऽश्व इत्यत्र न भवति, अत्र हि प्रतिर्गमिसम्बन्धी। अनिदित्सान्तपक्षे कस्ते इत्यादि द्रष्टव्यम्॥ १४॥

१८. णिसि चुम्बने। इदिद्दन्त्यान्तः। निंस्ते—इत्यादि कसिवत्। अत्रात्रेयादयः 'प्रणिंस्ते प्रनिंस्ते' इत्युदाहृत्य 'वा निंस' इति णत्वविकल्पमाहुः। अस्माभिस्तु 'तत्कृति पर' इति निन्दतावुपपादितम्। आभरणकारस्तु तालव्यान्तं पठित्वा 'वा निंश' इति सूत्रमपि स्वपाठानुगुणं पपाठ, तत्तु 'नुम्विसर्जनीयशर्व्यवायेऽपि' इत्यत्र वृत्तिन्यासपदमञ्जर्याद्यपर्यालोचनविजृम्भितम्। तत्र हि 'नुमादिभिः प्रत्येकं व्यवाये षत्वमिष्यते' तेन निंस्से, निंस्वेत्यत्र न भवति' इत्युक्तम्। अस्य तालव्यान्तत्वे व्रश्चादिषत्वे 'षढोः' इति कत्वे कवर्गात्परत्वेन षत्वं दुर्वारमिति कथं प्रत्युदाह्रियेत!॥ १५॥

१९. णिजि शुद्धौ। निङ्क्ते—कुत्वे चर्त्वम्। निञ्जाते। निञ्जते। निङ्क्ते—कुत्वषत्वचर्त्वानुस्वारपरसवर्णाः। निनिञ्जे। निनिञ्जिषे। निञ्जिता। निञ्जिष्यते। निङ्क्ताम्। अनिङ्क्त। निञ्जीत। आशिषि—निञ्जिषीष्ठ। अनिञ्जिष्ट। निनिञ्जिषते। नेनिञ्ज्यते—इदित्त्वान्नुम् सर्वत्र। अत एव क्ङिति नलोपाभावः। नेनिञ्जीति, नेनिङ्क्ति। निञ्जयति। अनिनिञ्जत्।

'पचिं वचिं विचिरिचिरञ्जिपृच्छतीन्, निजिं सिचिं मुचिमजिभञ्जिभृज्जतीन्।'

इत्यत्र निरनुषङ्गपाठाद् णिजिर् शौचपोषणयोरिति जौहोत्यादिकस्यैव ग्रहः। अयं सेडुदाहृतः॥ १६॥

२०. शिजि अव्यक्ते शब्दे। शिङ्क्ते इत्यादि पूर्ववत्। 'तालैः शिञ्जद्' इत्यात्मनेपदानित्यत्वज्ञापनादिति चक्षावुक्तम्। शिञ्जा—पचाद्यचि टाप्। 'गुरोश्च हलः' इत्यकारो वा। शिञ्जिनी—आवश्यकणिन्यन्तान् ङीष्॥ १७॥

२१. पिजि वर्णे[1]। 'सम्पर्चने' इति शाकटायनः। 'उभयत्र' इति सम्मता। 'अवयवे' इति काश्यपः। 'अयं शिञ्जिश्च द्वावव्यक्ते शब्दे' इति काश्यपः। पिङ्क्ते इत्यादि पूर्ववत्। पिङ्गः—घञ्। पिञ्जरः, पिङ्गलः—बाहुलकादरालौ। पुरुषपिङ्गलः, पिङ्गलपुरुषः—'कडाराः कर्मधारये' इति विशेषणस्य वा परनिपातः, कडारादिपाठादेव जकारस्य गकारः। पिङ्गली पिङ्गलिका—गौरादिपाठान् ङीष्। पिङ्गलिमा, पैङ्गल्यम्—'वर्णदृढादिभ्यः ष्यञ् च' इतीमनिच्ष्यञौ। पिञ्जूलः शूलं सङ्घातश्च—'खर्जपिञ्जादिभ्यः ऊरोलचौ' इत्यूलच्। 'पृजीत्येके, पृङ्क्ते' इति मैत्रेयः। एवमात्रेयश्च। पिजि भाषार्थः। तुजि पिजि हिंसाबलादाननिकेतनेष्विति चुरादौ॥ १८॥

---

१. सूत्रमिदं क्षीरस्वाम्यनभिमतम्।

२२. वृजी वर्जने[1]। दन्त्योष्ठ्यादिः । इदिदिति आत्रेयादयो दौर्गाश्च । वृक्ते । वृजाते । वृचे । वृग्ध्वे । ववृजे । ववृजिषे । ववृजिवहे । वर्जिता । वर्जिष्यते । वृक्ताम् । वृक्ष्व । वर्जै । वर्जावहै-आटि गुणः । अवृक्त । अवृक्थाः । अवृजि । वृजीत । वृजीथाः । वृजीय । आशिषि वर्जिषीष्ट-अत्र 'लिङ्सिचौ' इत्यत्र झलीत्यनुवर्त्तनान्न कित्त्वम् । अवर्जिष्ट । अवर्जिष्ठाः । अवर्जिषि । विवर्जिषते । वरीवृज्यते-रीगभ्यासस्य । वर्वक्ति-रुगागमः । रीग्रिकोरप्युदाहार्यम् । वर्जयति । अवीवृजत्, अववर्जत्-'उर्ऋत्' इत्यृकारो वा गुणापवादः । वर्जित्वा । वृक्तम्-निष्ठायाम् 'श्वीदितो निष्ठायाम्' इत्यनिट्त्वम् । वृज्यः-'ऋदुपधाच्च' इति क्यप् । वृजयो जनपदाः—'इगुपधात्किच्च' इतीन् प्रत्ययः, कित्त्वान्न गुणः । वृजिषु भवो वृजिकः-'मद्रवृज्योः कन्' इति शैषिकः । वर्गः-घञि कुत्वम् । वर्गे भवो वर्ग्यः-दिगादित्वाद्यत् । कवर्गीयः-'वर्गान्ताच्च' इति भवार्थे छः । वासुदेववर्गे भवो वासुदेववर्ग्यः, वासुदेववर्गीणः-'अशब्दे यत्खावन्यतरस्याम्' इति यत्खौ । अन्यतरस्यां ग्रहणाच्छ च—वासुदेववर्गीय इति । वृजिनं पापम्-'वृजेः किच्च' इतीनच् प्रत्ययः । कित्त्वान्न गुणः । वृजनम्-'वृपूवृजिमन्दिनीधाञ्भ्यः क्युन्' इति क्युन्यनादेशः । अयं रुधादौ युजादौ च । अयमिदिदिति मैत्रेयः । तथा चाधीयते—'चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इति । तथा च शाबरभाष्ये प्रवृञ्जनमिति प्रयुज्यते । तथा च स्वामी-'वृज इति दौर्गाः, तेषां वृक्ते, वर्जिता' इति । शाकटायनस्यापीदित्वमेवेष्टम्, यदाह-'पिजु वृजु पृचै सम्पर्चने' इति । तेन ह्यदिदिदित्स्थाने क्रियते, एदिदीदित्स्थाने । तन्मते पूर्वोऽयं वक्ष्यमाणास्त्रयश्च सम्पर्चनार्थाः । वृञ्जाते । वृञ्जते । वृङ्क्ते । वृञ्जे । ववृञ्जे । वृञ्जिता । वृञ्जिष्यते । वृङ्क्ताम् । अवृङ्क्त । वृञ्जीत । आशिषि-वृञ्जिषीष्ट । अवृञ्जिष्ट । विवृञ्जिषते । वरीवृञ्ज्यते । वरीवृङ्क्ति । वृञ्जयति । अववृञ्जत् ॥ १९ ॥

२३. पृची सम्पर्चने[2] । ओष्ठ्यादिरीदित् । पृक्ते इत्यादि वृजीवत् । 'उदित्' इति दुर्गकाश्यपनन्दिधनपालादयः । 'इदित्तृतीयान्तः' इति कौशिकः । 'ईदित्' इत्यपरे । तत्र वृत्तौ 'सम्पृचादिसूत्रे-'पृची सम्पर्के' इति रुधादिर्गृह्यते, न त्वदादिः' इत्यभिधानात् प्रथमान्त ईदिदेव युक्तः । उणादिवृत्तौ पर्जन्यशब्दव्युत्पादने 'अर्जेः पर्ज वा' इत्यन्यप्रत्यये पर्जादेशविधानाच्चायुक्तस्तृतीयान्तपाठः । 'पिजु वृजु पृचै सम्पर्चने' इति पठन् शाकटायनोऽप्यत्रैवानुकूलः, तेन ह्युदिदिदित्स्थाने क्रियते । ईदित्स्थाने चैदिदित्युक्तम् । अयं रुधादौ च । युज पृच संयमने इति चुरादौ ॥२०॥

२४. इरादय उदात्ता अनुदात्तेतः ।

२५. षूङ् प्राणिगर्भविमोचने । सूते । सुवाते । सुवते । सूषे । सूध्वे । सुवे । सूवहे । सूमहे-अजादावुवङ् । सुषुवे । सुषुवाते । सुषुविषे । सुषुविढ्वे, सुषुविध्वे 'विभाषेटः' । सुषुविवहे—'आदेशप्रत्यययोः' इतीणः परस्य सस्य षत्वम् ।

---

१. सूत्रमिदं क्षीरस्वाम्यनभिमतम् । २. 'सम्पर्के' इति क्षीरस्वामी, मैत्रेयश्च ।

श्र्युकः किति निषेधोऽत्र स्वरत्यादिविकल्पनात् ।
पूर्वं निषेधकाण्डस्य प्रारम्भाद्बलवत्तरः ।
तथापि क्रादिसूत्रेण बाध्यते तत्र बृग्रहात् ॥

तेन इण् नित्यः । एतच्च स्वरतावेवोपपादितम् । सोता, सविता । सोष्यते, सविष्यते—स्वरत्यादिनेड्विकल्पः । सूताम् । सुवाताम् । सूष्व । सुवै - आटि पित्त्वादङित्त्वेऽपि 'भूसुवोस्तिङि' इति निषेधान्न गुणः । असूत । असुवाताम् । असूथाः । असूध्वम् । असुवि । असूवहि । सुवीत । सुवीयाताम् । सुवीथाः । सुवीय । आशिषि—सविषीष्ट । सविषीयास्ताम् । सविषीरन् । सविषीष्ठाः । सविषीढ्वम्, सविषीध्वम् । सविषीय । सोषीष्ट । सोषीयास्ताम् । सोषीरन् । सोषीष्ठाः । सोषीढ्वम् । सोषीय—आर्धधातुकत्वात्स्वरत्यादिनेड्विकल्पः । अत एव "भूसुवोस्तिङि" इति गुणनिषेधोऽपि न भवति । स हि सार्वधातुकविषयः । 'इणः षीध्वम्' इति नित्यो मूर्द्धन्योऽनिट्पक्षे, इट्पक्षे तु गुणावादेशयोर्मूर्धन्यविकल्पः । एवं लुङ्यपि । असविष्ट । असविषाताम् । असविष्ठाः । असविध्वम्, असविढ्वम् । असविषि । असविष्वहि । असोष्ट । असोषाताम् । असोष्ठाः । असोढ्वम् । असोषि । सुसूषते—'स्तौतिण्योरेव' इति नियमान्न षत्वम् । 'सनि ग्रहगुहोश्च' इति चशब्देनोकोऽनुकर्षणादिण्निषेधः । 'श्र्युकः किति' इतिवददोऽपि स्वरत्यादिविकल्पं बाधते । उक्तं च न्यासे—"'श्र्युकः किति' 'सनि ग्रहगुहोश्च' इति पूर्वं विधेरिट्प्रतिषेधसामर्थ्याद् बलीयस्त्वं प्रतिषेधनियमस्य" इति । सोषूयते । सोषुवीति, सोषूत्ति—'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्' इति 'भूसुवोस्तिङि' इति गुणप्रतिषेधः । सावयति । असूषवत्—णौ कृतस्य स्थानिवद्भावात्सूशब्दस्य द्विर्वचनम् । कर्मणि—सूयते । असावि इत्यादि । स्यादिषु तु वा चिण्वद्भावादिटि—साविष्यते इत्यादि । अन्यदा कर्तृवदिड्विकल्पे द्वैरूप्यम्, तदेवं त्रीणि रूपाणि भवन्ति । लुङ्लिङोर्ध्वमि तु शुद्ध इटि वा चिण्वदिट्यपि 'विभाषेटः' इति मूर्धन्यविकल्पनात्पञ्च रूपाण्युदाहार्याणि । एवं कर्मकर्तर्यपि । लुङ्येकवचने तु 'अचः कर्मकर्तरि' इति चिण्सिचौ द्वौ भवतः । सिचश्च वा चिण्वदिट् । तदभावे शुद्धेड्विकल्पश्चेति चातूरूप्यम्—असावि, असविष्ट, असाविष्ट, असोष्ट इति । गोषु प्रसूतः, गवां प्रसूतः—'स्वामीश्वर' इत्यादिना शेषे षष्ठीसप्तम्यौ भवतः । तत्र षष्ठी सप्तम्या मा बाधीति पक्षे केवलमभ्यनुज्ञायते, न पुनर्विधीयते इति प्रतिपदविधानाभावाद् गोप्रसूत इति समासोऽपि भवति । ईशावयमर्थः प्रपञ्चितः । पुत्रसूः, प्रसूः—'सत्सूद्विष' इत्यादिना कर्मण्युपसर्गे चोपपदे क्विप् । तत्र यद्यपि सुपीति चानुवर्त्तते तथापि तस्याकर्मकैरेव सम्बन्ध इति गृहे सूत इत्यत्र क्विब् न भवति । अयं च क्विब्विधिर्द्विषा साहचर्यात् लुग्विकरणत्वेऽप्यस्यैव भवति, न तु 'षूङ् प्राणिप्रसवे' इति दैवादिकस्य, नापि 'षू प्रेरणे' इति तौदादिकस्य । सूत्वा—'श्र्युकः किति' इतीण्निषेधः । सूतः, सूतवान्—

इत्यत्रानेन वा 'यस्य विभाषा' इति वा इडभावः। सूतका, सूतिका—स्वार्थे कः। 'केऽणः' इति टापो ह्रस्वः। 'वा सूतकापुत्रकावृन्दारकाणाम्' इत्यत इत्वविकल्पः। प्रसवः—'ऋदोरप्' घञोऽपवादः। सुषूतिः। विषूतिः। निष्षूतिः। दुष्षूतिः—'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' इति स्वादिभ्यः परस्य सुप्यादेः सकारस्य षत्वम्। 'सुपि' इति कृतसम्प्रसारणस्य स्वपेर्निर्देशः। इतरयोस्तु स्वरूपग्रहणमिति सुसूत इत्यत्र 'सात्पदाद्योः' इति षत्वनिषेध एव भवति। सूरिः—'षूङ क्रिः'' इति क्रिः। स्त्रीविवक्षायां 'कृदिकाराद्वा ङीष्' इत्यात्रेयः। सूरः—'सुसूधागृधिभ्यः' इति क्रन्। सूनुः—'सुवः कित्' इति नुप्रत्ययः, कित्त्वान्न गुणः। अलुग्विकरणाद्वा व्युत्पाद्यः। पुमान्—अस्माद्धातोर्डुमसुन्प्रत्ययः, सकारस्य च षकारः। डकारष्टिलोपार्थः। अकार उच्चारणार्थः, अन्त्य उकार उगित्कार्यार्थः, नकारः स्वरार्थः। 'पुंसोऽसुङ्' इति सर्वनामस्थानेऽसुङादेशो ङित्त्वादन्त्यस्य। उकार उच्चारणार्थः। प्रत्ययस्योगित्त्वात्सर्वनामस्थाने नुम् सिद्धः। 'सान्तमहतः संयोगस्य' इति संयोगात्पूर्वस्यासम्बुद्धौ सर्वनामस्थाने दीर्घः। सम्बुद्धौ तु असुङि नुमि संयोगान्तलोपे हे पुमन्निति। पुमांसौ इत्यादौ 'नश्चापदान्तस्य झलि' इत्यनुस्वारः। अजादावसर्वनामस्थाने पुंस इत्यादि। हलादौ तु पूर्वस्य पदत्वात्संयोगान्तलोपे मोऽनुस्वारे, तस्य च 'वा पदान्तस्य' इति ययि वा परसवर्णे पुंभ्याम्, पुम्भ्याम् इत्यादि। पुंसु इत्यत्र 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति षत्वं न भवति, नुमो योऽनुस्वारस्तस्यैव नुम्ग्रहणेन तत्र ग्रहणात्। अयमसुङादेशोऽङ्गाधिकारविहितत्वात्तदन्तस्यापि भवतीति परमपुमानित्यादावपि भवति। बहवः पुमांसो यस्यामिति बहुव्रीहौ बहुपुंसी इत्यत्र अन्तर्वर्त्तिनः सर्वनामस्थानस्य लुका लुप्तत्वात्प्रत्ययलक्षणाभावान्न सर्वनामस्थानपरत्वमित्यसुङ् न भवति। डुमसुन्प्रत्ययस्योगित्त्वात् ङीप्। उरःप्रभृतिषु पुमानित्येकवचनान्तपाठात्तेनैव समासे नित्यः कप्। अन्यत्र 'शेषाद्विभाषा' इति विकल्प इतीह कबभावः। यदा कप् तदा प्रातिपदिकस्य कबन्तत्वेनोगिदन्तत्वाभावाट्टाब् भवति—बहुपुंस्का इति। अत्र सकारस्य संयोगान्तलोपे मकारस्य 'सम्पुंकानां सः' इति 'पुमः खय्यम्परे' इति रुत्वापवादः सकारः। 'अत्रानुनासिकः पूर्वस्य तु वा' इत्युकारस्य वाऽनुनासिकादेशः। नन्वत्रग्रहणस्य रुणा सह सन्नियोगप्रतिपत्त्यर्थत्वात्कथमत्रानुनासिकः ? नैष दोषः; रुप्रकरणे यद्विधीयते तदुपलक्षणार्थत्वादत्रग्रहणस्य। यदा नानुनासिकस्तदा "अनुनासिकात्परोऽनुस्वारः" इत्युकारात्परोऽनुस्वारः। अत्रान्यशब्दस्याध्याहारेणानुनासिकादन्यो यो वर्णस्ततः परोऽनुस्वार इति सूत्रार्थः। एवं नपुंसकेऽप्यन्तर्वर्तिनः सर्वनामस्थानस्य लुप्तत्वादसुङ् न भवति, बहुपुम् नगरमिति। सकारस्य संयोगान्तलोपः। बहुपुंसी इत्यत्रान्तर्वर्तिनीं लुप्तां विभक्तिमाश्रित्य प्रत्ययलक्षणेन तदन्तत्वेन पदत्वात्सकारस्य संयोगान्तलोपो नाशङ्क्यः; 'उत्तरपदत्वे चापदादिविधौ' इत्युत्तर-

खण्डस्य प्रत्ययलक्षणेन पदत्वनिषेधात्। यद्वात्र भसंज्ञया पदसंज्ञाबाधान्नैव सलोपप्रसङ्गः। बहुपुमांसी इत्यत्र शेः सर्वनामस्थानत्वेनासुङ्। तृतीयादिषु पुंल्लिङ्गवत्। पौंस्नम्—अपत्यादौ 'स्त्रीपुंसाभ्याम्' इति स्नञ्। पुंस्त्वम्, पुंस्ता—नञ्स्नञौ त्वतलोर्न बाधकाविति स्त्यायतावुक्तम्। पुंवदिति निपातनाद्वतिः। स्त्री च पुमांश्च स्त्रीपुंसौ—अचतुरादौ इतरेतरयोगे द्वन्द्वेऽजन्तो निपातितः। तत्पुरुषे तु स्त्रियाः पुमान् स्त्रीपुमानित्येव। न स्त्रीपुंसौ नपुंसकः 'न भ्राड्' इत्यादौ निपातनान्नञः प्रकृतिभावः स्त्रीपुंसशब्दस्य च पुंसकादेशः॥ २१॥

२६. शीङ् स्वप्ने। शेते। शयाते। शेरते। शेषे। शेध्वे। शेवहे—'शीङः सार्वधातुके' इति गुणः, 'शीङो रुट्' इति झादेशस्याच्छब्दस्य रुट्। अस्य परत्वादिगन्तत्वमविहितमिति 'शीङः सार्वधातुके' इति गुणः सिद्धः। शिश्ये। शिश्याते। शिश्यिषे। शिश्यिढ्वे, शिश्यिध्वे। शिश्ये। शिश्यिवहे-'एरनेकाचः' इति यणादेशः। अत्र यद्वक्तव्यं तद् 'ई गतौ' इत्यत्रोक्तम्[1]। ध्वमि 'विभाषेटः'। शयिता। शयिष्यते। शेताम्। शयाताम्। शेरताम्। शेष्व। शेध्वम्। शयै। शयावहै। अशेत। अशयाताम्। अशेरत। अशेथाः। अशयि। अशेवहि। शयीत। शयीयाः। शयीय। आशिषि—शयिषीष्ट। शयिषीष्ठाः। शयिषीढ्वम्, शयिषीध्वम्। शयिषीय। अशयिष्ट। अशयिष्ठाः। अशयिध्वम्, अशयिढ्वम्। अशयिषि। शिशयिषते। शाशय्यते—'अयङ्यि क्ङिति' इति शीङो यकारादौ क्ङित्ययङ्, स च ङित्त्वादन्त्यस्य। परत्वादस्मिन् कृते द्वित्वम्। शेशयीति, शेशेति। शेशीतः। शेश्यति—'शीङः' इति सानुबन्धकनिर्देशान्न गुणो नापि रुट्, व्यतिशेश्यते इति। पिद्वचने तु 'सार्वधातुकार्द्धधातुकयोः' इति गुणः। शेशीयते भवता इत्यत्र भावे लकारे यकि 'शीङः' इति सानुबन्धकनिर्देशादयङ् न भवति। शाययति देवदत्तम्। अशीशयत्—'अणावकर्मकात्' इति चित्तवत्कर्तृकत्वे नित्यं परस्मैपदम्। अन्यदा तूभयम्। अकर्मकत्वात्प्रयोज्यस्य कर्मत्वम्। ग्रामोऽधिशय्यते-'अधिशीङ्स्थासाम्' इत्याधारस्य कर्मत्वात्कर्मणि चलादयो भवन्ति। यकारादित्वादयङादेशः। भावे—शय्यते देवदत्तेन। कालभावाध्वगन्तव्यदेशेषु कर्मस्वासिवद्भावे कर्मणि च लादयो भवन्ति। शय्यते मासं देवदत्तेन, शय्यते मासो देवदत्तेन इत्यादि। अस्योपादानं भवतावनुगन्तव्यम्। स्यादिषु चिण्वदिटि शायिष्यते इत्याद्युदाहार्यम्। तदभावे कर्तृवदेव रूपम्। कर्मकर्तर्यप्येवम्। लुङ्येकवचने 'अचः कर्मकर्त्तरि' इति चिण्सिचौ। सिचः पक्षे चिण्वदिट् चेति त्रैरूप्यम्—अत्यशायि, अत्यशयिष्ट, अत्यशायिष्ट इति। विशयी देशविशेषः—'विशयी देशे' इति ग्रहादिपाठाण्णिनिः, वृद्ध्यभावश्च। खे शयः खशयः—'अधिकरणे शेतेः' इत्यच्। "शयवासवासिष्वकालात्" इत्यकालवाचिनः पूर्वपदात्सप्तम्या वाऽलुक्, कालवाचित्वे तु पूर्वाह्णशयः—इति लुगेव। पार्श्वा-

[1] भ्वादिगणे 'इट किट कटी गतौ' इत्यत्रेति भावः।

भ्यां शेते इति पार्श्वशयः। उरसा शेते उरःशयः—'पार्श्वादिषूपसंख्यानम्' इत्यम्। उत्तानश्शेते उत्तानशयः। एवमूर्ध्वंशयः—'उत्तानादिषु कर्तृषु' इत्यच्। दिग्धेन सह शेते इति दिग्धसहशयः—'दिग्धसहपूर्वाच्च' इत्यच्। दिग्धसहशब्दस्य-मयूरव्यंसकादित्वादस्मादेव निर्देशाद्वा तत्पुरुषः। तेन शयशब्दस्योपपदसमासः। सप्तमीनिर्देशाभावेऽप्युपपदाधिकारे विधानात्सुपीत्यनुवर्तनाद्वा उपपदत्वं दिग्धसह-शब्दस्याविरुद्धम्। न्यासेऽप्युक्तम् 'उपपदसमासः' इति। गिरिशः—'गिरौ डश्छ-न्दसि' इति डे टिलोपः। 'संज्ञाशब्दत्वाद्भाषायामप्ययं प्रयुज्यते तुराषाडिति च' इत्यात्रेयः। हरदत्तस्तु—'लोमादिलक्षणेन शप्रत्ययेन भाषायामपि भवति गिरिशः' इति। भाष्येऽप्येतद्वचनं प्रत्याख्यातं 'तद्धितो वा' इति। शयालुः—'आलुचि शीङो ग्रहणम्' इत्यालुच्। शयितः—'मतिबुद्धि' इत्यत्र चकारस्यानुक्तसमुच्च-यार्थत्वाद्वर्तमाने क्तः। अतिशयितो गुरुं शिष्यः, अतिशयितो गुरुः शिष्येण—'गत्य-र्थाकर्मक' इति कर्तृकर्मणोः क्तः। उपसर्गवाशात्सकर्मकोऽयम्। तदर्थ एव हि पाठः। सेटो निष्ठायाम् 'निष्ठाशीङ्' इति कित्त्वनिषेधाद् गुणः। सानुबन्धकनिर्दे-शाद्यङ्लुकि कित्त्वमेवेति शेश्यित इति 'एरनेकाचः' इति यणेव भवति। तव विशायस्तवोपशायः—शयनं तव प्राप्तावसरमित्यर्थः, 'व्युपयोः शेतेः पर्याये' इति घञ्। पर्यायादन्यत्र उपशय इत्यच्। पूर्वसूत्रादनुपात्यये इत्यनुवृत्त्यैव पर्यायत्वे सिद्धे पुनः पर्यायग्रहणात् 'अभिविधौ भावे इनुण्' इतीनुणं परमपि बाधित्वाऽभिविधा-वपि घञेव भवति उपशायो वर्तते इति। अभिविधिरभिव्याप्तिः, पर्यायशयनं सार्व-त्रिकमित्यर्थः। शेरतेऽस्मिन्नङ्गुलय इति शयः—'पुंसि संज्ञायाम्' इति घः। शय्या—'संज्ञायां समजनिषद' इत्यादिनाऽधिकरणे स्त्रियां क्यप्। शयनीयम् - बाहुलकाद-धिकरणेऽनीयर्। सुखशयनं पृच्छति सौखशायनिकः—'पृच्छतौ सुस्नातादिभ्यः' इति ठक्। अतिशये भवः आतिशायिकः—अध्यात्मादित्वाट्ठञ्, अनुशतिकादित्वा-दुभयोरुदाहरणयोरुभयपदवृद्धिः। 'व्याप्तमातिशयिकेन रसेन'[1] इति माघप्रयोग-श्चिन्त्यः। अतिशायनम्—ल्युट्, 'अतिशायने' इति निपातनाद्दीर्घः। 'अबाधका-न्यपि निपातनानि' इत्यतिशयनमित्यपि भवति। संशयमापन्नः सांशयिकोऽर्थः—'संशयमापन्नः' इति ठञ्। अत्र यद्यपि कर्मवत् कर्तुरपि संशयापन्नत्वमस्ति, तथापि संशयादिति पञ्चम्या निर्देष्टव्ये प्रकरणसिद्धाया अपि द्वितीयायाः संशय-मिति शब्देन पुनरुपादानं कर्मणोऽत्र प्राधान्यख्यापनार्थमिति तत्रैवायं प्रत्ययः। 'पूज्यः प्रतीक्ष्यः सांशयिकः संशयापन्नमानसः[2]' इति वदन्निघण्टुकारस्तु सूत्रं साधारणं मन्यते। एतदात्रेयन्यासकारपदमञ्जरीकारादयो न सहन्ते। शोभनः शयोऽस्याः सुशयिका—कपि ह्रस्वे 'प्रत्ययस्थात्कात्' इतीत्वम्। 'उदीचामातः स्थाने' इति निषेधस्तु न भवति, 'यकपूर्वत्वे धात्वन्तयोः प्रतिषेधः' इति। शयुः

१. शिशु० १०।२३। २. अ० को० ३।१।५।

अजगरः—'भृमृशी' इत्युप्रत्यः। शयानकः स एव—'आनकच् शीङ्भियः' इत्यानकच्। शेवा लिङ्गाकृतिः–'शेवायह्वा' इति वन्नन्तो निपात्यते। शेवं सुखम्–'इण्शीङ्भ्यां वन्' इति वन्। शीधुः, शीलम्, शैवालम्, शैवलः—'शीङो धुग्लग्वालञ्वलञः' इति धुग्लग्वालञ्वलञः प्रत्ययाः। अपरे–'शीङः स्थुक्' इति पठन्तः प्रत्ययं द्वितीयादिं मन्यन्ते। 'शीङो धुक्' इत्येव सूत्रम्। अन्ये तूहिताः सह पठ्यन्ते। यदाहुरात्रेयादयः—'बाहुलकाद्वालञ्वलञौ' इति। शीलशब्दः शीलतेर्वा। शेवलम् इति—बाहुलकाद्वलच्। शेपः, शेपसी—'वृञ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च' इत्यसुन् पुडागमश्च यथासंख्यं रूपे स्वाङ्गे च। अकारान्तस्तु शेपशब्दः पप्रत्यये। उक्तं च कैयटपदमञ्जर्योः—'अकारान्तोऽपि शेपशब्दोऽस्ति' इति। तथा च वार्तिकमपि पठ्यते–'शुनः शेपपुच्छलाङ्गूलेषु' इति। शिखा—'शीङो निद्ध्रस्वश्च' इति खप्रत्ययो निद्ध्रस्वश्च धातोः। शिखावलो मयूरः—'दन्तशिखात्संज्ञायाम्' इति मत्वर्थीयो वलच्। शिखी—'व्रीह्यादिभ्यश्च' इतीनिः। शिखावलं नगरम्—'शिखाया वलच्' इति चातुरर्थिको वलच्। शिनिः क्षत्रियविशेषः—'निप्रत्यये ह्रस्वः' इति 'कार्तकौजपः' इत्यत्र न्यासे व्युत्पादितम् ॥ २२ ॥

२७. आत्मनेपदिनाद्युदात्तौ।

२८. यु मिश्रणे[1]। एतदादयस्स्तौत्यन्ता उदात्ता उदात्तेतः। यौति। युतः। युवन्ति। यौषि। यौमि—'उतो वृद्धिर्लुकि हलि' इति हलादौ पिति सार्वधातुके वृद्धिः। अजादौ क्ङित्युवङ्। युयाव। युयुवतुः। युयविथ। युयुवथुः। युयुव। युयाव, युयव। युयुविव—'श्र्युकः किति' इतीण्निषेधः क्रादिनियमेन बाध्यते इत्युक्तम्। यविता। यविता। यविष्यति। यौतु, युतात्। युताम्। युवन्तु। युहि—हेरपित्त्वान्न गुणो नापि वृद्धिः। यवानि। यवाव—आटि पित्त्वेऽप्यहलादित्वान्न वृद्धिः। अयौत्। अयुताम्। अयुवन्। अयौ। अयवम्। युयात्। युयाताम्। युयुः। युयाः। युयातम्। युयात। युयाम्। युयाव—पिद्वचनेषु यासुटो ङित्त्वेन 'पिच्च ङिन्न भवति' इति पित्त्वाभावान्न वृद्धिर्नापि गुणः। आशिषि—यूयात्। यूयास्ताम्—'अकृत्सार्वधातुकयोः' इति दीर्घः। अयावीत्। अयाविष्टाम्। अयावीः। अयाविषम्—सिचि वृद्धिः। यियविषति—'सनीवन्तर्ध' इत्यादिना सनो वेडागमः। गुणावादेशौ। अनयोः 'द्विर्वचनेऽचि' इति स्थानिवत्त्वाद्युशब्दो द्विरुच्यते। 'ओः पुयण्जि' इतीत्वम्। इडभावे युयूषति—'इको झल्' इति सनः कित्त्वान्न गुणः। 'अज्झन' इति दीर्घः। योयूयते। योयवीति, योयोति—'उतो वृद्धिः' इत्यत्र 'नाभ्यस्तस्य' इत्यनुवृत्तेर्न वृद्धिः। यावयति। अयीयवत्—णौ कृतस्य स्थानिवत्त्वाद्युशब्दस्य द्विर्वचने 'ओः पुयण्जि' इतीत्वे 'दीर्घो लघोः' इति दीर्घः।

---

१. 'मिश्रणेऽमिश्रणे च' इत्यपि क्वचित्पठ्यते। तच्च सायणसम्मतम्।

कर्मणि—यूयते। यूयताम्। अयूयत। यूयेत—यकि 'अकृत्सार्वधातुकयोः' इति दीर्घः। स्यादिषु चिण्वदिट्पक्षे याविष्यते। अयाविषाताम्। याविषीष्ट। याविता। अन्यदा यविष्यते। अयविषाताम्। यविषीष्ट। यविता—इत्यादि। लुङ्लिङोर्ध्वमि मूर्द्धन्यविकल्पाच्चातूरूप्यम्। लुङ्येकवचने 'अचः कर्मकर्त्तरि' इति पक्षे सिच्, तस्य च 'वा चिण्वदिट्' इति अयावि, अयाविष्ट, अयविष्ट—इति त्रैरूप्यम्। याव्यम्—'आ सुयुवपि' इत्यादिना ण्यत्। वृद्धौ 'धातोस्तन्निमित्तस्यैव' इत्यावादेशः। यव्यम्—इति युनातेर्यति। 'सानुबन्धकत्वादिह नायं गृह्यते' इति न्यासे। योत्रम्—'दाम्नी' इत्यादिना ष्ट्रन्। संयावः—'समि युद्रुदुवः' इति घञ्। समोऽन्यत्र प्रयवः—'ऋदोरप्'। उद्यावः—'उदि श्रयतियौति' इति घञ्। यौतीति निर्देशाद् युनातेः उद्यव इति। उद्यावो भक्ष्यविशेषः—'अध्यायन्यायोद्याव' इति संज्ञायां करणाधिकरणयोर्घञि निपात्यते। यूतिः—'ऊतियूति' इति क्तिनि दीर्घत्वमन्तोदात्तत्वं च निपात्यते। प्रयुतिः इत्येतत्तु युनातेः। 'यूतिरिति निपातनं यौतेरेव' इति वृत्तिन्यासयोः। यौत्यत्र रसादिकमिति यवः—'पुंसि संज्ञायाम्' इति घः। यवनः—नन्द्यादित्वाल्ल्युः। दुष्टो यवो यवानी। यवनानां लिपिः यवनानी—'इन्द्रवरुण' इत्यादिना ङीषानुकौ। तत्र 'यवाद्दोषे' 'यवनाल्लिप्याम्' इत्युक्तम्। 'यवनीमुखपद्मानाम्'[1] इति प्रयोगः पुंयोगलक्षणे ङीषि। यवानां भवनं क्षेत्रं यव्यम्, यवक्यम्—'यवयवकषष्टिकाद्यत्' इति यत्। यव एव यवकः। यवस्य विकारो यावः, स एव यावकः—'यावादिभ्यः कन्' इति कन्। रञ्जनद्रव्ये यावकमिति संज्ञायां ण्वुलि। यवमान्—'मादुपधायाश्च' इति वत्वमयवादिभ्य इति निषेधान्न भवति। युत्वा। युतः—'श्र्युकः किति' इतीण्निषेधः। युतमित्यत्र 'यस्य विभाषा' इति वा नेट्। यूपः—'कुयुभ्यां च' इति पप्रत्ययो दीर्घश्च। यूका—'अजियुधूनीभ्यो दीर्घश्च' इति कनि दीर्घः। यवसम्—'ऋतन्यञ्जि' इत्यादिना सप्रत्ययः। यवासः—'अन्येषामपि दृश्यते' इति दीर्घः। युवा—'कनिन्युवृषि' इत्यादिना कनिन्। भसंज्ञायां 'श्वयुवमघोनामतद्धिते' इति सम्प्रसारणे यूनः—इत्यादि। 'न सम्प्रसारणे सम्प्रसारणम्' इति सम्प्रसारणनिषेधः पूर्वस्य। यूनो भावकर्मणी यौवनम्, यौनिका—'हायनान्तयुवादिभ्योऽण्', 'द्वन्द्वमनोज्ञादिभ्यश्च' इत्यणवुञौ। स्वभावाद् वुञ् स्त्रियाम्। 'श्वयुव' इति सम्प्रसारणम् 'अतद्धिते' इति निषेधान्न भवति। 'नस्तद्धिते' इति टिलोपोऽपि न भवति। 'अन्' 'प्रकृत्याके राजन्यमनुष्ययुवानः' इति चाण्वुञोः प्रकृतिभावात्। यविष्ठः, यवीयान्—'स्थूलदूर' इत्यादिनेष्ठेयसुनोर्यणादिपरलोपे पूर्वस्य च गुणः। कनिष्ठः, कनीयान्—'युवाल्पयोः कनन्यतरस्याम्' इति वा कनादेशे 'प्रकृत्यैकाच्' इति प्रकृतिभावः। यवयति। कनयति—णाविष्ठवदिति यणादिलोपगुणौ, 'युवाल्पयोः' इति कनादेशश्च पक्षे। भाष्यकारप्रयोगाद्

---

१. रघुवं० ४।६१।

वृद्ध्यभावः। स्त्रियाम् 'यूनस्तिः' इति तिप्रत्यये युवतिः। 'सर्वतोऽक्तिन्नर्थात्' इति वा ङीषि युवती इति। युवतीः पश्येत्यादौ लिङ्गविशिष्टपरिभाषया 'श्वयुव' इति सम्प्रसारणं न भवति; 'श्वादीनां प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम्' इत्युक्तत्वात्। तिप्रत्यये यूनः पदत्वान्नलोपः। युवतीनां समूहो यौवनम्—'भिक्षादिभ्योऽण्' इत्यण्। युवत्या भावकर्मणी यौवनम्, यौवनिका—लिङ्गविशिष्टपरिभाषया 'हायनान्त' इत्यण्, मनोज्ञादित्वाद् वुञ् च। 'भस्याढे तद्धिते' इति पुंवद्भावः सर्वत्र। 'भिक्षादिषु युवतिशब्दस्य पाठसामर्थ्यात्पुंवद्भावो न' इति वृत्तौ। सामर्थ्यं च—यदि स्यात्पुंवद्भावः 'भस्याढे तद्धिते पुंवद्भावः' 'सिद्धश्च प्रत्ययविधौ' इति प्रत्यये भाविनि पूर्वमेव पुंवद्भावविधानाद्युवशब्दस्य च कनिनन्तत्वेनाद्युदात्तत्वात् 'तस्य समूहः' इत्येवाणि सिद्धे पुनः पाठोऽनर्थकः। पुंवद्भावे तु युवतिशब्दस्य प्रत्ययस्वरेणान्तोदात्तत्वात् 'अनुदात्तादेः' इत्यञो बाधनार्थः पाठो युज्यते। यथा तु वार्त्तिकं तथा पुंवद्भाव इष्यते। यदाह—'भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात्प्रत्ययविधौ' इति। युवखलतिः, युवाखलतिः, युवतिः खलतिः—'युवाखलतिपलितवलिनजरतीभिः' इति विशेषणसमासः। लिङ्गविशिष्टपरिभाषया युवतिशब्दस्य ग्रहणम्। तस्य 'पुंवत्कर्मधारय' इति पुंवत्त्वम्। एवं युवपलिता इत्यादि। जरतीशब्देन स्त्रीलिङ्गेन युवशब्दस्य सामानाधिकरण्यानौचित्याद्युवतिशब्दस्य समासः। युवजरन्नित्येतत्तु जरद्भिरिति पाठादिति व्याख्यातारः। स्त्रीलिङ्गपाठस्तु लिङ्गविशिष्टपरिभाषाया ज्ञापनार्थः। इभयुवतिः—'पोटायुवति' इत्यादिना विशेषणसमासः। आर्ययुवा। आर्ययुवानौ—इत्यत्र 'प्रातिपदिकान्त' इति णत्वम् 'युवादीनां प्रतिषेधः' इति प्रतिषिध्यते। आर्ययूनः इत्यादौ च 'एकाजुत्तरपदे' इति 'प्रातिपदिकान्त' इति च णत्वं 'युवादीनां प्रतिषेधः' इत्येव निषिध्यते। अयममिश्रणार्थोऽपि। तथा च दृश्यते—'अयुतसिद्धानामाधार्याधारभूतानाम्' इति। 'युञ् बन्धने' इति क्र्यादौ, 'यु जुगुप्सायाम्' इत्याकुस्मीयः॥ २३॥

२९. रु शब्दे। रौति इत्यादि यौतिवत्। विशेषस्तु 'तुरुस्तुशम्यमः सार्वधातुके' इति हलादौ सार्वधातुके पक्षे ईडागमः शब्विषये रवीति। रुवीतः—इत्यादि। अशब्विषये तु विकरणेन सार्वधातुकस्य व्यवधानादीटोऽप्रसङ्गः। रुरूषति—'सनि ग्रहगुहोश्च' इत्यनिट्त्वम्। रोरूयते। रोरवीति, रोरोति रोरुवीतः, रोरुतः—प्रकृतिग्रहणन्यायेन 'तुरुस्तु' इतीड्विकल्पः। रवणः—'चलनशब्दार्थात्' इति युच्। संरावः—'उपसर्गे रुवः' इति घञ्। 'प्राणा उपरवाः' इति प्रयोगः पुंसि सञ्ज्ञायां घे द्रष्टव्यः। 'उपसर्गे' इति वचनादनुपसृष्टादपि रवः। 'बाहुलकाद् घञपि' इत्यात्रेयः, राव इति। आरावः, आरवः—'विभाषाऽङि रुप्लुवोः' इति पक्षे घञ्। तदभावेऽप्। रविः—'अच इः' इतीप्रत्ययः। 'तुरुस्तुशम्यम' इत्यत्र वृत्तौ

'तुरिति सौत्रो धातुः' इति । अत्र न्यासे 'वृद्धयर्थं इत्येके । हिंसार्थ इत्यपरे, यस्य च लुग्विकरणत्वं स्मर्यते' इति । वर्द्धमानश्च 'तु वृद्धिहिंसयोरदादौ स्मर्यते' इति । हरदत्तस्तु वृद्धयर्थत्वमभिधाय 'गत्यर्थ इत्येके, हिंसार्थ इत्यपरे' इति । त्रिष्वपीति बोधिन्यासे । "उत्तवीति इति 'बहुलं छन्दसि' इति शपो लुक्" इति पदमञ्जर्यां यद् दृश्यते तद्दुर्विन्यस्तकाकुपदजनितभ्रान्तिभिर्लेखकैरिहापि शम्यमोर्वक्ष्यमाणं लिखितमिति बोद्धव्यम्, न तु तत्प्रामाण्यादयं न्याय्यविकरण इति । न्याय्यविकरणत्वे हि न्यासादिविरोधप्रसङ्गः स्यात् । किं च—'शम्यमोश्छन्दसि विकरणस्य लुकि कृते हलादिसार्वधातुकमनन्तरं संभवति' इति वृत्तिविरोधः स्यात् । तौति इत्यादि रौतिवदुदाहार्यम् । 'उतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णुवः' इति सेट्प्रकरणेऽस्यापाठादनिट्त्वम् । तोता । तोष्यति—इत्यादि । थलि क्रादिनियमादिड्विकल्पः—तुतोथ, तुतविथ इति । तुतावयिषति । अतूतवत्—इत्यत्राभ्यासस्य पुयण्जपरत्वाभावादित्वं न भवति । आपिशलास्तु—'तुरस्तुशम्यमः सार्वधातुके छन्दसि' इति पठन्तः सर्वत्रेदं छान्दसमाहुः । रवते इति गतिरेषणयोः शपि ॥२४॥

३०. णु स्तुतौ । नौति इत्यादि यौतिवत् । नुनावयिषति । अनूनवत् इत्यत्र पुयण्जपरत्वाभावादभ्यासस्य नेत्वम् । नुनूषति—'सनि ग्रहगुहोश्च' इत्यनिट्त्वे 'इको झल्' इति सनः कित्त्वे 'अज्झनगमां सनि' इति दीर्घः । प्रणौति—'उपसर्गादसमासेऽपि' इति णत्वम् । प्रणुनाव इत्यादौ 'उभौ साभ्यासस्य' इति साभ्यासस्यानितेर्णत्वविधानाज्ज्ञापकात्ततः पूर्वमेव द्विर्वचनमिति परस्य णत्वं न भवति; व्यवधानात् । न च णत्वस्य द्विर्वचने पूर्वत्रासिद्धत्वेन न भविष्यतीति वाच्यम्; 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्युक्तत्वादित्यात्रेयः । हरदत्तस्तु—"'उभौ साभ्यासस्य' इत्यनेन 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्यानित्यत्वं ज्ञाप्यते" इति णत्वस्यासिद्धत्वाद् नुशब्दस्य द्विर्वचने परस्य व्यवधानादणत्वमाह । आनुते सृगालः 'आङि नुपृच्छयोरुपसङ्ख्यानम्' इति तङ् । आङ्पूर्वोऽयं स्वभावादुत्कण्ठापूर्वके शब्दने वर्तते । तदुक्तं न्यासे—'अयं धातुरुत्कण्ठापूर्वके शब्दने आङुत्तरः प्रवर्त्तते' इति । कैयटपदमञ्जर्योरप्युदाहरणस्य सोत्कण्ठं शब्दं करोतीत्यर्थ उक्तः । आनुवाते । आनुवते । आनुषे । आनुवे । आनुवहे । आनुनुवे । आनुनुविषे । आनुनुविध्वे, आनुनुविढ्वे । आनुनुवहे । आनविता । आनविष्यते । आनुताम् । आनुष्व । आनवै । आनुत । आनुथाः । आनुवि । आनुवीत । आनुवीथाः । आनुवीय । आशिषि आनविषीष्ट । आनविष्ट । आनविष्ठाः । आनविषि । आनुनूषते । यङ्लुक्यप्ययन्तङ् भवति—आनोनुन इति । दीर्घान्तोऽयं तुदादौ ॥ २५ ॥

३१. टुक्षु शब्दे । क्षौति । चुक्षाव । क्षविता इत्यादि यौतिवत् । विक्षावः—'वौ क्षुश्रुवः' इति घञ् । क्षवथुः—'ट्वितोऽथुच्' । क्षुमा अतसी—'अर्त्तिस्तु' इत्यादिना मन् । बाहुलकान्न गुणः । क्षुरम्—'ऋज्र' इत्यादिना रन् ॥ २६ ॥

३२. क्ष्णु तेजने । क्ष्णौति । चुक्ष्णाव । चुक्ष्णुवतुः । चुक्ष्णुवुः । क्ष्णविता इत्यादि यौतिवत् । संक्ष्णुते शस्त्रम् । संचुक्ष्णुवे । संक्ष्णविता । संक्ष्णविष्यते । संक्ष्णुताम् । समक्ष्णुत । संक्ष्णुवीत । संक्ष्णुविषीष्ट । समक्ष्णविष्ट । संचुक्ष्णूयते—'समः क्ष्णुवः' इति तङ् ॥ २७ ॥

३३. ष्णु प्रस्रवणे । स्नौति । सुष्णाव । स्नविता । स्नविष्यति । स्नौतु । अस्नौत् । स्नुयात् । स्नूयात् । अस्नावीत् । सुस्नूषति—'स्तौतिण्योरेव' इति न षत्वम् । सोष्णूयते । सोष्णवीति, सोष्णोति । स्नावयति । असुष्णुवत् । कर्मणि—स्नूयते । सुष्णुवे । सुष्णुषे । सुष्णुध्वे । सुष्णुवहे । स्नोता । स्नोष्यते । स्नूयताम् । अस्नूयत । स्नूयेत । आशिषि—स्नोषीष्ट । अस्नावि । अस्नोषाताम् इत्यादि । 'स्नुक्रमोरनात्मनेपदनिमित्ते' इत्यात्मनेपदेन समानपदस्थस्य स्नुक्रमिभ्यां परस्य वलादेरार्द्धधातुकस्येण्निषेधः । प्रस्नवितेवाचरति प्रस्नवित्रीयते इत्यत्रात्मनेपदेन समानपदस्थत्वेऽपि निषेधात्प्रागेवान्तरङ्गत्वादिडागमः प्रवर्त्तत इति पदमञ्जर्यादौ व्यवस्थापितम् । अस्माभिरपि क्रमतावेवं प्रतिपादितम् । स्यादिषु पक्षे चिण्वदिटि स्नाविष्यते इत्याद्युदाहार्यम् । कर्मकर्त्तरि तु 'न दुहस्नुनमां यक्चिणौ' इति यक्चिणौ न भवतः । प्रस्नुते गौः स्वयमेव । प्रस्नुता गौः स्वयमेव । प्रास्नुत गौः स्वयमेव । प्रस्नुवीत गौः स्वयमेव । प्रास्नोष्ट गौः स्वयमेव इति । ननु कर्मवदित्यतिदेशेन प्राप्ते 'चिण्भावकर्मणोः' इति चिणि 'न दुहस्नुनमाम्' इति प्रतिषिद्धेऽपि 'अचः कर्मकर्त्तरि' इति वैकल्पिकश्चिण् पक्षे कस्मान्न भविष्यति; न चैवं सति स्नुग्रहणमनर्थकं स्यादिति वाच्यम्, तस्य यङ्निषेधार्थत्वेनाप्युपपत्तेः ? नैष दोषः। कर्मवदित्यतिदेशेन नित्यं प्राप्तस्य चिणः स विकल्पः, अस्य तु 'न दुहस्नुनमाम्' इति चिणोऽतिदेश एव निषिध्यते । तथा च वृत्तिः—'प्राप्तविभाषेयम्' इति । न चोभयत्रविभाषाश्रयणेन चिणः प्रसङ्गः; आश्रीयमाणेऽप्युभयत्रविभाषात्वे यतः परत्वात् 'न दुहस्नुनमाम्' इति प्रतिषेध एव भविष्यति । अत्रात्रेयः—'न दुहस्नुनमाम्' इति चिण्वद्भावस्यापि निषेधः' इत्याह । सूत्रे वृत्तौ च यक्चिणोरेव निषेध इति तस्याभिप्रायो मृग्यः । स्नुषा—'स्नुव्रश्चिकृत्यृषिभ्यः क्सः' इति क्सः ॥२८॥

३४. युप्रभृतय उदात्ता उदात्तेतः[1] ।

३५. तोतिस्त्वनुदात्तः[1] ।

३६. ऊर्णुञ् आच्छादने ।

३७. उदात्त उभयतोभाषः । ऊर्णुते । ऊर्णुवाते । ऊर्णुषे । ऊर्णुवहे । ऊर्णुनुवे । ऊर्णुनुविध्वे, ऊर्णुनुविढ्वे । ऊर्णुनुविवहे—'असंयोगाल्लिट्' इति लिटः कित्त्वान्न गुणः । 'अजादेर्द्वितीयस्य' इति नुशब्दस्य द्विर्वचनम् । रेफस्य तु 'न न्द्राः' इति न भवति । नोपधोऽयम् । णत्वं तु सांहितिकम्, तच्च द्विर्वचने सिद्धमिति कृते द्विर्वचने

1—1. सूत्रद्वयमिदं क्षीरस्वामी न पठति, मैत्रेयश्च द्वितीयं सूत्रम् ।

पूर्वस्य णत्वम्, परस्य तु व्यवधानान्न भवति। 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्येतत् 'उभौ साभ्यासस्य' इति लिङ्गान्न प्रवर्त्तते इति नौतावुक्तम्। 'सूचिसूत्रि' इत्यत्र हरदत्तेनाप्ययमर्थः स्फोरितः। 'ऊर्णोतेश्चोपसंख्यानम्' इत्याम्प्रतिषेधः। ऊर्णुविता, ऊर्णविता। ऊर्णुविष्यते, ऊर्णविष्यते—'विभाषोर्णोः' इतीडादेः प्रत्ययस्य पक्षे ङित्त्वान्न गुणः। ऊर्णुताम्। ऊर्णुष्व। ऊर्णवै—आटि गुणावौ। और्णुत। और्णुथाः। और्णुवि। और्णुवहि। ऊर्णुवीत। ऊर्णुवीयाताम्। ऊर्णुवीथाः। ऊर्णुवीय। ऊर्णुविवहि। आशिषि—ऊर्णुविषीष्ट, ऊर्णुविषीढ्वम्, ऊर्णुविषीध्वम्। ऊर्णुविषीय—ङित्त्वपक्षे उवङ्। अन्यदा तु गुणः ऊर्णविषीष्ट इत्यादि। और्णविष्ट। और्णविष्ठाः। और्णविषि। ङित्त्वपक्षे उवङ् उदाहार्यः—और्णुविष्ट इत्यादि। ऊर्णौति, ऊर्णोति। ऊर्णुतः। ऊर्णुवन्ति। ऊर्णौषि, ऊर्णोषि। ऊर्णौमि, ऊर्णोमि—'ऊर्णोतेर्विभाषा' इति हलादौ पिति सार्वधातुके पक्षे वृद्धिः, अन्यदा गुणः। ऊर्णुनाव। ऊर्णुनुवतुः। ऊर्णुनुविथ, ऊर्णुनविथ। ऊर्णुनुविव, ऊर्णुनविव—'विभाषोर्णोः' इति ङित्त्वविकल्पनात् पक्षे उवङ्। अन्यदा गुणः। अन्यत्र 'असंयोगाल्लिट् कित्' इति नित्यं कित्त्वादुवङेव। ऊर्णुविता, ऊर्णविता। ऊर्णुविष्यति, ऊर्णविष्यति। ऊर्णौतु, ऊर्णोतु। और्णोत्। और्णुताम्। और्णोः। और्णवम्—'ऊर्णोतेः' इत्यधिकृत्य 'गुणोऽपृक्ते' इति वृद्ध्यपवादो गुणः। ऊर्णुयात्। ऊर्णुयाः। ऊर्णुयाम्—'ङिच्च पिन्न भवति' इति पित्वाभावान्न वृद्धिः, नापि गुणः। आशिषि ऊर्णूयात् इत्यादि। और्णावीत्। और्णावीः। और्णाविषम्—'ऊर्णोतेर्विभाषा' इतीडादौ परस्मैपदे परे सिचि वा वृद्धिः। अन्यदा गुणोऽङित्त्वपक्षे, ङित्त्वपक्षे तूवङ्। और्णवीत्, और्णुवीत् इत्यादि। उर्णुनूषति, ऊर्णुनविषति, ऊर्णुनुविषति—'सनीवन्त' इतीडभावपक्षे 'इको झल्' इति कित्त्वम्, इटि तु पूर्ववद्वा ङित्त्वम्। ऊर्णोनूयते—'सूचिसूत्रि' इत्यादिना यङ्। ऊर्णोनौति—'उतो वृद्धिर्लुकि हलि' इति वृद्धिः। 'नाभ्यस्तस्य' इति निषेधोऽभ्यस्तस्येहानङ्गत्वान्न भवति। 'ऊर्णोतेविभाषा' इति वृद्धिविकल्पस्तु श्तिपानिर्देशान्नाशङ्क्यः। अत एव 'गुणोऽपृक्ते' इति गुणश्चापृक्ते। ऊर्णोनुवन्तीत्यत्र 'अदभ्यस्तात्' इत्यद्भावो न भवति, अभ्यस्तस्यानङ्गत्वात्। पारायणिकास्त्वङ्गस्येत्यनाश्रित्याद्भावमिच्छन्ति। अङ्गाधिकारः कथं बाध्येतेति तच्चिन्त्यम्। लुङि ऊर्णोतेरिति श्तिपा निर्देशाद् वृद्धिविकल्पो नेति नित्या सिचिवृद्धिर्भवति—और्णोनावीत् इत्यादि। 'विभाषोर्णोः' इति ङित्त्वपक्षे उवङ्—और्णोनुवीत् इत्यादि। ऊर्णावयति। और्णुनवत्—अत्र 'णौ कृतं स्थानिवत्' इति नुशब्दस्य द्विर्वचने उपधाह्रस्वत्वे 'दीर्घो लघोः' इत्यभ्यासस्य दीर्घो न भवति, 'चङ्परे णौ यदङ्गं तस्य योऽभ्यासः' इति सूत्रार्थव्यवस्थापनात्। अत्र त्वङ्गावयवस्याभ्यासो न त्वङ्गस्य। ऊर्णुत्वा—'श्र्युकः किति' इत्यनिट्त्वम्। अत्र यद्यप्येकाच इत्यनुवर्त्तते, तथापि न दोषः; अस्य नुवद्भावात्। उक्तं च—

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्। आमश्च प्रतिषेधार्थमेकाचश्चेड्डुपग्रहात्॥

इति । ऊरुः—'ऊर्णोतेर्नुलोपश्च' इत्युप्रत्यये नुशब्दलोपः । उरुः—'महति ह्रस्वश्च' इति ह्रस्वश्च धातोः । रम्भेवोरू यस्याः सा रम्भोरूः—'ऊरूत्तरपदादौपम्ये' इत्यूङ्प्रत्ययः । संहितोरूः । शफोरूः । लक्षणोरूः । वामोरूः—'संहितशफलक्षणवामादेश्च' इत्यूर्वन्ताद्बहुव्रीहेरूङ् प्रत्ययः। शफशब्दः संहितपर्यायः। सहितोरूः—हितेन सहितं सहितम् । सहोरूः, सहशब्दस्सहितवचनः—'सहितसहाभ्यां च' इत्यूङ् । अतिशयेनोरुः वरिष्ठः । वरीयान् । उरोर्भावकर्मणी वरिमा—पृथ्वादित्वादिमनिच् । 'प्रियस्थिर' इत्यादिना वरादेशः । उरुमाचष्टे वारयति—अत्र 'णाविष्ठवत्' इति वरादेशे वृद्धिः । टिलोपस्तु 'प्रकृत्यैकाच्' इति प्रकृतिभावान्न भवति । ऊर्णा—'ऊर्णोतेर्डः' इति डप्रत्ययः । ऊर्णायुः—'ऊर्णाया युस्' इति मत्वर्थो युस् । सित्त्वात् 'सिति च' इति पदत्वाद्भत्वाभावात् 'यस्य' इति लोपो न भवति। ऊर्णा नाभौ यस्य स ऊर्णनाभः—'अच्प्रत्यन्वव' इत्यत्राजिति योगविभागात्समासान्तः । 'ङ्यापोः संज्ञाछन्दसोः' इति ह्रस्वः ॥ २९ ॥

३८. द्यु अभिगमने ।

३९. अनुदात्त उदात्तेत् । द्यौति । दुद्याव । दुद्युवतुः । दुद्यविथ, दुद्योथ । दुद्युव । दुद्याव । दुद्यव, दुद्युविव-क्रादिनियमादिट् । थलि भारद्वाजनियमाद्विकल्पः । द्योता । द्योष्यति । द्यौतु, द्युतात् । द्युहि । द्यवानि । अद्यौत् । अद्युताम् । अद्यौः । अद्यवम् । द्युयात् । द्युयाताम् । द्युयाः । द्युयाम् । आशिषि—द्यूयात् इत्यादि । अद्यौषीत् । अद्यौष्टाम् । अद्यौषीः । अद्यौषम् । दुद्यूषति । दोद्यूयते । दोद्योति, दोद्यवीति । द्यावयति । अदुद्यवत् । द्युत्वा । द्युतः—'केचिदस्य सेट्त्वमिच्छन्ति' इति धातुपारायणे। तत् 'उतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णुवः' इत्युकारान्तसेट्परिगणने पाठाभावादिच्छामात्रम् ॥ ३० ॥

४०. षु प्रसवैश्वर्ययोः ।

४१. अनुदात्त उदात्तेत् । प्रसवोऽभ्यनुज्ञानम् । 'ॐ मिति ब्रह्मा प्रसौति' । सुषाव । सोता इत्यादि द्युवत् । असौषीत्—इत्यत्र 'स्तुसुधूञ्भ्यः' इतीड्विकल्पो न भवति, यतस्तत्रोभयतो ञितोः स्तुञ्धूञोः साहचर्यात् ञितः सुनोतेरेव ग्रहणम्, नं पुनरस्याञितो लुग्विकरणस्यापि । सुषवी प्रसवशीला—पचाद्यचि सुषामादित्वात्षत्वम् । गौरादित्वान्ङीष् । धात्वन्तराद्वा ॥ ३१ ॥

४२. कु शब्दे ।

४३. अयमप्यनुदात्त उदात्तेत् । कौति । चुकाव । चुकविथ, चुकोथ । चुकुविव । कोता—इत्यादि पूर्ववत् । चोकूयते । चोकोति, चोकवीति इत्यत्र 'न कवतेर्यङि' इत्यभ्यासस्य कुत्वनिषेधः शपा निर्देशान्न भवति । कविः—'अच इः' इतीप्रत्ययः । कवेः कर्म काव्यम्—ब्राह्मणादिषु दर्शनात्ष्यञ् । अव्यक्ते शब्दे कवते इति गतं शपि । अयमनिट् चेति रौतेरनन्तरं नोक्तः ॥ ३२ ॥

४४. ष्टुञ् स्तुतौ ।

४५. अनुदात्त उभयतोभाषः । स्तुते । स्तुवाते । स्तुवते । स्तुषे । स्तुध्वे । स्तुवे । स्तुवहे । तुष्टुवे । तुष्टुवाते । तुष्टुविरे । तुष्टुषे । तुष्टुध्वे । तुष्टुवहे—अभ्यासे खयः शेषः । क्रादिषु पाठादिडभावः । स्तोता । स्तोष्यते । स्तुताम् । स्तुवाताम् । स्तुष्व । स्तुध्वम् । स्तवै । अस्तुत । अस्तुवाताम् । अस्तुथाः । अस्तुवि । स्तुवीत । स्तुवीयाताम् । स्तुवीथाः । स्तुवीय । आशिषि—स्तोषीष्ट इत्यादि । अस्तोष्ट । अस्तोषाताम् । अस्तोष्ठाः । अस्तोढ्वम् । अस्तोषि । हलादौ सार्वधातुके शब्विषये यदा 'तुरुस्तुशम्यमः' इतीट् तदा—स्तुवीते । स्तुवीषे । स्तुवीध्वे । स्तुवीवहे । स्तुवीताम् । स्तुवीष्व । स्तुवीध्वम् । अस्तुवीत । अस्तुवीथाः । अस्तुवीध्वम् । अस्तुवीवहि इति । लिङि सलोपेऽहलादित्वान्नेट्प्रसङ्गः । अन्यत्र सार्वधातुके विकरणेन व्यवधानान्नै वास्तोटः प्राप्तिः । स्तौति, स्तुवीति । स्तुतः, स्तुवीतः । स्तौषि, स्तवीषि । स्तौमि, स्तवीमि । स्तुवः, स्तुवीवः—तिप्सिपोरीट्पक्षे गुणः । अन्यदा वृद्धिः । अन्यत्रेटि सर्वत्रोवङ् । तुष्टाव । तुष्टोथ । तुष्टुव—थलि भारद्वाजनियमं बाधित्वा पुरस्तात्प्रतिषेधारम्भसामर्थ्यात् क्रादिप्रतिषेध एव भवति । स्तोता । स्तोष्यति । स्तौतु, स्तवीतु, स्तुवीतात् । स्तुताम्, स्तुवीताम् । स्तुवन्तु । स्तुहि, स्तुवीहि—हेरपित्त्वात् ङित्त्वान्न गुणः, नापि वृद्धिः । स्तवानि । अस्तौत्, अस्तवीत् । अस्तुताम्, अस्तवीताम् । अस्तुवन् । अस्तौः, अस्तवीः । अस्तवम् । अस्तुव, अस्तुवीव । स्तुयात्, स्तुवीयात् । स्तुयाताम्, स्तुवीयाताम् । स्तुयुः, स्तवीयुः । स्तुयाः, स्तुवीयाः । स्तुयातम्, स्तुवीयातम् । स्तुयाम्, स्तुवीयाम्—अत्र यासुटि पिद्वचनेषु 'उतो वृद्धिर्लुकि हलि' इति वृद्धिः 'ङिच्च पिन्न' इति पित्त्वनिषेधान्न भवति । आशिषि—स्तूयात् इत्यादि । अस्तावीत् । अस्ताविष्टाम् । अस्तावीः । अस्ताविषम्—'स्तुसुधूञ्भ्यः परस्मैपदेषु' इतीटि सिचि वृद्धिः । अभिष्टौति । अभ्यष्टौत्—'उपसर्गात्सुनोति' इति 'प्राक्सितादड्व्यवायेऽपि' इति च षत्वम् । पर्यस्तौत्, पर्यष्टौत्—'सिवादीनां वाड्व्यवायेऽपि' इति परिनिविभ्यः परस्याड्व्यवाये वा षत्वम् । अग्निष्टुत्—'क्विप् च' इत्यग्नावुपपदे क्विप् । अग्निष्टोमः । ज्योतिष्टोमः । आयुष्टोमः—'अर्तिस्तु' इत्यादिना मन्प्रत्ययान्तस्तोमशब्दः । एते यज्ञविशेषाः । 'अग्नेः स्तुत्स्तोमसोमाः', 'ज्योतिरायुषः स्तोमः' इति षत्वम् । परिस्तोमः—इत्यत्र 'उपसर्गात्' इत्यादिना षत्वम् 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इति न भवति । स्तुत्यः—'एतिस्तु' इत्यादिना क्यप् । क्यबिति वर्त्तमाने पुनः क्यब्ग्रहणात् अवश्यस्तुत्यः इत्यत्राप्यावश्यके ण्यतं बाधित्वा क्यबेव । मयूरव्यंसकादित्वात्समासः । 'लुम्पेदवश्यमः कृत्ये' इत्यवश्यमो मलोपः । ग्रावस्तुत्—'भ्राजभास' इत्यादिना ताच्छीलिकः क्विप् । आयतस्तूः—'क्विब् वचि' इत्यादिना क्विब्दीर्घौ । स्तोत्रम्—'दाम्नी' इत्यादिना ष्ट्रन् । प्रस्तावः—'प्रे द्रुस्तुस्रुवः' इति घञ् । यज्ञकर्मणि छन्दोगा यत्र

देशे समेत्य स्तुवन्ति स संस्तावः—'यज्ञे समि स्तुवः' इति घञ्। अन्यत्र संस्तवः। स्तूयतेऽनयेति स्तुतिः—'श्रुयजीषिस्तुभ्यः करणे' इति क्तिन्। स्तवमर्हति स्तव्यः—'दण्डादेराकृतिगणत्वाद्यत्' इत्यात्रेयः। संस्तवानः—'सम्यानच् स्तुवः' इत्यानच्। अयं बहुलवचनात्केवलादपि भवति, निञ्च भवति। 'मृडा जरित्रे रुद्रस्तवानः' इति ॥ ३३ ॥

४६. ब्रूञ् व्यक्तायां वाचि।

४७. अनुदात्त उभयतोभाषः। ब्रूते। ब्रुवाते। ब्रुवते। ब्रूषे। ब्रुवे। ब्रूवावहे। ऊचे। ऊचाते। ऊचिषे। ऊचिध्वे। ऊचे। ऊचिवहे—'ब्रुवो वचिः' इत्यार्द्धधातुकविषये वच्यादेशः। 'वचिस्वपि' इति सम्प्रसारणे द्विर्वचनम्। वक्ता। वक्तासे। वक्ताहे। वक्ष्यते-'पचि वचिम्' इति व्याघ्रभूतिवचनादनिट्त्वम्। ब्रूताम्। ब्रुवाताम्। ब्रूध्वम्। ब्रवै। ब्रवावहै। अब्रूत। अब्रूथाः। अब्रुवि। ब्रुवीत। ब्रुवीयताम्। ब्रुवीथाः। ब्रुवीय। ब्रुवीवहि—आशिषि वक्षीष्ट। वक्षीष्ठाः। वक्षीय—आर्द्धधातुकत्वाद्वच्यादेशः। अवोचत। अवोचेताम्। अवोचन्त। अवोचथाः। अवोचि। अवोचावहि—'अस्यतिवक्ति' इतिच्लेरङ् कर्त्तरि। 'वच उम्' इत्युमागमो मित्त्वादन्त्यादचः परः। 'आद्गुणः'। अवक्ष्यत। सर्वेष्वेषु वचिग्रहणेष्वादेशस्यापि ग्रहणमुक्तं वृत्त्यादौ। ब्रवीति। ब्रूतः। ब्रुवन्ति। ब्रवीषि। ब्रूथः। ब्रूथ। ब्रवीमि। ब्रूवः—'ब्रुव ईट्' इति हलादौ पितीडागमः। आह। आहतुः। आहुः। आत्थ। आहथुः—'ब्रुवः पञ्चानामादित आहो ब्रुवः' इति ब्रुवो लटः परस्मैपदानामादितः पञ्च णलादयो हि यथासंख्यं वा भवन्ति, धातोश्चाहादेशः। अकार उच्चारणार्थः। थलि 'आहस्थः' इति हकारस्य थकारे 'खरि च' इति चर्त्वम्। आत्थ इत्यत्र स्थानिवद्भावेन ब्रुव ईड् न भवति; 'आहिभुवोरीट्प्रतिषेधः' इति प्रतिषेधात्। उवाच। ऊचतुः। ऊचुः। उवचिथ, उवक्थ। ऊच। उवाच, उवच। ऊचिव—पिति 'लिट्यभ्यासस्य' इत्यभ्यासस्य सम्प्रसारणम्। अन्यत्र तु 'वचिस्वपि' इति। तच्च परत्वाद् द्विर्वचनात्पूर्वमेव भवति। वलादौ क्रादिनियमादिट्। थलि 'उपदेशेऽत्वतः' इतीण्निषेधो न भवति। तत्रोपदेशग्रहणस्य 'धातूपदेशेऽत्वतः' इति व्याख्यानात्। अयं चादेशोत्तरकालं धातुः, नोपदेशे। वक्ता। वक्ष्यति। ब्रवीतु, ब्रूतात्। ब्रूताम्। ब्रूहि। ब्रूतम्। ब्रवाणि—हि-तातङोर्ङित्त्वात् 'ङिच्च पिन्नभवति' इत्यपित्त्वादीण् न भवति। अब्रवीत्। अब्रूताम्। अब्रवीः। अब्रवम्। ब्रूयात्। ब्रूयाताम्। ब्रूयाः। ब्रूयाम्। ब्रूयाव—पिद्वचनेषु यासुटि ङित्त्वात्पित्त्वाभावादीडागमाभावः। आशिषि—उच्यात्। उच्यास्ताम् इत्यादि। 'किदाशिषि' इति कित्त्वात्सम्प्रसारणम्। अवोचत्। अवोचताम्। अवोचः। अवोचम्—अङ्युमागमः 'वच उम्' इति। कर्मणि—उच्यते। अवाचि इत्यादि। कर्मकर्त्तरि 'यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञाम्' इति यक्चिणोः प्रतिषेधाच्छब्लुकौ भवतः। ब्रूते कथा स्वयमेव। अवोचत कथा स्वयमेव इति।

।विवक्षति, विवक्षते। वावच्यते। यङ्लुक्ययं न वच्यादेशः; यङ आर्द्धधातुकस्य लुका विषयत्वापहारात्। अस्य चोपपादनं चष्टौ कृतम्।

अनूचानः—'उपेयिवाननाश्वाननूचानश्च' इति भूते लिटः कर्त्तरि कानचि निपात्यते। अनेनैव निपातनेन भूते वा लिडनुमीयते। तस्य च नित्यं कानजिति न तिङां श्रवणप्रसङ्गः। विकल्पेनानुमानाच्चेणादिधातुविशेषविषयेणानेन लिटा धातुसामान्यविहितस्य लुङो न बाधः। 'अनद्यतने लङ्' परोक्षे लिट्' इत्यत्राप्यस्य योगस्यानुवर्त्तनादिणादौ भूतसामान्ये सावकाशस्यास्य लिटो भूतविशेषविषयाभ्यां पराभ्यां लङ्लिड्भ्यां न बाध इति भाष्यादौ स्थितम्। प्रवचनीयो ब्राह्मणः। प्रवचनीयः अनुवाकः—'भव्यगेय' इत्यादिना कर्तृकर्मणोरनीयर्। गुणमुक्तवान् गुणवचनः—'कृत्यल्युटो बहुलम्' इति ल्युट् कर्तरि। वाच्यम्—'आर्द्धधातुके' इति विषयसप्तमीत्वात्प्रागेव प्रत्ययोत्पत्तेर्वच्यादेशे हलन्तलक्षणो ण्यद् भवति। 'चजोः कु घिण्ण्यतोः' इति कुत्वस्य 'वचोऽशब्दसंज्ञायाम्' इति निषेधः। शब्दसंज्ञायां तु कुत्वमेव—वाक्यम् इति। प्रकर्षेणोच्यते इति प्रवाच्यो नाम पाठविशेषोपलक्षितो ग्रन्थविशेषः। तत्र शब्दसंज्ञात्वेऽपि 'यजयाचरुचप्रवचर्चश्च' इति कुत्वं निषिध्यते। तत्र प्रवचिग्रहणं शब्दसंज्ञार्थम्। अपरे पुनराहुः—"प्रपूर्वो वचिरशब्दसंज्ञायामेव वर्त्तते। प्रवाच्य इति ग्रन्थविशेषप्रतीतिस्तु प्रकरणादिनेत्यत्राप्यशब्दसंज्ञायामित्येव कुत्वनिषेधस्य सिद्धत्वात्प्रवचिग्रहणं नियमार्थम्—'अशब्दसंज्ञायामिति निषेधः सोपसर्गत्वे प्रपूर्वस्यैव' इति। उपसर्गान्तरयोगे विवाक्यमिति कुत्वं भवति" इति। एतच्च भाष्ये दूषितम्—'यत इदं कुत्वमहर्विशेष एवेष्यते, अन्यत्र त्वविवाच्यमित्येव भवितव्यम्' इति। अहर्विशेषश्च द्वादशाहे अभितोरात्रे मध्ये दशरात्रस्तस्य दशममहः। तथा चाश्वलायनः—'नास्मिन्नहनि केनचित्कस्यचिद्वाच्यमविवाक्यमित्याचक्षते' इति। अहर्विशेषे कुत्वं तु पृषोदरादित्वात्, न्यङ्क्वादित्वाद्वा द्रष्टव्यम्। वाक्—'क्विब्वचिप्रच्छि' इत्यादिना क्वावसम्प्रसारणं दीर्घत्वं च। वाचा—'आपं चैव हलन्तानाम्' इति टाप्। वागस्यास्तीति वाग्मी—'वाचो ग्मिनिः' इति ग्मिनिः। पदत्वात्कुत्वे जश्त्वम्। कुत्सिता वागस्यास्तीति वाचालः, वाचाटः—'आलजाटचौ बहुभाषिणि' इत्यालजाटचौ। बहुभाषिग्रहणं कुत्सितोपलक्षणार्थम्। सन्दिश्यमाना सन्दिश्यमानस्य वा वाक् वाचिकम्—'वाचो व्याहृतार्थायाम्' इति व्याहृतार्थत्वोपाधिकाद्वाचः स्वार्थे ठक्। वाचिकञ्च पूर्वमेव दूतम्प्रति स्वामिनोक्तार्थमिति व्याहृतार्थं भवति। अपर आह—लेख्यादिनाऽवधारितेऽर्थे प्रवर्त्तमाना वाग्वाचिकमिति। तथा च माघे 'निर्द्धारितेऽर्थे लेख्येन खलूक्त्वा खलु वाचिकम्[1]' इति। 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति वाचिकशब्दस्य नपुंसकत्वम्।

---

१. शिशु० २।७०। 'लेखेन' इति तत्रस्थः पाठः।

वाचोयुक्तिः—'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु' इति षष्ठ्या अलुक्। ब्राह्मणिब्रुवा—'कुत्सितानि कुत्सनैः' इति कर्मधारयः। 'चेलादयो वृत्तिविषये कुत्सनवचनाः' इति प्रागेवोक्तम्। 'घरूप' इति ह्रस्वः। अत्रैव सूत्रे ब्रुवेतिनिर्देशात्पचाद्यचि। विदुषीब्रुवा, विदुषिब्रुवा। श्रेयसिब्रुवा, श्रेयसीब्रुवा—'उगितश्च' इति ह्रस्वविकल्पः। अनयोः पुंवद्भावोऽपीष्यते—विद्वद्ब्रुवा। श्रेयोब्रुवा इति। उक्त्वा। उक्तम्। पौनरुक्तम्। नैरुक्तम्—'अणृगयनादिभ्यः' इति भवव्याख्यानयोरण्। पौनरुक्तमधीते वेद वा पौनरुक्तिकः—'क्रतूक्थादिसूत्रान्ताट्ठक्' इति ठक्। अयं द्विकर्मकः, तत्राप्रधाने लादय उक्ताः। अप्रधान्यं च विवक्षाधीनमिति माणवको धर्ममुच्यते, धर्मो माणकमुच्यते इत्युभयोरपि कर्मणोः पर्यायेण लादयो भवन्ति। कृद्योगलक्षणा तु षष्ठी द्वितीयावद्युगपदुभयत्रापि भवति—माणवकस्य धर्मस्य वक्ता इति। तत्र यस्याप्राधान्यस्य विवक्षा तत्र पक्षे द्वितीयापीष्यते। इह वक्तव्यो माणवको धर्मं देवदत्तेनेत्यादावेकस्मिन्कर्मणि कृत्येनाभिहितेऽन्यस्मिन्कर्मणि कर्त्तरि च 'कर्तृकर्मणोः कृति' इति षष्ठी न भवति; 'उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधः' इत्यस्य नाथत्यादौ प्रागेवोपपादितत्वात्॥ ३४॥

४८. इण् गतौ। एतदादयो वच्यन्ताः परस्मैपदिनोऽनुदात्ताः। इङ् त्वात्मनेपदी। 'इणो गा लुङि' इत्यादौ विशेषणार्थो णकारः। एति। इतः। यन्ति। एषि। एमि। इवः—'इणो यण्' इत्यजादौ किति यणादेशः। उपैति—'एत्येधत्यूठ्सु' इत्येजादावेतौ वृद्धिः। एवं च 'ऐति स्म रामः पथि जामदग्न्यः[1]' इति भट्टिप्रयोगवद् 'न पुनरेति गतं चतुरं वयः' इत्यत्राप्यैतीति वृद्धिरेव पठनीया। 'स चिन्तयत्येव भियस्त्वदेष्यति' इति, 'हरत्यघं सम्प्रति हेतुरेष्यतः[2]' इत्यादयस्तु प्रयोगा भौवादिकस्यायतीत्यस्येङि पररूपे द्रष्टव्याः। आ इतः=एतः। उपेतः इत्यत्र गुणस्यादिवद्भावेन प्राप्तामेत्येधतीति वृद्धिमन्तवद्भावेन प्राप्तम् 'ओमाङोश्च' इति पररूपं परत्वाद् बाधते। इयाय। ईयतुः। ईयुः। इययिथ, इयेथ। ईय। इयाय, इयय। ईयिव—किति परत्वाद् द्विर्वचनात्पूर्वम् 'इणो यण्'। अकिति तूभाभ्यां परत्वाद् गुणवृद्ध्योरयायौ। एषां स्थानिवद्भावाद्यथायोगमेदैतोरिशब्दस्य वा द्विर्वचने किति 'दीर्घ इणः किति' इत्यभ्यासस्य दीर्घः। तत्सामर्थ्यादुत्तरखण्डस्य पुनः प्रवर्त्तमानाद्यणोऽन्तरङ्गत्वान्न सवर्णदीर्घः, नाप्यभ्यासह्रस्वः। अन्यत्रैचोऽभ्यासह्रस्वत्वे 'अभ्यासस्यासवर्णे' इतीयङ्। यकारस्य विधानसामर्थ्यान्न हलादिशेषः। क्रादिनियमादिट्। थलि भारद्वाजनियमाद्विकल्पः। एता। एष्यति। एतु, इतात्। इताम्। यन्तु। इहि। अयानि—'अवेहि मां किङ्करम्[3]' इत्यत्रानेजादित्वादेतेः 'एत्येधति' इत्यस्याप्रसङ्गाद्वृद्धिरवद्या। न चाङ्प्रश्लेषेणैजादित्वाद्

---

१. भ० का० २।५०। २. शिशु० १।२६। ३. रघु० २।३५।

वृद्धिः; यतस्तामन्तवद्भावेन 'ओमाङोश्च' इति पररूपं बाधते इत्युक्तम्। ऐत्। ऐताम्—'आटश्च' इत्यान्तरतम्यादैकारो वृद्धिः । आयन्—अत्रान्तरङ्गत्वाल्लादेशेऽन्तिभावेऽच्परत्वात् 'इणो यण्' इत्यस्य 'असिद्धवदत्र' इत्यसिद्धत्वात्पश्चादजादित्वेनाडागमः। ऐहि । आयम्—अत्रापि परत्वाद् गुणायादेशयोरात्स्याकारो वृद्धिः । इयात् । इयाताम् । इयाः । इयाम् । इयाव । आशिषि—ईयात् । ईयास्ताम् —'अकृत्सार्वधातुकयोः' इति दीर्घः । समियात्, समियास्ताम् इत्यादौ 'एतेर्लिङि' इत्युपसर्गात्परस्यैतेरार्द्धधातुके लिङि ह्रस्वत्वम् । अभीयात्, प्रेयात् इत्यादावेकादेशस्य ह्रस्वो न भवति; व्यपवर्गाभावात् उपसर्गात्परस्यैतिदीर्घस्याभावात् । अन्तादिवद्भावश्च नास्ति; उभयाश्रितत्वात् । आ ईयात् = एयात् । समेयात् इत्यत्रादिवद्भावादेकारस्यैतेर्दीर्घत्वे सम उपसर्गात्परत्वेऽप्यण इति तत्रानुवर्त्तनान्न ह्रस्वः। अण्चेह सामर्थ्यात्पूर्वः। समीयात् इत्यादिप्रयोगस्तु ई गताविति भौवादिकस्य। अगात्। अगाताम्। अगुः। अगाः। अगाम् । अगाव—'इणो गा लुङि' इति गादेशः। 'गातिस्था' इति सिचो लुक्। 'आतः' इति झेर्जुस्। 'उस्यपदान्ताद्' इति पररूपत्वम्। अत्रात्रेयः—"'न माङ्योगे' इत्यत्र ङित्तु माङुपात्तस्तेनाङित्यपि माशब्दे सार्वकालिको लुङनुमीयत इति 'मा वालिपथमन्वगाः' इति, 'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समा' इत्यादावडागम उपपन्नः" इत्याह, तदयुक्तम्; 'माङि लुङ्' इति सार्वकालिकलुङो विधावपि ङितो ग्रहणादङितस्तस्याभावात्। तथा च तत्र वृत्तिः—'मा भवतु मा भविष्यतीत्यङितो माशब्दस्य प्रयोगः' इति। किं च 'न माङ्योगे' इति सानुबन्धकनिर्देशो भूलसामान्ये लुङि लङ्लृङोश्च माशब्दयोगेऽडागमार्थः स्यादिति नैवापूर्वस्य लुङः कल्पकः स्यात्। 'अथ वा न धर्ममसुबोधसमयमवगात बालिशाः'[1] इति माघप्रयोगो 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यवशब्दान्तलोपे द्रष्टव्यः।

कर्मणि—ईयते। अगायि इत्यादि। स्यादिषु वा चिण्वद्भावे—आयिष्यते। आयिषाताम्। आयिषीष्ट । आयिता। अन्यदा—एष्यते । अगासाताम्। एषीष्ट । एता। लुङि चिण्वत्पक्षे चिण्वदिटा परेण बाधाद् न गादेशः। 'सकृद्गतपरिभाषया च न पुनः प्रवर्तते' इति केचित्। आत्रेयादयस्तु 'वधभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेन' इति वार्त्तिके तद्व्याख्याने भाष्यादौ च वधभावमेवाधिकृत्य विप्रतिषेधकथनाद्गादेशमाहुः। अगायिषाताम् इत्यादि। स्यादिषु चिण्वद्भावेन चिणि दृष्टो गादेशो न भवति, चिणि दृष्टस्याङ्गाधिकारविहितस्यैव सोऽतिदेश इति। गादेशश्च केवलं चिणि दृष्टः, न त्वङ्गाधिकारविहितः। जिगमिषति—'सनि च' इत्यबोधनार्थस्य गम्यादेशः। 'गमेरिट् परस्मैपदेषु' इत्यत्रास्यापि ग्रह इति सनः

---

१ शिशु० १५।१९। 'अवयात' इति मल्लिनाथसम्मतः पाठः।

सकारादिप्रत्ययत्वादिडागमः। 'अयं चेडागम आत्मनेपदेन समानपदस्य नेष्यते। अन्यत्र सर्वत्रेष्यते' इति गच्छतावुक्तम्। तेन कृत्यामि परस्मैपदलुकि च भवति। जिगमिषिता। जिगमिषाञ्चकार। जिगमिष त्वम् इति। भावकर्मणोर्लिट्यामि चात्मनेपदाभावादिडेव—जिगमिषाम्बभूवे। जिगमिषाञ्चक्रे देवदत्तेनेति। यत्तु पदशेषकारदर्शनं 'गम्युपलक्षणार्थं परस्मैपदग्रहणम्, तेन परस्मैपदेषु दृष्टस्य गमेरभावादात्मनेपदे गमिष्यते इतीड्भवति' इति, तदपि गच्छतावेव दूषितमितीटात्र न भवितव्यम्। तथा च 'अज्झनगमां सनि' इत्यत्र कैयटपदमञ्जर्योः "गमेरिङादेशस्य ग्रहणम्' इति वार्तिके इङ्ग्रहणमिणिकोरप्युपलक्षणम्। तेनेणि गादेशस्यापि भावकर्मणोरात्मनेपदे इडभावे जिगांस्यत इति दीर्घो भवत्येव" इति। अन्ये तु—तत्रेङ्ग्रहणं नोपलक्षणमिति दीर्घत्वं नेच्छन्ति, जिगंस्यते इति। यदायं गमिरादेशोऽकर्मकः संपूर्वश्च संजिगमिषति वत्सो मात्रेति तदा 'पूर्ववत्सनः' इत्यतिदेशेन 'समो गम्यृच्छि' इत्यात्मनेपदं स्यादिति न मन्तव्यम्; यतः प्रकृतौ दृष्टस्य सनन्तेऽतिदेशः, इह च सनमन्तरेण नैवास्य प्रयोगः। जुगुप्सते इत्यादौ तु सनमन्तरेण प्रकृतेरप्रयोगे 'अवयवे कृतं लिङ्गं सामर्थ्यात्समुदायस्य विशेषकम्' इत्यात्मनेपदमिति प्रागेवोक्तम्। गमयति—'णौ गमिरबोधने' इति गमिरादेशः। अमन्तत्वान्मित्त्वे 'मितां ह्रस्वः' इति ह्रस्वः, बोधने तु नायमादेश इति प्रत्याययति, प्रतीषिषति इति भवतः। अजादित्वाद् द्वितीयस्यैकाचः सनो द्विर्वचने अभ्यासस्येत्वे उभयोरपि सकारयोरिण उत्तरत्वेन षत्वम्। प्रतीषिषन्ती इत्यत्र सन्शपोरकारयोरेकादेशस्यान्तवद्भावेन पूर्ववत्त्वेन ग्रहणेऽपि 'अदभ्यस्तात्' इति नादादेशः; अभ्यस्तादङ्गादुत्तरस्य तद्विधानात्। अत्र हि इकारादिः समुदायोऽङ्गमिकारवर्जं नाभ्यस्तम्।

उपेयिवान्—'उपेयिवाननाश्वाननूचानश्च' इति लुङ्लङ्लिड्विषयस्य पाक्षिकस्य लिटो नित्यं क्वसुरिट् च निपात्यते। अत्र हि क्रादिनियमात्प्राप्तादिटः पूर्वं नित्यत्वाद् द्विर्वचनमिति हरदत्तादयः। कृतेऽपीटि द्विर्वचनं प्राप्नोत्यकृतेऽपीति नित्यत्वम्। द्विर्वचने तु नेटः प्राप्तिः, 'वस्वेकाजात्' इति कृतद्विर्वचनानामेकाचामेव क्रादिनियमादिट् क्वसाविति नियमात्, अस्य च द्विर्वचनोत्तरकालमनेकाच्त्वात्। न च सवर्णदीर्घेणैकाच्त्वं शङ्क्यम्, यत इ इ वस इति स्थिते सवर्णदीर्घात्परत्वाद्विशेषविहितत्वाच्च 'दीर्घ इणः किति' इत्यभ्यासस्य दीर्घेण भाव्यम्। तद्विधानसामर्थ्याच्च पुनः सवर्णदीर्घो नैव प्रसजतीति। अनेन च निपातनेन क्रादिनियमात्प्राप्तौ 'वस्वेकाजात्' इति नियमादप्राप्त इट् प्रतिप्रसूयत इति। उपेयुष इत्यादौ भसंज्ञायां 'वसोः सम्प्रसारणम्' इति सम्प्रसारणे वलाद्यभावादिण् न भवति। 'उपोपसर्गग्रहणमतन्त्रम्, तेन ईयिवान् समीयिवानित्याद्यपि भवति' इति वृत्तिकारादयः। पारायणिकास्तूपसर्गग्रहणस्य प्रयोजनमजन्तस्यान्यस्योपसर्गस्य निवृत्तिरित्याहुः। इत्यः। उपेत्यः—'एतिस्तु' इत्यादिना क्यपि तुक्। उपेत्य इत्यत्र 'षत्वतुकोर-

सिद्धः' इत्येकादेशस्यासिद्धत्वाद् ह्रस्वाश्रयस्तुग् भवति। उपेयम् इति प्रयोगो भौवादिकस्य दैवादिकस्य वाऽचो यत्प्रत्ययेन। न अभ्याशोऽनभ्याशः, स गन्तव्यो यस्य सः अनभ्याशमित्यः—'इत्ये चानभ्याशस्य' इति मुम्। अत्येतीति अत्यायः—'श्याद्व्यध' इत्यादिना णः। अत्ययी—'जिदृक्षिविश्रि' इत्यादिनेनिः। इत्वरः—'इण्नशि' इति करप्। स्त्रियां 'टिड्ढाणञ्' इति ङीप्—इत्वरी। न्यायः—'परिन्योर्नीणोर्द्यूताभ्रेषयोः' इति घञ्। अभ्रेषः पदार्थानामनपचारः, यथाप्राप्तकरणम्। पर्यायः—'परावनुपात्यय इणः' इति घञ्। अनुपात्ययः क्रमप्राप्तस्यानतिपातः परिपाटी, अन्यत्र कालपर्यायः—'एरच्'। इत्या—'संज्ञायां समज' इत्यादिना स्त्रियां क्यप्। इतिः—'बाहुलकात् क्तिन्' इत्यात्रेयः। अयनम्, अन्तरयणम्—'अन्तरदेशे' इत्यधिकृत्य 'अयनं च' इति णत्वम्, अन्तर उपसर्गत्वात् 'कृत्यचः' इति णत्वे सिद्धे वचनमिदं देशप्रतिषेधार्थम्। नीयतेऽनेनेति न्यायः—'अध्यायन्याय' इति घञ् निपात्यते। 'पुंसि संज्ञायां' घापवादः। न्यायादनपेतं न्याय्यम्—'धर्मपथ्यर्थन्यायादनपेते' इति यत्। न्याये भवमपि न्याय्यम्—दिगादित्वाद्यत्। न्याये भवं तस्य व्याख्यानं वा नैयायम्—ऋगयनादिपाठादणि 'न य्वाभ्याम्' इत्यैजागमः। न्यायमधीते वेत्ति वा नैयायिकः—उक्थादित्वाट्ठक्। 'न य्वाभ्याम्' इत्यैजागमः। आत्ययिकः, औपयिकः—अत्ययोपायशब्दाभ्यां 'विनयादिभ्यश्च' इति स्वार्थे ठक्। उपायशब्दस्य तु 'उपायाद्ध्रस्वत्वं च' इति ह्रस्वत्वमपि। 'औपयिकशब्दः स्वाभावादौचित्ये वर्तते, यथाकथञ्चिदियं व्युत्पत्तिः' इत्यात्रेयः। 'शिवमौपयिकं गरीयसीम्[1]' इत्युपायमात्रेऽपि प्रयोगो दृश्यते। प्रातरित्वा—'अन्येभ्योऽपि दृश्यते' इति क्वनिप। स्त्रियां प्रातरित्वरी—'वनो र च' इति ङीब्रेफौ। कान्तारमतीतः कान्तारातीतः—'द्वितीया श्रित' इति तत्पुरुषः। दुःखादपेतः दुःखापेतः—'अपेतापोढ' इति पञ्चमीतत्पुरुषः। एव—'इण्शीभ्यां वन्' इति वन्प्रत्ययः। चादित्वादसत्त्ववचनत्वान्निपातोऽव्ययम्। क्वेव भोक्ष्यसे—एवशब्दोऽसम्भावने, न क्वापि भोक्ष्यस इत्यर्थः। 'एवे चानियोगे पररूपं वक्तव्यम्' इति पररूपम्। नियोगोऽवधारणम्, अनियोगस्ततोऽन्यः। समिथोऽग्निः सङ्ग्रामश्च—'समीणः' इति थक्। आयुः, आयुर्षी—'एतेर्णिच्च' इत्युसिप्रत्ययः, णित्त्वाद् वृद्धिः। पुरुषायुषम्, द्व्यायुषम्, त्र्यायुषम्—'अचतुर' इत्यादिना आद्यस्य षष्ठीतत्पुरुषे; इतरयोः समाहारद्वन्द्वेऽच् निपात्यते। तेन समासान्तरे न भवति। पुरुषश्च आयुश्च पुरुषायुषी। द्वयोरायुः, त्रयाणामायुः, द्व्यायुस्त्र्यायुरिति। आगः—'इण आगोऽपराधे' इत्यसुन्यागादेशोऽपराधे। एतशः चन्द्रादिः, एतशाः ब्राह्मणः—'इणस्तशन्तशसुनौ' इति तशन्तशसुनौ। इभः—'इणः कित्' इति मन्प्रत्ययः। कित्त्वान्न गुणः। इभमर्हति इभ्यः—दण्डादित्वाद्यत्।

1, किरात० २।३५।

एकः—'इण्भी' इत्यादिना कन्। सङ्ख्यायामेवकवचनान्तः। मुख्यादौ त्वभिधेयवचनः, अयं सर्वनामा। तत्कार्याणि जसि विभाषां वर्जयित्वा पूर्वशब्दवदिहाप्युन्नेयानि। त्यच्छब्दवत्त्यदादिकार्याणि च। 'भवन्त्यनेके जलधेरिवोर्मयः' इत्यत्र तत्पुरुषस्योत्तरपदार्थप्रधानत्वात् उत्तरपदस्य च तत्सङ्ख्यावाचित्वेन एकवचनान्तत्वाद्बहुवचनमनुपपन्नमिति 'सेव्यतेऽनेकया सन्नतापाङ्गया' इतिवदेकवचनेन भाव्यम्। अथैकशब्दस्य 'द्व्येकयोः' इत्यादिवत् वृत्तौ भावप्रधानत्वाद् न विद्यते एकत्वमेषामिति बहुव्रीहिणा 'उद्यतैर्निभृतमेकमनेकैः' इतिवद्बहुवचनोपपत्तिः ? सिद्ध्यति बहुवचनम्, 'न बहुव्रीहौ' इति निषेधात्सर्वनामकार्यं शीभावो न सिद्ध्यति। अथ वा एवं समर्थनीयः—एकशब्दोऽसहायवचनः, अनेके ससहाया इत्यर्थः। तथा च योगपातञ्जले—'एकं चित्तमनेकेषाम्' इति प्रयुज्यते। ऐक्यम्—ब्राह्मणादिपाठात् ष्यञ्। एकतरः, एकतमः—सर्वनामनी, 'एकाच्च प्राचाम्' इति द्वयोर्बहूनां च एकस्य निर्धारणे क्रमेण डतरज्डतमचौ विकल्पेन। नपुंसके स्वमोः 'अद्ड्डतरादिभ्यः पञ्चभ्यः' इत्यदडादेशे अमोऽपवादे, डित्त्वाट्टिलोपे एकतमत् इति भवति। 'एकतरशब्दात्त्वदडादेशो नेष्यते' इति भाष्ये उक्तम्। एकाकी, एककः, एकः—'एकादाकिनिच्चासहाये' इत्यसहायार्थादेकशब्दात् स्वार्थे कनाकिनिचौ। आकिनिचश्च पक्षे लुक्। सकृद्भुङ्क्ते—'एकस्य सकृच्च' इति क्रियागणने सकृदादेशः, सुच्प्रत्ययश्च। चकारस्स्वरार्थः। उकार उच्चारणार्थः। सकारस्य संयोगान्तलोपः। स्वरादित्वादव्यत्वात्सुपो लुक्। एकधा भुङ्क्ते—"सङ्ख्याया विधार्थे धा" इति धाप्रत्ययः। विधा प्रकारः, सामान्यस्य भेदको विशेषः। अनिर्धारितसङ्ख्यस्य भोजनादेः एकत्वादिलक्षणे प्रकारे वर्त्तमानादेकादेश्शब्दात्स्वार्थे धेति सूत्रार्थः। अनेकमेकधा करोति—'अधिकरणविचाले च' इति धा स्वार्थे। अधिकरणं द्रव्यम्, तस्य सङ्ख्यान्तरापादनमधिकरणविचालः, स चैकस्यानेकीकरणम्, अनेकस्यैकीकरणम्। ऐकध्यं भुङ्क्ते करोति वा—'एकाद्धो ध्यमुञन्यतरस्याम्' इति ध्यमुञादेशः। एकशो ददाति, एकैकमेकैस्मै वा ददातीत्यर्थः—"सङ्ख्यैकवचनाच्च वीप्सायाम्" इति शस्। अत्रैकवचनग्रहणं नियतपरिमाणानां प्रस्थादीनां ग्रहणार्थम्। कारकरूपार्थाभिधायिनः सङ्ख्यैकवचनाद् वीप्सायां गम्यमानायां वा शसिति सूत्रार्थः। कारकग्रहणाद् एकैकस्य स्वमिति विवक्षायां शस् न भवति। 'नित्यवीप्सयोः' इति द्विर्वचनं शसि न भवति, 'वीप्सायाः शसैवोक्तत्वाद्' इति 'सर्वस्य द्वे' इत्यत्र भाष्यादौ स्थितम्। ऐकश्यम्—शसन्ताद् ब्राह्मणादित्वाद् ष्यञ्। 'अव्ययानां भमात्रे' इति टिलोपः। 'एकैकशः पितृसंयुक्तानि' इत्यत्र शसः प्रायश इत्यादिवद् अत्यन्तस्वार्थिकत्वाद् वीप्साया अनभिधानाद् द्विर्वचनम्। तथा च 'सर्वस्य द्वे' इत्यत्र भाष्यम्—'यत्र च तद्धितेनानुक्ता वीप्सा भवति तत्र द्विर्वचनम्, तद्यथा एकैकशो ददाति' इति। इदमेव भाष्यमत्यन्तस्य स्वार्थिकस्य शसो मूलम्। यत्र

द्विर्वचनं तत्र 'एकम्बहुव्रीहिवत्' इति बहुव्रीहिवद्भावात्सुपो लुक्। एकान्नविंशतिः— एकेन न विंशतिरिति 'तृतीया' इति योगविभागात्समासः। 'एकादिश्चैकस्य चादुक्' इत्येकशब्दात्परस्य नञः प्रकृतिभावः, एकस्य चादुगागमः। एकस्या भावः एकत्वम्, एकस्याः क्षीरम् एकक्षीरम्—'एकतद्धिते' इति तद्धिते उत्तरपदे च परे ह्रस्वः स्त्रीप्रत्ययस्य। 'लिङ्गविशिष्टग्रहणं एकशब्दस्य ह्रस्वत्वं प्रयोजयति' इति वृत्तिः। एकैकं भोजयति—'नित्यवीप्सयोः' इति द्विर्वचने 'एकं बहुव्रीहिवत्' इति बहुव्रीहिवद्भावात्सुपो लुकि चित्रगुरित्यादिवत् पुनस्समासात्सुबुत्पत्तिः। न 'बहुव्रीहौ' इति सर्वनामसंज्ञानिषेधोऽस्य न भवति, तत्र बहुव्रीहाविति वर्तमाने पुनर्बहुव्रीहिग्रहणं मुख्यबहुव्रीहिपरिग्रहार्थमित्युक्तत्वात्। अयं चातिदेशिको गौणो बहुव्रीहिः। बहुव्रीहिवद्भावाद् 'एकैकामाहुतिं जुहोति' इत्यत्र 'स्त्रियाः पुंवद्' इत्युत्तरपदनिबन्धनः पुंवद्भावो भवति। ननु सत्यसति वा पुंवद्भावे को विशेषः, यस्मादुभयथापि वृद्धिर्भविष्यति ? सत्यम्; अवग्रहे त्वस्ति विशेषः। एकदा—'सर्वैक' इति दाप्रत्ययः। एकपुरुषः—'पूर्वकाल' इति समासः। पञ्चाम्राः, पूर्वेषुकामशमी इत्यादौ 'विशेषणं विशेष्येण' इति समासे सिद्धे 'दिक्सङ्ख्ये संज्ञायाम्' इति पुनर्विधानात् संज्ञया अन्यत्र दिक्सङ्ख्ययोः विशेषणसमासाभावाद् एकशब्दस्य समासवचनम्। अत एव एकवीर इत्यत्र 'पूर्वकाल' इत्यस्मात्परत्वात् 'पूर्वापरप्रथम' इत्यनेन समासेन भाव्यम्; ततश्च वीरशब्दस्य प्रथमानिर्दिष्टत्वादुपसर्जनत्वात्पूर्वनिपातः स्यादिति चोद्यमपि निराकृतम्। तस्य त्ववकाशो वीरपुरुषादिः। एतत्—'एतेस्तुट् च' इत्यदिप्रत्ययस्तुडागमश्च। एष करोतीति 'त्यदादीनामः' इति विभक्तावत्वे 'तदोस्सस्सौ' इति सौ तकारस्य सत्वे तस्य च षत्वे सोः 'एतत्तदोस्सुलोपोऽकोरनञ्समासे हलि' इति लोपः। अकोरिति वचनाद् एषकः करोतीति साकच्के सुलोपो न भवति। 'अनञ्' इति वचनाद् अनेषः करोतीत्यत्रापि न सुलोपः। अत्र 'अनञ्समासे' इति प्रतिषेधादेव तदन्तस्यापि ग्रह इति परमैष करोतीत्यत्रापि सुलोपः। त्यदाद्यत्वे 'तदोस्सस्सावनन्त्ययाः' इति सत्वे च, त्यदादिप्राधान्ये तदन्तेऽपीष्यते; यदा त्वप्राधान्यं तदा न भवतः—अत्येतद्देवदत्त इति। नपुंसके सोर्लुका लुप्तत्वादपि न भवतः। अमो लुका लुप्तत्वादपि नात्वम्। एषा इत्यादौ विभक्तिनैरन्तर्येण भवदप्यत्वम् 'भस्त्रैषा' इत्यादिनिर्देशात्तद्विघातस्य टापो निमित्तं भवति। एषका, एषिका— अकच्पक्षे 'भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि' इति कात्पूर्वस्याकारस्य 'प्रत्ययस्थाद्' इति प्राप्तमित्वं पक्षे निषिध्यते। यद्यप्यत्र 'नञ्पूर्वाणाम्' इत्यपिशब्देन केवलानामन्यपूर्वाणां चायं निषेध उक्तः, तथाप्येषाद्वे समस्ते न प्रयोजयतः; यतस्समासार्थायां विभक्तौ न त्यदाद्यत्वम्, 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इति। तेन समासाद्विभक्तावत्वे टापा भाव्यम्। स चान्तर्वर्तिन्या विभक्त्या प्रत्ययलक्षणेन सुबन्तात्पर इति 'प्रत्ययस्थात्' इती-

त्वस्य 'असुपः' इति निषेधादप्रसङ्गात् किं तन्निषेधेन ! शेषं त्यदादिकार्यं त्यच्छब्दवत् ।

एतत्परिणाममस्य एतावान्—'यत्तदेतेभ्यः परिमाणे' इति परिमाणिनि वतुप् । 'आ सर्वनाम्नः' इत्यात्वम् । 'अत्वसन्तस्य' इत्यसम्बुद्धौ सावुपधादीर्घत्वे नुमि हल्ङ्यादिसंयोगान्तलोपौ । अतः, अत्र—'एतदोश्' इति प्राग्दिशीयेऽशादेशः । अत्र 'एतदः' इति योगविभागः, तत्र 'एतेतौ रथोः' इत्यनुवृत्त्या रेफथकाराद्योः प्रत्यययोः यथासङ्ख्यमेत इत इत्येतावादेशौ भवतः—एतर्हि, इत्थम् इति । तत्र र्हिल् 'अनद्यतने र्हिलन्यतरस्याम्' इति सिद्धः, थादिस्तूपसङ्ख्येयः । अत्र भुङ्क्ष्व, अथोऽत्राधीष्व इत्यादौ अन्वादेशेऽपि 'एतदोश्' इति सामान्येनैवाशादेशे सिद्धे 'एतदस्त्रतसोस्त्रतसौ चानुदात्तौ' इति वचनं त्रतसोरनुदात्तत्वार्थम् । एनम् , एनौ, एनान् , एनेन, एनयोः—'द्वितीयाटौस्स्वेनः' इतीदमेतदोरन्वादेशविषययोरेनादेशः । नपुंसकैकवचने त्वेनदितीष्यते । एतः वर्णः—'हसिमृग्रिण्वामि' इति तन्प्रत्ययः । एनी—'वर्णादनुदात्तात्तोपधात्तो नः' इत्यनुदात्तान्ततोपधवर्णवाचित्वात् स्त्रियां ङीप्, तकारस्य च नः । इनः—'इण्सि' इत्यादिना नक् । दूरम्—'दुरीणो लोपश्च' इति दुर्युपपदे रक्, इणश्च लोपे, 'रोरि' इति लोपे 'ढ्रलोपे' इति दीर्घः । दविष्ठः, दवीयान्, दवयति—'स्थूलदूर' इत्यादिना णाविष्ठवदिति च यणादिपरस्य लोपो गुणश्च । 'दूरयत्यवनते विवस्वति' इति प्रयोगस्तु चिन्त्यः ॥ ३५ ॥

४९. इङ् अध्ययने । नित्यमधिपूर्वः । अधीते । अधीयाते । अधीयते । अधीषे, अधीये । अधीवहे—क्ङित्यजादावियङ् । 'रामादधीतसंदेशः[1]' इति भट्टिप्रयोगे पञ्चमी चिन्त्या, 'आख्यातोपयोगे' इत्याख्यातुः प्रतिपादयितुरपादानत्वं यस्मादुपयोग एव । उपयोगश्च नियमपूर्वकं विद्याग्रहणम्, तच्च उपाध्यायादधीते इत्यादावेव सम्भवति । अधिजगे । अधिजगाते । अधिजगिरे । अधिजगे । अधिजगिवहे—'गाङ् लिटि' इति गाङादेशः । क्रादिनियमादिट् । 'आतो लोप इटि च' इत्याल्लोपः । तस्य स्थानिवद्भावाद् द्विर्वचनम् । गाशब्दस्य तु न स्थानिवत्त्वम्, 'गाङ् लिटि' इति द्विलकारकनिर्देशाल्लावस्थावयामेव तद्विधानात्, द्विर्वचननिमित्तान्निमित्तत्वाभावात् । अध्येता । अध्येष्यते । अधीताम् । अधीयाताम् । अधीष्व । अध्ययै । अध्ययावहै – आटि गुणाययोरुपसर्गस्य यणादेशः । पूर्वं धातोरुपसर्गेण योगेऽपि गुणात्पूर्वमन्तरङ्गत्वेन सवर्णदीर्घो न भवति, 'वार्णादाङ्गं बलीयः' इति गुणस्य बलीयस्त्वात् । अथ वा—'प्रत्ययः', 'णेरध्ययने वृत्तम्' इत्यादिनिर्देशान्न भविष्यति । अध्यैत । अध्यैयाताम् । अध्यैयत—झस्यादादेशः । अध्यैथाः । अध्यैयि । अध्यैवहि—अजादौ परत्वादियङि

---

१. भ० का० ८।७२ ।

पश्चादाटि वृद्धौ उपसर्गस्य यणादेशः। ज्ञापितं च 'घुमास्था' इत्यत्र हल्ग्रहणेन विप्रतिषेधे प्राप्ते 'असिद्धवदत्र' इत्यसिद्धत्वं नेति। अधीयीत। अधीयाताम्। अधीयीथाः। अधीयीध्वम्। अधीयीय। अधीयीवहि — धातोरियङ्युपसर्गेण सवर्णदीर्घः। आशिषि—अध्येषीष्ट। अध्येषीयास्ताम्। अध्येषीष्ठाः। अध्येषीढ्वम्—इणः परत्वान्मूर्धन्यः। अध्येषीय—धातोर्गुणः, उपसर्गस्य यण्। अध्यगीष्ट। अध्यगीषाताम्। अध्यगीष्ठाः। अध्यगीढ्वम्। अध्यगीषि—'विभाषा लुङ्लृङोः' इति पक्षे गाङादेशः। 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' इत्यञ्णितः प्रत्ययस्य ङित्त्वातिदेशाद् 'घुमास्था' इतीत्वम्। गाङभावे—अध्यैष्ट। अध्यैषाताम्। अध्यैष्ठाः। अध्यैढ्वम्। अध्यैषि। अध्यैष्वहि—आटि वृद्धौ उपसर्गस्य यणादेशः। अध्यगीष्यत। अध्यगीष्येताम्। अध्यगीष्यन्त। अध्यगीष्यथाः। अध्यगीष्यध्वम्। अध्यगीष्ये। अध्यगीष्यावहि—पूर्ववद्गाङ्विकल्पः। गाङभावे—अध्यैष्यत इत्यादयः। अधिजिगांसते—'इङश्च' इति सनि गमिरादेशः। 'अज्झनगमां सनि' इति दीर्घः। 'पूर्ववत्सनः' इति तङ्। नायमादिष्टो गमिः सनः प्रकृतिः पृथगात्मनेपदी दृष्ट इति कथं 'पूर्ववद्' इत्यतिदेशेन तङिति न भ्रमितव्यम्; यस्मात्प्रत्ययविशेषोपादाने 'आर्धधातुके' इतीयं परसप्तमीत्युक्तम्, तेनेङः सनि परे पश्चाद्गमिरादेश इतीङेव सनः प्रकृतिः। स च पृथगात्मनेपदी दृष्टः। स एव तङ्निमित्तमिति तङ्सिद्धेः। 'गमेरिट् परस्मैपदेषु' इतीण्निषेधः। अयं च निषेधः आत्मनेपदेन समानपदस्थस्येति कृति चेड्भवत्येव —अधिजिगमिषाञ्चक्रे, अधिजिगमिषिता, अधिजिगमिषा इति। अध्यापयति —'क्रीङ्जीनां णौ' इत्यात्वे पुक्। 'बुधयुध' इत्यादिना क्रियाफलस्य कर्तृगामित्वेऽपि परस्मैपदम्। अध्यजीगपत्—'णौ च संश्चङोः' इति सन्परे चङ्परे णौ गाङादेशविकल्पः। पुकि णौ चङि ह्रस्वे द्वित्वेऽभ्यासस्य सन्वदित्वे 'दीर्घो लघोः' इति दीर्घः। आदेशाभावे, अध्यापिपत् पूर्ववदात्वतुकोश्चङि ह्रस्वे णिलोपे 'द्विर्वचनेऽचि' इति तस्य स्थानिवत्त्वाद् 'अजादेर्द्वितीयस्य' इति पिशब्दस्य द्विर्वचनम्। एवं सन्परेऽपि अधिजिगापयिषति, अध्यापिपयिषति—सनस्सेट्त्वात् न णिलोप इति गुणायौ। अध्याप्य इत्यत्र 'विभाषाऽऽपः' इत्यापः परस्य णेर्ल्यपि विधीयमानोऽयादेशो न भवति। अस्याऽऽरूपस्य लाक्षणिकत्वात्। अधीत्य —सवर्णदीर्घस्य षत्वतुकोरसिद्धत्वाद् ह्रस्वनिबन्धनस्तुक्। अधीतमनेन अधीती व्याकरणे, व्याकरणमधीतवानित्यर्थः—'इष्टादिभ्यश्च' इति प्रथमासमर्थाद् अनेनेति कर्त्रर्थे इनिः। 'क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम्' इति कर्मणि सप्तमी। रात्रिरधीता, अहरधीतमित्यत्र 'कालाध्वनोः कर्मवद्भावद्यर्थमिति काले कर्मणि निष्ठा' इति 'कालाध्वनोः' इत्यत्र भाष्यम्। अधीयन् पारायणम्, अक्लेशेनाधीयान इत्यर्थः—'इङ्धार्योः शत्रकृच्छ्रिणि' इति कर्तरि शता। 'न लोकाव्यय' इत्यत्र 'तृन्' इति प्रत्याहारग्रहणात् कर्मणि कृद्योगलक्षणा षष्ठी न भवति।

उगित्त्वात् स्त्रियाम् अधीयती । अधीयान इत्यत्र लट्स्थानिकस्य शानचोऽकृच्छ्र-विषयेणानेन शत्रा भिन्नविषयत्वान्न बाधः । अध्यायः—'इङश्च' इत्यकर्तरि कारके भावे च घञ् । उपेत्यास्मादधीयत इति उपाध्यायः, पूर्ववद्धञ् । उपाध्याया, उपाध्यायी—अत्र स्त्रियां क्तिनाऽस्य घञो न बाधः, 'अपादाने स्त्रियामुपसङ्ख्यानं तदन्ताच्च वा ङीष्' इति वचनात् । पुंयोगङीषि तु 'उपाध्यायमातुलाभ्यां वा' इति पक्षे आनुगपि भवति—उपाध्यायी, उपाध्यायानी इति । अधीयते अत्रेति अध्यायः - पुंसि संज्ञायां घम्बाधित्वा 'अध्यायन्याय' इति घञ् निपात्यते । सौवाध्यायिकः—'प्रयोजनम्' इति ठक् । 'न य्वाभ्याम्' इत्यैच्, वृद्ध्यभावश्च । केचिदत्र ऐजागमार्थं द्वारादौ स्वाध्यायशब्दं पठन्ति, तदनर्थकम् ; यद्यत्र शोभनोऽध्यायः स्वाध्याय इति व्युत्पत्तिस्तदा 'न य्वाभ्याम्' इत्यैच् सिद्धः, अथ स्वशब्देन समासः, तदापि द्वारादिषु स्वशब्दस्य पाठात् तदादेरपि तत्र ग्रहणात् सौवग्रामिकादिवदैचस्सिद्धिः । कठश्चासावध्यापकश्च कठाध्यापकः—'पोटायुवति' इत्यादिना समासः ।

आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैस्सह ॥

इति चरणस्य जातित्वम् । चरणशब्दश्च शाखाध्यायिषु रूढः । ब्राह्मणस्याध्यापको ब्राह्मणाध्यापकः—ण्यन्ताद् ण्वुल्, याजकादित्वाद् अकेनापि षष्ठीसमासः । 'एतिस्तु' इति क्यब्विधौ नित्यमधिपूर्वत्वादस्यैतिग्रहणेन न ग्रहः । तथा च भाष्ये 'अध्येयं व्याकरणम्' इति यदन्तो निर्दिश्यते ॥ ३६ ॥

५०. इक् स्मरणे । अयमप्यधिपूर्वः । मातुरध्येति, मातरमध्येति—'अधीगर्थ' इति कर्मणश्शेषत्वेन षष्ठी । धातोः ककारोऽत्रेवेगिति विशेषणार्थः । अधीतः, अधीयन्ति—इत्यादि सर्वमिण्वत् । 'इण्वदिकः' इति वचनाद् 'इणो यण्' 'इणो गा लुङि' इत्यस्यापि भवति । आत्रेयस्तु यणमुक्त्वा "केचित्तु 'इणो गा लुङि' इत्यतिदेशकार्यार्थमेव 'इण्वदिक' इत्यतिदेशमिच्छन्ति, तन्मते इयङि अधीयन्ति" इति पक्षान्तरमप्याह । 'इणो यण्' इत्यत्र न्यासे च पक्षद्वयं दर्शितम्—"णकारोच्चारणं इङिकोर्निवृत्त्यर्थम् । ये तु 'इण्वदिकः' इति सामान्येनातिदेशमिच्छन्ति तेषामिङ एव निवृत्त्यर्थम् । इकस्तु भवितव्यमेव यणा" इति । मैत्रेयस्तु इयङमेवोदाहृत्य—'केचित्तु यणादेशमिच्छन्ति' इत्याह । हरदत्तस्तु इयङादेशं न सहते, 'इण्वदिकः' इत्युपादाय यदाह—"यद्यस्यैवायं प्रकरणस्य शेषः स्यात्, 'इणिकोर्गालुङि' इति सूत्रन्यासः कर्तव्य इत्येवावक्ष्यत् । यतश्च खलु पृथगिण्वदिक इत्याह, ततो मन्यामहे सर्वशास्त्रस्य शेषोऽयम्" इति । एवं च 'ससीतयो राघवयोरधीयन्' इति[1] भट्टिप्रयोगश्चिन्त्यः । 'णौ गमिरबोधने' 'सनि च' इत्यबोधने

1, भ० का० ३।१८ ।

विधीयमानो गम्यादेशोऽस्यापि भवति; यतस्तत्र बोधनशब्देनानुभवरूपं ज्ञानं गृह्यते, न च स्मृतिरनुभवः। अत एव वृत्तौ अधिगमयति, अधिजिगमिषति इति गम्यादेश उदाहृतः॥ ३७॥

**५१. वी गतिप्रजनकान्त्यसनखादनेषु।** जनो जन्म, प्रजनो जन्मन उपक्रमो गर्भग्रहणम्। वेति। वीतः। वियन्ति। वेषि। वेमि। वीवः—अजादावगुणवृद्धिविषये इयङ्। विवाय। विव्यतुः। विव्युः। विवयिथ, विवेथ। विव्यथुः। विव्य। विवाय, विवय पिद्वचनेषु वृद्धिगुणाययां स्थानिवत्त्वे वीशब्दस्य द्विर्वचनम्। आययोरेव वा स्थानिवत्त्वे वैशब्दस्य वेशब्दस्य वा। अपिद्वचनेषु इयङः स्थानिवत्त्वात् विशब्दस्य द्विर्वचने पुनरुत्तरखण्डस्य प्रवर्तमानमियङं बाधित्वाऽनेकाच्त्वाद् यणादेशः। 'कटि गतौ' इत्यत्रायमर्थः प्रपञ्चितः। वेता। वेष्यति। वेतु। वीताम् वियन्तु। वीहि—हेरपित्त्वात् ङित्त्वान्न गुणः। वयानि। वयाव—इयङं बाधित्वा परत्वाद् गुणः। अवेत्। अवीताम्। अवियन्। अवेः। अवयम्। अवीव—"अडागमात्प्रागपि वर्तमानं प्रकृत्यानेकाच्त्वमाश्रित्य अजादौ क्ङिति 'एरनेकाचः' इति यणादेशः" इत्यात्रेयः। अन्ये तु परत्वादियङमेवाहुः। 'असिद्धवदत्र' इति 'असिद्धत्वं विप्रतिषेधविषये न' इति 'घुमास्था' इत्यत्र हल्ग्रहणेन ज्ञापितम्। वीयात्। वीयताम्। वीयुः। आशिषि वीयात्। वीयास्ताम्। अवैषीत्। अवैष्टाम्। अवैषीः। अवैषम्। विवीषति—'इको झल्' इति कित्त्वान्न गुणः। वेवीयते। वेवेति, वेवयीति। वेवीतः। वेव्यति। णिचि वाययति। अवीवयत्। प्रजनार्थत्वे तु 'प्रजने वीयतेः' इति णौ विभाषया आत्वे पुकि, पुरोवातो गाः प्रवापयति इति, पुरोवातो गर्भं ग्राहयतीत्यर्थः। कर्मणि वीयते इत्यादि। वीत्वा। वीतः। वेत्रम्—'गुधृवी' इत्यादिना त्रप्रत्ययः। वेत्रकीयम्—'नडादीनां कुक्च' इति चातुरर्थिकश्छः, कुगागमश्च। अत्र प्रश्लिष्टनिर्देशाद् 'ई' इत्यपि धातुमाहुः। एति। ईतः। इयन्ति। ईयात्। ईयाताम्। ऐषि इत्यादि सिद्ध्यर्थम्॥ ३८॥

**५२. या प्रापणे।** प्रापणमिह गतिः। याति। प्रणियाति—'नेर्गद' इति णत्वम्। यातः। यान्ति। यासि। यामि। ययौ। ययतुः। ययुः। ययाथ, ययिथ। यय। ययौ। ययिव—क्रादिनियमादिट्। थलि भारद्वाजनियमादिड्विकल्पः। याता। यास्यति। यातु, यातात्। याताम्। यान्तु। याहि। यानि—'लङश्शाकटायनस्यैव' इत्याकारान्ताल्लङः शाकटायनमतेन विधीयमानो जुस्भावो लोटो लङ्वद्भावेन न भवति, तत्रानुवर्तमानेन ङित इत्यनेनैव आकारान्तात्परस्य लङोऽन्यस्य झेरसम्भवाद लङ्विषयत्वे सिद्धे पुनर्लङ्ग्रहणस्य मुख्यलङ्ग्रहणार्थत्वात्। अयात्। अयाताम्। अयुः। अयान्। अयाः। अयाम्—'लङश्शाकटायनस्यैव' इति वा झेर्जुस्भावः। यायात्। यायाताम् इत्यादि। 'यायुरित्यस्यानभिधानादप्रयोग इति केचिद्' इत्यात्रेयः। आशिषि यायात्। यायास्ताम्। यायासुः। अयासीत्। अयासीः।

अयासिषम्—'यमरमनमातांसक्' इति सगिटौ। यान्तो, याती—शत्रन्तात् शीनद्योः परयोः 'आच्छीनद्योर्नुम्' इति नुम्विकल्पः। यियासति। 'नित्यं कौटिल्ये गतौ' इति यङ्—यायेति, यायाति। यायीतः। यायति—हलादौ ङिति सार्वधातुके 'ई हल्यघोः' इतीत्वम्। अजादौ 'श्नाभ्यस्तयोः' इत्याल्लोपः। यापयति। अयीयपत्। यायावरः—'यश्च यङः' इति यङन्ताद्यातेर्वरच्। अत्र चकारः पुनर्वरज्विधानार्थ इत्यकौटिल्येऽपि यङनुमीयते। एवं हि पुनर्विधानमुपपद्यते। अत्र वरच्यतो लोपे यलोपे च 'अचः परस्मिन्पूर्वविधौ' इत्यल्लोपस्य स्थानिवत्त्वम् 'न पदान्त' इत्यादिना निषिध्यत इति 'आतो लोप इटि च' इत्याल्लोपो न भवति। शुभं यातीति शुभंयाः—क्विप्। शुभंयौ—'नादिचि' 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधाद् 'वृद्धिरेचि' इति वृद्धिः। शुभंयाः। शसादौ भसंज्ञायाम् 'आतो धातोः' इत्याल्लोपे शुभंयः इत्यादि। नपुंसके तु ह्रस्वत्वे शुभंयम् इत्यादि। चतुर्थ्येकवचने तु 'ङेर्यः' इति यकारे 'सुपि च' इति दीर्घे तस्य च धात्वाकारत्वाद् 'आतो धातोः' इत्याल्लोपे 'हलो यमाम्' इति पूर्वयकारस्य वा लोपे शुभंये इति भवति। न चाल्लोपस्य स्थानिवत्त्वम्, पूर्वत्रासिद्धीयत्वात्, यलोपविधित्वाद्वा। यदा तु 'हलो यमाम्' इति लोपो न भवति; तदा द्वियकारक उच्चार्यः। शुभंयिका—कप्रत्यये 'केऽणः' इति ह्रस्वे 'प्रत्ययस्थात्' इतीत्वम्। 'उदीचामातस्स्थाने यक्पूर्वायाः' इति यकारककारपूर्वस्याकारस्थानिकस्याकारस्य विधीयमानः पाक्षिक इत्त्वनिषेधोऽत्र न भवति। 'यक्पूर्वायाः' इति स्त्रीलिङ्गनिर्देशेन स्त्रीप्रत्ययस्यातस्तत्र ग्रहणात्। ययातिः—क्तिनि बाहुलकाद् द्विर्वचनमित्यात्रेयः। 'ई हल्यघोः' इतीत्वमपि बहुलवचनादेव नेति तदभिप्रायः। यङ्लुगन्ताद्वा क्तिचि। 'संज्ञापूर्वको विधिरनित्यः' इति 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घत्वम्, 'ई हल्यघोः' इत्यभ्यस्तेत्त्वं च न भवति। यात्रा—'हुयामाश्रुवसिभसिभ्यस्त्रन्' इति त्रन् स्वभावात्स्त्रीविषयः। 'ष्ट्रन्' इति ष्ट्रनेव सिद्धे त्रन्विधानं ङीब्निवृत्त्यर्थम्। ययुः—'यो द्वे च' इत्युप्रत्ययो द्वित्वं च। किद्वद्भावादाल्लोपः। मृगयुः व्याधः, देवयुः धार्मिकः, केवलयुः मानी, ग्रहयुः ग्रहपतिः, मित्रयुः मित्रवत्सलः ऋषिश्च, मन्त्रयुः मन्त्री, अध्वर्युः ऋत्विग्विशेषः—'मृगय्वादयश्च' इति मृगादिषूपपदेषु कुप्रत्यये निपात्यन्ते। अध्वरशब्दस्य अन्तलोपश्च। अध्वर्योर्भावकर्मणि आध्वर्यवम्—उद्गात्रादित्वादञ्। यातुः, रक्षपर्यायः—तुनि पारायणे व्युत्पादितः। यामः—'अर्तिस्तु' इत्यादिना मन्॥ ३९॥

५३. वा गतिगन्धनयोः। वाति इत्यादि यातिवत्। वाजयति – 'वो विधूनने जुक्' इति णौ जुक्। विधूननं कम्पनम्; अन्यत्र पुगेव—वापयति इति। निर्वाणः—'निर्वाणोऽवाते' इति धात्वर्थस्य अवाताधिकरणत्वे निष्ठानत्वं निपात्यते। वाते तु—निर्वातो वातः, निर्वातं वातेन इति नत्वं न भवति। आद्युदात्तो वातशब्दो 'हसिमृग्रिण्वामि' इति तनि द्रष्टव्यः। वातानां समूहो वात्या—'पाशादिभ्यो यः' इति यः।

वातूलः—'वातात्समूहे च' इत्यूलच्। चशब्दादयं 'न सहते' इत्यर्थेऽपि। वातवान्, वातूलः—सिध्मादिषु 'वातदन्तबलललाटानामूङ् च' इति पाठाल्लचि ऊङ्चागमः। 'यस्य' इति लोपः। वातरोगी वातकी—'वातातिसाराभ्यां कुक्च' इति मत्वर्थे इनिः कुगागमश्च। वातस्य शमनं कोपनं वा वातिकम्—'तस्य निमित्तप्रकरणे वातपित्तश्लेष्मभ्यश्शमनकोपनयोरुपसंङ्ख्यानम्' इति ठक्। वायुः—'कृवापाजि' इत्युणि युगागमः। वायुर्देवताऽस्य वायव्यम्—'वाय्वृतुपित्रुषसो यत्' इति यत्। ओर्गुणे 'वान्तो यि' इत्यवादेशः। "'ह्वावामश्च' इत्यत्र अकर्मकत्वात् अस्याग्रहः" इति न्यासे, तत्पाशादौ 'वाता वान्ति दिशो दश' इति भाष्ये सकर्मकस्य दर्शनादयुक्तम्। तथा च भट्टभास्करोऽपि 'असम्मृष्टो जायसे मातृवोः' इत्यत्र 'मातृवोः मातापितृभावं वान्त्योः' इति सकर्मकत्वमाह। एवं च 'ह्वावामश्च' इत्यत्र "ह्वयतिना सानुबन्धकेन साहचर्याद् अकर्मकत्वाच्च 'वा गतिगन्धनयोः', 'मा माने' इत्येतयोरग्रहणम्" इति हरदत्तेन अकर्मकत्वस्य हेतोः कथनं मात्यभिप्रायं द्रष्टव्यम्। शोषणे वायति। तन्तुसन्ताने वयतीति शपि गतम् ॥४०॥

५४. भा दीप्तौ। भाति इत्यादि यातिवत्। व्यतिभाते—त्रिष्वपि वचनेषु समानं रूपम्। झस्यादादेशः। व्यतिभासे। व्यतिभै—इट एत्वे वृद्धिः। केचित्तु 'आतो लोप इटि च' इत्यत्रास्यापीटो ग्रहणमिति आल्लोपमिच्छन्ति, तन्न; तत्रार्धधातुकाधिकारादागमस्येवेटो ग्रहणमिति स्थितेः। आगमश्च इडार्धधातुकभक्तत्वादार्धधातुकः। भम्—'डोऽन्यत्रापि दृश्यते'[1] इति डः। भाः—सम्पदादित्वात्[2] क्विप्। भसंज्ञायाम् 'आतो धातोः' इत्याल्लोपे भ इत्यादि। 'करकमलैः पुनरुक्तरक्तभाभिः' इति प्रयोगः सान्तस्य भाश्शब्दस्य रुत्वे 'भोभगो' इति यत्वे 'हलि सर्वेषाम्' इति लोपे द्रष्टव्यः। प्रतिभा, प्रभा—'आतश्चोपसर्गे' इत्यङ् स्त्रियां भावे। प्रतिभैव प्रातिभम्—प्रज्ञादित्वात्स्वार्थेऽण्। निभः तुल्यः—'आतश्चोपसर्गे' इति कर्तरि कः। प्रभानम्, प्रभापनम्—'न भाभूपूकमिगमि' इत्यादिना 'ण्यन्तानां च भादीनामुपसङ्ख्यानम्' इति च णत्वनिषेधः। अयं च निषेधः 'कृत्यचः' इति प्राप्तस्येति लोटि प्रभाणि, प्रभावयाणि इत्यत्र 'आनि लोट्' इति णत्वं भवत्येव। भानुः—'दाभाभ्यां नुः' इति नुः ॥ ४१ ॥

५५. ष्णा शौचे। स्नाति। सस्नौ। सस्नाथ, सस्निथ। सस्निव। स्नाता। स्नास्यति। स्नातु। स्नाहि। स्नानि। अस्नात्। अस्नाताम्। अस्नुः। अस्नाः। स्नायात्। स्नायाताम्। आशिषि—स्नायात्, स्नेयात्—'वाऽन्यस्य संयोगादेः' इत्येत्वविकल्पः। अस्नासीत्। सास्नायते। सास्नाति। स्नापयति, स्नपयति,

---

१. 'अन्येभ्योऽपि दृश्यते इति वक्तव्यम्' इति भाष्य( ३।२।१०१ )सम्मत्येदं व्याख्यानम्। २. मुद्रितपुस्तकेषु 'सम्पृचात्' इति पाठः, स चिन्त्यः।

प्रस्नापयति—'ग्लास्नावनुवमां च' इत्यनुपसृष्टस्य वा मित्त्वम् । प्रतिष्णातम्—'सूत्रं प्रतिष्णातम्' इति सूत्रे षत्वम् । सूत्रादन्यत्र प्रतिस्नातः । निष्णातः, नदीष्णः—'सुपि स्थः' इत्यत्र 'सुपि' इति योगविभागात्कः, 'निनदीभ्यां स्नातेः कौशले' इति षत्वम् । कौशलादन्यत्र निस्नातः, नदीस्नातः । सुस्नातं पृच्छति सौस्नातिकः—'पृच्छतौ सुस्नातादिभ्य उपसङ्ख्यानम्' इति ठक् । प्रस्नः—'घञर्थे कविधानम्' इति कः । स्नानीयं चूर्णम्—बाहुलकात्करणेऽनीयर् । स्नात्वाकालिकः—मयूरव्यंसकादित्वात्तत्पुरुषः । 'समासेऽनञ्पूर्वे' इति क्त्वो ल्यब्न भवति । 'अनञ्' इत्यस्य पर्युदासत्वाद् नञ्सदृशेनाव्ययेन क्त्वान्तस्य समासे स विधिरिति । मयूरव्यंसकादिषु पाठादेव वात्र ल्यपो नैव प्रसङ्गः । ब्राह्मणस्नापकः—ण्यन्ताण्ण्वुल् । याजकादित्वात् षष्ठीसमासः । स्नायतीति भौवादिकस्य ।। ४२ ।।

५६. श्रा पाके । इह पाको विक्लित्तिरिति कैयटादौ । श्राति इत्यादि स्नातिवत् । पाके घटादिपाठात् श्रपयति । अन्यत्र श्रापयति स्वेदयतीत्यर्थः । शृतं क्षीरं हविर्वा—ण्यन्तस्य चाण्यन्तस्य च क्ते 'शृतं पाके' इति शृभावो निपातितः । क्षीरहविषोरन्यत्र श्राणा यवागूः, श्रपिता यवागूरिति—'संयोगादेरातः' इति निष्ठानत्वम् । 'अण्यन्तत्वे पाके' इति वचनाद् यदा स्वेदनवचनो वा, ण्यन्ताण्णिचि पाचनवचनो वा, तदापि न शृभावः । सर्वमेतत् 'श्रै पाके' इत्यत्र प्रपञ्चितम् ।। ४३ ।।

५७. द्रा कुत्सायां[1] गतौ । 'कुत्सितगतिः पलायनं स्वापश्च' इति स्वामी । तत्र प्रायो निपूर्वोऽयं स्वापवचनः । द्राति । निद्राति । प्रणिद्राति इत्यादि यातिवत् । निद्रालुः, तन्द्रालुः—'स्पृहिगृहिपतिदयिनिद्रातन्द्रा' इति निपूर्वात्तत्पूर्वाच्चालुच् । अस्मादेव निर्देशात्तदो दकारस्य च नकारः । निद्रः—'आतश्चोपसर्गे' इति कः । निद्रा—स्त्रियाम् 'आतश्चोपसर्गे' इत्यङ् । तन्द्रा—'घञर्थे कविधानम्' इति कप्रत्यये टाप् । तन्द्रिः—'अच इः' इतीप्रत्ययः, बाहुलकात्कित्त्वादाल्लोपः । तन्द्री—'कृदिकारादक्तिनः' इति वा ङीष् । सर्वत्रात्र तदो दकारस्य नकारः 'निद्रातन्द्रा' इति निपातनस्य सामान्यापेक्षत्वाद् द्रष्टव्यः । द्राणः, द्राणवान्—'संयोगादेरातः' इति निष्ठानत्वम् । निद्रितः—इति निद्राशब्दात् तारकादित्वादितचि । द्रायतीति स्वप्ने शपि ।। ४४ ।।

५८. प्सा भक्षणे । प्साति । प्रणिप्साति इत्यादि स्नातिवत् । द्रवणेन प्सानीयो द्रप्सः—घञर्थे कः । पृषोदरादित्वाद् द्रादेशः । विश्वप्सा—'श्वन्नुक्षन्' इत्यादिना कनिन् ।। ४५ ।।

५९. पा रक्षणे । पाति इत्यादि यातिवत् । पायते । अपासीत्—ईत्वे सिचो लुकि च लुग्विकरणत्वान्नास्य ग्रहः । पालयति—'पातेर्लुग्वक्तव्यः' इति णिचि

1. 'कुत्सितायाम्' इति क्षीरस्वामी ।

लुगागमः । गोपालकः—'नित्यं क्रीडाजीविकयोः' इति अकेन समासः । गोपालकस्य स्त्री गोपालिका—'गोपालिकादीनां प्रतिषेधः' इति पुंयोगलक्षणस्य ङीषोऽभावः । न पातीति नपात्—नप्तेत्यर्थः । 'नभ्राण्णपाद्' इति निपातनाद् नञः प्रकृतिभावः क्विपि तुक्च । 'शत्रन्तः' इति वृत्तिः । तत्र हरदत्तः—"'अपान्नपातम्' इत्यादावनपुंसके नुमदर्शनाद् 'उभे वनस्पत्यादिषु' इत्यत्र 'पातेः क्विपि पात्' इत्यभिधानाच्च अपपाठोऽयम्" इति । तनूनपाद्—अग्निः, इन्धनं विना तनून्न पातीति व्युत्पत्तिः। अपोनप्त्रियम्, अपान्नप्त्रियम्, अपोनप्त्रीयम्, अपान्नप्त्रीयम्—'अपोनप्त्रपान्नप्तृभ्यां घः', 'छ च' इत्यपोनपादपान्नपाच्छब्दाभ्यां घच्छौ। 'सास्य देवता' इत्यस्मिन्विषये प्रत्ययसन्नियोगेन अपोनप्त्रपां नप्तृभावश्च । उभे अपि देवतानामनी । पतिः—'पातेर्डतिः', 'पतिस्समास एव' इति घिसंज्ञानियमात् पत्या इत्यत्र 'आङो नास्त्रियाम्' इति नादेशो न भवति । पत्ये इत्यादौ ङिद्वचने 'घेर्ङिति' इति गुणश्च न भवति। पत्युः— ङसिङसोरकारस्य 'ख्यत्यात्परस्य' इत्युकारे यणादेशः । 'ख्यत्य' इति खिशब्दखीशब्दयोः कृतयणोर्निर्देशः । तथा पत्यौ इत्यत्र 'अच्च घेः' इत्यत्वं न भवति । ङेरौकारस्तु 'औत्' इति भवति । समासे तु घिसंज्ञायां वनस्पतिना इत्यादौ नाभावादीनि घिकार्याणि भवन्ति । 'पारस्करप्रभृतीनि च' इति सुट् । बृहस्पतिः—'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' इति सुट्तलोपौ । वाचस्पतिः, दिवस्पतिः—एतावपि पारस्करप्रभृती । बृहस्पतेरपत्यादिः बार्हस्पत्यम्—'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति प्राग्दीव्यतीयेष्वर्थेषु ण्यः । वनस्पतीनां समूहो वानस्पत्यः— इत्यत्र 'अचित्तहस्तिधेनोष्ठक्' इत्यचित्तलक्षणं प्राग्दीव्यतीयं परमपि ठकं 'ण्यादयोऽर्थविशेषणलक्षणादपवादात्पूर्वविप्रतिषेधेन' इति बाधित्वा ण्य एव भवति, अर्थविशेषलक्षणादित्यभिधानाद् । उष्ट्रपतिर्नाम पत्रम् औष्ट्रपतम्—इत्यत्र 'तस्येदम्' इत्यर्थसामान्ये विधीयमानम् 'पत्राध्वर्युपरिषदश्च' इत्यञ् परत्वाण्ण्यं बाधते । पत्रं वाहनमुच्यते । अश्वपतेरपत्यादि आश्वपतम्—'अश्वपत्यादिभ्यश्च' इति ण्यापवादोऽण् प्राग्दीव्यतीयः । एवं धनपत्यादयो गणपठिता उदाहार्याः । वास्तोष्पतिर्देवतास्य वास्तोष्पत्यम्, वास्तोष्पतीयम्—'द्यावापृथिवीशुनासीर' इत्यादिना यच्छौ । अत्रैव निपातनात् षष्ठ्या अलुक्षत्वे । गृहपतिना संयुक्तोऽग्निः गार्हपत्यः—'गृहपतिना संयुक्ते ञ्यः' इति संज्ञायां ञ्यः । निर्देशादेव तृतीया समर्थविभक्तिः । गृहपतेः भावः कर्म वा गार्हपत्यम्—'पत्यन्तपुरोहितादिभ्यो यक्' इति यक् । अधिपतिगणपत्योस्तु ब्राह्मणादित्वात् ष्यञ् । अधिपत्यम् । गणपत्यम्—यक्ष्यञोस्स्वरे विशेषः । स्वपतौ साधु स्वापतेयम्—'पत्यतिथि' इत्यादिना ढञ् । कौमुदगन्ध्यायाः पतिः कौमुदगन्धापतिः—'ष्यञस्सम्प्रसारणम्' इति सम्प्रसारणे परपूर्वत्वे च 'हलः' इति दीर्घः । दुहितुः पतिः दुहितृपतिः—'विभाषा स्वसृपत्योः' इति विद्यायोनिसम्बन्धवाचिनः

पूर्वपदस्य षष्ठ्या विभाषा अलुक् । अहर्पतिः—'अहरादीनां पत्यादिषूपसङ्ख्यानम्' इति रेफस्य वा रेफो विसर्जनीयापवादः । विसर्जनीयपक्षे 'कुप्वोः' इति पक्षे उपध्मानीयोऽपि । 'उभयत्राप्यादिशब्दः प्रकारे' इति हरदत्तः । जाया च पतिश्च जायापति, दम्पती, जम्पती—राजदन्तादित्वाद् घ्यन्तस्यापि परनिपातः । जायाशब्दस्य वा दम्भावजम्भावौ च भवतः । वासवदत्तायां 'सखे दमेव'[1] इति केवलस्य स्त्रीवचनस्य दंशब्दस्य प्रयोगश्चिन्त्यः । ब्रह्मा च प्रजापतिश्च ब्रह्मप्रजापती—'न दधिपयआदीनि' इति समाहारद्वन्द्वनिषेधात् इतरेतर एव द्वन्द्वः । पत्नी—'पत्युर्नो यज्ञसंयोगे' इति ङीप्, ईकारस्य च नकारः । यज्ञसंयोगादन्यत्र पतिरियं ब्राह्मणी ग्रामस्य इति वृषलस्य पत्नी इत्याद्यौपचारिकः प्रयोगः । वृद्धपतिः, वृद्धपत्नी—तत्पुरुषो बहुव्रीहिर्वा । 'विभाषा सपूर्वस्य' इति विद्यमानपूर्वपदस्य पत्यन्तस्य प्रातिपदिकस्य वा ङीब्नकारौ । अत्रानुवर्तमानमुपसर्जनग्रहणं पत्यन्तप्रातिपदिकविशेषणमिति बहुव्रीहावपि ङीब्नकारौ भवतः । समानः पतिरस्याः सपत्नी—'नित्यं सपत्न्यादिषु' इति नित्यं ङीब्नकारौ । अस्मादेव निर्देशात्समानस्य सभावः । आदिशब्देन गणपठितैकादिपूर्वपदादपि । सपत्न्या अपत्यं सापत्न्यः—'शिवादिभ्योऽण्' इत्यण् । सपत्न्या भावः कर्म वा सापत्न्यम्—लिङ्गविशिष्टपरिभाषया 'पत्यन्त' इति यक् । 'भस्याऽढे तद्धिते' इति पुंवद्भावस्तु न भवति, सपत्नीशब्दस्याभाषितपुंस्कत्वात् । सपत्नीव सपत्नः—'व्यन् सपत्ने' इत्यनुवादादिवार्थेऽकारः । पतिवत्नी—'अन्तर्वत्पतिवतोर्नुक्' इति जीवपत्यां ङीब् नुगागमश्च, तत्सन्नियोगेन मतुपो वत्वं च । अन्यत्र पतिमान्, पतिमती इति । पिता । पितरौ—'नप्तृनेष्टृ' इत्यादिना तृचि इत्वं गुणाभावश्च निपात्यते । 'अप्तृन्' इति सर्वनामस्थानदीर्घोऽस्य न भवति, तृन्नन्तानां नप्त्रादीनां पुनरुपादानस्य संज्ञाशब्दानामौणादिकानामेषामेवेति नियमार्थत्वात् । सौ 'ऋदुशनस्' इत्यनङि नान्तत्वात् 'सर्वनामस्थाने' इति दीर्घः । माता च पिता च पितरौ—'पिता मात्रा' इति पितुर्वा शेषः । अन्यथा मातापितरौ—'आनङ् ऋतो द्वन्द्वे' इति विद्यायोनिसम्बन्धवाचिनो द्वन्द्वपूर्वपदस्य आनङादेशः । 'अयमनृकारान्ते पुत्रशब्देऽपि भवति' इति वृत्तिः, पितापुत्रौ—इति । 'मातरपितरावुदीचाम्' इत्यनङ्निपातनात् मातरपितरौ इत्यपि भवति । पितरो देवताऽस्य पित्र्यम्—'वाय्वृतुपित्रुषसो यत्' इति यत् । 'रीङ् ऋतः' इति ऋदन्तस्याङ्गस्य कृत्सार्वधातुकादन्यस्मिन् यकारादौ च्वौ च रीङ्, 'यस्येति च' इतीकारलोपः । पितृव्यः, पितामहः—'पितृव्यमातुलमातामहपितामहाः' इति पितृभ्रातरि व्यन्प्रत्ययः, पितुः पितरि मातरि च डामहच् प्रत्ययः । 'मातरि षिच्च' इति वा, गौरादिपाठाद्वा

---

१. वासवदत्तायामन्विष्टमपीदमुद्धरणमस्माभिर्नोपलब्धमिति विद्वांस एव प्रमाणम् ।

ङीष् पितामही। पितुरागतं पित्र्यम्, पैतृकम्—'पितुर्यच्च' इति 'तत आगतः' इति विषये यठञौ। 'इसुसुक्तान्तात्कः' इत्युगन्तत्वात् ठस्य कादेशः ॥ ४६ ॥

६० रा दाने। राति इत्यादि। रातिः मित्रम्—संज्ञायां क्तिच्। राः रायौ—'रातेर्डैः' इति डैः। 'च्विरव्ययम्' इति नियमाद् 'कृन्मेजन्तः' इति नाव्ययत्वम्। 'रायो हलि' इति हलादौ विभक्तावात्वम्। अजादौ विभक्तावायादेशः। इदमात्वं तदन्तेऽपीष्यते सुरा, अतिरा इति। अतिरि ब्राह्मणकुलमित्यत्र सोर्लुका लुप्तत्वाद् हलादिविभक्तिपरत्वाभावान्नात्वम्। अन्यत्र तु भवत्येव अतिराभ्याम् इत्यादि। 'सम्बुद्धौ च' इति गुणस्तु विकल्पेन भवतीति त्रपतावुपपादितम्। अजादौ 'इकोऽचि' इति नुम् अतिरिणी इत्यादि। तृतीयादावजादौ 'तृतीयादिषु भाषितपुंस्कं पुंवद्' इति पक्षे पुंवद्भावाद् नुमभावो नाशङ्क्यः; इगन्तस्याङ्गस्य भाषितपुंस्कत्वाभावाद् पुंवद्भावस्य नैव प्रसङ्ग इति। आमि तु 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' इति नुट्यात्वे च अतिराणाम् इति भवति। राका—'कृदाधारार्चिकलिभ्यः कन्' इति कन्। रात्रिः—'राशदिभ्यां त्रिप्' इति त्रिप्। रात्री—कृदिकारत्वान् ङीष्। 'रात्रेश्चाजसौ' इति संज्ञाछन्दसोर्ङीब्विधानमाद्युदात्तार्थम्। अहोरात्रः, अहोरात्रौ—द्वन्द्वौ। 'अहो रुविधौ रूपरात्रिरथन्तरेषूपसङ्ख्यानम्' इति रुः। सर्वरात्रः—'पूर्वकालैक' इति समासः। रात्रेः पूर्वभागः पूर्वरात्रः—'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' इति तत्पुरुषः। सङ्ख्यातरात्रः, पुण्यरात्रः—विशेषणसमासौ। अतिरात्रः—प्रादिसमासः। द्विरात्रः—द्विगुः। 'अहस्सर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः' इत्यहरादेरव्ययात् सङ्ख्यायाश्च परस्य रात्रिशब्दस्याच्समासान्तस्तत्पुरुषे। अहर्ग्रहणं तु द्वन्द्वार्थम्। 'कतिपयरात्रम्' इति मुरारिप्रयोगे कतिपयशब्दस्यासङ्ख्यात्वात् समासान्तश्चिन्त्यः। उक्तं हि 'षट्कतिकतिपयचतुरां थुक्' इत्यत्र वृत्तावस्यासङ्ख्यात्वम्। 'रात्राह्नाहाः पुंसि' इति कृतसमासान्तस्य रात्रशब्दस्य पुंस्त्वम्। इदं पुंस्त्वमसङ्ख्यादेरिति अमरसिंहः, यथाह-'रात्रादेः प्रागसङ्ख्यकाद्[1]' इति। वृत्तिकारशाक्यमुनिप्रभृतयस्तु पुंस्त्वमेवाहुः। रात्र्यामटति रात्रिमटः—'रात्रेः कृति विभाषा' इति वा मुमागमः। रात्रिंदिवम्—अचतुरादिनाचिं मान्तत्वं निपात्यते। द्वैरात्रिकः, द्विरात्रीणः—'रात्र्यहस्संवत्सराच्च' इति अधीष्टादिषु ठञ्खौ। रायतीति शपि ॥ ४७ ॥

६१. ला आदाने। लाति इत्यादि। विलालयति, विलापयति घृतम्—'लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने' इति पक्षे लुगागमः। स्नेहविपातनादन्यत्र पुगेव। कृपामादत्ते इति कृपालुः—'मितद्र्वादित्वाड्डुः' इत्यात्रेयः। व्यालः—

१. 'रात्रान्ताः प्रागसङ्ख्यकाद्' इत्यमरकोशसम्मतः पाठः।

'आतश्चोपसर्गे' इति कः। बहूनर्थान् लातीति बहुलम्--'आतोऽनुपसर्गे कः' इति कः। बाहुलकम् --मनोज्ञादित्वाद् भावकर्मणोर्वुञ्। अतिशयेन बहुलो बंहिष्ठः, बंहीयान्। बहुलस्य भावकर्मणी बंहिमा--पृथ्वादिमनिच्। 'प्रियस्थिर' इत्यादिना इष्ठेमेयस्सु बहुलस्य बंह्यादेशः। बहुलमाचष्टे बंहयति--'णाविष्ठवद्' इति बंह्यादेशः। 'रातिलाती द्वावपि दानार्थौ' इति चान्द्राः॥ ४८॥

६२. दाप् लवने। दाति इत्यादि पूर्ववत्। पकारो घुसञ्ज्ञायामदाबिति निषेधार्थः। तेन प्रणिदाति, प्रनिदाति इत्यत्र 'शेषे विभाषा' इति णत्वविकल्पो भवति। तथा दायते, अदासीत्, व्यत्यदास्त, दातम्, दिदासति इत्यादौ यथासङ्ख्यम् 'घुमास्था' इतीत्वम्, 'गातिस्था' इति सिचो लुक्, 'स्थाघ्वोरिच्च' इति प्रकृतेरित्वं सिचश्च कित्त्वम्, 'दोदद्घोः' इति दद्भावः' 'सनिमीमा' इतीस्भावो न भवति। दात्रम् --'दाम्नी' इत्यादिना करणे ष्ट्रन्। रक्षणे दयते, शोधने दायतीति शपि गतम्॥ ४९॥

६३. ख्या प्रकथने। ख्याति इत्यादि यातिवत्। लुङि 'अस्यतिवक्ति' इत्यङि अख्यद् इति भवति। तिपा निर्देशाद्यङ्लुकि अङभावात् सिचि अचाख्यासीद् इति भवति। अस्यापि चक्षिङादेशवत् क्शादित्वं द्रष्टव्यम्। इदमार्धधातुकविषयमिति आत्रेयादयः। अन्ये तु सामान्येन मन्यन्ते। सखा--'समाने ख्यस्य चोदात्तः' इति समानशब्दे उपपदे इन् प्रत्ययः, समानस्य सभावः, उदात्तश्च। चशब्दाद्धातोर्यलोपः, प्रत्ययस्य ङित्त्वं च। 'अनङ् सौ' इत्यसम्बुद्धौ सौ अनङादेशो ङित्त्वादन्त्यस्य। सम्बुद्धौ तु 'ह्रस्वस्य गुणः' इति गुणः। अन्यत्र सर्वनामस्थाने 'सख्युरसम्बुद्धौ' इति णिद्वद्भावाद् वृद्धावायादेशः—सखायौ इत्यादि। सखीन् इत्यादि पतिशब्दवत्। घिसंज्ञा 'असखि' इति पर्युदासान्न भवति। स्त्रियां सखी—'सख्यशिश्वीति भाषायाम्' इति निपातनात् ङीष्। सख्याः इत्यत्र 'ख्यत्यात्परस्य' इत्युत्वात्परत्वाद् नित्यत्वाच्च ङसिङसोः 'आण्नद्याः' इत्याटि कृतेऽकारस्य खीशब्दानन्तरत्वाभावाद् उत्वं न भवति। परमसखः --'राजाहस्सखिभ्यष्टच्' इति टच्। बहुव्रीहौ तु बहुसखा, बहुसखायौ इति। 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति टज् न भवति, अनङ्णिद्वद्भावौ 'अङ्गाधिकारे तस्य तदुत्तरपदस्य च' इति सख्यन्तस्यापि भवतः। 'असखि' इति पर्युदासः केवलस्यैवेति तदन्तस्य घिसंज्ञायां बहुसखिनेत्यादौ नाभावादि भवति। सुसखा, अतिसखा, किंसखा, असखा—इत्यत्र 'न पूजनात्', 'किमः क्षेपे', 'नञस्तत्पुरुषात्' इति समासान्ताभावः। लिङ्गविशिष्टपरिभाषया सखीशब्दान्तादस्मिन् समासान्ते कृते चाकृते च न विशेषः; यतः कृतेऽपि 'भस्याऽढे तद्धिते' इति पुंवद्भावे टित्त्वान्ङीपि परमसखी इत्येव रूपम्। सख्युर्भावकर्मणी सख्यम्—'सख्युर्यः' इति यः। लिङ्गविशिष्टात्प्रत्ययेऽपीदमेव

रूपम्; यतः पूर्ववत्पुंवद्भावेन भाव्यम् । 'सम्पूर्वस्य सख्युः प्रयोगो न' इति 'समिख्यः' इत्यत्र न्यासादावुक्तम् ॥ ५० ॥

६४. प्रा पूरणे । प्राति इत्यादि । प्राणः, प्राणवान्—'संयोगादेरातः' इति निष्ठानत्वम् । प्रायः—'श्याद्व्यध' इति णः ॥ ५१ ॥

६५. मा माने । मानमिहान्तभावः । अत्रायमकर्मकः । ऊक्तं च 'ह्वावामश्च' इत्यत्रेन्दुहरदत्तन्यासकारादिभिः—'अकर्मकत्वादस्याग्रहणम्' इति । तेन हि 'आतोऽनुपसर्गे कः' इति कं बाधित्वा कर्मण्युपपदेऽण्विधीयते । सुखमुपमाति, अग्निमनुमाति, गृहं निर्माति, भवान् प्रमाति, तण्डुलान् परिमाति इत्यादौ सकर्मकत्वमुपसर्गवशेनार्थान्तरवृत्त्या । न चैवं सकर्मकादस्मादणर्थम् 'ह्वावामश्च' इत्यत्र ग्रहणं स्यादिति वाच्यम्; यतस्तत्र 'आतोऽनुपसर्गे कः' इत्यस्यापवादस्याप्रसङ्गात् सामान्यः कर्मण्यण् सिद्धः । माति इत्यादि यातिवत् । मीयते । मेमीयते—'घुमास्था' इतीत्वम् । मित्सति—'सनिमीमा' इतीस्भावे 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासस्य लोपः । 'सस्यार्धधातुके' इति तत्वम् । मितम्—'द्यतिस्यतिमा' इतीत्वम् । सर्वेष्वेषु माग्रहणेषु मामेङ्माङ्ग्रहणम्; 'गामादाग्रहणेष्वविशेषः' इति वचनात् । 'नेर्गद' इत्यादिसूत्रे तु नास्य ग्रहणम्, तथा च तत्र वृत्तिः—'मा इति माङ्मेङोर्ग्रहणम्' इति । उक्तं चैतत्सर्वम् इन्दुमीरदेवन्यासकारहरदत्तादिभिरपि । तेन प्रनिमाति, प्रण्मिाति इत्यत्र 'शेषे विभाषा कखादावषान्त उपदेशे' इति णत्वविकल्पो भवति । 'चान्द्रास्तु णत्वविधावपि त्रयाणां ग्रहणमिच्छन्ति' इति वर्धमानः, स्वामिकाश्यपौ तु 'माग्रहणेष्वलुग्विकरणस्य णत्ववर्ज्यम्' इति; उभयमिदं वृत्त्यादिमहाग्रन्थविरोधादुपेक्ष्यम् । मातीति मायः—'श्याद्व्यध' इति णे युक् । माया—स्त्रियां टाप् । मायावी—'अस्मायामेधास्रजो विनिः' इति मत्वर्थे विनिः । मायी, मायिकः—व्रीह्यादित्वादिनिठनौ । प्रमातीति प्रमः—'आतश्चोपसर्गे' इति कः । प्रमा—'आतश्चोपसर्गे' इति स्त्रियामङ् । प्रमितिः इति बाहुलकात् क्तिन् । मयते इति प्रणिदाने शपि गतम् ॥ ५२ ॥

६६. वच परिभाषणे । अत्र पुरुषकारे "'अस्यतिवक्ति' इत्यत्र वृत्तौ परिभाषणे पठ्यते; तथापि परैरनधिकार्थत्वाद् भाषणमेवार्थः इति एतच्च क्वचिद्वृत्तावेवं पाठदर्शनादुक्तम् । वक्ति । वक्तः । वक्षि । वक्थः । वक्थ । वच्मि । वच्वः । वच्मः—'वचन्तीत्यस्याप्रयोगोऽनभिधानात्' इति स्वामिसम्मताकारौ । तथा च भोजः—'न वचन्ति प्रयुञ्जते' इति । आत्रेयस्तु एकवचनान्युदाहृत्य 'अन्यत्रानभिधानमित्येके । झिमात्र एवानभिधानमिति केचित्' इति । उवाच । ऊचतुः । ऊचुः । उवक्थ, उवचिथ । ऊच । उवाच, उवच । ऊचिव—थलि भारद्वाजनियमादिड्विकल्पः

१. दै० ४६ पृ० ।

वक्ता । वक्ष्यति । वक्तु, वक्तात् । वक्ताम् । वचन्तु । वग्धि—हैधित्वे कुत्वजश्त्वे । वचानि । अवक्, अवग् । अवक्ताम् । अवचन् । अवक् । अवचम् । वच्यात् । वच्याताम् । वच्युः । वच्याः । वच्याम् । वच्याव । आशिषि—उच्यात् । उच्यास्ताम्—कित्त्वात् 'वचिस्वपि' इति सम्प्रसारणम् । अवोचत् । अवोचताम् । अवोचन्—'अस्यतिवक्ति' इत्यङि 'वच उम्' इत्युम् । उक्थम्—यज्ञायज्ञियात्परं साम—'पातृतुदिवचि' इति थक् । उक्थमधीते वेद वा औक्थिकः—'क्रतूक्थादि' इति ठक् । 'अयं च प्रत्ययो न सामवचनादिष्यते, किन्तु तल्लक्षण औक्थिक्यनाम्नि वर्तमानात्' इति वृत्त्यादौ स्थितम् । वक्त्रम्—'गुधृवीपचिवचि' इति त्रः । इन्दुवक्त्रो नाम देशः ऐन्दुवक्त्रकः—'कच्छाग्निवक्त्रगर्तोत्तरपदात्' इति शैषिको वुञ् । शेषमपि ब्रूञादेशवत् । पारायणिकैरयं धातुर्नापाठीत्येतावतानार्षता नाशङ्क्या, 'अस्यतिवक्ति' इत्यत्र वृत्त्यादौ—'वच परिभाषणे, ब्रूञादेशो वा, इत्युक्तत्वात् । तथा वच्यादिसूत्रे न्यासपदमञ्जर्योश्च अस्यास्तित्वं स्पष्टम् । किञ्चान्तिपरस्यास्य प्रयोगं प्रतिषेधन्तो भोजात्रेयादयोऽप्यत्रैवानुकूलाः । अयमाधृषीयश्च ॥ ५३ ॥

६७. इण्प्रभृतयोऽनुदात्ता परस्मैपदिनः ।

६८. इङ् त्वात्मनेपदी ।

६९. विद ज्ञाने । एतदादयो रुदिपर्यन्ता उदात्ता उदात्तेतः । वेत्ति । वित्तः । विदन्ति । वेत्सि । वित्थः । वित्थ । वेद्मि । विद्वः । विद्मः । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म—'विदो लटो वा' इति लटः परस्मैपदानां पक्षे णलादयः । विवेद । विविदतुः । विवेदिथ । विवेद । विविदिव । विदाञ्चकार—'उषविद' इत्याम्प्रत्ययो वा । विदेत्यकारस्य विवक्षितत्वान्न लघूपधगुणः । वेदिता । वेदिष्यति । वेत्तु, वित्तात् । वित्ताम् । विद्धि । वेदानि । विदाङ्करोतु, विदाङ्कुरुतात् । विदाङ्कुर्वन्तु । विदाङ्कुरु । विदाङ्करवाणि—'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इति लोट्याम्यगुणत्वम्, लोटो लुक्, लोट्परकरोतेरनुप्रयोगश्च पक्षे निपात्यते । 'कुर्वन्तु' इति बहुवचनमितिकरणान्न विवक्ष्यते । अवेत् । अवित्ताम् । अविदुः । अवेत्, अवेः । अवित्तम् । अवेदम् । अविद्व—हल्ङ्यादिना तिस्योर्लोपः । सिपि 'दश्च' इति दकारस्य वा रुत्वम् । 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस् । विद्यात् । विद्याताम् । विद्युः । विद्याः । विद्याम् । आशिषि—विद्यात् । विद्यास्ताम् इत्यादि । अवेदीत् । अवेदिष्टाम् । अवेदीः । अवेदिषम्—'नेटि' इति हलन्तलक्षणाया वृद्धेर्निषेधः । संवित्ते । संविदाते । संविदते, संविद्रते । संवित्से । संविदे—'समो गम्यृच्छि' इत्यकर्मकात्तङ् । 'वेत्तेर्विभाषा' इति झादेशस्यातो वा रुडागमः । संविविदे । संविविदिषे । संविविदे । संविविदिवहे । संविदाञ्चक्रे । संवेदिता । संवेदितासे । संवेदिष्यते । संवित्ताम् । संविदाताम् । संविदताम्, संविद्रताम् । संवित्स्व । संवेदै ।

समवित्त । समविदाताम् । समविदत, समविद्रत । समवित्थाः । समविद्धि । संविदीत । संविदीयाताम् । आशिषि--संवेदिषीष्ट । संवेदिषीयास्ताम्—लघूपधगुणः । 'लिङ्सिचौ' इति कित्त्वमझलादित्वान्न भवति । समवेदिष्ट । समवेदिषाताम्—पूर्ववदकित्त्वम् । विविदिषति, विदित्वा—'रुदविद' इति क्त्वासनोः कित्त्वम् । वेविद्यते । वेवेत्ति, वेविदीति । संवेवित्ते । संवेविदाते । संवेविदते—'समो गम्यृच्छि' इति तङ् । प्रकृतिग्रहणेन रुट् तु न भवति; वेत्तेरिति तिपा निर्देशात् । वेदयति । अवीविदत् । विदन्, विद्वान्—'विदेःशतुर्वसुः' इति शतुर्वा वसुरादेशः । संयोगान्तलोपे 'वसुस्रंसु' इति दत्वं नकारस्य न भवति, तत्र 'स' इत्यनुवर्तनादित्युक्तम् । विदन्नेव वैदनः-- 'प्रज्ञादिभ्यश्च' इति स्वार्थेऽण् । विद्वांसोऽस्यां सन्तीति विदुष्मती परिषत्—'तसौ मत्वर्थे' इति मतुपोऽपि मत्वर्थत्वात्तस्मिन् परे सान्तत्वेन भत्वात् वसोस्सम्प्रसारणपरपूर्वत्वयोः षत्वम् । 'विद्वांसमाचष्टे इति णौ 'णाविष्ठवत्' इति टिलोपे विद्वयति' इति दौर्गाः, तदयुक्तम्; इष्ठवद्भावादेव भत्वे नित्यत्वात्पूर्वं प्रसारणे पश्चाट्टिलोपे विदयति इति भाव्यमिति । टिलोपस्तु शब्दान्तरप्राप्त्याऽनित्यः । वेदितः । वेदयतीति वेदयः-'अनुपसर्गाल्लिम्प' इत्यादिना ण्यन्ताच्छप्रत्यये शपि गुणायौ । शास्त्रवित्, प्रवित्—'सत्सूद्विष' इत्यादिना क्विप् । विदुरः-'विदिभिदिच्छिदेः कुरच्' इति कर्तरि कुरच् । वेदनशीलो विन्दुः--'विन्दुरिच्छुः' इत्युप्रत्यये नुमि निपात्यते । वेदः—'हलश्च' इति घञ् । वैदिकः—अध्यात्मादित्वात् शैषिकष्ठञ् । वेदमाचष्टे वेदापयति—'अर्थवेदसत्यानामापुग्वक्तव्यः' इत्यापुक् । आयुर्वेदमधीते वेद वा आयुर्वेदिकः—उक्थादित्वात् ठक् । सर्वे वेदाः सर्ववेदाः—'पूर्वकालैक' इति समासः, तान् अधीते वेद वा स सर्ववेदः—प्राग्दीव्यतीयस्याणः 'सर्वसादेर्द्विगोश्च' इत्युक्थादिपाठाल्लुक् । अत्र द्विगुग्रहणं तद्धितार्थमित्यस्यैव स्मरणार्थमिति हरदत्तादयः । सर्ववेद एव सार्ववेद्यः--'सर्ववेदादिभ्यस्स्वार्थे उपसङ्ख्यानम्' इति स्वार्थे ष्यञ् । चतुरो वेदानधीते वेद वा चतुर्वेदः—तद्धितार्थे द्विगौ प्राग्दीव्यतीयस्याणः 'द्विगोर्लुक्' इति लुक् । चतुर्वेद एव चातुर्वैद्यः 'चतुर्वेदस्योभयपदवृद्धिश्च' इति ष्यञुभयपदवृद्धिः । वित्तिः—'मन्त्रे वृष' इत्यादिना स्त्रियां क्तिन् । विद्या--'संज्ञायां समज' इति क्यप् । चतस्रो विद्याः चातुर्वैद्यम्—'चतुर्वर्णादिभ्य उपसङ्ख्यानम्' इति स्वार्थे ष्यञ् । अनुशतिकादित्वादुभयपदवृद्धिः । स्वार्थस्यापि तद्धितार्थत्वात् 'तद्धितार्थ' इति द्विगुः । विद्यामधीते वेद वा वैद्यः-'प्राग्दीव्यतीयोऽण्' । वायसविद्यामधीते वेद वा वायसविद्यिकः—'विद्यालक्षणकल्पसूत्रान्तात्' इति उक्थादिपाठाट्ठक् । यदायं विद्यान्तस्सर्वसादिर्द्विगुर्वा तदा 'सर्वसादेर्द्विगोश्च लः' इति प्रत्ययस्य लुकि सर्वविद्यः इत्यादि भवति । अत्र हरदत्तः-'चतुर्विद्यशब्दस्य ब्राह्मणादिपाठात्स्वार्थे ष्यञ्, मतान्तरेणापि चातुर्वैद्यः' इति । उक्थादौ 'विद्या चानङ्गक्षत्रधर्मसंसर्गत्रिपूर्वा' इतिपाठादङ्गादिपूर्व-

पदात् प्राग्दीव्यतीयोऽणेव–अङ्गविद्यः इत्यादि। त्रैविद्यः इत्यत्र त्र्यवयवा विद्या त्रिविद्या इति 'शाकपार्थिवादीनामुपसङ्ख्यानमुत्तरपदलोपश्च' इति तत्पुरुषत्वेन अद्विगुत्वादणो लुग् न भवति। यदा तु द्विगुस्तदा त्रिविद्य इत्येव। विदा—भिदादित्वादङ्। वेदना–'घट्टिवन्दिविदिभ्यश्च' इति युच्। ब्राह्मणवेदं भोजयति, यं यं ब्राह्मणं वेद तं तं भोजयतीत्यर्थः–'कर्मणि दृशिविदोः' इति णमुल्। न वेत्तीति नवेदाः–विदेरसुन्। 'नभ्राण्णपात्' इत्यादिना नञः प्रकृतिभावः। तत्र 'नवेदा' इत्येकवचनान्तपाठाद् द्विवचनान्तपरे न प्रकृतिभाव इत्यात्रेयादयः। अयं सत्तायां दिवादौ। विचारणे रुधादौ। चेतनाख्याननिवासेषु चुरादौ। विद्लृ लाभे तुदादौ ॥ ५४ ॥

७०. अस भुवि। अस्ति। स्तः। सन्ति। असि। स्थः। स्थ। अस्मि। स्वः। स्मः—'श्नसोरल्लोपः' क्ङिति सार्वधातुके इत्यपिद्वचनेषु अल्लोपः। 'तासस्त्योः' इति सलोपः सकारादौ। विदामास। आसतुः। आसुः। आसिथ। आसथुः। आस। आसिव—'अस्तेर्भूः' 'आर्धधातुके' इति भूभावोऽनुप्रयोगे नेत्युक्तम्। अन्यत्र भूभावे—बभूव इत्यादि भवतिवत्। चान्द्रैः 'अनुप्रयोगादन्यत्रापि क्वचिद्भूभावो नेष्यते' इति 'प्रादुरास बहुलक्षपाच्छविः' इत्यादि समाहितम्। अत्र युक्तिर्न दृश्यते। धातुप्रदीपे तु 'असतेरास' इत्युक्तम्। विस्तरे तु 'आसेति बभूवार्थे; आहेत्युवाचार्थे' इति विभक्तिप्रतिरूपकत्वेन समाहितम्। भविता। भविष्यति। अस्तु, स्तात्। स्ताम्। सन्तु। एधि, स्तात्। स्तम्। स्त। असानि। असाव—हावल्लोपे 'घ्वसोरेद्धौ' इति सकारस्यैत्वम्। तस्य 'असिद्धवदत्राभात्' इत्यसिद्धत्वात् 'हुझल्भ्यो हेर्धिः' इति धिभावः। तातङ्पक्षे एत्वं न भवति, परेण तेन बाधात्। कृते तु तातङि स्थानिवत्त्वेनापि न भवति; 'सकृद्गतौ विप्रतिषेधेन' इति। आसीत्। आस्ताम्। आसन्। आसीः। आस्व—'अस्तिसिचोऽपृक्ते' इतीडागमः। श्नसोरल्लोपस्य 'असिद्धवदत्र' इत्यसिद्धत्वाडागमो द्विवचनादौ। स्यात्। स्याताम्। स्युः। स्याः। स्याम्। स्याव—पिद्वचनेष्वपि यासुटो ङित्त्वादल्लोपः। आशिषि भूयाद् इत्यादि। अभूत्—'गातिस्था' इति सिचो लुक्। 'आहिभुवोरीट्प्रतिषेधः' इति स्थानिवत्त्वनिषेधाद् अस्त्याश्रय ईण्ण भवति। प्रत्ययलक्षणेन सिजाश्रयो न भवति, अत एव स्थानिवत्त्वनिषेधसामर्थ्यात्। यद्वा 'अस्तिसिच' इत्यस्य विद्यमानसिच इत्यर्थस्य भवतौ प्रतिपादितत्वात् नैव सिजाश्रयस्येटः प्रसङ्गः। सिचिवृद्धिर्लुका लुप्तत्वान्न भवति। अभूवन्—'भुवो वुग्लुङ्लिटोः' इति वुक्। 'आतः' इति नियमात् जुस्भावो न भवति। अभूः—'भूसुवोस्तिङि' इति पिति गुणनिषेधः। शेषं भवतिवद् आर्धधातुके नेयम्। "'श्रिणीभुवोऽनुपसर्गे' इति घञ् अस्य लुग्विकरणत्वान्न भवति। तेन अपादाने भव इति 'ऋदोरप्'" इति रक्षितः। विपन्ति। प्रादुष्षन्ति। विष्यात्। प्रादुष्ष्यात् "उपसर्गप्रादुर्भ्यामस्तिर्यच्परः" आभ्यां परस्यास्तिसकारस्य

यकारपरस्याच्परस्य च षः इति षत्वम्। व्यतिस्ते। व्यतिषाते। व्यतिषते। व्यतिसे। व्यतिषाथे। व्यतिध्वे। व्यतिस्वहे। व्यतिस्म इत्यतोऽन्यत्र 'उपसर्गप्रादुर्भ्याम्' इति षत्वं द्रष्टव्यम्। व्यतिसे इत्यत्र श्नसोरल्लोपे 'तासस्त्योः' सलोपे प्रत्ययसकारस्यानस्तिसकारत्वात् पदादित्वाच्च षत्वाभावः। व्यतिध्वे इत्यत्र पूर्ववदल्लोपे, 'धि च' इति सलोपः। एवं च सेध्वेशब्दयोः प्रत्ययमात्रमेवावशिष्यते। लोटि व्यत्यसै इत्यत्र नित्यत्वात् 'एत ऐ' इत्यैकारादेशे 'ह एति' इत्येवं निमित्ताभावान्न भवति। अस्ति क्षीरं यस्यास्सा अस्तिक्षीरा ब्राह्मणी। नास्ति बाधको येषां ते नास्तिबाधकाः—'सुबधिकारे अस्तिक्षीरादिवचनम्' इति बहुव्रीहिः। नास्तिबाधका इत्यत्र उत्तरपदपरत्वाभावात् 'नलोपो नञः' इति न भवति। उत्तरपदशब्दश्च समासचरमावयवे रूढः। परलोकोऽस्तीति मतिर्यस्य आस्तिकः, परलोको नास्तीति मतिर्यस्य नास्तिकः—'अस्ति नास्ति दिष्टं मतिः' इति मत्युपाधिकार्थेऽभ्योऽस्येति षष्ठ्यर्थे ठक्। वचनसामर्थ्यात्तिङन्ताद्वाक्याच्चायं प्रत्ययो भवति। निपातौ वास्तिनास्ती। अत एव अस्तिमान् इत्याद्यपि भवति॥ ५५॥

७१ मृजू[1] शुद्धौ। ऊदित्त्वमिड्विकल्पार्थम्। अस्यानुदात्तत्वमनार्षम्। उक्तं च 'सृजि मृजि विद्ध्यनिट्स्वरान्' इति कारिकायां वृत्तौ—'मृजेरूदित्त्वादिटो विकल्पेन भाव्यम्। अमागमश्च न दृश्यते। तदिहास्य पाठे प्रयोजनं चिन्त्यम्। केचित्त्वस्य स्थाने विजि पठन्ति' इति। मार्ष्टि। मृष्टः। मृजन्ति, मार्जन्ति। मार्क्षि। मार्ज्मि। मृज्वः—व्रश्चादिना षत्वे तवर्गस्य ष्टुत्वम्। सकारे तु 'षढोः कस्सि' इति कत्वे सकारस्य षत्वम्। क्ङितोऽन्यत्र 'मृजेर्वृद्धिः' इत्यचो वृद्धिः। अजादौ क्ङिति 'मृजेरजादौ सङ्क्रमे विभाषा वृद्धिः' इतीष्टया वा वृद्धिः। सङ्क्रमो नाम गुणवृद्धिप्रतिषेधविषयः। अत्र हरदत्तः—"अचीत्युच्यमानेऽपि 'यस्मिन् विधिस्तदादौ' इत्यजादाविति सिद्धे आदिग्रहणं मुख्याजादिपरिग्रहार्थम्। तेन व्यपदेशिवद्भावेनाजादौ यूयं ममृज, त्वया ममार्ज इत्यादौ न भवति" इति। आत्रेयस्तु—'अत्रापि भवति' इति। तस्यादिग्रहणं 'यस्मिन्विधिः' इति सिद्धस्यैवानुवाद इति मतम्। यदाह—'मृजेति भिदादिपाठादङ्। गणपाठादेव वृद्ध्यभावश्च' इति। तथा च 'इको गुणवृद्धी' इत्यत्र भाष्ये—"मृजेर्वृद्धिरचः; ततः 'अचि क्ङिति', अजादौ क्ङिति मृजेर्वृद्धिर्भवति; परिमृजन्ति, परिमार्जन्ति। किमर्थमिदम्? नियमार्थम्, अजादावेव क्ङिति नान्यत्र। क्व मा भूद्? मृष्टः, मृष्टवानिति। ततो 'वा' वाचि क्ङिति मृजेर्वृद्धिर्भवति" इति। ममार्ज। ममार्जतुः, ममृजतुः। ममार्जुः, ममृजुः। ममार्जिथ, ममार्ष्ठ। ममार्जिव, ममृजिव, ममृज्व—ऊदित्त्वादिड्विकल्पः। पूर्ववदजादौ वृद्धिविकल्पः। मार्जिता, मार्ष्टा। मार्जिष्यति, मार्क्ष्यति—अनुदात्तोपदेशत्वस्यानार्षत्वाद्

---

१. 'मृजूष्' इति क्षीरस्वामी।

समागमो नेत्युक्तम्। मार्ष्टु, मृष्टात्। मृष्टाम्। मृजन्तु। मृड्ढि। मार्जानि। मार्जाव। मार्जाम—'आडुत्तमस्य पिच्च' इति पित्वात्सङ्क्रमत्वाभावात् नित्या वृद्धिः। अमार्ट्, अमृष्टाम्। अमृजन्, अमार्जन्। अमार्ट्। अमार्जम्। अमृज्व—तिप्सिपोर्हल्ङ्यादिलोपे षत्वजश्त्वचर्त्वेषु च 'रात्सस्य' इति नियमात् न संयोगान्तलोपः। मृज्यात्। मृज्याताम्। मृज्याः। मृज्याम्—'मृजेर्वृद्धिर्गुणविषये' इति सा न भवति। आशिषि मृज्यात्। मृज्यास्ताम् इत्यादि। अमार्जीत्—'इट ईटि' इति सिचो लोपः। अमार्जिष्टाम्। अमार्जिषुः। अमार्जीः। अमार्जिषम्। अनिट्पक्षे—अमार्क्षीत्। अमार्ष्टाम्। अमार्क्षुः। अमार्क्षीः। अमार्क्षम्—झलादौ 'झलो झलि' इति सिज्लोपः। अन्यत्र प्रकृतेः पूर्ववत् षत्वकत्वयोः 'आदेशप्रत्यययोः' इति षत्वम्। एवं व्यतिमृष्टे, व्यतिमृजाते, व्यतिमृजते इत्यादावात्मनेपदेऽपि यथायोगं वृद्धिस्तदभावश्च ऊह्यः। मिमृक्षति, मिमार्जिषति। मरीमृज्यते। मरीमार्जीति, मरीमार्ष्टि। एवं रुग्रीकोरपि। मार्जयति। अमीमृजत्, अममार्जत्—'उर्ऋत्'। मार्जित्वा, मृष्ट्वा—इट्पक्षे 'न क्त्वा सेट्' इति कित्त्वनिषेधान्नित्यं वृद्धिः। मृष्टः। मृष्टवान्—'यस्य विभाषा' इतीण्निषेधः। सिक्तसम्मृष्टम्—राजदन्तादित्वात्पूर्वकालस्य परनिपातः। मृज्यः—'मृजेर्विभाषा' इति वा क्यप्। तदभावे ण्यति कुत्वे वृद्धौ च मार्ग्यः। तुन्दपरिमृजः—'तुन्दशोकयोः परिमृजापनुदोः' इत्यलसे कः। अन्यत्र तुन्दपरिमार्गः—कर्मण्यण्। मृजा—भिदादिपाठादङ् वृद्ध्यभावश्च। मार्ष्टिशब्दश्चुरादौ वक्ष्यते। अपामार्गः—'हलश्च' इति संज्ञायां घञि 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इत्युपसर्गस्य दीर्घः। कंसपरिमृड् इत्यादौ क्विबन्तस्य सुबपेक्षया मृजेर्वृद्धिर्न भवति, 'धातोस्स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इति। कंसपरिमृजमिच्छतीति विगृह्य "सुप आत्मनः क्यच्" इषिकर्मण एषितुरेवात्मसम्बन्धिनः सुबन्तादिच्छायां वा क्यजिति क्यचि सनाद्यन्तत्वेन धातोः कंसपरिमृज्यशब्दात्तृचि 'क्यस्य विभाषा' इत्यार्धधातुके परतः विधीयमाने क्यस्यादेर्लोपे 'अतो लोपः' इत्यल्लोपे कंसपरिमृजिता इत्यत्र मृजेर्वृद्धिर्न भवति, अल्लोपस्य स्थानिवत्त्वात्। 'क्यस्य विभाषा' इति समुदायलोपेऽपि 'न धातुलोपः' इति वृद्ध्यभावः। मार्जारः—'कञ्जिमृजिभ्यां चित्' इत्यारप्रत्ययः। मार्जालीयः सोमपात्रप्रक्षालनप्रदेशः—'स्थाचतिमृजेः' इत्यादिनालीयर्प्रत्ययः। अयं शौचालङ्कारयोर्युजादिः। 'मार्ज शब्दार्थे' इति चुरादौ ॥५६॥

७२. रुदिर् अश्रुविमोचने। रोदिति। रुदितः। रुदन्ति। रोदिषि। रुदिथः। रोदिमि। रुदिवः—'रुदादिभ्यस्सार्वधातुके' इति वलादाविट्। एतदादयः पञ्च रुदादयः। रुरोद। रुरुदतुः। रुरोदिथ। रुरुद, रुरोद। रुरुदिव। रोदिता। रोदिष्यति। रोदितु, रुदितात्। रुदिताम्। रुदन्तु। रुदिहि। रोदानि—हौ परत्वादिटि सकृद्गतपरिभाषया धिभावो न भवति। यद्वा—तत्र हल्ग्रहणानुवृत्तेरिटि कृते नैव धिभाव-

प्रसङ्गः । अरोदीत्, अरोदत् । अरुदिताम् । अरुदन् । अरोदीः, अरोदः । अरोदम् । अरुदिव–'रुदश्च पञ्चभ्यः', 'अड्गार्ग्यगालवयोः' इति हलादेः पितस्सार्वधातुकस्य अपृक्तस्य पर्यायेणेडडागमौ । रुद्यात् । रुद्याताम् । रुद्युः । रुद्याः । रुद्याम्—अत्र रुदादि प्रकृतिं प्रत्ययविशेषं चापेक्षमाणाभ्यामिडड्भ्यां लिङ्मात्रापेक्षत्वेनान्तरङ्गत्वात् पूर्वमेव यासुटि अपृक्तस्याभावान्न तौ । स्वामी तु 'ईडटौ पूर्वप्रतिषेधेन बाधित्वा यासुट्' इति । आशिषि रुद्यात् । रुद्यास्ताम् । अरुदत् । अरुदताम् । अरुदन् । अरुदः । अरुदम् । अरुदाव—'इरितो वा' इत्यङ् । तदभावे सिच्—अरोदीत् । अरोदिष्टाम् । इत्यादि । रुरुदिषति । रुदित्वा—'रुदविद' इति क्त्वासनोः कित्वम् । रोरुद्यते । रोरुदीति, रोरोत्ति । रोरुत्तः—'रुदादिभ्यस्सार्वधातुके' इतीडागमो गणनिर्देशान्न भवति । तथा लङि अरोरोत्, अरोरोः इति इडडागमावपि गणनिर्देशान्न भवतः । अरोरुदीत्, अरोरुदीः इति 'यङो वा' इति पाक्षिके ईटि द्रष्टव्यौ । 'रुदविद' इति कित्वं यङ्लुगन्तादपि भवतीति रोरुदिषति, रोरुदित्वा इति भवतः । रोदयति । अरूरुदत् । रोदसी—'असुन्' इत्यसुन्प्रत्ययः । पुष्पवदादिवत् नित्यं द्विवचनान्तः । रोदयतीति रुद्रः—'रोदेर्णिलुक्च' इति रकि णिलुक् । रुद्राणी—'इन्द्रवरुण' इति पुंयोगे ङीषानुकौ । शतं रुद्रा देवता अस्य शतरुद्रियम्, शतरुद्रीयम्—'शतरुद्राद्घश्च' इति घच्छौ । विधानसामर्थ्यादनयोः 'द्विगोर्लुक्' इति लुग्न भवति । यदि हि स्याद्, अण एवास्तु लुक् ॥ ५७ ॥

७३. विदादय उदात्ता उदात्तेतः ।

७४. ञिष्वप् शये ।

७५. उदात्तेदनुदात्तः । स्वपिति । स्वपितः । स्वपन्ति । स्वपिषि । स्वपिमि । स्वपिवः—'रुदादिभ्य' इतीट् । सुप्यते—भावे यकि 'वचस्वपि' इति संप्रसारणम् । सुषुप्यते—'सुविनिर्दुर्भ्यस्सुपिसूतिसमाः' इति कृतसम्प्रसारणस्य सुपेष्पत्वम् । एवं व्यादेरप्युदाहार्यम् । सुष्वाप । सुषुपतुः । सुषुपुः । सुष्वप्थ, सुष्वपिथ । सुषुपथुः । सुषुप । सुष्वाप, सुष्वप । सुषुपिव—किति 'वचिस्वपि' इति सम्प्रसारणे द्विर्वचनम् । अन्यत्र द्विर्वचने लिटि 'लिट्यभ्यासस्योभयेषाम्' इत्यभ्यासस्य सम्प्रसारणम् । अत्र ह्युभयेषां ग्रहणस्य प्रयोजनं हलादिशेषात्पूर्वं सम्प्रसारणमित्युक्तम् । सर्वत्र क्रादि-नियमादिट् । थलि भारद्वाजनियमाद्विकल्पः । अभ्यासात्परस्य आदेशसकारत्वात् षत्वम् । विसुष्वाप इत्यादावकिद्वचनेऽभ्यासस्य सम्प्रसारणे 'पूर्वत्रासिद्धम्' इति षत्वस्यासिद्धत्वात् पूर्वं हलादिशेषे पश्चात्सुपिरूपस्याभावात् 'सुविनिर्दुर्भ्यः' इति न षत्वम् । किति तु परत्वात्सम्प्रसारणे षत्वे च पश्चाद् द्विर्वचनमिति विषुषुपतुः इत्यादि भवति । न च द्विर्वचने षत्वस्यासिद्धत्वम्, 'पूर्वत्रासिद्धीयमद्विर्वचने' इति तन्निषेधात् । स्वप्ता । स्वप्स्यति । स्वपितु । स्वपिहि । स्वपानि । अस्वपीत्, अस्वपत् । अस्वपिताम् । अस्वपीः, अस्वपः । अस्वपम्, अस्वपिव—रुदादित्वात्

पूर्ववदिडटौ। स्वप्यात्। स्वप्याताम्। आशिषि सुप्यात्। सुप्यास्ताम्—'किदाशिषि' इति कित्वात्सम्प्रसारणम्। अस्वाप्सीत्। अस्वाप्ताम्। अस्वाप्सुः। अस्वाप्सीः। अस्वाप्सम्—'वदव्रज' इति वृद्धिः। सुषुप्सति—'रुदविद' इत्यादिना कित्त्वे सम्प्रसारणे द्विर्वचनम्। सोषुप्यते—'स्वपिस्यमिव्येञां यङि' इति प्रसारणे द्विर्वचनम्। विषुषुप्सति। विषोषुप्यते इत्यादौ लिटीव सम्प्रसारणषत्वयोः द्विर्वचने 'हलादिश्शेषः' इति 'सुविनिर्दुर्भ्यः' इति षत्वं भवति। सास्वपीति। सास्वप्तः इत्यादौ यङ्लुकि इडाद्यभावो रुदिवत्। 'स्वपिस्यमि' इति सम्प्रसारणं यङो लुका लुप्तत्वाद् न भवति। स्वापयति। असूषुपत्—अत्र 'स्वापेश्चङि' इति सम्प्रसारणे परपूर्वत्वे लघूपधगुणे णौ चङ्युपधाया ह्रस्वत्वे द्विर्वचने 'दीर्घो लघोः' इति दीर्घः। "स्वापशब्दाद् घञन्ताण्णौ चङ्यपि स्वापशब्दस्याविशिष्टत्वात् 'स्वापेः' इति सम्प्रसारणे असूषुपत् इति भवति" इत्यात्रेयः। णावल्लोपेन अग्लोपित्वात् 'दीर्घो लघोः' इति दीर्घो न भवति। सुष्वापयिष्यति—णौ सनि 'द्युतिस्वाप्योस्सम्प्रसारणम्' इत्यभ्यासस्य प्रसारणम्। 'स्तौतिण्योरेव' इत्युत्तरस्य षत्वम्। सुषुष्वापयिषति इत्यत्राकिल्लिड्वत् हलादिशेषेणाभ्यासस्य सुपिरूपत्वाभावात् 'सुविनिर्दुर्भ्यः' इति न षत्वम्। सुष्वापकीषति इत्यत्र स्वापेर्ण्वुल् स्वापकः, तमिच्छतीति 'सुप आत्मनः क्यच्' इति क्यचि 'क्यचि च' इतीत्वे स्वापकीयशब्दात्सनि द्विर्वचने स्वापेरभ्यासस्यापि 'द्युतिस्वाप्योः' इति प्रसारणं न भवति। तस्याभ्यासनिमित्तप्रत्ययेनानन्तर्यं एवेष्टत्वात्। स्वप्नक्, स्वप्नजौ—'स्वपितृषोर्नजिङ्' इति ताच्छीलिकः कर्तरि नजिङ्। सुप्तो देवदत्तः, सुप्तं देवदत्तस्य—'ञीतः क्तः' इति कर्तृभावयोर्वर्तमाने क्तः। 'क्तस्य च वर्तमाने' इत्यनभिहिते कर्तरि षष्ठी। यत्तु वृत्तौ—'मतिबुद्धि' इत्यत्र 'चकारस्यानुक्तसमुच्चयार्थत्वात् सुप्तः' इत्युक्तम्, तत् ताच्छीलिकेन नजिङा बाधो मा विज्ञायीति। स्वप्नः—'स्वपो नन्' इति भावे नन्। अनुदात्तोऽप्ययं रुदादिकार्यानुरोधादुदात्तमध्ये पठितः ॥ ५८ ॥

७६. श्वस प्राणने। इतः प्रभृति शास्यन्ता उदात्ता उदात्तेतः। श्वसिति। श्वसितः। श्वसन्ति। श्वसिषि। श्वसिमि—'रुदादिभ्य' इतीडागमः। शश्वास। शश्वसतः। शश्वसिथ। शश्वस, शश्वास। शश्वसिव। श्वसिता। श्वसिष्यति। श्वसितु। श्वसिहि। श्वसानि। अश्वसीत्, अश्वसत्। अश्वसिताम्। अश्वसीः, अश्वसः। अश्वसम्। अश्वसिव—'रुदश्च पञ्चभ्यः', 'अड्गार्ग्य' इतीडटावपृक्तस्य। श्वसेत्। श्वसेताम्। श्वसेयुः। श्वसेः। श्वसेयम्—अत्र गणकार्यस्यानित्यत्वज्ञापनात् शपो लुग् न भवति। अनित्यत्वं च क्षमूषो घटादिपाठात् 'घटादयष्षितः' इत्येव षित्वे सिद्धे पुनष्षित्करणात् ज्ञायते। एवं च 'न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्', 'न विश्वसेत्पूर्वविरोधितस्य'[1] 'आश्वसेयुर्निशाचराः' 'प्रत्ययादाश्वसन्त्यः'[2]

१. शार्ङ्ग० प० १३०१ श्लो०। २. पूर्वमेघ० ८ श्लो०।

इत्यादयः प्रयोगा उपपद्यन्ते। आश्वस्यात् इत्यादपि भवति। आशिषि—श्वस्यात् श्वस्यास्ताम् इत्यादि। अश्वसत्। अश्वसिष्टाम्। अश्वसीः। अश्वसिषम्—'ह्म्यन्तक्षण-श्वस' इति 'अतो हलादेः' इति वृद्धिनिषेधः। शिश्वसिषति। शाश्वस्यते। शाश्वसीति इत्यादि रुदिवत्। श्वासयति। अशिश्वसत्। श्वसनः—नन्द्यादित्वाल्ल्युः। श्वासः—'श्याद्व्यध' इत्यादिना णः कर्तरि। आश्वस्तः—'निष्ठायामिटं नेच्छन्ति काशकृत्स्नाः' इति स्वामिकाश्यपौ। 'आदितश्च' इत्यत्र वृत्तिकारश्च 'चकार-स्यानुक्तसमुच्चयार्थत्वाद् अनिट्त्वम्' इति। आत्रेयमैत्रेयौ तु आश्वसित इतीटं चाहतुः॥ ५९॥

७७. अन च। अनिति। अनितः। अनन्ति। अनिषि। अनिमि। प्राणिति—'अनितेः' इत्युपसर्गस्थान्निमित्तात्परस्य अनितेर्नकारस्य णत्वम्। अत्र केचित्—'अन्तः' इति वक्ष्यमाणमत्राप्यपकृष्य सम्बद्ध्य समीपवचनत्वं चाश्रित्य 'उपसर्गस्थ-निमित्तसमीपभूतस्य अनितिनकारस्य णत्वम्' इति सूत्रार्थं वर्णयन्तो 'येन नाव्यव-धानम्' इति न्यायेन प्राणितीत्यादावेव णत्वमिच्छन्ति, न तु पर्यनिति इत्यनेक-वर्णव्यवधाने। प्राण। प्राणतुः। प्राणिथ। प्राणिव। प्राणिता। प्राणिष्यति। प्राणितु, प्राणितात्। प्राणत्। प्राण्यात्। आशिषि—प्राण्यात्। प्राण्यास्ताम्। प्राणीत्। प्राणिष्टाम्। प्राणीः—इडीडडागमाः पूर्ववत्। प्राणिणिषति। प्राणयति। प्राणिणत्—'उभौ साभ्यासस्य' इत्युपसर्गस्थान्निमित्तात्परस्याभ्याससहितस्यानि-तेर्नकारयोर्णत्वमित्युभयत्र णत्वम्। एतच्च सूत्रं 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यना-श्रित्योक्तम्। आश्रिते हि परत्वाण्णत्वे पश्चाद् द्विर्वचनं स्यादिति किं सूत्रेण! प्राणः—'हलश्च' इति करणे घञ्। प्रा। प्राणौ। प्राणः। प्राणम्। प्राणौ। प्राम्याम्—कौ पदसंज्ञायां नलोपः। हे प्राण् इत्यत्र 'न ङिसम्बुद्ध्योः' इति नलोपे निषिद्धे तस्य 'पदान्तस्य' इति णत्वनिषेधं बाधित्वा 'अन्तः' इति णत्वम्। उपसर्गस्था-न्निमित्तात्परस्य अनितेरन्तो नकारो णकारमापद्यते इति सूत्रार्थः॥ ६०॥

७८. जक्ष भक्षहसनयोः। जक्षिति। जक्षितः। जक्षति। जक्षिषि। जक्षिमि—'जक्षित्यादयष्षट्', इतिरिदमर्थे, जक्षिरिदमादयश्चान्ये षड् धातवोऽभ्यस्ता इत्य-भ्यस्तत्वात् 'अदभ्यस्तात्' इति झेरद्भावः। जजक्ष। जजक्षिथ। जजक्षिव। जक्षिता। जक्षिष्यति। जक्षितु। जक्षिताम्। जक्षतु। जक्षिहि। जक्षाणि। अजक्षीत्। अजक्षत्। अजक्षिताम्। अजक्षुः—'सिजभ्यस्त' इति झेर्जुस्। जक्ष्यात्। जक्ष्या-स्ताम्। अत्रापि चान्द्राः शपो लुकमनिच्छन्तो जक्षेदित्याहुः। आशिषि—जक्ष्यात्। जक्ष्यास्ताम्। अजक्षीत्। अजक्षिष्टाम्। अजक्षीः। अजक्षिषम्—रुदिवदिडादयः। जिजक्षिषति। जाजक्ष्यते। जाजक्षीति, जाजष्टि—'स्कोः' इति कलोपः। जक्षयति। अजिजक्षत्। जक्षत्, जक्षतौ—'उगिदचाम्' इति नुम् 'नाभ्यस्ताच्छतुः' इति निषिध्यते। जक्षति कुलानि, जक्षन्ति कुलानि इत्यत्र जश्शसोः परयोः 'वा नपुंसकस्य'

इति नुम्। अत्रात्रेयः—'केचिद्रामायणे यक्षशब्दस्य भक्षणार्थत्वेन व्युत्पादनादन्तस्थादिमाहुः, तच्चिन्त्यम्' इत्युक्तवान्। रामायणोक्तिस्तु यक्ष पूजायामित्यस्यानेकार्थत्वाश्रयेण निर्वाह्या ॥ ६१ ॥

७८. रुदादयः पञ्च गताः।

७९. जागृ निद्राक्षये। जागर्ति। जागृतः। जाग्रति। जागर्षि। जागर्मि। जागृवः। जागराञ्चकार—'उषविदजागृभ्योऽन्यतरस्याम्' इति पक्षे आम्प्रत्ययः। आमभावे—जजागर। जजागरतुः। जजागरुः। जजागरिथ। जजागरथुः। जजागर। जजागार, जजागर। जजागरिव—'जाग्रोऽविचिण्णल्ङित्सु' इति विचिण्णल्ङिद्भ्योऽन्यस्मिन् वृद्धिविषये वृद्धिनिषेधविषये च गुणः। 'अविचिण्णल्ङित्सु' इत्यस्य पर्युदासत्वात् उत्तमे णलि णित्त्वाभावपक्षे 'सार्वधातुकार्धधातुकयोः' इति गुणो भवत्येव। प्रसज्यप्रतिषेधेऽपि 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति 'जाग्रः' इति प्राप्तस्य गुणस्यैवायं निषेध इत्यदोषः। एवं च लङ्यपि अजागरुः इति 'जुसि च' इति गुणो भवति। लडादीनां तसादेरपित्सार्वधातुकत्वेन ङित्त्वात् तत्र च पर्युदासात् 'जाग्रः' इति गुणो न भवति। जागरिता। जागरिष्यति। जागर्तु, जागरितात्। जागृताम्। जाग्रतु। जागृहि। जागराणि। अजागः। अजागृताम्। अजागरुः। अजागः। अजागरम्। अजागृव—तिप्सिपोर्गुणपरत्वयोः हल्ङ्यादिलोपः। जागृयात्। जागृयाताम्। जागृयुः। जागृयाः। जागृयाम्। जागृयाव। आशिषि—जागर्यात्। जागर्यास्ताम् इत्यादि। किंत्वाद् गुणः। अयं पूर्वविप्रतिषेधेन रिङं बाधते। एवं जागर्यते इत्यादौ यक्यपि रिङं बाधित्वा गुणो भवति। तथा च कातन्त्रसूत्राणि—'जागर्तेः कारिते[1]'। 'यणाशिषोर्ये[2]'। परोक्षायामगुणे[3]' इति। कारितो हेतुमिण्णच्, यणिति यगुच्यते, आशीरित्याशीर्लिङ्, अनयोर्यकारादौ परोक्षा लिट्। तत्रापिद्वचने गुण इत्यर्थः। अजागरीत्। अजागरिष्टाम्। अजागरिषुः। अजागरीः। अजागरिषम्—'ह्म्यन्तक्षण' इत्यादिना सिचि वृद्धेर्निषेधः। जिजागरिषति—'सनि ग्रहगुहोश्च' इतीण्णिषेधस्तत्र 'एकाचः' इत्यनुवर्तनादिह न भवति। जागरयति—अत्र गुणे कृते 'अत उपधायाः' इति वृद्धिः 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' इति न भवति। यद्वा गुणविधानसामर्थ्यादेव न भविष्यति। एवं चिण्णलोः प्रतिषेधोऽर्थवान्। अन्यथा अजागारि, जजागार इत्यत्र गुणे कृते पुनर्वृद्धिर्भविष्यतीति किं गुणनिषेधेन! णौ चङि अजजागरत्—'सन्वल्लघुनि' इतीत्वं येननाव्यवधानन्यायेन एकवर्णेन व्यवधान एव भवति, न पुनरनेकेनेति इह न भवति। यत्तु 'अत्स्मृदृत्वर' इतीत्वापवादेनात्ववचनेनानेकव्यवधानेऽपीत्वं भवतीति ज्ञापनं तत् 'तुल्यजातीयस्य ज्ञापनम्' इति नीत्या संयुक्तविषयमेवेति अचिक्षणत्

१. का० सू० ३।६।१२। २. का० सू० ३।६।१३। ३. का० सू० ३।६।१४।

इत्यादावेव प्रवर्तते। यत्तु कातन्त्रे मतान्तरणोक्तम्---'इत्वदीर्घयोः अजीजागरत् इति भवति' इति, तदप्येवं प्रत्युक्तम्। वृत्तिकारात्रेयवर्धमानादिभिरप्येतद् दूषितम्। जागरूकः—'जागरूकः' इत्यूकप्रत्ययः। आत्रेयस्तु 'जागरूकः' इति सूत्रं पठित्वा निपातमाह। जागरितः। जागरितवान्। जागरित्वा—'श्र्युकः किति' इत्यत्र 'एकाचः' इत्यनुवृत्तेरिण्णिषेधो न भवति। जागरः--घञ्। जागर्या, जागरा—'जागर्तेरकारो वा' इति भावे पक्षे शप्रत्यये यकि गुणः। अन्यथा त्वकारे गुणः। जागृविः--'जॄशॄस्तॄजागृभ्यः क्विन्' इति क्विन्प्रत्ययः। 'जाग्रः' इति गुणः अवीति पर्युदासान्न भवति। 'जाग्रोऽवि' इत्यत्र वृत्तौ—"केचिदिकारमुच्चारणार्थं वर्णयन्ति, तेन क्वसावपि वकारादौ गुणो न भवति—'जागृवाँ सो अनुग्मन्'" इत्युक्तम्। आत्रेयस्तु 'तथा च सति शसि जजागरुष इति स्यात्' इति वृत्त्युक्तमिदं मतं दूषयित्वा "'असंयोगाल्लिट् कित्' इति क्वसोः कित्त्वे सिद्धे पुनस्तत्करणात् प्रतिषेधविषयारब्धस्यापि गुणस्य निषेध इति जजाग्रुष इति भवितव्यम्" इत्याह। कैयटेऽपि क्वसौ भाषाविषयत्ववादिनां कित्त्वसामर्थ्यादगुणत्वमुक्तम्। अत्र वर्धमानः—'क्वसावगुणत्वमेवाहुः जजागृवानिति' इत्याह। 'जाग्रोऽवि' इतीकारस्योच्चारणार्थत्वेऽपि क्वौ वकारलोपे वर्णाश्रये प्रत्ययलक्षणनिषेधात् वकारादेरभावादवीति पर्युदासाभावात् 'जाग्रः' इति गुणे जागरिति भवतीत्येके। अन्ये तु—'वर्णस्य प्राधान्याश्रयणेऽयं प्रत्ययलक्षणाभावो न तु गुणाभाव इति; यथा अतृणेट् इत्यत्र हलादौ पिति सार्वधातुके विधीयमानेमागमः प्रत्ययलक्षणेन भवति, तथाऽत्राप्यवीति पर्युदासेन भवितव्यमिति अगुणत्वे तुकि जागृदिति भवति' इत्याहुः॥ ६२॥

८०. दरिद्रा दुर्गतौ। दरिद्राति। दरिद्रितः। दरिद्रति। दरिद्रासि। दरिद्रिथ। दरिद्रामि। दरिद्रिवः—'इद्दरिद्रस्य' इति हलादौ क्ङिति सार्वधातुके इत्वम्। अजादौ तु 'श्नाभ्यस्तयोरातः' इत्याल्लोपः। दरिद्राञ्चकार--'कास्यनेकाच इति वक्तव्यं चुलुम्पाद्यर्थम्' इत्याम्प्रत्ययः। अत्र काश्यपः--'आमो विकल्पमुक्त्वा 'ददरिद्रौ, ददरिद्रवान्' इत्युदाजहार। एवं तरङ्गिणीकारोऽपि। अत्र मूलं पारायणिकेनोक्तम्--'आत औ णलः' इत्यत्र प्रथमातिक्रमे कारणाभावादोकारवचनेनापि पपावित्यादिसिद्धौ औकारवचनं 'दरिद्रातेरार्धधातुके लोपो वक्तव्यः' इत्याल्लोपे ददरिद्रावित्याद्यर्थमेवार्थवत्' इति। 'वस्वेकाच्' इत्यत्र वृत्तिकारेण "दरिद्रातेस्तु 'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' इत्यामा भवितव्यं दरिद्राञ्चकार इति। अथाप्याम्न क्रियते, तथापि 'दरिद्रातेरार्धधातुके लोपस्सिद्धश्च प्रत्ययविधौ' इति प्रागेव प्रत्ययोत्पत्तेराकारलोपे कृते इडागमस्य निमित्तं विहितमिति नेडागमो भवति, ददरिद्रवान् इति भवितव्यम्" इत्यभ्युपगम्यवादेनामभाव उक्तः।

अभ्युपगमस्य मूलम् 'आत औ णलः' इत्यौकारवचनमाह हरदत्तः। आत्रेयस्तु—'आम्नित्यः' इत्युक्त्वा 'वृत्तिकारोक्तमभ्युपगम्यवादः' इत्याह। दरिद्रिता। दरिद्रिष्यति। दरिद्रातु, दरिद्रितात्। दरिद्रिताम्। दरिद्रिहि। दरिद्राणि। अदरिद्रात्। अदरिद्रिताम्। अदरिद्रुः—'सिजभ्यस्त' इति जुसि 'श्नाभ्यास्तयोरातः' इत्याकारलोपः। 'लङश्शाकटायनस्यैव' इति जुस्विकल्पो झावस्थायामेव। 'ई हल्यघोः' इतीत्वं च यथा न भवति तथा जहातौ वक्ष्यते। अदरिद्राः। अदरिद्राम्। दरिद्रियात्। दरिद्रियाताम्। आशिषि—दरिद्र्यात्। दरिद्र्यास्ताम्—आर्धधातुकत्वादातो लोपः। अदरिद्रीत्। अदरिद्रिष्टाम्। अदरिद्रिषुः। अदरिद्रीः। अदरिद्रिषम्। 'अद्यतन्यां वा' इति 'दरिद्रातेरार्धधातुके' इत्याल्लोपस्य विकल्पनात्तदभावे सगिटोः अदरिद्रासीत् इत्यादि। चिणि अदरिद्रि। आलोपाभावे युकि अदरिद्रायि। दिदरिद्रासति, दिदरिद्रिषति—'तनिपतिदरिद्राणाम्' इति इड्विकल्पः। इडभावे—

न दरिद्रायके लोपो दरिद्राणे च नेष्यते। दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा॥

इत्युक्तत्वादाल्लोपाभावः। दरिद्रायकः—ण्वुल्। दरिद्राणः—ल्युट्। निष्ठायां दरिद्रितः इति। 'यस्य विभाषा' इतीण्णिषेधस्तु कृतिप्रभृतीनामीदित्त्वेन तस्यानित्यत्वज्ञापनान्न भवति। दरिद्रातीति दरिद्रः—पचाद्यच्। 'श्याद्व्यध' इत्याकारान्तलक्षणस्तु णो न भवति, 'दरिद्रातेरार्धधातुके' इत्यस्य विषयसप्तमीत्वात् प्रागेव प्रत्ययोत्पत्तेराल्लोपात्। दद्रूः—'दरिद्रातेर्यालोपश्च' इतीकाराकारयोर्लोपः, ऊकारप्रत्ययश्च। 'या' इति इकाराकारयोर्निर्देशः। दद्रुणः—पामादिषु 'दद्र्वां ह्रस्वत्वं च' इति पाठान्नप्रत्ययो ह्रस्वत्वं च॥ ६३॥

८१. चकासृ दीप्तौ। चकास्ति। चकास्तः। चकासति। चकास्सि। चकास्मि। चकास्वः। चकासाञ्चकार—'कास्यनेकाच' इत्याम्। चकासिता। चकासिष्यति। चकास्तु। चकास्ताम्। चकासतु। चकाधि—'धि च' इति सलोपः। केचित्तु 'धि च' इति सिचो लोपमिच्छन्तः चकाद्धि इति सकारस्य दत्वमुदाहरन्ति, तत् 'यथा तु भाष्यम् तथा चकाधीत्येव भवितव्यम्' इति वदता वृत्तिकारेणैव प्रत्युक्तम्। अचकात्—'तिप्यनस्तेः' इति सकारस्य दत्वम्। अचकास्ताम्। अचकासुः—'सिजभ्यस्त' इति जुस्। अचकात्, अचकाः—'सिपि धातो रुर्वा' इति रुत्वदत्वे। अचकासम्। चकास्यात्। चकास्याताम्। आशिषि—चकास्यात्। चकास्यास्ताम्। अचकासीत्। अचकासिष्टाम्। अचकासीः। चिचकासिषति। चकासयति। अचीचकासत्—ऋदित्त्वात् 'णौ चङि' इति न ह्रस्वः॥ ६४॥

८२. शासु अनुशिष्टौ। अनुशिष्टिर्विविच्य ज्ञापनम्। अयं द्विकर्मकः—माणवकं धर्मं शास्ति इति। कर्मणि लादिकार्यं सर्वं ब्रवीतिवन्नेयम्। शास्ति। शिष्टः। शासति। शास्सि। शिष्ठः। शिष्ठ। शास्मि। शिष्वः। शिष्मः—'शास इदङ्हलोः' इत्यङि

हलादौ क्ङिति चेत्त्वम् । 'शासिवसि' इतीणः परत्वे षत्वे ष्टुत्वं तवर्गस्य । शशास । शशासतुः । शशासिथ । शशास । शशासिव । शासिता । शासिष्यति । शास्तु, शिष्टात् । शिष्टाम् । शासतु । शाधि । शिष्टाम् । शिष्ट । शासानि । शासाव— हौ 'शा हौ' इति शाभावे, तस्य च 'असिद्धवदत्र' इत्यसिद्धत्वात् 'हुझल्भ्यो हेर्धिः' इति धित्वम् । अशात् । अशिष्टाम् । अशासुः । अशाः, अशात् । अशिष्टम् । अशासम् । अशिष्व—तिप्सिपोः पूर्ववत् दत्वरुत्वे । शिष्यात् । शिष्यातास् । आशिषि—शिष्यात् । शिष्यास्ताम् । अशिषत् । अशिषताम् । अशिषन् । अशिषः । अशिषम् । अशिषाव—'सर्तिशास्ति' इत्यङ् । अत्र 'चकारेण परस्मैपदानुकर्षणमुत्तरार्थम् । अयं तु योगविभागसामर्थ्यादात्मनेपदेऽपि भवति' इति वृत्तितद्व्याख्यानेष्वभिधानाद् व्यत्यशिषत, व्यत्यशिषाताम् इत्यङेव भवति । कर्मणि तशब्दपरत्वात् 'चिण्भावकर्मणोः' इति चिण् भवति अशासि इति । शिशासिषति । शेशिष्यते—परत्वाद् द्वित्वे कृते द्विर्वचनम् । शाशासीति, शाशास्ति । शाशिष्टः—प्रकृतिग्रहणन्यायेन 'शासः' इत्वम् । 'सर्तिशास्ति' इति तिपा निर्देशात् अशाशासीत् इत्यत्राङ् न भवति । शासयति । अशशासत्—'नाग्लोपि शासु' इत्युपधाह्रस्वनिषेधः । शिष्यः—'एतिस्तुशासु' इति क्यप् । शास्यस्तु शसु हिंसायामिति भौवादिकस्य 'हन्त्यर्थाश्च' इति चुरादिपाठात्स्वार्थे णिचि' इत्युक्तमात्रेयेण । शास्तेर्हेतुमण्णावपि शक्यते व्युत्पादयितुम् । दुश्शासनः—'भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वक्तव्यः' इति खलर्थे युच् । आशीः—'क्विपो लोपे प्रत्ययलक्षणेन हलादिकित्परत्वादित्त्वे पदत्वेन सकारस्य रुत्वे 'र्वोरुपधायाः' इति दीर्घः । न चास्ति 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति; यत्र वर्णस्य प्राधान्येनाश्रयणं तत्र तदित्युक्तत्वात् । शिष्ट्वा, शासित्वा—'उदितो वा' इतीड्विकल्पः । शिष्टः—'यस्य विभाषा' इत्यनिट्त्वम् । शिष्टिः—'तितुत्र' इतीण्णिषेधः । शास्तिशब्दस्तु अस्माद्वा हिंसार्थाद्वा णिचि क्तिनि व्युत्पाद्यः । बाहुलकाद् युचा न बाधः । तथा च 'अचः परस्मिन्' इत्यत्र भाष्यम्—'पाचयतेः पाक्तिः, याजयतेर्याष्टिः' इति । 'औणादिकः' इति मैत्रेयः । 'हिंसार्थस्य औणादिकः' इत्यात्रेयः । शास्ता—बुद्धः । प्रशास्ता—ऋत्विग्विशेषः—'तृन्तृचौ शंसिक्षदादिभ्यस्संज्ञायां चानिटौ' इति तृच्यनिट्त्वम् । 'अप्तृन्' इत्यादिना सर्वनामस्थानेऽसम्बुद्धौ प्रशास्तृशब्दस्य उपधाया दीर्घः । अत्र 'प्रोपसर्गस्यातन्त्रत्वात् शास्तुरप्ययं दीर्घो भवति' इत्यात्रेयः । प्रशास्तुर्भावकर्मणी प्राशास्त्रम्—उद्गात्रादित्वादञ् ॥ ६५ ॥

८३. श्वसादयः उदात्ता उदात्तेतः ।

८४. दीधीङ् दीप्तिदेवनयोः । दीधीते । दीध्याते । दीध्यते । दीधीषे । दीधीध्वे । दीध्ये । दीधीवहे—अजादौ 'एनरेकाचः' इति यण् । 'यीवर्णयोर्दीधीवेव्योः' इति यकारादाविकारादौ च विधीयमान ईकारलोप इटि न भवति । नित्यत्वेन टेरेत्वे

इवर्णाभावात्। दीध्याञ्चक्रे—'दीधीवेवीटाम्' इति गुणे निषिद्धे यणादेशः। दीधिता। दीधिष्यते—इटि 'यीवर्णयोः' इतीकारलोपः। दीधीताम्। दीधीष्व। दीध्यै। दीध्यावहै—आटि वाऽगुणत्वम्। अदीधीत। अदीध्याताम्। अदीधीथाः। अदीधि—'यीवर्णयोः' इति लोपः। दीधीत, दीधीयाताम्—लिङस्सलोपे 'यीवर्णयोः' इति लोपः। आशिषि—दीधीषीष्ट। अदीधिष्ट। अदीधिष्ठाः। अदीधिषि। दिदीधिषते। दीधयति—'दीधीवेव्योः' इति वृद्धिनिषेधे, 'यीवर्णयोः' इति लोपे शपि णेर्गुणायौ। दीधितिः—संज्ञायां क्तिनि 'तितुत्र' इतीण्णिषेधो न भवति; 'अग्रहादीनाम्' इति तत्रोक्तत्वात्॥ ६६॥

८५. वेवीङ् वेतिना तुल्ये। 'वी गति' इत्यनेन तुल्येऽर्थे वर्तते इत्यर्थः। पूर्ववदुदाहरणादीनि। 'सेटावात्मनेभाषौ इमौ छान्दसौ' इति भाष्यवार्त्तिकयोः स्थितम्। दृष्टानुविधिश्छन्दसि। अस्माभिस्तु कालापमतानुसारेण उदाहरणप्रदर्शनं कृतम्॥ ६७॥

८६ जक्षित्यादयो गताः[1]।

८७. षस षस्ति स्वप्ने। अयं पाठो मैत्रेयात्रेयादीनाम्। अत्र केचित्—'षस्तीति न पृथग्धातुः, किन्तु षसेरेव श्तिपा निर्देशोऽर्थभेदात्पुनः कृतः' इति। स्वामी तु 'षस षसने' इत्याद्यमेव पपाठ। षसनं च स्वप्नः। सस्ति। सस्तः। ससन्ति। सस्सि। सस्मि। ससास। सेसतुः। सेसुः। सेसिथ। सेस। ससास, ससस। सेसिव—एत्वाभ्यासलोपौ। ससिता। ससिष्यति। सस्तु। सधि—'धि च' इति सलोपः। 'अतो हेः' इति स्थानिवद्भावेन हेर्लोपो न भवति; सलोपस्य पूर्वत्रासिद्धत्वात्। ससानि। असत्। असस्ताम्। असः, असत्। 'तिप्यनस्तेः' इति दत्वम्। सिपि तु 'सिपि धातोरुर्वा' इति रुत्वं च। हल्ङ्यादिलोप उभयत्र। सस्यात्। सस्याताम्। आशिषि सलोपाभावो विशेषः। असासीत्, अससीत्—'अतो हलादेः' इति वा वृद्धिः। सिससिषति। सासस्यते। सासस्ति। सासयति। असीषसत्। सस्यम्—'माच्छाससिसूभ्यो यः' इति यः। सस्यको मणिः—'सस्येन परिजातः' इति कन्। 'अत्र सस्यशब्दो गुणवाची' इति हरदत्तः। गुणैः परिगतो जात आकारशुद्ध इत्यर्थः। सास्ना गवां कण्ठकम्बलः—'रास्नासास्नास्थूणावीणा' इति निपात्यते। संस्ति। संस्तः। संस्तन्ति—"'स्कोः' इति सलोपोऽत्र न भवति, बहूनां समवाये द्वयोस्संयोगसंज्ञाभावात्" इति आत्रेयमैत्रेयौ। छान्दसत्वान्नेहास्माभिरयमर्थः प्रपञ्च्यते। तथा च 'जक्षित्यादयष्षट्' इत्यत्र हरदत्तः—'षसषस्ती छान्दसौ; वशिरपि। तस्यापि भाषायां न प्रयोगस्साधुः, भाष्यवार्त्तिककारौ चेत्प्रमाणम्' इति। तथा च भाष्यमपि 'षसिवशी छान्दसौ' इति। अत्र कैयटः—"षसिवशी' इति, 'षस षस्ति

१. मैत्रेयस्तु अत्र 'इत्यात्मनेभाषौ। वृत्' इति सूत्रद्वयं पठति।

स्वप्ने' इति ये न पठन्ति केवलं 'षस स्वप्ने' 'वश कान्तौ' इति, तन्मतेनैतदुक्तम्। अन्ये त्वाहुः—'षस्तीति धातुपाठ इव श्तिपा निर्देशः कृतः। अर्थभेदात्तु द्विः पठितः। अन्ये तु षस स्वप्न इति न पठन्ति'' इति। अत्र सुधाकरः—''षस षसने' 'वश कान्तौ' छान्दसौ 'जक्षित्यादयष्षट्' इत्यत्र भाष्यादेवावधृतौ। 'वष्टि भागुरिरल्लोपम्' इति दुर्लभः प्रयोगः'' इति॥ ६८-६९॥

८८. वश कान्तौ। वष्टि। उष्टः। उशन्ति। वक्षि। उष्ठः। उष्ठ। वश्मि। उश्वः—व्रश्चादिना झलि पदान्ते च षत्वम्। ग्रहिज्यादिना क्ङितोः प्रसारणम्। उवाश। ऊशतुः। उवशिथ। उवशिव—क्ङिति ग्रहिज्यादिना कृते प्रसारणे द्विर्वचनम्। अन्यत्र तु कृते द्विर्वचने 'लिट्यभ्यासस्य' इति प्रसारणम्। वशिता। वशिष्यति। वष्टु, उष्टात्। उष्टाम्। उड्ढि। वशानि—हेर्धित्वष्टुत्वजश्त्वानि। अवट्। औष्टाम्। औशन्। अवट्। औष्टम्। औष्ट। अवशम्। औश्व— क्ङिति प्रसारणे अडागमः। अन्यत्र तु हल्ङ्याब्भ्यादिना तिस्योर्लोपः। उश्यात्। उश्याताम्। आशिषि—उश्यास्ताम्। अवशीत्, अवाशीत्—'अतो हलादेः' इति वा वृद्धिः। विवशिषति। वावश्यते—'न वशः' इति यङि प्रसारणनिषेधः। वावष्टि। वावष्टः—इत्यादौ श्तिपानिर्देशात् ग्रहिज्यादिना प्रसारणं न भवति। वाशयति। अवीवशत्। वशित्वा—'न क्त्वा सेट्' इत्यकित्त्वम्। वशा करिण्यादिः—पचाद्यचि टाप्। गोवशा—'पोटायुवति' इत्यादिना समासः। वन्ध्या गौरित्यर्थः। वशः—'वशिरण्योरुपसङ्ख्यानम्' इति भावेऽप्। वशं गतो वश्यः—'वशं गतः' इति द्वितीयान्तात् 'गतः' इत्यर्थे यत्। उशिक्—अग्न्यादिः—'वशः किच्च' इतीजिप्रत्ययः। कित्त्वात्प्रसारणम्। उशिगेव औशिजः—प्रज्ञादिः। उशीरम्—'वशेः कित्' इतीरन्नौणादिकः। उशना—'वशेः कनसिः' इति कनसिः 'ऋदुशनस्पुरुदंशोऽनेहसां च' इत्यसम्बुद्धौ सावनङादेशः। सम्बुद्धावपि पक्षे अनङिष्यते, 'न ङिसम्बुद्ध्योः' इति नलोपनिषेधस्य पाक्षिकत्वं च, तेन त्रीणि रूपाणि भवन्ति—उशनः, उशनन्, उशन इति। तथा च श्लोकवार्त्तिकम्—

'सम्बोधने तूशनसः त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्' ॥ ७०॥

८९. षसादय उदात्ता उदात्तेतः।

९०. चर्करीतं च। यङ्लुगन्तमप्यादादिकं परस्मैपदि चेत्यर्थः। तत्रोदाहरणेषु तथैवोदाहृतम्।

९१. ह्नुङ् अपनयने। देवदत्ताय निह्नुते। निह्नुवाते। निह्नुवते। निह्नुषे। निह्नुवे—अजादावुवङ्। 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' इति ज्ञीप्स्यमानस्य सम्प्रदानत्वम्। निजुह्नुवे, निजुह्नुवाते। निजुह्नुविषे। निजुह्नुविध्वे। निजुह्नुविढ्वे—उवङि 'विभाषेटः' इति मूर्धन्यविकल्पः। निह्नोता। निह्नोष्यते। निह्नुताम्।

निह्नुध्व । निह्नवै—आटि गुणः । न्यह्नुत । न्यह्नुताम् । न्यह्नुथाः । न्यह्नुढि । न्यह्नुधहि । निह्नुवीत, निह्नुवीयाताम् । आशिषि निह्नोषीष्ट—आर्धधातुकत्वेनाङित्वाद्गुणः । न्यह्नोष्ट । न्यह्नोष्ठाः । न्यह्नोध्वम् । न्यह्नोषि । निजुह्नूषते – 'इको झल्' इति कित्त्वे 'अज्झनगमां सनि' इति दीर्घः । निजोह्नूयते । निजोह्नवीति, निजोह्नोति । निह्नावयति । न्यजुह्नवत् ॥ ७१ ॥

९२. अनुदात्त आत्मनेभाषः[1] ।

इति श्रीपूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसङ्गमहाराजमहामन्त्रिणा मायणसुतेन माधवसहोदरेण श्रीसायणार्येण विरचितायां माधवीयायां धातुवृत्तौ अदादयः सम्पूर्णाः ॥



1. मैत्रेयस्तु 'ष्णुङ्' इति सूत्रमपि पठति ।

# ३. जुहोत्यादिगणः

१. हु दानादनयोः । दानादानयोरित्यन्ये । आत्रेयस्तु 'हु दाने' इति पठित्वा, 'आदानेऽप्येके' इति । एतदादयो ह्रीपर्यन्ता अनुदात्ताः परस्मैपदिनः । इह दानं चोदित आधारे त्यक्तहविःप्रक्षेप इति हविषोऽपि जीवत्यादौ प्राणादिवद्धात्वर्थेऽन्तर्भावात् अकर्मकत्वमेके मन्यन्ते । वयं तु 'धात्वर्थः प्रक्षेपमात्रम्, स च स्वभावाच्चोदिताधारहविषि नियमेनापेक्षते' इति । तथा च 'तृतीया च होश्छन्दसि' इत्यत्र भाष्ये 'जुहोतिः प्रक्षेपे वर्तते' इत्युक्तम् । एवं च यवागूं जुहोतीत्यादयस्सकर्मकाः प्रयोगा उपपद्यन्ते । उक्तं चात्रैव भाष्ये 'कथं द्वितीया सिद्धा, कर्मणीत्येव' इति । एवं च 'तृतीया च होश्छन्दसि' इति कर्मणि तृतीयाविधानमप्युपपद्यते । जुहोति । जुहुतः । जुह्वति । जुहोषि । जुहोमि—'जुहोत्यादिभ्यश्श्लुः' इति शपः श्लौ, 'श्लौ' इति धातोर्द्विर्वचने 'कुहोश्चुः' इत्यभ्यासस्य चुत्वं झकारः । तस्य 'अभ्यासे चर्चे' इति जश्त्वं जकारः । पिति गुणः । 'उभे अभ्यस्तम्' इत्यभ्यस्तत्वात् 'अदभ्यस्तात्' इति झस्याद्भावे 'हुश्नुवोस्सार्वधातुके' इत्यजादौ क्ङिति सार्वधातुके विधीयमानो यण् भवति । जुहाव । जुहुवतुः । जुहविथ, जुहोथ । जुहुवथुः । जुहुव । जुहाव, जुहव । जुहुविव—क्रादिनियमादिट् । थलि भारद्वाजनियमाद्विकल्पः । अजादौ क्ङित्युवङ् । अन्यत्र गुणवृद्धी । जुहवाञ्चकार—'भीह्रीभृहुवां श्लुवच्च' इति पक्षे आम्प्रत्ययः, श्लुवद्भावाद् द्विर्वचनं च । होता । होष्यति । जुहोतु । जुहुताम् । जुह्वतु । जुहुधि—'हुझल्भ्यो हेर्धिः' इति धित्वम् । जुहवानि—आटि पित्त्वाद्गुणः । अजुहोत् । अजुहुताम् । अजुहवुः—'हुश्नुवोः' इति यणं परत्वाद्बाधित्वा 'जुसि च' इति गुणः । अजुहोः । अजुहुतम् । अजुहवम् । जुहुयात् । जुहुयाताम् । जुहुयुः । आशिषि—हूयात् । हूयास्ताम्—'अकृत्सार्वधातुकयोः' इति दीर्घः । अहौषीत् । अहौष्टाम् । अहौषुः । अहौषीः । अहौष्टम् । अहौषम् । अहौष्व—सिचि वृद्धिः । जुहूषति—'इको झल्' इति कित्त्वात् 'अज्झनगमाम्' इति दीर्घः । जोहूयते । जोहोति—अत्र विस्तरे 'हुश्नुवोः' इति सूत्रं 'जुहोतेस्सार्वधातुके' इति पठित्वा 'श्तिपा निर्देशात् जोहुवति इत्यत्र यण् न' इत्युक्तम्; तन्मुनित्रयेणानादृतम् । हावयति । अजूहवत् । जुह्वत् ब्राह्मणः—'नाभ्यस्ताच्छतुः' इति नुम्निषेधः । जुह्वति ब्राह्मणकुलानि, जुह्वन्ति वा ब्राह्मणकुलानीत्यत्र 'वा नपुंसकस्य' इति जश्शसोर्नुम्विकल्पः । जौह्वतः कृष्णमृगः—'जुह्वत्कृष्णमृगः' इति प्रज्ञादिपाठादण् । होता । होतारौ—'तृन्विधावृत्विक्षु चानुपसर्गस्य' इति तृन्, औणादिको वा । 'अप्तृन्' इत्यादिना सर्वनामस्थाने दीर्घः । होतुर्भावकर्मणी हौत्रम्—उद्गात्रादित्वात्

यवादित्वाच्च अञणौ। क्षीरहोता—याजकादित्वात्समासः। हाव्यम्-'ओरावश्यके' इति ण्यत्। जुहूः—'जुहोतेर्दीर्घश्च' इति क्विपि दीर्घो द्वित्वं च। जुह्वौ इत्यादौ 'ओः सुपि' इति यण्। होमः—'अर्तिस्तु' इत्यादिना मन्। होत्रम्—ष्ट्रन्। हविः—'अर्तिशुचि' इत्यादिना इसिः। हविषि हितं हविष्यम्—'उगवादिभ्यः' इति यत्। होत्रा, ऋत्विजां वाचकः—'हुयामा' इति त्रन्। 'स्वभावतोऽयं ऋत्विक्ष्वपि स्त्रीलिङ्गः' इति 'होत्राभ्यश्च' इत्यत्र हरदत्तः। 'अयं प्रीणनार्थोऽपि' इति भाष्ये। तथा च 'अग्निषु हूयमानेषु' इति प्रयोगो दृश्यते। तर्प्यमाणेष्विति ह्यत्रार्थः॥ १॥

२. ञि भी भये। चोराद्बिभेति। बिभितः, बिभीतः। बिभ्यति। बिभेषि। बिभीथः, बिभिथः। बिभीथ, बिभिथ। बिभेमि। बिभीवः, बिभिवः—'भीत्रार्थानां भयहेतुः' इति भयहेतोः कारकस्य अपादानत्वम्। 'भियोऽन्यतरस्याम्' इति हलादौ क्ङिति सार्वधातुके वा इकारः। व्यतिबिभीत इत्यादावात्मनेपदेऽप्ययमित्वविकल्प उदाहार्यः। व्यतिबिभ्यते इत्यत्र 'आत्मनेपदेष्वनतः' इत्यद्भावे 'परिहृत्यापवादविषयमुत्सर्गोऽभिनिविशते' इति न्यायेन द्विर्वचनोत्तरकालमनेकाच्त्वात् 'एरनेकाचः' इत्यपवादस्य यणो भावित्वात् पूर्वमियङ् न प्रवर्तते। यद्वा-अन्तरङ्गत्वात् 'श्लौ' इति द्विर्वचने पश्चादद्भाव इति नैव इयङः प्रसङ्गः। बिभाय। बिभ्यतुः। बिभयिथ, बिभेथ। बिभ्यिव-क्रादिनियमादिट्। थलि भारद्वाजनियमाद्विकल्पः। बिभयाञ्चकार-'भीह्री' इत्यादिना पक्षे आम्प्रत्ययः श्लुवद्भावश्च। भेता। भेष्यति। बिभेतु, बिभीतात्। बिभीताम्। बिभ्यतु। बिभीहि, बिभिहि, बिभितात्। बिभीतम्। बिभयानि। हेरपित्त्वात् ङित्त्वात् पक्षे इत्वम्। एवं तातङ्यन्येषु ङित्सु चोक्तम्। उत्तमे आटि गुणायां। अबिभेत्। अबिभीताम्। अबिभयुः—यणं बाधित्वा परत्वात् जुसि गुणः। अबिभेः। अबिभीतम्, अबिभितम्। अबिभयम्। अबिभीव, अबिभिव। बिभीयात्। बिभीयाताम्, बिभियाताम्। बिभीयाः। बिभीयाम्-पिद्वचनेष्वपि यासुटो ङित्त्वादित्वे बिभियात् इत्याद्युदाहर्यम्। आशिषि—भीयात्। भीयास्ताम् इत्यादि। आर्धधातुकत्वान्नात्रेत्वपक्षः। अभैषीत्। अभैष्टाम्। अभैषीः। अभैषम्—सिचि वृद्धिः। बिभीषति—'इको झल्' इति सनः कित्त्वात् न गुणः। बेभीयते। बेभेति। बेभीतः, बेभितः—प्रकृतिग्रहणन्यायेन 'भियोऽन्यतरस्याम्' इति वेत्वम्। भापयते, अबीभपत। भीषयते, अबीभषत, अबीभपत मुण्डः—'बिभेतेर्हेतुभये' इति णावात्वे पुक्। अन्यदा 'भियो हेतुभये षुक्'। अत्र हि ई इतीकारप्रश्लेषणेन ईकारान्तस्य षुको विधानात् आत्वपक्षे स न भवति। 'भीस्म्योर्हेतुभये' इत्युभयत्र तङ्। हेतुभयार्थः स्मयतावुक्तः। अहेतुभये तु कुञ्चिकयैनं भाययति, अबीभयद् इति वृद्धाचार्यौ। बिभ्यत्। भीषणः—नन्द्यादित्वात् ण्यन्ताल्ल्युः। भीतः-'ञीतः क्तः' इति वर्तमाने क्तः। भयम्—अज्विधौ भयादीनामुपसङ्ख्यानम्, नपुंसके क्तादिनिवृत्त्यर्थम्' इति क्तल्युटौ बाधित्वा अजेव भवति। पारायणे तु वासरूपेण क्तो दर्शितः, तदसत्;

क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिप्रतिषेधात् । भीः, भियौ—सम्पदादित्वात्क्विप् । क्तिन्नपीष्यते—भीतिः । वृकेभ्यो भयं वृकभयम्—'पञ्चमी भयेन' इति तत्पुरुषः । 'भयभीतभीतिभीभिरिति वक्तव्यम्' इति भीतादिभिरपि समासो नेयः । भीरुः, भीलुकः—'भियः क्रुक्लुकनौ' इति क्रुक्लुकनौ । भीरुकः—'क्रुकन्नपि वक्तव्यम्' इति क्रुकन् । भीमः, भीष्मः—'भियष्षुक्च' इति मक्प्रत्यये पक्षे षुगागमः । 'भीमादयोऽपादाने' इत्यपादानेऽयं प्रत्ययः । भयानकः—आनकन् । 'शीङ्भियः' इत्यानकन् । अयमपि भीमादिः । भेकः—'इण्भी' इति कन् ॥ २ ॥

३. ह्री लज्जायाम् । जिह्रेति इत्यादि बिभेतिवत् । जिह्रियति इत्यादावजादौ संयोगपूर्वत्वाद्यणभावात् इयङ् विशेषः । ह्रेपयति—'अर्तिह्री' इत्यादिना पुगागमः । 'पुगन्त' इति गुणः । अजिह्रिपत् । ह्रीः—सम्पदादित्वात्क्विप् । ह्रीतः, ह्रीणः; ह्रीतवान्, ह्रीणवान्—'नुदविद' इत्यादिना वा निष्ठानत्वे णत्वम् । ह्रीकः, ह्लीकः—ह्रियः कन्रश्च लो वा' इति कनि रेफस्य वा लत्वम् । हृणीयते रुष्यतीत्यर्थः । 'हृणीङ्' इति कण्ड्वादिपाठात् स्वार्थे यक् ॥ ३ ॥

४. जुहोत्यादयोऽनुदात्ताः परस्मैपदिनः ।

५. पॄ पालनपूरणयोः ।

६. उदात्तः परस्मैभाषः । पिपर्ति । पिपूर्तः । पिपुरति । पिपर्षि । पिपर्मि—'अर्तिपिपर्त्योश्च' इति श्लावभ्यासस्येत्वम् । 'उदोष्ठ्यपूर्वस्य' इत्युत्वं रपरमॄकारस्यादिवृद्धिगुणविषये, हलादौ 'हलि च' इति दीर्घः । गुणवृद्ध्योर्विषयेषु तु विप्रतिषेधेन ते भवतः । पपार । पप्रतुः । पप्रुः । पपरिथ । पप्रथुः । पप्र । पपार, पपर । पप्रिव—'ऋच्छत्यॄताम्' इति किति लिटि गुणापवादे 'शॄदॄप्रां ह्रस्वो वा' इति वा ह्रस्वे यणादेशः । अन्यदा गुणे पपरतुः । पपरुः । पपरिथ । पपर । पपरिव इति । परिता, परीता । परिष्यति, परीष्यति—'वॄतो वा' इत्यलिटीटो वा दीर्घः । पिपर्तु, पिपूर्तात् । पिपूर्ताम् । पिपुरतु । पिपूर्हि—हेरपित्त्वान् ङित्वान्न गुणः । पिपराणि । पिपराव—आटि गुणः । अपिपः । अपिपूर्ताम् । अपिपरुः—अत्रोत्वात्परत्वात् 'जुसि च' इति गुणः । अपिपः । अपिपूर्तम् । अपिपरम् । अपिपूर्व—गुणे हल्ङ्यादिना तिस्योर्लोपः । पिपूर्यात् । पिपूर्याताम् । पिपूर्युः । पिपूर्याम् । आशिषि पूर्यात्, पूर्यास्ताम्—यासुटः कित्त्वाद्गुणाभावः । उत्वम् । अपारीत् । अपारिष्टाम् । अपारीः । अपारिषम्—सिचि वृद्धिः । 'वॄतो वा' इतीटो दीर्घस्य 'सिचि च परस्मैपदेषु' इति निषेधः । पिपूर्षति—'इट् सनि वा' इति पक्षे इडागमः । इडभावे 'इको झल्' इति सनः कित्त्वे उत्वम् । इटि तु तस्य पूर्ववद्दीर्घविकल्पे प्रकृतेश्च गुणे पिपरिषति, पिपरीषति इति । पोपूर्यते । पापर्ति, पापरीति । पापूर्तः इत्यादि । अभ्यासस्योरदत्वहलादिशेषयोः 'दीर्घोऽकितः' इति दीर्घः । हग्रिग्रीकामभावस्तरतिवत् । पिपुरत् , पिपुरतौ—शता पारयति । अपीपरत् । निपूर्तः, निपूर्तवान्—'न ध्याख्यापॄमूर्च्छिमदाम्' इति

निष्ठानत्वनिषेधः। पूर्त्वा—'श्र्युकः किति' इत्यनिट्त्वम्। पूः, पुरौ, पुरः—'भ्राजभास्' इति क्विप्। 'उदोष्ठ्यपूर्वस्य' इत्युत्वम्। 'र्वोः' इत्यादिना उपधादीर्घः। अत्र वक्तव्यं पूर्वत्राप्युक्तम्। पुरुषः—'पुरः कुषन्' इति कुषन्। पौरुषेयः वधो विकारसमूहः कृतो ग्रन्थादिर्वा—'सर्वपुरुषाभ्यां णढञौ' इति ढञ्। तथा च तत्र वार्त्तिकम्—'पुरुषाद्वधविकारसमूहतेनकृतेषु' इति कृते तृतीया समर्थविभक्तिः, अन्यत्र तु षष्ठी। पुरुषः प्रमाणमस्य पौरुषम्। पुरुषद्वयसम्। पुरुषदघ्नम्। पुरुषमात्रम्—'पुरुषहस्तिभ्यामण्च' इत्यण्, द्वयसजादयश्च चशब्दात्। द्वौ पुरुषौ प्रमाणमस्याः द्विपुरुषी, द्विपुरुषा—अत्र प्रमाणे विहितस्य द्वयसजादेः 'प्रमाणे लः' 'द्विगोर्नित्यम्' इति लुक्। 'तद्धितार्थ' इति द्विगुः 'पुरुषात्प्रमाणेऽन्यतरस्याम्' इति प्रमाणवाचिपुरुषशब्दान्तात् द्विगोस्तद्धितलुकि पक्षे ङीब्निषेधात् टाप्। राजपुरुषस्य भावकर्मणी राजपौरुष्यम्—राजपुरुषात् ष्यञ्, अनुशतिकादित्वादुभयपदवृद्धिः। पुरुषान् गच्छति पुरुषेषु वसति वा पुरुषत्रा—'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' इति द्वितीयान्तात् सप्तम्यन्ताच्च स्वार्थे त्राप्रत्ययः। पुरु—'पृभीधौव्यधिगृधिधृषिदृषिभ्यश्च' इति कुप्रत्ययः। 'उदोष्ठ्यपूर्वस्य' इत्युत्वम्। पुरुत्रा—पूर्ववत् त्राप्रत्ययः। पूर्णम्—'धापॄवशि' इत्यादिना नप्रत्ययः। पुरीषः—'शॄपॄभ्यां किच्च' इति षन्प्रत्ययः। पर्व ग्रन्थि—'स्नामदि' इत्यादिना वनिन्। परुः, परुषी—'अर्तिपॄवपि' इत्यादिना उसिः। परुषः—'नहिकलिहनिपॄवस्यर्तिभ्य उषच्' इत्युषच्। 'ह्रस्वान्तोऽयं धातुः' इति वर्धमानकाश्यपाभरणपुरुषकाराः। स्वामी तु 'दीर्घान्तं पठित्वा 'ह्रस्वान्तः केचित्' इति। आत्रेयमैत्रेयौ तु ह्रस्वान्तं पठित्वा 'दीर्घान्तकमेके' इति। अत्रोदाहरणानि—पिपर्ति। पिपृतः। पिप्रति। पिपर्षि। पिपर्मि। पपार। पप्रतुः। पपर्थ—'ऋतो भारद्वाजस्य' इति नेट्। पिप्रिव—क्रादिनिमादिट्। पर्ता। परिष्यति—'ऋद्धनोः स्ये' इतीट्। पिपर्तु। पिपृहि। पिपराणि। अपिपः। अपिपृताम्। अपिपरुः—जुसि गुणः। अपिपः। अपिपरम्। अपिपृव। पिप्रियात्। पिप्रियाताम्। आशिषि प्रियात्, प्रियास्ताम्—'रिङ् शयग्लिङ्क्षु' इति रिङादेशः। अपार्षीत्। अपार्ष्टाम् इत्यादि। वृत्तिकारस्य तु दीर्घान्त एवेष्टः। यदाह 'शॄदॄप्रां ह्रस्वो वा' इत्यत्र—'केचिदेतत्सूत्रं प्रत्याचक्षते। श्रा पाके, द्रा कुत्सायां गतौ, प्रा पूरणे इत्येषामनेकार्था धातव इति शॄदॄप्रामर्थे वर्तमानानां विशश्रतुरित्यादीनि रूपाणि साधयन्ति। तथा सति विशुश्रुवान् इति क्वसावेतद्रूपं न स्यात्' इति। यदि ह्रस्वान्तस्स्यात्प्रतिना प्रत्याख्यानं पिपृवानिति प्रयोजनकथनं चानुपपन्नं स्यात्। तथा वृत्तिन्यासपदमञ्जरीप्रदीपकारादयोऽपि। किञ्च अपाणिनीयश्च ह्रस्वान्तः। यदि हि स्यात्, किं ह्रस्वविकल्पेन! यत्क्रैय्यादिकाद् दीर्घान्तरूपाणि अस्माच्च ह्रस्वान्तरूपाणि भविष्यन्ति। एवं च 'तं पिपृतं रोदसी' 'पाहि माग्ने पिपृहि' इत्यादयश्छान्दसा द्रष्टव्याः। अदन्तमृदन्तमिति सेडप्ययं

दीर्घान्तः परस्मैपद्यनुरोधेन पठितः। अयं क्र्यादावपि। 'पृ गतौ' इति स्वामी। 'पृञ् व्यायामे' तुदादौ। पृ 'पूरणे' इति चुरादौ ॥ ४ ॥

७. डुभृञ् धारणपोषणयोः।

८. अनुदात्त उभयतोभाषः। बिभर्ति। बिभृतः। बिभ्रति। बिभर्षि। बिभर्मि—'भृञामित्' इति श्लावभ्यासस्येत्त्वम्। बभार। बभ्रतुः। बभ्रुः। बभर्थ—क्रादिनियमादनिट्त्वम्। बभृव। बिभराञ्चकार—'भीह्रीभृहुवाम्' इत्याम्प्रत्ययः, श्लुवद्भावाद् द्विर्वचनमित्त्वं च। भर्ता। भरिष्यति। बिभर्तु, बिभृतात्। बिभृताम्। बिभ्रतु। बिभृहि। बिभराणि। अबिभः। अबिभृताम्। अबिभरुः—'जुसि च' इति गुणः। अबिभः। अबिभृतम्। अबिभरम्। बिभृयात्। बिभृयाताम्। आशिषि—भ्रियात्। भ्रियास्ताम्। भ्रियासुः। अभार्षीत्। अभार्ष्टाम्। अभार्षीः। अभार्षम्। अभार्ष्व। बिभृते। बिभ्राते। बिभ्रते। बिभृषे। बिभृध्वे। बिभ्रे। बिभृवहे। बिभराञ्चक्रे। भर्ता। भरिष्यते। बिभृताम्। बिभृष्व। बिभरै। अबिभृत। अबिभ्राताम्। अबिभ्रत। अबिभृथाः। अबिभ्रि। अबिभृवहि। बिभ्रीत। बिभ्रीयाताम्। बिभ्रीयाः। बिभ्रीय। बिभ्रिवहि। आशिषि भृषीष्ट। भृषीयास्ताम्—'उश्च' इत्यात्मनेपदे लिङ्सिचोर्झलाद्योः कित्त्वादगुणत्वम्। अभृत। अभृषाताम्। अभृथाः। अभृढ्वम्। अभृषि—'ह्रस्वादङ्गात्' इति झलि सिचो लोपः। बिभ्रत्। बिभ्राणः। बुभूर्षति, बुभूर्षते—इको झल्' इति सनः कित्त्वात् 'अज्झन' इति दीर्घः, 'उदोष्ठ्य' इत्युत्वम्। 'सनीवन्त' इतीड्विकल्पोऽस्य न भवति, तत्र भरेति शपा निर्देशात्। भृत्रिमम्—ड्वितः क्त्रिः', 'क्त्रेर्मम्नित्यम्'। द्रमिडास्तु ट्वितं पठित्वा 'ट्वितोऽथुच्' इति अथुचमुदाहरन्ति—भरथुः इति। शेषं भरतिवत् ॥ ५ ॥

९. माङ् माने शब्दे च।

१०. अनुदात्त आत्मनेपदी। मिमीते। मिमाते। मिमते। मिमीषे। मिमाथे। मिमीध्वे। मिमे। मिमीवहे—भृञादित्त्वाच्छ्लावभ्यासस्येत्त्वम्। हलादौ क्ङिति सार्वधातुके 'ई हल्यघोः' इतीत्वमभ्यस्तस्य। अजादौ तु 'श्नाभ्यस्तयोः' इत्याल्लोपः। प्रणिमिमीते—'नेर्गद' इत्यादिना णत्वम्। ममे। ममाते। ममिरे। ममिषे। ममाथे। ममिध्वे। ममे। ममिवहे—क्रादिनियमादिट्। 'आतो लोप इटि च' इत्याकारलोपः। माता। मास्यते। मिमीताम्। मिमाताम्। मिमताम्। मिमीष्व। मिमै। अमिमीत। अमिमाताम्। अमिमत। अमिमीथाः। अमिमाथाम्। अमिमीध्वम्। अमिमि। अमिमीवहि। मिमीत। मिमीयाताम्। मिमीथाः। मिमीय। आशिषि—मासीष्ट। मासीयास्ताम्। अमास्त। अमासाताम्। अमासत। अमास्थाः। अमाध्वम्। अमासि। अमास्वहि। मित्सते—'सनिमीमा' इत्यच इस्। 'सस्यार्धधातुके' इति तत्वम्। 'अत्र लोपः' इत्यभ्यासलोपः। मेमीयते—'घुमास्था' इतीत्वे द्विर्वचनेऽभ्यासस्य गुणः। मामाति, मामेति। मामीतः। मामति। मापयति।

अमीमपत् । मित्वा । मितः । मितवान् । मितिः—'द्यतिस्यतिमा' इतीत्वम् । प्रमाय—'न ल्यपि' इति 'घुमास्था' इतीत्वस्य निषेधः । मेयम्—'अचो यत्', 'ईद्यति' इतीत्वे गुणः । मीयतेऽनेनेति पाय्यम्—'पाय्यसान्नाय्य' इत्यादिना मानेऽभिधेये ण्यदादिपत्वं च निपात्यते । 'आतो युक्' इति युक् । मिमीते इति मायः—'श्याद्व्य' इत्यादिना णे युक् । माया—टाप् । मायी, मायिकः, मायावी—मातौ मत्वर्थे व्युत्पादितम् । धान्यमायः—'ह्वावामश्च' इति कर्मण्यण्, कस्यापवादः । प्रमिमीत इति प्रमः—'आतश्चोपसर्गे' इति कः । प्रमा—स्त्रियाम् 'आतश्चोपसर्गे' इत्यङ् । प्रमितिः—बाहुलकात् क्तिन् । वातप्रमीः वातमृगः—'वातप्रमीः' इति वातोपपदात् प्रपूर्वादस्मादीकारप्रत्यये आल्लोपे च निपात्यते । अजादौ यणादेशे वातप्रम्यौ इत्यादि । सप्तम्येकवचने तु यणः परत्वात्सवर्णदीर्घे वातप्रमी इति भवति । अन्ये तु 'अन्येभ्योऽपि दृश्यते' इति क्विपि 'घुमास्था' इतीत्वे व्युत्पादयन्ति । 'ईत्वमवकारादौ' इति च भाष्ये न स्थितम् । तन्मते अजादौ 'एरनेकाचः' इति यण् । तत्र त्वयं विशेषः, सप्तम्येकवचने यण् परत्वात्सवर्णदीर्घं बाधत इति वातप्रम्योति भवति । उणादिवृत्तौ तु मिनोतेरीकारप्रत्यये व्युत्पाद्यते । मेरुः—'मापोरुरी च' इति रुप्रत्यये ईकारे चान्तादेशे गुणः ॥ ६ ॥

११. ओ हाङ् गतौ ।

१२. अनुदात्त आत्मनेभाषः । जिहीते । जिहाते । जिहते । जिहीषे । जिहीध्वे । जिहे । जिहिवहे । जहे । हाता । हास्यते । जिहीताम् । जिहाताम् । अजिहीत । अजिहाताम् । अजिहत । जिहीत । जिहीयाताम् । आशिषि—हासीष्ट । हासीयास्ताम् । अहास्त । अहासाताम् इत्यादि माङ्वत् । जिहासते । जाहाते—'घुमास्था' इतीत्वे जहातीति निर्देशादस्याग्रहः । अत एव 'जहातेश्च क्त्वि' इति हिभावोऽपि नेति हात्वा इति भवति । हापयति । अजीहपत् । हानः, हानवान्—'ओदितश्च' इति निष्ठानत्वम् । जिहीते भावानिति हायनः संवत्सरः—'हश्च व्रीहिकालयोः' इति ण्युट् । एको हायनोऽस्या एकहायनी, त्रिहायणी, चतुर्हायणी—'दामहायनान्ताच्च' इति सङ्ख्यादेर्दामहायनान्ताच्च बहुव्रीहेः स्त्रियां ङीप्, 'त्रिचतुर्भ्यां हायनस्य' इति णत्वम् । असंज्ञात्वाद् न 'पूर्वपदात्संज्ञायाम्' इति णत्वप्राप्तिः । एते च ङीब्णत्वे वयस्येव स्मर्येते, तेनेह न भवतः—एकहायना शाला, त्रिहायना, चतुर्हायना इति । हानिः—'ग्लाम्लाज्याहाभ्यो निः' इति निप्रत्ययः । भृञादयस्त्रयो गताः ॥ ७ ॥

१३. ओ हाक् त्यागे ।

१४. अनुदात्तः परस्मैपदी । ककारो 'हश्च व्रीहि' इत्यत्र पूर्वस्यास्य च सामान्यग्रहणार्थः । अन्यथा एकानुबन्धकत्वाद् अस्यैव ग्रहस्स्यात् । जहाति । जहितः, जहीतः । जहति । जहासि । जहिथः, जहीथः । जहामि । जहिवः, जहीवः । जहिमः, जहीमः—'जहातेश्च' इति हलादौ क्ङिति सार्वधातुके इत्वमीत्वं च । अजादौ

'श्नाभ्यस्तयोः' इत्याल्लोपः। जहौ। जहतुः। जहुः। जहाथ, जहिथ। जह। जहौ। जहिव—क्रादिनियमादिट्। थलि भारद्वाजनियमाद्विकल्पः। 'आत औ णलः' 'आतो लोप इटि च'। हाता। हास्यति। जहातु, जहितात्। जहिताम्, जहीताम्। जहतु। जहिहि, जहीहि, जहाहि। जहानि। जहाव—पूर्ववदित्वमीत्वं च। अजादावाल्लोपश्च। हौ 'आ च हौ' इत्यात्वं च। अजहात्। अजहिताम्, अजहीताम्। अजहुः। अजहाः। अजहाम्—'सिजभ्यस्त' इति नित्यं झेर्जुस्। 'लङः शाकटायनस्य' इत्याकारान्तलक्षणो जुस्विकल्पस्तु न भवति, परत्वात् 'श्नाभ्यस्तयोरातः' इत्याल्लोपे अकारान्तत्वस्यैवाभावात्, 'ई हल्यघोः' इतीत्वं तु जुस्भावे कृते हलादित्वं पर्यवपत्स्यत इति न भवति। एवमदरिद्रुरित्यत्रापि। जह्यात्। जह्याताम्। जह्युः। जह्याः। जह्याम्। जह्याव—'लोपो यि' इति यकारादौ सार्वधातुके जहातेराल्लोपः। आशिषि हेयात्, हेयास्ताम्—'एर्लिङि' इत्येकारः 'घुमास्था' इतीत्वापवादः। अहासीत्। अहासिष्टाम्। अहासीः। अहासिष्टम्। अहासिषम्—सगिटौ। जिहासति। जेहीयते—परत्वात् 'घुमास्था' इतीत्वे द्विर्वचनम्। जाहीति, जाहेति। जाहीतः—'ई हल्यघोः' इति नित्यमीत्वम्। 'जहातेश्च' इति श्तिपा निर्देशाद् इत्वं तु न भवति। अत एव 'आ च हौ' इत्यात्वम्, ईत्वम्, 'लोपो यि' इत्यालोपश्च न भवन्ति। तेन 'ई हल्यघोः' इतीत्वे जाहीहि, जाहीयात् इति भवतः। आशीर्लिङस्तु आर्धधातुकत्वादपि 'जहातेश्च' इतीत्वमीत्वं च न भवति। अत एव 'ई हल्यघोः' इति नित्यमीत्वम् 'लोपो यि' इत्याल्लोपश्च न भवति। 'घुमास्था' इतीत्वम्, 'एर्लिङि' इत्येत्वं च श्तिपा निर्देशान्न भवति, तेन जाहायात् इति भवति। अत्र धातोः कित्त्वमाश्रित्य 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घनिषेधो न भवति, तत्राकित इत्यनेनाभ्यासस्य विशेषणात्। स्पष्टं चैतद् वृत्तिन्यासपदमञ्जर्यादिषु। हापयति। अजीहपत्। हित्वा—'जहातेश्च क्त्वि' इति हिभावः। हीनः, हीनवान्—ओदित्वान्निष्ठानत्वम्। विहाय—'न ल्यपि' इतीत्वनिषेधः। जहात्युदकमिति कृत्वा हायनाः व्रीहयः—'हश्च व्रीहिकालयोः' इति ण्युट्। हानिः—'ग्लाम्ला' इत्यादिना स्त्रियां पूर्ववन्निः। शर्धञ्जहा माषाः, शर्धोऽपानशब्दः—'वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्य उपसङ्ख्यानम्' इति खशि, शपि, श्लौ, द्विर्वचने 'श्नाभ्यस्तयोः' इत्यालोपः, उपपदस्य मुमागमः। पूर्वापहाणा, अपरापहाणा पूर्वानपरांश्च जहातीत्यर्थः—अजादिपाठाट्टाप्, कर्तरि ल्युट्, णत्वं च। 'सम्प्रहाणेत्यपि क्वचित्पठन्ति' इति आत्रेयः। जहकः कालपुरुषस्त्यागी च—'जहातेर्द्वे च' इति कुनि द्वित्वम्। अहरन्न—'नञि जहातेः' इति कनिन्याकारलोपः। अहन्नित्यधिकृत्य 'रोऽसुपि' इति नकारस्य रेफादेशः। अत्र 'स्वमोर्नपुंसकात्' इति सोर्लुका लुप्तत्वात् प्रत्ययलक्षणेन न सुप्परत्वम्। अहोभ्याम् इत्यादौ 'अहन्' इत्यह्नः पदस्य रुत्वे तस्य 'हशि च' इत्युत्वम्। रुत्वस्य 'असुपि' इति

निषेधात्, 'अहन्' इत्येतदर्थात्सुप्परविषयं भवति। ननु रत्वरुत्वयोः पूर्वत्रासिद्धत्वाद् नलोपस्स्यात्; न चानयोरनवकाशत्वम्, कृतेऽपि नलोपे एकदेशविकृतन्यायेन अवशिष्टस्यावकाशत्वात्; किञ्च हे अहः इत्यत्र 'वा नपुंसकानाम्' इति नलोपाभावपक्षे रत्वं सावकाशम्, तथा रुत्वमपि हे दीर्घाहो निदाघेत्यत्र, अत्र हि पुंल्लिङ्गत्वाद्धल्ङ्यादिना सोर्लोपे प्रत्ययलक्षणेन अस्ति सुप्परत्वम्, न ङिसम्बुद्धयोः' इति नलोपश्च निषिध्यते ? सत्यम्; 'रुविधौ षष्ठ्या निर्देष्टव्ये प्रथमान्तस्य निर्देशाद् अहन्नित्यावर्तते; तत्रैकेन नलोपाभावार्थं तदेव रूपमन्वाख्यायते, अपरेण तु रुः' इति वृत्तौ समाधिरुक्तः। अह्नां समूहः क्रतुः अहीनः—अत्राहश्शब्दोऽहर्मित कर्मवचनः, 'अह्नः खः क्रतौ' इति खः। 'अह्नष्टखोरेव' इति टिलोपः। अक्रतौ — आह्नः इति सामान्योऽणेव। द्वाभ्यामहोभ्यां निर्वृत्तः द्व्यहीनः, द्वैयह्निकः— 'रात्र्यहः संवत्सराच्च' इति द्विगोर्वा खः, अन्यदा प्राग्दीव्यतीयष्ठञ्। 'अह्नष्टखोरेव' इति नियमाट्टिलोपाभावे 'अल्लोपोऽनः' इत्यल्लोपः। अहर्पतिः— 'अहरादीनां पत्यादिषु' इति रेफस्य वा रेफः। अन्यदा विसर्जनीयोपध्मानीयौ। अह्नो रूपम् अहोरूपम्। अहश्च रात्रिश्च अहोरात्रम्। अहोरथन्तरम्— 'अहो रुविधौ रूपरात्रिरथन्तरेषूपसङ्ख्यानम्' इति रेफापवादो रुः। 'हशि च' इत्युत्वम्। 'इदं च समासे चासमासे च' इति हरदत्तः। एवं हि रात्रीतीकारान्तपाठोऽर्थवान्। तेन 'गतमहोरूपं पश्य रात्रिरागता रथन्तरं गाय' इति वाक्येऽपि रुर्भवति। परमाहः—'सन्महत्' इति समासः। 'राजाहः' इति टचि टिलोपः। द्वयोरह्नोर्भवो द्व्यह्नः—'तद्धितार्थं' इति द्विगुः, 'कालात्' इति विहितस्य ठञः 'द्विगोर्लुगनपत्ये' इति लुक्। द्वे अह्नी जातस्य द्व्यह्नजातः—'कालाः परिमाणिना' इति समासः। स च त्रिपदस्यापीष्यते। तथा च 'तद्धितार्थं' इत्यत्र वार्त्तिकम्—'उत्तरपदेन परिमाणिना द्विगोस्समासवचनम्' इति। द्विगोर्निष्पत्तय इत्यर्थः। त्रयाणां समासे हि 'तद्धितार्थं' इत्युत्तरपदे पूर्वयोस्समासे 'सङ्ख्यापूर्वं' इति द्विगुत्वे 'द्विगुश्च' इति तत्पुरुषो भवति। अह्नो निर्गतः निरहः—प्रादिसमासः। अहः पूर्वभागः पूर्वाह्नः— 'पूर्वापर' इत्येकदेशिसमासः। सङ्ख्याताह्नः—विशेषणसमासः, 'अह्नोऽह्न एतेभ्यः' इति टचि परभूतेऽह्नोऽह्नादेशः। 'एतेभ्यः' इति सङ्ख्याव्ययाहरादिसूत्रोपात्ताः परामृश्यन्ते। तत्राहश्शब्दात्पराऽहश्शब्दो न सम्भवति। एकपुण्याभ्यां त्वह्न 'उत्तमैकाभ्याम्' इत्यह्नादेशनिषेधाद् एकाहः पुण्याहम् इति टजेव। उत्तमशब्दोऽहरादिसूत्रोपात्तान्त्यवचनः। तत्र 'पुण्यशब्दे एवोच्चार्ये उत्तमशब्दोच्चारणमुपोत्तमस्यापि ग्रहणार्थमिति सङ्ख्यातशब्दात्परस्य अहश्शब्दस्याह्नादेशो न इति केचिद्वर्णयन्ति' इति वृत्तावुक्तम्। द्वयोरह्नोस्समाहारो द्व्यहः इत्यत्र 'न सङ्ख्यादेस्समाहारे' इत्यह्नादेशाभावः। एवं च द्व्यहो जातस्येति व्युत्पत्त्या द्व्यहजातः इत्यपि भवति। 'अयमह्नादेशष्टचि परभूतः' इति वृत्तावुक्तत्वात् यत्र बहुव्रीह्यादौ स नास्ति तत्राह्ना-

देशोऽपि नास्ति सङ्ख्यातमहोऽस्य सङ्ख्याताह्नः पुरुषः इति। कथं सायाह्न इति, यतः पूर्वादिषु सायशब्दस्यापाठाद् एकदेशिसमास एव नास्ति ? नैष दोषः; 'सङ्ख्याविसायपूर्वस्याह्नस्यान्यतरस्यां ङौ' इत्येभ्यः परस्याह्नस्य सप्तम्येकवचनेऽह्नादेशविकल्पविधानात् सर्वेणैकदेशेनाह्नः समासविज्ञानात्। एवं च मध्याह्न इत्यपि भवति। 'इदं च ज्ञापनं रात्रेरप्युपलक्षणम्' इति व्याख्यातारः। 'अह्नोऽदन्तात्' इत्यकारान्तपूर्वपदस्थान्निमित्तात्परत्वेऽह्नो नकारस्य णत्वम्। अह्नान्ता 'रात्राह्नाहाः पुंसि' इति पुंल्लिङ्गाः। पुण्याहम्, सुदिनाहम् इत्यत्र तु 'पुण्यसुदिनाभ्यामह्नः' इति नपुंसकत्वम्। सुदिनशब्दः प्रशस्तवचनः। प्राह्णः, अह्नः प्रगतत्वम्—'तिष्ठद्गुप्रभृतीनि च' इत्यव्ययीभावत्वादव्ययत्वं नपुंसकत्वं च। अत्रैव पाठादह्नादेशोऽपि। दीर्घमहो यस्यां शरदि दीर्घाह्नी शरत्—'बह्वादिभ्यश्च' इति ङीष्। युवादित्वात् 'प्रातिपदिकान्त' इति णत्वनिषेधः। यद्यपि बह्वादिष्वहन्निति पठ्यते, तथापि केवलस्य स्त्रीत्वायोगात्तदन्तस्य ग्रहणम्। ङीषभावे 'अनो बहुव्रीहेः' 'डाबुभाभ्यामन्यतरस्याम्' इति डाब्ङीपौ तत्प्रतिषेधश्च भवति—दीर्घाह्ना· दीर्घाह्नी, दीर्घाहा इति। ङीष्ङीपोस्स्वरे विशेषः। सार्थाद्धीनः—'अपादाने चाहीयरुहोः' इति तसिनिषेधः। हीयेति विकृतिनिर्देशो जहातेर्निवृत्त्यर्थः, न तु हीयतिरूपस्य विवक्षणार्थः। 'मन्त्रो हीनस्स्वरतो वर्णतो वा' इत्यत्र तु 'हीयमानपापयोगाच्च' इति हीयमानेन पापेन च युक्तादकर्तृतृतीयान्ताद्वा तसिविधानात्तसिः। अत्र विवक्षितार्थाद्धीयमानेन मन्त्रेण स्वरवर्णौ हेतुतया युज्येते। कैयटे तु पस्पशाह्निकम्—'आद्यादित्वात्तसिः' इति। सार्थाद्धीयते देवदत्तः, हीनः इत्यादौ लकारादौ विवदन्ते—तत्र 'अपादाने चाहीयरुहोः' इत्यत्र न्यासे 'देवदत्तस्य कर्तुरीप्सिततमत्वाभावेऽपि कर्मसंज्ञायां कर्तृग्रहणस्य स्वातन्त्र्योपलक्षणार्थत्वाद् हानक्रियायां स्वतन्त्रस्य अपादानस्येप्सिततमत्वात् कर्मणि लकारादयः' इति प्रपञ्चेन समर्थितम्। सम्प्रदानसूत्रे कैयटेऽप्येवमुक्तम्। इन्दुरपि 'स्वयमेव हीयत इति प्रतीतेः कर्मकर्तरि लकारोऽस्तु' इत्याशङ्क्य 'जहातेः कर्तृस्थक्रियत्वात् कर्मण्येव लकारः' इति। हरदत्तस्तु न्यासमतमुक्त्वा—'यद्येवम्, माषेष्वश्वं बध्नातीत्यत्र कर्मणोऽप्यश्वस्य वस्तुतो यद्भक्षणे स्वातन्त्र्यं तदाश्रया कर्मसंज्ञा प्राप्नोति, तस्मात्कर्मकर्तर्यत्र लकारः' इति। उपपादितं च 'इह जहातिरपगमनार्थः, सा च क्षुदुपघातादिना देवदत्तस्यापगमे तत्समर्थाचरणम्। यदा तु क्षुधादिना स्वयमेवोपगच्छति तदा कर्मकर्तृत्वम्' इति। 'पुनः कुत इत्यपेक्षायां पश्चात्स्वार्थे सम्बन्धः' इति चोक्तम् ॥८॥

१५. डुदाञ् दाने।

१६. उभयतोभाषोऽनुदात्तः। प्रणिददाति। दत्तः। ददति। ददासि। दत्थः। दत्थ। ददामि। दद्वः—'श्नाभ्यस्तयोः' इत्याल्लोपः। क्ङिति सार्वधातुके 'ई हल्यघोः' इत्यभ्यस्ताकारस्य विधीयमानमीत्वं तत्रैव 'अघोः' इति प्रतिषेधान्न प्रसजति।

'नेर्गद' इति णत्वम् । ददौ । ददतुः । ददुः । ददाथ, ददिथ । दद । ददौ । ददिव—क्रादिनियमादिट् । थलि भाद्वाजनियमाद्विकल्पः । 'आत औ णलः', 'आतो लोप इटि च' । दाता । दास्यति । ददातु, दत्तात् । दत्ताम् । ददतु । देहि । ददानि । दत्तात् त्वम् इत्यत्र 'ध्वसोरेद्धौ' इत्यस्मात्परत्वात् तातङि पुनर्न तस्य प्रवृत्तिः सकृद्गतिपरिभाषया । अददात् । अदत्ताम् । अददुः—'सिजभ्यस्त' इति नित्यं जुस् । अददाः । अददाम् । अदद्व । दद्यात् । दद्याताम् । दद्याः । दद्याम् । दद्याव । आशिषि—देयात् । देयास्ताम्—घुत्वाद् 'एर्लिङि' इत्येत्वम् । अदात् । अदाताम् । अदुः—'आतः' इति झेर्जुसि पररूपम् । अदाः । अदाम् । अदाव—'गातिस्था' इति सिचो लुक् । दत्ते । ददाते । ददते । दत्से । दध्वे । ददे । दद्वहे । ददे । ददाते । ददिषे । दाता । दास्यते । दत्ताम् । ददाताम् । दत्स्व । दध्वम् । ददै । ददावहै । अदत्त । अददाताम् । अददत । अदत्थाः । अददि । अदद्वहि । ददीत । ददीयाताम् । ददीथाः । ददीय । आशिषि दासीष्ट—आर्धधातुकत्वेऽपि अकित्त्वादेत्वं न भवति । 'श्नाभ्यस्तयोः' इत्याल्लोपस्तु अनभ्यस्तत्वादपि न भवति । अदित । अदिषाताम् । अदिथाः । अदिषि—'स्थाघ्वोरिच्च' इत्यात्मनेपदपरस्य सिचः कित्त्वं धातोश्चेत्वम् । झलि 'ह्रस्वादङ्गात्' इति सिज्लोपः । सन्निपातपरिभाषाभावः प्रागेवोक्तः । आदत्ते—'आङो दोऽनास्यविहरणे' इत्यकर्त्रभिप्रायेऽपि तङ् । 'आङ' इति निर्देशाद् अङितो वाक्यस्मरणविस्मयात् परस्य न तङ् इति केचित् । 'अनास्यविहरणे' इति पर्युदासः 'स्वाङ्गकर्मकाच्च' इति वक्तव्यात्स्वाङ्गकर्मकविषय इति व्याददते पिपीलिका पतङ्गस्य मुखम्—इत्यत्रापि तङेव । स्वाङ्गकर्मकत्वे तु—स्वमुखं व्याददाति, व्यादत्ते इत्युभयमपि यथायोगं भवति । सुधाकरस्तु '''आङो दः' इति योगविभागादनास्यविहरणे इत्यनेन व्यवहितापि प्राप्तिः पराणुद्यते । एवमेव चान्द्राः प्रतिपेदिरे'' इति ङित्त्वनिमित्तमपि तङमत्र नेच्छति । आत्रेयस्तु 'कर्त्रभिप्राये तङेव' इति । अयं च योगविभागो भाष्ये न दृश्यते । किञ्च '''आङो दोऽनास्य' इत्येवास्ये धातोर्वृत्त्यसम्भवात् तत्समवायिन्यां विहरणक्रियायां वर्तमानात्तङ्निषेधे सिद्धे पुनर्विहरणग्रहणं विपादिकां व्याददातीत्यादावास्यविहरणसमानक्रियादपि प्रतिषेधार्थः'' इति भाष्ये उक्तम् । तत्रैव कैयटपदमञ्जर्योः 'आस्य इत्युच्यमाने तत्समवायि क्रियामात्रं लभ्यते न विहरणमेवेति स्वयं मुखमादत्ते इत्यत्रापि ग्रहणस्य मुखसमवायित्वात् प्रतिषेधस्स्यात्' इति दोषमुद्भाव्य '''अनास्य' इत्यास्यपर्युदासत्वाद् ग्रहणस्य च ग्राह्यग्रहीतृविषयत्वादनास्यक्रियत्वान्न दोषः'' इति परिहृतम् । प्रसज्यप्रतिषेधे ह्यास्यसमवायित्वाश्रयेण प्रतिषेधेन भाव्यत्वाद् दोष एव स्यादिति भाष्यकृतोऽप्ययमनभिमतः प्रतीयते । किञ्च स्वं मुखमादत्त इति तङ् न स्यादिति दोषापादानमप्ययुक्तं स्यात् । दित्सति, दित्सते—'सनि मीमा' इतीस्भावे 'अत्र लोपः' इत्यभ्यास-

लोपः। 'सस्यार्धधातुके' इति तत्वम्। देदीयते–ईत्वे द्विर्वचनम्। दादेति, दादाति। दत्तः—क्ङिति 'श्नाभ्यस्तयोः' इत्याल्लोपः। दापयति। अदीदपत्। ददः–'ददाति-दधात्योर्विभाषा' इति कर्तरि शे शपः श्लुः। शाभावे 'श्याद्व्यध' इति णे युकि दायः। 'तदर्हम्' इति निर्देशात् क्वचित्कृद्योगे द्वितीया भवतीति 'दायैरामोद-मुत्तमम्'[1] इति भट्टिप्रयोगं निर्वहन्ति। दीयत इति दायः—घञ्। तमादत्त इति दायादः—मूलविभुजादित्वात् कः। गवां दायादः, गोषु दायादः—'स्वामीश्वर' इति षष्ठीसप्तम्यौ। दायादेनादीयमानं दायाद्यम्—ब्राह्मणादित्वात् ष्यञ्। तत्र हि कर्मग्रहणेन साधनकर्मापि गृह्यते। आदिः--'उपसर्गे घोः किः' इति किः। आदौ भवम् आदिमम्—आदेश्च इत्युपसङ्ख्यानाद् मप्रत्ययः। आद्यः—दिगादित्वाद्यत्। आदितः –'आद्यादिभ्य उपसङ्ख्यानम्' इति सार्वविभक्तिकस्तसिः। दत्रिमम्—'ड्वितः क्त्रिः' 'क्त्रेर्मम्नित्यम्'। अन्येषु साधारणेषु कृत्सु दाण इव रूपं नेयम्। तथा घुसंज्ञाकार्यमपि। दाण् दाने, देङ् रक्षणे, दैप् शोधने—त्रयं भूवादौ; दाप् लवने इत्यदादौ॥ ९॥

१७. डुधाञ् धारणपोषणयोः।

१८. अनुदात्त उभयपदी। दानेऽप्येके। दधाति। धत्तः। दधति। दधासि। धत्थः। दधामि। दध्वः--'श्नाभ्यस्तयोः' इत्याल्लोपे 'दधस्तथोश्च' इति तकार-थकारसकारेषु ध्वे च परेषु बशस्स्थाने भष्विधानाद् दकारस्य धकारः। अत एव भष्भाववचनसामर्थ्याद् आल्लोपस्य न स्थानिवत्त्वम्। परस्य 'खरि च' इति चर्त्वम्। अत्रापि 'पूर्वत्रासिद्धीयमद्विर्वचने' इति वा, 'चर्त्वविधिं प्रति' इति इति वाल्लोपस्य न स्थानिवत्त्वम्। 'सम्पद्विनिमयेनौभौ दधतुर्भुवनद्वयम्'[2] इत्यत्र 'प्रतिषेधे हसादीनाम्' इति कर्मव्यतीहारनिमित्तः तङ् नेति केचित्, तदयुक्तम्; तत्रादिशब्देन शब्दनक्रियाणामेव ग्रहणात्। इह तु सम्पदो विनिमयो न धात्व-र्थस्येति तस्य व्यतीहाराभावात्तङो नैव प्रसङ्गः। दधातु, धत्तात्। धत्ताम्। धेहि। दधानि। अदधात्। अधत्ताम्। अदधुः। अदधाः। अदधाम्। अदध्व। दध्यात्। दध्याः। दध्याम्। आशिषि—धेयात्। धेयास्ताम्—'एर्लिङि' इत्येत्वम्। अधात्। अधाः। अधाम्—'गातिस्था' इति सिचो लुक्। धत्ते। दधाते। दधते। धत्से। धध्वे। दधे। दध्वहे। दधे। दधाते। दधिषे। दधे। धाता। धास्यते। धत्ताम्। धत्स्व। दध्वम्। एकदेशविकृतत्वादयमपि ध्वशब्दः। दधै। दधावहै। अधत्त। अधत्थाः। अदधि। अदध्वहि। दधीत। आशिषि–धासीष्ट। अधित। अधिषाताम्। अधिषत। अधिथाः। अधिषि—'स्थाघ्वोरिच्च' इति सिचः कित्त्वमित्वं च। धित्सति, धित्सते। देधीयते। दाधेति, दाधाति। धात्तः—ददातिवत्प्रक्रिया।

---

१. भ० का० ६।७९। 'धायैः' इति तत्र मुद्रितः पाठः। २. रघु० १।२६।

धापयते, धापयति । प्रणिदधाति—'नेर्गद' इति णत्वम् । धीय्यत इति धाय्या—'पाय्यसान्नाय्य' इत्यादिना ण्यति सामिधेन्यां निपात्यते । अन्यत्र यतीत्वे धेयम् । प्रधः—'आतश्चोपसर्गे' इति कः । दधातीति दधः—'ददातिदधात्योर्विभाषा' इति शे शप् । अन्यदा 'श्याद्व्यध' इति णः—धायः । हित्वा । हितः । हितवान् । हित्रिमम्—'ड्वितः क्त्रिः', 'क्त्रेर्मम्नित्यम्', 'दधातेर्हिः' इति तकारादौ किति ह्यादेशः । प्रधाय इत्यत्र 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते' इति पूर्वमेव ल्यपि पश्चात्तादिकितोऽभावाद् न हिरादेशः । 'न ल्यपि' इतीत्वं निषिध्यते । दधातेरिति तिपा निर्देशाद् दाधीत्वेत्यत्र ह्यादेशो न भवति । यद्वा—तकारादिकित्परत्वाभावान्नैव हेः प्रसङ्गः । किं किं दधातीति किष्किन्धा—'आतोऽनुपसर्गे क' इति कः, पारस्करादित्वात्सुट् किमो मलोपष्षत्वं च । धीयते धार्यते शिरसि इति धात्री, आमलकी—'धः कर्मणि ष्ट्रन्' । षित्त्वान्ङीष् । भूतधात्री—इत्यत्र भूतानि धत्ते इत्यौणादिकः कर्तरि ष्ट्रन् । उपधिः । अन्तर्धिः—'उपसर्गे घोः किः' इति किः । अन्तश्शब्दस्याङ्किविधिणत्वेषूपसर्गसंज्ञोक्ता । उपधिरेव औपधेयम्—'छदिरुपधिबलेर्ढञ्' इति स्वार्थे ढञ् । सुषन्धिः, दुष्षन्धिः—सुषामादित्वात् षत्वमिति धयतावेवावोचाम । विधिः—बाहुलकात्कर्तरि किः । उदकं धीयतेऽस्मिन्निति उदधिः—'कर्मण्यधिकरणे च' इति कर्मण्युपपदेऽधिकरणार्थे किः । 'पेषंवासवाहनधिषु च' इत्युदकस्योदभावः । असंज्ञार्थमिदं वचनम् । संज्ञायां तु 'उदकस्योदस्संज्ञायाम्' इत्येव सिद्धम् । शिरो धत्त इति शिरोधिः, ग्रीवा—बाहुलकात्कर्तरि किः । एवं 'विधाता विश्वसृड्विधिः[1]' इत्यादावपि । यद्वा शिरोधिशब्दे शिरो धीयतेऽस्यामिति 'कर्मण्यधिकरणे च' इति किप्रत्ययेऽस्तु व्युत्पत्तिः । अन्तर्धा, श्रद्धा—अन्तश्शब्दस्याङ्किविधिणत्वेषूपसर्गसंज्ञोक्ता । श्रच्छब्दस्यापि 'श्रच्छब्दस्योपसङ्ख्यानम्' इति । श्रद्धालुः—'स्पृहिगृहि' इत्यादिना आलुच् । दधि—'भाषायां धाञ्कृसृगमिजनिनमिभ्यः' इति किकिनोरन्यतरस्मिन् लिड्वद्भावाद् द्विर्वचनम् । धीवा—'अन्येभ्योऽपि दृश्यते' इति क्वनिपि 'घुमास्था' इतीत्वम् । धीवरी—'वनो र च' इति ङीब्रेफौ । बहवो धीवानोऽस्यां बहुधीवरी, बहुधीवा । बहुधीवे, बहुधीवानौ—'डाबुभाभ्यामन्यतरस्याम्' इति पक्षे ङीब्रेफौ डाप्च । 'अनो बहुव्रीहेः' इति निषेधाद् ङीपोऽभावश्च । धीवरः—'छित्वरचत्वर' इत्यादिना ष्वरचि निपात्यते । धातुः—'सितनिगमि' इत्यादिना तुन् । धानाः—'धापॄवस्यज्यतिभ्यो नः' इति नः । धाम—मनिन् । कर्कन्धूः—'अन्दूदृन्भूकर्कन्धूर्दिधिषूः' इति निपातनात् कर्कशब्दे उपपदे कूप्रत्ययः, अल्लोपः, उपपदस्य मुमागमश्च । दिधिषूः—पूर्वेण सूत्रेणैव निपातनात्कूप्रत्यय आकार-

---

१. अ० को० १।१।१७ ।

स्येकारो द्विर्वचनं षुगागमश्च । निधानम्---'कृवृवृजिमन्दिनिधाञ्भ्यः' इति क्युन् । 'अयं बाहुलकात्केवलादपि' इति धनम्--इत्यपि भवति । धनार्यति---धनं गृध्यतीत्यर्थः---'अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु' इति क्यचि धनशब्दस्य यथासङ्ख्याद्गर्धे आकारः । सर्वधनमस्यास्तीति सर्वधनी---'कर्मधारयान्मत्वर्थीयस्सर्वधनाद्यर्थः' इतीनिः 'न कर्मधारयान्मत्वर्थीयः' इत्यस्यापवादः । अपिदधाति, पिदधाति---'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति पक्षेऽल्लोपः । धयति इति पाने शपि । अत्रानुक्तं साधारणं तत्र द्रष्टव्यम् ॥ १० ॥

१९. णिजिर्[1] शौचपोषणयोः । एतदादयो विष्लृपर्यन्तास्त्रयोऽनुदात्तास्स्वरितेतः । नेनेक्ति । नेनिक्तः । नेनिजति । नेनेक्षि । नेनेज्मि । नेनिज्वः---'निजां त्रयाणां गुणः श्लौ' इत्यभ्यासस्य गुणः । झलि पदान्ते च 'चोः कुः' इति कुत्वे 'खरि च' इति चर्त्वम् । निनेज । निनिजतुः । निनेजिथ । निनिज । निनिजिव---क्रादिनियमादिट् । नेक्ता । नेक्ष्यति । नेनेक्तु, नेनिक्तात् । नेनिक्ताम् । नेनिग्धि---हेरपित्त्वान्ङित्त्वान्न गुणः । नेनिजानि---'नाभ्यस्तस्य' इति गुणनिषेधः । अनेनेक् । अनेनिक्ताम् । अनेनिजुः । अनेनेक् । अनेनिजम्---अन्तरङ्गत्वान्मिपोऽमि 'नाभ्यस्तस्याचि पिति' इति गुणनिषेधः । नेनिज्यात् । नेनिज्याताम् । नेनिज्याः । नेनिज्याम् । आशिषि---निज्यात् । अनिजत् । अनिजताम् । अनिजन् । अनिजः---'इरितो वा' इति च्लेर्वाङ् परस्मैपदे । अन्यदा---अनैक्षीत् । अनैक्ताम् । अनैक्षुः । अनैक्षीः । अनैक्षम् । अनैक्ष्व--'वदव्रज' इति वृद्धिः । झलि सिज्लोपः । नेनिक्ते । नेनिजाते । नेनिजते । नेनिक्षे । नेनिजे, नेनिज्वहे । निनिजे, निनिजिवहे । नेक्ता । नेक्ष्यते । नेनिक्ताम् । नेनिक्ष्व । नेनिजै । अनेनिक्त । अनेनिक्थाः । अनेनिजि । नेनिजीत । नेनिजीयाताम् । आशिषि---निक्षीष्ट । अनिक्त । अनिक्षाताम्---'लिङ्सिचावात्मनेपदेषु' इति लिङ्सिचोः कित्त्वान्न गुणः । निनिक्षति, निनिक्षते---'हलन्ताच्च' इति सनः कित्त्वम् । नेनिज्यते । नेनिजीति, नेनेक्ति । नेजयति । अनीनिजत् । निक्त्वा । निक्तः । निक्तवान् । निजः---इगुपधलक्षणः कः । निर्णेजकः--ण्वुल् । प्रणेनेक्ति---'उपसर्गादसमासेऽपि' इति णत्वम् 'उभौ साभ्यासस्य' इति लिङ्गात् कृते द्विर्वचने प्रवर्तते ॥ ११ ॥

२०. विजिर् पृथग्भावे । वेवेक्ति इत्यादि निजिवत् । 'विज इट्' इति इडादेः प्रत्ययस्य ङित्वे 'ओ विजी' इत्यस्यैव ग्रहणम्, नास्य; यदसौ 'सृजि विजि विद्ध्यनिट्स्वरान्' इत्यनिट् । अत्र च कारिकायां इरित्त्वसामर्थ्यात् स न गृह्यते । अनयेव कारिकया विचिरिति स्वामिनः प्रथमान्तस्य पाठः प्रत्युक्तः । निजिविजी द्वौ रुधादौ च । ओ विजी भयचलनयोः इति तुदादौ ॥ १२ ॥

---

१. 'निजिर्' इति धातुप्रदीपे मुद्रितः पाठ ।

२१. विष्लृ व्याप्तौ। वेवेष्टि। वेविष्टः—इत्यादि निजिवत्। 'ष्टुना ष्टुः'। वेक्ष्यति—'षढोः कस्सि' वेविड्ढि—ष्टुत्वे जश्त्वं डकारः। अवेवेट्—'झलां जशोऽन्ते' इति जश्त्वे चर्त्वम्। अविषत् इत्यादावतङि लृदित्त्वान्नित्यमङ्। तङि तु 'शल इगुपधादनिटः क्सः', अजादौ 'क्सस्याचि' इत्यल्लोपः—अविक्षत। अविक्षाताम्। अविक्षत इत्यादि। विष्यन्ते व्याप्यन्तेऽनेन प्रेक्षकाणां मनांसीति वेषः—'हलश्च' इति संज्ञायां घञ्। वेषेण सम्पादी वेष्यो नटः; वेष्या, वेश्या—'कर्मवेषाद्यत्' इति सम्पादिनि यत्। सम्पत्तिः शोभातिशयः। परिवेषः परिधिः—वेषवद्घञ्। वेवेष्टीति क्विपम्—इगुपधलक्षणः कः। विषमर्हतीति विष्यः—दण्डादित्वाद्यत्। विष्णुः—'विषेः किच्च' इति णुप्रत्ययः॥ १३॥

२२. वृत्। वृत्ता निजादयः। अत्र वृत्करणं प्रपञ्चार्थम्, त्रयाणामित्येव तत्फलस्य सिद्धत्वात्।

२३. निजादयस्स्वरितेतोऽनुदात्ताः। 'विषिरुदिदित्येके' इति स्वामी। धनपालोऽपि—'आर्याणामुदित्, द्रमिडानां लृदित्' इति। एवमेव पुषादिसूत्रे सुधाकरोऽपि॥

२४. घृ[1] क्षरणदीप्त्योः। गणान्ते 'छन्दसि' इति वक्ष्यते। तदेतदादीनां सर्वेषां शेषः। यदाह न्यासकारः—'ये निजादिभ्यः परे पठ्यन्ते ते सर्वे छान्दसाः, तथा हि तान्पठित्वा छन्दसीत्युक्तम्' इति। स्वामिकाश्यपाभ्यामपि छान्दसत्वमेवोक्तम्। "अर्त्तेश्छान्दसत्वादियर्तीत्यादौ 'बहुलं छन्दसि' इतीत्वे सिद्धे पुनः 'अर्तिपिपर्त्योश्च' इति इत्वविधानं भाषायामप्यस्य प्रयोगोऽस्तीति ज्ञापनार्थम्" इति वदता भाष्यकारेणाप्ययमर्थः स्फोरितः। अत एव भाष्यविरोधात् कातन्त्रोक्तमेषां भाषाविषयत्वमुपेक्ष्यम्। अत एव [2]पुरुषकारेऽपि "'घृप्रभृतयोऽपि छान्दसाः इति केचिद्' इति मैत्रेयग्रन्थमुपादाय "'केचिच्छब्दो भाष्यानुसारिणः' इत्येवं व्याख्येयः" इत्युक्तम्। जिघर्ति। 'जिघर्म्यग्निं मनसा घृतेन' इत्यादि भृञ्वत्। 'बहुलं छन्दसि' इतीत्वम्। घरतीति सेचने शपि॥ १४॥

२५. हृ प्रसह्यकरणे। 'अयं स्रुवो अभिजिहर्ति होमान्' इत्यादि। हरतीति शपि॥ १५॥

२६. ऋ सृ गतौ[3]। इयर्ति। इयृतः। इयृति। इयर्षि। इयर्मि। इयृवः—'अर्तिपिपर्त्योश्च' इति श्लावभ्यासस्येत्वे 'अभ्यासस्यासवर्णे' इति इयङि पिति गुणः। अन्यत्राजादौ यणादेशः। आर। आरतुः। आरिथ। आरिव—णिति वृद्धिः, अन्यत्र 'ऋच्छत्यृताम्' इति गुणः। उभयोः स्थानिवत्त्वाद् ऋशब्दस्य द्विर्वचनोर-

---

१. 'घृ घृ' इति मैत्रेयः। २. दै० पृ० ३६।

३. इतोऽग्रे क्षीरस्वामी 'कि ज्ञाने' इति सूत्रं पठति।

दत्वहलादिशेषेषु 'अत आदेः' इत्यभ्यासस्य दीर्घे सवर्णदीर्घः। थलि 'इडत्यर्तिव्ययतीनाम्' इति भारद्वाजनियमं बाधित्वा नित्यमिट्। इयर्तु, इयृतात्। इयृताम्। इयृतु। इयृहि, इयृतात्। इयराणि। ऐयः। ऐयृताम्। ऐयरुः। ऐयः। ऐयरम्। ऐयृव—पूर्ववदभ्यासस्येत्वेयङोराटि वृद्धिः। हल्ङ्यादिना तिस्योर्लोपः। जुसि गुणः। इयृयात्। इयृयाताम्। इयृयुः। इयृयाः। इयृयाम्। आशिषि अर्यात्। अर्यास्ताम्— 'गुणोर्तिसंयोगाद्योः' इति गुणः। आरत्। आरताम्। आरः। आरम्। आराव—'सर्तिशास्त्यर्तिभ्यश्च' इत्यङ्। 'ऋदृशोऽङि' इति गुणः। समियृते। समियृाते। समियृषे। समियृे। समारे। समारिषे। समारिवहे। समर्ता। समरिष्यते। समियृताम्। समियृाताम्। समियृध्व। समियरै—आटि गुणः। समैयृत। समैयृाताम्। समैयृथाः। समैयृि। समैयृवहि। समियृीत, समियृीयाताम्। समियृीथाः। समियृीय। आशिषि–समृषीष्ट। समृषीयास्ताम्। समारत। समारेताम्। समारन्त। समारथाः। समारे। समारावहि—'सर्तिशास्ति' इत्यत्र परस्मैपदानुवृत्तिरुत्तरार्थत्वात्मनेपदेऽपि वृत्तावङुक्तः। तथा च भट्टिः—'समारन्त ममाभीष्टाः[1]' इति। 'समो गम्यृच्छि' इत्यादिनाऽकर्मकात्सर्वत्र तङ्। यस्त्वत्र भाष्ये 'मासमृत, मासमृषाताम्' इति सिचः प्रयोगः, स भौवादिकस्य। अङ्विधौ तस्य ग्रहणं नेति तत्रैवोक्तम्। इयृति इत्यादौ 'अचः परस्मिन्' इति यणः स्थानिवत्त्वान्न वलि लोपः। 'यलोपविधिं प्रति न स्थानिवत्' इत्येतत्तु लोपाजादेशविषयम्। शेषं भौवादिकवत्॥ ससर्तीत्यादि यथादर्शनं छन्दसि। ऋच्छति सरतीति शपि॥ १६–१७॥

२७. घृप्रभृतय उदात्तेतोऽनुदात्ताः।

२८. भस भर्त्सनदीप्त्योः। 'कपिर्बभस्ति तेजनम्'। बब्धः[2]—'घसिभसोर्हलि च' इत्युपधालोपे 'झषस्तथोर्धोऽधः'। 'झलां जश् झशि' इति जश्त्वम्। बप्सति–उपधालोपे 'खरि च' इति चर्त्वम्। 'न पदान्त' इत्यादिना जश्त्वचर्त्वयोरुपधालोपस्य न स्थानिवत्त्वम्। अन्यदपि यथादर्शनम्। भस्म—'अन्येभ्योऽपि दृश्यते' इति भाषायामपि मनिन्। भस्त्रा–'हुयामा' इत्यादिना स्त्रन्। स्वभावात् स्त्रियाम्। भस्त्रिका, भस्त्रका। अभस्त्रिका, अभस्त्रका। परमभस्त्रिका, परमभस्त्रका—'भस्त्रैषा' इत्यादिना केवलस्य नञ्पूर्वस्य अन्यपूर्वस्य चास्य ककारात्पूर्वस्यात्स्थानिकस्याकारस्य वेत्वम्। भस्त्रया हरति भस्त्रिकः, भस्त्रिकी—'भस्त्रादिभ्यष्ठन्' इति हरत्यर्थे ष्ठन्। षित्त्वान्ङीष् स्त्रियाम्। न बभस्तीति नभः—'क्विप्' इत्यात्रेयः॥ १८॥

२९. कि ज्ञाने[3]।

---

१. भ० का० ८।१६।

२. 'बभस्तः' इति मैत्रेयप्रयोगस्तु धातोश्छान्दसत्वाच्चिन्त्य एव।

३. एतत्स्थाने क्षीरस्वामी 'कित ज्ञाने' इति सूत्रं पठति। मैत्रेयश्च 'कि कित ज्ञाने' इति।

३०. अनुदात्तः । चिकेति । चिकितः । चिक्यति इत्यादि । 'एरनेकाचः' इति यण् ॥ १९ ॥

३१. तुर त्वरणे । तुतोर्ति । तुतूर्तः । तुतुरति इत्यादि । तसि 'हलि च' इति दीर्घः । तुरः—इगुपधात्कः ॥ २० ॥

३२. धिष शब्दे । दिधेष्टि । दिधिष्टः इत्यादि ॥ २१ ॥

३३. धन धान्ये । दधन्ति । दधन्तः । दधनति इत्यादि ॥ २२ ॥

३४. जन जनने । जजन्ति इत्यादि ॥ २३ ॥

३५. क्यादय उदात्ता उदात्तेतः ।

३६. गा स्तुतौ[1] ।

३७. अनुदात्त उदात्तेत् । देवान् जिगाति । जिगीतः । जिगति इत्यादि । हलादौ क्ङिति सार्वधातुके 'ई हल्यघोः' इतीत्वम् । अजादौ तु 'स्नाभ्यस्तयोः' इत्याल्लोपः । गायति, गाते इति द्वयं शपि । इह 'छन्दसि' इति पठ्यते । तच्च घृप्रभृतीनां शेष इति प्रागेवोक्तम् ॥ २४ ॥

३८. वृत् । जुहोत्यादयो वृत्ता इत्यर्थः ।

इति पूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसङ्गमहाराजमहामन्त्रिणा[2]
मायणसुतेन माधवसहोदरेण[2] सायणाचार्येण विरचितायां
माधवीयायां धातुवृत्तौ जुहोत्यादयः ॥



१. सायणेनानुपदमेव व्याख्यातं 'छन्दसि' इति पदं क्षीरस्वामिना अत्र सूत्रे एव निवेशितम् । एवं च तस्यायं सूत्रपाठः—'गा स्तुतौ च छन्दसि' इति ।

२–२. क. ख. पुस्तकयोर्नास्ति ।

# ४. दिवादिगणः

१. दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोद[1]मदस्वप्न[1]कान्तिगतिषु । एतदादयो दीङ्पर्यन्ता उदात्ता उदात्तेतः । क्षिपिस्त्वनिट् । अक्षैर्दीव्यति । अक्षान् दीव्यति । दीव्यतः । दीव्यन्ति । दीव्यामि—'दिवादिभ्यश्श्यन्' इति श्यन् शपोऽपवादः । 'हलि च' इतीको दीर्घः । दिवः कर्म च' इति दिवस्साधकतमस्य करणस्य सतः कर्मसंज्ञाविधानाद् अक्षशब्दात् तृतीयाद्वितीये पर्यायेण भवतः । संज्ञासमावेशस्य प्रयोजनं मनसा दीव्यति, मनसादेवो नाम कश्चित् इत्यत्र मनसः कर्मत्वात्तस्मिन्नुपपदे अण्प्रत्ययः, करणत्वात्तृतीया च । अत्र तृतीयायाः 'मनसः संज्ञायाम्' इत्यलुक् । तथा अक्षैर्देवयते देवदत्तेनेत्यत्र संज्ञासमावेशेन करणानामेवाक्षाणां कर्मत्वाद् 'अणावकर्मकात्' इति परस्मैपदनियमो न भवति । किञ्च 'गतिबुद्धि' इति प्रयोज्यस्य कर्मत्वमपि न भवति । दिदेव । दिदिवतुः । दिदिवुः । दिदेविथ । दिदिविव । दिदिविम । देविता । देविष्यति । दीव्यतु । दीव्यताम् । दीव्य । दीव्यानि—'अतो हेः' इति हेर्लुक् । अदीव्यत् । अदीव्यताम् । अदीव्यः । अदीव्यम् । दीव्येत् । दीव्येताम् । दीव्येयुः । दीव्येः । दीव्येयम्—यासुटि 'अतो येयः' । आद्गुणः । यलोपो वलि । आशिषि—दीव्यात् । दीव्यास्ताम् । अदेवीत् । अदेविष्टाम् । अदेवीः । अदेविषम्—'नेटि' इति न वृद्धिः । दीव्यन् । दीव्यन्ती कुले, दीव्यन्ती ब्राह्मणी—'नपुंसकाच्च' इत्यौङश्शीभावः । ङीप् । उभयत्र '...श्यनोर्नित्यम्' इति शीनद्योः परतो नित्यं नुम् । दिदेविषति—'सनीवन्त' इति वेट् । अन्यदा 'हलन्ताच्च' इति सनः कित्त्वे 'च्छ्वोश्शूठ्' इत्यूठि यणादेशे—दुद्यूषति । देदीव्यते—'ऊठ्भाविनां वकारान्तानां यङ्लुग् नास्ति' इति भूवादौ प्रतिपादितम् । देवयति । अदीदिवत् । देवः, देवी—पचादिषु देवडिति पाठाद् इगुपधलक्षणं कं बाधित्वाऽचि टित्वान्ङीप् । देवस्यापत्यादि दैव्यम्, दैवम्—'दित्यदित्यादित्युत्तर' इत्यत्र 'देवस्य यञञौ' इति प्राग्दीव्यतीयेष्वर्थेषु यञञौ । देवस्येदं देवकीयम्—'गहादिभ्यश्च' इत्यत्र 'देवस्य चेति वक्तव्यम्' इति कुगागमश्छप्रत्ययश्च शैषिकः । 'नूनमस्य दैवानुग्रहः' इति भाष्यप्रयोगादणपि भवति । देव एव देवता—'देवात्तल्' इति स्वार्थे तल् । स्वभावात्स्त्रीत्वम् । देवतैव दैवतम्—प्रज्ञादित्वाद् अण् । 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति पुंनपुंसकत्वम् । पितृदेवतायै इदं पितृदेवत्यम्—

---

१, १. क्षीरतरङ्गिण्यां नास्ति ।

'देवतान्तात्तादर्थ्ये यत्' इति यत्। दैविकम्-अध्यात्मादित्वाट्ठञ्। आधिदैविकम्-पूर्ववट्ठञ्। 'अनुशतिकादीनां च' इत्युभयपदवृद्धिः। देवेषु वसति देवान् गच्छति देवत्रा—'देवमनुष्य' इत्यादिना त्राप्रत्ययः। देविका—देवीशब्दात्संज्ञायां कनि 'केऽणः' इति ह्रस्वः। देविकायां भवं दाविकम्। देविकाकूले भवाश्शालयः दाविकाकूलाः। पूर्वदेविका नाम प्राचां ग्रामः, तत्र भवः पूर्वदाविकः—'देविका-शिंशपा' इत्यादिना देविकाया अचामादेरच आकारः। अयं चाकार आद्योरुदाहरणयोः 'तद्धितेष्वचामादेः' इति वृद्धिप्रसङ्गे। इतरस्य तु 'प्राचां ग्रामनगराणाम्' इत्युत्तरपदवृद्धिप्रसङ्गे। सुदेविकायां भवं सौदेविकम् इत्यत्र देविकाया अनङ्गादित्वात् समुदायस्याप्राग्ग्रामवाचित्वाच्च नास्ति देविकायां वृद्धेः प्राप्तिरिति वृद्धिप्रसङ्गे विधीयमानोऽयमाकारोऽपि नैव प्रसजति। यस्तु ण्वुलन्तः क्रियाशब्दो देविकाशब्दः, न तस्येह ग्रहः; रूढ्या योगस्यापहारात्। तेन तत्र दैविकमिति वृद्धिरेव भवति। अत्र आत्रेयः—'देवको नाम क्षत्रियः, संज्ञायां ण्वुल्। तस्यापत्यं दैवकिः—अत इञि आदिवृद्धिः। 'इतो मनुष्यजातेः' इति ङीष्, दैवकीनन्दनः शौरिः। अवृद्धिस्त्वयमसाधुः' इति। आदेवकः—'देविक्रुशोः' इति ण्यन्तात् ताच्छील्यादौ वुञि। देवित्वा, द्यूत्वा—'उदितो वा' इतीड्विकल्पः। इटि 'न क्त्वा सेट्' इत्यकित्त्वाद्गुणः, अन्यदा 'च्छ्वोश्शूठ्' इत्यूठि यणादेशः। न च वर्णमात्राश्रयत्वेनान्तर्भूताश्रयत्वेन वाऽन्तरङ्गे यणि बाह्यप्रकृतिप्रत्ययापेक्षस्य बहिरङ्गस्योठः 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यसिद्धत्वम्; 'नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः' इति निषेधात्। अचोरानन्तर्यं यत्रान्तरङ्गे बहिरङ्गे वा विधावाश्रीयते न तत्र 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषा प्रवर्तत इत्यर्थः। आद्यूनः—'दिवोऽविजिगीषायाम्' इति निष्ठानत्वम्। विजिगीषायां तु द्यूतम्—'यस्य विभाषा' इत्यनिट्त्वम्। अक्षद्यूतेन निर्वृत्तम् आक्षद्यूतिकम्—'निर्वृत्तेऽक्षद्यूतादिभ्यः' इति ठक्। शतस्य दीव्यति-'दिवस्तदर्थस्य' इति कर्मणि षष्ठी। तच्छब्देन व्यवहृपणौ परामृश्येते। तदर्थत्वं च द्यूते क्रयविक्रययोश्च। शतस्य प्रतिदीव्यति, शतं प्रतिदीव्यति—'विभाषोपसर्गे' इति पूर्वेण नित्यं प्राप्तायां षष्ठ्यां तद्विकल्पः। किकीति दीव्यतीति किकीदिविः चाषः, दीर्घद्वितीयः। तथा च निघण्टुः—'अथ चाषः किकीदिविः[1]' इति। 'कृविघृष्विच्छविस्थविकिकीदिविः' इति किकीशब्दे उपपदे क्विनि निपात्यते। रत्नकोशानुसारिणस्तु दीर्घतृतीयं पठन्ति। तैत्तिरीयकेऽपि दृश्यते 'श्येनेन किकिदीविना', 'छगलं कल्माषं किकिदीविम्' इति दीर्घतृतीयान्त एव। द्यौः—'दिवेर्डिविः' इति न्यासे ऊहितसूत्रेण व्युत्पादितम्, 'दिव औत्' इति सौ औत्, यणादेशः। द्युभ्याम् इत्यादौ 'दिव उत्' इति दिवः पदस्योत्वम्। शूड्विधौ क्ङिद्ग्रहणाननुवृत्तिवादिनः 'परोऽप्यूठ् इहार्हविमलद्यु इत्यत्र सावकाशेनाप्युत्वेन

---

१. अ० को० २।५।१६।

तपरकरणसामर्थ्याद्बाध्यते' इति परिहरन्ति। दिव्ग्रहणं च धातोस्सानुबन्धकत्वेन न ग्रह इति अक्षद्यूः, अक्षद्युभ्यामित्यत्र क्विबन्ते औत्वोत्वयोर्नैव प्रसङ्गः। दिव्यम्—'द्युप्राक्' इति यत् शैषिकः, 'न भकुर्छुराम्' इति दीर्घनिषेधः। द्यावाभूमी—'दिवो द्यावा' इत्युत्तरपदे द्यावादेशः। द्यावापृथिव्यौ, दिवस्पृथिव्यौ—'दिवसश्च पृथिव्याम्' इत्युत्तरपदे दिवस्भावो द्यावादेशश्च। द्यावापृथिव्यौ देवता अस्य द्यावापृथिव्यम्, द्यावापृथिवीयम्—'द्यावापृथिवीशुनाशीर' इत्यादिना यच्छौ। ण्यन्ताद्देवयतेः क्वौ णिलोपे 'क्वौ लुप्तं न स्थानिवत्' इति स्थानिवत्त्वनिषेधाद् ऊठ्ययादेशे दयूः इति भवति। दय्वौ इत्यादौ 'ओस्सुपि' इति यणादेशः। द्यौरोको येषां ते दिवौकसः। अत्र विवदन्ते। 'दिव उत्' इत्यत्र रक्षितः—'उत्त्वे कृते शब्दपरविप्रतिषेधात्तस्य यणि दिवोकस इत्यवृद्धिः' इति। चान्द्रास्तु पूर्ववद्यणि ओकारस्य पृषोदरादित्वादवृद्धिमाहुः। अन्ये तु—"दीव्यन्त्यस्मिन्निति दिवम् 'घञर्थे कविधानम्' इति कः, तत्र 'वृद्धिरेचि' इति वृद्धिः" इति। अस्य वृद्धिविषय एव प्रयोग इति केचित्। अपरे तु—सर्वत्रेति। तथा च आत्रेयसुभूतिचन्द्राभ्यां प्रयोगो दर्शितः—'मरुत्वता वृत्रवधे यथादिवम्' इति। त्रिदशा दीव्यन्त्यत्रेति त्रिदिवः—पृषोदरादित्वाद् दशशब्दस्य लोपः, पूर्ववत्कः। यद्वा ब्रह्मविष्णुमहेश्वरास्त्रयो दीव्यन्त्यत्रेति व्युत्पत्तिः। देवते इति देवने शपि गतम् ॥ १ ॥

२. षिवु तन्तुसन्ताने। परिषीव्यति। निषीव्यति। विषीव्यति—'परिनिविभ्यः' इत्यादिना षत्वम्, 'सात्पदाद्योः' इति निषेधापवादः। परिषिषेव—इत्यादौ 'स्थादिष्वभ्यासेन चाभ्यासस्य' इत्यत्राभ्यासस्येति योगविभागेन "स्थादीनामेवाभ्यासस्य 'उपसर्गात्' इत्यादिना षत्वम्" इति क्रियमाणो नियमस्तत्र प्राक्सितादित्यनुवर्तनाद् इहाप्राक्सितीयेनेत्यभ्यासस्य षत्वं भवत्येव। परस्यापि 'इण्कोः' 'आदेशप्रत्यययोः' इति षत्वम्। उपपादितं चैतदेवं सहतौ। स्थादिसूत्रार्थः सेधतौ व्यक्तमुक्तः। अत्र आत्रेयः 'अभ्यासस्य षत्वं न' इत्याह, तत्सहतावेव दूषितम्। सेविता। सेविष्यति। सीव्यतु। पर्यषीव्यत्, पर्यसीव्यत्—'सिवादीनां वाड्व्यवायेऽपि' इति वा षत्वम्। एवं निविभ्यामपि। सीव्येत्। सीव्येताम्। आशिषि—सीव्यात्। पर्यषेवीत्, पर्यसेवीत्। पर्यषेविष्यत्, पर्यसेविष्यत्—पूर्ववत् षत्वविकल्पः। परिषिसेविषति, परिषिस्यूषति—'सनीवन्त' इतीड्विकल्पः, इडभावे 'हलन्ताच्च' इति सनः कित्त्वादूठ्। पूर्ववत् 'स्थादिषु' इति नियमाभावादभ्यासस्य षत्वम्। एवं निविभ्याम् परस्य तु न भवति, 'स्तौतिण्योरेव' इति नियमात्। सेवयति। सेवयति। पर्यसीषिवत् इत्यादौ 'स्तम्भुसिवुसहां चङि' इत्यभ्यासस्य 'परिनिविभ्यः' इति प्राप्तस्य षत्वस्य निषेधः। स्यूत्वा, सेवित्वा—उदित्त्वादिड्विकल्पः। स्यूतः—'यस्य विभाषा'। स्यूतिः—'तितुत्र' इतीण्णिषेधः। सेवनम्, सीवनम्—पृषोदरादित्वाद्वा दीर्घः। तथा च चान्द्राः—'ष्ठिवुसिवोर्दीर्घश्च' इति।

प्रसीव्यन्ति तमिति प्रसेवकः—'अकर्तरि च कारके' इति घञन्तात्संज्ञायां कन्। वीणाप्रान्ते वक्रं काष्ठमुच्यते। 'हलश्च' इति वा घञन्तात्कन् द्रष्टव्यः। सूनः—'सिवेष्टेरू च' इति नप्रत्यये टेरूकारः। दीर्घोच्चारणसामर्थ्यान्न गुणः। स्योनशब्दस्तु बाहुलकान्नप्रत्यये ऊठि यणि गुणे। सूत्रम्—'सिविमुच्योष्टेरू च' इति ष्ट्रन्, टेरुकारश्च। टित्त्वात् स्त्रियां सूत्री। अभ्यासार्थं तन्तुः॥ २॥

३. स्त्रिवु गतिशोषणयोः। स्त्रीव्यति इत्यादि दीव्यतिवत्। सिस्त्रेविषति, सुस्त्रूषति—इवन्तत्वादिड्विकल्पः। इडभावे 'हलन्ताच्च' इति कित्त्वे 'ज्वरत्वर' इत्यादिना वकारोपधयोरूठि द्विर्वचनम्। सेस्त्रीव्यते। सेस्त्रोति। सेस्त्रूतः। सेस्त्रिवति। सेस्त्रोषि। सेस्त्रोमि। सेस्त्रूवः। सेस्त्रूमः—झलादावनुनासिकादौ क्वौ च उपधावकारयोः 'ज्वरत्वर' इत्यादिना ऊठ्। स्त्रेवित्वा, स्त्रूत्वा - उदित्त्वादिड्विकल्पः। स्त्रूतः—'यस्य विभाषा' इत्यनिट्त्वम्। स्त्रूतिः—'तितुत्र' इत्यनिट्त्वम्। स्त्रूः, स्त्रुवौ—क्वौ पूर्ववदूठ्, अजादावुवङ्। 'ओस्सुपि' इति यण् संयोगपूर्वत्वान्न भवति॥ ३॥

४. ष्ठिवु निरसने। ष्ठीव्यति इत्यादि सीव्यतिवत्। तिष्ठेव इत्यादौ अभ्यासे खयश्शेषः। अत्र वक्तव्यं भूवादौ ष्ठेवतावुक्तम्। 'सुब्धातुष्ठिवुष्वष्कतीनाम्' इति षः सकारनिषेधः। अमुं धातुम् आत्रेयादयः पठन्ति, अन्ये[1] तु न पठन्ति। यदाह 'धात्वादेष्षस्सः' इत्यत्र न्यासकारः—'ष्ठिवुं दिवादिष्वपि केचिदधीयते' इति॥ ४॥

५. ष्णुसु अदने[2]। आदाने इत्येके। अदर्शने इत्यपरे। 'धात्वादेष्षस्सः' स्नुस्यति। सुष्णोस। सुष्णुसतुः। सुष्णोसिथ। सुष्णुस, सुष्णोस। सुष्णुसिव—'आदेशप्रत्यययोः' इत्यभ्यासात्परस्य षत्वे ष्टुत्वम्, 'रषाभ्याम्' इति णत्वं वा। स्नोसिता। स्नोसिष्यति। स्नुस्यतु। अस्नुस्यत्। अस्नुस्यः। स्नुस्येत्। आशिषि—स्नुस्यात्। अस्नौषीत्। अस्नौसिष्टाम्। अस्नौषीः—'नेटि' इति सिचि वृद्धेरभावः। सुस्नुसिषति, सुस्नोसिषति। स्नुसित्वा, स्नोसित्वा—'रलो व्युपधात्' इति वा कित्त्वम्। 'स्तौतिण्योः' इत्यभ्यासात्परस्य न षत्वम्। सोष्णुस्यते। सोष्णुसोति, सोष्णोस्ति। सोष्णुस्तः। स्नोसयति। असुष्णुसत्। स्नुषा—इगुपधलक्षणे के टाप्, सुषुमादित्वाद् षत्वम्। 'औणादिकः' इत्यात्रेयः। 'ष्णुस निरसने' इत्येके। 'मिच्च' इत्यात्रेयमैत्रेयौ उदुपधं चाहतुः। स्वामिकाश्यपौ तु अदुपधमसुमेव पठित्वा 'ष्णुस अदर्शने इति द्रमिडाः' इत्युकारोपधं पक्षान्तरमाहतुः। तत्र मित्त्वं 'जनीजॄष्क्नसु' इति पाठाश्रयेण। स्नस्यति। सस्नाष इत्यादि। षोपदेशस्य प्रयोजनं णौ स्नसयति। असिष्णसत्। सिष्णसयिषति इति॥ ५॥

६. क्रसु ह्वरणदीप्त्योः। ह्वरणं कौटिल्यम्। क्रस्यति। चक्रास। क्रसिता। क्रसिष्यति। क्रस्यतु। अक्रस्यत्। क्रस्येत्। आशिषि क्रस्यात्—अक्रसीत्, अक्रासीत्—'अतो

1. क्षीरस्वामिन्यासकारप्रभृतयः। 2. 'ष्णसुं निरसने' इति क्षीरस्वामी।

ह्लादेः' इति वा वृद्धिः । चक्रसिषति । चाक्रस्यते । चाक्रस्ति । क्रसयति । अचिक्रसत्—'जनीजॄष्क्रसु' इति मित्त्वम् । क्रसित्वा, क्रस्त्वा—उदितो वा' इतीड्विकल्पः । क्रस्तः—'यस्य विभाषा' इतीण्णिषेधः । चक्रसः—घञर्थे कः । कृञादीनां के द्वे भवतः' इति द्वित्वम् ॥ ६ ॥

७. व्युष दाहे । दन्त्योष्ठ्यादिः मूर्धन्यान्तश्च । तथा च वैद्यके त्रिकटुकपर्याये व्योषशब्दः पठ्यते । अयमग्रे पुषादौ विभागे पठिष्यते, तत्फलं तत्रैवाङ्सिद्धिः । कचिद्[1] उभयत्र विभागार्थो दन्त्यान्त ओष्ठ्यादिश्च पठ्यते । तत्र पुनः पाठे फलमेकत्रैवार्थे रूपद्वयसिद्धिः । व्युष्यति । वुव्योष । वुव्योषिथ । वुव्युषिव । व्योषिता । व्योषिष्यति । व्युष्यतु । अव्युषत् । व्युष्येत् । आशिषि—व्युष्यात् । अव्योषीत्, अव्योषिष्टाम् । वुव्युषिषति, वुव्योषिषति । व्युषित्वा, व्योषित्वा—पूर्ववत्कित्त्वविकल्पः । वोव्युष्यते । व्योव्युषीति, वोव्योष्टि । व्योषयति । अवुव्युषत् । व्युषितः ॥ ७ ॥

८. प्लुष च[2] । प्लुष्यति इत्यादि पूर्ववत् । अयं पुषादावपि पठ्यते । 'फलमङोऽपि[3] सिद्धिः[3]' इति स्वामी ॥ ८ ॥

९. नृती गात्रविक्षेपे । नृत्यति । ननर्त । ननृततुः । ननर्तिथ । ननृतिव । नर्तिता । नर्तिष्यति, नर्त्स्यति 'सेऽसिचि' इति सिज्वर्ज्यस्य सकारादेरिड्विकल्पः । नृत्यतु । अनृत्यत् । नृत्येत् । आशिषि नृत्यात् । अनर्तीत् । अनर्तिष्टाम् । निनर्तिषति, निनृत्सति—हलन्ताच्च' इत्यनिटि कित्त्वम् । नरीनृत्यते—क्षुभ्नादिषु 'नृत्यतेर्यङि' इति पाठाण्णत्वनिषेधः । नर्नर्ति, नरिनर्ति, नरीनर्ति इत्यादि—रुग्रीग्रीकः । नर्तयति, नर्तयते । अनीनृतत्, अननर्तत्—'उर्ऋद्वा' । अस्य चलनार्थत्वाद् अणावकर्मकत्वाच्च 'निगरणचलने' इत्यादिना योगद्वयेन कर्त्रभिप्राये क्रियाफले यत् परस्मैपदं प्राप्तं तत् 'न पादमि' इत्यादिना निषिध्यते । नृत्यम्—'ऋदुपधात्' इति क्यप् । नर्तकः, नर्तकी—'शिल्पिनि ष्वुन्' इति ष्वुन्, तत्र नृतिखनिरञ्जिभ्यः परिगणनम् । नृत्तः, नृत्तवान्—"ईदित्करणम् 'यस्य विभाषा' इत्यस्यानित्यत्वज्ञापनार्थम् । तेन धावित इत्यादि सिद्ध्यति" इति आत्रेयमैत्रेयौ । स्वामिकाश्यपौ तु 'अवयवेऽचरितार्थत्वाद् यङ्लुङ्निवृत्त्यर्थम्' इति । अत्र 'यस्य विभाषा' नास्ति, 'सेऽसिचि' इत्यत्र एकाच इत्यनुवृत्तेरिड्विकल्पस्यैवाभावादिति तयोरभिप्रायः । नृतूः—दीर्घाकृतिः—'नृतिशृध्योः कूः' इतिकूप्रत्ययः ॥ ९ ॥

१०. त्रसी उद्वेगे । त्रस्यति, त्रसति—'वा भ्राश' इति श्यन्विषये पक्षे शप् । तत्रास । तत्रसतुः, त्रेसतुः । तत्रसिथ, त्रेसिथ 'वा जॄभ्रमुत्रसाम्' इति किति लिटि थलि च सेटि एत्वाभ्यासलोपविकल्पः । त्रसिता । त्रसिष्यति । त्रस्यतु, त्रसतु । अत्रस्यत्, अत्रसत् । त्रस्येत्, त्रसेत् । आशिषि त्रस्यात् । अत्रासीत्, अत्रसीत् । तित्र-

१. क्षीरतरङ्गिण्यादौ । २. 'दाहे' इति क्षीरस्वामी ।
३–३. पाठोऽयं क्षीरतरङ्गिण्यां नोपलभ्यते ।

त्रिषति । तात्रस्यते । तात्रस्ति, तात्रसीति । त्रासयति । अतित्रसत् । त्रस्नुः—'त्रसिगृधि' इत्यादिना क्नुः । त्रस्तः, त्रस्तवान्—ईदित्त्वादनिट्त्वम् । तरङ्गापत्रस्तः—'अपेतापोढ' इति पञ्चमीसमासः । त्रासः—घञ् । रत्नदोषो भयं च । त्रस धारणे चुरादौ ॥ १० ॥

११. कुथ पूतीभावे । पूतीभावो दुर्गन्धः । कुथ्यति । चुकोथ, चुकोथिथ । कोथिता । कोथिष्यति । कुथ्यतु । अकुथ्यत् । कुथ्येत् । आशिषि—कुथ्यात् । अकोथीत् । चुकुथिषति, चुकोथिषति—'रलो व्युपधात्' इति कित्त्वविकल्पः । अयं क्त्वायां न, 'नोपधात्थफान्ताद्वा' इत्यत्र नोपधग्रहणसामर्थ्यात् । तेन 'न क्त्वा सेट्' इत्यकित्त्वात् कोथित्वा इति भवति । तत्र हि नोपधग्रहणस्य एवमादिरनोपधः प्रत्युदाहरणम् । यद्यत्र 'रलः' इति विकल्पः स्यात्किं नोपधग्रहणेन ! न च ऋफ ऋम्फि हिंसायामित्यनोपधः फान्तऋफतिः, प्रत्युदाहरणम् अर्फित्वा इति, अत्र हि 'न क्त्वा सेट्' इति नित्यं कित्त्वनिषेधः, नैतदस्ति; त्रैशब्द्यं हि नस्साध्यम्—अर्फित्वा, ऋफित्वा, ऋम्फित्वा इति, तच्च असत्यपि नोपधग्रहणे सामान्येन विकल्पप्रवृत्तावपि भविष्यति । चोकुथ्यते । चोकोत्ति । कोथयति । अचूकुथत् । कुथः—इगुपधलक्षणः कः । कुथितमनेन प्रकुथितः—'उदुपधात्' इति कित्त्वविकल्पोऽत्र न भवति, तत्र अन्यतरस्यांग्रहणस्य व्यवस्थितविकल्पत्वात् शब्विकरणानामेव ग्रह इति । तथा च भाष्ये 'उदुपधाच्छपः' इति । कुन्थतीति हिंसायां शपि गतम् ॥ ११ ॥

१२. पुथ हिंसायाम् । पुथ्यति इत्यादि 'कुथ्यति'वत् । पुन्थतीति शपि गतम् ॥ १२ ॥

१३. गुध परिवेष्टने । अयं चतुर्थान्तः गुध्यति इत्यादि । गुधित्वा—'मृडमृद' इत्यादिना सेटः क्त्वः कित्त्वम् । गोधा—भिदादिपाठाद् अङि गुणः । गोधिका—संज्ञायां कनि 'केऽणः' इति ह्रस्वे 'प्रत्ययस्थात्' इतीत्वम् । गोधाया अपत्यं गौधेरः—'गोधाया ढ्रक्' इति ढ्रक् । गौधारः—'आरगुदीचाम्' इत्यारक् । 'उदीचाम्' ग्रहणात् पक्षे 'स्त्रीभ्यो ढक्' इति ढकि गोधेयः । गोधूमः—'गुधेरूम' इत्यूगः । रोषेऽयं क्र्यादिः ॥ १३ ॥

१४. क्षिप प्रेरणे । क्षिप्यति । चिक्षेप । क्षेप्ता । क्षेप्स्यति । क्षिप्यतु । अक्षिप्यत् । क्षिप्येत् । आशिषि—क्षिप्यात् । अक्षैप्सीत् । अक्षैप्ताम् । चिक्षिप्सते । चेक्षिप्यते । चेक्षेप्ति । क्षेपयति । अचिक्षिपत् । क्षिप्त्वा । क्षिप्तः । क्षिपः—इगुपधलक्षणः कः । क्षिपका—अज्ञातादौ कः । 'प्रत्ययस्थात्' इतीत्वस्य 'क्षिपकादीनां चोपसङ्ख्यानम्' इति निषेधः । क्षिप्नुः—'त्रसिगृधिधृषि' इत्यादिना क्नुः । परिक्षेपी—सम्पृचादिना घिनुण् । परिक्षेपकः—'निन्दहिंस' इत्यादिना वुञ् । क्षिपा—भिदादिपाठादङ् । क्षिप्रम्—'ऋजेन्द्र' इत्यादिना रक् । क्षेपिष्ठः, क्षेपीयान् । क्षेपयति—'स्थूलदूर' इत्यादिना 'णाविष्ठवत्' इति यणादेर्लोपः, पूर्वस्य च गुणः । सम्पृचादिसूत्रे

वृत्तिकारेण 'क्षिपिर्दिवादिस्तुदादिश्च गृह्यते' इत्युक्तत्वात् । 'द्वाविमावम्भसि क्षिप्य गले बध्वा महाशिलाम्' इति, 'संक्षिप्य संरम्भमसद्विपक्षम्[1]' इति भारते भट्टिकाव्ये च दर्शनात्, पारायणिकैः क्षिपेरिह पाठोऽयुक्त इति भूसूत्रे सुधाकरेण प्रतिपादितम् । कृतस्तौदादिकस्यापि समानाः । 'स्वरेण नीचेन शपिं छुपिं क्षपिम्' इति पाठाद-यमनिट् । 'अयं चुरादावदन्तः' इत्यात्रेयः ॥ १४ ॥

१५. पुष्प विकसने । पुष्प्यति । पुपुष्प । पुपुष्पिथ । पुपुष्पिव । पुष्पिता । पुष्पिष्यति । पुष्प्यतु । अपुष्प्यत् । पुष्प्येत् । पुष्प्यात् । अपुष्पीत् । पुपुष्पिषति । पोपुष्प्यते । पोपुष्पि । पुष्पयति । अपुपुष्पत् । पुष्पम्—अच् । पुष्पकम्–संज्ञायां कन् । शणपुष्पी—'पाककर्णपर्णपुष्प' इत्यादिना ङीष् । सत्पुष्पा, प्राक्पुष्पा, प्रत्यक्पुष्पा, काण्डपुष्पा, प्रान्तपुष्पा, शतपुष्पा, एकपुष्पा—'सदक्काण्डप्रान्तशतैकेभ्यः पुष्पात्' इत्यजादिपाठात् पुष्पोत्तरपदलक्षणं ङीषं बाधित्वा टाप् । अगिति क्विन्नन्तोऽञ्चती-त्युच्यते । पुष्पित्वा । पुष्पितः—'निष्ठा', तारकादित्वादितज्वा ॥ १५ ॥

१६. तिम स्तिम ष्टीम आर्द्रीभावे । तिम्यति । तितेम । तेमिता । तेमिष्यति । तिम्यतु । अतिम्यत् । तिम्येत् । आशिषि—तिम्यात् । अतेमीत् । तितेमिषति । तितिमिषति । तेतिम्यते । तेतेम्ति । तेमयति । अतीतिमत् ॥ स्तिम्यति । तिष्टेम इत्यादि । अभ्यासे खयश्शेषः ॥ स्तीम्यति इत्यादि । 'अत्र केचिद्[2] असंयोगादि 'तीम' इति दीर्घान्तं चतुर्थमपि धातुं पठन्ति' इत्यात्रेयः । तिमिः–'इगुपधात् कित्' इतीन्प्रत्ययः । तिमिरम्—'इषिमदि' इत्यादिना किरच् ॥ १६–१८ ॥

१७. व्रीड चोदने । 'चोदनं लज्जा' इति स्वामी । 'लज्जायमप्यधीयते' इति मैत्रेयः । आत्रेयस्तु 'व्रीड चोदने लज्जायाम्' इति । व्रीड्यति । विव्रीड । विव्रीडिथ । विव्रीड । विव्रीडिव । व्रीडिता । व्रीडिष्यति । व्रीड्यतु । अव्रीड्यत् । व्रीड्येत् । व्रीड्यात् । अव्रीडीत् । विव्रीडिषति । वेव्रीड्यते । वेव्रीड्टि । व्रीडयति । अविव्रीडत् । व्रीडित्वा । व्रीडितः । व्रीडः—घञ् । व्रीडा—'गुरोश्च' इत्यकारः ॥ १९ ॥

१८. इष गतौ । 'इष्यति—इषुगमियमाम्' इत्यत्र 'क्सस्याचि' इत्यतोऽचीत्यनु-वर्तते, 'ष्ठिवुक्लमु' इत्यतः शितीति च । तत्र शितोऽचो विशेषणादित्संज्ञकशकारा-दावचि छत्वविधिरितीह न भवति । ये तु तौदादिकमुदितं पठित्वा छत्वविधावपि तथा पठन्ति तेषां न कश्चित्क्लेशः । इयेष । ईषतुः । इयेषिथ । ईषिव—पित्सु गुणे द्विर्वचनम् । 'अभ्यासस्यासवर्णे' इतीयङ् । अन्यत्र सवर्णदीर्घः । प्रेषिता । प्रेषि-ष्यति—गुणे 'वृद्धिरेचि' इति वृद्धिं बाधित्वा 'एङि पररूपम्' । इष्यतु । इष्य । इष्याणि । ऐष्यत् । इष्येत् । आशिषि इष्यात् । ऐषीत् । इषिषिषति । एषयति । मा भवानीषिषत्—'ओणेर्ऋदित्करणाद् द्विर्वचनात्पूर्वं ह्रस्वः' इत्युक्तम् । एषित्वा ।

---

१. भ० का० २।५२ । २. क्षीरस्वामिप्रभृतयः ।

इषितः–'तीषसह' इति तादौ क्वीयमान इड्विकल्पः। 'इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः' इत्युक्तत्वादिह न भवति। प्रैषः, प्रैष्यः—घञ्ण्यतौ। 'प्रादूहोढोढ्येषैष्येषु वृद्धिर्वक्तव्या' इति एङि पररूपापवादो वृद्धिः। अन्वेषणा–'इषेरनिच्छार्थस्य युज्वक्तव्यः' इति युच्। पर्येषणा, परीष्टिः—'परेर्वा' इति युच्क्तिचौ। एषणी—एषणः करणे' इति गौरादिपाठान्ङीष्। इषीका—'इषेः किच्च' इतीकन्प्रत्ययः। इष्टका–'इष्यशिभ्यां तकन्' इति तकन्। किदित्यनुवर्तनान्न गुणः। इषीकतूलम्, इष्टकचितम्—इष्टकेषीका' इति चिततूलयोरुत्तरपदयोर्ह्रस्वः। अत एवेष्टकेति निर्देशात् 'प्रत्ययस्थात्' इति इत्वं न भवति। तदन्तविधिना पक्वेष्टकचितम् इत्यपि भवति। 'अयं चुरादावपि' इति स्वामी। इष इच्छायां तुदादिः। इष आभीक्ष्ण्ये क्र्यादिः॥२०॥

१९. षुह चक्यर्थे[1]। 'चक्यर्थस्तृप्तिः' इति स्वामिधनपालशाकटायनाः। आत्रेयमैत्रेयदुर्गाः 'षह षुह' इति द्वौ धातू पेठुः। सहेरिह पाठो न्यासकारहरदत्तरामदेवादीनामप्यनभिमतः, यत्तत्र तत्र सहिग्रहणे भौवादिकमेवाहुः, नामुम्। न चास्याग्रहणे कारणम्। 'दाश्वान्साह्वान्' इत्यत्र "साह्वानिति 'षह मर्षणे' इत्यस्मात्परस्मैपदं निपात्यते" इति वृत्तिमुपादाय "षह मर्षणे इत्यात्मनेपदित्वात् चौरादिकस्य तु 'आधृषाद्वा' इति णिजभावपक्षे दीर्घत्वमद्वित्वमनिट्त्वं च निपात्यत इत्यन्ये" इति वदता हरदत्तेनेह सहेरपाठः स्फोरितः। 'साह्वानिति निपातनं आधृषीयाद्विभाषितणिचः' इति वदन् कैयटकारोऽप्यत्रैवानुकूलः। सहिं पठतां सह्यतीत्याद्युदाहार्यम्। षत्वादि सहतिवन्नेयम्। अत्र परिषह्यतीत्याद्युदाहृत्य 'परिनिविभ्यः' इति षत्वमिति वदता आत्रेयेण यदुक्तम्—"'यत्तु तत्र षह मर्षणे इत्यस्य ग्रहणं न्यासे प्रतिपादितं नैतस्यापि' इति तदनागममिति नादरणीयम्" इति अस्यैव धातोरभावाद् न तस्यायं दोषः। स्वव्याघातकं चात्रेयवचनम्, यद्वक्ष्यति—"'तीषसह' इतीड्विकल्पः सहेति शबन्तस्य सूत्रे निर्देशात् नास्य" इति। तच्च यस्मात् षत्वविधावपि तुल्यम्। सुह्यति। सुषोह। सोहिता। सोहिष्यति। सुह्यतु। असुह्यत्। सुह्येत्, सुह्यात्—लिङौ। असोहीत्। सुसुहिषति, सुसोहिषति। सुहित्वा। सोसुह्यते। सोषुहीति, सोषोढि। सोहयति। असूषुहत्। फलानां सुहितः—'पूरणगुण' इति षष्ठीसमासनिषेधः॥ २१॥

सेट्परस्मैपदप्रसङ्गात् अजन्तावपि तादृशावाह—

२०. जृष् झृष् वयोहानौ। जीर्यति। जीर्यतः—'ॠत इद्धातोः' इतीत्वे रपरत्वे 'हलि च' इति दीर्घः। जजार। जजरतुः। जजरुः। जजरिथ। जजरथुः। जजार, जजर। जजरिव–'ॠच्छत्यॄताम्' इति किति गुणः। अकिति तु यथायोगं पूर्वविप्रतिषेधेन

---

१. 'शक्यर्थे' इति तरङ्गिणीपाठोऽयुक्तः। 'शक्यार्थे' इति धातुप्रदीपे।

गुणवृद्धी। अस्तु वा तत्रापि 'ऋच्छति' इति गुणः। कृते तस्मिन् वृद्धिस्तु 'अत उपधायाः' इति भविष्यति। गुणे तु तेन वा सत्यनेन वापि न विशेषः। 'वा जॄ-भ्रमुत्रसाम्' इत्येत्वाभ्यासलोपपक्षे जेरतुः। जेरुः। जेरिथ। जेरथुः। जेर। जेरिव। जरिता, जरीता। जरिष्यति, जरीष्यति—'वृतो वा' इत्यलिटो वा दीर्घः। जीर्यतु। अजीर्यत्। जीर्येत्, जीर्यात्—लिङौ। अजारीत्। अजारिष्टाम्—'वृतः' इत्यस्य 'सिचि परस्मैपदेषु' इति निषेधः। अजरत्। अजरताम्—जॄस्तम्भु' इति पक्षे च्लेर्वाऽङ्। 'ऋदृशोऽङि' इति गुणः। जिजीर्षति, जिजरिषति, जिजरीषति—'इट् सनि वा' इति वेट्। तस्य 'वृतः' इति वा दीर्घः। अनिटि सनः कित्वादित्वदीर्घयोर्द्विर्वचनम्, अन्यथा यङि जेजीर्यते इति न स्यात्। जरयति। अजीजरत्—'जनिजॄष्' इति मित्वाद् ह्रस्वः। जीर्यन्। जीर्यन्ती—'शप्श्यनोः' इति नित्यं नुम्। जरन्, जरती—इत्येतत् 'जीर्यतेरतृन्' इति जीर्यतेरतृनि। जरद्गवः—'पूर्वकाल' इति समासः। 'गोरतद्धितलुकि' इति टच्। युवजरती—'युवाखलति' इत्यत्र लिङ्गविशिष्टग्रहणाद् युवतिशब्देन समासे पुंवद्भावः। अजर्यम्—'अजर्यं सङ्गतम्' इति कर्तरि सङ्गते यत् निपात्यते; असङ्गते तु अजरिता कम्बलः। जरा—षित्वादङि 'ऋदृश' इति गुणः। जरे, जरसौ—'जराया जरसन्यतरस्याम्' इत्यादौ सुपि वा जरसादेशः। जरामतिक्रान्तं ब्राह्मणकुलं अतिक्रान्तैः कुलैरिति विगृह्य 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समस्य नपुंसकह्रस्वत्वे सोरम्भावे भिसश्चैसि सन्निपातपरिभाषाया अनित्यत्वाश्रयेणास्याजादित्वमाश्रित्य जरसादेशे अतिजरसम्, अतिजरसैरिति भाव्यम्। तथा टाङस्योरपि जरसादेशात्पूर्वमिनादादेशयोः पश्चाज्जरसादेशे अतिजरसिना, अतिजरसात् इति केचित्। तेषामतिजरसं ब्राह्मणकुलं पश्येत्यत्र अमो लुकं बाधित्वाऽम्भावे प्राप्ते, ततः परत्वाज्जरसादेशे तदाश्रयस्य लुको न प्रवृत्तिः, सन्निपातपरिभाषया अनित्यत्वादिति वाच्यम्। गोनर्दीयस्तु 'सर्वत्र परिभाषाप्रवृत्तेस्सोरमि भिसश्चैसि टाङस्योरिनादादेशयोश्च जरसादेशाभावाद् अतिजरम्, अतिजरैः, अतिजरेण, अतिजराद्' इत्याह। अतिजरांसि इत्यत्र जश्शसोश्शीभावे नुमः परत्वाज्जरसादेशे पश्चाज्झलन्तादेशाश्रयो नुम्, अन्यथाऽङ्गभक्तो नुम् तदवयवस्य जरशब्दस्य विभक्तेश्च आनन्तर्यं व्यवदध्यात्। अनुजीर्णो वृषलीं देवदत्तः, अनुजीर्णा वृषली देवदत्तेन—'गत्यर्थाकर्मक' इत्यादिना कर्तृकर्मणोः क्तः। 'श्र्युकः किति' इति 'यस्य विभाषा' इति वाऽनिट्त्वम्। जरयतीति जारः—'दारजारौ कर्तरि णिलुक्च' इति कर्तरि घञि णिलुक्। यद्यत्र णेर्घञि 'णेरनिटि' इति लोपस्स्यात्, तर्हि तस्य स्थानिवत्त्वाद् अनुपधात्वादकारस्य घञाश्रया वृद्धिर्न स्यात्। मित्त्वाण्णिजपेक्षायास्तु वृद्धेर्ह्रस्वः स्यात्। लुकि तु लुका लुप्तत्वात् 'लुका लुप्तं न स्थानिवत्' इति स्थानिवत्त्वनिषेधः। अयमषित् क्र्यादौ युजादौ चेति मैत्रेयादयः। अत्र आत्रेयः किञ्चिदाह-'जॄव्रश्च्योः क्त्वः' इतीड्विधौ सानुबन्धकत्वादस्याग्रहणात् 'श्र्युकः किति' इति

निषेधे जीर्त्वा इति भवितव्यमिति स्वयमेव सानुबन्धकत्वेऽपि 'जृस्तम्भु' इत्यङि ग्रहणं चाह। एवंनियमे कारणं स प्रष्टव्यः। योऽसौ निरनुबन्धकस्स वृत्तितद्व्याख्यानकृतामनभिमतः। यदि हि स्याद् अङादिविधौ निरनुबन्धकमेवोपाददीरन्, अग्रहणे कारणं वा ब्रूयुः। किञ्च 'दारजारौ कर्तरि णिलुक्च' इति णिलुग्वचनं चानर्थकं स्यात्; यतः षित्त्वेनामितोऽस्माण्णौ कर्तरि घञि णेश्च लोपे प्रत्ययलक्षणेन वृद्धिर्भविष्यति। तथा च क्र्यादौ मैत्रेयो वक्ष्यति जृणाति पठित्वा 'धॄ इत्येके' इति[1]। जरन्तः—'जॄविशिभ्यां झच्' इति झच्। 'झोऽन्तः'॥ झीर्यति इत्यादि जीर्यतिवत्। श्लेरङेत्वाभ्यासलोपमित्त्वाद्यस्य न भवति। झरः, निर्झरः—अप्। झर्झरः औणादिकः इति आत्रेयः। वाद्यविशेषः। झर्झरवादनं शिल्पमस्य झार्झरः, झार्झरिकः 'मड्डुकझर्झरादणन्यतरस्याम्' इत्यण्ठकौ।॥ २२–२३॥

२१. दिवादयः परस्मैभाषा उदात्ताः क्षिपिवर्जम्[2]।

२२. षूङ् प्राणिप्रसवे। सूयते। सूयेते। सूयसे। सूये। सूयावहे। सुषुवे। सुषुविवहे। सोता, सविता। सोष्यते, सविष्यते—"स्वरतिसूतिसूयति' इति वलादाविड्विकल्पः। लिट्यमुं विकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात् 'श्र्युकः किति' इति प्रतिषेधे प्राप्ते क्रादिनियमान्नित्यमिट्। सूयताम्। सूयेताम्। सूयस्व। सूयै। असूयत। असूयेताम्। असूयथाः। असूये। असूयावहि। सूयेत। सूयेयाताम्। सूयेथाः। सूयेथ। सूयेवहि। आशिषि—सोषीष्ट, सविषीष्ट। सोषीयास्ताम्, सविषीयास्ताम्। असोष्ट। असोषाताम्। असोष्ठाः। असोषि। असविष्ट इत्यादि पूर्ववदिड्विकल्पः। सुसूषते—'सनि ग्रहगुहोश्च' इति निषेधे कित्त्वादगुणत्वम्। अयमपि निषेधः पुरस्तादारम्भात् स्वरत्यादिविकल्पं बाधते। 'स्तौतिण्योरेव' इत्यषत्वम्। सूत्वा। सूनः, सूनवान्—'स्वादय ओदितः' इत्योदित्त्वाद् 'ओदितश्च' इति निष्ठानत्वम्। अयमसूयार्थोऽपि। तेन देवदत्ताय सूयते इति 'क्रुधद्रुह' इति चतुर्थी भवतीत्यात्रेयः। अत्र प्राणिग्रहणमतन्त्रम्। तेन प्रसूनास्तरव इति भवति। अन्ये तु 'सर्वे भावास्सचेतनाः' इत्यत्र प्राणित्वमाहुः। तथा च 'प्रसूनं कुसुमं सुमम्[3]' इत्यत्र सुभूतिचन्द्रः—'षूङ् प्राणिप्रसवे। क्षपणकमतेन वृक्षस्यापि प्राणित्वम्' इति। अनुक्तं सूतिवत्॥ २४॥

२३. दूङ् परितापे। परितापः खेदः। दूयते इत्यादि सूयतिवत्। इट् त्वस्य नित्यः॥ २५॥

२४. आत्मनेभाषावुदात्तौ।

२५. दीङ् क्षये। एतदादयोऽनुदात्ता आत्मनेपदिनः प्रीङ्पर्यन्ताः। दीङ् तु सेट्। दीयते। दिदीये। दिदीयाते। दिदीयिरे। दिदीयिषे। दिदीयिढ्वे। दिदीये। दिदी-

---

१. धातुप्रदीपेऽयं पाठो मूले नोपलभ्यते। २. सूत्रमिदं क्षीरस्वामी 'जृष्...' इत्यतः पूर्वमेव पठति। ३. अ० को०।२।४।१७।

यिवहे । क्रादिनियमादिट् । 'दीङो युडचि क्ङिति' इत्यजादावार्धधातुके क्ङिति युडागमः । स च 'एरनेकाचः' इति यणि कर्तव्ये 'असिद्धवदत्र' इति नासिद्धः, 'वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ' इत्युक्तत्वादत्र ध्वमि 'विभाषेटः' इति मूर्धन्यविकल्पो न भवति । कृते युटि प्रत्ययभक्तेनानेन इणन्तादङ्गात्परत्वमिटो विहितमिति 'इणष्षीध्वम्' इति नित्यमेव भवतीत्येके । अपरे तु—अङ्गादिति नानुवर्तते इति युट एव यणः परत्वान्मूर्धन्यविकल्पमाहुः । उक्तं चैतत्पक्षद्वयं वृत्तौ । दाता । दास्यते—'मीनातिमिनोतिदीङां ल्यपि च' इति एज्विषये ल्यपि च आत्वम् । दीयताम् । दीयेताम् । दीयस्व । दीयै । अदीयत । अदीयेताम् । अदीयिथाः । अदीये । दीयेत । दीयेथाः । दीयेय । आशिषि—दासीष्ट इत्यादि । एज्विषयत्वादात्वम् । अदास्त । अदासाताम् । अदास्थाः । अदासि—अत्रात्वे कृते दारूपत्वेऽपि 'दीङः प्रतिषेधः स्थाघ्वोरित्वे' इति इत्वकित्त्वयोर्घुसंज्ञा निषिध्यते । अत एव विषयविशेषे घुत्वनिषेधादन्यत्र[1] कृतात्वस्य घुसंज्ञायां प्रणिदाता इत्यादि भवतीत्येके । अन्ये तु—'यावतामुपदेशस्थानामनुकरणं दाधारूपं भवति, तेषामेव घुत्वम् । दोदेङ्धेटामप्यनुकरणवशेन दारूपमेव । दीङस्तु नेति नैवैतस्य क्वापि घुसंज्ञाप्रसङ्गः' इति । उक्तमिदं पक्षद्वयं कैयटपदमञ्जर्यादिष्वपि । उपदिदीषते—'इको झल्' इति सनः कित्त्वादेज्विषयत्वाभावान्नात्वम् । कातन्त्रे—दिदासते इत्यात्वमुक्तम् । अत्र शाकटायनः आत्वप्रकरणे 'अम्यवगुरो वा दीङस्सनि' इत्यात्वविकल्पमाह । अमिति णमुलुच्यते । स्वामी तु 'उपदिदीषते, उपदिदासते इत्यपीष्यते' इति । काश्यपस्तु 'आत्वपक्षे दिदासते इत्येके' इत्युक्त्वा 'संग्रहे इत्वव्यतिरिक्तस्य घुकार्यस्योक्तत्वाद् इस्भावे उपदित्सते' इत्याह । इदमात्वं सूत्रवार्त्तिकभाष्येषु न दृश्यते । देदीयते । देदेति । देदीतः । देयति । दापयति—एज्विषयत्वाभावादात्वे पुक् । दीत्वा । दीनः, दीनवान्—'स्वादयः ओदित' इति निष्ठानत्वम् । उपदाय—'मीनातिमिनोतिदीङां ल्यपि च' इत्यात्वम् ॥ २६ ॥

२६. डीङ् विहायसा[2] गतौ । डीयते । डिड्ये । डिड्यिषे—'एरनेकाचः' इति यण् । डयिता । डयिष्यते । डीयताम् । अडीयत । डीयेत, डयिषीष्ट—लिङौ । अडयिष्ट[3] । डिडयिषते । डेडयते । डेडेति । डाययति । अडीडयत् । डयित्वा । डीनः, डीनवान्—स्वादिषु पाठसामर्थ्यादनिट्त्वं निष्ठायाम् । इटि हि व्यवधानात् 'ओदितश्च' इति नत्वस्याप्रसङ्गः । डयितशब्दस्तु भौवादिकस्य । तत्र "'निष्ठाशीङ्' इत्यत्र 'निष्ठा' इति योगविभागादकित्वम्"' इति सीरदेवादयः ॥ २७ ॥

७ धीङ आदाने[4] । धीयते । दिध्ये । धेता । धेष्यते । धीयताम् । अधीयत ।

---

१. 'घुत्वनिषेधा....' इति ख. पुस्तके । २. क्षीरस्वामी न पठति ।

३. अडैष्ट' इति ख. पुस्तके पाठश्चिन्त्य एव, धातोस्सेट्कत्वात् ।

४. 'आधारे' इति चीरस्वामी । 'अनादरे' इति मैत्रेयः ।

धीयेत । धेषीष्ट । अधेष्ट । दिधीषते । धीत्वा । धीनः, धीनवान् । न धीनः अधीनः । यस्तु 'अस्मास्वधीनं किमु निस्पृहाणाम्'[1] इत्यादावधीनशब्दः, सोऽव्युत्पन्नः परतन्त्रवचनः । यथाह कैयटः—'वाक्यं वक्तर्यधीनं हि' इत्युपादाय—'अध्युत्तरपदात्खविधानाद् अव्युत्पन्न आयत्तार्थवृत्तिरधीनशब्दः' इति ॥ २८ ॥

२८. मीङ् हिंसायाम् । अत्र हिंसाशब्देन हिंसाफलं प्राणविश्लेषोऽभिधीयते । मीयते इत्यादि धीङ्वत् । मिमीषते इत्यत्र 'सनिमीमा' इति नेस्भावः । तत्र 'मीनातिमिनोत्योर्द्वयोर्ग्रहणम्' इति हि वृत्तिकारः । काश्यपस्वामिवर्धमानास्तु 'लाक्षणिकमीरूपस्य मिनोतेरग्रहणशङ्कापनोदनपरा वृत्तिः, न त्वस्याग्रहणपरा' इति मित्सते इतीच्छन्ति । एषाम् 'इको झल्' इत्यत्र 'मीनातिमिनोत्योः' इति भाष्यमप्युपलक्षणं व्याख्येयम् । मीनातीति क्र्यादौ । डुमिञ्रिति ह्रस्वान्तस्स्वादौ । मी गताविति चुरादौ ॥ २९ ॥

२९. रीङ् स्रवणे[2] । रीयते । रीये । रीयिषे—'एरनेकाचः' इति यणः 'असिद्धं बहिरङ्गमन्तरंगे' इत्यसिद्धत्वात् 'उपधायां च' इति दीर्घो न भवति । रेता । रेष्यते । रीयताम् । अरीयत । रीयेत, रेषीष्ट—लिङौ । अरेष्ट । रिरीषते । रेरीयते । रेरेति । रेपयति । अरीरिपत्—'अर्तिह्री' इत्यादिना पुक् । रीणः, रीणवान् । रीतिः । रेतः—'स्रुरीभ्यां तुट् च' इत्यसुनि तुडागमः । अत्रात्रेयः—'अर्थनिर्देशे शृणोतेरयं प्रयोग इति केचित् । तथा च रीणशब्दः कर्णपर्यायः कथितः । भट्टिकाव्ये च वृन्दयमके 'नारीणामपनुनुदुर्न देहखेदान्नारीणाऽमलसलिला हिरण्यवाप्यः'[3] इत्यत्र अरीणम् अस्रुतम् अमलं सलिलमिति स्रवणे[2] व्युत्पादितम् । री गतिरेषणयोरिति क्र्यादौ ॥ ३० ॥

३०. लीङ् श्लेषणे । लीयते । लिल्ये । लिल्यिषे । लाता, लेता । लास्यते, लेष्यते । लीयताम् । लीयस्व । लीयै । अलीयत । लीयेत । आशिषि—लासीष्ट, लेषीष्ट । अलास्त, अलेष्ट—'विभाषा लीयतेः' इति विभाषाऽऽत्वमेज्विषये । ल्यपि त्वयं विकल्पो न भवति, तस्य कित्वेनानेज्विषयत्वात् । लिलीषते—'इको झल्' इति कित्त्वान्न गुणात्वविकल्पौ । लेलीयते । लेलेति—'लीयतेः' इति श्तिपा निर्देशाद् आत्वविकल्पो न भवति । विलालयति घृतम्, विलापयति, विलीनयति, विलाययति वा—पूर्ववदात्वविकल्पः । तत्रात्वपक्षे 'लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने' इति वा लुगागमः । तदभावे पुक् । तत्र हि 'ला' इति लाक्षणिकमपि गृह्यते । अनात्वे तु नुक् । तदभावे वृद्धयायौ । एकदेशविकृतन्यायेन कृतात्वस्य नुङ् न भवति, ली ई इति ईकारप्रश्लेषेण ईकारान्तस्य तद्विधानात् । स्नेहविपातनादन्यत्र नुग्लुकौ न भवत इत्यात्वे पुक्, अन्यदा वृद्धायौ विलापयति,

१. किरा० ३।९ । २. 'श्रवणे' इति सर्वत्र पुस्तकेपु मुद्रितः पाठः ।
३. भ० का० १०।१३ ।

विलाययति इति । स्यादिषु चिण्वदिटि आत्वपक्षे णेर्लोपे विलालिष्यते, विलापिष्यते इत्यादि । अनात्वे विलीनिष्यते, विलायिष्यते इत्यादीति । शुद्धेऽपि तु विलालयिष्यते, विलापयिष्यते, विलीनयिष्यते, विलाययिष्यते इत्यादि । तदेवमष्ट रूपाणि । लुङ्येकवचने तु 'चिण्भावकर्मणोः' इति चिण्यात्वे नुकि तदभावे च वृद्धौ अलालि, अलापि, अलीनि, अलायि इति चातूरूप्यम् । द्विवचनादौ सिचि पूर्ववदष्ट रूपाणि । कर्मकर्तरि 'णिश्रन्थिग्रन्थि' इति चिणो निषेधाच्चङि द्विर्वचनादावात्वपक्षे अलीललत, अलीलपत । अन्यदा अलीलनत, अलीलयत इति चातूरूप्यम् । एवं द्विवचनादावपि । जटाभिरालापयते, आलाययत इति वा, पूजामधिगच्छतीत्यर्थः । श्येनो वर्तिकामुल्लापयते न्यक्करोति इत्यर्थः । 'लियः सम्माननशालिनीकरणयोश्च' इत्यनयोश्चकारात् प्रलम्भने चाकर्त्रभिप्रायेऽपि तङ् । तत्र सम्माननं पूजनम्, तच्च धात्वर्थस्य कर्मतया विषयः । तस्य चात्मनेपदसहितेन धातुनोपात्तत्वात् अस्मिन्विषयेऽकर्मकोऽयं पुत्रीयतिवदित्याहुः । 'शालिनीकरणं न्यक्करणम् । प्रलम्भनं मिथ्याफलाख्यानम्' इत्युक्तम् । 'विभाषा लीयतेः' इत्यात्वं व्यवस्थितविभाषाविज्ञानात्सम्मानने विकल्पितम्; अन्यत्र नित्यम् । विलाय, विलीय—'विभाषा लीयतेः' इति वाऽऽत्वम् । विलयः—अच् । ईषद्विलयः—खल् । 'निमिमील्यां खलचोरात्वप्रतिषेधः' इति वा व्यवस्थितविभाषात्वेन वाऽऽत्वाभावः । लीनः । ली श्लेषणे इति क्र्यादौ । ली द्रवीकरणे इति चुरादौ ॥ ३१ ॥

३१. व्रीङ् वृणोत्यर्थे । दन्त्योष्ठ्यादिः । व्रीयते । विव्रिये—संयोगपूर्वत्वाद्यण् न भवति । व्रेता इत्यादि रीवत् ॥ ३२ ॥

३२. स्वादय ओदितः । 'षूङ् प्राणिप्रसवे' इत्यारभ्य एतदन्ता ओदितः । तत्फलम् 'ओदितश्च' इति निष्ठानत्वम् । व्री वरणे इति क्र्यादौ ।

३३. पीङ् पाने । पीयते । पिप्ये इत्यादि रीवत् । पाययति—'निगरण' इति नित्यं परस्मैपदम् । पाययते इति पिबतेः, 'न पादमि' इति परस्मैपदनिषेधात्तङ् । पीत्वा । पीतः । पीतवान् । आपीय । आपाय इति पिबतेः ॥ ३३ ॥

३४. माङ् माने । अयं कैश्चिदेव पठ्यते । यदाह स्वामी—'माङ् माने' इति दुर्गः' इति । तथा 'घुमास्था' आदिसूत्रे न्यासेऽपि "'मा' इति कस्येदं ग्रहणम्, किं मेङ् प्रणिदान इति भौवादिकस्य, उत माङ् माने इति जौहोत्यादिकस्य, आहोस्विद् मा माने इत्यादादिकस्य ? 'गामादाग्रहणेष्वविशेषः' इति त्रयाणामपि ग्रहणम्" इति । तथा 'द्यतिस्यति' इत्यत्र 'सनिमीमा' इत्यत्राप्युक्तानामेव त्रयाणां ग्रहणमित्युच्यते । पठतामीकारान्तमध्ये पाठः पवर्गीयाद्यात्मनेपदप्रसङ्गात् । मायते । ममे । माता । मास्यते । मायताम् । अमायत । मायेत, मासीष्ट—लिङि । अमास्त इत्यादि । अन्यस्मिन् मातिवत् ॥ ३४ ॥

३५. ईङ् गतौ । ईयते । अयाञ्चक्रे—व्यपदेशिवद्भावाद् इजादित्वगुरुमत्त्वयोराम् । एता । एष्यते । ईयताम् । ऐयत । ईयेत, एषीष्ट—लिङौ । ऐष्ट । ईषिषते । आययति । आयियत । प्रेय, प्रतीय—ल्यप् । उपेयम्—'अचो यत्' । क्यब्विधावेतीति निर्देशान्नास्य ग्रहः । अयते इति शपि । एति, अध्येति, अधीयते इति लुकि ॥ ३५ ॥

३६. प्रीङ् प्रीतौ । अकर्मकः । प्रीयते । पिप्रिये इत्यादि व्रीवत् । प्राययति—'धूञ्प्रीञोर्नुग्वचनम्[1]' इति नुग्विधौ ञित उपादानादस्य स न भवतीति धातुवृत्तिकारः । हरदत्तस्तु 'श्नान्तानुकरणे दैवादिकस्य न भवति' इति । 'दैवादिकस्य ग्रहणेन च चौरादिकेऽप्युपलक्षयितव्यः[2]' इति पुरुषकारे । कौमारास्तु व्यक्तमेव 'धूञ् प्रीणात्योः' इति पठन्ति । प्रियः—'इगुपधज्ञाप्रीकिरः कः' इति आत्रेयः । वृत्तौ तु प्रीणातीति प्रियः इति क्रैयादिक एव उदाह्रियते । प्रेष्ठः, प्रेयान्, प्रेमा—'प्रियस्थिर' इत्यादिना प्रादेशः । प्रियमाचष्टे प्रापयति—'णाविष्ठवत्' इति प्रादेशे वृद्धिपुकौ । प्रीञ् तर्पणे इति क्र्यादौ चुरादौ च ॥ ३६ ॥

३७. दीङादय आत्मनेपदिनो दीङ्वर्जमनुदात्ताः । स तु 'श्विडीङिवर्णेषु' इति वचनात्सेट् ।

अथ अजन्तानिट्प्रकरणात्तादृशः परस्मैपदिनः पठति—

३८. शो तनूकरणे । एतदादयो द्यतिपर्यन्ता अनुदात्ता उदात्तेतः । श्यति । श्यतः । श्यन्ति । श्यसि । श्यामि—'ओतश्श्यनि' इत्योकारलोपः । शशौ । शशतुः । शशाथ, शशिथ । शश । शशिव—आत्वे द्विर्वचनम् । 'आत औ णलः' । क्रादिनियमादिट् । भारद्वाजनियमात्थलीड्विकल्पः । इडादावजादावार्धधातुके च क्ङिति 'आतो लोप इटि च' इत्याकारलोपः । शाता । शास्यति । श्यतु, श्यतात् । श्यताम् । श्यन्तु । श्यानि । अश्यत् । अश्यः । अश्यम् । श्येत् । श्येताम् । श्येः । श्येयम् । आशिषि शायात् । शायास्ताम् । अशात् । अशाताम् । अशुः । अशाः—'विभाषा घ्राधेट्शाच्छासः' इति सिचः परस्मैपदे परे वा लुक् । 'आतः' इति झेर्जुस् । 'उस्यपदान्तात्' इति पररूपम् । लुगभावे अशासीत, अशासिष्टाम् इत्यादि । 'यमरमनमाताम्' इति सगिटौ । शिशासति । शाशायते । शाशेति । शाययति आत्वे 'शाच्छासा' इति युक् । शात्वा, शीत्वा । निशातम्, निशितम्—'शाच्छोरन्यतरस्याम्' इति तादौ किति वेत्वम् । व्यवस्थितविभाषाविज्ञानाद्व्रते नित्यमित्वम् । तथा च वार्त्तिकम्—'श्यतेरित्वं व्रते नित्यमिति वक्तव्यम्' इति—संशितव्रतः । शाकः—बाहुलकादौणादिकः कन् । महच्छाकं नानाजातीयं शाकसमाहारो वा । शाकी—गौरादित्वान्ङीष् । शाकिनः—'शाकीपलालीदद्र्वा ह्रस्वत्वं च' इति मत्वर्थे

[1] म० भा० ७।३।३७ । [2] दै० २६ पृ० ।

नप्रत्ययो ह्रस्वत्वं च। अतएव वा निर्देशान्ङीप्। शादम्—'शाशपिभ्यां ददनौ' इति दन्। शाद्वलम्—'नडशादाड्ड्वलच्' इति वलच्चातुरर्थिकः। डित्वाट्टिलोपः ॥३७॥

३९. छो छेदने। छ्यति। चच्छौ। चच्छतुः—इत्यादि सर्वं श्यतिवत्। अत्र 'अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्ते' इति 'दीर्घात्' इत्यन्तरङ्गेणापि तुकाऽभ्यासह्रस्वबाधात् कृते तस्मिन् 'छे च' इति तुक्। पूर्वं तु तुक्यभ्यासस्यानजन्तत्वाद् ह्रस्वो न स्यात्। 'अभ्यासविकारेषु' इति परिभाषायाम् 'अपवादग्रहणमुत्सर्गग्रहणञ्च बाधकमात्रस्य बाध्यमात्रस्य चोपलक्षणम्, न तु सामान्यविशेषैकमात्रपरम्' इत्युक्तम्। चिच्छासति इत्यत्र यथा 'अभ्यासविकारेषु' इत्यनेन 'दीर्घात्' इति तुक् ह्रस्वत्वं न बाधते, तथा 'छे च' इति तुगपि 'सन्यतः' इति इत्वं न बाधते इति परत्वात्कृते तस्मिन्तुक्। चाच्छायते इत्यत्रापि पूर्ववद्दीर्घलक्षणात्तुकः पूर्वं ह्रस्वत्वे ह्रस्वलक्षणोऽपि तुगित्ववद्दीर्घत्वं न बाधते इति दीर्घे कृते 'दीर्घात्' इति तुक्। छाया—'माच्छाससिसूभ्यो यः' इति यः। इक्षूणां छाया इक्षुच्छायम्—'छाया बाहुल्ये' इति छायान्तस्य तत्पुरुषस्य अनञ्कर्मधारयस्य नपुंसकत्वे ह्रस्वत्वम्। नञ्कर्मधारये तु अच्छाया, परमच्छाया इति। इह बाहुल्यं पूर्वपदार्थधर्मः, तच्च छायाहेतुभूतानामिक्ष्वादीनामनेकत्वम्। अन्यथा 'विभाषा सेनासुराच्छायाशालानिशानाम्' इति नपुंसकत्वविकल्पः—इक्षोः छाया इक्षुच्छायम्, इक्षुच्छाया इति ॥ ३८ ॥

४०. षो अन्तकर्मणि। स्यति। ससौ इत्यादि सर्वं श्यतिवत्। अभिष्यति, अभिष्यता, अभ्यषत्, अभ्यषासीत्—'उपसर्गात्सुनोति' इति 'प्राक्सितात्' इति च षत्वम्। अभिससौ इत्यत्र 'स्थादिष्वभ्यासेन' इति नियमाद् अभ्यासस्य न षत्वम्। अभिषिषासति इत्यत्र पूर्ववदभ्यासस्य न षत्वम्। उत्तरस्य तु 'इण्कोः' इति षत्वम्। प्रणिष्यति, प्रण्यष्यद्—'नेर्गद' इत्यादिना णत्वम्। तच्च अड्व्यवायेऽपीष्यते। सेषीष्टे 'घुमास्था' इतीत्वं हलादौ क्ङित्यार्धधातुके। आशीर्लिङ्यात्वे 'एर्लिङि' इत्येत्वे सेयात् इति। अवसाय—'न ल्यपि' इतीत्वनिषेधः। सित्वा, सितः—'द्यतिस्यति' इतीत्वम्। 'परिनिविभ्यः' इत्यत्र सित इत्यस्यापि ग्रहणम्, तच्च नियमार्थम्। तेन पर्यादिभ्योऽन्यत्र सितशब्दस्य षत्वाभावात् प्रतिसितम् इत्यत्र न षत्वमित्येके। अन्ये तु—"सयसाहचर्याद् अलाक्षणिकत्वादिविधिसम्भवे नियमायोगाद् विधिवैषम्यप्रसङ्गाच्च सिनोतेरेव सितशब्दस्य ग्रहणमित्यस्य 'उपसर्गात्' इति षत्वं सर्वत्र भवत्येव" इत्याहुः। अवस्यतीति अवसायः—'श्याद्व्यध' इत्यादिना णे युक्। सायः—घञ्। साये भवः सायंतनः—'सायञ्चिरम्' इत्यादिना ट्युट्युलोरन्यतरः प्रत्ययः, तुडागमः, मान्तत्वं च सायशब्दस्य। वस्तुतो मान्तोऽव्ययं सायशब्दः, तस्याव्ययत्वादेव प्रत्ययस्सिद्धः। सातिः—'ऊतियूति' इत्यादौ निपातनात् क्तिनीत्वाभावः ॥ ३९ ॥

४१. दो अवखण्डने । द्यति । ददौ—इत्यादि श्यतिवत् । प्रणिद्यति—घुत्वात् 'नेर्गद' इत्यादिना णत्वम् । देयात्—'एर्लिङि' इत्येत्वम् । अदात्—'गातिस्था' इत्यादिना नित्यं सिचो लुक् । देदीयते—'घुमास्था' इतीत्वम् । दित्सति—'सनि मीमा' इत्यादिना इस् । अभ्यासलोपः । 'सस्सि' इति तत्वम् । दापयति—पुक् । दित्वा, दितः—'द्यतिस्यति' इतीत्वम् । अवदाय—'न ल्यपि' इतीत्वनिषेधः । इत्वस्य तु नैव प्रसङ्गः; 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते' इति पूर्वमेव ल्यप्प्रवृत्तेः; तादिकितोऽभावात् । अवदत्तम् इत्यादौ इत्वात्परत्वात् 'अच उपसर्गात्तः' इत्येतद्भवति । अन्यदपीह घुकार्यं ददातिवज्ज्ञेयम् ॥ ४० ॥

४२. श्यतिप्रभृतयोऽनुदात्ताः परस्मैभाषाः ।

अथ हलन्तानात्मनेपदिनः सेटः परामृशति—

४३. जनी प्रादुर्भावे । इतः प्रभृति वाश्यन्ता उदात्ता अनुदात्तेतः । प्रादुर्भाव उत्पत्तिरभिव्यक्तिर्वा । अत्रायमकर्मकः । यदा त्वन्तर्भावितण्यर्थं उत्पादनायामभिव्यञ्जनायां वा वर्तते तदा सकर्मकः । दृश्यते दाशतये—'अजा ह्यग्नेरजनिष्ट गर्भम्' तथा 'अचः कर्तृयकि' इत्यत्र भाष्यमपि 'जायते स्वयमेव' इति । अत्र ह्यन्तर्भावितण्यर्थत्वेन कर्मस्थभावकत्वात् कर्मकर्तृत्वम् । तथाऽनुपूर्वोऽयं यदाऽऽत्मजन्मपूर्वके प्रापणे वर्तते तदापि सकर्मकः—'असौ कुमारस्तमजोऽनुजातः'[1] इति । जननेन तं प्राप्त इत्यर्थः । शृङ्गाच्छरो जायते—'ज्ञाजनोर्जा' इति जादेश इत्संज्ञकशकारादौ प्रत्यये । 'जनिकर्तुः प्रकृतिः' इति जायमानस्य कारणं शृङ्गम् अपादानम् । जज्ञे । जज्ञाते । जज्ञिषे । जज्ञिवहे—'गमहन' इत्युपधालोपः । तस्य स्थानिवत्त्वाद् द्विर्वचनम् । 'स्तोः श्चुना' इति श्चुत्वम् । जनिता । जनिष्यते । जायताम् । जायस्व । जायै । अजायत । जायेत, जनिषीष्ट—लिङौ । अजनि । अजनिष्ट । अजनिषाताम्—'दीपजन' इति कर्तरि तशब्दे च्लेर्वा चिण् । 'जनिवध्योश्च' इति वृद्धिनिषेधः । अन्तर्भावितण्यर्थादस्मात् कर्मकर्तरि कर्मवद्भावाद् नित्यश्चिण्—अजनि स्वयमेव इति । जिजनिषते—'जनसनखनां सञ्झलोः' इत्यात्वं सन इटि झलादित्वाभावान्न भवति । झलादिश्च सन् सनोतेरेव सम्भवतीति तदर्थमेव सन्ग्रहणम् । जाजायते, जञ्जन्यते—'ये विभाषा' इति जनादीनां वा यकारादौ क्ङित्यात्वम् । जञ्जनीति, जञ्जन्ति । जनयति—'बुधयुधनशजन' इति कर्त्रभिप्रायेऽपि क्रियाफले परस्मैपदम् । 'जनिजॄष्' इति मित्त्वाद्ध्रस्वत्वम् । ण्यन्तात्कर्मणि 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इति वा ह्रस्वत्वे अजनि, अजानि—इति । जन्यो घटः, जन्यं घटेन—'तकिशसिचतियतिजनीनाम्' इति यत् । स च 'भव्यगेय' इत्यादिना कर्तृभावयोः । 'ये विभाषा' इति नात्वम्, अकित्वात् ।

१. रघु० ६।७८ ।

जनः—पचाद्यच् । घञ्यपि 'जनिवध्योश्च' इति वृद्धिनिषेधात्—जनः । जनानां समूहो जनता—'ग्रामजनबन्धुसहायेभ्यस्तल्' इति तल् । जनस्य जल्पो जन्यः—'मतजनहलात् करणजल्पकर्षेषु' इति जल्पे यत्प्रत्ययः । जनेषु साधु, जनं जनं प्रति वा प्रतिजनम्—सप्तम्यर्थे वीप्सायां वाऽव्ययीभावः । प्रातिजनीनः—'प्रतिजनादिभ्यः खञ्' इति 'तत्र साधुः' इति विषये खञ् । विश्वजनाय हितं विश्वजनीनम्—'आत्मन्विश्वजन' इति खः । पञ्चजनीनम्—'पञ्चजनादुपसङ्ख्यानम्' इति खः । सार्वजनिकः, सर्वजनीनः—'सर्वजनाट्ठञ्च' इति ठञ्खौ । त्रय एते कर्मधारयादेवेष्यन्ते । षष्ठीतत्पुरुषे बहुव्रीहौ च 'तस्मै हितम्' इति छो भवति—विश्वजनीयः, पञ्चजनीयः, सर्वजनीयः इति । महाजनाय हितं माहाजनिकम्—'महाजनान्नित्यं ठञ्वक्तव्यः' इति ठञ् । अयं तत्पुरुषादेवेष्यते । बहुव्रीहौ तु छो भवति—महाजनीयः इति । पञ्चजनेषु भवं पाञ्चजन्यम्—'बहिर्देवपञ्चजनेभ्यश्च' इति ञ्यः । प्रावृषिजः—'सप्तम्यां जनेर्डः' इति डः । 'प्रावृट्छरत्कालदिवां जे' इति सप्तम्या अलुक् । एवं शरदिजः—इत्यादि । वर्षेजः, वर्षजः । क्षरेजः, क्षरजः । शरेजः, शरजः । वरेजः, वरजः—'विभाषा वर्षक्षरशरवरात्' इति जे परे सप्तम्या वा अलुक् । बुद्धेर्जातो बुद्धिजः—'पञ्चम्यामजातौ' इति डः । अनुजः, प्रजा—'उपसर्गे च संज्ञायाम्' इति डः । अप्रजाः, दुष्प्रजाः, सुप्रजाः—"नित्यमसिच्प्रजामेधयोः" इति नञ्दुस्सुभ्यः परस्य प्रजाशब्दस्यासिच् प्रत्ययो बहुव्रीहौ । स्त्रियमनुजातः स्त्र्यनुजः—'अनौ कर्मणि' इति डः । आत्मनो जननेनाग्रजां स्त्रियमवरत्वेन प्राप्त इत्यर्थः । अपरे तु—'अनुना रुधिराक्षिप्यते, तदपेक्षं स्त्रियाः कर्मत्वमिति स्त्रियमनुरुध्य जात इत्यर्थः' इति विवृण्वते । न जायत इति अजः—द्विर्जायत इति द्विजः—द्वितीयजननम् उपनयनम् ब्राह्मणजो धर्मः, क्षत्रियजं युद्धम् । अभिजाः केशाः—'अन्येष्वपि दृश्यते' इति डः । बीजम्—पूर्ववत् डः । बीजाकरोति बीजेन सह कर्षतीत्यर्थः । 'बीजशब्दो बीजावापसहिते विलेखने वर्तते' इति हरदत्तः । 'कृञो द्वितीयतृतीयशम्बबीजात्कृषौ' इति कृञो योगे कृषावभिधेयायां द्वितीयादिभ्यो डाच् । 'ऊर्यादिच्विडाचश्च' इति निपातः 'गतिश्च' इत्यव्ययत्वं पूर्वप्रयोगश्च । बीजादिति निर्देशात् दीर्घो बत्वं चोपसर्गस्य । प्रजनिष्णुः—'अलंकृञ्' इत्यादिना इष्णुच् । अनुजातो माणवको माणविकाम्, अनुजाता माणविका माणवकेन—'गत्यर्थाकर्मक' इति कर्तृकर्मणोः क्तः । जज्ञिः—'भाषायां धाञ्' इत्यादिना किकिनोरन्यतरः । लिड्वद्भावाद् द्वित्वं च । जनुः—'जनेरुसिः' इत्युसिप्रत्ययः । पुंसानुजः । जनुषान्धः—'पुंसानुजो जनुषान्ध उपसङ्ख्यानम्' इति तृतीयाया अलुक् । 'तृतीया' इति योगविभागात्समासः । पुंसा जन्मना च हेतुनाऽनुजोऽन्धश्चेत्यर्थः । जन्म—मनिन् । जन्मी—व्रीह्यादित्वादिनिः । जन्तुः—'कमिमनि' इत्यादिना तुप्रत्ययः । जानुः—दृसनि' इत्यादिना

ज्ञुण्। अनुबन्धद्वयसामर्थ्यात् 'जनिवध्योश्च' इति वृद्धिनिषेधो बाध्यते। प्रगता जानुः प्रज्ञुः, सङ्गता जानुः संज्ञुः—'प्रसंभ्यां जानुनोर्ज्ञुः' इति ज्ञुः समासान्तो बहुव्रीहौ। ऊर्ध्वंज्ञुः, ऊर्ध्वजानुः—'ऊर्ध्वाद्विभाषा' इति ज्ञुविकल्पः। उपजानु—समीपेऽव्ययीभावः। तत्र भवम् औपजानुकम्—'उपजानूपकर्णोपनीवेष्ठक्' इति ठक्, 'इसुसुक्तान्तात्कः' इति कादेशः। जाया–'जनेर्यक्' इति यक्। 'ये विभाषा' इत्यस्य व्यवस्थितविभाषात्वाद् नित्यमात्वम्। युवजानिः—'जायाया निङ्' इति बहुव्रीहौ निङादेशोऽन्त्यस्य समासान्तः। 'लोपो व्योर्वलि' इति यलोपः। जनिः–'जनिघसिभ्यामिण्' इतीण्। कृदिकारत्वान् ङीपि जनी, तां वहन्तीति जन्याः जामातुर्वयस्याः—'संज्ञायां जन्या' इति द्वितीयान्तात् जनीशब्दाद् वहतीत्यर्थे यत्प्रत्ययः संज्ञायाम् ॥ ४१ ॥

४४. दीपी[1] दीप्तौ। दीप्यते। दिदीपे। दीपिता। दीपिष्यते। दीप्यताम्। अदीप्यत। दीप्येत, दीपिषीष्ट—लिङौ। अदीपि, अदीपिष्ट—'दीपजन' इति ते कर्तरि चिण्विकल्पः। दिदीपिषते। देदीप्यते। देदीप्ति। दीपयति। अदीदिपत्, अदिदीपत्- 'भ्राजभास' इत्यादिना णौ चङि ह्रस्वविकल्पः। दीपः–इगुपधलक्षणः कः। दीपिता—'सूददीपदीक्षश्च' इति अनुदात्तेल्लक्षणे युच्प्रत्यये प्रतिषिद्धे, ताच्छीलिकस्तृन्। दीप्रः - 'नमिकम्पि' इत्यादिना रः। दीप्तिः—'क्तिन्नबादिभ्यः' इति क्तिन्। तितुत्र' इतीण्निषेधः। दीप्तः, दीप्तवान्–ईदित्वादनिट्त्वम् ॥ ४२ ॥

४५. पूरी आप्यायने। पूर्यते इत्यादि दीपिवत्। अपूपुरत्—'णौ चङि' इति ह्रस्वः। पूरः–इगुपधलक्षणः कः। ऊर्ध्वपूरं पूर्यते—'ऊर्ध्वे शुषिपूरोः' इति कर्तृवाचिन्यूर्ध्वे उपपदे णमुल्। कषादित्वाद्यथाविध्यनुप्रयोगः। ऊर्ध्वस्सन् पूर्यत इत्यर्थः। पूर्णः, पूर्णवान्। पूर्तिः– आबादित्वात् क्तिन्। पूर्णिः इत्यौणादिकः। पूर्णि मिमीत इति पूर्णिमा–=मूलविभुजादित्वात् कः। चर्मपूरं स्तृणोति, उदरपूरं भुङ्क्ते—'चर्मोदरयोः पूरेः' इत्यनयोः कर्मणोरुपपदयोः णमुल्प्रत्ययः। पूरयतेर्धातुसम्बन्धे विधानाद् धात्वन्तरस्य प्रयोगः। गोष्पदपूरं वृष्टो देवः, गोष्पदप्रं वा—'वर्षमाण ऊलोपश्चास्यान्यतरस्याम्' इति कर्मण्युपपदे वर्षस्य इयत्तायां गम्यमानायां पूरयतेर्णमुल् ऊकारलोपश्चास्य विकल्पेन। पूर्णः—'वा दान्तशान्तपूर्ण' इति क्ते णिलुगिडभावौ पक्षे निपात्येते। अन्यदा 'निष्ठायां सेटि' इति णिलोपे—पूरितः। पूरयतीति पूरणः—बाहुलकात्कर्तरि ल्युट्। पूरुः—बहुलवचनादुप्रत्ययः ॥ ४३ ॥

४६. तूरी गतित्वरणहिंसनयोः[2]। तूर्यते। तुतूरे। तूरिता। तूरिष्यते। तूर्यताम्। अतूर्यत। तूर्येत। तूरिषीष्ट। अतूरिष्ट। तुतूरिषते। तोतूर्यते। तोतूर्ति। तूरयति। अतूतुरत्। तूर्णः। तूर्णवान्। तूर्तिः। तूर्णिः—औणादिकः। तूर्यम्—ण्यत् ॥ ४४ ॥

---

१. 'दीपि' इति क्षीरतरङ्गिणीपाठः। २. 'त्वरणहिंसयोः' इति मैत्रेयः।

४७. धूरी गूरी[1] हिंसागत्योः ।

४८. घूरी जूरी हिंसावयोहान्योः ।

४९. शूरी हिंसास्तम्भनयोः ।

५०. चूरी दाहे । धूर्यते । दुधूरे ॥ गूर्यते । जुगूरे ॥ घूर्यते । जुघूरे ॥ जूर्यते । जुजूरे ॥ शूर्यते । शुशूरे ॥ चूर्यते । चुचूरे ॥ गूरी उद्यमे इत्याकुस्मीयः । गुरी इति लघूपधस्तुदादौ । जन्यादय ईदित्त्वान्निष्ठायामनिटः ॥ ४५–५० ॥

५१. तप ऐश्वर्ये[2] वा । अयं धातुरैश्वर्ये वा तङ्श्यनौ उत्पादयतीत्यर्थः । अन्यदा न्याय्यविकरणः परस्मैपदी च—तपति इति । केचिदिह वाग्रहणं वक्ष्यमाणस्य 'वृतु वरणे' इत्यस्य आद्यांशमिच्छन्ति 'वावृतु वरणे' इति । तथा च भट्टिः—'ततो वावृत्यमाना सा रामशालां न्यविक्षत[3]' इति । 'तपिं तिपिम्' इत्यनिट्कारिकान्यासे तु 'तप सन्तापे, तप ऐश्वर्ये वा' इत्येवं पठतोऽस्यापि वा शब्दः तप्यतेश्शेषोऽभिमतः । तप्यते । तेपे । तेपिषे इत्यादि । क्रादिनियमादिट् । तप्ता । तप्स्यते । तप्यताम् । अतप्यत । तप्येत, तप्सीष्ट—लिङौ । अतप्त । अतप्साताम्—'झलो झलि' इति सिज्लोपः । तितप्सते । तातप्यते । तातप्ति । तापयति । अतीतपत् । तप्त्वा । तप्तः । तपनः – युच् । नन्द्यादिर्वा । केचिदाद्यन्तव्यत्यासेन 'पत' इति पठन्ति, तथा च स्वामी–'पतेति द्रमिडाः' इति । निरुक्तेऽपि 'इरज्यति पत्यते क्षयति राजतीति चत्वार ऐश्वर्यकर्माणः[4]' इति । तथा पारचुद्रेऽपि— 'द्युतद्यामा नियुतः पत्यमानः' । अस्माकं तु उभयमपि प्रमाणम्, आचार्येणोभयथा शिष्याणां प्रतिपादनात् । तपति इति शपि गतं सन्तापे ॥ ५१ ॥

५२. वृतु वरणे । वृत्यते । ववृते । वर्तिता । वर्तिष्यते । वृत्यताम् । अवृत्यत । वृत्येत, वर्तिषीष्ट–लिङौ । अवर्तिष्ट । अवर्तिषाताम् । विवर्तिषते । वरीवृत्यते । वर्वर्तीति इत्यादि । वर्तयति । अवीवृतत्, अववर्तत्—'उर्ऋत्' इति पक्षे ऋकारः । वृत्त्वा, वर्तित्वा—'उदितो वा' इतीड्विकल्पः । वृत्तः—'यस्य विभाषा' इतीट्प्रतिषेधः । वृत्यम्—'ऋदुपधात्' इति क्यप् । 'अलंकृञ्' इतीष्णुचि वृधुना साहचर्याद् वर्तमानार्थस्य भौवादिकस्य ग्रहः ॥ ५२ ॥

५३. क्लिश उपतापे । क्लिश्यते । चिक्लिशे । क्लेशिता । क्लेशिष्यते । क्लिश्यताम् । अक्लिश्यत । क्लिश्येत, क्लेशिषीष्ट—लिङौ । अक्लिष्ट । चिक्लिशिषते, चिक्लेशिषते–'रलो व्युपधात्' इति कित्त्वविकल्पः । चेक्लिश्यते । चेक्लेष्टि । क्लेशयति । अचिक्लिशत् । क्लिष्ट्वा, क्लिशित्वा; क्लिष्टः, क्लिशितः–'क्लिशः क्त्वानिष्ठयोः'

---

१. क्षीरस्वामी न पठति ।

२. 'वा' इति तरङ्गिण्यां 'वृतु वरणे' इति अग्रिमेण सूत्रेण सह पठितः ।

३. भ० का० ४।२८ । ४. नि० ३।११।६ ।

इतीड्विकल्पः। 'रलो व्युपधात्' इति सेटः क्त्वः कित्त्वविकल्पो न भवति, 'मृडमृद' इति नित्यं कित्त्वविधानात्। क्लिशू विबाधने इति क्र्यादौ ॥ ५३ ॥

५४. काशृ दीप्तौ। काश्यते। चकाशे। काशिता। काशिष्यते। काश्यताम्। अकाश्यत। काश्येत इत्यादि। शेषं भौवादिकवत् ॥ ५४ ॥

५५. वाशृ शब्दे। वाश्यते। ववाशे। वाशिता। वाशिष्यते। वाश्यताम्। अवाश्यत। वाश्येत, वाशिषीष्ट। अवाशिष्ट। विवाशिषते। वावाश्यते। वावाष्टि। वाशयति। अववाशत्—ऋदित्वाण्णौ चङि ह्रस्वाभावः। वाश्रः पुरुषः—'स्फायितञ्चि' इत्यादिना रक्। वाशिरा—'मन्दिवाशि' इत्यादिना किरच्[1] ॥ ५५ ॥

५६. जन्यादय उदात्ता अनुदात्तेतः। तपिरेकोऽनिट्, 'तृपि तिपिम्' इत्यनिट्कारिकापाठात्।

स्वरितेतौ सेटावाह —

५७. मृष तितिक्षायाम्। तितिक्षा क्षमा। मृष्यते। ममृषे। ममृषिषे। मर्षिता। मर्षिष्यते। मृष्यताम्। अमृष्यत। मृष्येत। मर्षिषीष्ट। अमर्षिष्ट। अमर्षिष्यत। मृष्यति। ममर्ष। मर्षिता। मर्षिष्यति। मृष्यतु। अमृष्यत्। मृष्येत्। मृष्यात्। अमर्षीत्। अमर्षिष्यत्। परिमृष्यति—'परेर्मृषः' इति क्रियाफलस्य कर्तृगामित्वेऽपि परस्मैपदम्। मिमर्षिषते, मिमर्षिषति। मरीमृषीति, मर्मृषीति, मर्मर्ष्टि, मरीमर्ष्टि। मर्षयति। अममर्षत्, अमीमृषत्—'उर्ऋद्वा'। मर्षितः, मर्षितवान्—'मृषस्तितिक्षायाम्' इति सेटो निष्ठाया अकित्त्वम्। तितिक्षाया अन्यत्र—अपमृषितं वाक्यमाह, अविस्पष्टमित्यर्थः। दुर्मर्षणः—'भाषायां शासियुधि' इत्यादिना युच् खलोऽपवादः। अयमाधृषीयोऽपि ॥ ५६ ॥

५८. ई शुचिर् पूतीभावे। शुच्यते। शुशुचे। शोचिता। शोचिष्यते। शुच्यताम्। अशुच्यत। शुच्येत, शोचिषीष्ट—लिङौ। अशोचिष्ट। शुच्यति इत्यादि पूर्ववत्। इरित्त्वाल्लुङ्यङ्विकल्पात्—अशुचत्, अशोचीत् इति। शुशुचिषते, शुशोचिषते। शुशुचिषति, शुशोचिषति। शोशुच्यते। शोशोक्ति। शोचयति। अशूशुचत्। शुचित्वा—'रलो व्युपधात्' इति क्त्वासनोः कित्त्वविकल्पः। शुक्तम्—ईदित्त्वादनिट्त्वम्। रसान्तरं गतमित्यर्थः। शुक्तिः—'तितुत्र' इतीण्णिषेधः। शुक्तिका—संज्ञायां कन् ॥ ५७ ॥

५९. उदात्तौ स्वरितेतौ। शोके शोचतीति शपि गतम्।

अथानिटस्स्वरितेत आह—

६०. णह बन्धने। प्रणह्यते—'उपसर्गात्' इत्यादिना णत्वम्। पिनह्यते, अपिनह्यते—'वष्टि भागुरिः' इत्यल्लोपः। नेहे। नद्धा—'नहो धः' इति झलि पदान्ते

---

१. उणादौ तु 'मन्दिवाशि' इत्यादिसूत्रे उरजेव पठ्यते। वृत्त्यादावपि मन्दुरा, वाशुरा इत्याद्येवोदाहियते।

च हकारस्य धत्वम् । 'झषस्तथोर्धोऽधः' इति धत्वे जश्त्वम् । नत्स्यते—धत्वे तस्य 'खरि च' इति चर्त्वम् । नह्यताम् । अनह्यत । नह्येत, नत्सीष्ट—लिङौ । अनद्ध— 'झलो झलि' इति सिज्लोपः । अनत्साताम् इत्यादि । नह्यति । ननाह । नेहतुः । ननद्ध, नेहिथ—थलि भारद्वाजनियमादिड्विकल्पः । 'थलि च सेटि' इत्येत्वाभ्यासलोपौ । नेहिव—क्रादिनियमादिट् । नद्धा । नत्स्यति । नह्यतु । अनह्यत् । नह्येत् । अनात्सीत्—'वदव्रज' इति नित्या वृद्धिः । निनत्सते, निनत्सति । नानह्यते । नानद्धि । नाहयति । अनीनहत् । नध्री—'दाम्नी' इत्यादिना करणे ष्ट्रन् । षित्वात् ङीष् । उपानत्, पादुका शिल्पविशेषश्च—क्विपि धत्वे 'झलां जशोऽन्ते' इति जश्त्वे 'वावसाने' इति चर्त्वविकल्पः । 'नहिवृद्धि' इत्यादिना क्विबन्ते नह्यतौ पूर्वपदस्य दीर्घः । प्राणत्—पूर्ववत् क्वौ दीर्घः । औपानह्यो मुञ्जः—'ऋषभोपानहोर्ञ्यः' इति विकृतिवाचिनस्तदर्थायां प्रकृतौ विवक्षितायां ञ्यप्रत्ययः । चर्मण्यपि प्रकृतित्वेन विवक्षिते 'चर्मणोऽञ्' इत्यत्रं बाधित्वा पूर्वविप्रतिषेधेन ञ्य एव भवति—औपानह्यं चर्म इति । नाभिः—'नहेर्भ च' इतीञ्प्रत्ययः, हस्य च भः । नाभये हितं नाभ्यं तैलम्—'शरीरावयवाद्यत्' इति यत् । एवं नाभौ भवमपि । यस्तु रथावयववाची नाभिशब्दस्तस्य 'उगवादिभ्यः' इत्यत्र 'नाभि नभं च' इति पाठाद्यति नभभावे नभ्यः अक्षः, नभ्यम् अञ्जनम् इति भवति । पद्मनाभः—'अच्' इति योगविभागात्समासान्तोऽच् ॥ ५८ ॥

६ . रन्ज रागे । रज्यते, रज्यति इत्यादि । 'अनिदिताम्' इति नलोपः । रक्ष, रक्त्का इत्यादि सर्वं भौवादिकवत् । श्यनेको विशेषः ॥ ५९ ॥

६२. शप आक्रोशे । अयमपि भौवादिकवत् । श्यंस्तङौ विशेषौ । शप्यते, शप्यति इत्यादि ॥ ६० ॥

६३. नहादयस्त्रयोऽनुदात्ताः स्वरितेतः ।

अथात्मनेपदिनोऽनिटः पराश्शति—

६४. पद गतौ । लिश्यन्ता अनुदात्ता अनुदात्तेतः । पद्यते । पदे । पेदिषे । पत्ता । पत्स्यते । पद्यताम् । अपद्यत । पद्येत, पत्सीष्ट—लिङौ । अपादि । अपत्साताम्— 'चिण् ते पदः' इति कर्तरि ते चिण् । पित्सते—'सनिमीमा' इत्यादिना अच इस् 'स्कोः' इति सलोपे दकारस्य चर्त्वम् । 'अत्र लोपोऽभ्यासस्य' । पनीपद्यते । पनीपत्ति—'नीग्वञ्चु' इत्यादिना नीक् । पादयति । अपीपदत् । उत्पदिष्णुः—'अलंकृञ्' इत्यादिना उत्पूर्वादिष्णुच् । केचित्तु 'उत्पत' इति पतति पठन्ति । पदनः— 'जुचङ्क्रम्य' इत्यादिना युच् । पादुकः—'लषपत' इत्यादिना उकञ् । पद्यत इति पादः—'पदरुज' इति कर्तरि घञ् । पादाभ्यां चरति पदिकः—'पर्पादिभ्यष्ठन्' इत्यत्र 'पादः पच्च' इति पाठात् ष्ठनि पद्भावः । पदिकी—षित्त्वात्स्त्रियां ङीष् । पादार्थमुदकं पाद्यम्—'पादार्घाभ्यां च' इति यत् । पादाय हितम्, तत्र भवं वा

पद्यम्—'शरीरावयवाद्यत्' 'शरीरावयवाच्च' इति योगाभ्यां यत्। 'पद्यत्यतदर्थे' इति पादस्य पद्भावः। द्वाभ्यां पादाभ्यां क्रीतं द्विपाद्यम्—'पणपादमाषशताद्यत्' इति पणाद्यन्ताद् द्विगोः प्राग्वतीयेष्वर्थेषु यत्। 'पद्यत्यतदर्थे' इत्यत्र शरीरावयववाचिनो ग्रहणान्नेह पद्भावः। पच्छः—'सङ्ख्यैकवचनात्' इति वीप्सायां शस्। 'ऋचश्शे' इति ऋक्सम्बन्धिनः पादशब्दस्य पद्भावः। द्वौद्वौ पादौ लभते द्विपदिकां लभते—'पादशतस्य सङ्ख्यादेर्वीप्सायां वुन् लोपश्च' इति पादशतयोरन्यतरस्यां सङ्ख्यादेस्समासाद् वीप्सायां वुन्, अन्तस्य च लोपः। 'यस्य' इति लोपेनैव सिद्धेऽन्तलोपवचनमनैमित्तिकत्वार्थम्। तेनाल्लोपस्य स्थानिवत्त्वाभावात् 'पादः पत्' इति भसंज्ञानिमित्तः पद्भावस्सिद्ध्यति। 'यस्य' इति लोपे हि तस्य पूर्वविधौ स्थानिवत्त्वात् पाच्छब्दान्तमङ्गं भसंज्ञं न स्यात्। 'प्रकृत्युपाधिरपि वीप्सा तद्धितेन द्योत्यते' इति 'तद्धितार्थं' इति समासः। अत एव 'नित्यवीप्सयोः' इति द्विर्वचनं न भवति। द्वौ पादौ दण्डयति ददाति वा द्विपदिकां दण्डयति ददाति—'दण्डव्यवसर्गयोश्च' इति वुन्। व्यवसर्गो दानम्। अवीप्सार्थोऽयमारम्भः। व्याघ्रस्येव पादावस्य व्याघ्रपात्, श्येनपात्—'पादस्य लोपोऽहस्त्यादिभ्यः' इति हस्त्यादिव्यतिरिक्तोपमानपूर्वपदस्य पादान्तस्यान्तस्य लोपः समासान्तः। व्याघ्रपदोऽपत्यं वैयाघ्रपद्यः—गर्गादित्वाद्यञ् पूर्ववत्पद्भावः। स च 'निर्दिश्यमानस्यादेशा भवन्ति' इति पाच्छब्दस्यैव भवति, न तु तदन्तस्य। 'न य्वाभ्याम्' इत्यैजागमो वृद्धिनिषेधश्च। कुम्भपदी, घृतपदी—"कुम्भपदीषु च" इति पादान्त्यलोपस्समासान्तः। कुम्भपद्यादिषु साध्येषु पादान्त्यलोप इत्यक्षरार्थः। अत्र बहुवचननिर्देश आद्यर्थावगतये। आद्यर्थसङ्गृहीताश्च गणपाठे एव द्रष्टव्याः। 'कुम्भादिभ्यः पादस्य लोपः' इति वक्तव्ये समुदायपाठो विषयनियमार्थः। तत्र ये उपमानपूर्वाः कुम्भपद्यादयः, ये च शतपद्यादयः सङ्ख्यापूर्वास्तेषां यथाक्रमं 'पादस्य लोपः' 'सङ्ख्यासुपूर्वस्य' इति सिद्धे लोपे पुनः पाठात् स्त्रियां नित्यं ङीबेव भवति; न तु व्याघ्रपात्, व्याघ्रपदी, द्विपात्, द्विपदी इत्यादिवत् 'पादोऽन्यतरस्याम्' इति पाच्छब्दान्तस्य विधीयमानो ङीब्विकल्पः। ये त्वनुपमानसङ्ख्यापूर्वाः घृतपद्यादयस्तेषामपि स्त्रीत्वविशिष्टानां पाठात् स्त्रियामेव पद्भावः, नित्यश्च ङीप्। अष्टापदीशब्दस्यात्र पाठात् 'अष्टनस्संज्ञायाम्' इति वा पूर्वपदस्य दीर्घः। अत्र सुधाकरः—"'सङ्ख्यासुपूर्वस्य' इति पादस्यान्त्यलोपे 'पादोऽन्यतरस्याम्' इति ङीपि सुपदीशब्दे सिद्धे कुम्भपदीषु पाठः स्त्रियां सङ्ख्योपमानपूर्वपदस्य नित्यं ङीबर्थः। तेन 'द्विपाद्द्विरदनासोरूः'[1] इति भट्टिप्रयोगश्चिन्त्यः" इत्याह। द्विपात्, द्विपदी। सुपात्—'सङ्ख्यासुपूर्वस्य' इति पादान्त्यलोपस्समासान्तः। 'पादोऽन्यतरस्याम्' इति वा ङीपि भत्वे पद्भावः। स्त्रियां ङीबेव सुपाच्छब्दस्ये-

१. भ० का० ४।१७। 'सुपाद्' इति जयमङ्गलानुसारी पाठः।

तीदानीमेवोक्तम्। द्विपदा ऋक्—'टाबृचि' पादान्तस्य ऋच्यभिधेयायां टापि पद्भावः पूर्ववत्। पदाजिः, पदातिः, पदगः, पदोपहतः—'पादस्य पदाज्यातिगोपहतेषु' इति पादशब्दाद् आज्यादिषूत्तरपदेषु पदादेशः। पद्धिमम्, पत्काषी, पद्धतिः—'हिमकाषिहतिषु च' इति हिमादिषूत्तरपदेषु पद्भावः। चकारान्निष्के च—पन्निष्कः। पादघोषः, पद्घोषः। पादमिश्रः, पन्मिश्रः। पादशब्दः, पच्छब्दः—'वा घोषमिश्रशब्देषु' इति वा पद्भावः। सम्पत्—सम्पदादित्वात्क्विप्। क्तिन्नपीष्यते, सम्पत्तिः इति। पदम्—'खनो घ च' इति चकारात्करणादौ घः। पदान्यधीते वेद वा पदकः—'क्रमादिभ्यो वुन्' इति वुन्। पद्याः पांसवः—'पदमस्मिन्दृश्यम्' इति प्रथमान्ताद् दृश्यत्वोपाधिकादस्मिन्निति सप्तम्यर्थे यत्। 'पद्यत्यतदर्थे' इति पद्भावः। पूर्वपदिकः—'इकन् बहुलं पदोत्तरपदात्' इत्यध्येतृवेदित्रोरिकन्। अनुपदं धावति आनुपदिकः—'माथोत्तरपदपदव्यनुपदं धावति' इति द्वितीयासमर्थाट्ठक्। पूर्वपदं गृह्णातीति पौर्वपदिकः—'पदोत्तरपदं गृह्णाति' इति पदोत्तरपदाट्ठक्। आप्रपदं प्राप्नोतीति आप्रपदीनः पटः—'आप्रपदं प्राप्नोति' इति द्वितीयान्तात्खः। शरीरेणासम्बद्धस्यापि पटादेः प्रमाणमाख्यायते पादस्याग्रं प्रपदम्। अत एव निर्देशात्समासः, पूर्वनिपातश्च। आप्रपदात्—'आङ्मर्यादाभिविध्योः' इत्यव्ययीभावः। अनुपदीना उपानत्—'अनुपदसर्वान्न' इति बद्धेत्यर्थे खः। "यस्य चायामः" इत्यव्ययीभावसमासः। अनुर्यस्यायामवाची तेन लक्षणभूतेनानुस्समस्यते इति सूत्रार्थः। इह च पदायाम उपानदायामस्य लक्षणम्। सप्तभिः पदैरेवाप्यते साप्तपदीनं सख्यम् 'साप्तपदीनं सख्यम्' इति निपात्यते। अनुपदमन्वेष्टा अनुपदी गवाम्—अनुपद्यन्वेष्टा' इतीन्नन्तो निपात्यते। अनोः पश्चादर्थेऽव्ययीभावः। गवामिति पदापेक्षया षष्ठी। नित्यसापेक्षत्वात्समासः। एण्या इव पादावस्य, अजस्येव पादावस्य, प्रोष्ठो गौः, तस्येव पादावस्य एणीपदः, अजपदः, प्रोष्ठपदः—'सुप्रात' इत्यादिनाच्प्रत्ययः पद्भावश्च निपात्यते। 'एणीपदाजपदयोः पद्भावः' इति निपातनफलं वदतो हरदत्तस्य प्रोष्ठपदेति पाठो नाभिमतः प्रतीयते। पूर्वे प्रोष्ठपदे, पूर्वाः प्रोष्ठपदाः—'फल्गुनीप्रोष्ठपदानां च नक्षत्रे' इति नक्षत्रे वर्तमानयोर्द्वित्वे वा बहुवचनम्। प्रोष्ठपदाभिर्युक्तः कालः प्रोष्ठपदः—प्रोष्ठपदाशब्दस्तत्सहचरिते चन्द्रमसि वर्तते। तत्र 'नक्षत्रेण युक्तः कालः' इत्यणि तस्य 'लुबविशेषे' इति लुप्। 'लुपि युक्तवद्व्यक्तिवचने' इति कालस्य स्त्रीत्वबहुत्वे, तासु जातः प्रोष्ठपादः—'सन्धिवेला' इत्यादिनाऽण्। 'जे प्रोष्ठपदानाम्' इति जातार्थे वृद्धिनिमित्ते तद्धिते परत उत्तरपदस्य वृद्धिः। गेहानुप्रपादमास्ते, गेहंगेहमनुप्रपादमास्ते, गेहमनुप्रपादमनुप्रपादमास्ते—'विशिपतिपदि' इत्यादिना णमुल्। 'तृतीयाप्रभृतीनि' इति समासविकल्पः। समासे 'नित्यवीप्सयोः' इति द्विर्वचनं न भवति; तयोस्तेनैवोक्तत्वात्। आभीक्ष्ण्ये क्त्वापीष्यते-गेहमनुप्रपद्यानु-

प्रपद्यास्ते इति। सूत्रार्थो भूवादावुपपादितः। सम्पादी—णिनिः। साम्पाद्यम्—ब्राह्मणादित्वाद्भावकर्मणोः ष्यञ्। जीविकामापन्नः जीविकापन्नः। आपन्नो जीविकाम् आपन्नजीविकः—'द्वितीया श्रित' इति 'प्राप्तापन्ने च द्वितीयया' इति च तत्पुरुषः। 'प्राप्तापन्ने च' इत्यत्र लिङ्गविशिष्टपरिभाषयाऽऽपन्नाशब्दस्य समासेऽपि आपन्नजीविकः इत्येव। तत्र हि 'प्राप्तापन्ने अ च' इत्यकारः प्रश्लिष्यते, स चान्त्यादेशः। सौत्रत्वाच्च न प्रकृतिभावः। सम्पद्यत इति सम्पद्यः—'अभूततद्भावे' इति सूत्रे निपातनात् शः। ततश्श्यन्। पादूः—'णित्कसिपद्यर्तेः' इत्यूकारप्रत्यये णित्त्वाद् वृद्धिः। पादुका—संज्ञायां कनि 'केऽणः' इति ह्रस्वः। पद्मम्—'अर्तिस्तु' इत्यादिना मन्। पद्मिनी—'पुष्करादिभ्यो देशे' इति मत्वर्थीय इनिः। पद्मवती, पद्मा—'अर्शआदिभ्योऽच्' इति मत्वर्थेऽच्, टाप्। अयं कथादावपि ॥ ६१ ॥

६५. खिद दैन्ये[1]। खिद्यते। चिखिदे। खेत्ता। खेत्स्यते। खिद्यताम्। अखिद्यत। खिद्येत, खित्सीष्ट। अखित्त—'लिङ्सिचौ' इति लिङ्सिचोः कित्त्वान्न गुणः। चिखित्सते—'हलन्ताच्च' इति सनः कित्त्वम्। चेखिद्यते। खेदयति। अचीखिदत्। खित्त्वा। खिन्नः। खिदिरम्[2]—'इषिमदि' इत्यादिना किरच्[2]। 'खिद्यते इति कर्मकर्तरीति वामनः[3]' इति स्वामिसुधाकरौ। तस्यान्तर्भावितण्यर्थत्वेन रौधादिकस्य सकर्मकस्य खिन्दतीति परिघातार्थस्य स्वतः सकर्मकस्य वा कर्मकर्तरीदं रूपमित्यभिप्रायः। एवं वदतोऽस्य श्यनि पाठो नाभिमतः प्रतीयते। धातुपाठकोशेषु व्याख्यानेषु च अविगीतः पठ्यते। अयं रुधादावपि। परिघाते तुदादिः ॥ ६२ ॥

६६. विद सत्तायाम्। विद्यते इत्यादि खिदिवत्। वेत्तीति ज्ञाने गतम् ॥ ६३ ॥

६७. बुध अवगमने। बुध्यते। बुबुधे। बोद्धा। भोत्स्यते—'एकाचः' इति बशो भष्। बुध्यताम्। अबुध्यत। बुध्येत, भुत्सीष्ट। अबोधि, अबुद्ध। अभुत्साताम्—'दीपजन' इति कर्तरि तशब्दे वा चिण्। 'लिङ्सिचौ' इति कित्त्वम्। बुभुत्सते। बोबुध्यते। बोबोद्धि। बोधयति पद्मम्—'बुधयुध' इति क्रियाफलस्य कर्तृगामित्वेऽपि परस्मैपदम्। "अत्र बुधादीनां चतुर्णाम् 'अणावकर्मकात्' इत्येव सिद्धे, वचनमिदमचित्तवत्कर्तृकार्थम्" इति वृत्तौ। 'तत्त्वं बुध्यते' इति धर्मकीर्तिप्रयोगे[4] सकर्मकत्वमन्तर्भावितण्यर्थत्वेन नेयम्। 'क्रमादमुं नारद इत्यबोधि सः[5]' इति माघे सकर्मकत्वं वृत्तिकारादीनामनभिमतमेव। यद्वा—अयमर्थभेदेन सकर्मकोऽकर्मकश्च। बुद्ध्वा। बुद्धः। बुबुधानः—"मुचिबुधिभ्यां सन्वच्च" इत्यानचि सन्वद्भावाद्

---

१. सूत्रमिदं क्षीरस्वामी न पठति। २–२. 'खिद्रम्—इषिमदीत्यादिना रक्' इति ख. पुस्तके पाठः। वस्तुतस्तु स्फायितञ्चीत्यादिना साध्यम्। ३. 'क्षीयते इति कर्मकर्तरि', 'खिद्यत इति च'—काव्याल० ५।२।४-५। ४. धर्मकीर्त्तिरयं 'रूपावतार'-कर्ता एव, न त्वन्यः। ५. शिशु० १।३।

द्वित्वम् । बोद्धुमिच्छुरित्यर्थः । सन्वद्भावाद् "हलन्ताच्च" इति कित्वादगुणत्वम् । बुधानः आचार्यादिः—'युजिबुधिदृशेः किच्च' इत्यानच् । बोधयतीति ज्वलादौ । बोधति, बोधते इति हिक्कादौ ।। ६४ ।।

६८. युध सम्प्रहारे । युध्यते इत्यादि बुधिवत् । ते तु अयुद्ध इति सिजेव । राजयुध्वा, राजानं योधितवानित्यर्थः । 'राजनि युधि कृञः' इति राजनि कर्मण्युपपदे भूते क्वनिप् । इहान्तर्भावितण्यर्थत्वेन सकर्मकत्वम् । सहयुध्वा – 'सहे च' इति भूते क्वनिप् । राजयुध्वा ब्राह्मणी, सहयुध्वा ब्राह्मणी—'वनो न हशः' इति ङीब्रेफयोर्निषेधः । योधः, यौधः--प्रज्ञादिपाठात्स्वार्थे वाऽण् । अत एव पाठादिगुपधलक्षणं कं बाधित्वाऽच् । आदाय युध्यतेऽनेनेति आयुधम्—'घञर्थे कविधानम्' इति कः । आयुधेन जीवति आयुधीयः, आयुधिकः—'आयुधाच्छ च' इति जीवतीत्यर्थे ठक्छौ । युयुधानः—बाहुलकादानचि द्वित्वम् । युध्मः आहवो योद्धा च—'इषियुधि' इत्यादिना मक् । दुर्योधनः, सुयोधनः—'भाषायां शासियुधि' इति खलर्थे युच् । युध्यतीति युद्धमिच्छतीति क्यचि ।। ६५ ।।

६९. अनो रुध कामे । रुधेरनूपसृष्टस्य कामे वृत्तस्य दिवादित्वमात्मनेपदित्वं च । अनुरुध्यते इत्यादि पूर्ववत् । रुणद्धि इत्यावरणे रुधादौ ।। ६६ ।।

७०. अण प्राणने । अण्यते । आणे । अणिता । अणिष्यते । अण्यताम् । आण्यत । अण्येत । अणिषीष्ट । आणिष्ट । अणिणिषते । आणयति । मा भवानणिणत् ।

"यमिर्रमन्तेष्वनिडेक इष्यते रमिश्च यश्च श्यनि पठ्यते मनिः ।
नमिश्चतुर्थो हनिरेव पञ्चमो गमिस्तु षष्ठः प्रतिषेधवाचिनाम्" ।।

इति व्याघ्रभूतिवचनादयं सेट् । [1]केचिदनिटां मध्ये पाठस्य प्रयोजनादर्शनाद् अमुं धातुं नाधीयते । शाकटायनस्तु 'अन' इत्याह । एवं च तवर्गीयान्तं काण्डमप्यनुसृतं भवतीति । अणतीति शब्दे शपि । अनितीति प्राणने लुकि ।।६७।।

७१. मन ज्ञाने । न त्वां तृणाय मन्ये, न त्वां तृणं मन्ये—'मन्यकर्मण्यनादरे विभाषा प्राणिषु' इति कर्मणि वा चतुर्थी । इह चानुवाद्ये कर्मणि व्यवस्थितविभाषाविज्ञानात् चतुर्थी न भवति । 'अप्राणिषु' इत्यपास्य 'अनावादिषु' इति वार्त्तिकं पठितम् । तेन न त्वां नावं मन्ये यावत्तीर्णं न नाव्यम्, न त्वामन्नं मन्ये यावन्न भुक्तं श्राद्धम् इत्यत्राप्राणित्वेऽपि द्वितीयैव भवति । तथा प्राणित्वेऽपि न त्वां श्वानं मन्ये, न त्वा शुने मन्ये इत्यत्र उभयं भवति । मेने । मन्ता । मंस्यते । मन्यताम् । अमन्यत । मन्येत । मंसीष्ट । अमंस्त । अमंसाताम् । एहि मन्ये ओदनं भोक्ष्यसे, इति नहि भोक्ष्यसे भुक्तस्सोऽतिथिभिः—अत्र "प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च" इति प्रहासे परिहासे गम्यमाने मन्योपपदे धातावुत्तमविषये मध्यमः, मन्यतेश्च मध्यमविषये उत्तमः । 'एकवच्च' इति वचनात् द्विबह्वोरप्येकवचनमेव । [2]दर्शनीय-

---

१. क्षीरस्वामिप्रभृतयः । २. मैत्रेयोऽपीति शेषः ।

मानी भार्यायाः—'मन' इति कर्मण्युपपदे मन्यतेर्णिनिः। भार्याया इति कर्मणि षष्ठी। तत्सापेक्षस्यापि दर्शनीयशब्दस्य गमकत्वात्समासः। 'क्यङ्मानिनोश्च' इति क्यङन्ते मानिन्शब्दे चोत्तरपदे पुंवद्भावः। पण्डितमात्मानं मन्यते देवदत्तः पण्डितमानी, पण्डितम्मन्यः—'आत्ममाने खश्च' इति कर्मण्युपपदे आत्ममाने वर्तमानान्मन्यतेर्णिनिः खश्च। आत्मनो मान आत्ममानः, कर्मणि षष्ठ्यास्समासः। आत्मा च स्वः, स च सन्निधानान्मन्तैव, तस्य चात्मस्वरूपेण कर्तृत्वम्। पण्डितत्वादिस्वरूपेण कर्मत्वमिति न विरोधः। खशश्शित्त्वात् श्यन्, खित्त्वान्मुम्। मन्या पश्चाद्ग्रीवाशिरा—'संज्ञायां समजनिषद' इत्यादिना क्यप्। अन्यत्र क्तिनि मतिः—'मन्त्रे वृष' इति क्तिनो वचनमुदात्तमात्रार्थम्, न तु भाषायां तन्निवृत्त्यर्थम्। वैमत्यम्, विमतिमा। साम्मत्यम्, सम्मतिमा—दृढादिषु 'वेर्यातलाभमतिमनश्शारदानां समो मतिमनसोः' इति पाठात् ष्यञिमनिचौ। 'इगन्ताच्च लघुपूर्वात्' इत्यणपि भवति—वैमतम्, साम्मतम् इति। त्वतलौ तु सर्वत्रैवेष्येते इत्युदाहार्यौ। राज्ञां मतः—'मतिबुद्धि' इति वर्तमाने क्तः। 'क्तस्य च वर्तमाने' इति कर्तरि षष्ठी। मतस्य करणं मत्यम्, तच्च भावः साधनं वा—'मतजनहलात्' इति यत्। मनः-असुन्। मन एव मानसम्—प्रज्ञादित्वात् स्वार्थेऽण्। असुमनास्सुमना भवति सुमनायते इत्यादौ भृशादित्वात् क्यङ्सलोपौ। तत्र हि सुदुरभिभ्यः परो मनः-शब्दः पठ्यते। वैमनस्यम्। विमनसिमा। साम्मनस्यम्। सम्मनसिमा—'वेर्यातलाभमतिमनश्शारदानां समो मतिमनसोः' इति ष्यञिमनिचौ। त्रतलौ चोदाहार्यौ। विमनीकरोति—'अरुर्मनश्चक्षुः' इत्यादिना च्विः सलोपश्च। मनसादेवो नाम कश्चित्—'मनसस्संज्ञायाम्' इत्युत्तरपदे तृतीयाया अलुक्। 'दिवः कर्म च' इति करणत्वात्तृतीया। संज्ञासमावेशेन कर्मत्वमपीति दीव्यतेः कर्मण्यणभवतीति दीव्यतावुक्तम्। मनसाज्ञायी—'आज्ञायिनि च' इत्यलुक्। लुकि तु मनआज्ञायी इति स्यात्। वाङ्मनसम्—'अचतुर' इत्यादिना द्वन्द्वेऽजन्तो निपातितः। मधुः—'फलिपाटिनमि' इत्यादिना उप्रत्ययो धकारश्चान्त्यादेशः। मधुरः—'उषसुषि' इत्यादिना मत्वर्थे रः। इह मधुशब्दो रसनाग्राह्ये माधुर्याख्यरसे वर्तते। तेन मधुरं मध्वित्यपि भवति। इह च न भवति, मध्वस्मिन् घटेऽस्ति मधुरो घट इति। इदं च 'तदस्यास्त्यस्मिन्' इति विवक्षानियमार्थस्य इतिशब्दस्यानुवर्तनाल्लभ्यते। मनुः—'शॄस्वृष्णिहि' इत्यादिना उप्रत्ययः। मनोस्स्त्री मनायी, मनावी, मनुः—'मनोरौ वा' इति ङीप्यैकार औकारो वान्तादेशः। मनुष्यः, मानुषः—'मनोर्जाता-वञ्यतौ षुक्च' इति अञ्यतौ षुक्चागमः। जाताविति वचनाद् इह अपत्यग्रहणं व्युत्पत्तिमात्रार्थम्। तेन मानुषा इत्यत्र 'यञञोश्च' इत्यपत्यस्याञो विधीयमानो बहुषु लुग्न भवति। मानुषी—गौरादित्वान्ङीष्। 'हलस्तद्धितस्य' इति ईति परतस्तद्धितयकारस्य लोपः। मानुष्यकम्—'गोत्रोक्ष' इत्यादिना समूहे वुञ्।

अपत्ये त्वणि मानवा इति। मनुष्या अप्यपत्यत्वारोपेण मानवा इत्युच्यन्ते। यदा मानवस्य कुत्सादि विवक्ष्यते तदा—

अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः। नकारस्य च मूर्धन्यस्तेन सिद्ध्यति माणवः[१]॥

इति नकारस्य णत्वम्। अण्तु सामान्येनैव सिद्धः। माणव एव माणवकः—संज्ञायां कन्। माणव्यम्—'ब्राह्मणमाणव' इति समूहे यत्। माणवीनम्—'माणवचरक' इति हितार्थे खञ्। माणव्यम्—ब्राह्मणादित्वात् ष्यञ्। मुनिः—'मनेरुच्चोपधायाः' इतीन्प्रत्ययः, उपधायाश्चोकारः। मौनम्—'इगन्ताच्च' इति भावेऽण्। मनु अवबोधने इति तनादौ॥ ६८॥

७२. युज समाधौ। समाधिश्चित्तनिरोधः, तेनायमकर्मकः। 'युज्यते एतत्' इति प्रयोगस्तु युनक्तेः कर्मणि यकि तङि। युज्यते ब्रह्मचारी योगम् इत्येतदपि 'सृजियुज्योश्श्यंस्तु' इति सकर्मकस्य कर्तुः कर्मवद्भावश्यनोर्विधानाद्युज्यते। युज्यतिसृज्यत्योरकर्मकत्वे एव वार्त्तिकं चोपपद्यते। युज्यते इत्यादि पूर्ववत्। प्रयुक्—'सत्सूद्विष' इत्यादिना सोपपदात्क्विप्। युजमापन्ना महर्षयः इत्यत्र निरुपपदत्वेऽपि सम्पदादित्वाद्भावे क्विप्। 'युजेरसमासे' इति सर्वनामस्थाने नुमस्य न भवति, इकारवतो रौधादिकस्यैव तत्र निर्देशात्। योगी—सम्पृचादिना घिनुण्। 'युग्यं च पत्रे' इति निपातनं नास्य, अर्थस्वभावात्। 'दाम्नीशसयुयुज' इति ष्ट्रन्विधावपि नास्य ग्रहः, अनभिधानात्॥ ६९॥

७३. सृज विसर्गे। अयमकर्मकः। प्रयुज्यते च 'वृन्तश्लथं हरति पुष्पमनोकहानां संसृज्यते सरसिजैररुणांशुभिन्नैः[२]' इति। कर्मणि प्रयोगे तु प्रक्रमभङ्गस्स्यात्। 'स्वाभाविकं परगुणेन विभातवायुस्सौरभ्यमीप्सुरिव ते मुखमारुतस्य[२]' इति च न सङ्गच्छते। पाणिभ्यां सृज्यते पाणिसर्ग्या इत्यादयस्तु सृजतेः कर्मणि। सृज्यते मालामिति कर्तरि। सृज्यते। ससृजे। ससृजिषे—क्रादिनियमान्नित्यमिट्। 'विभाषा सृजिदृशोः' इति विकल्पोऽस्य न भवति, थलोऽभावात्। स्रष्टा। स्रक्ष्यते। सृज्यताम्। असृज्यत। सृज्येत, सृक्षीष्ट—लिङौ। असृष्ट। असृक्षाताम्। सिसृक्षते—झलादौ व्रश्चादिना षत्वे 'षढोः कस्सि' इति कत्वम्। अकिति झलादौ 'सृजिदृशोः' इत्यादिना अमागमः। 'हलन्ताच्च' इति 'लिङ्सिचावात्मनेपदेषु' इति सनो लिङ्सिचोश्च कित्त्वान् नामागमः, नापि गुणः। सरीसृज्यते। सरीसर्ष्टि। सर्जयति। असीसृजत्, अससर्जत्—'उर्ऋद्वा'॥ ७०॥

७४. लिश अल्पीभावे[३]। लिश्यते। लिलिशे। लेष्टा। लेक्ष्यते—व्रश्चादिना षत्वे कत्वम्। लिश्यताम्। अलिश्यत। लिश्येत। लिक्षीष्ट। अलिक्षत। अलिक्षा-

१. काशि० ४।१।१६१। (पा० सू०) २. रघु० ५।६९।
३. मैत्रेयस्तु 'खिद दैन्ये' इति सूत्रानन्तरमेवेदं सूत्रं पठति।

ताम्—'शल इगुपधात्' इति क्सः। 'क्सस्याचि' इत्यकारलोपः। लिलिक्षते। लेलिश्यते। लेलेष्टि। लेशयति। अलीलिशत्। लिक्षा—बाहुलकात् क्सप्रत्ययः। अयं गत्यर्थस्तुदादौ॥ ७१॥

७५. पदादयोऽनुदात्ता अनुदात्तेतः अण्यतिवर्जम्।

अथानिटः परस्मैपदिन आह—

७६. राधोऽकर्मकाद् वृद्धावेव। एवकारो भिन्नक्रमः। अस्मादकर्मकादेव श्यन्। वृद्धिग्रहणं तु उदाहरणप्रदर्शनार्थम्, यथा वृद्धावकर्मक इति। एवकारश्च एवमर्थात् सिद्धायाः सकर्मकक्रियाव्यावृत्तेरनुवादमात्रम्[1]। काश्यपस्तु यथाश्रुतमेवान्वयं वदन् 'अर्थावधारणार्थेनैवकारेण अन्यत्रार्थनिर्देशेष्वनियमो ज्ञाप्यते' इति तत् 'कर्मवत्' सूत्रभाष्ये राध्यत्योदनस्स्वयमेवेत्यवृद्धौ श्यनो दर्शनादुपेक्ष्यम्। अत्र हि सिद्ध्यतीत्यर्थः। तथा 'राधीक्ष्योः' इत्यत्र वृत्तौ देवदत्ताय राध्यतीति दैवपर्यालोचने श्यनोऽदर्शनाच्च, अत्र दैवस्य जीवत्यादौ प्राणादिवद्धात्वर्थेऽन्तर्भावादकर्मकत्वम्। एवं हि माघप्रयोगश्चोपपद्यते—

'न दूये सात्वतीसूनुर्यन्मह्यमपराध्यति।
क्रियासमभिहारेण विराध्यन्तं क्षमेत कः[2]'॥

इत्यत्र हि द्रोहोऽर्थः। रराध। रराधतुः—'राधो हिंसायाम्' इत्येत्वाभ्यासलोपौ सौवादिकस्य, यतो हिंसार्थस्य सकर्मत्वाद् दैवादिकत्वमेव न भवति। राद्धा। रात्स्यति। राध्यतु। अराध्यत्। राध्येत्, राध्यात्—लिङौ। अरात्सीत्। अराद्धाम्। अरात्सुः। रिरात्सति। राराध्यते। राधयति। अरीरधत्—अयं स्वादिश्चुरादिश्च॥ ७२॥

७७. व्यध ताडने। विध्यति—'ग्रहिज्या' इत्यादिना सम्प्रसारणम्। तच्च 'न सम्प्रसारणे सम्प्रसारणम्' इति पूर्वस्य न भवति। विव्याध। विव्यधतुः। विव्यद्ध, विव्यधिथ। विव्यधथुः। विव्यध। विव्याध। विव्यधिव—क्रादिनियमादिट्। थलि भारद्वाजनियमादिड्विकल्पः। पिद्वचनेषु 'लिट्यभ्यासस्य' इत्यभ्यासस्य हलादिशेषं बाधित्वा सम्प्रसारणम्। अन्यत्र 'ग्रहिज्या' इत्यादिना सम्प्रसारणे पश्चाद् द्विर्वचनम्। व्यद्धा। व्यत्स्यति। विध्यतु। अविध्यत्। विध्येत्। विध्यात्—'किदाशिषि' इति कित्त्वात्प्रसारणम्। अव्यात्सीत्। अव्याद्धाम्। विव्यत्सति—हलादिशेषे इत्वम्। वेविध्यते। वाव्यद्धि। व्याधयति। अविव्यधत्। व्याधः—'श्याद्व्यध' इति णः। व्यधः—'व्यधजपोः' इत्यप्। मृगावित्—'क्विप् च' इति क्विप्। 'नहिवृत्ति' इत्यादिना पूर्वपदस्य दीर्घः। विधुः—'पृभिदिव्यधि' इति कुप्रत्ययः॥ ७३॥

---

1. तु०—दै० पृ० ८२। 2. शिशु० २।२०।

७८. पुष पुष्टौ। पुष्यति। पुपोष। पुपोषिथ—क्रादिनियमान्नित्यमिट्। भारद्वाजनियमस्तु उपदेशेऽजन्तानामत्वतां चेतीह न भवति। पोष्टा। पोक्ष्यति। पुष्यतु। अपुष्यत्। पुष्येत्, पुष्यात्—लिङौ। अपुषत्—'पुषादि' इत्यादिनाङ् परस्मैपदे। तङि तु—ज्यत्यपुक्षत इति क्सो भवति। कर्मणि तु—अपोषि। अपुक्षाताम्। अपुक्षन्त—इति चिण्क्सौ भवतः। पुपुक्षति। पोपुक्ष्यते। पोपोष्टि। पोषयति। अपूपुषत्। पुष्यन्त्यस्मिन्नारब्धानि कार्याणीति पुष्यः—'पुष्यसिद्धौ नक्षत्रे' इति क्यप् निपात्यते। पुष्येण युक्तः पौषः—'नक्षत्रेण युक्तः कालः' इत्यण्। पौषमहः—'तिष्यपुष्ययोर्नक्षत्राणि' इति यलोपः। स्वपोषं पुष्यतीत्यादि पोषतिवन्नेयम्। 'स्वे पुषः' इति णमुल्। पुषति, पोषति—इति द्वयं शपि। पुष्णातीति क्र्यादौ। पोषयतीति चुरादौ॥ ७४॥

७९. शुष शोषणे। शुष्यति इत्यादि पुषिवत्। शुष्कः, शुष्कवान्—'शुषः कः' इति निष्ठातस्य ककारः। शुष्केव शुष्किका, शुष्का जङ्घाऽस्याः शुष्कजङ्घा—कत्वस्य पूर्वत्रासिद्धत्वाद् 'उदीचामातस्स्थाने' इति ककारपूर्वत्वेन वैकल्पिक इत्वनिषेधः, 'न कोपधायाः' इति पुंवद्भावनिषेधश्च न भवति। आतपशुष्कः—'आतपशुष्कपक्वबन्धेश्च' इति सप्तमीसमासः। ऊर्ध्वशोषं शुष्यति—'ऊर्ध्वे शुषिपूरोः' इत्यूर्ध्वे कर्तरि णमुल्। कषादित्वाद्यथाविध्यनुप्रयोगः॥ ७५॥

८०. तुष प्रीतौ। प्रीतिस्तृप्तिः। तुष्यति। इत्यादि॥ ७६॥

८१. दुष वैकृत्ये। वैकृत्यं विकृतिः। दुष्यति इत्यादि। दोषणम्, दूषणम्—इति णौ 'दोषो णौ' इत्यूत्वमुपधायाः। दूषयति चित्तं दोषयति वा—'वा चित्तविरागे' इत्यूकारविकल्प उपधायाः। विरागश्चित्तस्याप्रीतता। दोषी—सम्पृचादिना घिनुण्। दूषीका—'कषिदूषीभ्यामीकन्' इतीकन्॥ ७७॥

८२. श्लिष आलिङ्गने। श्लिष्यति। शिश्लेष। श्लेष्टा। श्लेक्ष्यति। श्लिष्यतु। अश्लिष्यत्। श्लिष्येत्, श्लिष्यात्—लिङौ। अश्लिक्षत् कन्यां देवदत्तः—'श्लिष आलिङ्गने' इति अङपवादः क्सः। आलिङ्गनं परिष्वङ्गः। अन्यत्र पुषादित्वादङ्—समश्लिषज्जतु काष्ठम् इति। अथात्मनेपदेषु कथं भवितव्यम्, समाश्लेषि कन्या देवदत्तेन, समाश्लिक्षाताम्, समाश्लिक्षन्त इति? 'शल इगुपधात्' इति क्सो भविष्यति। एकवचने तु परत्वाच्चिण्। यद्येवमनालिङ्गनेऽपि क्सः प्राप्नोति, इष्यते च सिच् समश्लिक्षत जतूनि काष्ठैरिति। एवं तर्हि 'श्लिषः क्सः' इति योगविभागः। अयं च पुरस्तापवादन्यायेन अङं बाधते, न चिणम्। ततः 'आलिङ्गने' इति द्वितीयः। नियमार्थमिदं वचनम्। अनेन च योगविभागसामर्थ्यात् 'श्लिषः' इति वा 'शल इगुपधात्' इति वा क्सस्य या प्राप्तिः सा सर्वा नियम्यते आलिङ्गन एवेति। तेन अनालिङ्गने परस्मैपदात्मनेपदयोः यथायोगमङ्सिचावेव भवतः। श्लेष्मा—मनिन्। श्लेषति इति शपि॥ ७८॥

८३. शक विभाषितो मर्षणे। अयं मर्षणे दिवादिः। 'विभाषितः' इत्युभयपदी तन्त्रान्तरप्रसिद्धयोच्यते। क्षीरस्वामी तु 'सहनेऽर्थे शकिधातुर्विभाषितः, विकल्पितः, पक्षे दिवादिः पक्षे स्वादिरित्यर्थः। शक्यते, शक्नोति' इति। शाकटायनश्चामुमेव विभाषितार्थमङ्गीकृत्य अस्य चोभयत्र पाठमात्रादेव सिद्धत्वाद्वैयर्थ्यमेव नूनं मत्वा 'शक मर्षणे' इत्येव पपाठ। अतस्स्वाम्युक्तमनेनैव प्रत्युक्तम्। शाकटायनोक्तमपि विभाषितपदस्य मैत्रेयादिभिस्तन्त्रान्तरप्रसिद्धार्थस्याभिधानात् सार्थकत्वाद्यत्किञ्चित्। तथा स्वामिशाकटायनपक्षावुक्त्वोक्तं च पुरुषकारे—'तच्चैतदुभयमपि बहुसम्मते यथोक्तेऽर्थे सम्भवत्ययुक्तमेव[1]' इति। शक्यति। शशाक। शेकतुः। शशक्थ, शेकिथ—भारद्वाजनियमादिड्विकल्पः। शक्ता। शक्ष्यति। शक्यतु। अशक्यत्। शक्येत्, शक्यात्—लिङौ। अशकत्। शक्यते। शेके—इत्यादि तङ्युदाहार्यम्। शिक्षति, शिक्षते—'सनिमीमा' इत्यादिनाऽच इस्, अभ्यासलोपः। 'स्कोः' इति सलोपः। शाशक्ति। शाकयति। अशीशकत्। शक्त्वा, शक्तः। शक्तो घटः कर्तुम्, शकितो घटः कर्तुम्—'सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन' इति वृत्तिः॥७९॥

८४. ष्विदा गात्रप्रक्षरणे। गात्रप्रक्षरणं घर्मस्रुतिः। ञिष्विदेति मैत्रेयादयः। तथा 'निष्ठाशीङ्' इत्यत्र न्यासेऽप्ययं ञिदेवोदाहृतः। अस्य ञित्त्वं हरदत्तस्यानभिमतम्, यदाह—'निष्ठा शीङ्' इत्यत्र "'ञिष्विदास्नेहनमोचनयोः' इति ञितो ग्रहणम्, न तु ष्विदा गात्रप्रक्षरणे इति देवादिकस्य; ञिद्भिस्साहचर्यात्, अस्य चाञित्त्वात्" इति। इदमेवानुसृत्य 'ञित्वं तस्यापपाठः[2]' इति पुरुषकारेऽप्युक्तम्। तथा च अनिट्कारिकावृत्तौ 'स्विद्यतीति श्यना निर्देशो ञिष्विदेत्यस्य निवृत्त्यर्थः' इति। यद्ययमपि ञित्स्यात्, अनेन किं व्यावर्त्तितं स्यात्। यद्येवं 'निष्ठा शीङ्' इत्यत्र 'ञितां ग्रहः' इति हरदत्तोक्तिरस्यानिट्त्वादेवाग्रहणसिद्धेरयुक्तेति चेत्, न; भावादिकर्मणोः प्रस्वेदितमित्यादौ सेट्त्वसम्भवात्। स्विद्यति। सिष्वेद। सिष्वेदिथ। सिष्वेदिव—क्रादिनियमादिट्। स्वेत्ता। स्वेत्स्यति। स्विद्यतु। अस्विद्यत्। स्विद्येत्, स्विद्यात्—लिङौ। अस्विदत्। सिष्विस्सति। सेष्विद्यते। सेष्वित्ति। स्वेदयति। असिष्विदत्। सिस्वेदयिषति—'सः स्विदि' इत्यादिनाऽभ्यासेणः परस्य सकारस्य 'स्तौतिण्योरेव' इति नियमापवादस्सकारः। स्विन्नः। 'ञिष्विदा स्नेहनमोचनयोः' इति द्यौतादिकाद् 'द्युद्भ्यो लुङि' इति परस्मैपदे अस्विदत् इति सिद्धावपि पुषादावस्य पाठोऽर्थभेदात्॥ ८०॥

८५. क्रुध कोपे। देवदत्ताय क्रुध्यति—'क्रुधद्रुह' इति कोपविषये सम्प्रदानत्वम्। तस्यैव 'क्रुधद्रुहोरुपसृष्टयोः कर्म' इति कर्मत्वे देवदत्तमभिक्रुध्यति इति।

---

१. दै॰ पृ॰ ४२। २. दै॰ पृ॰ ७६।

चुक्रोध । चुक्रोधिथ । चुक्रुधिव । क्रोद्धा इत्यादि । क्रोधनः—'क्रुधमण्डार्थेभ्यश्च' इति युच् ॥ ८१ ॥

८६. क्षुध बुभुक्षायाम् । क्षुध्यति । चुक्षोध । क्षोद्धा इत्यादि । क्षुत्—सम्पदादित्वात्क्विप् । क्षुधितः—इति 'तदस्य सञ्जातम्' इतीतचि ॥ ८२ ॥

८७. शुध शौचे । शुध्यति । शुशोध । शोद्धा इत्यादि । शुन्धतीति शपि ॥ ८३ ॥

८८. षिधु संराद्धौ । केचिदूदितं पठन्ति, तदसत्; अनुदात्तोपदेशवैयर्थ्यात् । सिध्यति । सिषेध । सेद्धा । सेत्स्यति । सिध्यतु । असिध्यत् । सिध्येत्, सिध्यात्—लिङौ । असिधत् । सिषित्सति । सेषिध्यते । सेषेद्धि । अन्नं साधयति—'सिध्यतेरपारलौकिके' इति परलोकप्रयोजनव्यतिरिक्तार्थवृत्तेः सिद्धेः णावेचः स्थाने आत्वम् । पारलौकिके तु तपस्सेधयति तापसम् । अत्र सिद्धिः परलोकार्थे ज्ञानविशेषे वर्तते । तापसस्सिध्यति ज्ञानविशेषमासादयति, तं तपः प्रयुङ्क्ते, स च ज्ञानविशेष उत्पन्नः परलोके जन्मान्तरे फलमभ्युदयलक्षणमुपसंहरन् परलोकप्रयोजनो भवति । अन्नं साधयति, ब्राह्मणेभ्यो दास्यामि इत्यत्र तु षिधेर्निष्पत्तिरर्थः, तस्याः प्रयोजनमन्नम्, तस्य यद्दानं तत्पारलौकिकम्, न पुनर्निष्पत्तिरेवेति साक्षात्परलोकप्रयोजने सिद्ध्यर्थे चरितार्थत्वाद् निषेधस्येह न प्रवृत्तिः । सिद्धः, साङ्काश्यसिद्धः—'सिद्धशुष्क' इति सप्तमीसमासः । 'तत्पुरुषे कृति बहुलम्' इत्यलुको 'नेन्सिद्धबध्नातिषु च' इतीन्नन्ते सिद्धशब्दे बध्नातौ च निषेधः । सिधित्वा, सेधित्वा, सिद्ध्वा—उदित्त्वादिड्विकल्पः, इटि 'रलो व्युपधात्' इति कित्त्वविकल्पः ॥ ८४ ॥

८९. राधादयोऽनुदात्ता उदात्तेतः ।

अतः परं विभाषेटः परस्मैपदिनो रधादीनष्टाह—

९०. रध हिंसासंराद्ध्योः । संराद्धिः पाकः । रध्यति । ररन्ध । ररन्धतुः । ररन्धुः । ररन्धिथ, ररन्ध । ररन्धथुः । ररन्ध । रेध्व, ररन्धिव । रेध्म, ररन्धिम—'रधादिभ्यश्च' इतीड्विकल्पो वलाद्यार्धधातुके । तत्रानिटि थलि 'झषस्तथोः' इति थकारस्य धकारे पूर्वस्य जश्त्वे दकारः । वस्मसोरेत्वाभ्यासलोपौ । इडादौ लिट्यन्यस्मिंश्चाजादौ 'रधिजभोरचि' इति नुम् । ररन्धिव, ररन्धिम—इत्यत्र रध् व रध् म इति स्थिते 'असंयोगाल्लिट् कित्' इति कित्त्वात्पूर्वं परत्वादिट्, तत्रापि कित्त्वान्नित्यत्वान्नुमि सतीदानीं 'संयोगान्तत्वेन वस्मसोः कित्त्वाभावात् 'अनिदिताम्' इति नलोपाभावः । हरदत्तस्तु इटः परत्वमाश्रित्य 'नेट्यलिटि' इत्यत्राह—"इटि सत्यजादित्वाद् नुमा भवितव्यम्, प्रागेव कित्त्वं प्राप्नोति । न चालिटीत्यस्य वैयर्थ्यम्, थल्यर्थवत्त्वात् । एवं तर्हि धातोरित्यनुवृत्तेरुपदेश एव नुम्भवति, अचीत्येषा विषयसप्तमी" इत्याह । रधिता, रद्धा—अनिट्पक्षे थलीव

धत्वजश्त्वे 'नेट्यलिटि रधेः' इति लिड्वर्जितेडादौ नुमो निषेधः। रधिष्यति, रत्स्यति। रध्यतु। अरध्यत्। रध्येत्, रध्यात्—लिङौ। अरधत्—अङि 'रधिजभोः' इति नुमि 'अनिदिताम्' इति नलोपः। रिरधिषति, रिरत्सति। रारन्धीति, रारद्धि। रन्धयति—नित्यत्वात्पूर्वंवन्नुमि सति अनुपधात्वान्न वृद्धिः। अररन्धत्। 'अनिदिताम्' इति नलोपो णिलोपस्य स्थानिवत्त्वात् चङो व्यवधानान्न भवति। रन्धनम्, रन्धकः—'रधिजभोरचि' इति नुम्। क्वसौ तु द्विर्वचनैत्वाभ्यासलोपेषु 'वस्वेकाजात्' इतीटि नुमि, तस्य संयोगान्तत्वेन 'असंयोगाल्लिट कित्' इत्यातिदेशिककित्त्वाभावेऽप्यौपदेशिककित्त्वाश्रयणे नलोपे रेधिवान् इति ॥ ८५ ॥

९१. णश अदर्शने। नश्यति। ननाश। नेशतुः। नेशिथ, ननंष्ठ। नेशतुः। नेशिव, नेश्व। नेशिम, नेश्म—एत्वाभ्यासलोपौ, पूर्ववदिड्विकल्पः। अनिट्पक्षे 'मस्जिनशोर्झलि' इति थलि, नुमि। एवमन्यस्मिन्नपि झलादौ। नशिता, नंष्टा। नशिष्यति, नङ्क्ष्यति। नश्यतु। अनश्यत्। नश्येत्, नश्यात्—लिङौ। अनशत्। अनशः। अनशम्। 'अत एकहल्' इत्यत्र भाष्यम्—

'नशिमन्योरलिट्येत्वं छन्दस्यमिपचोरपि। अनेशं मेनकेत्येतद् व्येमानं लिङ्गि पेचिरन्॥'

इति। अत्र कैयटः—'अनेशमिति मिपोऽम्भावः। पुषादित्वादङादेशः। 'छन्दसि' इति पूर्वेणापि सम्बन्धाद् भाषायामेत्वाभावः। एवं तु मेनकेत्यपि भाषायां न प्राप्नोति। यदि त्विष्यते पृषोदरादित्वाद्भविष्यति" इति। हरदत्तोऽपि—"'अलिटि' इति पादपूरणार्थोऽनुवादः। अनेशन्निति झेरन्तादेशः। 'अनेशन्नस्येषवः'। अनेशमिति तु प्रायेण पाठः। तत्र मिपोऽम्भावः। 'छन्दसि' इति वचनाद् मेनकेति च भाषायां न प्राप्नोति। यदीष्यते 'पृषोदरादिषु द्रष्टव्यम्'" इति। वृत्तौ तु—"'नशिमन्योरलिट्येत्वं वक्तव्यम्' अनेशत्, मेनकाम्। अनेशन् इति नशेर्लुङि पुषादित्वादङ्। मेनका इति 'मनेराशिषि च' इति वुन्। क्षिपकादिषु प्रक्षेपाद् इत्वं न क्रियते। 'छन्दस्यमिपचोरलिट्येत्वं वक्तव्यम्'" इति वाक्यभेदेन छन्दोग्रहणमपि पचिशेषतया व्याख्यातम्। दुर्गोऽपि सामान्येन 'नश एत्' इत्यङि परत एत्वमाह। प्रणश्यति—'उपसर्गादसमासेऽपि' इति णत्वम्। प्रनष्टा इत्यादौ 'नशेष्षान्तस्य' इति णत्वनिषेधः। अत्रान्तग्रहणस्य भूतपूर्वषान्तत्वाश्रयणार्थत्वात् प्रनङ्क्ष्यति इत्यादावपि न णत्वम्। निनशिषति, निनङ्क्षति। नानश्यते। नानंष्टि। नाशयति। अनीनशत्—'बुधयुधनश' इति नित्यं परस्मैपदम्। नश्वरः, नश्वरी—'इण्नशिज' इति करप्। स्त्रियाम् 'टिड्ढाणञ्' इत्यादिना ङीप्। प्रणश्यतीति प्रनट्, प्रनक्—'नशेर्वा' इति पदान्तस्य वा कुत्वम्। 'नशेष्षान्तस्य' इति णत्वनिषेधः। भूतपूर्वगत्या षान्तत्वम्। सा चान्तग्रहणात् तत्राश्रिता। नष्टः—'यस्य विभाषा' इत्यनिट्त्वे 'मस्जिनशोः' इति नुम्। 'अनिदिताम्' इति नलोपः। दुःखेन नाशयितव्यो दूणाशः—'ईषत्' इत्यादिना खल्। दुरो 'दाश-

नाशदभय्येषु' इति पृषोदरादिपाठाद् दुर उत्वम्, उत्तरपदादेष्टुत्वं च । नंशुकः, रेणुश्चन्द्रमाश्च—'पचिनश्योर्णुकन्कनुमौ च' इति नुकन्प्रत्ययो नुमागमश्च ।। ८६ ।।

९२. तृप प्रीणने[1] । इह प्रीणनं तृप्तिस्तर्पणं च । दृश्यते चोभयथा—'तृप्यन्तु भवन्तः', 'नाग्निस्तृप्यति काष्ठानाम्' । पितॄनताप्सीत्सममंस्त बन्धून्[2]' इति । तृप्यति । ततर्प । ततृपतुः । ततर्पिथ, ततर्प्थ, तत्रप्थ । ततृपथुः । ततृप । ततर्प । ततृपिव—'अनुदात्तस्य चर्दुपधस्य' इति थल्यनिट्पक्षेऽमागमविकल्पः । कृते च तस्मिन् यणादेशः । तर्पिता, तर्प्ता, त्रप्ता । तर्पिष्यति, तर्प्स्यति, त्रप्स्यति । तृप्यतु । अतृप्यत् । तृप्येत्, तृप्यात्—लिङौ । अतृपत् । अतृपताम्– पुषादित्वादङ् । 'स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वक्तव्यः' इति सिच्पक्षे अतर्पीत्, अतर्पिष्टाम् इति । 'नेटि' इति वृद्धिनिषेधः । अनिट्पक्षे त्वमागमे अत्राप्सीत् । अन्यदा अताप्र्सीत् । उभयत्र 'वदव्रज' इति वृद्धिः । तितर्पिषति, तितृप्सति—'हलन्ताच्च' इति सनः कित्त्वात् नामागमः, नापि गुणः । तरीतृप्यते । तरीतृपीति, तरीतर्प्ति इत्यादि । रुग्रिकोरपि नेयम् । तर्पयति । अततर्पत् , अतीतृपत्– उर्ऋद्वा । तर्पित्वा, तृप्त्वा । फलानां तृप्तः—'पूरणगुणसुहितार्थ' इति षष्ठीसमासनिषेधः । सुहितार्थास्तृप्त्यर्थाः । तृप्रः पुरोडाशः—'स्फायितञ्चि' इत्यादिना रक् । त्रपिष्ठः, त्रपीयान् । तृप्रमाचष्टे त्रापयति—'प्रियस्थिर' इत्यादिना 'णाविष्ठवत्' इति च त्रपादेशः । 'पृथ्वादिष्वपाठाद् इमनिजस्य नास्ति' इति वृत्तावुक्तम् । तृपला लता—'कल् तृपश्च' इति कलप्रत्ययः । अमुं स्वादावपि मैत्रेयात्रेयादयः पठन्ति । तद् वृत्तिन्यासपदमञ्जर्यादिकृतामनभिमतम् । तत्तत्रैवोपपादयिष्यते । अयं युजादौ तुदादौ च । तत्र तुदादौ द्वितीयान्त इत्येके ।। ८७ ।।

९३. दृप हर्षणमोहनयोः[3] । 'मोहनं गर्वः' इति स्वामी । हर्षविमोचनयोरित्येके । दृप्यति इत्यादिना पूर्ववत् । दर्पणः—नन्द्यादिः । अयमुत्क्लेशे तुदादिः । तृपिदृप्योरनुदात्तेत्त्वममर्थम् । इट् तु रधादित्वाद्विकल्पित इति न तन्निवृत्त्यर्थम् ।। ८८ ।।

९४. द्रुह जिघांसायाम् । देवदत्ताय द्रुह्यति—'क्रुधद्रुह' इति दोषविषयस्सम्प्रदानम् । देवदत्तमभिद्रुह्यति—'क्रुधद्रुहोरुपसृष्टयोः कर्म' इत्युपसृष्टत्वे कर्मत्वम् । दुद्रोह । दुद्रुहतुः । दुद्रोहिथ—अनिट्पक्षे 'वा द्रुहमुहष्णुहष्णिहाम्' इति झलि पदान्ते च हकारस्य वा घत्वे 'झषस्तथोः' इति झलि पदान्ते च हकारस्य वा घत्वे 'झषस्तथोः' इति थकारस्य धत्वे 'झलां जश् झशि' इति घकारस्य गत्वे—दुद्रोग्ध । घत्वाभावे 'हो ढः' इति ढत्वे धकारस्य धत्वष्टुत्वयोः ढो ढे लोपे, ढलोपदीर्घात्परत्वाद् गुणे—दुद्रोढ । दुद्रुहथुः । दुद्रुहिव, दुद्रुह्व । द्रोहिता, द्रोग्धा—

---

१. 'प्रीतौ' इति क्षीरस्वामी । २. भ० का० १।२ ।
३. 'हर्षणमोचनयोः' इति मैत्रेयः ।

घत्वादि पूर्ववत् । द्रोढा—ढत्वादि । द्रोहिष्यति, ध्रोक्ष्यति—कृते घत्वे सकारपरत्वेन 'एकाचः' इति भष्भावे 'खरि च' इति चर्त्वे ककारः । ढत्वपक्षेऽपि कृते ढत्वे भष्भावे च 'षढोः कस्सि' इति कत्वम्, इदमेव रूपम् । द्रुह्यतु । अद्रुह्यत् । द्रुह्येत् । द्रुह्यात् । अद्रुहत् । दुद्रोहिषति, दुद्रुहिषति—'रलो व्युपधात्' इति कित्त्व-विकल्पः । अनिटि दुध्रुक्षति—घत्वढत्वयोर्भष्भावादि पूर्ववत् । दोद्रुह्यते । दोद्रोग्धि, दोध्रोढि, दोध्रोग्धि । द्रोहयति । अदुद्रुहत् । द्रोही—सम्पृचादिना घिनुण् । द्रुहित्वा; द्रोहित्वा; द्रुग्ध्वा, द्रुढ्वा । द्रुग्धः, द्रूढः; द्रूढवान्—घत्वादि पूर्ववत् । ढत्वे धत्वष्टुत्वढलोपदीर्घाः । मित्रध्रुक्, मित्रध्रुट्—'सत्सूद्विषद्रुह' इति क्विपि पदान्तत्वे 'वा द्रुह' इति वा घत्वम् । अन्यदा ढत्वम् । भष्भावाद्युभयत्रापि भवति ॥ ८९ ॥

९५. मुह वैचित्त्ये । वैचित्यमविवेकः । मुह्यति । मुमोह । मुमुहतुः । मुमुहिथ, मुमोग्ध, मुमोढ । मुमुहिव, मुमुह्व । मोहिता, मोग्धा, मोढा । मोहिष्यति, मोक्ष्यति । मुह्यतु । अमुह्यत् । मुह्येत् । मुह्यात् । अमुहत् । मुमुहिषति, मुमोहिषति, मुमुक्षति । मोमुह्यते । मोमोग्धि, मोमोढि । मोहयति—चित्तवत्कर्तृकत्वे 'अणावकर्मकात्' इति परस्मैपदमेव । परिपूर्वत्वे तु 'न पादमि' इत्यादिना निषेधात् 'णिचश्च' इत्यादिना उभयं भवति—परिमोहयति, परिमोहयते इति । परिमोही—सम्पृचा-दिना घिनुण् । मुहित्वा, मोहित्वा, मुग्ध्वा, मूढ्वा । मुग्धः, मूढः । उन्मुक्, उन्मुट्—द्रुहिवत्प्रक्रिया । भष्भावस्तु वश्भावान्न भवति । मूर्खः—'मुहेः खो मूर्च' इति खप्रत्ययो मूरादेशश्च ॥ ९० ॥

९६. ष्णुह उद्गिरणे । स्नुह्यति । सुष्णोह । सुष्णुहतुः । सुष्णोहिथ, सुष्णोग्ध, सुष्णोढ । सुष्णुहिव, सुष्णुह्व । स्नोहिता, स्नोग्धा, स्नोढा । स्नोहिष्यति, स्नोक्ष्यति । स्नुह्यतु । अस्नुह्यत् । स्नुह्येत्, स्नुह्यात्—लिङौ । अस्नुहत् । सुस्नुहिषति, सुस्नो-हिषति—'स्तौतिण्योरेव' इति नियमान्न षत्वम् । सुस्नुक्षति । सोष्णुह्यते । सोष्णोग्धि, सोष्णोढि । स्नोहयति । असुष्णुहत् । स्नोहित्वा, स्नुहित्वा, स्नुग्ध्वा, स्नूढ्वा । स्नुग्धः, स्नूढः—सर्वत्राभ्यासात्परस्य 'आदेशप्रत्यययोः' इति षत्वे ष्टुत्वेन 'रषाभ्याम्' इति वा णत्वम् ॥ ९१ ॥

९७. ष्णिह प्रीतौ । स्निह्यति । सिष्णेह । सिष्णेहिथ, सिष्णेग्ध, सिष्णेढ । सिष्णिहिव, सिष्णिह्व । स्नेहिता, स्नेग्धा, स्नेढा । स्नेहिष्यति, स्नेक्ष्यति । स्निह्यतु । अस्निह्यत् । स्निह्येत् । स्निह्यात् । अस्निहत् । सिस्निहिषति, सिस्नेहिषति, सिस्नि-क्षति । सेष्णिह्यते । सेष्णेग्धि, सेस्नेढि । स्नेहयति । असिष्णिहत् । स्निहित्वा, स्नेहित्वा, स्निग्ध्वा, स्निढ्वा । स्निग्धः, स्नीढः । उष्णिक्—'ऋत्विक्' इत्यादिना उत्पूर्वात् स्निह्यतेः क्विन् । उदोऽन्तलोपः, तस्य च षत्वं निपात्यते । 'क्विन्प्रत्ययस्य' इति हकारस्य घत्वे जश्त्वे चर्त्वम् । उष्णिहा—अजादिपाठात् टाप् ॥ ९२ ॥

९८. वृत्। विभाषेटः परस्मैपदिनो रधादयो वृत्ता इत्यर्थः। अत्र वृत्करणं रधादिपरिसमाप्त्यर्थम्, पुषादयस्त्वागणान्तात्। यदुक्तं तरङ्गिण्यां रधादीन् परिसमाप्य - 'एतदन्तः पुषादिरित्येके। अतोऽग्रे शमादिः' इति, तद्भाष्यवार्त्तिक-विरोधादुपेक्ष्यम्। तथा हि--'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यत्र 'अस्यतिग्रहण-मात्मनेपदार्थं द्रष्टव्यम्। किमुच्यते आत्मनेपदार्थमिति न पुनः परस्मैपदार्थमपि स्यात्? पुषादित्वात्, पुषादिपाठात्परस्मैपदेषु अङ् भविष्यति' इति। अत्र कैयटः—'पुषादय आगणान्तात्; अन्तरा तु वृत्करणं रधादिपरिसमाप्त्यर्थम्, न तु पुषादिपरिसमाप्त्यर्थमिति प्रतिपादनाय सुहृद्भूत आचार्य आह—अस्यतिग्रह-णम्'' इति। पुषादिसूत्रे न्यासपदमञ्जर्योरप्येवमुक्तम्। अत्र 'वा द्रुहादीनाम्' इति लाघवेन घत्वे विधातव्ये प्रतिपदपाठो यङ्लुगर्थः। गणनिर्देशे हि 'निर्दिष्टं यद्गुणेन च' इति वचनाद् घत्वं न स्यात्।

अथ पुषादीनेव नित्येटः परस्मैपदिन आह—

९९. शमु उपशमने। शाम्यति। शशाम। शेमतुः। शेमिथ। शेमिव। शमिता। शमिष्यति। शाम्यतु। अशाम्यत। शाम्येत्। आशिषि—शम्यात्। अशमत्—'शमामष्टानां दीर्घश्श्यनि' इति दीर्घः। शिशमिषति। शंशम्यते। शंशमीति, शंशन्ति। शंशान्तः। निशमयति वचः—अमन्तत्वान्मित्त्वम्। अशामि, अशमि—'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इति णेश्चिणि पक्षे दीर्घः। निशामयति रूपम्—'शमोऽदर्शने' इति दर्शने मित्त्वनिषेधः। शमी—'शमित्यष्टाभ्यो घिनुण्' इति घिनुण्। 'नोदात्तोपदेशस्य मान्तस्य' इति वृद्धिनिषेधः। शमयतीति शमनः—बाहुलकात्कर्तरि ल्युः। शमित्वा, शान्त्वा—'उदितो वा' इतीड्विकल्पः। शान्तः-'यस्य विभाषा' इतीण्णिषेधः। प्रशाम्यतीति प्रशान्—'अनुनासिकस्य क्विझलोः क्ङिति' इति क्विपि दीर्घः। 'मो नो धातोः' इति नकारः पदान्ते। स्वरादित्वा-दस्याव्ययत्वम्। शान्तिः—'तितुत्र' इतीण्णिषेधः। शान्तः—ण्यन्तात् 'वा दान्तशान्त' इति णिलुगनिट्त्वं च पक्षे निपात्यते। अन्यदा शमितः—'निष्ठायाम्' इति णिलोपः। शमलम्--'शकिशम्योर्नित्' इति कलप्रत्ययः। शम्बः---'शमेर्बन्' इति बन्प्रत्ययः। शम्बाकरोति—'कृञो द्वितीयतृतीयशम्ब' इति डाच्। अनुलोम-कृष्टं प्रतिलोमं कृषतीत्यर्थः। 'शम्बशब्दस्यात्र प्रातिलोम्ये वृत्तिः, कृञश्च कर्षणे' इति हरदत्तः। शम्बुः—'शमेर्बुन्' इति बुन् प्रत्ययः। शाम्बव्यम्—गर्गादित्वाद्यञ्। शर्मी--- शमशब्दात्पिप्पल्यादित्वान्ङीष्। शम्या विकारोऽवयवो वा शामीलम्---'शम्याष्ट्लञ्'। टित्वात् स्त्रियां शामीली॥ ९३॥

१००. तमु काङ्क्षायाम्। ताम्यति इत्यादि शमिवत्। ताम्बूलम्, ताम्बूरम्—''तमे-र्बुक्च' इत्यूरीलचौ प्रत्ययौ। णिद्वद्भावाद् वृद्धिः, बुगागमश्च। ताम्रम्—'अमि-तमयोर्दीर्घश्च' इति रकि दीर्घः। तमसा नदी--'अत्यमिचमितमि' इत्यसच्।

तमः—असुन्। अवतमसम्, सन्तमसम्, अन्धतमसम्—'अवसमन्धेभ्यस्तमसः' इत्यच् समासान्तः। तमिस्रा—'ज्योत्स्नातमिस्रा' इति संज्ञायां मत्वर्थीयो रः, उपधायाश्चेकारः। 'स्त्रीत्वमतन्त्रम्, अन्यत्रापि दृश्यते, तमिस्रं नभः' इति वृत्तौ। तमसाकृतम्—'ओजस्सहोम्भस्तमसस्तृतीयायाः' इत्यलुक्। तमी—इन्नन्तात् ङीप्॥ ९४॥

१०१. दमु उपशमने[1]। दाम्यति इत्यादि। दमयतीति दमनः—नन्द्यादिः। अरिन्दमः—'संज्ञायां भृतॄवृजि' इत्यादिना खच्। दमयति, दमयते—'अणावकर्मकात्' इति परस्मैपदस्य 'न पादमि' इति निषेधः। दान्तः, दमितः—'वा दान्त' इति ण्यन्तान्निष्ठायामनिट्त्वम्, णिलुक्च पक्षे। दमुनाः—'दमेरुनसिः'। दण्डः—'अमन्ताड्डः'। द्विदण्डि प्रहरति—'द्विदण्ड्यादिभ्यश्च' इति बहुव्रीहाविच्प्रत्ययान्तो निपात्यते। द्वौ दण्डावस्मिन्प्रहरण इति विग्रहः। समुदायनिपातनस्य रूढ्यर्थत्वाद् द्विदण्डा शाला इत्यत्र न भवति। तिष्ठद्गुप्रभृतिषु 'इच्' इति पाठाद् इजन्तस्याव्ययीभावाद् अव्ययत्वम्। दण्डिनोऽपत्यं दाण्डिनायनः—इन्नन्तात् 'नडादिभ्यः फक्' इति फकि 'दाण्डिनायन' इति निपातनाट्टिलोपाभावः। शमिना सहास्यापाठः, सकर्मकत्वात्। 'उपशमने' इति ण्यन्ते द्रष्टव्यः॥ ९५॥

१०२. श्रमु तपसि खेदे च। श्राम्यति इत्यादि। अत्र वर्धमानः—'नोदात्तोपदेश' इति वृद्धिनिषेधे प्राप्ते प्रयोगदर्शनाद् वा श्रमेर्वृद्धिमाह। तत्—'अनाचमिकमिवमीनामिति वक्तव्यम्' इति चम्यादीनामेव भाष्यवार्त्तिकयोः वृद्ध्यङ्गीकारात्, 'कथं सूर्यविश्राभभूः इति? एवमादिकं प्रयोगं अन्यायमेव मन्यन्ते' इति वृत्तावुक्त्वाप्यायुक्तम्। कुमारी चासौ श्रमणा च कुमारश्रमणा—'कुमारः श्रमणादिभिः' इति कर्मधारयः। श्रमणाशब्देन कुमारशब्दस्य सामानाधिकरण्याभावात् लिङ्गविशिष्टपरिभाषया कुमारीशब्दस्य समासे 'पुंवत्कर्मधारय' इति पुंवद्भावः। अत एव निर्देशाल्ल्युः, युज्वा॥ ९६॥

१०३. भ्रमु अनवस्थाने। भ्राम्यति इत्यादि। 'वा भ्राश' इति श्यनो विकल्पनाद् यदा शप् तदा भ्रमति इत्यादि। शेषं भौवादिकवत्। 'शमामष्टानाम्' इति श्यनि दीर्घः, लुङ्यङ् च विशेषः। भ्रमी—शमादित्वाद्धिनुण्। अत्र आत्रेयः—'अभिधानवशाद् अकर्मकादेव अयमिष्यते। तेन भ्रमिता वनमिति वृत्रेव' इति। एवं चायं सकर्मकोऽकर्मकश्चेत्यनेनानासूचि॥ ९७॥

१०४. क्षमू[2] सहने। क्षाम्यति। चक्षाम। चक्षमतुः। चक्षमिथ, चक्षन्थ। चक्षमिव, चक्षण्व—'म्वोश्च' इति नत्वे णत्वम्। क्षमिता, क्षन्ता। क्षमिष्यति, क्षंस्यति।

---

१. 'उपशमे' इति मैत्रेयः।

२. 'क्षमूष्' इति क्षीरस्वामी। अत्रत्या क्षीरतरङ्गिणी (पृ० २१७) द्रष्टव्या।

क्षाम्यतु । अक्षाम्यत् । क्षाम्येत् । क्षम्यात् । अक्षमत् । चिक्षमिषति, चिक्षंसति । चंक्षम्यते । चङ्क्षन्ति । क्षमयति । अचिक्षमत् । क्षमी । क्षन्त्वा, क्षमित्वा—ऊदित्त्वादिड्विकल्पो वलादौ । क्षान्तः, क्षान्तिः—'यस्य विभाषा' 'तितुत्र' इति वेण्णिषेधः । क्षमा इति षितो भौवादिकस्य । अमुमपि केचित् षितं पठन्ति; तदसत् । तथा च स्वामी—'केचिदत्रापि क्षमूषिति षितं पठन्ति, तदसत् । क्षमू सहने इति सभ्याः' इति । वर्धमानोऽपि—क्षमेर्दैवादिकस्याननुबन्धस्य श्रान्तिः स्यादेव' इति । 'अषितः क्षाम्यतेः क्षान्तिः क्षमूषः क्षमतेः क्षमा[1]' इति दैवपुरुषकारयोरपि ॥ ९८ ॥

१०५. क्लमु ग्लानौ । क्लाम्यति, क्लामति । चक्लाम । क्लामिता इत्यादि । 'वा भ्राश' इत्यादिना श्यन्विकल्पः । शपि 'ष्ठिवुक्लमु' इत्येव श्यन्यपि दीर्घे सिद्धे शमादिपाठो घिनुणर्थः ॥ ९९ ॥

१०६. मदी हर्षे । माद्यति इत्यादि । धर्मात्प्रमाद्यति—'जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्' इति धर्मोपादानम् । मदयति—'मदी हर्षग्लेपनयोः' इति घटादिपाठान्मित्त्वम् । अन्यत्र मादयति । माद्यत्यनेन मनः इति मद्यम्—'गदमद' इत्यनुपसर्गे यत् । 'कृत्यल्युटो बहुलम्' इति करणेऽपि भवति । मदयतीति मदनः—नन्द्यादित्वाण्ण्यन्ताल्ल्युस्संज्ञायाम् । इरा जलम्, तेन माद्यतीति इरम्मदः—'उग्रम्पश्येरम्मद' इति खशि श्यनभावो निपात्यते । उन्मदिष्णुः—'अलङ्कृञ्' इत्यादिना इष्णुच् । उन्मादी—शमादित्वाद्घिनुण् । मदः—'मदोऽनुपसर्गे' इत्यप् । "'व्यधजपोरनुपसर्गे' इत्यत्रैव मदिग्रहणेऽपि कर्तव्ये पृथक्सूत्रारम्भाद् उन्मादः इति घञपि" इति न्यासः । प्रमदः, सम्मदः—'प्रमदसम्मदौ हर्षे' इत्यम्निपात्यते । मदित्वा । मत्तः, मत्तवान्—ईदित्त्वादनिट्त्वम् । 'न ध्याख्या' इत्यादिना नत्वनिषेधः । मदिरा—'इषिमदि' इत्यादिना किरच् । मन्दते, मंदति इति स्तुत्यादौ शपि । मद तृप्तियोगे इति चुरादावाधृषीयः ॥ १०० ॥

१०७. वृत्[2] । शमादयोऽष्टौ वृत्ताः ।

१०८. असु क्षेपणे । अस्यति । आस । आसिथ । असिता । असिष्यति । अस्यतु । आस्यत् । अस्येत् । अस्यात् । आस्थत् । आस्थताम्—'अस्यतिवक्तिख्यातिभ्यः' इति कर्तरि लुङ्यङि 'अस्यतेस्थुक्' इति थुगागमः । पुषादित्वादङि सिद्धेऽस्यतिग्रहणमात्मनेपदार्थम् । तच्च कर्मकर्तरि 'उपसर्गादस्यत्यूह्योर्वा वचनम्' इति शुद्धेऽपि कर्तरि सोपसर्गत्वे पक्षे तङो विधानादस्ति । निरस्यते । निरासे । निरासिषे । निरसिता । निरसिष्यते । निरस्यताम् । निरास्यत । निरस्येत । निरसिषीष्ट । निरास्थत ।

---

१. दै० १४६ का०, पृ० ९१ ।

२. सूत्रमिदं सर्वेष्वेवास्य ग्रन्थस्य संस्करणेषु न दृश्यते । अस्माभिस्त्वन्येषां पाणिनीयधातुकोशानां प्रामाण्यादिह निवेशितः । —स०

निरास्थताम्—'अस्यति' इत्यङ् । इदमेव कर्मकर्तर्यपि रूपम् । कर्मणि चिण्सिचावेव—निरासि, निरासिषाताम् । असिसिषति । निरसिसिषते, निरसिसिषति—'पूर्ववत्सनः' इति वा तङ् । आसयति । आसिसत् । समस्यम्, संन्यस्यम् । समस्या—'ऋहलोर्ण्यत्' "'संज्ञापूर्वको विधिरनित्यः' इति वृद्ध्यभावः" इत्यात्रेयः । प्रास्यन्ते तमिति प्रासः—"'अकर्तरि च कारके' इति घञ्" इति वृत्तौ । आत्रेयस्तु 'हलश्च' इति करणे घञमाह । प्रासनम्—करणे ल्युट् । द्व्यहात्यासं गाः पयः पाययति, द्व्यहमत्यासम् इति वा—'अस्यतितृषोः क्रियान्तरे कालेषु' इति काले कर्मण्युपपदे क्रियान्तरे क्रियाया व्यवधायकेऽर्थे वर्तमानयोरस्यतितृषोर्णमुल् । अद्य पाययित्वा द्व्यहमत्यस्य पाययतीत्यर्थः । अत्यसनक्रियया पानक्रिया व्यवधीयते । 'तृतीयाप्रभृतीनि' इति समासविकल्पः । असित्वा, अस्त्वा—उदित्त्वादिड्विकल्पः । अस्तः, अस्तवान्—'यस्य विभाषा' इतीण्णिषेधः । अस्तमनेन, आसितमनेन, 'सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन, अस्यतेर्भावे' इति 'विभाषा भावादिकर्मणोः' इत्यत्र वृत्तौ । अस्तंगत्य—'अस्तं च' इति क्रियायोगे गतित्वाद् अस्तंशब्दस्य समासः । 'अत एव निर्देशादस्तशब्दस्य मान्तत्वम्' इत्यात्रेयः। 'अव्युत्पन्नोऽव्ययः' इति वृत्तिन्यासपदमञ्जर्यादौ । तरङ्गास्यस्तः'—द्वितीया श्रित' इति समासः । असुरः—'असेरुरन्' इत्युरन् । प्रज्ञादित्वाद्—आसुरः । स्वसा—'सुञ्यस्यतेर्ऋन्' इति सावुपपदे ऋन्, अतङादि । 'न षट्स्वस्रादिभ्यः' इति 'ऋन्नेभ्यः' इति ङीपो निषेधः । स्वसुरपत्यं स्वस्रीयः –'स्वसुश्छः' इति छः । पितृष्वसुरपत्यं पैतृष्वस्रीयः, पैतृष्वसेयः –'पितृष्वसुश्छण्', ढकि तु 'ढकि लोपः' इत्यन्तलोपः । अत एव अनुवादाड्ढक् । मातृष्वस्रीयः, मातृष्वसेयः—'मातृष्वसुश्च' इति छण्, ढकि लोपः । 'मातृपितृभ्यां स्वसा' इति षत्वम् । मातुस्स्वसा, मातुष्ष्वसा—'विभाषा स्वसृपत्योः' इति पक्षेऽलुक् । 'मातुःपितुर्भ्यामन्यतरस्याम्' इत्यलुकि षत्वविकल्पः, स्वसृस कारस्य विसर्जनीयस्य सत्वे ष्टुत्वेन षत्वम् । एवं पितुस्स्वसा, पितुष्ष्वसा इति । असुः—'शॄस्वृ' इत्यादिना उप्रत्ययः । अत्र केचित् 'नेगंद' इत्यादौ तन्त्रेणाकारप्रश्लेषेण अयमपि निर्दिष्ट इति प्रण्यस्यतीत्यादौ णत्वमिच्छन्ति । अस्ति इति लुकि । असते, असति इति शपि ॥ १०१ ॥

१०२. यसु प्रयत्ने । यस्यति, यसति । ययास । येसतुः । यसिता । यसिष्यति । यस्यतु, यसतु । अयस्यत्, अयसत् । यस्येत्, यस्यात्—लिङौ । अयसत्—'यसोऽनुपसर्गात्' इति श्यनो विकल्पनात्तदभावे शपि । उपसृष्टात्तु प्रयस्यति इति श्यनेव । सम्पूर्वत्वे तु 'संयसश्च' इति विकल्पः । संयस्यति, संयसति इत्यादि । यियसिषति । यायस्यते । यायस्ति । आयासयति, आयासयते—'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति परस्मैपदस्य 'न पादमि' इत्यादिना निषेधः । आयासी—सम्पृचादिना घिनुण् । यस्त्वा, यसित्वा—उदित्त्वादिड्विकल्पः । यस्तः, यस्तवान् ॥ १०२ ॥

११०. जसु मोक्षणे। जस्यति इत्यादि यस्यतिवत्। अजस्रम्—'नमिकम्पिस्म्यजस' इति नञ्पूर्वाज्जसेरप्रत्ययः। स्वभावादयं क्रियासातत्ये। 'जासिनिप्रहण' इति कर्मणि षष्ठीविधौ हिंसार्थग्रहणात् अस्य बद्धान् जासयति इति द्वितीयैव। जसि रक्षणे, जसु हिंसायाम्, जसु ताडने—इति त्रयं चुरादौ ॥ १०३ ॥

१११. तसु उपक्षये[1]।

११२. दसु च। तस्यति ॥ दस्यति इत्यादि। दासितः। दस्तः—'वा दान्त' इत्यादि पक्षे णिलुगिडभावश्च। दस्रौ—'स्फायितञ्चि' इत्यादिना रक्। पुष्पवन्तपदादिवदयं नित्यं द्विवचनान्तः। दाने दासति, दासते इति शपि गतम् ॥१०४-१०५॥

११३. वसु स्तम्भे। वस्यति। ववास। ववसतुः—'न शसददवादि' इत्येत्वाभ्यासलोपनिषेधः। वसिता इत्यादि। 'अयं दन्तोष्ठ्यादिः' इत्यात्रेयादयः। तथैव दैवपुरुषकारयोः—'वस्यति स्तम्भने वस्ते च्छादने वसयेद् वसेत्[2]' इति। अपरे बकारादिमाहुः। 'घसिश्च सान्तेषु वसिः प्रसारणी' इत्यनिट्कारिकाव्याख्याने वृत्तौ प्रसारणीतिवचनात् वस आच्छादने इत्यस्येड्भवतीति वस्तेरेव प्रत्युदाहरणात् वृत्तिकृतोऽपि बशादित्वमभिमतं प्रतीयते। एवं हि बस्तशब्दोऽपि सिद्ध्यति। शमादय एतदन्ता उदितः, क्षाम्यतिमाद्यती वर्जयित्वा ॥ १०६ ॥

११४. व्युष[3] विभागे। अयं दाहे पूर्वं पठितः, उदाहृतश्च, इह तु विभागेऽव्युषदित्यङर्थः पाठः। केचिदमुमोष्ठ्यादि दन्त्यान्तमिच्छन्ति ब्युसेति। अपरे त्वयकारं बुसेति ॥ १०७ ॥

११५. प्लुष दाहे। प्लुष्यति इत्यादि। इह पाठः अप्लुषद् इत्यङर्थः। पूर्वत्र पाठस्तु अप्लोषीद् इति सिजर्थः ॥ १०८ ॥

११६. बिस प्रेरणे। ओष्ठ्यादिः। बिस्यति इत्यादि। बिसम्—इगुपधलक्षणः कः। बिस्तः—बाहुलकादौणादिस्तन् अगुणत्वं च। 'तितुत्र' इतीण्णिषेधः। द्वाभ्यां बिस्ताभ्यां क्रीता द्विबिस्ता, द्वैबिस्तोकी—'बिस्ताच्च' 'बहुपूर्वाच्च वक्तव्यम्' इति द्वित्रिबहुपूर्वाद्बिस्तान्ताद् द्विगोः परस्यार्हीयस्य ठञो विभाषा लुक्। 'द्विगोः' इति ङीपः 'अपरिमाणबिस्त' इति निषेधः। अत एव बिस्तेतिनिर्देशाद्वा निष्ठायामनिट्त्वम्। लुगभावे तु 'परिमाणान्तस्य' इत्युत्तरपदवृद्धिः। 'टिड्ढाणञ्' इत्यादिना ङीप्। एवं त्रिबहुपूर्वादपि द्रष्टव्यम् ॥ १०९ ॥

११७. कुस श्लेषणे। कुस्यति इत्यादि। कुसितायी—'वृषाकप्यग्नि' इत्यादिना क्तप्रत्ययान्तत्वात् ङीबुदात्तः, ऐकारोऽन्तादेशः। दुर्गस्तालव्यान्तं पपाठ, कुशशब्दस्य दर्शनात्। स तु भौवादिकादपि सिद्धः ॥ ११० ॥

११८. बुस उत्सर्गे। बुस्यति इत्यादि। बुसम्—इगुपधलक्षणः कः। यस्मिन्काले बुसं खले वर्तते स कालः खलेबुसम्—'तिष्ठद्गुप्रभृतीनि च' इत्यव्ययीभावसमासः।

---

१. प्रक्षेपे इति मैत्रेयः। २. दै० १८७ का०। ३. 'प्युस' इति क्षीरस्वामी।

'अयं प्रथमान्त एव, विभक्त्यन्तरेण न सम्बध्यते' इति वृत्तौ। बुस्तम्—पूर्ववत्तङीङभावः, अर्धर्चादिषु पाठाद्वा निष्ठायामनिट्त्वम् ॥ १११ ॥

११९. मुस खण्डने। मुस्यति इत्यादि। दन्त्यान्त इति सर्वे। आत्रेयस्तु "कातन्त्रे मूर्धन्यान्तोऽयम्। तथा च 'राघवस्यामुषः कान्ताम्'[1] इति भट्टिकाव्ये प्रयोगश्च" इति पाठान्तरमप्याह। मुसलम् इति, 'अस्मादेव औणादिकः कलप्रत्ययः' इति वदतो आत्रेयमैत्रेययोरन्येषामप्ययमुं सान्तं पठतां 'भ्रमिमस्योरुच्चोपधाया' इति मसेर्मुसलव्युत्पत्तिरनार्षा' इति मतम्। मुसली गृहगोधिका—गौरादिः। मुसलेन वधमर्हति मुसल्यः—दण्डादित्वाद्यत्। मुस्ता—बाहुलकादौणादिके तनि 'तितुत्र' इतीण्णिषेधः। मुस्तकम्—संज्ञायाम् कन्। अर्धर्चादिः ॥ ११२ ॥

१२०. मसी परिमाणे[2]। मस्यति। ममास। मेसतुः। मसिता। मसिष्यति। मस्यतु। अमस्यत्। मस्येत्। मस्यात्। अमसत्। मिमसिषति। मामस्यते। मामस्ति। मासयति। अमीमसत्। मस्तः, मस्तवान्—ईदित्वादनिट्त्वम्। मस्तकम्—'संज्ञायां कन्'। मस्तु—'सितनि' इति तुन्। 'तितुत्र' इतीण्णिषेधः। अस्यादयो मसिपर्यन्ता दन्त्यान्ताः। अत्र कचित् आद्यन्तव्यत्यासेन समि इति पाठः ॥ ११३ ॥

१२१. लुट विलोडने। लुट्यति। अलुटत् इत्यादि। भूवादिपाठात् अलोटीत् इति सिजप्यस्ति। प्रतिघाते तु द्युतादिपाठादङप्यस्ति—अलुटत्, अलोटिष्ट इति। लोट्यतीति कण्ड्वादियगन्तः ॥ ११४ ॥

१२२. उच समवाये। उच्यति। उवोच। ऊचतुः। उवोचिथ—पिद्वचनेषु परत्वाद् गुणे, पश्चाद् द्विर्वचने 'अभ्यासस्यासवर्णे' इत्युवङ्। यद्यपि द्विर्वचने गुणस्य स्थानिवत्त्वम्, तथाप्युत्तरखण्डस्य 'वार्णादाङ्गं बलीयः' इति सवर्णदीर्घात्पूर्वं गुणेऽभ्यासस्योवङ्। ओचिता। ओचिष्यति। उच्यतु। औच्यत्। उच्येत्, उच्यात्—लिङौ। मा भवानुचिचत्। ओचिचिषति इत्यादावपि द्विर्वचनात्पूर्वं गुणः। अत्र च ज्ञापकम् 'रलो व्युपधात्' इत्यत्र हलादिग्रहणेन अजादेर्गुणार्थः कित्त्वपर्युदासः। यदि च पूर्वं द्विर्वचनं स्याद् अकित्वेऽप्यनुपधात्वाद् गुणो न भविष्यतीति किं तेन! ओचित्वा—'न क्त्वा सेट्' इत्यकित्त्वम्। उचितः, औचित्यम्—ब्राह्मणादित्वात् ष्यञ्। औचिती—ष्यञन्तात् षित्त्वान्ङीषि 'हलस्तद्धितस्य' इति यलोपः। नियमेनोच्यतीति न्योकः शकुन्तः—इगुपधलक्षणः कः। नियमेनास्मिन् शकुन्ताः समवयन्तीति न्योको वृक्षः—घञर्थे कः। ओकः—अच्। 'ओक उचः के' इति निपातनात्कुत्वम्, गुणश्च। ओकः, ओकसी गृहम्—असुनि बाहुलकात्कुत्वम्। उल्बम्—'उल्बादयश्च' इति बप्रत्ययः। चकारस्य च लकारो गुणाभावश्च निपात्यते ॥ ११५ ॥

१. भ० का० १५।१६। २. 'परिणामे' इति क्षीरस्वामी, भट्टोजिदीक्षितश्च।

१२३. भृशु भ्रंशु अधःपतने। भृश्यति। बभर्श। बभृशतुः। बभृशुः। बभर्शिथ। बभृश। बभृशिव। भर्शिता। भर्शिष्यति। भृश्यतु। अभृशत्। भृश्येत्। भृश्यात्। अभृशत्। बिभर्शिषति। बरीभृश्यते। बरीभर्ष्टि इत्यादि। भर्शयति। अबीभृशत्, अबभर्शत्—'उर्ऋद्वा'। भृशम्—इगुपधलक्षणः कः। अभृशो भृशो भवति भृशायते—'भृशादिभ्यो भुवि' इति क्यङ्। भार्श्यम्, भ्रशिमा—दृढादित्वात् ष्यञिमनिचौ। भ्रशिष्ठः, भ्रशीयान्—'र ऋतो हलादेः' इतीष्ठेमेयस्सु ऋकारस्य रशब्दः। भ्रशयति—'णाविष्ठवत्' इति रत्वम्। भर्शित्वा, भृष्ट्वा—उदित्वादिड्विकल्पः। भृष्टः। भृष्टवान्॥ भ्रश्यति—'अनिदिताम्' इति नलोपः। बभ्रंश। बभ्रंशतुः। बिभ्रंशिव। भ्रंशिष्यति। भ्रश्यतु। अभ्रश्यत्। भ्रश्येत्। भ्रश्यात्। अभ्रशत्। बिभ्रंशिषति। बाभ्रश्यते। येऽपि भ्रंशिं भूवादावपि तालव्योष्मान्तं पठित्वा, नीक्सूत्रेऽपि तथा पठन्ति, तेऽपि ध्वंसत्यादिसाहचर्याद्भौवादिकस्यैव नीकं कुर्वन्ति, न त्वस्य। येषां तु भूवादौ नीक्सूत्रे च दन्त्यान्तपाठः, तेषामप्यस्य नीको नैव प्रसङ्गः। बाभ्रंष्टि। भ्रंशयति। भ्रंशित्वा, भृष्ट्वा, भ्रष्टः—व्रश्चादिना षत्वेऽनिट्त्वम्, सर्वत्र क्ङित्यनुनासिकलोपः॥ ११६–११७॥

१२४. वृश वरणे। वृश्यति इत्यादि भृश्यतिवत्। अनुदित्त्वं विशेषः। व्रशिष्ठः, व्रशीयान्। वृशयति इत्यत्र 'र ऋतः' इति रत्वं न भवति।

'पृथुं मृदुं भृशं चैव कृशं च दृढमेव च। परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत्॥ इति परिगणनात्॥ ११८॥

१२५. कृश तनूकरणे। कृश्यति इत्यादि भृशिवत्। अस्याप्यनुदित्त्वं विशेषः। कृशः—'अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः' इति निष्ठायां निपातितः। सोपसर्गत्वे तु प्रकृशितः, परिकृशितः—प्रादिसमासः। क्रशिमा। क्रशिष्ठः। क्रशीयान्। क्रशयति—भृशिवद् रत्वं इमनिच्च। कृशित्वा, कर्शित्वा—'तृषिमृषिकृशेः काश्यपस्य' इति वा कित्त्वम्। कृशानुः—'ऋतन्यञ्जि' इत्यादिना नुक्॥ ११९॥

१२६. ञि तृष[1] पिपासायाम्। तृष्यति इत्यादि। तृषित्वा, तर्षित्वा—'तृषिमृषि' इत्यादिना वा कित्त्वम्। तृष्णक्—'स्वपितृषोर्नजिङ्' इति नजिङ्। द्व्यहतर्षं गाः पाययति, द्व्यहं तर्षमिति वा। अद्य पाययित्वा द्व्यहमतिक्रम्य पाययतीत्यर्थः। 'अस्यति तृषोः' इति णमुल्। 'तृतीयाप्रभृतीनि' इति समासविकल्पः। तृट्, तृष्णा—'तृषिशुषिरसिभ्यः कित्' इति नप्रत्ययः। ञित्वं वर्तमाने क्तार्थम्। तृषितमस्य सञ्जातं तृषितः—अर्शआदिः॥ १२०॥

१२७. हृष तुष्टौ। हृष्यति इत्यादि। श्यनङौ वर्जयित्वा भौवादिकवत्। 'अयमुदिदिति नन्दी' इति स्वामी; तद् वृत्त्यादिविरोधादुपेक्ष्यम्। यदाह 'हृषेर्लोमसु' इत्यत्र—'हृषु अलीके' इत्ययं निष्ठायामनिट्, हृष तुष्टावित्ययं सेट्, अनयोरु-

1. 'ञितृषा' इति मैत्रेयः।

भयोरिदं ग्रहणमित्युभयत्रविभाषेयम्' इति। अत्रैव न्यासे—"हृषु अलीके इत्ययमनिडिति 'उदितो वा' इति क्त्वाप्रत्यय इड्विकल्पविधानात् 'यस्य विभाषा' इति निष्ठायामनिट्, हृष तुष्टावित्ययं सेट्" इति। वर्धमानोऽप्येवमाह ॥ १२१ ॥

१२८. रुष रोषे। देवदत्ताय रुष्यति—'क्रुधद्रुह' इति कोपविषयस्संप्रदानम्। रुरोष। रुरोषिथ। रुरुषिव। रोष्टा, रोषिता। रोषिष्यति। रुष्यतु। अरुष्यत्। रुष्येत्। रुष्यात्। अरुषत्। रुरुषिषति, रुरोषिषति। रुषित्वा, रोषित्वा, रुष्ट्वा—'रलो व्युपधात्' इति सेटः क्त्वासनोः कित्त्वविकल्पः। 'तीषसह' इति तादाविड्विकल्पः। रुषितः, रुष्टः—'रुष्यमत्वर' इति निष्ठायामिड्विकल्पः। भावादिकर्मणोर्निष्ठायास्सेटः 'उदुपधात्' इति कित्त्वविकल्पो भौवादिकानामेवेति प्रागेवोक्तत्वादस्य न भवति। इह केचित् 'रिष हिंसायां च' इति पठन्ति। 'न रिष्यति न व्यथते' इत्यादयश्च प्रयोगा दृश्यन्ते। आत्रेयमैत्रेयादयस्तु न पेठुः ॥ १२२ ॥

१२९. डिप क्षेपे। डिप्यति। डिडेप। डिडेपिथ। डिडिपिव। डेपिता। डेपिष्यति। डिप्यतु। अडिप्यत्। डिप्येत्। डिप्यात्। अडिपत्। डिडेपिषति, डिडिपिषति। डिपित्वा, डेपित्वा। डेडिप्यते। डेडेप्ति। डेपयति। अडीडिपत्। अयं तुदादौ। चुरादौ तु सङ्घाते च। इह कश्चित्[1] 'स्तूप समुच्छ्राये' इति पठ्यते, तदनार्षम्; 'स्त्यः प्रसारणमुच्च' इति स्त्यायतेः पप्रत्यये यकारस्य उकारे सम्प्रसारणे दीर्घे स्तूपशब्दव्युत्पादनात्। अत एव आत्रेयमैत्रेयादयोऽपि न पठन्ति ॥ १२३ ॥

१३०. कुप क्रोधे। कुप्यति इत्यादि रुष्यतिवत्। इट् तु सर्वत्र नित्यः। देवदत्ताय कुप्यति—'क्रुधद्रुह' इति कोपविषयस्य सम्प्रदानत्वम्। कुप्रम् अरण्यम्—'ऋज्रेन्द्र[2]' इत्यादौ निपातितः। अयं भाषार्थश्चुरादौ ॥ १२४ ॥

१३१. गुप व्याकुलत्वे। गुप्यति इत्यादि। गोपायति। जुगुप्सते इति शपि। गोपायतीति चुरादौ ॥ १२५ ॥

१३२. युप रुप लुप विमोहने। युप्यति। रुप्यति। लुप्यति। अनिट्कारिकायां तौदादिकेन लिपिना साहचर्यात्तौदादिकस्य 'लुप्लृ छेदने' इत्यस्यैव ग्रहणादयं सेडेव ॥ १२६–१२८ ॥

१३३. लुभ गार्ध्ये। गार्ध्यमाकाङ्क्षा। लुभ्यति। लुलोभ। लुलोभिथ। लोभिता, लोब्धा। लोभिष्यति। लुभ्यतु। अलुभ्यत्। लुभ्येत्। लुभ्यात्। अलुभत्। लुलुभिषति, लुलोभिषति। लोलुभ्यते। लोलोब्धि। लोभयति। अलूलुभत्। लुभित्वा, लोभित्वा, लुब्ध्वा। लुब्धः—तादौ 'तीषसह' इतीड्विकल्पः। सेटोः क्त्वासनोः 'रलो व्युपधात्' इति कित्त्वविकल्पः। 'यस्य विभाषा' इति निष्ठायां नेट्। 'लुभो विमोहने' इति क्त्वानिष्ठयोर्नित्यं सेट्त्वं विमोहनार्थस्य तौदादिकस्यैव। 'भ्रूवादेरलुक्तस्माल्लोभते इति भवति' इति आत्रेयः ॥ १२९ ॥

---

१. क्षीरतरङ्गिण्यादौ।　२. सूत्रे तु 'कुब्र' इति शब्दो लभ्यते।

१२४. क्षुभ सञ्चलने। क्षुभ्यति। चुक्षोभ। क्षोभिता इत्यादि। श्यन्भाविभक्तिकारान्तानुरोधादस्येह पाठः। अङ् तु द्युतादित्वादपि सिद्धः। न च अक्षोभीदिति सिज्निवृत्त्यर्थमुपपद्यते; क्रैयादिकेनावश्यं तस्य रूपस्य भावित्वात् ॥ १३० ॥

१२५. णभ तुभ हिंसायाम्। नभ्यति। प्रणभ्यति। ननाम। नेभतुः। नेभिथ। नेभिव। नभिता॥ तुभ्यति। तुतोभ। अनयोरपीह पाठः क्षुभेरिव। इमावपि द्युतादौ क्र्यादौ च पठ्येते ॥ १३१-१३२ ॥

१२६. क्लिदू आर्द्रीभावे[1]। क्लिद्यति। चिक्लेद। चिक्लेदिथ, चिक्लेत्थ। चिक्लिदिव, चिक्लिद्व। क्लेदिता, क्लेत्ता। क्लेदिष्यति, क्लेत्स्यति। क्लिद्यतु। अक्लिद्यत्। क्लिद्येत्। क्लिद्यात्। अक्लिदत्। चिक्लिदिषति, चिक्लित्सति। क्लेदित्वा, क्लिदित्वा। क्लिन्नः। चेक्लिद्यते। चेक्लेत्ति। क्लेदयति। अचिक्लिदत्। चिक्लिदम्—इगुपधलक्षणे के 'कृञादीनां के द्वे भवतः' इति के द्वित्वम्। क्लेदा, क्लेदानौ—'क्लेदौषधिशशाङ्कयोः[2]' इति निघण्टुः। 'श्वन्नुक्षन्' इति कनिनि निपात्यत इति भूवादावुक्तम्। ऊदित्त्वाद्वलादाविड्विकल्पः ॥ १३३ ॥

१२७. ञिमिदा स्नेहने। मेद्यति। मिमेद। मेदिथ। मेदिता। मेदिष्यति। मेद्यतु। अमेद्यत्। मेद्येत्। मिद्यात्। अमिदत्—'मिदेर्गुणः' इति श्यनि गुणः। मिमिदिषति, मिमेदिषति। मिदित्वा, मेदित्वा। मिन्नः। मिन्नवान्—'आदितश्च' इतीण्णिषेधः। 'ञीतः क्तः' इति वर्तमाने क्तः। मिन्नमस्य, मेदितमस्य; प्रमिन्नः, प्रमेदितः—"विभाषा भावादिकर्मणोः" इतीड्विकल्पे "निष्ठाशीङ्" इत्यादिना सेटो निष्ठायाः कित्त्वनिषेधः। "द्युतादिपाठादेव अमिदत् अमेदिष्ट इति सिद्धे पुषादिपाठः अमेदीत् इति निवृत्त्यर्थः। एवं तर्हि द्युतादौ पाठे प्रयोजनं चिन्त्यम्; अनेन अमिदित् इति भविष्यति, द्युतादेरन्यत्रात्मनेपदिषु पाठादमेदिष्टेति च। 'निष्ठाशीङ्' इत्यत्र च हरदत्तः—"'ञिष्विदा स्नेहमोचनयोः' इति देवादिकस्य ग्रहणम्, न तु 'ञिष्विदा अव्यक्ते शब्दे' इति भौवादिकस्य, मिदिना साहचर्यात्" इति। एवं वदतोऽस्य मिदेर्भूवादौ पाठो नास्तीति प्रतीयते। धातुपाठव्याख्यानेषूभयत्राविगीतं पठ्यते ॥ १३४ ॥

१२८. ञि क्ष्विदा स्नेहनमोचनयोः[3]। क्ष्विद्यति। चिक्ष्वेद। क्ष्वेदिता इत्यादि मिदिवत्। क्ष्वेदति इत्यव्यक्तशब्दे शपि ॥ १३५ ॥

१२९. ऋधु वृद्धौ। ऋध्यति। आनर्ध। आनृधतुः। आनर्धिथ। आनृधिव—'अत आदेः' इत्यभ्यासादेर्दीर्घः। 'तस्मान्नुड् द्विहलः' इति नुडागमः। किद्वचनेषु गुणाभावेऽपि ऋकारस्वरश्रुत्याश्रयणेन द्विहल्त्वम्। अर्धिता। अर्धिष्यति। ऋध्यतु। आर्ध्यत्। ऋध्येत्। ऋध्यात्। मा भवानृधत्। अर्दिधिषति, ईर्त्सति—'सनीवन्त'

---

१. 'आर्द्रभावे' इति तरङ्गिणीपाठः। २. अनुपलब्धमूलमिदम्।
३. '०मोहनयोः' इति क्षीरस्वामी।

इतीड्विकल्पः। तत्रेटि गुणेऽजादित्वात् 'नन्द्रा' इति रेफवर्जितस्य द्वितीयस्यैकाचो द्विर्वचनम्। अनिटि तु 'आप्ज्ञप्यृधाम्' इतीत्वे रपरत्वे 'अत्र लोपः' इत्यभ्यासलोपः। 'खरि च' इति चर्त्वं धकारस्य। अर्धयति। आर्दिधत्—णिलोपस्य स्थानिवत्त्वाद्धिशब्दस्य द्विर्वचनम्। ऋद्ध्वा, अर्धित्वा—उदित्त्वादिड्विकल्पः। 'न क्त्वा सेट्' इत्यकित्त्वम्। ऋद्धः। ऋध्यम्—'ऋदुपधात्' इति क्यप्। अयं स्वादौ च॥ १३६॥

१४०. गृधु अभिकाङ्क्षायाम्। गृध्यति। जगर्ध। जगृधतुः। जगर्धिथ। जगृधिव। गर्धिता। गर्धिष्यति। गृध्यतु। अगृध्यत्। गृध्येत्। गृध्यात्। अगृधत्। जिगर्धिषति। जरीगृध्यते। जर्गधि इत्यादि। माणवकं गर्धयते, वञ्चयतीत्यर्थः—'गृधिवञ्च्योः प्रलम्भने' इत्यकर्त्रभिप्रायेऽपि तङ्। अन्यत्र श्वानं गर्धयति गर्धयते इति वा, गर्धमस्योत्पादयतीत्यर्थः। गृध्नुः—'त्रसिगृधि' इति क्नुः। गर्धनः—'जुचङ्क्रम्य' इति युच्। गर्धित्वा, गृद्ध्वा—उदित्त्वादिड्विकल्पः। गृद्धः। गृध्रः 'सुसूधाञ्गृधिभ्यः क्रन्' इति क्रन्॥ १३७॥

१४१. वृत्। दिवादयः पुषादयश्च वृत्ता इति आत्रेयमैत्रेयादयः। अन्ये तु 'पुषादेस्समाप्त्यर्थं वृत्करणम्। दिवादयस्त्वपरिसमाप्ताः' इत्याहुः। तेन क्षीयते, मृग्यते इत्यादिसिद्धिरिति॥

१४२. शमादय उदात्ता उदात्तेतः॥

इति पूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसङ्गमराजमहामन्त्रिणा मायणसुतेन माधवसहोदरेण सायणाचार्येण[1] विरचितायां माधवीयायां धातुवृत्तौ दिवादयस्सम्पूर्णाः।



१. 'सायणार्येण' इति ख. पुस्तके पाठः।

# ५. स्वादिगणः

१. षुञ् अभिषवे। प्राग्वृञ एतदादयोऽनुदात्ता उभयतोभाषाः। अभिषवः स्नपनपीडनस्नानसुरासन्धानादिः। तत्र स्नानेऽयमकर्मकः। सुनोति। सुनुतः। सुन्वन्ति। सुनोषि। सुनोमि। सुन्वः, सुनुवः—'स्वादिभ्यः श्नुः'। शपोऽपवादः। 'हुश्नुवोस्सार्वधातुके' इत्यजादावगुणविषये श्नोरुकारस्य यण्। 'लोपश्चास्यान्यतरस्यां म्वोः' इति वकारमकारादावसंयोगपूर्वत्वात्पक्षे उकारलोपः। सुनोमि इत्यत्र परत्वाद्गुणे उकाराभावान्नायं लोपः। अभिषुणोति—'उपसर्गात्सुनोति' इति षत्वम्। सुषाव। सुषुवतुः। सुषोथ, सुषविथ। सुषुवथुः। सुषुव। सुषाव, सुषव। सुषुविव। क्रादिनियमादिट्। थलि तु भारद्वाजनियमाद्विकल्पः। उवङ् अगुणवृद्धिविषये। अभिसुषाव—'स्थादिष्वभ्यासेन' इति नियमादभ्यासस्य न षत्वम्। प्रकृतेस्तु 'आदेशप्रत्यययोः' इति षत्वम्। सोता। सोष्यति। अभिसोष्यति इत्यत्र 'सुनोतेः स्यसनोः' इति 'उपसर्गात्' इति षत्वं निषिध्यते। सुनोतु। सुनुतात्—तातङो ङित्वान्न गुणः। सुनुताम्। सुन्वन्तु। सुनु—'उतश्च प्रत्ययादसंयोगपूर्वात्' इति हेर्लुक्। सुनुतात्। सुनुतम्। सुनुत। सुनवानि—आटि पित्वादङित्वात् यणं बाधित्वा परत्वाद् गुणः। असुनोत्। असुनुताम्। असुन्वन्। असुनोः। असुनवम्। असुन्व, असुनुव—पूर्ववदुकारलोपः। पक्षे अभ्यषुणोत्—'प्राक्सितादड्व्यवायेऽपि' इति षत्वम्। सुनुयात्। सुनुयाताम्। सुनुयुः—'जुसि च' इति गुणः 'सार्वधातुकमपित्' इति ङित्वाश्रयं प्रतिषेधं येन नाप्राप्तिन्यायेन बाधते, न तु यासुटो ङित्वाश्रयमपीति नात्र गुणः। सुनुयाः। सुनुयाम्। आशिषि—सूयात्। सूयास्ताम्—'अकृत्सार्वधातुकयोः' इति दीर्घः। असावीत्। असाविष्टाम्। असावीः। असाविषम्—'स्तुसुधूञ्भ्यः' इति परस्मैपदेषु सिच इट्। सुनुते। सुन्वाते। सुन्वते। सुनुषे। सुन्वे। सुन्वहे, सुनुवहे—पूर्ववद्यणुकारलोपौ। सुषुवे। सुषुविषे। सुषुविढ्वे, सुषुविध्वे—'विभाषेटः'। सुषुवे। सुषुविवहे। सुषुविमहे। सोता। सोष्यते। सुनुताम्। सुन्वाताम्। सुन्वताम्। सुनुष्व। सुनवै। सुनवावहै। असुनुत। असुन्वाताम्। असुन्वत। असुनुथाः। असुन्वि। असुन्वहि, असुनुवहि। सुन्वीत। सुन्वीयाताम्। आशिषि—सोषीष्ट। सोषीयास्ताम्। सोषीढ्वम्—'इणः षीध्वम्' इति मूर्धन्यः। असोष्ट। असोषाताम्। असोष्ठाः। असोषि। सुसूषति, सुसूषते—'स्तौतिण्योरेव' इति नियमान्न षत्वम्। अभिसुसूषति इत्यत्र 'उपसर्गात्' इत्यभ्यासस्य षत्वं स्थादिनियमेन बाध्यते। एवं तर्हि 'सुनोतेः स्यसनोः' इति सनि षत्वनिषेधस्य किमुदाहरणम्? इदं सुसूषतेरप्रत्यये अतो लोपे सुसूः इति। अत्र हि सनः षत्वस्यासिद्धत्वात्

सस्य रुत्वे विसर्जनीये कृतषत्वस्य सनोऽभावात् 'स्तौतिण्योरेव' इति न प्रवर्त्तते। एकदेशविकृतन्यायेनास्ति सन्परत्वमिति 'सुनोतेः स्यसनोः' इति निषेधस्तु प्रवर्त्तते। सोपूयते। सोषवीति, सोषोति। सोषुतः—'उपसर्गात्' इति षत्वम्। 'सुनोतेः स्यसनोः' इति निषेधस्तु श्तिपा निर्देशान्न प्रवर्त्तते। अभिसोषोति। अभिसोषविष्यति। सोषवीः इति यङ्लुगन्तात्सनीटि गुणावादेशयोरभावेप्रत्यये अतोलोपे पूर्ववत् षत्वस्यासिद्धत्वाद् सत्वाद्रुत्वे 'र्वोरुपधाया दीर्घः' इति दीर्घः। सावयति। असूषुवत्। सुषावयिषति–ण्यन्तात्सनि 'स्तौतिण्योः' इति षत्वम्। सुन्वन्, सुन्वानः–'लटः शतृशानचौ'। राजसूयः–कर्मण्यधिकरणे वा 'राजसूय' इति क्यपि निपात्यते। आसाव्यम्—'आसुयुवपि' इति ण्यति वृद्धौ 'धातोस्तन्निमित्तस्यैव' इत्यावादेशः। सोमं सुतवान् सोमसुत्—'सोमे सुञः' इति भूते क्विप्। सुत्वा। सुत्वानौ–'सुयजोर्ङ्वनिप्' इति भूते ङ्वनिप्। स्त्रियाम् सुत्वरी–'वनो र च' इति ङीब्रेफौ। सुन्वन्, सुन्वन्तौ–'सुञो यज्ञसंयोगे' इति शता। अयमलडादेशः। यजमान उच्यते। सुत्या—'संज्ञायां समज' इत्यादिना स्त्रियां क्यप्। आसुतीवलो यज्वा, शौण्डिकश्च–क्तिन्नन्तात् 'रजःकृष्यासुति' इति मत्वर्थीये वलचि 'वले' इति दीर्घः। सुरा—'सुसूधागृधिभ्यः क्रन्' इति क्रन्। सुरकोऽहिविशेषः– स्थूलादिषु 'सुराया अहौ' इति पाठात्कनि 'केऽणः' इति ह्रस्वः॥ १॥

२. षिञ् बन्धने। सिनोति। सिनोषि। सिनोमि। सिन्वः, सिनुवः। सिषाय। सिष्यतुः। सिषयिथ, सिषेथ। सिषाय, सिषय। सिष्यिव–अत्रागुणवृद्धिविषये अजादौ 'एरनेकाचः' इति यण्। सेता। सेष्यति। सिनोतु। सिनु। सिनवानि। असिनोत्। सिनुयात्। आशिषि–सीयात्। असैषीत्। असैष्टाम्। सिनुते। सिनुषे। सिन्वे। सिन्वहे, सिनुवहे। सिष्ये। सिष्यिषे। सिष्यिवहे। सेता। सेष्यते। सिनुताम्। सिनुष्व। सिनवै। असिनुत। असिनुथाः। असिन्वि। असिन्वहि, असिनुवहि। सिन्वीत। सेषीष्ट। असेष्ट। असेषाताम्। सिसीषति, सिसीषते। सेषीयते। सेषयीति, सेषेति। साययति। असीषयत्। सितः। सितवान्। सिनो ग्रासः स्वयमेव—'सिनोतेर्ग्रासकर्मकर्तृकस्य' इति वक्तव्येन निष्ठानत्वम्। 'यदा बध्यमानः पिण्डीक्रियमाणो ग्रासो दध्यादिवशेन कर्त्रानुकूल्यं प्रतिपद्यते तदा कर्मणः कर्तृत्वविवक्षायामयं प्रयोगः' इति न्यासपदमञ्जर्यादौ। 'अनेकार्थत्वाद्धातोर्भक्षणमर्थः' इति आत्रेयः। केशेषु प्रसितः केशैरिति वा, 'प्रसितोत्सुकाभ्यां तृतीया च' इति तृतीयासप्तम्यौ। सयः—अच्। परिषितः, परिषयः—'परिनिविभ्यः' इत्यादिना सितसयशब्दयोः षत्वम्। एवं निविभ्यामपि। सेरुः—'दाधेट्सि' इति रुः। सेत्रम्—'दाम्नी' इत्यादिना ष्ट्रन्। सितो वर्णः—'अञ्जिघृसिभ्यः क्तः' इति संज्ञायां क्तः। सितिमा, सैत्यम्—'वर्णदृढादिभ्यः ष्यञ्च' इति ष्यञिमनिचौ भावकर्मणोः। सिता—शर्करा। न सिता असिता—इत्यत्र 'वर्णादनुदात्तात्' इति ङीब्नकारयोः 'असितपलितयोः

प्रतिषेधः' इति निषेधः। 'छन्दसि क्रमेके' 'भाषायामपीष्यते' इति असिक्नी इति क्नादेशङीपावपि पक्षे भवतः। सेतुः—'सितनिगमि' इति तुन्। सीरो लाङ्गलम्—'शुषिचिमिञां दीर्घश्च' इति क्रनि दीर्घः। सीरस्येदं तद्वहतीति वा सैरिकः—'हलसीराट्ठक्' इति तस्येदं विषये तद्वहति विषये च ठक्। अयं क्र्यादावपि सिनाति सिनीते इति ॥ २ ॥

३. शिञ् निशाने। तालव्यादिरयम्। निशानं तीक्ष्णीकरणम्। शिनोति। शिनुते। शिशाय। शिश्ये। शेता। शेष्यति इत्यादि पूर्ववत् ॥ ३ ॥

४. डुमिञ् प्रक्षेपणे। मिनोति। मिनुते। ममौ। मिम्यतुः। मिम्युः। ममाथ, ममिथ। मिम्यथुः। मिम्य। ममौ। मिम्यिव। मिम्यिम—'मीनातिमिनोतिदीङां ल्यपि च' इत्येज्विषये ल्यपि च प्रागेव प्रत्ययोत्पत्तेरात्वम्, तस्य चानैमित्तकत्वान्न 'द्विर्वचनेऽचि' इति स्थानिवत्त्वम्। थलीट्पक्षे 'आतो लोप इटि च' इत्याल्लोपः। मिम्ये। मिम्यिषे। मिम्ये। मिम्यिवहे। माता। मास्यति। मास्यते। मिनोतु। मिनु। मिनवानि। मिनुताम्। मिनुष्व। मिनवै। अमिनोत्। अमिनुतम्। मिनुयात्। मिन्वीत। आशिषि—मीयात्। मासीष्ट—यासुटि कित्त्वान्नात्वम्। 'अकृत्सार्वधातुकयोः' इति दीर्घः। अमासीत्। अमासिष्टाम्—आत्वे 'यमरमनमाताम्' इति सगिटौ परस्मैपदे। अन्यत्र अमास्त। अमासाताम्। मित्सति, मित्सते—'इको झल्' इति सनः कित्त्वात् 'अज्झनगमां सनि' इति दीर्घे 'सनिमीमा' इतीस्भावे सस्यार्द्धधातुके' इति सस्य तत्वे 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः। मेमीयते। मेमेति—'मिनोति' इति श्तिपा निर्देशान्नात्वम्। मापयति। अमीमपत्—आत्वे पुक्। प्रमाप्य—'ल्यपि च' इत्यात्वम्। प्रमयः, ईषत्प्रमयः, दुष्प्रमयः—'निमिमीलियां खलचोः प्रतिषेधः' इत्यात्वप्रतिषेधः। मित्रिमम्—'ड्वितः क्त्रिः'। 'क्त्रेर्मम्नित्यम्'। मीरः—'शुषिचिमिञां दीर्घश्च' इति क्रन्दीर्घौ। मयते इति शपि। प्रणिदाने। माति इति लुकि माने। मिमीते इति च श्लौ माने शब्दे च। मीयते इति श्यनि ॥ ४ ॥

५. चिञ् चयने। चिनोति। चिनुते। चिकाय। चिक्यतुः। चिकेथ। चिकयिथ, चिक्यिव—'विभाषा चेः' इति सन्लिटोः परयोरभ्यासात्परस्य वा कुत्वम्। अन्यदा चिचाय—इत्यादि। चिक्ये। चिच्ये—इत्यादि। चेता। चेष्यति। चेष्यते। चिनोतु। चिनुताम्। अचिनोत्। अचिनुत। चिनुयात्। चिन्वीत। आशिषि—चीयात्। चेषीष्ट। अचैषीत्। अचेष्ट। चिचीषति, चिकीषति। लिटि च कुत्वविकल्पः। चेचेति। चाययति, चापयति—'चिस्फुरोर्णौ' इत्यात्वपक्षे पुक्। प्रणिचिनोति—'नेर्गदनद' इति णत्वम्। निकाय्यः—'पाय्यसान्नाय्य' इत्यादिना निवासे ण्यदायादेशावादिकुत्वं च निपात्यते। संचाय्यः क्रतुः, परिचाय्यः अग्निः, उपचाय्यश्च—'क्रतौ कुण्डपाय्यसञ्चाय्यौ', 'अग्नौ परिचाय्योपचाय्य-

समूह्याः' इति ण्यदायादेशयोर्निपात्यते। निवासादिभ्योऽन्यत्र यति निचेयम् इत्यादि। चित्यः अग्निः। अग्निचित्या वर्त्तते—'चित्याग्निचित्ये च' इति कर्मणि भावे च यथाक्रमं निपात्येते। तत्राद्यस्य यति तुक्, अन्यस्य ये तुक्। तेनान्तोदात्तत्वं भवति। अयं स्वभावात्स्त्रीलिङ्गः। अग्निचित्—'अग्नौ चेः' इति कर्मण्युपपदे भूते क्विप्। श्येनश्चीयते श्येनचित्—श्येनशब्दस्तत्सदृशेष्टकाचये उपचारेण वर्त्तते। 'कर्मण्याग्न्याख्यायाम्' इति कर्मण्युपपदे तस्मिन्नेवार्थेऽन्याख्यायां त्रैकालिकः क्विप्। आख्याग्रहणं रूढ्यर्थम्। श्येनाग्न्यर्थं इष्टकाचयः श्येनचिच्छब्देनोच्यते। निश्चयः—'ग्रहवृदृनिश्चिगमश्च' इति निश्चेरप्। अचोपवादः। एकस्तण्डुलनिश्चायः—इत्यत्र 'परिमाणाख्यायां सर्वेभ्यः' इति घञ्। कथम् 'एकोऽपि तव निश्चयः' इति? 'पदसंस्कारेण' इति भागवृत्तिः। पुष्पप्रचायः—'हस्तादाने चेरस्तेये' इति घञ्। हस्तादानग्रहणेन प्रत्यासत्तिर्लक्ष्यते। अन्यत्र वृक्षशिखरे फलप्रचयं करोतीति अजेव। 'अस्तेय' इति वचनाच्चौर्ये प्रत्यासत्तावप्येरजेव—पुष्पप्रचयः चौर्येण इति। निचीयन्तेऽस्मिन्निति निकायः ग्रामगृहादिः। आचीयन्तेऽस्मिन्निष्टका इति आकायः अग्निः। चीयन्तेऽस्मिन्नस्थ्यादीनीति कायः शरीरम्। गोमयानामेकत्र राशीकरणं गोमयनिकायः—'निवासचितिशरीरोपसमाधानेष्वादेश्च कः' इति घञादिकत्वं च। निवसन्त्यस्मिन्निति निवासः। चीयतेऽसौ चितिः। शरीरम् पाण्यादिसमुदायः। उपसमाधानं राशीकरणम्। असौ धात्वर्थः; अन्यानि प्रत्ययार्थस्य कारकस्योपाधिभूतानि। काष्ठनिचय इत्यत्र च बहुत्वमात्रं विवक्षितं नोपसमाधानमित्यजेव भवति। भिक्षुनिकायः—'सङ्घे चानौत्तराधर्ये' इति घञ्, आदिकत्वं च। प्राणिनां समूहः सङ्घः, स च द्वेधा भवति—एकधर्मसमावेशेन, औत्तराधर्येण च; तत्रानौत्तराधर्ये इति पर्युदासादितरो गृह्यत इत्यौत्तराधर्येऽजेव—सूकरनिचय इति। संघस्य प्राणिसमुदायलक्षणत्वात् प्रमाणाप्रमाणसमुच्चय इत्यत्राप्यजेव। चितिः—क्तिन्। द्विचितीकः—'शेषाद्विभाषा' इति कप्, 'चितेः कपि' इति पूर्वपदस्य दीर्घः। आचितं सम्भवत्यवहरति पचति वा आचितीनः। आचितिकः—'आढकाचितपात्रात् खोऽन्यतरस्याम्' इति खठञौ। द्व्याचितिकः, द्व्याचितः, द्व्याचितीनः—'द्विगोष्ठंश्च' इति सम्भवत्यादिषु ठन्, चकारात् खः। षकारो ङीषर्थः। अन्यतरस्यांग्रहणानुवृत्त्या च 'अध्यर्द्धपूर्वाद् द्विगोः' इत्यस्य लुक् 'द्विगोः' इति ङीपः 'अपरिमाणबिस्त' इति निषेधः। ठन्खयोर्विधानसामर्थ्यान्न लुक्। 'शाकटो भार आचितः'[1]। चित्रः—औणादिकः क्त्रः। चित्रीयते—'नमोवरिवश्चित्रङः क्यच्' इति क्यच्। 'चित्रङ् आश्चर्ये' इति वृत्तिः। ङित्त्वात्तङ्॥ ५॥

६. स्तृञ् आच्छादने। स्तृणोति। स्तृणुतः। स्तृण्वन्ति। स्तृणोषि। स्तृणोमि। स्तृण्वः, स्तृणुवः। स्तृणुते। स्तृणुषे। स्तृण्वे। तस्तार। तस्तरतुः। तस्तरुः।

---

१. अ० को० २।९।८१।

तस्तर्थ । तस्तर, तस्तार । तस्तरिव । तस्तरे । तस्तराते । तस्तरिषे । तस्तरिढ्वे । तस्तरिध्वे । तस्तरे । तस्तरिवहे—क्रादिनियमादिट् । थलि 'अचस्तास्वत्' इति निषेध ऋकारान्तत्वान्नित्यः । 'ऋतश्च संयोगादेर्गुणः' इति लिटि गुणः । वृद्धि-विषये तु पूर्वविप्रतिषेधेन वृद्धिरेव । कृते वा गुणे 'अत उपधायाः' इति वृद्धिः । स्तर्ता । स्तरिष्यति, स्तरिष्यते–'ऋद्धनोः स्ये' इतीट् । स्तृणोतु । स्तृणु । स्तृणवानि । स्तृणुताम् । स्तृणुष्व । स्तृणवै । अस्तृणोत् । अस्तृणुत । स्तृणुयात् । स्तृण्वीत । स्तर्यात्—संयोगाद्यृकारान्तधातुत्वात् 'गुणोर्तिसंयोगाद्योः' इति शयक्योर्यकारादावसार्वधातुके लिङि गुणः । शस्त्वस्य न सम्भवति । स्तृषीष्ट, स्तरिषीष्ट—'लिङ्सिचोरात्मनेपदेषु' इत्यधिकृत्य 'ऋतश्च संयोगादेः' इतीड्विकल्पः । तत्रेडभावे 'उश्च' इति लिङ्सिचोः कित्त्वान्न गुणः । अस्तार्षीत् । अस्तार्ष्टाम् । अस्तृत । अस्तृषाताम् । अस्तरिष्ट । अस्तरिषाताम्—लिङ्वत्तङीड्विकल्पः, झलादावगुणत्वं च । तिस्तीर्षति—'इको झल्' इति सनः कित्त्वात् 'अज्झन' इति दीर्घः । 'ऋत इद्धातोः' इतीत्वे रपरत्वे 'हलि च' इतीक उपधाया दीर्घः । तास्तर्यते—'यङि च' इति संयोगाद्यृकारान्तत्वेन गुणः । तास्तर्ति । तास्तरीति—रिग्रीकोरप्युदाहार्यम् । स्तृस्तृस्त्यासेक-सृवर्जम्' इत्यषोपदेशत्वादनादेशत्वान्न षत्वम् । स्तारयति । अतिस्तरत्—'अत्स्मृदृत्वर' इत्यत्र दीर्घान्तपाठान्नास्याद्भावः । स्तृत्वा । स्तृतः । दीर्घान्तः क्र्यादिः ॥ ६ ॥

७. कृञ् हिंसायाम्[1] । कृणोति । कृणुते । चकार । चक्रतुः । चकर्थ । चक्र । चकार, चकर । चकृवे—क्रादिसूत्रे कृग्रहणेनायमपि गृह्यते इतीण्निषेधः । चक्रे । चक्राते । चकृषे । चकृढ्वे । चक्रे । चकृवहे—अगुणवृद्धिविषये अजादौ यणादेशः । कर्त्ता । करिष्यति, करिष्यते । कृणोतु । कृणुताम् । अकृणोत् । अकृणुत । कृणुयात् । कृण्वीत । आशिषि क्रियात् 'रीङ ऋतः' 'रिङ् शयग्' इति रिङादेशः । कृषीष्ट । अकार्षीत् । अकार्ष्टाम् । अकृत । अकृषाताम्—आत्मनेपदे लिङ्सिचोः 'उश्च' इति कित्त्वान्न गुणः । चिकीर्षति—स्तृञ्वत्सनः कित्त्वे दीर्घत्वरपरत्वदीर्घाः । चेक्रीयते—'अकृत्सार्वधातुकयोः' इति वर्तमाने 'च्वौ च', 'रीङ् ऋतः' इति रीङ् । चर्कर्ति इत्यादि । कारयति । अचीकरत् । सर्वत्र कृग्रहणेषु कृञ्ग्रहणेषु च करोतिरेव वृत्तिकारादिभिरङ्गीकृत इत्ययं नोदाह्रियते, क्रादिसूत्रे तु कृग्रहणेनास्यापि ग्रहोऽङ्गीकृत आत्रेयादिभिः । "'कारा बन्धने' इति भिदादौ पठ्यते । तत्रास्मादङ्" इति आत्रेयः । न्यासकारस्तु करोतेः ॥ ७ ॥

८. वृञ् वरणे । उदात्तः । वृणोति । वृणुते । ववार । वव्रतुः । ववरिथ । वव्र । ववार, ववर । ववृव । वव्रे । ववृषे । ववृढ्वे । ववृवहे—क्रादिपाठादनिट्त्वम्

---

१. इतोऽग्रे क्षीरस्वामी 'अनुदात्ताः' इति सूत्रं पठति ।

थलि तु 'बभूथाततन्थजगृभ्मववर्थेति निगमे' इति निगमे इडभावस्य निपातना-द्भाषायामिडागमः। वरिता, वरीता। वरिष्यति, वरीष्यति। वरिष्यते, वरीष्यते—'वृतो वा' इत्यलिटीटो वा दीर्घः। वृणोतु। वृणुताम्। अवृणोत्। अवृणुत। वृणुयात्। वृण्वीत। आशिषि व्रियात्—'रिङ् शयग्' इति रिङादेशः। रीङि प्रकृते रिङ्विधानसामर्थ्यात् 'अकृत्सार्वधातुकयोः' इति दीर्घाभावः। वृषीष्ट, वर्षीष्ट—'वृतः' इत्यधिकारे 'लिङ्सिचोरात्मनेपदेषु' इति वा इडागमः। 'वृतः' इति दीर्घस्य 'न लिङि' इति निषेधः। इडभावे 'उश्च' इति लिङ्सिचोः कित्त्वान्न गुणः। अवारीत्। अवारिष्टाम्—'वृतो वा' इति दीर्घस्य 'सिचि च परस्मैपदेषु' इति निषेधः। अवृत। अवृषाताम्। अवरिष्ट। अवरिषाताम्। अवरीष्ट। अवरीषा-ताम्—'लिङ्सिचोः' इतीट्पक्षे 'वृतः' इति वा दीर्घः। ध्वम्यनिट्पक्षे नित्यो मूर्द्धन्यः। इटि तु विकल्पेन दीर्घश्च वेति पञ्च रूपाणि—अवृढ्वम्, अवरिढ्वम्, अवरीढ्वम्, अवरिध्वम्, अवरीध्वम् इति। कर्तृवत् कर्मणि। ते तु चिण्विशेषः—अवारि इति। कर्मकर्तरि तु 'अचः कर्मकर्तरि' इति चिणो विकल्पनात्सिजपि, तत्र च कर्तृवद्वा इट्, तस्य चेटो दीर्घविकल्पः। पक्षे चिण्वदिट्, प्रकृतस्येटो दीर्घ-विधानादस्य न दीर्घ इति अवारि, अवृत, अवरिष्ट, अवरीष्ट, अवारिष्ट इति पञ्च रूपाणि। द्विवचनादौ चिण्वर्ज्यं चातूरूप्यम्। ध्वमि तु कर्तृवत्पञ्च रूपाणि। चिण्व-दिटि च मूर्द्धन्यविकल्पेन अवारिढ्वम्, अवारिध्वम् इति द्वे इति सप्त रूपाणि। वुवूर्षति, विवरिषति, विवरीषति—'वृतः' इति 'इट् सनि वा' इति वा इट्, तस्य च वा दीर्घः। अनिट्पक्षे 'इको झल्' इति सनः कित्त्वे 'अज्झन' इति दीर्घे 'उदोष्ठ्यपूर्वस्य' इति उत्वे रपरे सति 'हलि च' इति इक उपधाया दीर्घः। वेव्रीयते—'रीङृतः' इति रीङ्। वर्वर्ति इत्यादि। वारयति यवेभ्यो गाः। अवीवरत्—'वारणार्थानामीप्सितः' इत्याप्तुमिष्यमाणस्यापादानत्वम्। प्रवृत्तिविघातो वार-णम्। कण्टकैः परिवारयति वृक्षम्। परिवारयन्ते कण्टका वृक्षं स्वयमेव। 'करणेन तुल्यक्रियः कर्ता कर्मवद् बहुलम्' इति ण्यन्ते करणस्यात्र कर्मवद्भावः। यक्-चिणौ तु 'णिश्रन्थि' इति निषेधान्न भवतः। वृत्यः—'एतिस्तु' इत्यादिना क्यप्। वार्या ऋत्विज इति क्र्यादिकस्य ण्यति। क्यब्विधौ हि वृञो ग्रहणमिष्यते। पतिंवरा—'संज्ञायां भृतॄवृजि' इति खच्। 'खित्यनव्ययस्य' 'अरुर्द्विषद्' इति मुमागमः। नीवारः—'नौ वृ धान्ये' इति घञ्। 'उपसर्गस्य घञ्यमनुष्ये' इति दीर्घः। अधान्ये निवरः—'ग्रहवृदृनिश्चिगमश्च' इत्यप् 'स्त्रियामपि बाहुलकात्क्तिनं बाधित्वाऽयमेव भवति' इति हरदत्तः। तेन निवरा कन्येति भवति। 'लिङ्गकारिका-यामबन्तस्य पुंस्त्वशासनं प्रायिकम्' इति न्यासः। खच्प्रभृतयोऽमी त्रयः प्रत्ययाः क्र्यादिकस्यापीति तस्यापि समानं रूपम्। प्रावारः, प्रवर उत्तरासङ्गः—"वृणोतेराच्छा-दने' इति प्रोपसृष्टाद् घञपौ, घञि 'उपसर्गस्य' इति दीर्घः। आच्छादनादन्यत्रापेव।

'अन्यत्रापि बाहुलकात् क्विन्विषयेऽवेव भवति' इति हरदत्तः—प्रवरा गौरिति। 'अवद्यपण्य' इत्यादौ वर्येति निपातनं क्र्यादिकस्येति स्थितमिति इह नोदाहृतम्। वर्मा—मनिन्। वर्मी—व्रीह्यादिः। वर्मिणोऽपत्यं वार्मिकायणिः—वाकिनादिषु 'चर्मिवर्मिणोर्नलोपश्च' इति पाठात्फिञ्, कुगागमो नलोपश्च। वर्मणा संनह्यति संवर्मयति—'सत्यापपाश' इत्यादिना णिच्। अभिधानशक्तिस्वाभाव्यादयं संनह्यतीत्यर्थे। अपहारवर्मणोरपत्यम् आपहारवर्मणः—'न मपूर्वोऽपत्येऽवर्मणः' इति प्रकृतिभावनिषेधस्तत्रैवावर्मण इति पर्युदासान्न भवतीति 'अन्' इति प्रकृतिभाव एव भवति। वरूथो रथगुप्तिः—'जॄवृञ्भ्यामूथन्' इत्यूथन्। वर्षम्—'वृतॄवदिहनिकषिभ्यः सः' इति सः। वर्णः—"'ऋजेन्द्र' इति[1] सूत्रे वर्णशब्दस्य पाठोऽनार्षः, 'कॄवृजॄसिद्रुपन्यनिस्वपिभ्यो नित्' इति नप्रत्ययेन सिद्धत्वात्" इति उज्ज्वलदत्तः। 'खुरभद्रोग्रभेरभेलशुक्लशुक्रतीव्रवत्र रामालाः' इति[1] रन्प्रत्यये तद्रेफस्य णत्वं निपात्यते। वर्णी ब्रह्मचारी—'वर्णाद्ब्रह्मचारिणि' इति मत्वर्थीय इनिः। ब्राह्मणवर्णी—'धर्मशीलवर्णान्ताच्च' इति मत्वर्थीय इनिः। इन्विधानं ठनादिनिवृत्त्यर्थम्। वरुणः—'कॄवृदारिभ्य उनन्' इत्युनन्। वरुणानी—'इन्द्रवरुण' इति ङीषानुकौ पुंयोगे। मित्रावरुणौ देवते अस्य मैत्रावरुणः—'देवताद्वन्द्वे च' इत्यानङ् पूर्वपदस्य। 'सास्य देवता' इत्यण्। 'देवताद्वन्द्वे च' इत्युभयपदवृद्धिः 'दीर्घाच्च वरुणस्य' इति निषिध्यते। वरुणदत्तो नाम कश्चित्, अनुकम्पितोऽसौ वरुणिकः, वरुणियः। वरुणिलः, वरुणदत्तकः—'बह्वचो मनुष्यनाम्नष्ठज्वा' 'घनिलचौ च' इत्यनुकम्पायां ठच् घनिलचौ वा विधीयन्ते। 'शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात्' इति ठजादौ प्रत्यये तृतीयादच ऊर्ध्वं लुप्यते वर्ण इति लोपः। वर्णुः नदः-'अजिवृरीभ्यो नित्' इति नुप्रत्ययो नित्। वरत्रा—वृञश्चित्' इति अत्रन्। वृङ् सम्भक्ताविति क्र्यादौ। तथा दीर्घान्तो ञिदञिच्च वरणार्थः। तत्र 'वृञ् आवरणे' इति चुरादौ ॥८॥

९. धुञ्[2] कम्पने। अनुदात्तः। धुनोति। धुनुते। दुधाव। दुधोथ, दुधविथ। दुधुवे। दुधुविषे। धोतासि, धोतासे। धोष्यति, धोष्यते। धुनोतु, धुनुताम्। अधुनोत्, अधुनुत। धुनुयात्, धुन्वीत। आशिषि—धूयात्, धोषीष्ट। अधौषीत्, अधोष्ट। दूधूषति, दुधूषते। दोधूयते। दोधोति। धावयति। अदूधवत्। धुत्वा। धुतः। धुतवान्। धुनिः—बाहुलकान्निप्रत्ययो नित् किच्च। तथा च भोजोऽसूसूत्रत्—'घृसृघुवृषिपृच्छिज्वरित्वरिभ्यः कित्' इति। अत्र स्वामी तु ह्रस्वान्तममुं पठित्वा प्रयोगवशाद्दीर्घान्तमप्याह। शिवस्वामिकाश्यपौ तु दीर्घान्तमाहतुः। 'उभयमपीति चान्द्राः' इति सुधाकरः। दीर्घान्तस्य तेनैव प्रयोगो दर्शितः—

१–१. अयं पाठः ख. पुस्तके टिप्पण्यां 'मुद्रितकोशेऽधिकः' इति कृत्वा धृतः।

२. 'धूञ्' इति क्षीरस्वामी। अत्र विषये क्षीरतरङ्गिण्यां २२ पृष्ठे सप्तमी टिप्पणी द्रष्टव्या।

'ऊर्ध्वं धूनोति वायुर्विधृतशिवशिरःश्रेणिकुञ्जेषु' इति। तत्र दीर्घान्तपाठे स्वरत्यादिसूत्रेणेड्विकल्पः। क्त्सनोस्तु पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्याद् धूत्वा, धूतः, दुधूषति इत्यादौ 'श्र्युकः किति' 'सनि ग्रहगुहोश्च' इतीण्णिषेधो भवति। लिटि त्वमुं प्रतिषेधं बाधित्वा क्रादिनियमान्नित्यमिट्। न च क्रादिनियमस्य स्वरत्यादिविकल्पः परत्वाद्बाधक इति मन्तव्यम्, तस्य 'श्र्युकः किति' इत्यनेन पुनरपि बाधप्रसङ्गात्। धूनोति। धूनुते। दुधुवे इत्यादि ह्रस्वान्तवत्। धोता, धविता। धोष्यति, धविष्यति। धोष्यते, धविष्यते। धूनोतु, धूनुताम्। अधूनोत्। धूनुयात्, धून्वीत। धूयात्। धोषीष्ट, धविषीष्ट। अधावीत्। अधाविष्टाम्। अधविष्ट, अधोष्ट—'स्तुसुधूञ्भ्यः' इति परस्मैपदे सिचो नित्यमिट्। अन्यत्र सर्वत्र स्वरत्यादिनेड्विकल्पः। धूनयति—'धूञ्प्रीञोर्नुग्वचनम्' इति णौ नुक्। दीर्घान्तः क्र्यादौ युजादौ च। 'धू विधूनने' इत्यञित् तुदादौ॥ ९॥

१०. स्वादयः उभयतोभाषा वृञ्वर्जमनुदात्ताः[1]। तस्यानुदात्तमध्ये पाठ ऋकारान्तोभयतोभाषानुरोधेन।

उभयतोभाषानिट्प्रकरणाद्धुञमुक्त्वा तदनुरोधेनोकारान्तमनिटं परस्मैपदिनमाह—

११. टु दु उपतापे। दुनोति इत्यादि धुनोतिवत्। दावः—'दुन्योरनुपसर्गे' इति कर्त्तरि णः। दव इति भौवादिकादचि। तस्य नात्र ग्रह इति तत्रैवोक्तम्। 'समि युद्रुदुवः' इति घञ्विधौ द्रुसाहचर्यान्निरनुबन्धकत्वाच्च दवतेरेव ग्रह इत्यस्यावेव—सन्दवः इति। दवथुः—'ट्वितोऽथुच्'। दुत्वा। दुतः। दुतवान्। ल्वादौ 'दुग्वोर्दीर्घश्च' इत्यत्र यदुक्तं न्यासे 'टु दु उपतापे' इति, तदसत्; यदाह हरदत्तः—"'दु दु गतावित्यस्य दोर्ग्रहणम्, न तु टु दु उपतापे इत्यस्य; सानुबन्धकत्वात्। तथा च माघः—'मृदुतया दुतया[2]' इति"॥ १०॥

१२. हि गतौ वृद्धौ च। प्रहिणोति—'हिनुमीना' इति उपसर्गस्थान्निमित्तादुत्तरस्य हिनुनकारस्याड्व्यवायेऽपि णत्वम्, तच्च प्रहिणु इत्यादौ हिनुशब्दे सावकाशमपि एकदेशविकृतस्यानन्यत्वाद्विकृतेऽपीह भवति। जिघाय। जिघ्यतुः। जिघ्युः। जिघयिथ, जिघेथ। जिघ्य। जिघ्यिव—'कुहोश्चुः' इत्यभ्यासस्य चुत्वं झकारः, तस्य 'अभ्यासे चर्च' इति जकारः। परस्य 'हेरचङि' इति कुत्वं घकारः। हेता। हेष्यति। प्रहिणोतु। प्राहिणोत्। प्रहिणुयात्। हीयात्। अहैषीत्। जिघीषति। जेघीयते। जेघेति। हाययति। अजीहयत्—'अचङि' इति वचनान्न कुत्वम्। इदमेव 'अचङि' इति वचनं चङोऽन्यत्र ण्यधिकस्यापि कुत्वज्ञापकम्। तेन प्रजिघाययिषति इत्यत्रापि कुत्वं भवति। सहितम्, संहितम्—'समो वा हिततततयोः' इति मलोपविकल्पः। 'ष्यञि समो नित्यं मलोपस्येष्यमाणत्वात् साहित्यम् इत्येव भवति' इति

१. क्षीरस्वामी नेदं सूत्रं पठति, मैत्रेयस्त्वस्य फलितार्थमात्रमेव।
२. शिशु० ६।५९।

आत्रेयः। देवदत्ताय हितं भूयाद्, देवदत्तस्य इति वा—'चतुर्थी चाशिष्यायुष्य' इत्यादिना षष्ठीचतुर्थ्यौ। 'चतुर्थी तदर्थार्थबलिहित' इति समासविधौ कैयटे ''चतुर्थी चाशिषि' इति हितयोगे या चतुर्थी तदन्तस्य समासो न भवति, समासादाशिषोऽनवगमादिति केचिदाहुः'' इति। अरोचकिने हितम् अरोचकिहितम्—'हितयोगे चतुर्थी वक्तव्या' इति चतुर्थी, 'चतुर्थी तदर्थे' इति पक्षे समासः। सुधाकरस्तु 'चान्द्रानुसारेण अनाशिष्यपि षष्ठीचतुर्थ्यौ द्वे भवतः' इत्याह। तद् वृत्तिकारस्य नेष्टम्, यदाह 'हितं भक्षा' इत्यत्र—'ननु च हितयोगे चतुर्थ्या भवितव्यम्, तत्र कथं षष्ठ्यर्थे प्रत्ययो विधीयते, एवं तर्हि सामर्थ्याद्विभक्तिविपरिणामो भविष्यति' इति। भाष्यमपि—'हितं भक्षा इति चतुर्थीनिर्देशः कर्तव्यः, इतरथा ह्यनिर्देशो भवति, हितशब्दयोगे चतुर्थी विधीयते, सा प्राप्नोति। तर्हि चतुर्थीनिर्देशः कर्तव्यः? न कर्तव्यः, एवं वक्ष्यामि—हितं भक्षास्तदस्मै, ततो दीयते नियुक्तम्, तदस्मै इति' इति। कैयटोऽपि—'इतरथा हीति, यदि चतुर्थी न निर्दिश्यते तदा प्रकृताया अस्येति षष्ठ्याः सम्बन्धायोगादिहानुपस्थानात्प्रत्ययार्थोऽनिर्दिष्टः स्यादित्यर्थः' इति। संहितोरूः—'संहितशफलक्षणवामादेश्च' इत्यूरूत्तरपदात्संहिताद्याद्देरूङ्प्रत्ययः स्त्रियाम्। सहितोरूः—'सहितसहाभ्याञ्चेति वक्तव्यम्' इत्यूङ्। एकदेशविकृतस्यानन्यत्वात्पूर्वेणैव सिद्धे वचनमिदं हितेन सह वर्तते सहितमिति सहितशब्दव्युत्पत्तावूङर्थम्। प्रागप्येतत्सर्वमुक्तम्[1]। हयः—पचाद्यच्। हयी—गौरादित्वान्ङीष्। हेतिः—'ऊतियूति' इत्यादिना क्तिनि निपात्यते। हेतुः—'कमिमनि' इत्यादिना तुः। अन्नेन हेतुना वसति, अन्नाय हेतवे, अन्नाद्धेतोः, अन्नस्य हेतोः, अन्ने हेतौ इति वा—'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इति सर्वा विभक्तयः। 'प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः। सर्वनाम्नस्तु सर्वाः' इति 'अइउण्' इत्यत्र कैयटे स्थितम्॥ ११॥

१३. पॄ प्रीतौ। पृणोति। पपार। पप्रतुः। पपर्थ। पप्र। पप्रिव। पर्ता। परिष्यति। पृणोतु। अपृणोत्। पृणुयात्। प्रियात्। अपार्षीत्। पुपूर्षति। पेप्रीयते। पारयति। अपीपरत्। प्रियते इति श्यनि गतम्। पिपर्ति इति श्लौ॥ १२॥

१४. स्पॄ प्रीतिपालनयोः[2]। 'प्रीतिर्बलम्, पालनं जीवनम्' इति स्वामी। स्पृणोति। पस्पार। पस्पर्थ—स्वयः शेषः। 'ऋतश्च संयोगादेः' इति किति लिटि गुणः। स्पर्ता इत्यादि।

स्मृ इत्येके। स्मृणोति इत्यादि। 'अत्स्मृदृत्वर' इत्यत्र वृत्तौ 'स्मृ चिन्तायामित्युपपादनादस्येत्त्वमेव न भवति, असिस्मरत्' इति। 'स्पृणोतिस्मृणोती इमौ छान्दसौ' इति पारायणे। 'इमौ पृणोतिश्च त्रयश्छान्दसाः' इति स्वामिकाश्यपौ॥१३॥

१५. आप्लृ व्याप्तौ। आप्नोति। आप्नुतः। आप्नुवन्ति। आप्नोषि। आप्नोमि।

---

१. पूर्वं ३४७ पृष्ठे द्रष्टव्यम्। २. 'प्रीतिबलनयोः' इति क्षीरस्वामी।

आप्नुवः—'लोपश्चास्य' इत्युकारलोपः संयोगपूर्वत्वान्न भवति। 'हुश्नुवोः सार्वधातुके' इति यणप्यसंयोगपूर्वस्येत्यजादौ 'अचि श्नुधातु' इत्युवङ्। आप। आपतुः। आपिथ। आपिव—क्रादिनियमादिट्। 'उपदेशेऽत्वतः' इत्यत्र 'अत्वतः' इति तपरकरणान्न थलीण्निषेधः। यत्रायं निषेधस्तत्र भारद्वाजनियम इति विकल्पोऽपि न भवति। आप्ता। आप्स्यति। आप्नुहि—'उतश्च प्रत्ययात्' इति हेर्लुक् संयोगपूर्वत्वान्न भवति। आप्नवानि। आप्नोत्। आप्नुयात्। आशिषि—आप्यात्। आपत्—लृदित्वात् च्लेरङ्। ईप्सति—'आप्ज्ञप्यृधामीत्' इतीत्वम्, अभ्यासलोपः। आपयति। मा भवानपिपत्— कृते णौ चङि ह्रस्वत्वे पश्चाद् द्वितीयस्यैकाचः पिशब्दस्य द्विर्वचनम्। प्रापय्य, प्राप्य—ण्यन्तात् क्त्वो ल्यपि 'विभाषापः' इति पक्षे णेरयादेशः, अन्यदा लोपः। आप्यम्—ण्यत्। 'पोरदुपधात्' इत्यत्र तपरकरणान्न यत्। आप्तिः—'क्तिन्नाबादिभ्यः' इति क्तिन्। जीविकां प्राप्तः प्राप्तजीविकः, जीविकाप्राप्तः इति क्त—'द्वितीया श्रित' इत्यादिना 'प्राप्तापन्ने च द्वितीयया' इति च समासः। 'प्राप्तापन्ने च' इत्यत्र लिङ्गविशिष्टपरिभाषया प्राप्ताशब्दस्य समासेऽपि प्राप्तजीविक इति। तत्र ह्यकारः प्रश्लिष्यते—'प्राप्तापन्ने अ च' इति, अश्चान्तादेशः। सौत्रत्वान्न प्रकृतिभावः। एतत्पद्यतावप्युक्तम्। आपः—'आप्नोतेर्ह्रस्वश्च' इति क्वौ, ह्रस्वः। 'अप्तृन्' इत्यादिना सर्वनामस्थाने दीर्घः। अद्भिः—'अपो भि' इति भकारादौ तकारे जश्त्वम्। 'अङ्गाधिकारे तस्य च तदन्तस्य च' इति दीर्घत्वतत्वे तदन्तेऽपि भवतः—स्वापः, स्वाद्भिः इति। द्विधा गताः, परितो गताः, अन्तर्गता आपो यस्मिन् द्वीपम्, परीपम्, अन्तरीपम्—'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इत्यादेरीकारादेशः। 'ऋक्पूरब्धूः' इत्यकारः समासान्तः। ईत्वमनवर्णान्तादित्युक्तत्वात्प्रापम् इत्यादौ न। समापम् नाम देवयजनमित्यत्र 'समाप ईत्वप्रतिषेधः' इतीत्वाभावः। अत एव निर्देशात् 'अन्येषामपि दृश्यते' इति वा दीर्घः। 'अव्ययं विभक्तिसमीप' इति निर्देशात् समीपम् इत्यपि भवति। यद्वा समापशब्दः समा आपो यस्मिन्निति समशब्देन व्युत्पाद्यः। अनूपम्—"ऊदनोर्देशे' इत्यप आदेरूकारः, अदेशे अन्वीपम्। समुद्रे यद् द्वीपं तत्र भवादि द्वैप्यम्—'द्वीपादनुसमुद्रं यञ्' इति शैषिको यञ्। अनुसमुद्रम् इति सप्तम्यर्थेऽव्ययीभावः। 'यञञोश्च' इत्यत्रापत्ययञो ग्रहणादस्य बहुषु लुगभावाद् द्वैप्या इति भवति। अनुसमुद्रमित्युक्तत्वादन्यत्रापि द्वैप इति भवति। द्वैपायनो व्यासः—नडादित्वात्फक्। द्वीपशब्देन द्वीपस्थो मुनिरुच्यते। अनन्तरापत्येऽप्यस्मिन् गोत्रत्वमारोपात्। 'त्रिषु द्वे आप्यमम्मयम्'[1] इत्यत्राप्यशब्दो मयडर्थे दृश्यते। तथाऽपां कारणेष्वाप्याः परमाणव इति अत्र प्रत्ययो न दृश्यते। तथा च स्वामी 'आप्यं तु लक्ष्यात्' इति। परिपूर्वोऽयं रक्षणेऽपि। तथा च भवभूतिः—'पर्याप्नोतु सुकृतं महाभागः' इति। अयं युजादौ च॥ १४॥

---

१. अ० को० ३।९।५।

१६. शक्लृ शक्तौ । शक्नोति । शक्नुवन्ति । शक्नोतु । शक्नुहि । अशक्नोत् । शक्नुयात् । शेषं शक्यतिवत् । लुङि लृदित्त्वादङ् अशकत् इति । विद्यासु शिक्षते–'शिक्षेर्जिज्ञासायाम्' इति तङ्, विद्याविषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः । शक्तो घटः कर्तुम्, शकित इति वा । 'सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन' इतीड्विकल्पः । 'विभाषा भावादिकर्मणोः' इत्यत्र हरदत्तः–'यद्यपि शकिः केवलोऽकर्मकस्तथापि तुमुनन्तवाच्यक्रियाविषयत्वे सकर्मको भवति, तथा च कर्मणि लादयोऽपि दृश्यन्ते । अयं योगः शक्योऽवक्तुमिति' इति । शक्यम्–'शकिसहोश्च' इति यत् । शकलम्—'शकिशम्योर्नित्' इति कलप्रत्ययः । शक्रः—'स्फायितञ्चि' इति रः । शक्लः प्रियंवदः—'मृशक्यबिभ्यः क्लः' इत्यूहितः क्लः ।। १५ ।।

१७. राध साध संसिद्धौ । राध्नोति । राध्नुवन्ति । राध्नुवः । राध्नोतु । राध्नुहि । अराध्नोत् । राध्नुयात् । शेषं राध्यतिवत् । हिंसार्थत्वे तु 'राधो हिंसायाम्' इति किति लिटि थलि च सेट्येत्वाभ्यासलोपौ । अपरेधतुः । अपरेधुः । अपरेधिथ इत्यादि । तथा सन्यपि 'राधो हिंसायां सन्यच इस्वक्तव्यः' इति अच इस्भावेऽभ्यासलोपे 'स्कोः' इति सलोपे च प्रतिरित्सति इति ।। साध्नोति । ससाध । ससाधतुः । ससाधिथ । ससाधिव । क्रादिनियमादिड्विकल्पो न भवति, तस्य त्वजन्तविषयत्वात् । साद्धा । सात्स्यति । साध्नोतु । असाध्नोत् । साध्नुयात् । साध्यात् । असात्सीत् । असाद्धाम् । सिषात्सति–'आदेशप्रत्यययोः' इति षत्वम् । सासाध्यते । सासाद्धि । साधयति । असीषधत्—कालापास्त्वषोपदेशं पठन्ति, तत् षोपदेशलक्षणविरुद्धम् । साधनः—ण्यन्तान्नन्द्यादित्वात् ल्युः । साधुः—'कृवापाजि' इत्युण् । मातरि साधुः—'साध्वसाधुप्रयोगे सप्तमी वक्तव्या' इति सप्तमी । अनर्चार्थमिदं वार्त्तिकम् । अर्चायां तु 'साधुनिपुणाभ्यामर्चायाम्' इत्येव सिद्धम् । तदस्मादत्र अर्चाग्रहणं निपुणार्थं सम्पद्यते । 'साधुर्भृत्यो राज्ञः इत्यत्र भृत्यापेक्षया षष्ठी, न साध्वपेक्षयेति वाक्यार्थज्ञा आहुः' इति कैयटादौ प्रतिपादितम् । अप्रतेरिति वचनात् साधुर्देवदत्तो मातरं प्रतीत्यत्र न भवति । 'अप्रत्यादिभिरिति वक्तव्यम्' इति वार्त्तिकम्, तत्रादिग्रहणेन 'लक्षणेत्थम्भूत' इत्यत्र प्रतिना सहोपात्तयोः पर्यन्वोर्ग्रहः ।।१६–१७।।

१८. ष्टुनोतिप्रभृतयोऽनुदत्ताः परस्मैपदिनः[१] ।

अथ सेट आह—

१९. अशू व्याप्तौ सङ्घाते[२] च[२] । अश्नुते । अश्नुवाते । अश्नुवते । अश्नुषे । अश्नुध्वे । अश्नुवे । अश्नुवहे–'शात्' इति तवर्गस्य श्चुत्वनिषेधः । आनशे । आन-

१. 'एते ष्टुप्रभृतयः परस्मैपदिनोऽनुदात्ताः स्वादयः वृञ्धुञ्वर्जम्' इति मैत्रेयः ।
२–२. क्षीरस्वामी न पठति ।

शाते । आनशिषे । आनत्रे । आनशिष्वे, आनड्ढ्वे । आनशिवहे, आनश्वहे । आनशिमहे, आनश्महे—ऊदित्त्वादिड्विकल्पः । झलि व्रश्चादिना षत्वम्, 'षढोः कः सि', 'ष्टुना ष्टुः' इति कत्वषत्वे यथायोगम् । 'अत आदेः' इत्यभ्यासस्य दीर्घत्वे ततः परस्य 'अश्नोतेश्च' इति नुडागमः। अष्टा, अशिता। अक्ष्यते, अशिष्यते । अश्नुताम् । अश्नुष्व । अश्नवै । आश्नुत । आश्नुथाः । आश्नुवि । अश्नुवीत । अश्नुवीथाः । अश्नुवीय । आशिषि—अशिषीष्ट । अक्षीष्ट । आशिष्ट, आष्ट । आशिषाताम् । आक्षाताम्—'झलो झलि' इति सिज्लोपे षत्वष्टुत्वे । अन्यत्र षत्वे कत्वम् । आशिशिषते—'स्मिपूङ्रञ्ज्वशां सनि' इति नित्यमिट् । आशाश्यते—'सूचिसूत्रि' इत्यादिना यङ् । तत्र ह्यश्नोतेरश्नातेश्च ग्रहणमुक्तं पदमञ्जर्यादौ । एवं पारायणादौ आत्रेयमैत्रेयादावपि।यङ्लुकि आष्टि इत्यादि। अटतिवत् प्रक्रिया । अष्ट्वा, अशित्वा । अष्टः, अष्टवान्—'यस्य विभाषा' इत्यनिट्त्वम् । रशना—'अशे रश च' इति युचि रशादेशः । आशुः व्रीहिविशेषः—'कृवापाजि' इत्यादिना उण्प्रत्ययः । शीघ्रपर्यायस्त्वयमव्ययम् । श्वशुरः—'शावशेराप्तौ' इति शुशब्दे उपपदे उरन् प्रत्ययः । आशुपर्यायः शुशब्दः । श्वशुर्यः—'राजश्वशुराद्यत्' इति अपत्ये यत् । श्वश्रूः—'श्वशुरस्यौकाराकारयोर्लोपश्च' इत्युकाराकारयोर्लोप ऊङ्प्रत्ययश्च । श्वश्रूश्च श्वशुरश्च श्वशुरौ— 'श्वशुरः श्वश्वा' इति पक्षे श्वशुरस्य शेषः । अक्षरम्—'अशेः सरन्' इति सरन् प्रत्ययः । अष्टन्—'सप्यशूभ्यां तुट् च' इति कनिन्, तस्य तुडागमश्च । अष्टौ । अष्टाभिः । अष्टाभ्यः । अष्टानाम् । अष्टासु । 'अष्टन आ विभक्तौ' इति पक्षे आकारः । 'अष्टाभ्य औश्' इति जश्शसोरौभावः । अत्र लघ्वर्थम् 'अष्टनः' इति वक्तव्ये 'अष्टाभ्यः' इति निर्देशादष्टन आत्वपक्षे एवौश्भावः । अयमेव निर्देश आत्वविकल्पे लिङ्गम्, तेनात्वाभावे जश्शसोः 'षड्भ्यो लुक्' इति लुकि अष्ट इति भवति । 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इति वचनात् परमाष्टौ इत्यादावप्यौश्त्वं भवति । अत्रापि पूर्ववदात्वपक्षे एवौश्त्वम्, तेनानात्वे परमाष्ट इति भवति । आत्वमप्याङ्गिकमिति तत्रापि पूर्ववत्तदन्तविधिर्द्रष्टव्यः । अष्टावक्रः—'अष्टनः संज्ञायाम्' इत्युत्तरपदे दीर्घः । अष्टाभिर्गोभिर्युक्तं शकटम् अष्टागवम्—'गवि च युक्ते, भाषायामष्टनो दीर्घः' इति दीर्घः । अष्टाविंशतिः—'अष्टनः संख्यायामबहुव्रीह्यशीत्योः' इत्यशीतिवर्जिते संख्यायामुत्तरपदे दीर्घः । 'बहुव्रीहौ' इति वचनाद् अष्टनवा इत्यत्र न भवति । 'प्राक् शताद्' इति वचनाद् अष्टशतमित्यादावपि न भवति। अष्टमो भागः आष्टमः, अष्टमः—'षष्ठाष्टमाभ्यां ञ च' इति भागे विवक्षिते ञप्रत्ययश्चकारादंश्च । अश्वः—'अशुव्रुषि' इति क्वन् । अश्वानां समूहः अश्वीयम्—'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' इति छः । अन्यतरस्यांग्रहणात्पक्षेऽण्—आश्वम् अश्वस्य निमित्तं संयोग उत्पातो वा आश्विकः—'आर्हाद्' इति ठक्।'गोद्व्यचः' इति द्व्यज्लक्षणो यत्तत्रैव संख्यापरिमाणाश्वादीनां पर्युदासान्न

भवति । अश्वेनैकाहेन गम्यते आश्वीनः—'अश्वस्यैकाहगमः' इति खञ् । अश्वस्यापत्यम् आश्वायनः—'अश्वादिभ्यः फञ्' इति फञ् । गवाश्वम्—'गवाश्वप्रभृतीनि च' इति नित्यमेकवद्भावः, पूर्वपदस्यावङ् च । अश्वस्यति वडवा—मैथुनमिच्छतीत्यर्थः । क्यचि परतः 'अश्वक्षीर' इत्यसुक् । अत्र हि 'अश्ववृषयोर्मैथुनेच्छायाम्' इति पठ्यते । अन्यत्र अश्वीयति । अश्वतरः—गर्दभादश्वायामुत्पन्न उच्यते । यस्य वेसर इति नाम । 'वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे' इति ष्टरच् । अश्वशब्दार्थस्य व्यक्तेस्तनुत्वं प्रवृत्तिनिमित्तजातिद्वारकम् । प्रवृत्तिनिमित्तं चेहाश्वादन्यस्मिंस्तत्सदृशे जात्यन्तरयोगिनि आरोप्यत इति गौणत्वेन तनुत्वम् । ष्टरचः षित्त्वात्स्त्रियाम् अश्वतरी । अक्षः—'अशेर्देवने' इति सप्रत्ययः । अक्षपरि, अक्षेण न तथा पतितं यथा जय इत्यर्थः—'अक्षशलाकासंख्याः परिणा' इति तृतीयान्तस्याव्ययीभावः । कितवव्यवहारे चायं समास इष्यते । अक्षि । अक्षिणी—'अशेर्निद्' इति क्सिप्रत्ययः । अयमक्षतौ च व्युत्पादितः । वक्तव्यं चात्र तत्रैवोक्तम् ॥ १८ ॥

२०. ष्टिघ आस्कन्दने । कवर्गचतुर्थान्तः । स्तिघ्नुते । तिष्टिघे । स्तेघिता । स्तेघिष्यते । स्तिघ्नुताम् । अस्तिघ्नुत । स्तिघ्नुवीत । आशिषि—स्तेघिषीष्ट । अस्तेघिष्ट । तिस्तिघिषते, तिस्तेघिषते । स्तिघित्वा, स्तेघित्वा—'रलो व्युपधाद्' इति कित्त्वविकल्पः । तेष्टिघ्यते । तेष्टेग्धि । स्तेघयति । अतिष्टिघत् । खयः शेषः । स्तिघितः । स्तिघितवान् ॥ १९ ॥

२१. अशिस्तिघा[1] उदात्तावनुदात्तेतौ ।

२२. तिक तिग च[2] । चकारादास्कन्दने इत्यनुकृष्यते । तिक्नोति । तितेक । तितेकिथ । तितिकिव । तेकिता । तेकिष्यति । तिक्नोतु । अतिक्नोत् । तिक्नुयात् । आशिषि–तिक्यात् । अतेकीत् । तितिकिषति, तितेकिषति । तेतिक्यते । तेतिकीति, तेतेक्ति । तेकयति । अतीतिकत् । तिकः—इगुपधलक्षणः कः । तैकायनिः—'तिकादिभ्यः फिञ्' इत्यपत्ये फिञ् । तैकायनयश्च कैतवायनयश्च तिककितवाः—'तिककितवादिभ्यो द्वन्द्वे' इति बहुषु लुक् ॥ तिग्नोति इत्यादि तिक्नोतिवत् ॥ २०–२१ ॥

षघ हिंसायाम् । सघ्नोति । ससाघ । सेघतुः । सेघिथ । सेघिव । सघिता । सघिष्यति । सघ्नोतु । असघ्नोत् । सघ्नुयात् । आशिषि—सघ्यात् । असघीत्, असाघीत्—'अतो हलादेः' इति वा वृद्धिः । सिसघिषति—'स्तौतिण्योरेव' इति नियमान्न षत्वम् । सासघ्यते । सासघीति, सासग्धि । साघयति । असीषघत् ॥ २२ ॥

२३. ञि धृषा प्रागल्भ्ये । धृष्णोति । दधर्ष । दधृषतुः । दधर्षिथ । दधृषिव । धर्षिता । धर्षिष्यति । धृष्णोतु । अधृष्णोत् । धृष्णुयात् । आशिषि–धृष्यात् । अधर्षीत् ।

---

१. क. पुस्तके नास्ति । २. 'गतौ च' इत्यपि क्वचित् पाठः ।

दिधर्षिषति। दरीधृष्यते। दरीधृषीति, दरिधृष्टि, दर्धर्ष्टि—इत्यादि। धर्षयति। अदीधृषत्, अदधर्षत्—उऋद्वा। धृष्यः—'ऋदुपधात्' इति क्यप्। दधृक्। दधृषौ—'ऋत्विक्' इत्यादौ निपातनात् क्विनि द्वित्वम्, पदान्ते च कुत्वम्। धृष्णुः—'त्रसिगृधि' इत्यादिना धृषेः क्नुः। धृष्णक्। धृष्णजौ—धृषेश्चेति वक्तव्यम्' इति नजिङ्। दुर्धर्षणः—'भाषायां शासियुधिदृशिधृषिमृषिभ्यो युच्' इति युच्। धर्षित्वा—'न क्त्वा सेट्' इत्यकित्वाद् गुणः। धृष्टो वृषलः—'धृषिशसी वैयात्ये' इत्यनिट्त्वम्। 'आदितश्च' इत्यनिट्त्वे सिद्धे वचनमिदं नियमार्थम्, तेन वैयात्यादन्यत्र धर्षित इतीड् भवति। भावादिकर्मणोर्न वैयात्ये धृषिरस्तीति तत्र नित्यनिषेधार्थं न भवति। वैयात्यादन्यत्र भावादिकर्मणोर्विकल्प एव भवति। धृष्टम्, धर्षितम्। प्रधृष्टः, प्रधर्षितः इति। तत्रेट्पक्षे 'निष्ठा शीङ्' इत्यादिना कित्त्वाभावाद् गुणः। ञित्त्वं वर्तमाने क्तार्थम्। धृष प्रसहने इति युजादौ॥ २३॥

२४ दन्भु दम्भे[1]। दम्भो लोकरञ्जनार्थमेव कर्मानुष्ठानम्। दभ्नोति—'अनिदिताम्' इति नलोपः। ददम्भ। देभतुः। देभुः। ददम्भिथ। देभिव—'श्रन्थिग्रन्थिदन्भिस्वञ्जीनामिति वक्तव्यम्' इति अपितो लिटः कित्त्वादनुनासिकलोपे 'दम्भेश्चेति वक्तव्यम्' इत्येत्वाभ्यासलोपौ। 'अत एकहल्मध्ये' इति तु न सिध्यति, 'असिद्धवदत्राभात्' इत्यनुनासिकलोपस्यासिद्धत्वात्। 'इदं च कित्त्वं श्रन्थ्यादीनामपिदर्थं पिदर्थं च' इति सुधाकरः। आत्रेयमैत्रेयादयस्तु 'अपिदर्थम्' इति। न्यासकारस्याप्ययमेव पक्षः। यदाह—'श्रन्थिग्रन्थिप्रभृतीनां संयोगान्तानामपितो लिटः कित्त्वम्' इति। अपिद्वचनानामेवोदाहरणाद् वृत्तिकारस्याप्ययमेव पक्षोऽभिमतः प्रतीयते। हरदत्तस्तु 'किमिदं पिदर्थमपिदर्थं वा' इति सन्दिह्य 'अर्थसतत्त्वं देवा एतज्ज्ञातुमर्हन्ति' इत्याह। केचित् श्रन्थिग्रन्थिदम्भिस्वञ्जीनां वेति पठन्तः कित्त्वं विकल्पयन्ति। तन्मते, ददम्भतुरित्याद्यपि भवति। दम्भिता। दम्भिष्यति। दभ्नोतु। अदभ्नोत्। दभ्नुयात्। दभ्यात्। अदम्भीत्। दिदम्भिषति—'सनीवन्त' इतीड्विकल्पः। इडभावे—धिप्सति। धीप्सति—'दम्भ इच्च' इत्यकारस्य इकार ईकारश्च। 'हलन्ताच्च' इति सनः कित्त्वादनुनासिकलोपः। अत्र हल्शब्देन जातिराश्रीयते। 'एकाचः' इति भष्भावेन दकारस्य धकारः, 'खरि च' इति चर्त्वं भकारस्य पकारः। 'अत्र लोपः' इत्यभ्यासलोपः। अत्रेक्समीपाद्धलः परः सन् भवति। हल्जातेराश्रयणात् जातेः समीपत्वं सनः पूर्वत्वं च व्यक्तिद्वारेण। तथा च वार्तिकम्—'दन्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धम्' इति। दादभ्यते। दादम्भि। दम्भयति। अददम्भत्। दम्भित्वा, दब्ध्वा—उदित्त्वादिड्विकल्पः। दब्धः, दब्धवान्—'यस्य विभाषा' इत्यनिट्त्वम्। दब्धिः—'तितुत्र' इतीण्निषेधः। दभिरिति सौत्रो धातुः।

---

१. 'दम्भने' इति क. पुस्तके।

तस्मात् 'आसुयुवपि' इत्यादौ चकारस्यानुक्तसमुच्चयार्थत्वात् 'पोरदुपधाद्' इति यतोऽपवादे ण्यति दाम्भ्यः ॥ २४ ॥

२५. ऋधु वृद्धौ । ऋध्नोति । ऋध्नोतु । आर्ध्नोत् । ऋध्नुयात् । शेषमृध्यतिवत् । अयमकर्मकः सकर्मकश्च । अत्र 'तृप प्रीणने' इति[1] आत्रेयादयः पठन्तः तृप्नोति इत्याद्युदाहरन्ति । अमुं न्यासकारादयो नेच्छन्ति । यदाहुः—'क्षुभ्नादिषु तृप्नोतीति व्यत्ययेन श्नुः' इति । 'तृप्यतिदृप्यती सृपिस्' इत्यनिट्कारिकासु श्यना निर्देशव्यावर्त्यत्वेन 'तुदादिषु यौ तृपिदृपी, तावुदात्तौ' इति वृत्तिकारेणाभिधानात् सोऽप्यमुं नेच्छतीति प्रतीयते । पुरुषकारेऽप्येवं प्रतिपादितम्[2] ॥ २५ ॥

२६. छन्दसि । आ गणान्तात् छन्दसीत्यर्थः । अन्यस्तु 'छन्दस्यह व्याप्तौ' इति पठित्वा छन्दोग्रहणमह्नोतिविशेषणं मन्यते, तत् शाकटायनमैत्रेयादयो न सहन्ते ।

२७. अह व्याप्तौ । अह्नोति इत्यादि ॥ २६ ॥

२८. दघ घातने पालने[3] च[3] । दघ्नोति इत्यादि । 'धाराधरा एव धराधराणां निदाघदाघौघविघातदक्षाः' इति । "अत्र 'दघ घातने' इति स्वादिः, ततो निदघ्यतेऽनेनेति कृत्वा निदाघशब्दः साधुः इति पारायणिकाः" इति सुधाकरः, तदपाणिनीयम्; 'संज्ञायामर्घमेघनिदाघावदाघाः' इति न्यङ्क्वादौ पठित्वा दहतेर्घञि व्युत्पादनात् । तथा च तत्र वृत्तिः—'अपूर्वस्य निपूर्वस्य च दहेः' इति ॥२७॥

२९. चमु भक्षणे । चम्नोति इत्यादि ॥ २८ ॥

३०. रि क्षि चिरि जिरि दाश दृ[4] हिंसायाम् । रिणोति । क्षिणोति इत्यादि । 'अयं भाषयामपि' इति आत्रेयमैत्रेयादयः । प्रयुज्यते च—'इमां हृदि व्यायतपातमक्षिणोत्' 'न तद्यशः शस्त्रभृतां क्षिणोति[5]' 'पञ्चबाणः क्षिणोति' इति । शाकटायनादयस्तु छान्दसत्वमेवाहुः । केचित्तु 'ऋक्षि' इत्येकमजादिं च मन्यन्ते । चिरिणोति । जिरिणोति । दाश्नोति । दृणोति । केचित्तु दुङ्मपि पठन्ति दुनुते इति । यदाह दुर्गः— 'तिक तिग षिघ रि क्षि चिरि जिरि दाश् दृ दुङ् हिंसायाम्, छान्दसाश्चामी परस्मैभाषा[6] उदात्ताः' इति[6] ॥ २९–३४ ॥

३१. वृत् । स्वादयो वृत्ता इत्यर्थः ॥

इति पूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसङ्गममहाराजमहामन्त्रिणा मायणसुतेन माधवसहोदरेण सायणाचार्येण[7] विरचितायां माधवीयायां धातुवृत्तौ स्वादयः सम्पूर्णाः ॥

---

१. मैत्रेयोऽपि पठति । २. दै० पृ० ८२ । ३–३. क्षीरस्वामि मैत्रेयौ पठतः ।
४. 'दृ' इति ख० पुस्तके । ५. रघु० २।४० । ६–६. ख. पुस्तके नास्ति ।
७. ख पुस्तके नास्ति ।

# ६. तुदादिगणः

१. तुद व्यथने । तुदति । तुदतः । तुदन्ति । तुदसि । तुदथः । तुदथ । तुदामि । तुदावः । तुदामः—'तुदादिभ्यः शः' इति शब्विषये शः । तुदती, तुदन्ती स्त्री, तुदती कुले, तुदन्ती कुले—'आच्छीनद्योर्नुम्' इति शत्रन्तस्य शीनद्योर्नुम्विकल्पः । तुदते । तुदेते । तुदन्ते । तुदसे । तुदेथे । तुदध्वे । तुदे । तुदावहे । तुदामहे । तुतोद । तुतुदतुः । तुतोदिथ । तुतुद, तुतोद । तुतुदिव । तुतुदे । तुतुदाते । तुतुदिरे । तुतुदाथे । तुतुदिध्वे । तुतुदे । तुतुदिवहे—क्रादिनियमादिट् । तोत्ता । तोत्स्यति । तोत्स्यते । तुदतु, तुदतात् । तुदताम् । तुदन्तु । तुद, तुदतात् । तुदतम् । तुदत । तुदानि । तुदाव । तुदताम् । तुदेताम् । तुदन्ताम् । तुदस्व । तुदेथाम् । तुदध्वम् । तुदै । तुदावहै । अतुदत् । अतुदः । अतुदम् । अतुदत । अतुदथाः । अतुदे । तुदेत् । तुदेताम् । तुदेयुः । तुदेः । तुदेयम् । तुदेत । तुदेयाताम् । तुदेरन् । तुदेथाः । तुदेय । तुदेवहि । आशिषि—तुद्यात् । तुद्यास्ताम् । तुत्सीष्ट । तुत्सीयास्ताम्—'लिङ्सिचावात्मनेपदेषु' इति कित्त्वान्न गुणः । अतौत्सीत् । अतौत्ताम् । अतौत्सीः । अतौत्सम्—'वदव्रज' इति वृद्धिः । 'झलो झलि' इति सिचो लोपः । अतुत्त । अतुत्साताम्, तुतुत्सति, तुतुत्सते—'हलन्ताच्च' इति सनः कित्त्वम् । तोतुद्यते । तोतुदीति—'नाभ्यस्तस्य' इति गुणनिषेधः । तोतोत्ति—लघूपधगुणः । तोदयति । अतूतुदत् । तिलन्तुदः—'वातशुनी' इत्यादिना खश् । विधुन्तुदः । अरुन्तुदः—'विध्वरुषोस्तुदः' इति खश् । 'अरुर्द्विषदजन्तस्य' इति मुम् । 'संयोगान्तस्य' इत्यरुषः सकारस्य लोपः । तोत्त्रम्—'दाम्नी' इत्यादिना करणे ष्ट्रन् । प्रतोदः—'हलश्च' इति संज्ञायां करणे घञ् । तुत्त्वा । तुन्नः, तुन्नवान्—'रदाभ्याम्' इति निष्ठानत्वम् । तुत्थम्—'पातृतुदिवचिसिचिभ्यस्थक्' इति थक् ॥ १ ॥

२. णुद[1] प्रेरणे । प्रणुदते । प्रणुदति इत्यादि तुदिवत् । 'उपर्गादसमासेऽपि' इति णत्वम् । नुत्वा । नुत्तः, नुन्नः । नुत्तवान्, नुन्नवान्—'नुदविद' इति नत्वविकल्पः । काकुर्जिह्वा सास्मिन्नुद्यते इति काकुदं तालु—'घञर्थे कविधानम्' इति कः । पृषोदरादित्वान्नुशब्दलोपः, पररूपं च । शोकापनुदः—'तुन्दशोकयोः परिमृजापनुदोः' इत्यनयोः कर्मणोरुपपदयोः परिमृजापनुदोः कप्रत्ययः कर्मण्यणोऽपवादः । अयं च शोकमपनुद्य सुखस्याहर्त्तरि, 'आलस्यसुखाहरणयोरिति वक्तव्यम्' इति वचनात् । यस्तु दुःखमेकमपनुदति[2] सुखं नाहरति तत्रापि शोकापनोद इति भवति । 'अयं परस्मैपदिष्वपि पठ्यते, तेनायं भाषायां परस्मैपद्येव' इति वर्द्धमानः ।

---

१. 'नुद' इति धातुप्रदीपे मुद्रितः पाठः । २. 'शोकमप०' ख. पुस्तके पाठः ।

स्वामी अपि तथा परस्मपदिष्वेवामुं पपाठ; उभयम् आत्रेयमैत्रेयाद्यनेकव्याख्यान-विरुद्धम्, यदाहुः—'उभयपदिषु पठितस्यास्य पुनः परस्मैपदिषु पाठः कर्त्रभिप्रायेऽपि परस्मैपदार्थः' इति ॥ २ ॥

३. दिश अतिसर्जने[1] । दिशति । दिशते । दिदेश । दिदेशिथ । दिदिशिव । दिदिशे । दिदिशिरे । दिदिशिषे । दिदिशिवहे । देष्टा । देक्ष्यति । देक्ष्यते—'व्रश्च'इत्या-दिना षत्वे 'षढोः कस्सि' इति कत्वम् । दिशतु । दिशताम् । अदिशत् । अदिशत । दिशेत् । दिशेत । आशिषि—दिश्यात् । दिक्षीष्ट । अदिक्षत् । अदिक्षताम् । अदिक्षन् । अदिक्षः । अदिक्षम् । अदिक्षत । अदिक्षाताम् । अदिक्षथाः । अदिक्षि । अदिक्षावहि—'शल इगुधात्' इति क्सः, 'क्सस्याचि' इत्यल्लोपः । दिदिक्षति, दिदिक्षते—'हलन्ताच्च' इति सनः कित्त्वम् । देदिश्यते । देदिशीति, देदेष्टि । देशयति । अदीदि-शत् । दिक् । दिशौ । दिशः—'ऋत्विक्' इत्यादिना क्विनि 'क्विन्प्रत्ययस्य कुः' इति कुत्वं द्वितीयः, पदान्ते तस्य जश्त्वं गकारः, 'वावसाने' इति चर्त्वं ककारः । न च कुत्वस्य जश्त्वे पूर्वत्रासिद्धम्; 'दिगादिभ्यो यत्' इति निर्देशात् । नापि कुत्वं व्रश्चादिना षत्वेऽसिद्धम्, षत्वापवादत्वात्तस्य । प्रतिदिशम्—वीप्सायामव्ययीभावः । 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति टच् समासान्तः । दिशा—'आपं चापि हलन्तानाम्' इति भागुरिवचनाद् टाप् । दिशि भवं दिश्यम्—'दिगादिभ्यो यत्' इति यत् । नामादेशं युध्यते—'नाम्न्यादिशिग्रहोः' इति द्वितीयान्ते नाम्न्युपपदे आदिशेर्धातुसम्बन्धे णमुल् । वाक्यं समासो वास्तु । 'तृतीयाप्रभृतीनि' इति समासो विकल्प्यते । नामादिश्य युध्यते इति क्त्वापि भवति । उक्तं हि—'तृतीया-प्रभृतीनि' इत्यत्र वृत्तौ—'सर्वत्रैवास्मिन् णमुल्प्रकरणे क्रियाभेदे सति वा-सरूपविधिना क्त्वापि' इति । दिष्टम्—क्तः । दैष्टिकः—'अस्तिनास्तिदिष्टं मतिः' इत्यस्त्यादिभ्यो मत्युपाधिकेभ्योऽस्येत्यर्थे ठक् । 'प्रमाणानुपातिनी यस्य मतिरस्ति स दैष्टिकः' इति वृत्तिः । एतच्चाभिधानस्वभावाल्लब्धम् । दिष्टिः—संज्ञायां क्तिच् । दिशति तमिति देशः—'अकर्तरि च कारके' इति कर्मणि घञ् । प्रादेशः—'हलश्च' इति संज्ञायां करणे घञ् । 'उपसर्गस्य घञि' इति दीर्घः । प्रादेशिनी—णिनिः ॥ ३ ॥

४. भ्रस्ज पाके । भृज्जति । भृज्जसि । भृज्जामि । भृज्जते । भृज्जसे । भृज्जे—शस्य 'सार्वधातुकमपित्' इति ङित्त्वात् 'ग्रहिज्या' इत्यादिना सम्प्रसारणे पररूपत्वम् 'झलां जश् झशि' इति सकारस्य दकारस्तस्य श्चुत्वं जकारः । न च श्चुत्वे दत्वमसिद्धम्; भृज्जतीनामिति निर्देशादिति व्याख्यातारः । यद्वा—जश्त्व-स्यासिद्धत्वात्सकारस्यैव श्चुत्वे शकारस्तस्य 'झलां जश् झशि' इति जश्त्वेन

---

[1] 'अतिसर्जनं त्यागः' इति क्षीरस्वामी ।

जकारेऽपि रूपं सेत्स्यति । बभर्ज । बभर्जतुः । बभर्जुः । बभर्जिथ, बभर्ष्ठ । बभर्जथुः । बभर्जिव । बभर्ज । बभर्जाते । बभर्जिरे । बभर्जिषे—इत्यादि । क्रादिनियमादिट् । थलि भारद्वाजनियमाद्विकल्पः । 'भ्रस्जो रोपधयो रमन्यतरस्याम्' इत्यार्द्धधातुके रेफोपधयोर्निवृत्तिः । रमागमश्च विकल्पेन । आगमेऽकार उच्चारणार्थः । अन्यदा बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जुः । बभ्रज्जिथ, बभ्रष्ठ । बभ्रज्जथुः । बभ्रज्ज । बभ्रज्जिव । बभ्रज्जे । बभ्रज्जाते । बभ्रज्जिरे । बभ्रज्जिषे—इत्यादि । भ्रष्टा, भर्ष्टा—रमभावे 'स्कोः' इति सकारस्य लोपः । 'व्रश्च' इत्यादिनोभयत्र जकारस्य षत्वे ष्टुत्वम् । भर्क्ष्यति, भर्क्ष्यते । भ्रक्ष्यति, भ्रक्ष्यते—रमभावे 'स्कोः' इतिसलोपः । सर्वत्र व्रश्चादिषत्वे 'षढोः कः सि' इति कत्वम् । भृज्जतु । भृज्जताम् । अभृज्जत् । अभृज्जत । भृज्जेत् । भृज्जेताम् । भृज्जेयुः । भृज्जेत । भृज्जेयाताम् । भृज्जेरन्—आशिषि भृज्ज्यात् । भृज्ज्यास्ताम्—यासुटः कित्वात्सम्प्रसारणम् । रमागमश्चानेन पूर्वविप्रतिषेधेन बाध्यते । भर्क्षीष्ट । भर्क्षीयास्ताम् । भ्रक्षीष्ट । भ्रक्षीयास्ताम्—इत्यादि । रमागमतदभावयोः सलोपादि पूर्ववत् । अभार्क्षीत् । अभार्ष्टाम् । अभार्क्षुः अभार्क्षीः । अभार्ष्टम् । अभार्ष्ट । अभार्क्षम् । अभ्राक्षीत् । अभ्राष्टाम् । अभ्राक्षुः इत्यादि—'वदव्रज' इति वृद्धिः । झलि सिचो लोपे सकारस्याभावात् 'षढोः कः सि' इति न भवति । अभर्ष्ट । अभर्क्षाताम् । अभर्ष्ठाः । अभर्क्षाताम् । अभर्ड्ढ्वम् । अभर्क्षि । अभर्क्ष्वहि । अभ्रष्ट, अभ्रक्षाताम्—इत्यादि पूर्ववत् । यथायोगं सलोपषत्वकत्वानि । यत्र न सिचो लोपस्तत्र कात्परत्वात् 'आदेशप्रत्यययोः' इति षत्वम् । बिभर्क्षति, बिभर्जिषति । बिभ्रक्षति, बिभ्रज्जिषति—'सनीवन्त' इत्यादिनेड्विकल्पः । तङ्यपि बिभ्रक्षते—इत्यादि चातूरूप्यम् । बरीभृज्ज्यते—आशीर्लिङ्वदत्रापि रोपधलोपात् पूर्वविप्रतिषेधेन सम्प्रसारणमेव भवति । अभ्यासस्योरदत्वे 'रीगृत्वतः' इति रीक् । 'भ्रस्जो रोपधयोः' इति लोपोऽभ्यासस्य न भवति; तत्रोपदेशग्रहणानुवृत्तेः । बाभृष्टि इत्यादि । अत्र यङो लुप्तत्वात्तिपा निर्देशाद्वा न सम्प्रसारणम् । अत एव लुका लुप्तत्वादार्धधातुकपरत्वाभावाद् रोपधयोर्लोपोऽपि न भवति । भर्जयति । अबभर्जत् । भृज्जयति । अबभृज्जत् । भर्ग्यः । भृज्ज्यः—ण्यति रोपधलोपे 'चजोः कु घिण्ण्यतोः' इति कुत्वम् । लोपाभावे तु जश्त्वात्पूर्वं 'पूर्वत्रासिद्धम्' इति 'चजोः' इति कुत्वेन जकारस्य गकारे पश्चात् सकारस्य जश्त्वे दकारः । भर्गः, भ्रद्गः—घञ्, पूर्ववत् प्रक्रिया । भर्गस्यापत्यं भार्गायणः—'भर्गात्त्रैगर्ते' इति फञ् । त्रैगर्तादन्यत्र 'अत इञ्' इतीञि भार्गिः । भृष्टः, भृष्टवान् । भृगुः—'प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च' इत्युप्रत्ययः सम्प्रसारणसलोपौ च । 'न्यङ्क्वादीनाञ्च' इति कुत्वम् । भृगोरपत्यं भार्गवः—'ऋष्यन्धकवृष्णि' इत्यण् । बहुत्वे भृगवः—'अत्रिभृगु' इत्यादिनाऽणो लुक् । भ्राष्ट्रम्—'भ्रस्जिगमि' इत्यादिना ष्ट्रन् वृद्धिश्च । भर्जते इति शपि ॥ ४ ॥

५. क्षिप प्रेरणे । क्षिपति । क्षिपते । अभिक्षिपति । प्रतिक्षिपति । अतिक्षिपति—'अभिप्रत्यतिभ्यः क्षिपः' इति क्रियाफलस्य कर्तृगामित्वेऽपि परस्मैपदम् । इदञ्च शुद्धे कर्तरीति कर्मकर्तरि तङ् भवति—अभिक्षिप्यते इति । चिक्षेप । चिक्षेपिथ । चिक्षिपिव । चिक्षिपे । चिक्षिपिषे । क्षेप्ता । क्षेप्स्यति । क्षेप्स्यते । क्षिपतु । क्षिपताम् । अक्षिपत् । अक्षिपत । क्षिपेत् । क्षिपेत । क्षिप्यात् । क्षिप्सीष्ट । अक्षैप्सीत् । अक्षैप्ताम् । अक्षिप्त । अक्षिप्साताम्—'लिङ्सिचावात्मनेपदेषु' इति कित्त्वान्न गुणः । चिक्षिप्सति । चिक्षिप्सते—'हलन्ताच्च' इति सनः कित्वम् । चेक्षिप्यते । चेक्षेपीति, चेक्षेप्ति । क्षेपयति । अचिक्षिपत् । कृतः क्षिप्यतिवन्नेयाः ॥ ५ ॥

६. कृष विलेखने । कृषति । कृषते । चकर्ष । चकर्षतुः । चकर्षिथ । चकर्ष । चकृषिव । चकृषे । चकृषाते । चकृषिषे—इत्यादि । क्रष्टा, कर्ष्टा । क्रक्ष्यति, कर्क्ष्यति । क्रक्ष्यते, कर्क्ष्यते—झल्यकिति 'अनुदात्तस्य चर्दुपधस्य' इति पाक्षिके अमागमे यणादेशः । कृषतु । कृषताम् । अकृषत् । अकृषत । कृषेत् । कृषेताम् । कृषेत । कृषेयाताम् । आशिषि—कृष्यात् । कृक्षीष्ट—'लिङ्सिचावात्मनेपदेषु' इति कित्त्वान्नामागमः, नापि गुणः । अकृक्षत् । अकृक्षताम् । अकृक्षन् । अकृक्षत । अकृक्षाताम् । अकृक्षन्त—'क्सस्याचि' इत्यल्लोपः । अजादौ 'शल इगुपधात्' इति क्सः । अकार्क्षीत् । अकार्ष्टाम् । अक्राक्षीत् । अकृष्ट । अकृक्षाताम् । अकृक्षत—'स्पृशमृषकृष' इति पक्षे सिच् । झलि तस्य लोपः । 'वदव्रज' इति परस्मैपदे वृद्धिः । पूर्ववदमागमविकल्पः । आत्मनेपदे तु 'लिङ्सिचौ' इति कित्वान्नामागमः । अत एव न गुणः । चिकृक्षति—'हलन्ताच्च' इति सनः कित्वान्नामागमः, नापि गुणः । चरीकृष्यते । चरीकर्ष्टि, चरीक्रष्टि इत्यादि । कर्षयति । अचकर्षत् । अचीकृषत्—उर्ऋद्वा । कृषिः—'इक् कृष्यादिभ्यः' इतीक् । कृषीवलः—'रजः कृष्यासुति' इति मत्वर्थे वलच् । 'वले' इति दीर्घः । सङ्कर्षणः—नन्द्यादित्वात् ल्युः । कृषकः—'क्वुन् शिल्पिसंज्ञयोः' इति कुन् । 'सप्तम्यां चोपपीड' इत्यत्र 'कर्ष इति कर्षेरिदं ग्रहणं न कृषेः' इति वृत्तिः । आत्रेयस्तु 'व्याख्यानमात्रमेतत्, विशेषाभावात्' इति । हरदत्तस्तु विशेषमाह, यदाह—'यद्यप्युभयोरपि विलेखने पाठः, तथापि तौदादिकस्य क्षेत्रविषये विलेखने वृत्तिः । तेन क्षेत्रे उपकृष्य हलेनोपकृष्य इति तौदादिकात् क्त्वाप्रत्यय एव भवति, न ण्वुल्' इति । न्यासकारोऽपि 'कर्ष इति शपा निर्देशाद्भौवादिकस्य ग्रहणम्' इत्याह ॥ ६ ॥

७. तुदादयोऽनुदात्ताः स्वरितेतः ।

षान्तप्रसङ्गात्सेटं परस्मैपदिनमाह—

८. ऋषी गतौ । ऋषति । प्रार्षति—'उपसर्गादृति' इति वृद्धिः । आनर्ष । आनृषतुः । आनृषुः । आनर्षिथ । आनृषिव—अभ्यासस्योरदत्वे हलादिः शेषे 'अत आदेः' इति दीर्घः । 'तस्मान्नुड् द्विहलः' इति नुट् । अर्षिता । अर्षिष्यति । ऋषतु । आर्षत्—

'आटश्च' इति वृद्धिः । ऋषेत् । ऋष्यात् । मा भवानर्षीत्—'नेटि' इति न वृद्धिः । अर्षिषिषति—परत्वाद् गुणे कृते द्वितीयस्यैकाचो द्विर्वचनम् 'न न्द्राः' इति रेफस्य न भवति । आर्षयति । आर्षिषत् । अर्षित्वा—'न क्त्वा सेट्' इत्यकित्त्वम् । ऋष्टः । ऋष्टवान्—ईदित्त्वादनिट्त्वम् । ऋषभः—'ऋषिवृषिभ्यां किद्' इत्यभच् प्रत्ययः । आर्षभ्यो वत्सः—'ऋषभोपानहोर्ञ्यः' इति विकृतिवाचिन ऋषभशब्दाद्विकृत्यर्थायां प्रकृतौ ञ्यः । अत्र ऋषभावस्था विकृतिः, वत्सावस्था प्रकृतिः । ऋषभतरः भारवहने मन्दशक्तिरनड्वान्—'वत्सोक्ष' इत्यादिना ष्टरच् । अत्र तनुत्वेन भारवहनाशक्तिरुच्यते । ऋक्षः—'स्नुव्रश्चिकृत्यृषिभ्यः कित्' इति क्सः ॥ ७ ॥

९. उदात्त उदात्तेत् ।

षान्तसेडीदित्प्रसङ्गात्तादृशमात्मनेपदिनमाह—

१०. जुषी प्रीतिसेवनयोः । जुषते । जुजुषे । जुजुषिषे । जोषिता । जोषिष्यते । जुषताम् । अजुषत । जुषेत । जोषिषीष्ट । अजोषिष्ट । अजोषिषाताम् । जुजुषिषते, जुजोषिषते । जुषित्वा, जोषित्वा —'रलो व्युपधात्' इति कित्त्वविकल्पः । जोजुष्यते । जोजोष्टि । जोषयति । अजूजुषत् । जुष्यः—'एतिस्तु' इत्यादिना क्यप् । जुष्टः । जुष्टवान्—ईदित्त्वादनिट्त्वम् । सजूः । सजुषौ । सजुषः—सम्पदादित्वात् क्विप् । क्विबन्तस्य सहशब्देन बहुव्रीहौ 'वोपसर्जनस्य' इति सभावः । 'ससजुषोरुः' इति पदान्ते रुत्वे 'र्वोरुपधायाः' इति दीर्घः । विद्यमानप्रीतिरित्यर्थः । यस्तु सहार्थे रूढः सजूःशब्दस्तस्य 'सजूः सहार्थे' इत्यूर्यादिपाठाद्गतित्वनिपातत्वयोः 'कुगतिप्रादयः' इति समासे ल्यपि सजूःकृत्य इति भवति । 'सजूरित्येकवचनान्तस्य पाठात् द्विवचनबहुवचनान्तयोर्न गतित्वं नापि निपातत्वम्' इति आत्रेयः । द्विवचनबहुवचनान्तयोः सहार्थे वृत्त्यभावादेव गतित्वं निपातत्वं च न भविष्यतीति यत्किञ्चिदेतत् । रूढत्वादेव अमोघान्यासे 'सजूःकृत्य सहकृत्येत्यर्थः' इत्युक्त्वा 'जुषतेर्ज्वरतेर्वा क्विपि समानस्य सभावः' इति व्युत्पत्तेरनियमो दर्शितः । जोषम् इति स्वरादिपाठाद् घञि मान्तत्वम्, स्वभावात्क्रियाविषयः ॥ ८ ॥

११. ओ विजी भयचलनयोः । प्रायेणायमुत्पूर्वः । उद्विजते । उद्विविजे । उद्विविजिषे । उद्विजिता । उद्विजिष्यते—'विज इट्' इति इडादेरञ्णितः प्रत्ययस्य ङित्त्वान्न गुणः । उद्विजताम् । उदविजत । उद्विजेत । उद्विजिषीष्ट । उदविजिष्ट । उद्विविजिषते । उद्विजित्वा—क्त्वासनो 'रलो व्युपधात्' इति कित्त्वस्य पाक्षिकत्वेऽप्यस्य 'विज इट्' इति ङित्त्वमिति न गुणः । उद्वेविज्यते । उद्वेविजीति, उद्वेवेक्ति । उद्वेजयति । उदवीविजत् । उद्विग्नः । उद्विग्नवान्—ईदित्त्वादनिट्त्वम् । चोः कुत्वम् । ओदित्त्वान्निष्ठानत्वम् । वेगितम् इति घञन्ताद् वेगशब्दादितचि । उद्वेजितम् इति ण्यन्तस्य निष्ठायामिटि । वेवेक्ति, वेविक्ते इति जुहोत्यादौ पृथग्भावे ॥ ९ ॥

१२. ओ लजी ओ लस्जी व्रीडे[1] । लजते । लेजे । लेजिषे । लजिता । लजिष्यते । लजताम् । अलजत । लजेत, लजिषीष्ट—लिङि । अलजिष्ट । लिलजिषते । लालज्यते । लालजीति, लालक्ति । लाजयति । अलीलजत् । लजित्वा । लग्नः । लग्नवान्—ईदित्त्वादनिट्त्वम् । ओदित्त्वान्निष्ठानत्वम् । 'अयं तवर्गपञ्चमादिः' इति चान्द्राः । तन्मतेन नग्ननग्निकाशब्दव्युत्पत्तौ तवर्गादिरयं स्वामिना पठितः, न तु स्वमतेन, यदाह—'ओनजी ओनस्जी व्रीडे इति चान्द्राः' इति । आत्रेयमैत्रेयस्वामिसम्मताकारशाकटायनादयः सर्वे यणादिमेवाहुः । 'नग्नशब्दस्तु पृषोदरादित्वाद्वर्णव्यत्ययेन' इति मैत्रेयः ॥ लज्जते । ललज्जे । लज्जिता । लज्जिष्यते । लज्जताम् । अलज्जत । लज्जेत । लज्जिषीष्ट । अलज्जिष्ट । अलज्जिषाताम् । अलज्जिषत । लिलज्जिषते । लालज्ज्यते । जश्त्वश्चुत्वे । लालज्जीति । लालक्ति—'स्कोः' इति सलोपः । लज्जयति । अललज्जत् । लज्जित्वा । लग्नः । लग्नवान्—निष्ठानत्वस्यासिद्धत्वात् 'स्कोः' इति सलोपः । लज्जा—'गुरोश्च हलः' इत्यकारः । लज्जितः इतीतचि । शप्यनयोरपाठः स्वरार्थः—शपि हि 'तास्यनुदात्तेत्' इत्यादिना लसार्वधातुकानुदात्तत्वे शपश्च पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तं स्यात्, शे तु प्रत्ययस्वरेण मध्योदात्तं भवति । लजति, लाजति, लञ्जति, लाञ्जति—इति चत्वारः शपि भर्त्सने ॥ १०-११ ॥

१३. जुषादय उदात्ता अनुदात्तेतः[2] ।

ओदिदुदात्तसोपधप्रसङ्गात्तादृशं परस्मैपदिनमाह—

१४. ओ व्रश्चू छेदने । वृश्चति—'ग्रहिज्या' इत्यादिना सम्प्रसारणे पूर्वरूपत्वे 'स्तोः श्चुना श्चुः' इति सकारस्य शकारः । वव्रश्च । वव्रश्चतुः । वव्रश्चिथ, वव्रष्ठ । वव्रश्चिव—संयोगान्तत्वेन लिटः कित्त्वाभावात् 'ग्रहिज्या' इत्यादिना सम्प्रसारणं न भवति । अभ्यासस्य 'लिट्यभ्यासस्य' इति सम्प्रसारणम् । तच्च तत्रोभयेषांग्रहणसामर्थ्यात् हलादिशेषात्पूर्वं प्रवर्त्तमानं सम्प्रसारणं 'न सम्प्रसारणे सम्प्रसारणम्' इति पूर्वस्य निषेधाद्रेफस्य भवति । कृते तु तस्मिन्नुरदत्वे हलादिशेषः । न चेदानीं न सम्प्रसारणपरत्वमिति वकारस्य सम्प्रसारणप्रसङ्गः; उरदत्त्वस्याङ्गत्वादङ्गाक्षिप्तप्रत्ययेन परनिमित्तत्वात् 'अचः परस्मिन्' इति स्थानिवत्त्वेन सम्प्रसारणपरत्वात् । ऊदित्त्वात्सर्वत्रेड्विकल्पः । क्रादिनियमः प्रतिषिद्धविषय इति थल्यपि विकल्प एव भवति । तत्रेडभावे झल्परत्वात् 'स्कोः' इति सलोपे व्रश्चादिना षत्वे ष्टुत्वम् । व्रष्टा, व्रश्चिता । व्रक्ष्यति । व्रश्चिष्यति—अनिटि सलोपषत्वयोः 'षढोः कः सि' इति कत्वम् । वृश्चतु । अवृश्चत् । वृश्चेत् । आशिषि—वृश्च्यात् । अव्रश्चीत् । अव्रश्चिष्टाम् । अव्रश्चिषुः । अव्रश्चीः । अव्रश्चिष्टम् । अव्रश्चिष्ट । अव्रश्चिषम्—'नेटि' इति न वृद्धिः । अनिटि तु अव्राक्षीत्—पूर्ववत्सलोपषत्वयोः कुत्वम् । अव्रा-

---

१. 'व्रीडायाम्' इति क. पुस्तके । २. 'उदात्तेतः' इति ख. पुस्तके भ्रष्टः पाठः ।

ष्टाम्—'झलो झलि' इति सिचो लोपे प्रत्ययलक्षणेन 'षढोः कः सि' इति न भवति, तस्य वर्णाश्रयत्वाद्, वर्णाश्रये च प्रत्ययलक्षणाभावात्। विव्रश्चिषति; विव्रक्षति। वरीवृश्च्यते—'रीगृत्वतः' इति रीक्। वाव्रष्टि। वाव्रष्टः—व्रश्चतीति श्तिपा निर्देशाद् ङिद्वचनेषु न सम्प्रसारणम्। व्रश्चयति। अववृश्चत्। व्रश्चित्वा—'जृव्रश्च्योः क्त्वि' इति नित्यमिट्। 'न क्त्वा सेट्' इत्यकित्त्वान्न सम्प्रसारणम्। वृक्णः, वृक्णवान्—'यस्य विभाषा' इत्यनिट्त्वम्। ओदित्त्वान्निष्ठानत्वम्। तस्य पूर्वत्रासिद्धत्वात् झल्परत्वेन 'स्कोः' इति सलोपः। 'चोः कुः' इति कुत्वं च। 'निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वक्तव्यः' इति व्रश्चादिषत्वे निष्ठादेशस्य सिद्धत्वात् झलपरत्वाभावान्न षत्वम्। व्रस्क्यः, व्रस्कः—ण्यद्घञौ। 'चजोः कु घिण्यतोः' इति कुत्वम्। अझलपरत्वात्सलोपो न भवति। वव्रश्च इत्यादौ वकारस्योपदेशसामर्थ्याद्रेफे वलि परतो लोपो न भवति। न च वृश्चतीत्यादौ सम्प्रसारणे वल्परत्वाभावाच्छ्रवणमुपदेशस्य प्रयोजनम्, तत्रापि सम्प्रसारणस्य क्ङित्प्रत्ययापेक्षत्वेन बहिरङ्गत्वेनासिद्धत्वादस्ति वलिलोपप्रसङ्ग इति। वृचः—'स्नुवृश्चिकृत्यषिभ्यः कित्' इति सप्रत्यये षत्वे कुत्वम्; 'स्कोः' इति सलोपश्च॥ १२॥

१५. व्यच व्याजीकरणे[1]। विचति-'ग्रहिज्या' इत्यादिना किति सम्प्रसारणम्। विव्याच। विविचतुः। विव्यचिथ। विविचथुः। विविच। विव्याच, विव्यच। विविचिव—अपितो लिटः कित्त्वात्सम्प्रसारणे द्विर्वचनम्। पिति तु 'लिट्यभ्यासस्योभयेषाम्' इत्यभ्यासस्य। 'व्यचेः कुटादित्वमनसि' इत्यञ्णित्प्रत्यये विधीयमानं ङित्त्वम्, 'अनसि' इति पर्युदासेन तत्सदृशे कृतीति हरदत्तादयः। तेन थल्युत्तमे णलि च णित्त्वाभावपक्षे नास्ति ङित्त्वं नापि कित्त्वम्, पिल्लिट्त्वादिति न प्रसारणम्। अन्ये तु–प्रसज्यप्रतिषेधमाश्रयन्ते, तेनात्रापि ङित्त्वमस्तीति सम्प्रसारणं मन्यन्ते। प्रसज्यप्रतिषेधाश्रयणे प्रमाणं मृग्यम्; वाक्यभेदप्रसङ्गात्। व्यचिता। व्यचिष्यति। विचतु। अविचत्। विचेत्। आशिषि—विच्यात्। अव्याचीत्। अव्याचिष्टाम्। अव्यचीत्। अव्यचिष्टाम्—'अतो हलादेः' इति वा वृद्धिः। विव्यचिषति—तासिस्यसिचां सनश्चाकृत्त्वान्न ङित्त्वमिति न सम्प्रसारणम्। प्रसज्यप्रतिषेधवादिनामत्रापि ङित्त्वात्सम्प्रसाणेन भाव्यम्। वेविच्यते। वाव्यचीति, वाव्यक्ति—श्तिपा निर्देशान्न सम्प्रसारणम्। व्याचयति। अविव्यचत्। विचित्वा—'न क्त्वा सेट्' इत्यकित्त्वेऽपि क्त्वः कृत्त्वाद्व्यचेः कुटादित्वमिति ङित्त्वेन सम्प्रसारणं गुणाभावश्च। विचितः। उरुव्यचाः—'गतिकारकपूर्वस्यापि' इत्यसुन्। 'अनसि' इति पर्युदासान्न ङित्त्वम्॥ १३॥

१६. उछि उञ्छे।

---

1. क्षीरस्वामी 'व्यच सम्भवे। व्यज व्याजीकरणे' इति सूत्रद्वयं पठति।

१७. उछी विवासे । उञ्छति । उच्छति इत्यादि भ्वादौ व्याख्यातौ ।।१४-१५।।

१८. ऋछ गतीन्द्रियप्रलयमूर्तिभावेषु[1] । ऋच्छति—'छे च' इति तुक् । तुकि यद्वक्तव्यं तत्सर्वं भ्वादावृच्छतौ द्रष्टव्यम् । आनर्च्छ । आनर्च्छतुः । आनर्च्छुः । आनर्च्छिथ । आनर्च्छिव—'ऋच्छत्यॄताम्' इति लिटि गुणः, 'तस्मान्नुड् द्विहलः' इत्यत्र 'द्विहल्ग्रहणमनेकहलुपलक्षणमिति नुडागमः' इति हरदत्तादयः । ऋच्छिता । ऋच्छिष्यति । ऋच्छतु । आर्च्छत् । ऋच्छेत् । आशिषि—ऋच्छ्यात् । मा भवानृच्छीत् । आर्च्छिष्टाम् । आर्च्छिषम् । ऋचिच्छिषति—अभ्यासे खयः शेषः । ऋच्छयति । मा भवानृचिच्छत्—'समो गम्यृच्छि' इति सम्पूर्वादकर्मकात्तङ् । समृच्छते । समानर्च्छे । समृच्छिता । समृच्छिष्यते । समृच्छताम् । समार्च्छत । समृच्छेत । आशिषि—समृच्छिषीष्ट । समार्च्छिष्ट । ऋच्छित्वा । ऋच्छितः । ऋच्छितवान् । ऋच्छाञ्चकार इति प्रयोगः 'गुरोश्च हलः' इत्यकारप्रत्ययान्तादृच्छशब्दात्कर्मणि द्वितीयायाम्, न त्वामि; यतः 'अनृच्छ' इत्याम्निषिध्यते ।। १६ ।।

१९. मिछ उत्क्लेशे । उत्क्लेशः पीडा । मिच्छति । मिमिच्छ । मिमिच्छतुः । मिच्छिता । मिच्छिष्यति । मिच्छतु । अमिच्छत् । मिच्छेत् । आशिषि—मिच्छ्यात् । अमिच्छीत्—अन्तरङ्गत्वापूर्वं तुगिति न लघूपधगुणः । वृद्धिस्तु 'नेटि' इति निषिध्यते । मिमिच्छिषति, मेमिच्छ्यते । मेमिच्छीति, मेमेष्टि । मिच्छयति । अमिमिच्छत् ।। १७ ।।

२०. जर्ज चर्च[2] झर्झ परिभाषणसन्तर्जनयोः[3] । जर्जति । जजर्ज ।। चर्चति । चर्चिका—संज्ञायां क्वुन्, ण्वुल्वा ।। झर्झति । जझर्झ । जर्जरः, झर्झरः—बाहुलकाद् अरन्नन्तौ । 'आद्यन्तावपि चान्तौ' इत्येके[4] । चर्चतिझर्झत्योः शपि पाठः स्वरार्थः इत्युक्तम् ।। १८-२० ।।

२१. त्वच संवरणे । त्वचति । तत्वाच । त्वचिता । त्वचिष्यति । त्वचतु । अत्वचत् । त्वचेत् । त्वच्यात् । अत्वाचीत्, अत्वचीत्—'अतो ह्लादेः' इति वा वृद्धिः । तित्वचिषति । तात्वच्यते । तात्वचीति, तात्वक्ति । त्वाचयति । अतित्वचत् । त्वचः—पचाद्यच् । त्वचं गृह्णाति त्वचयति—'सत्यापपाश' इत्यादिना णिच् । अत्र णिलोपस्य स्थानिवद्भावान्न वृद्धिः । अतत्वचत् इत्यत्राग्लोपित्वादभ्यासस्येत्त्वं न । त्वक्—'अन्येभ्योऽपि दृश्यन्ते' इति क्विप् । वाक्त्वचम्—'द्वन्द्वाच्चुदषहान्तात्' इति टच् ।। २१ ।।

२२. ऋच स्तुतौ । ऋचति इत्यादि ऋच्छतिवत् । अर्च्यम्—ण्यति 'यजयाचरुचप्रवचर्चश्च' इति कुत्वनिषेधः । अत एव कुत्वनिषेधाज्ज्ञापकादृदुपध-

१. 'गतिप्रलयेन्द्रिय०' ख. पुस्तके पाठः । 'इन्द्रियप्रलयमूर्तिभावयोः' इति क्षीरस्वामी ।
२. 'चर्च्छ' इति स्वामी । ३. परिभाषणे' इति स्वामी । ४. मैत्रेयादयः ।

घलक्षणः क्यन्न भवति। ऋक्—पूर्ववत्क्विप्। ऋचो व्याख्यानम् आर्चिकम्—'द्व्यजृद्ब्राह्मण' इत्यादिना भवव्याख्यानयोष्ठक्। ऋचोऽर्धम् अर्धर्चम्—'अर्धं नपुंसकम्' इत्येकदेशिनार्धशब्दस्य षष्ठीसमासः। 'ऋक्पूरब्धूः' इत्यादिनाऽकारः समासान्तः। 'अर्धर्चाः पुंसि च' इति पुंनपुंसकयोरयम्। अनृचो माणवको ज्ञेयः। 'बह्वृचश्चरणाख्यायाम्' इति विशेषे अकारप्रत्ययस्य स्मरणाद् अनृक्कं साम, बह्वृक्कं सूक्तम्—इत्यादौ शेषलक्षणः कबेव भवति। ऋक् च साम च ऋक्सामे—'अचतुर' इत्यादिना द्वन्द्वेऽच् समासान्तः। 'नस्तद्धिते' इति साम्नष्टिलोपः ॥२२॥

२३. उब्ज आर्जवे। अयमुपध्मानीयोपध इति केचित्। तथा च 'हयवरट्' इत्यत्र वार्त्तिकम्—'अयोगवाहानामट्सु णत्वं शर्षु जश्भावषत्वे' इति। अत्र भाष्यम्—'शर्षु चोपदेशः कर्तव्यः। किं प्रयोजनम्? जश्भावषत्वे। उब्जिरयमुपध्मानीयोपधः पठ्यते, तस्य जश्त्वे कृते उब्जिता, उब्जित्वा, उब्जितुम्, उब्जितव्यम् इत्येतद्रूपं यथा स्यात्' इति। 'शर्षु जश्भावः' इत्यस्यायमभिप्रायः—शर्षु उपदेशात् झल्त्वाज्जश्त्वमिति। पुनश्च भाष्यम्—'यद्युपध्मानीयोपधः पठ्यते, जश्त्वे उब्जिजिषतीत्युपध्मानीयादेरेव द्विर्वचनं प्राप्नोति' इति। जश्त्वस्यासिद्धत्वादुपध्मानीयादेर्द्विर्वचने पूर्वत्र जश्त्वेनोपध्मानीयस्य बत्वे उबिब्जिषतीति स्यादिति भावः। तथा च कैयटे अपि—"द्विर्वचने पूर्वत्र जश्त्वमसिद्धम्, अथापि 'पूर्वत्रासिद्धीयमद्विर्वचने' इति सिद्धं सर्वथोबिब्जिषति" इति। किं च अभ्युद्गः समुद्ग इति च न सिध्यतः। यद्यपि गमेरुपसर्गाड्डेऽपि सिद्ध्यतस्तथाप्यस्माद्घञि कृते उपध्मानीयस्य च जश्त्वे अभ्युब्ज समुब्जः इत्यपि स्याताम्, तदर्थम् 'उपध्मानीयस्य च' इति वार्त्तिकेन कवर्गे परत उपध्मानीयस्य सकारो विधेयः स्यात्। तस्मिन् हि जश्त्वेन दत्वं भविष्यति। तस्मादयं दोपधः पठितव्यः। उक्तं च भाष्ये "यद्ययं दोपधः, का रूपसिद्धिः? उब्जित्वा उब्जितुम्, उब्जितव्यम् इति। असिद्धे भ उब्जेः। इदमस्ति 'स्तोः श्चुना श्चुः' इति, ततो वक्ष्यामि 'भ उब्जेः', उब्जे श्चुना सन्निपाते भो भवति" इति। ततश्च 'न न्द्राः' इति निषेधे भत्वस्यासिद्धत्वाद्दकारवर्जस्य द्विर्वचने पश्चाद्भत्वे उब्जिजिषतीतीष्टसिद्धिः। न चास्ति 'पूर्वत्रासिद्धीयमद्विर्वचने' इति; 'नन्द्रा' इत्यस्य द्विर्वचननिषेधरूपत्वात्। न चास्त्यभ्युद्गः समुद्ग इत्यत्र भत्वस्य प्रसङ्गः; तस्य कुत्वे पूर्वत्रासिद्धत्वात्, कृते चास्मिन् चवर्गयोगाभावात्। अपरे तु बकारोपधं पठन्तः 'नन्द्राः' इत्यत्र बकारस्यापि प्रतिषेधमुपसङ्ख्यक्षते, तेषामभ्युद्ग इत्यादौ दत्वमपि वक्तव्यम्। उब्जति। उब्जाञ्चकार। उब्जिता। उब्जिष्यति। उब्जतु। औब्जत्। उब्जेत्। आशिषि—उब्ज्यात्। औब्जीत्। उब्जयति। मा भवानुब्जिजत्। न्युब्जिता शेरतेऽस्मिन्निति न्युब्जो रोगविशेषः—'भुजन्युब्जौ पाण्युपतापयोः' इति घञि कुत्वाभावो निपात्यते। ओजः—'उब्जेर्बलोपश्च' इत्यसुनि बलोपो गुणश्च निपात्यते। ओजायते—'कर्त्तुः क्यङ् सलोपश्च' इति

क्यङ्सलोपौ। अत्रानुवृत्तस्य वाग्रहणस्य व्यवस्थितविभाषात्वान्नित्योऽत्र सलोपः। ओजसाकृतम्—'ओजस्सहोम्भस्तमसः तृतीयायाः' इत्यलुक्॥ २३॥

२४. उदृझ उत्सर्गे। अयमपि दोपधः। जश्त्वं तु लाक्षणिकम्। उज्झति इत्यादि पूर्ववत्। उद्ध्यो नदः—'भिद्योद्ध्यौ नदे' इति कर्तरि क्यपि झकारस्य दकारो निपात्यते॥ २४॥

२५. लुभ विमोहने। विमोहनमाकुलीकरणम्। लुभति। लुलोभ। लोभिता, लोब्धा—'तीषसह' इतीड्विकल्पः। लोभिष्यति। लुभतु। अलुभत्। लुभेत्। लुभ्यात्। अलोभीत्। लुलुभिषति, लुलोभिषति। लुभित्वा, लोभित्वा—'रलो व्युपधात्' इति कित्त्वविकल्पः। लोलुभ्यते। लोलोब्धि। लोभयति। अलूलुभत्। विलुभिताः केशाः—'लुभो विमोहन' इति क्त्वानिष्ठयोर्नित्यमिट्। गार्ध्ये तु लुभ्यति इति गतम्॥ २५॥

२६. रिफ[1] कत्थनयुद्धनिन्दाहिंसादानेषु[2]। रिफति। रिरेफ इत्यादि लुभिवत्। क्त्वायां 'रलो व्युपधात्' इति न कित्त्वविकल्पः। 'नोपधात्थफान्ताद्वा' इत्यत्र नोपधग्रहणसामर्थ्यात्। यदि हि स्यात्किं नोपधग्रहणेन! न च ऋफ ऋम्फ हिंसायामित्यृकारोपधो व्यावर्त्यः, त्रैशब्द्यं हि न साध्यम्—रिफित्वा, रिम्फित्वा, अर्फित्वा—इति; एतच्च सत्यसति नोपधग्रहणे भवत्येव। सति तावन्नोपधस्य 'न क्त्वा सेड्' इति प्रतिषेधे सति अर्फित्वा इति भवति। नोपधस्य त्वस्मिन् विकल्पे रिफित्वा रिम्फित्वा इति। असत्यपि नोपधस्य ग्रहणे, सर्वत्रास्मिन्विकल्पे प्रवृत्तेऽपीदमेव रूपत्रयं भवति। 'रिह इति द्रमिडाः' इति स्वामी। अनिट्कारिकासु वामनश्च—'रिहिलुही धातुषु न पठ्येते, कैश्चिदभ्युपगम्येते' इति। अत्र न्यासे 'कैश्चिदित्यापिशलिप्रभृतिभिः' इति। तस्मात्तावपि स्त एव। प्रयुज्यते च 'शिशुं न विप्रा मतिभी रिहन्ति' इति॥ २६॥

२७. तृप तृम्फ तृप्तौ। 'आद्यः प्रथमान्तः' इति वामनः। यदाह—'तृप्यतिदृप्यती सृपिस्' इत्यनिट्कारिकायां श्यना निर्देशस्य व्यावर्त्यं दर्शयन् 'तुदादिषु यौ तृपिदृपी द्वावुदात्तौ' इति। आत्रेयमैत्रेयादयस्तु द्वितीयान्तं पठित्वा 'प्रथमान्तं वामनः पठति' इत्याहुः। तृपति। ततर्प। तर्पिता। तर्पिष्यति। तृपतु। अतृपत्। तृपेत्। तृप्यात्। अतर्पीत्—'स्पृशमृशकृष' इति सिचो विकल्पनमङ्पवाद इति पौषादिकस्यैव। तितर्पिषति। तरीतृप्यते। तर्तर्प्ति। तर्पयति। अतीतृपत्, अततर्पत्—उर्ऋद्वा। तर्पित्वा। तृपितः। तृप्त्वा। तृप्तः—इति तृप्यतेः॥ तृम्फति—शस्य ङित्वात् 'अनिदिताम्' इति नलोपे 'शे तृम्फादीनाम्' इति नुमागमः। 'येऽत्र सानुषङ्गाः पठ्यन्ते ते तृफादयः' इति वृत्तिः। प्रकारवाच्यादिशब्दः। 'प्रकारश्च

---

१. 'ऋह' इति क्षीरस्वामी। २. क्षीरस्वामी न पठति।

सादृश्यम्, तच्चं नकारानुषक्ततया' इति हरदत्तः। ततृम्फ। तृम्फिता। तृम्फिष्यति। तृम्फतु। अतृम्फत्। तृम्फेत्। आशिषि तृम्फ्यात्—यासुटः कित्त्वान्नस्य लोपः। अतृम्फीत्। तितृम्फिषति। तरीतृफ्यते—'रीगृत्वतः' इति रीक्। तरीतृम्फीति। तृम्फयति। अततृम्फत्। तृफित्वा, तृम्फित्वा। तृफितः—क्त्वायां 'नोपधात्थफान्ताद्वा' इति कित्त्वविकल्पनात्पक्षे नलोपः॥ २७–२८॥

२८. तुप तुम्प तुफ तुम्फ हिंसायाम्। तुपति। तुम्पति। तुफति। तुम्फति—इत्यादि पूर्ववत्। एषां भूवादौ पाठः स्वरार्थं इति तत्रैवोक्तम्॥ २९–३२॥

२९. दृफ दृम्फ उत्क्लेशे। 'प्रथमः प्रथमान्तः' इति वामनः। तत्तूप्यतावुपपादितम्। अन्ये–'द्वितीयान्तः' इति। दृफति। दृम्फति—इत्यादि॥ ३३–३४॥

३०. ऋफ ऋम्फ हिंसायाम्[1]। ऋफति। आनर्फ। आनृफतुः॥ ऋम्फति। ऋम्फाञ्चकार। अर्पिफिषति—सनि गुणे 'न न्द्राः' इति रेफवर्जितस्य द्विर्वचनम्। ऋम्पिफिषति—इत्यत्राप्यनुस्वारपरसवर्णयोरसिद्धत्वान्नकारवर्जितस्य द्विर्वचनम्। अर्फित्वा, ऋम्फित्वा—इत्यादि पूर्ववत्॥ ३५–३६॥

३१. गुफ गुम्फ ग्रन्थे। गुफति। जुगोफ। गुम्फति। जुगुम्फ—इत्यादि॥३७–३८॥

३२. उभ उम्भ पूरणे। उभति। उवोभ। ऊभतुः—'अभ्यासस्यासवर्णे' इति गुणविषये उवङ्। अन्यत्र सवर्णदीर्घः। उम्भति। उम्भाञ्चकार इत्यादि। उभौ—इगुपधात्कः। नित्यं द्विवचनान्तः। सर्वादित्वात्सर्वनामत्वम्। तत्कार्याणि 'सर्वनाम्नस्तृतीया च' इत्यादीनि यथासम्भवं नेयानि। उभाववयवावस्य उभयो मणिः—'सङ्ख्याया अवयवे तयप्' इति तयपि तस्य 'उभादुदात्तो नित्यम्' इत्ययजादेश उदात्तः। उभाञ्जलि, उभयाञ्जलि। उभाहस्ति, उभयाहस्ति। उभापाणि, उभयापाणि। उभाबाहु, उभयाबाहु—'द्विदण्ड्यादिभ्यश्च' इति बहुव्रीहाविच्प्रत्ययान्ता निपात्यन्ते। उभाबाहु, उभयाबाहु—इत्यत्रैव निर्देशादिचो लोपः। 'प्रत्ययलक्षणेनेजन्तत्वादव्ययीभावत्वादव्ययत्वम्' इति न्यासे। "द्विदण्ड्यादिगणपाठादेवैषां साधुत्वे सिद्धे 'द्विदण्ड्यादिभ्यश्च' इति सूत्रमिजन्तत्वविज्ञानार्थमिति, तस्य च प्रयोजनमव्ययीभावसंज्ञा" इति हरदत्तादयः। तिष्ठद्गुप्रभृतिषु इजिति पठ्यते, एते च समुदायनिपातनात्तदर्थविशेषे एवावतिष्ठन्ते, तथा च वृत्तिः—द्विदण्डि प्रहरति, द्विमुसलि प्रहरति। एवमुभाञ्जलीत्यादीनामपि प्रहारोऽन्यपदार्थः। केनोभ्यते इति कुम्भः—कर्मणि घञ्। अयस्कुम्भः—'अतः कृकमिकंसकुम्भ' इति विसर्जनीयस्य सः। अत एव 'कुम्भ' इति निर्देशात्कशब्दाकारस्य लोपः, पररूपं वा। कुम्भी—गौरादित्वात् 'जातेरस्त्री' इति ङीष्। अयस्कुम्भी—लिङ्गविशिष्टपरिभाषया सत्वम्। कुम्भीव नासिकाऽस्य कुम्भीनसः—'अत्र् नासिकायाः संज्ञायाम्' इत्यादिना नासिकाया नसादेशोऽच् प्रत्ययश्च॥ ३९–४०॥

---

१. सूत्रमिदं क्षीरस्वामी 'तृप...' ( २७ सू० ) इत्यतः पूर्वमेव पठति।

३३. शुभ शुन्भ शोभार्थे। शुभति। शुम्भति—इत्यादि॥ ४१–४२॥

३४. दभी ग्रन्थे। दभति इत्यादि। ईदित्वान्निष्ठायामनिट्त्वम्—दब्धः। अयमनिदित् चुरादौ॥ ४३॥

३५. चृती हिंसाग्रन्थनयोः। चृतति। चचर्त। चचृततुः। चचर्तिथ। चर्तिता। चर्तिष्यति, चर्त्स्यति। चृततु। अचृतत्। चृतेत्। चृत्यात्। अचर्तीत्। चरीचृच्यते। चरीचर्ति। चरीचृतः। चर्तयति। अचीचृतत्, अचचर्तत्—उऋद्वा। चृतः। चृतवान्—'यस्य विभाषा' इत्यनिट्त्वे सिद्धेऽस्येदित्त्वेन तस्यानित्यत्वज्ञापनाद्धावित इति सिद्ध इति मैत्रेयः। स्वामिकाश्यपौ तु 'इदित्त्वं चरीचृत्तः चरीचृत्तवान् इति यङ्लुगन्तान्निष्ठायामनिट्त्वार्थम्' इति॥ ४४॥

३६. विध विधाने। विधति। विवेध। वेधिता। वेधिष्यति। विधतु। अविधत्। विधेत्। विध्यात्। अवेधीत्। विविधिषति, विवेधिषति। विधित्वा, वेधित्वा। वेविध्यते। वेवेद्धि। वेधयति। अवीविधत्—'रलो व्युपधात्' इति क्त्वासनोः कित्त्वविकल्पः। विधिशब्दमस्मान्मैत्रेय आह। समर्थसूत्रे भाष्यम्—'विधिरिति कोऽयं शब्दः? विपूर्वाद्धाञः कर्मसाधन इकारे' इति। अत्र कैयटे—'विध विधाने इत्यस्यौणादिकेन्प्रत्ययान्तस्य निवृत्त्यर्थं विपूर्वाद्धाञः' इत्युक्तम्। स्वरे चानयोर्भेदः, इन्प्रत्ययान्तस्याद्युदात्तत्वात्, किप्रत्ययान्तस्यान्तोदात्तत्वात्, तस्यैव प्रयोगार्थमेवमुक्तमिति॥ ४५॥

३७. जुड गतौ। तवर्गपञ्चमान्तमेके[1] पठन्ति। दृश्यते च—'वृष्टिं ये विश्वे मरुतो जुनन्ति' इति। जुडति। जुजोड। जोडिता। जोडिष्यति। जुडतु। अजुडत्। जुडेत्। जुड्यात्। अजोडीत्। जुजुडिषति, जुजोडिषति। जोडित्वा, जुडित्वा। जोजुड्यते। जोजुडीति, जोजोट्टि। जोडयति। अजूजुडत्। जुडितः। अयं बन्धने ङित्त्वार्थं कुटादौ पठिष्यते। प्रेरणे चुरादौ॥ ४६॥

३८. मृड सुखने। मृडति। ममर्ड। मर्डिता। मर्डिष्यति। मृडतु। अमृडत्। मृडेत्। मृड्यात्। अमर्डीत्। मिमर्डिषति। मरीमृड्यते। मरीमर्ट्टि। मर्डयति। अमीमृडत्, अममर्डत्—उऋद्वा। मृडित्वा। मृडितः—'मृडमृध' इति क्त्वायाः कित्त्वम्। मृडः—इगुपधलक्षणः कः। मृडानी—'इन्द्रवरुण' इति ङीषानुकौ। मृडीकं सुखम्—मृडेः कीकन्। अयं क्र्यादौ च॥ ४७॥

३९. पृड च। पृडति इत्यादि मृडवत्॥ ४८॥

४०. पृण प्रीणने। पृणति। पपर्ण इत्यादि। लोकम्पृणः—मूलविभुजादित्वात्कः। 'लोकस्य पृणे' इति मुम्।

वृण इति दन्त्योष्ठ्यादिरप्यत्र पठितव्यः। तथा च भाष्यम्—'धात्वन्तरं पृणिवृणी' इति। 'धात्वन्तरम्' इति 'तौदादिकावित्यर्थः' इति कैयटे॥ ४९॥

१. क्षीरस्वामिप्रभृतयः।

४१. मृण हिंसायाम् । मृणति । ममर्ण । मर्णिता इत्यादि । मृणालम्—बाहुलकादालच्, गुणाभावश्च ॥ ५० ॥

४२. तुण कौटिल्ये । तुणति । तुतोण । तोणिता इत्यादि । तूण पूरणे इति दीर्घोपध आकुस्मीयः ॥ ५१ ॥

४३. पुण कर्मणि शुभे[1] । पुणति इत्यादि । निपुणः—इगुपधलक्षणः कः । पितरि निपुणः—'साधुनिपुणाभ्याम्' इति तद्युक्तात्सप्तमी । अप्रतीत्यपनीय 'अप्रत्यादियोग इति वक्तव्यम्' इत्युक्तम् । प्रत्यादयश्च प्रतिपर्यनवः इति पाणिनिनोक्ताः[2] । तेन तैर्योगे द्वितीयैव—पितरं प्रति निपुण इत्यादि । आचारनिपुणः—'पूर्वसदृश' इत्यादिना तृतीयासमासः । नैपुण्यम्—ब्राह्मणादित्वात् ष्यञ् । षित्त्वान् ङीप् । नैपुणी—'हलस्तद्धितस्य' इति यलोपः । नैपुणम्—युवादित्वादण् । अनिपुणः—तत्पुरुषो बहुव्रीहिर्वा । तस्येदम् आनैपुणम्, अनैपुणम्—'नञः शुचि' इत्यादिना-पूर्वपदस्य वा वृद्धिः, उत्तरपदस्य तु नित्या ॥ ५२ ॥

४४. मुण प्रतिज्ञाने ।

४५. कुण शब्दोपकरणयोः । मुणति ॥ कुणति इत्यादि । कोणः वीणादिवादनम्-'हलश्च' इति घञ् । आमन्त्रणे अयं कथादिः दीर्घोपधः । संकोचने आकुस्मीयः ॥ ५३–५४ ॥

४६. शुन गतौ । शुनति इत्यादि । शुनकः—औणादिकः क्वुन् ॥ ५५ ॥

४७. द्रुण हिंसागतिकौटिल्येषु । द्रुणति । द्रुणः खर्जूरः—इगुपधलक्षणः कः । द्रुणी कच्छपी—गौरादित्वान् ङीष् । द्रोणः—पचाद्यच् । द्रोणी—पूर्ववन्ङीष् । द्रोणस्य गोत्रमपत्यं द्रौणिः, द्रौणायनः—'द्रोणपर्वतजीवन्तादन्यतरस्याम्' इति फगिञौ । द्रोणं पचतीति द्रौणी, द्रौणिकी—'तत्पचतीति च द्रोणादञ् च' इत्यञ्ठञौ । द्विद्रोणेन धान्यं क्रीणाति—'प्रकृत्यादिभ्य उपसङ्ख्यानम्' इति तृतीया । 'अत्रापि द्वितीया प्राप्नोति' इति कैयटे । द्वयोर्द्रोणयोः समाहारो द्विद्रोणम्—पात्रादित्वात् स्त्रीत्वाभावः ॥ ५६ ॥

४८. घुण घूर्ण भ्रमणे । घुणति ॥ घूर्णति इत्यादि । घोणते । घूर्णते इति शपि ॥ ५७–५८ ॥

४९. पुर ऐश्वर्यदीप्त्योः । सुरति । सुषोर । सुषुरतुः—'आदेशप्रत्यययोः' इति प्रकृतेः षत्वम् । सोरिता । सोरिष्यति । सुरतु । असुरत् । सुरेत् । सूर्यात्—'हलि च' इति दीर्घः । असोरीत् । सुसुरिषति—'स्तौतिण्योरेव' इत्यषत्वम् । सोसूर्यते । सोषोर्त्ति । सोरयति । असूषुरत् । सुरन्तीति सुराः—इगुपधलक्षणः कः ॥ ५९ ॥

५०. कुर शब्दे । कुरति इत्यादि । कूर्यात् इत्यत्र 'हलि च' इति दीर्घस्य 'न भकुर्छुराम्' इति न निषेधः; करोतेस्तत्र ग्रहणमिति व्याख्यातृभिरभिधानात् ॥ ६० ॥

---

१. 'शब्दे च' इति क्षीरस्वामी । २. 'लक्षणेत्थम्' (१।४।९०) इति सूत्रे इति शेषः ।

५१. खुर च्छेदने[1]। 'खण्डने च' इति मैत्रेयः। खुरति। खुरः—इगुपधलक्षणः कः। कल्याणखुरा—'स्वाङ्गाच्चोपसर्जनात्' इति ङीषः 'न क्रोडादिबह्वचः' इति निषेधः। खुरणः—'खुरखराभ्यां नस्वक्तव्यः' इति नासिकाया नसभावः। 'अञ् नासिकायाः संज्ञायाम्' इत्येव सिद्धे वार्त्तिकमचो निवृत्त्यर्थम्। पक्षेऽच् प्रत्ययोऽपीष्यते' इति वृत्तिः। तेन खुरणसः इत्यपि भवति ॥ ६१ ॥

५२. क्षुर परिवेष्टने। क्षुरति। क्षुरः—पूर्ववत्कः। क्षुरी—गौरादित्वान्ङीष् ॥६२॥

५३. क्षुर विलेखने[2]। क्षुरति। क्षुरम्—पूर्ववत्कः ॥ ६३ ॥

५४. घुर भीमार्थशब्दयोः। घुरति। घोरः—पचाद्यच्। 'अकर्तरि च कारके' इति घञ् वा। घुर्घुरः—पूर्ववत्कः। 'कृत्रादीनां के द्वे भवतः' इति द्वित्वम्। पृषोदरादित्वान्न हलादिः शेषः ॥ ६४ ॥

५५. पुर अग्रगमने। पुरति। पुरम्—पूर्ववत्कः। पुरी—गौरादित्वान् ङीष् ॥६५॥

५६. वृहू उद्यमने। दन्त्योष्ठ्यादिरयम्। तथा हि 'मूलमस्यावर्हिः' 'सक्थ्या वृहत्', 'मा मे बलं विवृहः' इति प्रयुज्यते। अन्ये तु बकारादिं पठन्ति। वृहति। ववर्ह। ववृहतुः। ववर्हिथ। ववर्ढ—ऊदित्वादिड्विकल्पः। झलि—'हो ढः', 'झषस्तथोर्धोऽधः', 'ष्टुना ष्टुः', 'ढो ढे लोपः'। वर्हिता, वर्ढा। वर्हिष्यति, वर्क्ष्यति—'षढोः कस्सि' इति षत्वम्। वृहतु। अवृहत्। वृह्यात्। अवर्हीत्। अवर्हिष्टाम्। अनिट्पक्षे 'शल इगुपधाद्' इति क्सः—अवृक्षत्। अवृक्षताम्। विवर्हिषति, विवृक्षति—'हलन्ताच्च' इति कित्त्वान्न गुणः। वरीवृह्यते। वरीवृहीति, वरीवर्ढि इत्यादि। वर्हयति। अवीवृहत्, अववर्हत्—उऋद्वा। वर्हित्वा, वृढ्वा—'न क्त्वा सेट्' इत्यकित्त्वमिटि। वृढः। वृढवान्—'यस्य विभाषा' इत्यनिट्। 'ढ्रलोपे' इति दीर्घः पूर्वाण इत्यत्र न भवति। वर्हति बृंहति इति वृद्धौ शपि। वर्हते इति तत्रैव प्राधान्ये। तत्र एते ओष्ठ्यादयः ॥ ६६ ॥

५७. तृहू स्तृहू[3] तृन्हू हिंसार्थाः[4]। तृहति। ततर्ह ॥ स्तृहति। तस्तर्ह—'शर्पूर्वाः खयः'। तर्हिता, तर्ढा। स्तर्हिता, स्तर्ढा इत्यादि वृहतिवत्। तरीष्टृह्यते। तरीष्टर्ढि—'आदेशप्रत्यययोः' इति प्रकृतेः षत्वम्। तिस्तर्हिषति, तिस्तृक्षति इत्यत्र तु 'स्तौतिण्योरेव' इति नियमान्न षत्वम्। तृहति—शस्य ङित्त्वात् 'अनिदिताम्' इति नलोपः। ततृंह। ततृहतुः। ततृंहिथ, ततृण्ढ—धत्वढत्वष्टुत्वढलोपेषु नकारस्य 'नश्चापदान्तस्य' इत्यनुस्वारे परसवर्णो णकारः। तृंहिता, तृण्ढा। तृंहिष्यति, तृङ्क्ष्यति। तृहतु। अतृहत्। तृहेत्। तृह्यात्—यासुटः कित्त्वान्नलोपः। अतृंहीत्।

१. 'क्षुर खुर विलेखने' इति क्षीरस्वामी।
२. क्षीरस्वामी सूत्रमिदं न पठति।
३. 'स्तृहू स्तृन्हू' इति क्षीरस्वामी।
४. 'हिंसायाम्' इति क्षीरस्वामी।

अतृंहिष्टाम्—अनिट्पक्षेऽप्यनिगुपधत्वात् क्सो नास्तीति सिचि ढत्वकत्वयोः सिचः षत्वम्, नकारस्यानुस्वारपरसवर्णौ, वदव्रजेति वृद्धिः—अताङ्क्षीत्। झलादौ सिज्लोपे पूर्ववद् ढत्वधत्वष्टुत्वढलोपानुस्वारपरसवर्णवृद्धिषु—अताण्ढाम् इत्यादि। तितृंहि-षति, तितृक्षति—अनिट्पक्षे 'हलन्ताद्' इत्यत्र हल्ग्रहणस्य जातिवाचकत्वात् सनः कित्त्वान्नलोपः। तरीतृह्यते। तरीतृंहीति, तरीतृण्ढि इत्यादि। तृंहयति। अततृंहत। तृंहित्वा, तृढ्वा—इटि 'न क्त्वा सेड्' इत्यकित्त्वम्। तृढः। तृढवान्—अत्र सानुषङ्गं मूर्धन्यादि चतुर्थमपि 'ष्टृहु' इति धातुं केचित्पठन्ति। आत्रेयमैत्रेया-दिभिरयं न पठ्यते। तृहि हिंसार्थो रुधादौ ॥ ६७–६९ ॥

५८. इष इच्छायाम्। [1]केचिदुदितं पठन्ति। तस्य च प्रयोजनमिड्विकल्पे छविधौ चोदितोऽनुवाद इति तद्विधानेऽपि तथा पठन्तो 'दैवादिकक्रैयादिकयोस्तौ न भवतः' इत्याहुः। न च क्त्वायामिड्विकल्पः प्रयोजनम्, 'तीषसह' इति तादा-विड्विकल्पनात्। ये त्वनुदितं पठन्ति ते "'तीषसह' इत्यत्राकारमात्रविकरणेन सहिना साहचर्य्यात्तादृशस्तौदादिक एव ग्रहीष्यते" इतीतरयोरग्रहणमाहुः। तथा "'इषुगमियमां छः' इत्यत्रापि 'क्सस्याचि' इत्यतोऽचीत्यनुवर्तते, तच्च 'ष्ठिवुक्लमु' इत्यतोऽनुवृत्तेन शितीत्यनेन विशेष्यते इति विधीयमानं छत्वमपि तौदादिकस्यैव सम्भवति, नेतरयोः" इत्याहुः। इच्छति, इच्छेत्—इच्छार्थेभ्यो विभाषा वर्तमाने' इति लिङ्लटौ। इयेष। ईषतुः। पिति तु परत्वाद् गुणे कृते 'अभ्यासस्यासवर्णे' इतीयङ्। अन्यत्र सवर्णदीर्घः। एषिता, एष्टा। एषिष्यति। इच्छतु। ऐच्छत्। इच्छेत्। इष्यात्। ऐषीत्। इच्छा—'इच्छा' इति शप्रत्ययो यगभावश्च निपात्यते। इष्टिः इति बाहुलकात् क्तिन्। 'तितुत्र' इतीड्निषेधः। एषणा—करणे ल्युट्। इच्छुः—'विन्दुरिच्छुः' इत्युप्रत्ययान्तो निपात्यते। एषित्वा, इष्ट्वा—'तीषसह' इतीड्विकल्पः, 'न क्त्वा सेट्' इत्यकित्त्वम्। इष्टः, इष्टवान्—'यस्य विभाषा' इत्यनिट्त्वम्। इष्यति इति श्यनि गतम् ॥ ७० ॥

५९. मिष स्पर्द्धायाम्। मिषति। मिमेष। मेषिता। मेषिष्यति। मिषतु। अमिषत्। मिषेत्। मिष्यात्। अमेषीत्। अमेषिष्टाम्। मिमिषिषति, मिमेषिषति। मिषित्वा, मेषित्वा—क्त्वासनोः कित्त्वविकल्पः। मेमिष्यते। मेमेष्टि। मेषयति। अमीमिषत्। मेषः—पचाद्यच्। मेषी—जातिलक्षणो ङीष्। निमेषः—घञ् ॥७१॥

६०. किल श्वैत्ये। श्वैत्यक्रीडनयोरिति मैत्रेयः[2]। किलति। चिकेल इत्यादि मिषतिवत्। किल्बिषम्—'किलेर्बुक्च' इति टिषच् बुक्चागमः ॥७२॥

६१. तिल स्नेहने। तिलति। तितेल इत्यादि। तेलति इति गतौ शपि ॥७३॥

६२. चिल निवसने। चिलति इत्यादि। चेलति इति शपि ॥ ७४ ॥

---

१. क्षीरस्वामिप्रभृतयः। २. क्षीरस्वाम्यपि।

६३. चल विलसने[1] । चलति इत्यादि । चलयति इति कम्पने घटादित्वात् । ज्वलादिपठितस्यापीह पाठे प्रयोजनमुञ्छतीत्यादिवत्स्वरः । तत्र पाठः कर्त्तरि णविकल्पार्थः—चलः, चाल इति । आत्रेयस्तु तिलादित्रयमिह न पठति ॥ ७५ ॥

६४. इल स्वप्नक्षेपणयोः । इलति । इयेल । ईलतुः । गुणविषये 'अभ्यासस्यासवर्णे' इतीयङ् । एलिता । एलिष्यति । इलतु । ऐलत् । इलेत् । इल्यात् । ऐलीत् । ऐलिष्टाम् । ऐलिष्यत् । एलिलिषति—गुणे कृते द्वितीयस्यैकाचो द्विर्वचनम् । इला पृथिवी—इगुपधलक्षणः कः, टाप् । इल प्रेरणे चुरादौ ॥ ७६ ॥

६५. विल संवरणे । दन्त्योष्ठ्यादिः । विलति । आविलम् । वेलति इति वेलेः शपि गतम् । कल विल क्षेपे इति चुरादौ ॥ ७७ ॥

६६. बिल भेदने । बिलति । बिलम्—कः । बेलति इति शपि । 'अयं चुरादौ च' च' इति आत्रेयः । मैत्रेयस्त्वत्रैव पपाठ, नान्यत्र । ओष्ठ्यादिरयम् ॥७८॥

६७. णिल गहने । प्रणिलति—'उपसर्गादसमासेऽपि' इति णत्वम् । निनेल । नेलिता इत्यादि ॥ ७९ ॥

६८. हिल भावकरणे[2] । भावकरणमभिप्रायसूचनम् । हिलति । जिहेल इत्यादि ॥ ८० ॥

६९. शिल षिल उञ्छे । आद्यस्तालव्यादिः, इतरो मूर्धन्यादिः । शिलति ॥ सिलति । सिषेल—'आदेशप्रत्यययोः' इति प्रकृतेः षत्वम् । सेलति इति 'शपि' इति आत्रेयः ॥ ८१ ॥

७० मिल श्लेषणे[3] । मिलति इत्यादि । मिल इति स्वरितेदग्रे भविष्यति । तस्येह पाठे प्रयोजनं कर्त्रभिप्रायेऽपि क्रियाफले परस्मैपदम् ॥ ८२ ॥

७१. लिख अक्षरविन्यासे । लिखति । लिलेख । लेखिता । लेखिष्यति । लिखतु । अलिखत् । लिखेत् । आशिषि—लिख्यात् । अलेखीत् । लिलिखिषति, लिलेखिषति । लिखित्वा, लेखित्वा । लिखितः, लिखितवान् । लेखनः । लेखनी—टित्त्वान् ङीप् । रेखा, लेखा—भिदादिपाठादङि गुणे लकारस्य वा रेफादेशः । हृल्लेखः—कर्मण्यण्, 'हृदयस्य हृल्लेख' इति हृद्भावः । 'लेख' इत्यणन्तस्य ग्रहणाद्धञन्ते लेखे उत्तरपदे हृदयस्य हृद्भावे सिद्धे पुनर्लेखोपादानम् 'उत्तरपदाधिकारे प्रत्ययग्रहणपरिभाषा न व्याप्रियते' इति ज्ञापनार्थम्, न तु घञन्तस्यापि ग्रहणार्थमिति प्रागप्युक्तम् । दन्तलेखकः—'नित्यं क्रीडाजीविकयोः' इति समासः । अत्र केचित्—'गाङ् कुटादिभ्यः' इत्यत्र कुटस्यादिः, कुटआदिर्येषामित्येकदेशवृत्त्या बहुव्रीहितत्पुरुषयोर्द्वयोरप्याश्रयणात् 'लिखितुं विश्वसृजोऽपि शक्तिहानिः', 'स्वयमेव

१. विकसने' इति मैत्रेयः । २. 'हावकरणे' इति क्षीरस्वामिमैत्रेयौ ।
३. क्षीरस्वामी दुर्गमतेनेदं सूत्रं पठति ।

लिखिष्यते' इति समर्थयन्ते, तेषां लेखिता इत्यादौ सर्वत्राञ्णित्प्रत्यये गुणाभावात् लिखिता इत्यादि स्यात् । तच्च 'रलो व्युपधात्' 'ईश्वरेतोसुन्' इत्यत्र वृत्तौ लेखित्वा, लिखित्वा; लिलेखिषति, लिलिखिषति; विलेखितुम् इति दर्शनाद् 'आलेखने' इति निर्देशाच्च नार्हम् । हरदत्तश्च तत्पुरुषपक्षस्य दूषणत्वेन क्त्वासनोर्गुणदर्शनम् 'आलेखने' इति निर्देशं चाह । वर्द्धमानोऽपि 'आलेखने इति निर्देशात्तत्पुरुषपक्षो दुष्टः' इत्याह । अत एव वृत्त्यादिविरोधात् 'संज्ञापूर्वको विधिरनित्यः' इति लिखिता इत्यादौ सर्वत्र कैश्चिद्गुणाभावस्य कथनमयुक्तम् । किञ्च लिखितुम्, 'स्वयमेव लिखिष्यते' इति द्वावेव प्रयोगौ प्रस्तुत्य "यद्यवश्यमुपपादनीयं 'संज्ञापूर्वको विधिरनित्यः' इति, गुणो न भविष्यति" इति हरदत्तेनाभिधानाच्च । अत्र आत्रेयः—"अथर्ववेदसत्यानामापुग्' इति दीर्घोच्चारणादन्यत्रापि भवतीति केचिद्" इति । तेन लिखमाचष्टे लिखापयति इति भवति ॥ ८३ ॥

७२. कुट कौटिल्ये । कुटति । चुकोट । चुकुटतुः । चुकुटिथ । चुकोट, चुकुट । चुकुटिव—'गाङ्कुटादिभ्योऽञ्णिन्ङित्' इति अञ्णित्प्रत्ययस्य ङित्त्वान्न गुणः । उत्तमे णलि णित्त्वविकल्पनात्पक्षे ङित्त्वादगुणत्वम् । कुटिता । कुटिष्यति । कुटतु । अकुटत् । कुटेत् । आशिषि—कुट्यात् । अकुटीत् । अकुटिष्टाम् । चुकुटिषति । कुटित्वा—'रलो व्युपधात्' इति कित्त्वविकल्पनात्पूर्वविप्रतिषेधेन कुटादिङित्त्वमिष्यते । तस्य ज्ञापकं 'सर्वत्र सन्नन्तादात्मनेपदप्रतिषेधः' इति वार्त्तिकम् । "सर्वेषु पक्षेषु सन्नन्तादात्मनेपदं प्राप्नोति । उच्चुकुटिषति इति 'ङितः' इत्यात्मनेपदं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः" इति भाष्यञ्च । यदि हि कित्त्वं स्यात् किमनेनात्मनेपदप्रतिषेधवचनेन इति ! तथा 'अनुदात्तङितः' इत्यत्रोपदेशानुवर्त्तनं च ङित्त्वस्य पूर्वविप्रतिषेधे प्रमाणम् । तस्य ह्यातिदेशिकं ङित्त्वं कुटादिभ्यो व्यावर्त्यम् । किञ्च ङित्त्वं कुटादिमञ्णितं प्रत्ययमपेक्षते, कित्त्वं तु रलन्ताद् व्युपधाद्धलादेः परं सेटं सनमपेक्षत इति 'बह्वपेक्षम्, तस्मादल्पापेक्षं ङित्त्वमन्तरङ्गं । चोकुट्यते । चोकुटीति, चोकोट्टि—गणेन निर्देशान्ङित्त्वं न यङ्लुकि । कोटयति । अचूकुटत्—णिचो णित्त्वान्न ङित्त्वम् । कोट्यः । कोटः—ण्यघञोर्ञ्णित्त्वादङित्त्वम् । कुटपः परिमाणम्—'इषिकुषिदलिखचिखजिभ्यः कपन्' इति कपन् । कुटरुः बन्धकी पक्षी च—'कुटेः किच्च' इत्यरुः । कुटादित्वान्ङित्त्वादेव कित्त्वफले सिद्धे किद्वचनं तस्यानित्यत्वज्ञापनार्थम्, तेन ध्रुवतेरित्रप्रत्यये ध्रवित्रम् इति गुणो भवतीत्याहुः । कुड्मलम्—'कुटिकुषिभ्यां क्मलच्' इति क्मलच् । कोटरः मन्थविष्कम्भः—बाहुलकादरः । कोटरः, कोटरावणम्—'वनगिर्योः सञ्ज्ञायां कोटर' इति दीर्घः । 'वनं पुरगा' इत्यादिना णत्वम् । अत्रैव च 'कोटर' इति निर्देशादरे गुणः । कुटिलम्—बाहुलकादिलच् । कुटिलिका कर्मराणां सन्दशनी—सञ्ज्ञायां कन् । कुटिलिकयां अगारान् हरतीति कौटिलिकः कर्मारः—'अण् कुटिलिकायाः' इत्यण् । कुटी—इन्-

न्तात् 'कृदिकारादक्तिनः' इति ङीष् । अल्पा कुटी कुटीरः—'कुटीशमीशुण्डाभ्यो रः' इति रः। कुट प्रतापने इत्याकुस्मीयः । कूट परिदाहे इति कथादिः दीर्घोपधः । 'अयमपि ह्रस्वोपधः' इत्यात्रेयः । उभावपि[1] दीर्घोपधाविति मैत्रेयः[1] ॥ ८४ ॥

७३. पुट संश्लेषणे । पुटति इत्यादि कुटिवत् । पुटः, पुटिका । अल्पः पुटः पुटिका, महांस्तु पुटः—'पुटकृतादीनामुपसंख्यानम्' इति समानाधिकरणसमासः । 'अन्येषामपि दृश्यते' इति दीर्घः। प्रतिपत्राद्यपेक्षमेकस्याल्पत्वमहत्त्वे । अयं भाषार्थश्चुरादौ दण्डके । संसर्गार्थस्तु कथादौ ॥ ८५ ॥

७४. कुच संकोचने । 'अत एव निर्देशात् ल्युटि गुणः' इति काश्यपः । कुचति । निकुचिता इत्यादि । संकोचः—'न कादेः' इत्यकुत्वम् । कोचति इति शपि ॥८६॥

७५. गुज शब्दे । 'अव्यक्ते शब्दे' इति आत्रेयः । गुजति इत्यादि । गोजः—घञि 'न कादेः' इति न कुत्वम् । गुञ्जति इति शपि ॥ ८७ ॥

७६. गुड रक्षायाम् । गुडति इत्यादि । गुडः इक्षुविकारः, सन्नाहश्च—इगुपधलक्षणः कप्रत्ययः । 'घञर्थे कविधानम्' इति कर्मणि वा । गुडितो हस्ती, संजातसन्नाह इत्यर्थः, तारकादित्वादितच् । गुडा स्नुही—टाप्, तत्प्रायाः केशा अस्य गुडाकेशः ॥ ८८ ॥

७७. डिप क्षेपे । डिपति । डिडेप । डिपिता इत्यादि । डिप्यति इति श्यनि ॥८९॥

७८. छुर छेदने । छुरति । चुच्छोर । छुरिता इत्यादि । छुर्यात् । छुर्यास्ताम्—'हलि च' इति दीर्घस्य 'न भकुर्छुराम्' इति निषेधः । छुरिका—'कुन् शिल्पिसंज्ञयोः' इति कुन् । आच्छुरितकम्—सोत्प्रासो हासः निष्ठान्तात्संज्ञायां कन् ॥ ९० ॥

७९. स्फुट विकसने । स्फुटति । पुस्फोट—'शर्पूर्वाः खयः' इति खयः शेषः । स्फोटते इति शप्यात्मनेपदी । स्फोटति[1] इति विशरणार्थः परस्मैपदी तत्रैव । भेदनार्थश्चुरादौ[1] ॥ ९१ ॥

८०. मुट आक्षेपप्रमर्दनयोः । मुटति । मुमोट । मुटिता इत्यादि । मोटति इति प्रमर्दने शपि ॥ ९२ ॥

८१. त्रुट छेदने । त्रुटति । तुत्रोट । त्रुटिता इत्यादि । 'वा भ्राश' इति शविषये वा श्यन् । त्रुट्यति । त्रुट्यतु । अत्रुट्यत् । त्रुट्येत् । त्रोटिः—ण्यन्ताद् 'अच इः' इत्यौणादिक इप्रत्ययः ॥ ९३ ॥

८२. तुट कलहकर्मणि । तुटति । तुतोट । तुटिता इत्यादि । तुटिः—'इक्कृष्यादिभ्यः' इति आत्रेयः ॥ ९४ ॥

८३. चुट[2] छुट छेदने । चुटति । छुटति इत्यादि । चोटति इति शपि॥९५-९६॥

८४. जुड[3] बन्धने । प्रेरणे चुरादिः । जुडति । जुजोड । जुडिता इत्यादि॥९७॥

---

१—१. ख. पुस्तकेऽयं पाठो नास्ति । १. 'परिदाहे' ।

२. 'पुट' इति ख. पुस्तके । ३. 'जुट' इत्यपि क्वचित् ।

८५. कड मदे[1] । कडति । चकाड । कडिता इत्यादि । अस्य ङित्कार्याभावादिह पाठो डकारान्तमात्रानुरोधेन । कुटादिभ्योऽन्यत्रापि शक्यते पठितुम् । अयं भ्वादौ च । पुनः पाठफलमुञ्छतिवत् । कण्डते इति च शपि ॥ ९८ ॥

८६. लुट संश्लेषणे[2] । लुटति । लुलोट । लुण्टतीत्यालस्यप्रतिघातयोः शपि । लौटति लुट्यतीति विलोडने शपि श्यनि च । लोटति इत्युपघाते शपि । प्रतिघाते लोटते इति द्युतादौ । लुण्टति इति स्तेये शपि । गतावपि लुण्टति इति शपि । लुड इत्येके । अयमपि शपि गतौ ॥ ९९ ॥

८७. कृड घनत्वे[3] । घनत्वं सान्द्रता । घसने इत्येके । कृडति । चकर्ड । कृडिता इत्यादि ॥ १०० ॥

८८. कुड़ बाल्ये । कुडति । चुकोड । कुडिता इत्यादि ॥ १०१ ॥

८९. पुड उत्सर्गे । पुडति इत्यादि । 'मुड' इति आत्रेयः ॥ १०२ ॥

९०. घुट[4] प्रतीघाते । अयं प्रथमान्तः । घुटति । जुघोट । घुटिता इत्यादि । घोटकः—ण्वुल् । घोटः—घञ् । अयं द्युतादावात्मनेपदी गतः ॥ १०३ ॥

९१. तुड तोडने । अयं तृतीयान्तः । प्रथमान्तः कलहकर्मार्थः पूर्वत्र पठितः । तोडनं भेदः । तुडति । तुतोड । तुडिता इत्यादि । तुण्डते, तोडति इति शपि ॥ १०४ ॥

९२. थुड स्फुड[5] संवरणे[6] । थुडति । तुथोड । थुडिता इत्यादि ॥ स्फुडति । पुस्फोड—'शर्पूर्वाः खयः' इति खयः शेषः । स्फुडिता इत्यादि । खुड छुड इत्येके । अत्र 'कुड संघाते' इत्यात्रेयः, बाल्ये पठितस्येह पाठोऽर्थभेदादिति तस्याभिप्रायो द्रष्टव्यः । अपठतां मैत्रेयादीनां धातूनामनेकार्थत्वादत्रापि वृत्तिर्भविष्यतीत्यभिप्रायः ॥ १०५–१०६ ॥

९३. स्फुर स्फुल संचलने[7] । 'स्फुरतिस्फुलत्योः' इत्यत्र न्यासे 'स्फुर स्फुल चलने' इत्यनुपसृष्टं पठ्यते, अत्र केवलं शब्दो भिन्नः, अर्थस्त्वेक एव । आत्रेयस्तु 'स्फुर स्फुरणे, स्फुल संचलने' इति पपाठ । स्फुरति । निस्फुरति । निष्फुरति । विस्फुरति । विष्फुरति—'स्फुरतिस्फुलत्योर्निर्निविभ्यः' इति वा षत्वम् । निर्निसोः साधारण-

---

१. मदे च' इति ख. पुस्तके । 'घसने' इति क्षीरस्वामी ।

२. क्षीरस्वामी नेदं सूत्रं पठति । धातोः 'लुठ' इति व्याख्याने ख. पुस्तकं द्रष्टव्यम् । ३. 'कुड सहने' इति मैत्रेयः । ४. 'गुड' इति क्षीरस्वामी । ५. 'स्थुड' इति क्षीरस्वामिभट्टोजिदीक्षितौ । अयमेव पाठो युक्तः प्रतिभाति । ६. सूत्रस्यास्य स्थाने 'कुड संघाते । ब्रुड भ्रुड इत्येके' इति मैत्रेयः । ७. इतः पूर्वं क्षीरस्वामी 'वुड बुड निमज्जने । ब्रुड भ्रुड संवरणे' इति सूत्रद्वयं पठति । ततोऽत्र 'स्फर' 'स्फल' इत्यधिकं पठति । 'स्फुर स्फुरणे संचलने दीप्तौ च' इति मैत्रेयः ।

मुक्तमुदाहरणम् । पुस्फोर । स्फुरिता । स्फुरिष्यति । स्फुरतु । अस्फुरत् । स्फुरेत् । स्फूर्यात्—'हलि च' इति दीर्घः । अपुस्फुरीत् । पुस्फुरिषति—सेट्त्वात् 'हलि च' इति न दीर्घः । कुटादित्वात् 'रलो व्युपधात्' इत्यपि न भवति । पोस्फूर्यते । पोस्फोर्ति—दीर्घस्यासिद्धत्वाद्गुणः । पोस्फूर्तः । स्फारयति, स्फोरयति—'चिस्फुरोर्णौ' इति वाऽऽत्वम् । अपुस्फुरत्—आत्वपक्षे 'णौ कृतमभ्यासे स्थानिवद्' इत्यभ्यासस्यौकारान्तत्वे ह्रस्व इत्युकारः । 'ओः पुयण्जि' इति इत्वं न भवति, सकारेण पवर्गपरत्वस्य व्यवधानात् । एवं ण्यन्तात्सन्यपि पुस्फोरयिषति, पुस्फारयिषति इति भवतः । मैत्रेयस्तु 'स्फुर स्फुरणे' इति पृथङ् पठित्वा 'स्फर इत्येके, अदुपधः, स्फरति । पस्फार' इत्याह ॥ स्फुलति इत्यादि स्फुरतिवत् । णावात्वं त्वस्य न भवति । तथा 'हलि च' इति दीर्घत्वमपि न भवति, अरेफान्तत्वात् ॥ १०७-१०८ ॥

९४. स्फुड चुड व्रुड संवरणे[1] । मैत्रेयेणैते न पठ्यन्ते । आत्रेयादयस्तु पठन्ति । स्फुडति । पुस्फोड । खयः शेषः ॥ चुडति । चुचोड ॥ व्रुडति । वुव्रोड इत्यादि ॥ अत्र 'क्रुड भृड निमज्जने इत्येके' इत्यात्रेयः । मैत्रेयस्तु क्रुडं पठित्वा 'भृड इत्यप्येके' इत्याह[2] । क्रुडति । क्रोडः—घञ् । क्रोडा अश्वानामुरः—टाबन्तोऽयं स्वभावतो विशेषविषयः । कल्याणी क्रोडा यस्याः सा कल्याणक्रोडा—बहुव्रीहावुपसर्जनह्रस्वत्वे 'न क्रोडादिबह्वचः' इति स्वाङ्गलक्षणो ङीष् निषिध्यते । क्रोडादिषु टाबन्तस्य पाठाद् भुजान्तरमात्रवचनस्य क्रोडशब्दस्य बहुव्रीहौ स्वाङ्गलक्षणो ङीष्विकल्प एव भवति । कल्याणक्रोडी, कल्याणक्रोडा मयूरीति । भृडति इत्यादि ॥१०९–१११॥

९५. व्रश्चादय उदात्ता उदात्तेतः ।

अथ सेटमात्मनेपदिनमाह—

९६. गुरी उद्यमने । गुरते । जुगुरे । जुगुरिषे । गुरिता । गुरिष्यते । गुरताम् । अगुरत । गुरेत । गुरिषीष्ट । अगुरिष्ट । अगुरिषाताम् । जुगुरिषते । जोगूर्यते । जोगोर्त्ति । गोरयति । अजूगुरत् । खड्गापगारं युध्यन्ते, खड्गापगोरम् इति वा, त्वरया खड्गमुद्यम्य युध्यन्त इत्यर्थः—'द्वितीयायां च' इति परीप्सायां णमुल्, 'अपगुरोर्णमुल्' इति वाऽऽत्वम् । गूर्णः, गूर्णवान्—ईदित्त्वादनिट्त्वम् । गूर्तिः—'तितुत्र' इतीण्णिषेधः । दीर्घोपधोऽयं चुरादौ । हिंसागत्योर्दिवादौ । ईदित् ॥ ११२ ॥

९७. उदात्तोऽनुदात्तेत् ।

निष्ठायामनिट्त्वसाम्यात् पुनः परस्मैपदप्रस्तावः—

९८. णू स्तवने । ह्रस्वान्तम् आत्रेयादयः पठन्ति । यथा तु भाष्यं तथा दीर्घान्तः । यदाह कुटादिसूत्रे—'तस्मान्नूत्वा धूत्वेत्येव भवितव्यम्' इति । नुनाव । नुनुवतुः ।

---

१. 'स्फुल संचये च' इति क्षीरस्वामी ।

२. 'क्रुड निमज्जने । भृड इत्येके । भ्रुड इत्यपरे'—इति मैत्रेयसम्मत पाठः ।

नुनुविथ । नुविता । नुविष्यति—ङित्त्वेन गुणनिषेधत्वादुवङ् । नुवतु । अनुवत् । नुवेत् । आशिषि—नूयात् । अनुवीत् । नुनूषति—'सनि ग्रहगुहोश्च' इतीण्णिषेधः । नोनूयते । नोनोति । नूत्वा । नूतः । नूतवान्—'श्र्युकः किति' इत्यनिट्त्वम् ॥११३॥

९९. धू विधूनने ।

१००. अयं पूर्वश्चोदात्तः । धुवति इत्यादि नुवतिवत् । धवित्रं व्यञ्जनम्—'अर्त्तिलूधू' इति करणे इत्रः । 'कुटेः किच्च' इत्यादि ज्ञापकात्कुटादिङित्त्वान्नित्यत्वाद् गुण इति केचिदिति कुटतावुक्तम् । 'विदिभिदि' इति सूत्रे हरदत्तस्तु ङित्त्वमेवेच्छन् धुवित्रम् इत्युवङमेवाह । 'प्राणा वै धवित्राणि' इति तु छान्दसमिति च ॥११४॥

कुटाद्युवर्णान्तपरस्मैपदिनिष्ठानिट्प्रस्तावादाह—

१०१. गु पुरीषोत्सर्गे । गुवति । जुगाव । जुगुवतुः । जुगुविथ, जुगुथ । तासौ नित्यानिट्त्वाद्भारद्वाजनियमाच्च थलीड्विकल्पोऽन्यत्र क्रादिनियमान्नित्यमिट् । गुता । गुष्यति । गुवतु । अगुवत् । गुवेत् । आशिषि-गूयात् । अगुषीत् । अगुताम् । अगुषुः—झलि 'ह्रस्वादङ्गात्' इति सिज्लोपः । जुगूषति इत्यादि—'अज्झनगमां सनि' इति दीर्घः । गूनः, गूनवान्—'दुग्वोर्दीर्घश्च' इति निष्ठानत्वं दीर्घश्च ॥११५॥

१०२. ध्रु गतिस्थैर्ययोः । ध्रुवति इत्यादि गुवतिवत् । ध्रुवः—पचाद्यच् । अत्र स्वाम्यादयः 'ध्रुव' इति वकारान्तं धातुं पठन्ति । उक्तञ्च 'ध्रुवमपाये' इत्यत्र हरदत्तेन–'ध्रु गतिस्थैर्ययोरित्यस्मात्पचाद्यच्, ये ध्रुव गतिस्थैर्ययोरिति पठन्ति, तेषामिगुपधलक्षणः कप्रत्ययः' इति । अस्मिन् पक्षे सेट् । ध्रुवति । दुध्राव । दुध्रुवतुः । दुध्रुविथ । ध्रुविता । ध्रुविष्यति । ध्रुवतु । अध्रुवत् । ध्रुवेत् । आशिषि ध्रूव्यात्—'हलि च' इति दीर्घः । अध्रुवीत् । अध्रुविष्टाम् । अध्रुविषुः । दुध्रुविषति । दोध्रूयते ॥११६॥

१०३. अयं गुवतिश्चानुदात्तौ उदात्तेतौ । ध्रुवतिर्वान्तवादिनां सेट् ।

१०४. कुङ् शब्दे । 'केचिद्दीर्घान्तमिमं पठन्ति इति आत्रेयमैत्रेयौ । एवं स्वामिकाश्यपसुधाकरधनपालसंमताकारा अपि । शाकटायनस्तु 'कुङ् कूङ् शब्दे' इत्युभयं पपाठ । तत्र ह्रस्वान्तो न्यासकारस्यापीष्टः,' यदाह 'इको झल्' इत्यत्र—'चुकूषते इत्यत्र दीर्घवचनमर्थवत् । तत्र गाङ्कुटादिसूत्रेण ङित्त्वाद् गुणो न प्रवर्त्तते' इति । तन्मते कुवते, चुकुवे इत्यादि गुवतिवत् । हरदत्तस्य तु दीर्घान्त एवेष्टः, यदाह कुटादिसूत्रे—'आकूतमिति दर्शनाद् दीर्घान्तः' इति । पुनः स एव 'इको झल्' इत्यत्र—'ननु कुङ् शब्दे कुटादिश्चुकूषते इत्यस्ति दीर्घस्यावकाशः । दीर्घान्तोऽयमित्यवोचाम' इति । अत्र कैयटेऽपि—'न च दीर्घविधानस्य कुङ् शब्दे इति धातुरवकाशश्चुकूषत इति, यस्मात्कूङ् शब्द इति पाठस्तत्र कुटादित्वान्ङित्त्वे सति गुणाभावाद् दीर्घस्य श्रवणं सिद्धम् । लोकवेदयोश्च आकूतशब्दस्य ..योगो दृश्यते' इति । अत्र पक्षेऽयं सेट् । कुवते इत्यादि नुवतिवत् ॥ ११७ ॥

१०५. वृत् । कुटादयो वृत्ता इत्यर्थः ।

ङित्प्रसङ्गादाह—

१०६. पृङ् व्यायामे[1] । ओष्ठ्यादिः । प्रायेणायं व्याङ्पूर्वः । व्याप्रियते—'रिङ् शयग्लिङ्क्षु' इति रिङादेशः, तस्येयङादेशः । व्यापप्रे । व्यापप्राते । व्यापर्त्ता । व्यापर्त्तासे । व्यापरिष्यते—'ऋद्धनोः स्ये' इतीट् । व्याप्रियताम् । व्याप्रियत । व्याप्रियेत । आशिषि—व्यापृषीष्ट । व्यापृषीयास्ताम् । व्यापृषीरन् । व्यापृत । व्यापृषाताम् । व्यापृषत—'ह्रस्वादङ्गाद्' इति झलि सिचो लोपः । 'उश्च' इति लिङ्सिचोः कित्त्वान्न गुणः । व्यापुपूर्षते—'इको झल्' इति सनः कित्त्वात् 'अज्झनगमां सनि' इति दीर्घे 'उदोष्ठ्यपूर्वस्य' इत्युत्वे रपरत्वे 'हलि च' इति दीर्घः । व्यापेप्रीयते—'रीङ् ऋतः' इति रीङ् । व्यापपर्ति इत्यादि । 'ऋतश्च' इति रुग्रिग्रीकः । व्यापारयति । व्यापीपरत् । व्यापृत्य । व्यापृतः, व्यापृतवान् ॥ ११८ ॥

१०७. मृङ् प्राणत्यागे । म्रियते । ममार । मम्रतुः । मम्रुः । ममर्थ । मम्रिव—क्रादिनियमादिट् । थलि तु 'अचस्तास्वत्थल्यनिटो नित्यम्' इतीण् न भवति । मर्त्ता । मरिष्यति—'ऋद्धनोः' इतीट् । म्रियताम् । अम्रियत । म्रियेत । मृषीष्ट । अमृत । अमृषाताम्—झलि सिचो लोपः । 'उश्च' इति लिङ्सिचोः कित्त्वान्न गुणः । 'म्रियतेर्लुङ्लिङोश्च' इति लुङ्लिङ्शिद्विषय एव तङिति नियमादतोऽन्यत्र परस्मैपदमेव । यद्येवमपूर्वविधिरस्तु सूत्रं, किं ङित्त्वेन ? तत्क्रियते 'तास्यनुदात्तेन्ङिददुपदेशाद्' इति विशेषणार्थं, तेन माहि मृतेत्यत्र लसार्वधातुकानुदात्तत्वे 'धातोरन्त' इति धातोरुदात्तत्वं भवति । अत एव ङित्त्वसामर्थ्यात्तिसंज्लोपस्य पूर्वत्रासिद्धत्वं नेति लसार्वधातुकस्य ङितः परत्वं भवति । अन्यथा प्रत्ययाद्युदात्तत्वे धातुरनुदात्तः स्यात् । न च 'तिङ्ङतिङः' इति सर्वनिघातप्रसङ्गः; तस्य 'हि च' इति निषेधात् । मुमूर्षति—सनः कित्त्वे दीर्घोत्वरपरत्वदीर्घाः । 'पूर्ववत्सनः' इति तङत्र न भवति, नहि म्रियतिमात्रमात्मनेपदस्य निमित्तम्, किन्तु शिल्लुङ्लिङोऽपीति । न चात्र ते म्रियतेरनन्तराः सम्भवन्ति । मेम्रियते—'रीङ् ऋतः' इति रीङ् । मर्मरीति, मर्मर्ति इत्यादि । मारयति । अमीमरत् । मृत्वा । मृतः । मृतवान् । न म्रियते इति अमृतम्— 'मतिबुद्धिपूजार्थेभ्यश्च' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाद्वर्त्तमाने क्तः । नञ्समासः । मरः—अच् । अमरः—पचाद्यच्, नञ्समासः । मृत्युः—'भुजिमृङ्भ्यां युक्त्युकौ' इति त्युक् ॥ ११९ ॥

१०८. अनुदात्तावात्मनेभाषौ[2] ।

रेफवदनिट्प्रकरणादाह—

१०९. रि पि गतौ । रियति—लघूपधगुणादन्तरङ्गत्वादियङादेशः । रिराय । रियतुः । रियुः—'एरनेकाचः' इति यण् । रिरेथ, रिरयिथ । रियिव । रियिम—

1. 'आयामे' इति ख. पुस्तके । 2. क्षीरस्वामी न पठति ।

क्रादिनियमादिट् । थलि 'अचस्तास्वत्' इतीण्निषेधाद् । भारद्वाजनियमाच्च विकल्पः । रियंतुरित्यादौ यणो बहिरङ्गलक्षणस्यासिद्धत्वाद्रेफस्य हल्परत्वाभावात् 'उपधायां च' इति न दीर्घः । रेता । रेष्यति । रियतु । अरियत् । रियेत् । आशिषि रीयात्--'अकृत्सार्वधातुकयोः' इति दीर्घः । अरैषीत् । अरैष्टाम् । अरैषुः । रिरीषति-सनः कित्त्वे 'अज्झनगमाम्' इति दीर्घः । रेरीयते । रेरयीति, रेरेति । राययति । अरीरयत् ॥ पियति इत्यादि रियतिवत् ॥ १२०-१२१ ॥

११०. धि धारणे[1] । धियति । दिधाय । दिध्यतुः । दिध्युः । दिधयिथ, दिधेथ । धेता इत्यादि ॥ १२२ ॥

१११. क्षि निवासगत्योः । क्षियति । चिक्षाय । चिक्षियतुः । चिक्षियुः । चिक्षयिथ, चिक्षेथ--संयोगपूर्वत्वान्न यणादेश इतीयङ् । क्षेता इत्यादि रियतिवत् । प्रक्षीय—'क्षियः' इति ल्यपि दीर्घः । क्षीणो देवदत्तः—अकर्मकत्वाद्गत्यर्थत्वाद्वा कर्तरि क्तः, 'निष्ठायामण्यदर्थे' इति दीर्घः । ण्यदर्थो भावकर्मणी । 'क्षियो दीर्घाद्' इति निष्ठानत्वम् । इदमेषां क्षीणम्—'क्तोऽधिकरणे च' इति ध्रौव्यार्थत्वाद्गत्यर्थत्वाधिकरणे क्तः । दीर्घत्वनत्वे पूर्ववत् । भावे तु क्षितम्—ण्यदर्थत्वेन दीर्घाभावान्न निष्ठानत्वम् । क्षीणायुर्वृषलः । क्षितायुर्वृषलः । क्षीणकः । क्षितकः—क्तान्तादनुकम्पायां कन्, 'वा क्रोशदैन्ययोः' इति दीर्घविकल्पः, पूर्ववद्दीर्घनत्वे । क्षयी—'जिदृक्षि' इत्यादिना इनिः । क्षयतीति गतं शपि ॥ १२३ ॥

११२. रियत्यादयोऽनुदात्ता उदात्तेतः[2] ॥

षकारवत्परस्मैपदिप्रसङ्गात्ताद्दशं सेटमाह—

११३. षू प्रेरणे । सुवति । सुवतः । सुवन्ति । सुवसि । सुवामि । सुषुवति--'उपसर्गात्सुनोतिसुवति' इति षत्वम् । सुषाव । सुषुवतुः ।सुषविथ । सुषुविव—अभ्यासात्परस्य 'आदेशप्रत्यययोः' इति षत्वम् । सुषुषाव । विसुषाव—'उपसर्गात्' इति षत्वमभ्यासस्य 'स्थादिष्वभ्यासेन चाभ्यासस्य' इति नियमान्न भवति । सविता । सविष्यति । सुवतु । असुवत् । अभ्यषुवत्—'प्राक्सितादड्व्यवायेऽपि' इति षत्वम् । सुवेत् । सूयात् । असावीत् । असाविष्टाम् । अभ्यषावीत् --लङ्वत्षत्वम् । सुसूषति—'स्तौतिण्योः' इति न षत्वम् । अभिसुसूषति—पूर्ववत्स्थादिनियमादभ्यासस्य न षत्वम् । प्रकृतेश्च 'स्तौतिण्योः' इति नियमात् 'सनि ग्रहगुहोश्च' इत्यनिट्त्वात् 'इको झल्' इति सनः कित्त्वम् । सोषूयते । सोषोति । सावयति । असूषवत् । सूत्वा । सूतः । सूर्यः—'राजसूय' इत्यादिना क्यपि रुडागमः । सूर्यस्य स्त्री देवता सूर्या—'सूर्याद्देवतायां चाब्वक्तव्यः' इति चाप् । पुंयोगङीषोऽपवादः । अदेवतायां तु ङीषेव—सूरी मानुषी इति । 'सूर्यतिष्य' इति तद्धिते ईति च भसंज्ञानिमित्ते यलोपः । सूर्यस्येदं सौर्यम् इत्यत्र 'सूर्यस्य छे ङ्यां

---

१. 'विधारणे' मैत्रेयः ।　२. मैत्रेयो नेदं सूत्रं पठति ।

च' इति नियमान्न लोपः। यद्यप्यत्र 'यस्येति च' इत्यल्लोपस्य यलोपविधिम्प्रति न स्थानिवदिति स्थानिवत्त्वनिषेधाद्यकारो नोपधा, तथापि 'असिद्धवदत्राभात्' इत्यसिद्धत्वादुपधात्वादस्ति लोपप्रसङ्गः। सौरी बलाका इत्यत्र तु 'तेनैकदिक्' इत्यणि ङीप्यणो 'यस्येति च' इति लोपस्य पूर्ववदसिद्धत्वादुपधायकार इति तस्य लोपः, इकारपरत्वात्। न चाणि यो यस्येतिलोपस्तस्यासिद्धत्वादनुपधात्वमिति शङ्क्यम्; अण्ययं लोपो यलोपस्त्वीतीति व्याश्रयत्वेनासिद्धत्वाप्रसङ्गात्। न च स्थानिवद्भावेनोपधात्वभङ्गः, यलोपविधौ तस्य निषेधात्। नन्वेवमपि यकारः सूर्यस्योपधा न भवति किन्त्वणन्तस्येति लोपो न स्यात्, नैष दोषः; नात्र सूर्यादिभिरुपधां विशेषयिष्यामः, किन्तु भसंज्ञकेन, भस्योपधा यो यकारो वस्तुतः सूर्यादिसम्बन्धीति। एवं च सौरीयम् इत्यत्रापि अणन्ताच्छे पूर्ववद् यलोपः सिध्यति। 'सौर्ये हिमवतः शृङ्गे' इत्यत्र पूर्ववदणि, 'नपुंसकाच्च' इति शीभावे पूर्ववदीति प्राप्तो यलोपो ङ्यामितीकारस्य विशेषणान्न भवति। 'सौरो मन्त्रः' इति प्रयोगस्तु सूरशब्दादणि द्रष्टव्यः। प्रसवी—'जिदृक्षिवि' इत्यादिनेनिः। सवित्रम्—'अर्त्तिलू' इति इत्रः। सूरः—'सूसूधागृधिभ्यः क्रन्' इति क्रन्। सूरिस्तु 'सूङः क्रिः' इति षूङः उक्तः। सूते सूयते इति लुक्श्यनोः॥ १२४॥

११४. कॄ विक्षेपे। किरति। किरतः—'ॠत इद्धातोः' इतीत्वम्। चकार। चकरतुः। चकरिथ। चकार, चकर। चकरिव—'ऋच्छत्यॄताम्' इति लिटि गुणः। न च पूर्वविप्रतिषेधेन 'अचो ञ्णिति' इति वृद्धिः, कृते वा गुणे 'अत उपधायाः' इति वृद्धिः। करिता, करीता। करिष्यति, करीष्यति—'वॄतो वा' इतीटो वा दीर्घः। किरतु। अकिरत्। किरेत्। कीर्यात्—इत्वे 'हलि च' इति दीर्घः। अकारीत्। अकारिष्टाम्–सिचि वृद्धिः। 'वॄतो वा' इतीटो दीर्घस्य 'सिचि च परस्मैपदेषु' इति निषेधः। चिकरिषति—'सनि ग्रहगुहोश्च' इति चशब्दादुगन्तलक्षणेण्निषेधे प्राप्ते तदपवादः 'इट् सनि वा' इति विकल्पे च प्राप्ते 'किरश्च पञ्चभ्यः' इति नित्यमिट्। 'अस्य दीर्घत्वं नेच्छन्ति' इति वामनः। हरदत्तोऽपि 'इष्टिरेवेयम्' इति। भागवृत्तौ त्वत्रापि दीर्घविकल्पो दृश्यते। चेकीर्यते—परत्वादित्वादौ द्विर्वचनम्। चाकरीति, चाकर्त्ति—अभ्यासस्य ह्रस्वोरदत्वहलादिशेषेषु 'दीर्घोऽकितः' इति दीर्घः। 'ऋतश्च' इति अभ्यासस्य रुगादिविधौ तपरकरणसामर्थ्यादृकारान्तस्याङ्गस्य योऽभ्यास इति सूत्रार्थव्यवस्थापनादत्राभ्यासस्य ह्रस्वत्वेन ऋकारान्तत्वेऽपि तदाश्रयो रुगादिर्न भवति, अङ्गस्य दीर्घान्तत्वात्। एवं तरत्यादावपि प्रतिपादितम्। कारयति। अचीकरत्। अवकिरते हस्ती स्वयमेव, अवाकीर्ष्ट हस्ती स्वयमेव—'भूषाकर्मकिरादिसनां चोपसंख्यानम्' इति यक्चिणोः प्रतिषेधः। 'हस्तिनं कश्चित्पांश्वादिनाऽवकिरते, तत्र सौकर्यातिशयाद्धस्ती कर्तृत्वेन विवक्ष्यते' इति कैयटे। अत्र सिचो 'लिङ्सिचोरात्मनेपदेषु' इतीड्विकल्पः। इट्पक्षे सिचः कित्त्वाभावाद्गुणः।

अवाकरिष्ट इत्यादि। 'वॄतः' इतीटो दीर्घपक्षे अवाकरीष्ट इत्यादि त्रैरूप्यम्। लिङि 'न लिङि' इति दीर्घनिषेधात् 'लिङ्सिचोरात्मनेपदेषु' इतीटो भावाभावाभ्यां द्वैरूप्यम्—अवकीर्षीष्ट अवकरिषीष्ट इति। अनिट्पक्षे 'लिङ्सिचोः', 'उश्च' इति कित्त्वाद् गुणाभावः। 'ॠतः' इतीत्वम्। अवस्किरते वृषो हृष्टः। अवस्किरते कुक्कुटो भक्षार्थी। अवस्किरते श्वा आश्रयार्थी—'किरतेर्हर्षजीविकाकुलायकरणेषु' इति तङ्। 'अपाच्चतुष्पाच्छकुनिष्वालेखने' इति अवात्किरतौ परे कात्पूर्वः सुट्, अत्रापि 'किरतेर्हर्षजीविकाकुलायकरणेषु' इति पठ्यते। तत्र किरत्यर्थस्य हर्षो हेतुत्वेन विषयः, इतरे फलत्वेनेति व्याख्यातारः। तत्र हृष्टत्वाद् वृषभो विलिख्य विक्षिपतीत्यर्थः। इतरोऽपि कुक्कुटः श्वा च जीविकायै कुलायकरणाय च विलिख्य विक्षिपतीत्यर्थः। अवचस्करे। अवास्किरत—'अडभ्यासव्यवायेऽपि' इति सुट्। लुङि तु कर्मकर्तरि चेड्दीर्घयोर्विकल्पनात्त्रैरूप्यम्—अवास्कीर्ष्ट, अवास्करिष्ट, अवास्करीष्ट इति। आशिषि लिङ्यपि 'लिङ्सिचोः' इतीटो विकल्पे 'न लिङि' इति दीर्घनिषेधे च कर्मकर्तृवद् द्वैरूप्यम्—अवस्कीर्षीष्ट, अवस्करिषीष्ट इति। अनिट्पक्षे पूर्ववत् 'उश्च' इति लिङ्सिचोः कित्त्वादि। अवस्करिता, अवस्करीता इत्यादि। अवचिस्करिषते—'किरश्च' इति 'इट् सनि वा' इति विकल्पं बाधते। अस्येटो दीर्घो नेत्युक्तम्। अवचेस्कीर्यते। अवचाकर्ति—किरताविति श्तिपा निर्देशादत्र सुण्ण भवति। अवस्कारयति, अवाचिस्करत्—अडभ्यासाभ्यामुभाभ्यां व्यवधानेऽपि सुड् भवति। उपस्किरति श्वापदः। प्रतिस्किरति—'हिंसायां प्रतेश्च' इति किरतेः कात्पूर्वः सुट्, चकारेणोपः समुच्चीयते। तथा विक्षिपति यथा हिंसामनुबध्नातीत्यर्थः। प्रतेः सुट्, 'उपसर्गात्' इत्यादिना षत्वम् 'परिनिविभ्यः' एव सुटः षत्वं न प्रतेः। उपस्कारं काश्मीरका लुनन्ति, विक्षिप्य लुनन्तीत्यर्थः—'किरतौ लवने' इति सुट्। णमुलप्यत्रेष्यते, तथा च वृत्तिः—'णमुलप्यत्र वक्तव्यः' इति। अवस्करः—'ॠदोरप्'। काष्ठादिना भाण्डादिभ्यो यदन्नमलमपकृष्य भूमौ विक्षिप्यते तदन्नमलमवस्कर उच्यते, तद्योगाद्देशोऽपि। 'वर्चस्केऽवस्करः' इति सुड् निपात्यते। अन्यत्र अवकरः ब्रह्मचारिणः स्त्रियां रेतःसेकः। अवस्करः—पूर्ववदप्। 'अपस्करो रथाङ्गम्' इति सुट्। विष्किरः, विकिरः—'इगुपधज्ञाप्रीकिरः कः' इति कः। 'विष्किरः शकुनिर्विकरो वा' इति सुड्विकल्पः। उत्कारः धान्यस्य, निकारो धान्यस्य—'कॄ धान्ये' इति उन्योरुपपदयोर्घञ्। अन्यत्र उत्करो निकर इत्येव भवति। कीर्णः। कीर्णवान्—'श्र्युकः किति' इतीण्णिषेधादित्वरपरत्वदीर्घेषु निष्ठानत्वम्। कीर्णिः—'तितुत्र' इत्यनिट्त्वम्, 'ॠल्वादिभ्यः क्तिन्निष्ठावत्' इति नत्वम्, अत एव निष्ठावद्भावाद्वाऽनिट्त्वम्। अवकीर्णमनेनेति अवकीर्णी—'इष्टादिभ्यश्च' इति तृतीयार्थे प्रथमान्तादिनिः। अवकीर्णं नाम स्त्रियां ब्रह्मचारिणा रेतसो विक्षेपः। कुरुः—'कॄग्रोरुच्च' इति उप्रत्ययो धातो-

श्रोकारान्तादेशो रपरत्वं च। कौरवः—प्राग्दीव्यतीयोऽण् अपत्यादन्यत्र। अपत्ये तु 'कुर्वादिभ्यो ण्यः' इति ण्यः। अत्राक्षत्रियकुरोर्ग्रहणम्, तेनास्य तद्राजसंज्ञाया अभावाद् बहुषु लुङ् न भवति। क्षत्रियस्य तु 'कुरुनादिभ्यो ण्यः' इति ण्यः, तस्य 'ते तद्राजाः' इति तद्राजत्वात् 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति बहुषु लुकि कुरव इति भवति। 'कौरव्याः पशवः[1]' इति भट्टनारायणप्रयोगश्चिन्त्यः। ब्राह्मणात्वारोपान्न लुगिति समर्थनेऽर्थो न पुष्यति। स्त्रियां कुरूः—'स्त्रियामवन्तिकुन्तिकुरुभ्यश्च' इति तद्राजस्य लुक्, 'गोत्रं च चरणैः सह' इति जातित्वादुकारान्तत्वादूङ्। अत्रातद्राजस्य 'कौरव्यमाण्डूकाभ्यां च' इति ष्फः, आयनादेशः, षित्वान्ङीष्—कौरव्यायणी। अस्मात् कौरव्यशब्दाद्यदा युव प्रत्यय इञ् तस्य 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' इति लुकि पिता पुत्रश्च कौरव्यः। अयमप्यक्षत्रियकौरव्यस्य, क्षत्रियस्य तु तिकादिपाठात्फिञा भाव्यं कौरव्यायणिः इति। तत्र ह्यौरसशब्देन क्षत्रियवचनेन साहचर्यात्कौरव्यशब्दोऽपि तादृशो गृह्यते। यस्तु जनपदवाची कुरुशब्दस्तस्य 'कच्छादिभ्यश्च' इति भवादौ शैषिकोऽण्, जनपदवुञोऽपवादः—कौरवो गौरिति। भवादौ मनुष्ये तत्स्थे वा कच्छादिभ्यो 'मनुष्यतत्स्थयोर्वुञ्' इति वुञ्विधानात् कौरवको मनुष्यः, कौरवकं हसितम् इति। कृणाति कृणीते इति क्र्यादौ। करोति इति तनादौ। कृणोति,[2] कृणुते इति श्नौ[2]॥ १२५॥

११५. गॄ निगरणे। गिरति। गिलति—'अचि विभाषा' इत्यजादौ सर्वत्र वा लत्वम्। जगार। जगाल। जगरिथ, जगलिथ। गरिता, गरीता। गलिता, गलीता। गरिष्यति, गरीष्यति। गलिष्यति, गलीष्यति—'वृतो वा' इत्यलिटो वा दीर्घः। गिरतु। गिलतु। अगिरत्। अगिलत्। गिरेत्। गिलेत्। गीर्यात्, गील्यात्—'किदाशिषि' इति कित्त्वादित्वे 'हलि च' इति दीर्घत्वम्। अगारीत्। अगालीत्। अगारिष्टाम्। अगालिष्टाम्—'सिचि च परस्मैपदेषु' इतीटो दीर्घनिषेधः। जिगरिषति। जिगलिषति—'किरश्च पञ्चभ्यः' इतीट्। अस्य दीर्घविकल्पो नेति किरतावुक्तम्। जेगिल्यते—'लुपसद' इत्यादिना भावगर्हायां यङ्। इत्वरपरत्वयोः 'हलि च' इति दीर्घात्पूर्वम् 'पूर्वत्रासिद्धम्' इति 'ग्रो यङि' इति लत्वेनेदानीं रेफान्तः इति विहतनिमित्तत्वान्न दीर्घः। जागर्ति। जागर्तः। गारयति। गालयति। अजीगरत्। अजीगलत्—'निगरणचलन' इति नित्यं परस्मैपदम्। गार्यते। गाल्यते। अन्तरङ्गत्वात्पूर्वं णिलोपादजाद्यपेक्षो लत्वविकल्पः। कृते वा णिलोपे स्थानिवत्त्वेनाजादिपरत्वाद्भविष्यति। न च 'पूर्वत्रासिद्धे न स्थानिवत्' इति, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इत्युक्तत्वात्। गिरते ग्रासः स्वयमेव। अगरिष्ट, अगरीष्ट, अगीर्ष्ट ग्रासः स्वयमेव—'भूषाकर्मकिरादिसनाम्' इति किरादित्वाद्यक्-

१. वेणी० १।२५। २–२. ख० पुस्तके नास्ति।

चिणोर्निषेधः । 'लिङ्सिचोरात्मनेपदेषु' इति वा इट् । तस्य पूर्ववत्पक्षे दीर्घः । अगलिष्ट, अगलीष्ट इतीटि लत्वं चोदाहार्यम् । अनिटि 'उश्च' इति कित्त्वादित्व-रपरत्वे । अवगिरते । अवजगरे । अवजगरिषे—'अवाद्ग्रः' इति तङ् । अलिटित्यनु-वर्त्तनान्न 'वृतः' इति दीर्घः । अवगरिता, अवगरीता । अवगलिता, अवगलीता । अवगरिष्यते । अवगिरताम् । अवागिरत । अवगिरेत । अवगीर्षीष्ट, अवगिरिषीष्ट—'लिङ्सिचोरात्मनेपदेषु' इतीड् वा, 'न लिङि' इति दीर्घनिषेधः । इडभावे 'उश्च' इति कित्त्वेत्वरपरत्वदीर्घाः—अवागीर्ष्ट, अवागरिष्ट, अवागरीष्ट—लिङ्वत्प्रक्रिया । अवगिलत इत्यादौ सर्वत्राजादौ लत्वमुदाहार्यम्, इटो दीर्घत्वं च लिङ्लिटौ वर्ज-यित्वा । 'अवाद्ग्रः' इति सर्वत्र तङ् । नित्यं शब्दं संगिरन्ते वैयाकरणाः 'समः प्रति-ज्ञाने' इति तङ् । मुदं गिरतीति मुद्गरः—पचाद्यच् । गलः प्राण्यङ्गम् । गरो विषः—अचि व्यवस्थितविभाषया लत्वम् । निगारः, उद्गारः—'उन्योर्ग्रः' इति घञ् । तिमिङ्गिलः—मूलविभुजादित्वात्कः । 'गिलेऽगिलस्य' इति मुम् । 'अगिलस्य' इति वचनाद् गिलगिल इत्यत्र न भवति । गुरुः—'कृग्रोरुच्च' इत्युप्रत्ययः, धातोश्चोकारः । गृणातेर्वाऽयं शब्दार्थात् । गरिष्ठः । गरिमा । गरीयान्—'प्रियस्थिर' इत्यादिना इष्ठेमेयस्सु गुरुशब्दस्य गरादेशः । पृथ्वादिपाठादिमनिज्वा । तदभावे 'इगन्ताच्च' इत्यणि—गौरवम् । गारयति—णाविष्ठवदिति गरादेशः । गर्भः—'अर्तिगृभ्यां भन्' इति भन् । गर्भिणी—इन्नन्ताद् ङीप् । गोगर्भिणी—'चतुष्पादो गर्भिण्या' इति तत्पुरुषः । गर्भिणीनां समूहो गार्भिणम्—भिक्षादित्वादण् । 'भस्याढे तद्धिते' इति पुंवद्भावः । 'इनण्यनपत्ये' इति प्रकृतिभावः । गर्भिणी भार्या यस्य स गर्भिभार्यः—'स्त्रियाः पुंवत्' इति पुंवद्भावः । ननु स्त्रियामनवयव-भूतः गर्भसम्बन्धः प्रवृत्तिनिमित्तम् । पुंसि तु अवयवभूतगर्भसम्बन्धो यथा गर्भी व्रीहिरिति, तेन समानायामाकृतौ भाषितपुंस्कत्वाभावात्कथं पुंवद्भावः ? नैष दोषः; अन्तर्वस्तुसम्बन्धमात्रस्येह प्रवृत्तिनिमित्तत्वात् । अयं शब्दार्थः क्र्यादौ । ज्ञानार्थस्चुरादौ । गरति इति शपि गतम् ॥१२६॥

११६. सुवतिकीरतिगिरतय उदात्ताः उदात्तेतः ॥

११७. दृङ् आदरे । आद्रियते—'रिङ् शयग्लिङ्क्षु' इति रिङ् । आदद्रे । आद-द्रिषे । आदर्ता । आदरिष्यते—'ऋद्धनोः स्ये' इतीट् । आद्रियताम् । आद्रियत । आद्रियेत । आद्रिषीष्ट । आदृत । आदृषाताम्—'उश्च' इति लिङ्सिचोः कित्त्वम्, किति सिचो लोपः । आदिदरिषते—'किरश्च पञ्चभ्यः' इतीट् । देद्रीयते—'रीङ् ऋतः' इति रीङ् । दर्दर्ति । दारयति । अदीदरत् । आद्रियते स्वयमेव, आदृत स्वय-मेव—किरादित्वाद्यक्चिणोः प्रतिषेधः । आदृत्यः—'एतिस्तु' इत्यादिना क्यप् । आदरी—'जिदृक्षि' इत्यादिना इनिः । आदरः—'ग्रहवृदृनिश्चिगमश्च' इति अप् । केचित्तु 'भये दरति' इति घटादिपाठादाहुः । दृणातीति दारणे ॥ १२७ ॥

११८. धृङ् अवस्थाने । ध्रियते इत्यादि आद्रियते इतिवत् । आधारः—'अध्याय' इत्यादिनाधिकरणे घञ् । धर्मः—मनिन् । अत्र वक्तव्यं भूवादावुक्तम् । धरते, धरतीति शपि ॥ १२८ ॥

११९. द्रियतिध्रियती अनुदात्तावात्मनेभाषौ । अतः परं शीयत्यन्ता अनुदात्तेतः ।

१२०. प्रच्छ ज्ञीप्सायाम् । पृच्छति—'छे च' इति तुकि 'स्तोः श्चुना श्चुः' इति श्चुत्वम् । ग्रहिज्यादिना सम्प्रसारणं क्ङिति । पप्रच्छ । पप्रच्छतुः । पप्रच्छिथ, पप्रष्ठ । पप्रच्छिव—क्रादिनियमादिट् । थलि तु 'उपदेशेऽत्वतः' इति निषेधाद्भारद्वाजनियमाच्च विकल्पः । अनिटि व्रश्चादिना षत्वे 'ष्टुना ष्टुः' इति थकारस्य ठकारः । अन्तरङ्गत्वात्पूर्वन्तुकि संयोगात्परत्वाल्लिटः कित्त्वाभावान्न सम्प्रसारणम् । प्रष्टा । प्रक्ष्यति—'षढोः कः सि' इति कत्वम् । पृच्छतु । अपृच्छत् । पृच्छेत् । आशिषि—पृच्छ्यात् । अप्राक्षीत् । अप्राष्टाम्—'झलो झलि' इति सिचो लोपः । 'वदव्रज' इति वृद्धिः । पिपृच्छिषति—'किरश्च पञ्चभ्यः' इतीट् । 'रुदविद' इत्यादिना सनः कित्वात् सम्प्रसारणम् । परीपृच्छ्यते—'रीगृत्वतः' इति रीक् । पाप्रच्छीति, पाप्रष्टि । पाप्रष्ट इत्यादि । पृच्छतीति श्तिपा निर्देशान्न सम्प्रसारणम् । प्रच्छयति, अपप्रच्छत् । सम्पृच्छते—'समो गम्यृच्छि' इत्यकर्मकात्सम्पूर्वात्तङ् । सम्पप्रच्छे, सम्पप्रच्छिषे । सम्प्रष्टा । सम्प्रक्ष्यते । सम्पृच्छताम् । समपृच्छत । सम्पृच्छेत । सम्प्रक्षीष्ट । समप्रष्ट । समप्रक्षाताम् । समप्रक्षत इति । झलि सिचो लोपे ष्टुत्वम् । अन्यत्र कत्वम् । आपृच्छते गुरूम्—'आङि नुप्रच्छ्योरुपसंख्यानम्' इति तङ् । प्रश्नः—'यजयाच' इति नङ् । 'च्छ्वोश्शूठ्' इति सतुक्कस्य च्छस्य शकारः, 'शात्' इति श्चुत्वनिषेधः । 'प्रश्ने चासन्नकाले' इति निर्देशान्न सम्प्रसारणम् । पृच्छतीति प्राट् । शब्दं पृच्छतीति शब्दप्राट्—'क्विब्वचिप्रच्छि' इत्यादिना निरुपपदात्सोपपदाच्च पृच्छेः क्विप्, दीर्घोऽसम्प्रसारणं च, 'च्छ्वोश्शूड्' इति शकारः । 'व्रश्च' इत्यादिना तस्य पदान्ते षत्वम्, जश्त्वचर्त्वे च । पृच्छा—'भिदादेराकृतिगणत्वादङ्' इत्यात्रेयः । पृष्ट्वा । पृष्टः । पृष्टवान् । अयं द्विकर्मकः । तत्र 'अप्रधाने दुहादीनाम्' इति लादयोऽप्रधाने भवन्ति—माणवकः पृच्छ्यते पन्थानम् । सुप्रच्छः । प्रष्टव्यः । पृष्टः । पृष्टवान् इति । अन्यदपि द्विकर्मकसाधारणं नाथत्यादौ प्रपञ्चितम्, तत एवावधार्यम् ॥ १२९ ॥

१२१. वृत् । किरादयो वृत्ता इत्यर्थः ।

१२२. सृज विसर्गे । सृजति । ससर्ज । ससृजतुः । ससर्जिथ, सस्रष्ठ । ससृजिव—'विभाषा सृजिदृशोः' इति थलीड्विकल्पः । इडभावे झलाद्यकित्परत्वात् 'सृजिदृशोर्झल्यमकिति' इत्यमागमे यणादेशः । 'व्रश्च' इत्यादिना षत्वं ष्टुत्वम् । स्रष्टा । स्रक्ष्यति । सृजतु । असृजत् । सृजेत् । आशिषि—सृज्यात् । अस्राक्षीत् । अस्राष्टाम्—अमागमे यणि च 'वदव्रज' इति वृद्धिः । झलि सिज्लोपः । सिसृक्षति—'हलन्ताच्च'

इति सनः कित्वान्नामागमः, नापि गुणः। सरीसृज्यते—रीगागमः। सरीसृजीति, सरीसर्ष्टि। सरीसृष्ट इत्यादि। सर्जयति। असीसृजत्, अससर्जत्—उत्र्त्वा। सृज्यते मालाम्, असर्जि मालाम् श्रद्धया निष्पादयति, श्रद्धया निष्पादितवानिति चार्थः—'सृजियुज्योः श्यंस्तु', 'सृजियुज्योः सकर्मकयोः कर्ता बहुलं कर्मवद् भवतीति वक्तव्यम्', 'सृजेः श्रद्धोपपन्ने कर्तरि' इति भाष्यकारवचनात्सकर्मकस्यापि कर्मवद्भावः। 'श्यना यगेव बाध्यते, न तु चिण्' इति कैयटे। तदयं कर्मवद्भावश्चिणात्मनेपदार्थो भवति। सृज्यम्—'ऋदुपधात्' इति क्यप्। पाणिभ्यां सृज्यते इति पाणिसर्ग्या रज्जुः—'पाणौ सृजेर्ण्यद्वक्तव्यः', 'समवपूर्वाच्च' इति ण्यति 'चजोः कु घिण्ण्यतोः' इति कुत्वम्। सृजति तामिति स्रक्—'ऋत्विक्' इत्यादिना कर्मणि क्विन्, अमागमः, कुत्वञ्च। संसर्गी—'सम्पृच' इत्यादिना घिनुण्। रज्जुः—'सृजेरसुम् च' इत्युप्रत्यये सलोपोऽसुमागमश्च। तत्र सकारस्य जश्त्वे श्चुत्वम्। स्रग्वी—'अस्मायामेधास्रजः' इति मत्वर्थे विनिः। स्रजिष्ठः। स्रजीयान्। स्रजयति—'विन्मतोर्लुक्' णाविष्ठवदिति चेष्ठेमेयःसु णौ च विनो लुक्। सृज्यते इति गतं श्यनि ॥ १३० ॥

१२३. टु मस्जो शुद्धौ। मज्जति—'झलां जश्' इति सकारस्य दकारः; तस्य चुत्वं जकारः। ममज्ज। ममज्जतुः। ममज्जिथ, ममङ्क्थ। ममज्जिव—क्रादिनियमादिट्। थलि 'उपदेशेऽत्वतः' इति निषेधाद्भारद्वाजनियमाच्च विकल्पः। अनिट्पक्षे 'मस्जिनशोर्झलि' इति नुम्। स च 'मस्जेरन्त्यात्पूर्वं नुममिच्छन्त्यनुषङ्गसंयोगादिलोपार्थम्' इत्यन्त्यात्पूर्वम्, नुमि 'स्कोः संयोगाद्योः' इति सलोपः। जकारस्य 'चो कुः' इति कुत्वे 'खरि च' इति चर्त्वम्। नकारस्य 'नश्चापदान्तस्य' इत्यनुस्वारे परसवर्णः। मङ्क्ता। मङ्क्ष्यति। मज्जतु। अमज्जत्। मज्जेत्, मज्ज्यात्—लिङौ। अमाङ्क्षीत्। अमाङ्क्ताम्। अमाङ्क्षुः—'वदव्रज' इति वृद्धिः। झलि सिचो लोपः। मिमङ्क्षति। मामज्ज्यते। मामङ्क्ति। मज्जयति। अमज्जत्। मज्जथुः—'ट्वितोऽथुच्'। मङ्क्त्वा, मक्त्वा—'जान्तनशां विभाषा' इति क्त्वायां वाऽनुनासिकलोपः। मग्नः, मग्नवान्—'अनिदिताम्' इति नस्य लोपः, सलोपकुत्वे च। 'ओदितश्च' इति नत्वम्। मद्ग्यः, मद्गः—ण्यति घञि च 'चजोः कु घिण्ण्यतोः' इति कुत्वे 'झलां जश् झशि' इति सकारस्य दकारः। मद्गुः—'भृमृशि' इत्यादिनोप्रत्यये न्यङ्क्वादित्वात्कुत्वे पूर्ववत्सकारस्य दकारः। मद्गुरः—बाहुलकात्कुरच्कुत्वञ्च। मज्जा मज्जानौ—'श्वन्नुक्षन्' इति कनिनन्तो निपात्यते ॥ १३१ ॥

१२४. रुजो भङ्गे। चोरस्य रुजति रोगः—'रुजार्थानां भाववचनानामज्वरेः' इति धात्वर्थस्य भावकर्तृकत्वे कर्मणि शेषे षष्ठी। अत्र भावो धात्वर्थः, वचनशब्दश्च कर्तृवचनः। अत्र केचिद्रुजाशब्दस्य व्याधौ रूढत्वाद्भाववचनानामित्यस्य प्रत्युदाहरणं श्लेष्मा पुरुषं रुजति इति रुजेर्व्याध्यर्थत्व एवाहुः। श्लेष्मा पुरुषं रुजतीति

व्याधिना योजयतीति ह्यत्रार्थः। वृत्तिभाष्ययोस्तु रुजां भङ्गमाश्रित्य नदीकूलानि रुजति इति प्रत्युदाहृतम्। अशेषविवक्षायामपि कर्मणि नित्यं द्वितीया भवति—चोरं रुजति इति। रुरोज। रुरुजतुः। रुरोजिथ। रुरुजिव। रोक्ता। रोक्ष्यति। रुजतु। अरुजत्। रुजेत्। रुज्यात्। अरौक्षीत्। अरौक्ताम्। अरौक्षुः—झलि सिचो लोपः। 'चोः कुः'। रुरुक्षति। रोरुज्यते। रोरोक्ति। रोजयति। अरूरुजत्। निष्पूर्वोऽयं व्याधिप्रशमने नीरुजति मिताशी इति। कूलमुद्रुजः—'उदि कूले रुजिवहोः' इति खश्। रोगः—'पदरुज' इति कर्तरि घञ्। हृद्रोगः, हृदयरोगः—'वा शोकष्यञ्रोगेषु' इति हृद्भावविकल्पः। रुक्—क्विप्। रुक्त्वा। रुग्णः, रुग्णवान्—ओदित्वान्नत्वम्। लुग्नं जीर्णवस्त्रम्—'कपिलकादीनां संज्ञाछन्दसोः' इति लत्वम्। रुजा—भिदादेराकृतिगणत्वादङ्। हिंसार्थोऽयं चुरादौ॥ १३२॥

१२५. भुजो कौटिल्ये। भुजति इत्यादि रुजिवत्। मूलविभुजो रथः—'मूलविभुजादीनामुपसङ्ख्यानम्' इत्यणोऽपवादः कः। 'भुजोऽनवने' इत्यत्र संयोगवद् विप्रयोगस्यापि विशेषस्मृतिहेतुत्वाद् 'अवत्सा धेनुरानीयताम्' इतिवदनवनप्रतिषेधेन सम्भवन्नवनसम्बन्धो रौधादिक एव गृह्यते। उक्तञ्च तत्र भाष्ये—'अनवनकौटिल्ययोरिति वक्तव्यम्' इति। तस्मादस्मान्न तङ्॥ १३३॥

१२६. छुप स्पर्शे। द्वितीयादिरयम्। केचित्प्रथमादिं पठन्ति ते भाष्यविरोधादुपेक्ष्याः। तथा च 'दीर्घोऽकितः' इत्यत्र चेच्छिद्यते चोच्छुप्यते इत्यत्र—'छे च' इति तुकि 'गुणो न प्राप्नोति' इत्याशङ्क्य 'परत्वाद्गुणे पश्चात्तुक्' इति समर्थितम्। हरदत्तोऽपि 'परत्वाद्गुणे कृते पश्चात्तुक्' इत्याह। छुपति। चुच्छोप। चुच्छुपतुः। चुच्छुपिथ। चुच्छुपिव। छोप्ता। छोप्स्यति। छुपतु। अच्छुपत्। छुपेत्। छुप्यात्। लुङि—अच्छौप्सीत्। अच्छौप्ताम्। चुच्छुप्सति। चोच्छुप्यते। चोच्छोप्ति। छोपयति। अचुच्छुपत्। छुप्त्वा। छुप्तः॥ १३४॥

१२७. रुश रिश हिंसायाम्। रुशति। रुरोश। रुरोशिथ। रुरुशिव। रोष्टा। रोक्ष्यति। रुशतु। अरुशत्। रुशेत्। रुश्यात्। अरुक्षत्—'शल इगुपधादनिटः' इति क्सः। रुरुक्षति। रोरुश्यते। रोरोष्टि। रोशयति। अरूरुशत्। रिशति। रिरेश। रिरेशिथ। रेष्टा। रेक्ष्यति। रिशतु। अरिशत्। रिशेत्। रिश्यात्। अरिक्षत्। रिरिक्षति। रेरिश्यते। रेरेष्टि। रेशयति। अरीरिशत्॥ १३५–१३६॥

१२८. लिश गतौ। लिशति इत्यादि रिशतिवत्। लिश्यते इति दैवादिकस्य॥ १३७॥

१२९. स्पृश संस्पर्शने। स्पृशति। पस्पर्श। पस्पृशतुः। पस्पर्शिथ। पस्पृशिव—खयः शेषः। स्पर्ष्टा। स्पृशतु। अस्पृशत्। स्पृशेत्। स्पृश्यात्। अस्पार्क्षीत्। अस्पार्ष्टाम्। अस्पार्क्षुः। अस्प्राक्षीत्। अस्प्राष्टाम्। अस्प्राक्षुः—स्पृशमृश' इति पक्षे सिचि पूर्ववदङ्विकल्पः। अन्यदा क्सः—अस्पृक्षत् इत्यादि। पिस्पृक्षति—उरदत्वे

'सन्यत' इतीत्वम् । परीस्पृश्यते । परीस्पर्ष्टि । ऋग्निकोरप्युदाहार्यम् । अपस्पिर्क् इत्यत्र 'क्विन्प्रत्ययस्य कुः' इति पदान्ते कुत्वम् । 'रात्सस्य' इति नियमान्न संयोगान्तलोपः । इह क्विनि दृष्टो धातुः क्विन्प्रत्यय उच्यते । अस्त्येवास्य क्विनो विधानम् 'स्पृशोऽनुदके क्विन्' इति । मन्त्रेण स्पृशतीति मन्त्रस्पृक्—'स्पृशोऽनुदके' इति सुबन्तमात्रे उपपदे क्विन् । उदकं स्पृशतीत्यत्र कर्मण्यण्—उदकस्पर्शः इति । हृदिस्पृक्, दिविस्पृक् इत्यत्र 'हृद्द्युभ्यां ङेरुपसङ्ख्यानम्' इत्यलुक् । स्पर्शो रोगः—'पदरुजविशस्पृशो घञ्' इति घञ् । तत्र वार्त्तिकम् 'स्पृश उपतापे' इति । स्पर्शवानपि अर्शआद्यचा स्पर्श उच्यते ॥ १३८ ॥

१३०. विच्छ गतौ । उदात्तः उदात्तेत् । विच्छायति—'छे च' इति तुक् । 'गुपूधूपविच्छि' इत्यायः सार्वधातुके नित्यः । विच्छायाञ्चकार । विविच्छ । विविच्छतुः । विविच्छथ । विविच्छिव—'आयादय आर्धधातुके वा' इत्यार्धधातुके भाविन्यायोत्पत्तिविकल्पः । निवृत्तिविकल्पे प्रत्ययलक्षणेनायान्तत्वादाम्प्रत्ययः स्यात्—विच्छाञ्चकार इति । विच्छिता, विच्छायिता । विच्छिष्यति, विच्छायिष्यति । विच्छायतु । अविच्छायत् । विच्छायेत् । आशिषि— विच्छाय्यात्, विच्छ्यात् । अविच्छायीत् । अविच्छायिष्टाम् । अविच्छीत् । अविच्छिष्टाम् । विविच्छायिषति, विविच्छिषति । वेविच्छ्यते यङो लुको विविक्षायां त्वार्धधातुकविषयत्वस्यैवापहारादायोत्पत्तिविकल्पो नेति प्रागेवोपपादितत्वाद्यङ्लुग्नास्ति । विच्छयति । अविविच्छत् । विच्छायति । अविविच्छायत् । विश्नः—'यजयाच' इति नङ् । 'च्छ्वोः शूठ्' इति शः । 'नेड्वशि कृति' इतीण्निषेधः । विच्छित्वा । विच्छितः । अयं भाषार्थे चुरादौ ॥ १३९ ॥

१३१. विश प्रवेशने । विशति इत्यादि रिशतिवत् । निविशते—'नेर्विशः' इति तङ् उत्तरसूत्रोपात्तैः पर्यादिभिः साहचर्यान्निरिहोपसर्गो गृह्यते, न तु तत्प्रतिरूपक इति 'अङ्के निविशतीं भयात्' इत्यत्र तङभावः प्रतिरूपकापेक्षो द्रष्टव्यः । निविविशे । निविविशिषे । निवेष्टा । निवेक्ष्यते । निविशताम् । न्यविशत । निविशेत । निविक्षीष्ट । न्यविक्षत । निविविक्षते । निवेविश्यते । निवेविशीति, निवेवेष्टि । विष्ट्वा । विष्टः । विष्टवान् । विट् । विशौ । विशः—क्विप् । देवविशा—अजादिपाठाद्धलान्तादपि टाप् । वेशः—'पदरुजविश' इति कर्तरि घञ्, वेश्याजनसमाश्रये तु 'हलश्च' इति अधिकरणे घञ् । गेहानुप्रवेशमास्ते, गेहंगेहमनुप्रवेशमास्ते—'विशिपति' इत्यादिना णमुल् । तृतीयाप्रभृतित्वात्समासविकल्पः । असमासे व्याप्यमानतायां द्रव्यवचनस्य द्विर्वचनम् । आसेव्यमानतायां तु क्रियावचनस्य णमुलन्तस्य । समासे तु व्याप्त्यासेवनयोस्तेनैवोक्तत्वान्न द्विर्वचनम् । क्त्वाप्यन्यत्र वासरूपेण भवति—गेहमनुप्रविश्यानुप्रविश्यास्ते, गेहंगेहमनुप्रविश्यास्ते इति । समासस्त्वस्य न भवति, अनुपपदे विधानादित्येतत्सर्वं स्कन्दत्यादावुक्तम् । ग्राममभिनिविशते-'अभिनिविशश्च'

इत्याधारः कर्म । अत्र मण्डूकप्लुत्या 'परिक्रयणे सम्प्रदानमन्यतरस्याम्' इत्यतोऽन्यतरस्यांग्रहणानुवृत्तेस्तस्य च व्यवस्थितविभाषात्वात् कल्याणेऽभिनिवेशः, पापेऽभिनिवेशः, या या संज्ञा यस्मिन्नभिविशते इत्यादौ कर्मत्वाभावः । वेशन्तः—'जॄविशिभ्यां झच्' इति झच् । 'झोऽन्तः' । वेश्म—मनिन् ॥ १४० ॥

१३२. मृश आमर्शने । आमर्शनं स्पर्शः । मृशति इत्यादि सर्वं स्पृशतिवत् ॥ १४१ ॥

१३३. णुद प्रेरणे । कर्त्रभिप्रायेऽपि क्रियाफले परस्मैपदार्थः पुनः पाठः । नुदति इत्यादि रूपं पूर्ववत् ॥ १४२ ॥

१३४. षद्लृ विशरणगत्यवसादनेपु । एवं धनपालः । विशरणे इत्यात्रेयमैत्रेयौ, दुर्गश्च । शिति 'पाघ्रा' इत्यादिना सीदादेशः—सीदति इत्यादि । अन्यत्र ससाद इत्यादि सर्वं भौवादिकवत् । इह पाठे प्रयोजनं सीदती सीदन्ती इति नुम्विकल्पः । एवं तर्ह्येतेनैव रूपद्वये सिद्धे तत्रास्य पाठोऽनर्थकः इति चेत्, ज्वलितिकसन्तेभ्यो णार्थः—साद इति । स्वरश्च भिद्यते—शपि सीदतीत्यत्र शप्तिपोः पित्त्वादनुदात्तत्वे धातुरुदात्तः, शे तु प्रत्ययस्वरेणोदात्ते मध्योदात्तत्वम् ॥ १४३ ॥

१३५. शद्लृ शतने । 'पाघ्रा' इत्यादिना शिति शीयादेशः—शीयते इत्यादि । अन्यत्र शशाद । शत्ता इत्यादि सर्वं भौवादिकवत् । 'शदेः शितः' इति शिद्विषये तङ्विधानान्नास्य शताऽस्तीति नुम्विकल्पस्य प्रयोजनस्याभावात्पुनः पाठे प्रयोजनं पूर्ववत्स्वरभेदः ॥ १४४ ॥

१३६. पृच्छत्यादयोऽनुदात्ता उदात्तेतः । विच्छिरेकः सेट् ।

अथोभयपदिन आह—

१३७. मिल सङ्गमने[1] । 'मिल संश्लेषणे' इति पठितस्येह पुनः पाठः कर्त्रभिप्राये तङर्थः' इति आत्रेयः । अयं ह्युदात्तस्वरितेत् । मिलति इत्यादि पूर्ववत् । मिलते । मिमिले । मेलिता । मेलिष्यते । मिलताम् । अमिलत । मिलेत । मेलिषीष्ट । अमेलिष्ट । मिमिलिषते, मिमेलिषते ॥ १४५ ॥

१३८. मुच्लृ मोक्षणे । मुञ्चति—'शे मुचादीनाम्' इति शे नुम् । मुमोच । मुमुचतुः । मुमोचिथ । मुमुचिव । मोक्ता । मोक्ष्यति । मुञ्चतु । अमुञ्चत् । मुञ्चेत् । मुच्यात् । अमुचत्—लृदित्वादङ् परस्मैपदेषु । अमोक्ष्यत् । मुञ्चते । मुमुचे । मोक्ता । मोक्ष्यते । मुञ्चताम् । अमुञ्चत । मुञ्चेत । मुक्षीष्ट । अमुक्त । अमुक्षाताम्—झलि सिचो लोपः । 'चोः कुः' । मुमुक्षति, मुमुक्षते वत्सम् । कर्मकर्तरि मोक्षते वत्सः स्वयमेव इत्यपि भवति । 'मुचोऽकर्मकस्य गुणो वा' इति सन्नन्तस्य पक्षे गुणे 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः । यङ्चिणोः 'भूषाकर्मकिरादिसनाम्' इति निषेधः । मोमुच्यते । मोमोक्ति । मोचयति । अमूमुचत् । मोक्षः—सन्नन्तात् घञि पूर्ववद्गुणाभ्यासलोपौ । निर्मुच्यते

1. क्षीरस्वामी नेदं सूत्रं पठति ।

इति निर्मोकः—घञि 'चजोः कु घिण्ण्यतोः' इति कुत्वम् । 'अमोच्यमश्वं यदि मन्यसे'[1] इत्यत्रावश्यके ण्यः । 'ण्य आवश्यके' इति कुत्वनिषेधः । नखमुचानि धनूंषि मूलविभुजादित्वात्कर्तरि कः । मुष्टेर्बहिर्भूतानीत्यर्थः । जलमुक् । जलमुचौ—क्विप् । मुक्तिः । मुक्ता—'क्तिच्क्तौ च संज्ञायाम्' इति संज्ञायां क्तः । मुक्तैव मौक्तिकम्—'विनयादिभ्यश्च' इति स्वार्थे ठक् । नमुचिः—'इगुपधात्किच्च' इति इन् । 'नभ्राट्' इत्यादिना नञः प्रकृतिभावः । चक्रमुक्तः—'अपेतापोढमुक्त' इति पञ्चमीसमासः । प्रमोचनेऽयं चुरादिः । मुञ्चते, मुञ्चति इति कल्कने शपि गतम् ।। १४६ ।।

१३९. लुप्लृ छेदने । लुम्पति । लुम्पते इत्यादि मुञ्चतिवत् । लोलुप्यते—'लुपसद' इत्यादिना भावगर्ह्यामेव यङ् । लुप्तनिर्दिष्टः इत्यत्रापूर्वकालस्यापि लुप्तशब्दस्य भाष्यकारप्रयोगात्पूर्वनिपातः । लोपयति । अलूलुपत्, अलुलोपत्—काण्यादित्वात् ह्रस्वविकल्पः ।। १४७ ।।

१४०. विद्लृ लाभे । अयं सेडपि मुचादिकार्यानुरोधार्थमिह पठितः । विन्दति । विदन्तः—'विदो लटो वा' इत्यत्र लादेशैः सम्भवदानन्तर्यस्यादादिकस्यैव ग्रह इति विकरणेन व्यवहितानन्तर्यादस्मात्परेषां तिबादीनां णलादयो न भवन्ति । अत एव हेतोः 'विदेः शतुर्वसुः' इत्यत्रापि आदादिक एव गृह्यते इति विन्दन् इत्यत्र वस्वादेशो न भवति । विवेद । विविदतुः । विवेदिथ । विविदिव । वेदिता । वेदिष्यति । विन्दतु । अविन्दत्—'सिजभ्यस्त' इत्यत्रापि पूर्ववत्सम्भवदानन्तर्यस्यादादिकस्यैव ग्रह इति अविन्दन् इत्यत्र जुस् न भवति । विन्देत् । आशिषि विद्यात्—'समो गम्यृच्छि' इत्यत्र गम्यादिभिः साहचर्यात्परस्मैपदिन एव विदेर्ग्रह इत्यस्य तङ्नियमाभावात्कर्माविवक्षायामपि संविन्दति संविन्दते इत्युभयं भवति । अविदत् । अविदताम्—लृदित्वादङ् । विन्दते । विविदे । वेदिता । वेदिष्यते । विन्दताम् । अविन्दत । विन्देत । वेदिषीष्ट । अवेदिष्ट—'उषविद' इत्यत्र उषजागृभ्याम्परस्मैपदिभ्यामादादिकेन जागर्तिना साहचर्यात्परस्मैपदिन आदादिकस्य ज्ञानार्थकस्यैव ग्रह इत्यात्मनेपदिनस्तौदादिकस्य सत्ताविचारणार्थयोरुभयपदिनोश्चाम् न भवति । विविदिषति, विवेदिषति । विदित्वा, वेदित्वा—'रलो व्युपधात्' इति वा कित्त्वम्, 'रुदविद' इत्यत्राकारस्य विवक्षिततत्वादस्य न ग्रहः । अत एव तत्र न्यासे 'विद ज्ञाने' इत्युपात्तम् । तथा च 'सत्सूद्विष' इत्यत्र वृत्तिः—'विद ज्ञाने, विद सत्तायाम्, विद विचारणे—इति त्रयाणां ग्रहणलाभार्थस्याकारस्य विवक्षितत्वाद्' इति । वेविद्यते । वेवेत्ति । वेदयति । अवीविदत् । विन्दतीति विन्दः—'अनुपसर्गाल्लिम्पविन्द' इति शः, विकरणस्यास्य चैकादेशः । गोविन्दः कुविन्दः इत्यादौ 'गवादिषु विन्देः संज्ञायाम्' इति शः । ब्राह्मणवेदं

१. रघु० ३।६५ ।

भोजयति—'कर्मणि दृशिविदोः साकल्ये' इति साकल्यविशिष्टे कर्मण्युपपदे णमुल्, यं यं ब्राह्मणं जानाति तं तं भोजयतीत्यर्थः। अत्र सत्तार्थस्यैकस्य न ग्रहः, सकर्मकत्वात्। यावद्वेदं भोजयति, यावल्लभते तावद्भोजयतीत्यर्थः। 'यावतिविन्दजीवोः' इति णमुल्। 'विदिभिदिच्छिदेः कुरच्' इत्यत्र ज्ञानार्थ एव न्यासे गृहीतः, 'स्वभावात्' इति वृत्तिः। '''विन्दुरिच्छुः' इत्यत्रापि स्वभावात् ज्ञानार्थस्य ग्रहः' इति न्यासे। 'संज्ञायां समज' इत्यत्रापि ज्ञानार्थ एव न्यासे गृहीतः। वित्तं धनम्, वित्तं प्रसिद्धम्—'वित्तो भोगप्रत्यययोः' इति निष्ठानत्वनिषेधः। भुज्यत इति भोगो धनम्, प्रतीयत इति प्रत्ययः प्रसिद्धम्। अन्यत्र विन्नः—'विभाषा गमहनविदविशाम्' इति क्साविड्विकल्पनात् 'यस्य विभाषा' इत्यनिट्त्वम्। कातन्त्रे त्वयमनिडुक्तः। तन्मते वेत्ता, वेत्स्यति इत्यादि। इदं च व्याघ्रभूतेर्नाभिमतम्। तथा हि—'विद्यति विन्त इत्यपि' इति श्यना श्नमा च निर्दिश्य दैवादिकस्य रौधादिकस्य चानिट्त्वं तेनोक्तं नान्यस्य। तथा वृत्तिकारोऽपि 'विद्यति विन्ते' इति निर्देशात् ज्ञानार्थलाभार्थयोरिटमाह—'वेदिता विद्यानां, वेदिता धनस्य' इति। परिवेत्तृशब्दस्तु विद्यतिविन्त्योरन्यतरस्य परिपूर्वस्यार्थान्तरे वृत्तस्य द्रष्टव्यः। तृजन्तोऽप्ययं स्वभावादनूढेऽग्रजे पूर्वमूढेऽवरजे वर्तते। 'अप्तृन्' इत्यादौ नप्त्रादीनां ग्रहणमौणादिकतृन्नन्तानां संज्ञाशब्दानामेषामेव दीर्घः इति नियमार्थम्, न तु संज्ञाशब्दमात्रस्येत्युद्गातारौ इत्यादौ दीर्घो भवति॥ १४८॥

१४१. लिप उपदेहे[1]। लिम्पति। लिलेप। लिलेपिथ। लिलिपिव। लेप्ता। लेप्स्यति। लिम्पतु। अलिम्पत्। लिम्पेत्। लिप्यात्। अलिपत्—'लिपि सिचि ह्वश्च' इत्यङ् परस्मैपदे। अन्यत्र 'आत्मनेपदेष्वन्यतरस्याम्' इति पक्षे सिच्। अलिपत। अलिपेताम्। अलिपन्त। अलिप्त। अलिप्सातताम्। अलिप्सत इत्युभयं भवति। लिम्पते। लिलिपे। लिलिप्सति। लिलिप्सते। लेलिप्यते। लेलेप्ति। लेपयति। अलीलिपत्। लिम्पः—'अनुपसर्गाल्लिम्प' इति शः। निलिम्पा देवाः—'नौ लिम्पेः' इति शः। लिप्तवासितम् इत्यत्र राजदन्तादिपाठात्पूर्वकालस्यापि परनिपातः। लिपिः। लिबिः—'इगुपधात्किच्च' इति इन्प्रत्ययः। 'दिवाविभा' इत्यादौ 'लिपिलिबि' इति निर्देशात्पकारस्य पक्षे बकारः॥ १४९॥

१४२. षिच क्षरणे। सिञ्चति। सिषेच। सिषिचतुः। सिषेचिथ—क्रादिनियमादिट्। 'आदेशप्रत्यययोः' इति प्रकृतेः षत्वम्। सेक्ता। सेक्ष्यति। सिञ्चतु। असिञ्चत्। सिञ्चेत्। सिच्यात्। असिचत्—'लिपिसिचि' इति परस्मैपदेऽङ्। अन्यत्र 'आत्मनेपदेष्वन्यतरस्याम्' इति अङ्विकल्पः—असिक्त। असिक्षाताम्। असिक्षत। असिचेताम् इत्यादि। सिञ्चते। सिषिचे इत्यादि। सिसिक्षति, सिसिक्षते—

१. 'उपदाहे' इति मैत्रेयः।

'स्तौतिण्योरेव' इति नियमान्न षत्वम् । सेसिच्यते—'सिचो यङि' इति न षत्वम् । सेषेक्ति । सेचयति । असीषिचत् । अत्र स्वामी षत्वं नेच्छति । अभिषिञ्चति—अभिषिषेच—उपसर्गादित्यादिना षत्वम् । अभ्यषिञ्चत्—'प्राक्सितादड्व्यवायेऽपि' इति षत्वम् । अभिषिषिक्षति—'स्तौतिण्योरेव' इति नियमम्बाधित्वा 'स्थादिष्वभ्यासेन चाभ्यासस्य' इति षत्वम् । अभिसेसिच्यते इत्यत्र 'उपसर्गात्' इति प्राप्तेरपवादत्वात् 'सिचो यङि' इति निषेधो भवति, 'उपसर्गात्' इति प्राप्तिस्तु पुरस्तादपवादन्यायेन 'सात्पदाद्योः' इति निषेधमेव बाधते । सेक्त्रम्—'दाम्नीशस' इत्यादिना ष्ट्रन् । सिक्थम् पात्रम्—'पातॄतुदिवचिरिचिसिचिभ्यस्थक्' इति थक् । सिचयशब्दस्तु बाहुलकात्कयनन्तः ॥ १५० ॥

१४३. मुचादयोऽनुदात्ताः स्वरितेतः । विन्दतिस्तु सेडेकः[1] ।

१४४. कृती छेदने ।

१४५. उदात्त उदात्तेत् । कृन्तति । चकर्त । चकृततुः । चकर्तिथ । चकृत । चकृतिव । कर्तिता । कर्त्स्यति, कर्तिष्यति—'सेऽसिचि' इत्यादिना सकारादाविड्विकल्पः । कृन्ततु । अकृन्तत् । कृन्तेत् , कृत्यात्—लिङौ । अकर्तीत् । अकर्तिष्टाम् । चिकृत्सति, चिकर्तिषति । चरीकृत्यते । चरिकर्त्ति इत्यादि । कर्तयति । अचकर्तत् , अचीकृतत्—उर्ऋद्वा । विकर्तनः—नन्द्यादिः । कृत्तः । कृत्तवान् । कृत्तिः—क्तिन् । कृत्सम्, उदकम्—'स्नुव्रश्चिकृत्यृषिभ्यः कित्' इति सप्रत्ययः स कित् । 'तितुत्र' इतीण्निषेधः । कृत्स्नम्—'कृत्यशुभ्यां क्स्नः' । बाहुलकादिडभावश्च ॥ १५१ ॥

१४६. खिद परिघाते[2] ।

१४७. अनुदात्त उदात्तेत् । खिन्दति । चिखेद । चिखिदतुः । चिखेदिथ । खेत्ता । खेत्स्यति । खिन्दतु । अखिन्दत् । खिन्देत् । खिद्यात् । लुङि—अखैत्सीत् । अखैत्ताम्—'वदव्रज' इति वृद्धिः । झलि सिचो लोपः । चिखित्सति । चेखिद्यते । चेखेत्ति, चेखिदीति । खेदयति । अचीखिदत् । खित्त्वा । खिन्नः । खिदिरम्—'इषिमदि' इत्यादिना किरच् । खिद्यते इति दैन्ये; दिवादिपाठात् । अयं कर्मकर्तरि इति वदन् वामनो दिवादावस्य पाठं नेच्छति । खिद दैन्य इति रुधादौ ॥ १५२ ॥

१४८. पिश अवयवे ।

१४९. उदात्त उदात्तेत् । पिंशति । पिपेश । पिपेशिथ । पिपिशिव । पेशिता । पेशिष्यति । पिंशतु । अपिंशत् । पिंशेत् । पिश्यात् । अपेशीत् । अपेशिष्टाम् । पिपिशिषति । पेपिश्यते । पेपिशीति, पेपेष्टि । पेशयति । अपीपिशत् । पिशित्वा,

---

1. 'विन्दतिस्त्वनुदात्तः' इत्यपि पाठान्तरं क्वचित् ।

2. 'परितापे' इति क्षीरस्वामी ।

पेशित्वा । पिशितम् । पिशिताशः, पिशाचः[1]—पृषोदरादित्वात्सिद्धिः । पिशङ्गम्—बाहुलकादङ्गच् । पिशङ्गी, पिशङ्गा—'पिशङ्गादुपसङ्ख्यानम्' इति ङीष् । पेशी गर्भकोशः—पचाद्यजन्ताद्गौरादित्वान्ङीष् । अयं दीपनायामपि वर्तते । तथा च 'त्वष्टा रूपाणि पिंशतु' इत्यत्र हरदत्तः—"पिंशतिर्दीप्तिकर्मा"; 'नक्षत्रेभिः पितरो द्यामपिंशन्' इति दर्शनाद्" इति । पिश गतौ चुरादिः ॥ १५३ ॥

१५०. वृत् । तुदादयो मुचादयश्च वृत्ता इत्यर्थः ।

इति श्रीपूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसंगममहाराजमन्त्रिणा
सायणसुतेन माधवसहोदरेण सायणाचार्येण विरचितायां
माधवीयायां धातुवृत्तौ तुदादयस्सम्पूर्णाः ॥



१. पिशितमश्नातीति पिशाचः—पिशितपूर्वादश्धातोरणि इतशब्दस्य लोपः, शकारस्य चकारश्शकारस्य जश्त्वाभावश्च पृषोदरादित्वात् इति भावः ।

# ७. रुधादिगणः

१. रुधिर् आवरणे। अयं द्विकर्मकः। व्रजं गां रुणद्धि। रुन्धः। रुन्धन्ति। रुणत्सि। रुन्धः। रुन्ध। रुणध्मि। रुन्ध्वः। रुन्ध्मः– 'रुधादिभ्यः श्नम्' इति शपोऽपवादः श्नम्। नित्यत्वादयं गुणात्पूर्वम्भवति। मित्त्वादचोऽन्त्यात्परः, शकारः 'श्नान्नलोपः' इति विशेषणार्थः। 'झषस्तथोः' इति झषोऽनन्तरयोस्थोर्धत्वे झलां जश् झशि' इति धातोर्दत्वम्। रुन्ध इत्यादौ क्ङिति सार्वधातुके 'श्नसोरल्लोपः' इत्यकारस्य लोपः। 'नश्चापदान्तस्य' इत्यनुस्वारे परसवर्णः। अल्लोपस्यानयोर्न स्थानित्वम्, 'न पदान्त' इत्यादिना निषेधात्। णत्वे तु कर्तव्ये परसवर्णस्य पूर्वत्रासिद्धत्वान्न तद्भवति। न चानुस्वारात्पूर्वं णत्वप्रसङ्गः; तस्यासिद्धत्वात्। रुणत्सि इत्यत्र 'खरि च' इति चर्त्वम्। रुरोध। रुरुधतुः। रुरुधुः। रुरोधिथ। रुरुधिव—क्रादिनियमादिट्। रोद्धा। रोत्स्यति। रुणद्धु, रुन्धात्। रुन्धाम्। रुन्धन्तु। रुन्धि—हेर्धित्वे जश्त्वम्। रुन्धम्। रुन्ध। रुणधानि। रुणधाव। रुणधाम। अरुणत्, अरुणद्। अरुन्धाम्। अरुन्धन्। अरुणत्, अरुणद्, अरुणः। अरुन्धम्, अरुणधम्। अरुन्ध्व। अरुन्ध्म। हल्ङ्याब्भ्यः' इत्यादिना तिस्योर्लोपः। जश्त्वे वा चर्त्वञ्च। सिपि 'दश्च' इति वा रुत्वमपि। रुन्ध्यात्। रुन्ध्याताम्। रुन्ध्युः। रुन्ध्याः। रुन्ध्याम्। रुन्ध्याव। आशिषि—रुध्यात्। रुध्यास्ताम्। लुङि—'इरितो वा' इति अङ्पक्षे—अरुधत्। अरुधताम्। अन्यदा अरौत्सीत्। अरौद्धाम्। अरौत्सुः। अरौत्सीः। अरौद्धम्। अरौद्ध। अरौत्सम्। अरौत्स्व। अरौत्स्म। रुन्धे। रुन्धाते। रुन्धते—'आत्मनेपदेष्वनतः' इत्यद्भावः। रुन्त्से। रुन्धाथे। रुन्ध्वे। रुन्ध्वहे। रुरुधे। रुरुधाते। रुरुधिरे। रुरुधिषे। रुरुधिवहे। रोद्धा। रोत्स्यते। रुन्धाम्। रुन्धाताम्। रुन्धताम्। रुन्त्स्व। रुणधै। रुणधावहै। अरुन्ध। अरुन्धाताम्। अरुन्धत। अरुन्धाः। अरुन्धि। अरुन्ध्वहि। रुन्धीत। रुन्धीयाताम्। रुन्धीथाः। रुन्धीय। रुन्धीवहि। आशिषि—रुत्सीष्ट। रुत्सीयास्ताम्। 'लिङ्सिचौ' इति कित्त्वम्। अरुद्ध। अरुत्साताम्। अरुत्सत। अरुद्धाः। अरुत्सि। अरुत्स्वहि। कर्मकर्तरि–रुद्ध्यते गौः स्वयमेव। अरुद्ध गौः स्वयमेव इत्यत्र 'न रुधः' इति चिणो निषेधः। शुद्धे तु कर्मणि–अरोधि इति भवति। रुरुत्सते, रुरुत्सति—'हलन्ताच्च' इति सनः कित्त्वम्। रोरुध्यते। रोरोद्धि। रोधयति। अरूरुधत्। अस्याप्रधाने कर्मणि लादयः। अङ्गरोधी—ग्रहादित्वाण्णिनिः। अनुरोधी—'सम्पृच' इत्यादिना घिनुण्। प्रतिरोधी–'भविष्यति गम्यादयः' इति इन्नन्तो भविष्यदर्थे। व्रजे उपरोधम्, व्रजेन उपरोधम्—'सप्तम्यां चोपपीडरुध' इति सप्तम्यन्ते तृतीयान्ते चोपपदे णमुल्। 'तृतीयाप्रभृतीनि' इति

समासविकल्पः । केचिदुपशब्दस्य पीडयतिनैव सम्बन्धमाहुः । भट्टिकारस्य तूपोपसर्गग्रहणमतन्त्रमिति प्रागेवोक्तम् । रोधः—असुन् । रुधिरम्—'इषिमदि' इत्यादिना किरच् । अनुरुध्यते इति श्यनि गतम् ॥ १ ॥

२. भिदिर् विदारणे । भिनत्ति । भिन्तः । भिन्दन्ति । भिनत्सि । भिन्थः । भिन्थ । भिनद्मि । भिन्द्वः । भिन्द्मः । बिभेद । बिभिदतुः । बिभिदुः । बिभेदिथ । बिभिदिव । भेत्ता । भेत्स्यति । भिनत्तु, भिन्तात् । भिन्ताम् । भिन्दन्तु । भिन्धि । भिनदानि । अभिनत् । अभिन्ताम् । अभिन्दन् । अभिनः । अभिन्तम् । अभिन्त । अभिनदम् । अभिन्द्व । भिन्द्यात् । भिन्द्याताम् । भिन्द्याः । भिन्द्याम् । आशिषि—भिद्यात् । भिद्यास्ताम् । । लुङि—अभिदत् । अभिदताम् । अभैत्सीत् । अभैत्ताम् । भिन्ते । भिन्त्से । भिन्दे । बिभिदे । बिभिदिषे । भेत्ता । भेत्स्यते । भिन्ताम् । भिन्दाताम् । भिन्त्स्व । भिनदै । अभिन्त । अभिन्दाताम् । अभिन्दत । अभिन्थाः । अभिन्दि । भिन्दीत । आशिषि—भित्सीष्ट । अभित्त । अभित्साताम् । बिभित्सति, बिभित्सते । बेभिद्यते । बेभिदीति, बेभेत्ति । भेदयति । अबीभिदत् । सर्वत्र रुधिवत्प्रक्रिया । भिदेलिमानि काष्ठानि—'केलिमर उपसङ्ख्यानम्' इति केलिमर् । अयं कर्मकर्तरि । भिद्यो नदः—'भिद्योध्यौ नदे' इति कर्तरि क्यपि निपात्यते । काष्ठभित्, प्रभित्—'सत्सूद्विष' इत्यादिना क्विप् । भिदुरं काष्ठम्—'विदिभिदिच्छिदेः कुरच्' इति कुरच् । स्वभावादयं कर्मकर्तरि । भिदा—भिदादित्वादङ् । तत्र 'भिदा विदारणे' इति पाठादन्यत्र भित्तिः इति । भित्तम्—'भित्तं शकलम्' इति शकले निष्ठानत्वाभावः । अन्यत्र भिन्नम् इति । भिदिरं वज्रम्—'इषिमदि' इत्यादिना किरच् । उद्भित्—क्विप् । उद्भिदः—इगुपधलक्षणः कः ॥ २ ॥

३. छिदिर् द्वैधीकरणे । छिनत्ति इत्यादि भिनत्तिवत् । छिदुरम्—'विदिभिदिच्छिदेः कुरच्' इति कुरच् । 'अयं कर्मकर्तरि' इति वृत्तिः । 'करीन्द्रदर्पच्छिदुरं मृगेन्द्रम्' 'रसाज्ञापाण्डित्यच्छिदुरशशिधामभ्रमकरान्' इत्यादिप्रयोगदर्शनात् वृत्तिकारोक्तं प्रायिकम्' इति आत्रेयः । रज्जुच्छित्, प्रच्छित्—'सत्सूद्विष' इत्यादिना क्विप् । प्रच्छिदा—छिदा द्वैधीकरण इति भिदादिपाठादङ् । अन्यत्र छित्तिः । छेदः—घञ् । छैदिकम्—'छेदादिभ्यो नित्यम्' इति 'तदर्हति' इत्यस्मिन्नर्थे ठक् । शीर्षच्छेद्यः, शैर्षच्छेदिकः—'शीर्षच्छेदाद्यच्च' इति । तदर्हतीत्यर्थे यत्ठकौ, अत्रैव निर्देशात् प्रत्ययसन्नियोगेन शिरसः शीर्षभावः । छिदिरम्—'इषिमदि' इत्यादिना किरच् । छिद्रम्—'स्फायितञ्चि' इत्यादिना रक् । छेद द्वैधीकरणे इति चुरादौ ॥ ३ ॥

४. रिचिर् विरेचने । रिणक्ति । रिङ्क्तः । रिञ्चन्ति । रिणक्षि । रिङ्क्थः । रिङ्क्थ । रिणच्मि । रिञ्च्वः । रिरेच । रिरिचतुः । रिरेचिथ । रिरिचिव । रेक्ता । रेक्ष्यति । रिणक्तु, रिङ्क्तात् । रिङ्क्ताम् । रिञ्चन्तु । रिङ्ग्धि, रिङ्क्तात् । रिणचानि । अरिणक् । रिञ्च्यात् । रिञ्च्याताम् । आशिषि—रिच्यात् । लुङि अरिचत्, अरैक्षीत् । रिङ्क्ते । रिरिचे ।

रेक्ता। रेक्ष्यते। रिङ्क्ताम्। रिङ्क्ष्व। रिणचै। अरिङ्क्त। अरिङ्क्थाः। अरिञ्चि। रिञ्चीत। रिक्षीष्ट। अरिक्त। अरिक्षाताम्। रिरिक्षति, रिरिक्षते। रेरिच्यते। रेरिचीति, रेरेक्ति। रेचयति। अरीरिचत्। रेकः—घञि 'चजोः कु घिण्ण्यतोः' इति कुत्वम्। रिक्थम्—'पातॄतुदि' इति थक्। विरिञ्चिः, विरिञ्चिनः—एते पृषोदरादयः। रिच विरेचनसम्पर्चनयोरिति युजादौ॥ ४॥

५. विजिर्[1] पृथग्भावे। विनक्ति। विङ्क्तः। विङ्क्ते—इत्यादि रिचिवत्। विवेकी—संपृचादिना घिनुण्। विवेकः—घञ्, 'चजोः' इति कुत्वमुभयत्र॥ ५॥

६. क्षुदिर् सम्पेषणे[2]। क्षुणत्ति। क्षुन्तः। क्षुन्दन्ति। क्षुणत्सि। क्षुणद्मि। क्षुन्द्वः। क्षुन्ते। क्षुन्दाते। क्षुन्त्से। क्षुन्ध्वे। क्षुन्द्महे। चुक्षोद। चुक्षुदतुः। चुक्षोदिथ। चुक्षुदिव। चुक्षुदे। चुक्षुदिषे। चुक्षुदिवहे। क्षोत्ता। क्षोत्स्यति। क्षोत्स्यते। क्षुणत्तु। क्षुन्तात्। क्षुन्ताम्। क्षुन्दन्तु। क्षुन्धि। क्षुणदानि। क्षुन्ताम्। क्षुन्दाताम्। क्षुन्दताम्। क्षुन्त्स्व। क्षुणदै। क्षुणदावहै। अक्षुणत्। अक्षुन्ताम्। अक्षुन्दन्। अक्षुणत्, अक्षुणद्, अक्षुणः। अक्षुणदम्। अक्षुन्द्व। अक्षुन्त। अक्षुन्दाताम्। अक्षुन्दत। अक्षुणत। अक्षुन्थाः। अक्षुन्दि। अक्षुन्द्वहि। क्षुन्द्यात्। क्षुन्द्याताम्। क्षुन्दीत। क्षुन्दीयाताम्। आशिषि—क्षुद्यात्। क्षुद्यास्ताम्। क्षुत्सीष्ट। क्षुत्सीयास्ताम्। अक्षुदत्। अक्षुदताम्। अक्षुदन्। अक्षौत्सीत्। अक्षौत्ताम्। अक्षुत्त। अक्षुत्साताम्। चुक्षुत्सति। चुक्षुत्सते। चोक्षुद्यते। चोक्षोत्ति। क्षोदयति। अचुक्षुदत्। क्षुद्रः—'स्फायितञ्चि' इत्यादिना रक्। क्षुद्राभिः कृतं क्षौद्रम् मधु—'क्षुद्राभ्रमर' इति तेन कृतमिति विषयेऽञ्। क्षोदिष्ठः। क्षोदीयान्। क्षोदिमा—'स्थूलदूर' इत्यादिना यणादेर्लोप इष्ठेमेयस्सु पूर्वस्य च गुणः। पृथ्वादित्वादिमनिच्। क्षोदयति—णाविष्ठवदिति यणादेर्लोपो गुणश्च॥ ६॥

७. युजिर् योगे। युनक्ति। युङ्क्तः। युञ्जन्ति। युनक्षि। युनज्मि। युङ्क्ते। युञ्जाते। युङ्क्षे। युञ्जे। युञ्ज्वहे। युयोज। युयोजिथ। युयोज। युयुजिव। युयुजे। योक्ता। योक्ष्यति, योक्ष्यते। युनक्तु, युङ्क्तात्। युङ्क्ताम्। युञ्जन्तु। युङ्ग्धि, युङ्क्तात्। युङ्क्ष्व। युनजानि। युनजाव। युनजाम। युङ्क्ताम्। युञ्ज्व। युनजै। अयुनक्, अयुनग्। अयुङ्क्ताम्। अयुङ्क्त। अयुञ्जि। अयुञ्ज्वहि। युञ्ज्यात्। युञ्ज्याताम्। युञ्जीत। आशिषि—युञ्ज्यात्। युक्षीष्ट। अयुजत्, अयौक्षीत्। अयुक्त। अयुक्षाताम्। अयुक्षत। युयुक्षते। योयुज्यते। योयोक्ति। योजयति। अयूयुजत्। प्रयुङ्क्ते—'प्रोपाभ्यां युजेरयज्ञपात्रेषु' इत्यकर्त्रभिप्रायेऽपि तङ्। यज्ञपात्रे तु पात्राणि प्रयुनक्ति इति। अत्र प्रग्रहणं स्वरान्तस्योपसर्गस्योपलक्षणम्। उपग्रहणमपि स्वरादेः। तथा च वार्त्तिकम्—'स्वराद्यन्तोपसृष्टादिति वक्तव्यम्' इति। युज्यते ब्रह्मचारी योगम्—

1. 'विचिर्' इति क्षीरस्वामी, मैत्रेयश्च। भट्टोजिदीक्षितोऽपि।
2. 'संपेषे' इति क्षीरस्वामी।

'सृजियुज्योः श्यंस्तु' इति कर्मवद्भावः श्यंश्च, यकोपवादः। अत्र कैयटे—'युज्यते इति योगः, ब्रह्मचारिणं योगो युनक्ति संबध्नातीत्यर्थः। ततो ब्रह्मचारिणः कर्तृत्वविवक्षायां युज्यते ब्रह्मचारी योगमिति भवति' इति। श्यन्कोः स्वरे भेदः—'तास्यनुदात्तेत्' इति लसार्वधातुकानुदात्तत्वे यकि प्रत्ययस्वरेण स एवोदात्तः स्यात्, श्यनि तु नित्स्वरेण धातुरुदात्तो भवति। युग्यं वाहनम्—'युग्यञ्च पत्त्रे' इति कर्मणि करणे वा क्यपि कुत्वन्निपात्यते। अन्यत्र योग्यम् इति ण्यति कुत्वम्। प्रयोज्यः। नियोज्यः—'प्रयोज्यनियोज्यौ शक्यार्थे' इति ण्यति कुत्वाभावो निपात्यते। युङ्, युञ्जौ—'ऋत्विक्' इत्यादिना क्विन्, 'ऋत्विगादिभिर्निपातनैः साहचर्यादञ्चुयुजिक्रुञ्चामन्यदपि कार्यम्भवति' इति ज्ञापनाद् उपपदाधिकारेऽपि निरुपपदादयं प्रत्ययो भवति। 'युजेरसमासे' इति सर्वनामस्थाने नुम्। पदान्ते संयोगान्तलोपः। 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्। अन्यत्रानुस्वारपरसवर्णौ। असर्वनामस्थाने युजः, युग्भ्याम् इति। युक्षु इत्यत्र कुत्वे 'खरि च' इति चर्त्वम्। अश्वयुक्—'सत्सूद्विष' इत्यादिना क्विप्। अत्र सूत्रे युजेत्यकारो न विवक्षित इति युनक्तियुज्यत्योर्द्वयोरपि ग्रहणं 'युजेरसमासे' इतीकारवतः सर्वनामस्थाने समासे-नुम्प्रतिषेधोकारविवक्षायां ज्ञापकम्। यदि हि युजेः क्विप् न स्यात् 'ऋत्विक्'-इत्यादिना क्विन्नपि निपातनैः साहचर्यादनुपसृष्टादेव स्यादित्यश्वयुगिति रूपमेव नास्तीति किन्नुम्निषेधेन! योक्त्रः—'दाम्नी' इत्यादिना ष्ट्रन्। अत्र स्तात्यादिसा-हचर्यादुभयपदिचोऽस्यैव ग्रहः, न तु युज्यतेः। अकारस्तूच्चारणमात्रार्थः। हरदत्तोऽपि 'अनभिधानाद्युज्यतेर्न ग्रहः' इति। योगी—संपृचादिना घिनुण्। अत्र युनक्तियुज्य-त्योर्द्वयोरपि ग्रहणम्। निरनुबन्धकस्योपादानादकारप्रश्लेषेऽपि नास्ति प्रमाणम्। प्रयोगः—घञ्। प्रायौगिकम्—भवार्थे अध्यात्मादित्वात् ठञ्। अनुशतिकादित्वा-दुभयपदवृद्धिः। योगाय प्रभवति योग्यः, यौगिकः—'योगाद्यच्च' इति यत्ठञौ। युगम्—घञ्। उञ्छादिपाठादगुणत्वम्, विशिष्टविषयं चैतत्—रथाङ्गे कालविशेषे च। युग्यम्—'तद्वहति रथयुग' इति यत्। संयुगे साधु सांयुगीनम्—'प्रतिजनादिभ्यः खञ्' इति खञ्। प्रतिजनादिपाठादेव संयुगशब्दस्य घञि गुणाभावः। परियोगः, पलियोगः—'परेश्च घाङ्कयोः' इत्यत्र योगे चेति वक्तव्याद्वा लत्वम्॥ ७॥

८. रुधादयोऽनुदात्तास्स्वरितेतः[1]।

अथ सेटौ स्वरितेतावाह—

९. उच्छृदिर् दीप्तिदेवनयोः। उकारः क्त्वायामिड्विकल्पार्थः। छृणत्ति। छृन्तः। छृन्दन्ति। छृणत्सि। छृन्थः। छृन्ते। छृन्त्से। छृन्दे। छृन्द्वहे। चच्छर्द। चच्छृदतुः। चच्छृदुः। चच्छृदिषे—'सेऽसिचि' इति सकारादाविड्विकल्पं बाधित्वा

---

1. मैत्रेयो नेदं सूत्रं पठति।

क्रादिनियमान्नित्य एवेड् भवति। अन्ये तु विकल्पमाहुः, क्रादिनियमस्य प्रतिषेधविषयत्वात्। छर्दिता। छर्दिष्यति। छर्दिष्यते, छर्त्स्यते—'सेऽसिचि' इतीड्विकल्पः। छृणत्तु, छृन्तात्। छृन्ताम्। छृन्द्धि। अच्छृणत्। अच्छृन्ताम्। अच्छृन्त। अच्छृन्दाताम्। छृन्द्यात्। छृन्दीत। आशिषि—छृद्यात्। छर्दिषीष्ट, छृत्सीष्ट। अछृदत्। अच्छर्दीत्। अच्छृत्त। अच्छृत्साताम्। अच्छृत्सत। अच्छर्दिष्ट। चिच्छर्दिषति, चिच्छृत्सति। चरीच्छृद्यते। चछर्ति। छर्दयति। अचच्छर्दत्—अत्र सन्वदित्वादन्तरङ्गत्वात्तुक्। न चास्ति 'वार्णादाङ्गं बलीयः' इति, व्याश्रयत्वात्। तुकः छकार आश्रयः, इत्वस्य तु चङ्परो णिः। अचिच्छृदत्, अचच्छृदत्—'उर्ऋद्वा'। छृत्वा, छर्दित्वा—उदित्वादिड्विकल्पः। छृण्णः। छृण्णवान्—'यस्य विभाषा' इत्यनिट्त्वम्। छृदी सन्दीपने युजादौ॥ ८॥

१० उतृदिर् हिंसानादरयोः। तृणत्ति इत्यादि छृणत्तिवत्॥ ९॥

११. 'उदात्तौ स्वरितेतौ'[1]।

१२. कृती॰वेष्टने। कृणत्ति। कृन्तः। कृन्तन्ति। कृणत्सि। कृणद्मि। कृणत्तु। अकृणत्। कृन्त्यात्। चकर्त। कर्तिता इत्यादि तौदादिकवत्॥ १०॥

१३. उदात्त उदात्तेत्[1]।

१४. ञि इन्धी दीप्तौ।

१५. उदात्तोऽनुदात्तेत्[2]। इन्धे। इन्धाते। इन्त्से। इन्धे। इन्ध्वहे—'श्नान्नलोपः' इति श्नात्परस्य प्रकृतनकारस्य लोपः क्ङितोः। 'श्नसोरल्लोपः' इत्यल्लोपः। इन्धाञ्चक्रे—'इजादेः' इत्याम्। अत्र न्यासकारादयः कंचित् 'इन्धिभवतिभ्यां च' इति इन्धेः परस्य लिटः कित्त्वविधानसामर्थ्यादामो विकल्पमिच्छन्ति, तद् 'इन्धेश्छन्दोविषयत्वाद् भुवो वुको नित्यत्वात्' इत्यादि भाष्यवार्त्तिकविरोधादुपेक्ष्यम्। इन्धिता। इन्धिष्यते। इन्धाम्। इन्धाताम्। इन्धताम्। इन्त्स्व। इनधै। ऐन्ध। ऐन्धाताम्। ऐन्धत। ऐन्धाः। ऐन्धि। इन्धीत। इन्धीयाताम्। आशिषि—इन्धिषीष्ट। इन्धिषीयास्ताम्। ऐन्धिष्ट। ऐन्धिषाताम्। इन्दिधिषते—'न न्द्राः' इति नकारवर्ज्यस्य द्विर्वचनम्। इन्धयति। ऐन्दिधत्। इन्धः—ञित्वाद्वर्तमाने क्तः। ईदित्वादनिट्त्वम्। ऐधः—'अवोदैधौद्म' इति निपातनाद्घञि नलोपः। सान्तस्त्वेधश्शब्द औणादिकेऽसुनि बाहुलकान्नलोपे। अग्निमिन्धे इति अग्निमिन्धः—'भ्राष्ट्राग्न्योरिन्धे' इति मुम्। समित्, समिद्। समिधौ—सम्पदादित्वात् क्विप्। सामिधेन्यो मन्त्रः—'समिधामाधाने षेण्यण्' इति षेण्यण्।

---

१. क॰ ख॰ पुस्तकयोर्नेदं सूत्रद्वयमुपलभ्यते। अस्माभिस्तु अपरधातुकोषाणां प्रामाण्येनेदमत्र निवेशितम्। मैत्रेयस्तु पूर्वसूत्रे 'छृदितृदिवर्जमनुदात्ताः' इत्यधिकं पठति। २. मैत्रेयो न पठति।

सामिधेनी—ऋक्। षित्त्वान्ङीष्। 'हलस्तद्धितस्य' इति यलोपः, अग्निमिन्धे इति अग्नीत् ऋत्विग्विशेषः—'क्विप् च' इति क्विप्। आग्नीध्रः—'अग्नीधः शरणे रण् भं च' इति रण्प्रत्ययः। 'भं च' इति भत्वात्पदत्वाभावाज्जश्त्वं न भवति। शरणं गृहम्। णित्वाद् वृद्धिः। 'आग्नीध्रसाधारणादञ्' इति स्वार्थेऽन्यपीदमेव रूपम्। प्रयोजनन्तु स्त्रियाम्। आग्नीध्री शाला इति—'टिड्ढा' इति ङीप्। विविधमिन्धे इति वीध्रः, अग्निर्विमलश्च—'वाविन्धेः' इति वावुपसर्गे उपपदे इन्धेः क्रन्, कित्त्वादनुनासिकलोपः॥ ११॥

१६. खिद दैन्ये। खिन्ते। खिन्दाते। खिन्त्से। खिन्दे। खिन्ताम्। खिन्दाताम्। खिन्त्स्व। खिनदै। अखिन्दाताम्। अखिन्दि। खिन्दीत। चिखिदे। खेत्ता इत्यादि खिद्यतिवत्। खिन्दतीति शे गतम्॥ १२॥

१७. विद विचारणे। विन्ते इत्यादि खिनत्तिवत्। वित्तः, विन्नः—'नुदविदोन्दत्र' इति निष्ठानत्वविकल्पः। उन्दिना साहचर्यादस्यैव तत्र ग्रहः॥ १३॥

१८. खिदिविदी अनुदात्तावनुदात्तेतौ[1]।

१९. विष्लृ विशेषणे[2]। इतो भुनक्त्यन्ता अनुदात्ता उदात्तेतः। शिनष्टि। शिंष्टः। शिंषन्ति। शिनक्षि। शिनष्मि। शिंष्वः—ष्टुत्वं तवर्गस्य, सकारादौ षस्य कत्वम्। शिशेष। शिशिषतुः। शिशेषिथ। शिशिषिव। शेष्टा। शेक्ष्यति। शिनष्टु। शिंष्टात्। शिंष्टाम्। शिण्ढि—हेर्धित्वं षत्वजश्त्वानुस्वारपरसवर्णा यथायोगम्। शिनषाणि। अशिनट्, अशिनड्—षकारस्य 'झलां जशोऽन्ते' इति जश्त्वे चर्त्वविकल्पः। अशिंष्टाम्। अशिनट्। अशिनषम्। अशिंष्व। शिंष्यात्। शिंष्याताम्। आशिषि—शिष्यात्। लुङि अशिषत्—लृदित्त्वात्परस्मैपदेऽङ्। तङि तु क्सः, व्यत्यशिक्षत इत्यादि। शिशिक्षति, शिशिक्षते। शेशिष्यते। शेशिषीति, शेशेष्टि। शेषयति। अशीशिषत्। शिष्टः। शिष्टवान्। विशेषः। वैशेषिकः—'विनयादिभ्यश्च' इति स्वार्थे ठक्। महत्या विशिष्टः महाविशिष्टः—'महदात्वे घासकरविशिष्टेषूपसङ्ख्यानम्' इति पुंवद्भाव आत्वं च। शेषति इति दण्डके हिंसायां शपि। शेषयति इति युजादिपाठादसर्वोपयोगे॥ १४॥

२०. पिष्लृ संचूर्णने। पिनष्टि इत्यादि शिषिवत्। शुष्कपेषं पिनष्टि, चूर्णपेषं पिनष्टि, रूक्षपेषं पिनष्टि—'शुष्कचूर्णरूक्षेषु पिषः' इति शुष्कादौ कर्मण्युपपदे णमुल्। शुष्कं पिनष्टीत्यर्थः। उदपेषं पिनष्टि—'स्नेहने पिषः' इति स्नेहवाचिनि करणे उपपदे णमुल्, उदकेन पिनष्टीत्यर्थग्रहणम्। 'पेषंवासवाहनधिषु च' इति उद्भावः। सर्वत्र कषादित्वाद्यथाविध्यनुप्रयोगः। पिष्टमयम्—'पिष्टाच्च' इति विकारे मयट्।

१. 'इति आत्मनेभाषा अनुदात्तेतः। इन्धिवर्जमनुदात्तौ'—इति मैत्रेयः।
२. 'विशरणे' इति मैत्रेयः।

पिष्टकर्णः—'कर्णे लक्षणस्य' इति कर्णे उत्तरपदे लक्षणवाचिनो विधीयमानो दीर्घस्तत्रैव पिष्टादिपर्युदासान्न भवति। चोरस्य पिनष्टि—'जासिनिप्रहण' इत्यादिना कर्मणि शेषे हिंसायां षष्ठी, अशेषे चाहिंसायाञ्च चोरं पिनष्टि, धानाः पिनष्टि इति द्वितीयैव भवति ॥ १५ ॥

२१. भन्जो आमर्दने। भनक्ति। भङ्क्तः। भञ्जन्ति। भनक्षि। भनज्मि। भञ्ज्वः—'श्नान्नलोपः' इति प्रकृतिनकारस्य लोपः। नकारे परतोऽकारस्य 'अतो दीर्घो यञि' इति दीर्घो न भवति, अकारान्तस्यानङ्गत्वात्। ङिन्तोस्तु 'श्नसोरल्लोपः' इत्याकारलोपः, झलि 'चोः कुः' इति कुत्वे चर्त्वम्। बभञ्ज। बभञ्जतुः। बभञ्जिथ, बभङ्क्थ। बभञ्जिव—क्रादिनियमादिट्। थलि 'उपदेशेऽत्वतः' इति निषेधाद्भारद्वाजनियमाच्च विकल्पः। भङ्क्ता। भङ्क्ष्यति। भनक्तु। भङ्क्तात्। भङ्ग्धि—हेरपित्त्वात् 'श्नसोरल्लोपः'। धित्वे कुत्वं गकारः। भनजानि। अभनक्, अभनग्—पदान्तत्वात्कुत्वे चर्त्वविकल्पः। अभङ्क्ताम्। अभञ्जन्। अभनक्। अभनजम्। भञ्ज्यात्। आशिषि—भज्यात्। अभाङ्क्षीत्। अभाङ्क्ताम्—झलि सिचो लोपः। बिभङ्क्षति। बम्भज्यते। बम्भञ्जीति, बम्भङ्क्ति—'जपजभदहदशभञ्ज' इति यङि यङ्लुकि चाभ्यासस्य नुक्। तस्य अनुस्वारे पदान्तवद्वचनात्परसवर्णविकल्पः। भञ्जयति। अबभञ्जत्। कर्मणि अभञ्जि, अभाजि—'भञ्जेश्च चिणि' इत्यनुनासिकलोपविकल्पः। भङ्क्त्वा, भक्त्वा—'जान्तनशां विभाषा' इति क्त्वायामनुनासिकलोपविकल्पः। भग्नः। भग्नवान्—'ओदितश्च' इत्योदित्त्वान्निष्ठानत्वम्, तस्यासिद्धत्वात् पूर्वमेव कुत्वम्। भङ्गुरम्—'भञ्जभास' इति कर्मकर्तरि घुरच्। 'चजोः कु घिण्ण्यतोः' इति कुत्वम्। भङ्गः—घञ्। भङ्गा, कुसुम्भम्—कर्मणि घञन्ताट्टाप्। भङ्गानां भवनं क्षेत्रं भङ्ग्यम्—'विभाषा तिलमाषोमाभङ्गाणुभ्यः' इति यत्। विभाषाग्रहणात् खञि भाङ्गीनम्। भङ्गाऽपि धान्यमिति स्थितम्। भङ्गानां रजो भङ्गाकटम्—'अलाबूतिलोमाभङ्गाभ्यो रजसि' इति कटच्। भङ्गी—पिप्पल्यादित्वान्ङीष्। भजि दीप्त्यर्थे इति चुरादौ दण्डके इदित्। भजते भजति इति सेवायां शपि गतम् ॥१६॥

२२. भुज पालनाभ्यवहारयोः। भुनक्ति। भुङ्क्तः। भुञ्जन्ति। भुनक्षि। भुनज्मि। बुभोज। बुभुजतुः। बुभोजिथ—क्रादिनियमान्नित्यमिट्। भोक्ता। भोक्ष्यते। भुनक्तु। अभुनक्। भुञ्ज्यात्। आशिषि—भुज्यात्। अभौक्षीत्। अभौक्ताम्। बुभुक्षति—'हलन्ताच्च' इति सनः कित्त्वम्। बोभुज्यते। बोभुजीति, बोभोक्ति। भोजयति। अबूभुजत्। भुङ्क्ते। भुञ्जाते। भुञ्जते। भुङ्क्षे। बुभुजे। बुभुजिषे। भोक्ता। भोक्ष्यते। भुङ्क्ताम्। अभुङ्क्त। अभुञ्जाताम्। भुञ्जीत। आशिषि—भुक्षीष्ट। अभुक्त। अभुक्षाताम्—'लिङ्सिचावात्मनेपदेषु' इति कित्त्वादगुणत्वम्। बुभुक्षते—'भुजोऽनवने' इति तङ्। 'भुजोऽदने' इति वक्तव्ये 'अनवने' इति वचनमभ्यवहारादन्यत्रापि तङर्थम्। तथा चेदमपि सिद्ध्यति—

'बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्[1]' इति। अनुभव इहार्थः। भोजयति देवदत्तं यज्ञदत्तः—'गतिबुद्धि' इत्यादिना प्रयोज्यः कर्म। निगरणार्थत्वान्नित्यम्परस्मैपदम्। इदमेषां भुक्तम्—'क्तोऽधिकरणे च' इत्यधिकरणे भावे कर्मणि वर्तमाने क्तः। एवं भावकर्मणोरुदाहार्यम्। भुक्ता ब्राह्मणाः इति भुक्तमेषामस्तीत्यर्शआद्यजन्तः। भोज्यम्—'भोज्यं भक्ष्ये' इति ण्यति अकुत्वं निपात्यते। अभक्ष्ये तु भोग्या लक्ष्मीः। भोगः शरीरम्—'हलश्च' इति संज्ञायां घञ्। मातृभोगीणः—'आत्मन्विश्वजनभोगोत्तरपदात्' इति 'तस्मै हितम्' इति विषये खः। आचार्यभोगीनः इत्यत्र 'आचार्यादणत्वं च' इति णत्वाभावः। राजभोगीनः—'राजाचार्याभ्यान्तु नित्यं भोगोत्तरपदाभ्यामेव' इति भोगोत्तरपदाभ्यामेवाभ्यां हितप्रत्ययनियमादाचार्याय हितं राज्ञे हितमित्यत्र वाक्यमेव भवति, न तु सामान्यतश्छः प्रत्ययः। मात्रे हितमित्यादौ तु मात्रीयम् इत्यादि भवत्येव। भुजः—'हलश्च' इति करणे घञ्, 'भुजन्युब्जौ पाण्युपतापयोः' इति अगुणत्वमकुत्वं च निपातितम्। भुजा—अयमेव टाबन्तः। भोजः-पदाद्यच्। भजतीति शपि। भुजतीति शे कौटिल्ये ॥१७॥

२३. शिषादयश्चत्वारोऽनुदात्ताः उदात्तेतः।

२४. तृह हिंसायाम्[2]। तृणेढि। तृण्ढः। तृंहन्ति। तृणेक्षि। तृण्ढः। तृण्ढ। तृणेह्मि। तृंह्वः। तृंह्मः—'तृणह इम्' इति हलादौ पिति सार्वधातुके तृणह इमागमे 'आद्गुणः', झलि पदान्ते च 'हो ढः' इति हो ढत्वे 'झषस्तथोर्धोऽधः' इति धत्वे ष्टुत्वे 'ढो ढे लोपः' इति पूर्वस्य लोपः। अपिति श्नसोरल्लोपेऽनुस्वारपरसवर्णौ, सिपि ढत्वे 'षढोः कः सि' इति कत्वम्। ततर्ह। ततृहतुः। ततृहुः। ततर्हिथ। ततृहिव। तर्हिता। तर्हिष्यति। तृणेढु। तृण्ढात्। तृण्ढाम्। तृंहन्तु। तृण्ढि। तृणहानि। तातङो ङित्त्वान्ङिच्च पिन्न भवतीत्यपित्त्वाद्धेरपि 'सेर्ह्यपिच्च' इत्यपित्त्वान्नेमागमः। उत्तमस्य तु पित्त्वेऽप्यहलादित्वान्न भवति। अतृणेट्, अतृणेड्। अतृण्ढाम्। अतृहन्। अतृणेट्, अतृणेड्। अतृणहम्। अतृंह्व—तिप्सिपोर्हल्ङ्यादिलोपे प्रत्ययलक्षणेन हलादिपित्सार्वधातुकपरत्वादिमागमः। 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति निषेधो वर्णमात्रप्रत्ययविषयत्वादिति हलादिप्रत्ययस्याश्रयणान्न प्रवर्तते। मिपि नित्यत्वात्पूर्वमेवामि अहलादित्वान्नेमागमः। तातङश्च ङित्त्वात् श्नसोरल्लोपे तृणहरूपस्याभावान्नेमागमप्रसङ्गः। तृंह्यात्। तृंह्याताम्—यासुटो ङित्वेन 'ङिच्च पिन्न भवति' इति तिबादेरपित्वान्नेमागमः। आशिषि तृह्यात्। तृह्यास्ताम्। अतर्हीत्। अतर्हिष्टाम्—'नेटि' इति वृद्धिनिषेधः। तितर्हिषति

---

१. रघु० १५।१।

२. अग्रिमसूत्रेण सहकृत्य 'तहहिसि हिंसायाम्' इति पठन्ति मैत्रेय-क्षीरस्वामि-भट्टोजिदीक्षिताः।

तरीतृह्यते । तरीतर्ढि । तर्हयति । अतीतृहत् , अततर्हत्—उर्ऋद्वा । तृहितम् । तर्हित्वा—'न क्त्वा सेड्' इत्यकित्त्वम् ॥ १८ ॥

२५. हिसि हिंसायाम्[१] । हिनस्ति । हिंस्तः । हिंसन्ति । हिनस्सि । हिनस्मि—इदित्त्वान्नुम् । तस्य 'श्नान्नलोपः' इति न लोपः । ङिति श्नसोरल्लोपे 'नश्चापदान्तस्य' इत्यनुस्वारः । जिहिंस । जिहिंसतुः । जिहिंसिथ । जिहिंसिव । हिंसिता । हिंसिष्यति । हिनस्तु । हिंस्तात् । हिंस्ताम् । हिंसन्तु । हिन्धि - श्नान्नलोपश्नसोरल्लोपयोः 'धि च' इति सलोपेऽनुस्वारपरसवर्णौ । हिनसानि । अहिनत् । अहिंस्ताम् । अहिंसन् । अहिनत् , अहिनद् , अहिनः । अहिनसम् । अहिंस्व । तिपि 'तिप्यनस्तेः' इति सस्य दः, सिपि 'सिपि धातो रुर्वा' इति दत्वरुत्वे । हिंस्यात् । हिंस्याताम् । हिंस्यात् । हिंस्यास्ताम्—लिङौ । अहिंसीत् । अहिंसिष्ट । जिहिंसिषति । जेहिंस्यते । जेहिंस्ति । हिंसयति । अजिहिंसत् । हिंसकः—'निन्दहिंस' इति वुञ् । हिंस्रम्—'नमिकम्पि' इत्यादिना रः । हिंसा—'गुरोश्च हलः' इत्यकारः । हिंसित्वा । हिंसितः । हिनस्तीति सिंहः—अच् । पृषोदरादित्वादाद्यन्तविपर्ययः ॥ १९ ॥

२६. उन्दी क्लेदने । उनत्ति । उन्तः । उन्दन्ति । उनत्सि । उनद्मि । उन्द्वः । उन्दाञ्चकार—'इजादेश्च गुरुमतोऽनृच्छः' इत्याम् । उन्दिता । उन्दिष्यति । उनत्तु, उन्तात् । उन्धि । उनदानि । औनत् । औन्ताम् । औन्दन् । औनः, औनत् , औनद् । औनदम्—'दश्च' इति सिपि वा रुत्वम् । उन्द्यात् । उन्द्याताम् । उद्यात् । उद्यास्ताम्—लिङौ । औन्दीत् । औन्दिष्टाम् । उन्दिदिषति—'न न्द्राः' इति नकारस्याद्वित्वम् । उन्दयति । औन्दिदत् । उन्दित्वा । उन्नम्, उत्तम्—ईदित्त्वादनिट्त्वम् । नुदविदोन्द' इति निष्ठानत्वविकल्पः । अवोदः—घञ् ; किञ्चिदार्द्रः । उन्दनम् ओद्ममनिन्नौणादिकः । अत्र 'अवोदैधौद्म' इति नलोपो घञ्यगुणत्वञ्च निपात्यते । इन्दुः—'उन्देरिच्चादेः' इति उप्रत्ययः, इकारश्चोकारस्य । ओदनम्—'उन्देर्नलोपश्च' इति युचि नलोपः । उद्रम्–'स्फायितञ्चि' इति रक् । उदकम्-उदकमिति क्वुन्नन्तो निपातितः । उदधिः । क्षीरोदः—'उदकस्योदः संज्ञायाम्' इति पूर्वपदस्योत्तरपदस्योदादेशः । उदवासः, उदकस्य वाहनः उदवाहनः, उदधिर्घटः—'पेषंवासवाहनधिषु च' इति पेषमादावुत्तरपदे उदकस्योदादेशः । असंज्ञार्थं वचनम् । उदकस्य पात्रम् उदकपात्रम् , उदपात्रम्—"एकहलादौ पूरयितव्येऽन्यतरस्याम्" इति वोदभावः । इह पूरयितव्यः पूरणीयः, तद्वाचिन्यसहाये हलादावुत्तरपदे उदकस्योद इति सूत्रार्थः । उदमन्थः—'मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च' इति मन्थादिषूत्तरपदेषूदकस्योदभावः । उदौदनः इत्यादि चोदाहार्यम् । उदन्वान् घटः, उदन्वान् नाम ऋषिः—'उदन्वानुदधौ च' इति मतुप्युदकस्योदभाव उदधौ संज्ञायां च निपात्यते, उदधिग्रहणमसंज्ञार्थम् । उदन्यति, पिपासती-

त्यर्थः—'अशनायोदन्य' इति क्यच्युदकस्योदन्भावः पिपासायाम् । उदक्याः—'उदकस्योदः संज्ञायाम्' इति दिगादिपाठाद्यत् ॥ २० ॥

२७. अन्जू व्यक्तिम्रक्षणकान्तिगतिषु । अनक्ति । अङ्क्तः । अञ्जन्ति । अनक्षि । अनज्मि । अञ्ज्वः । 'श्नान्नलोपः' । 'श्नसोरल्लोपः' । 'चोः कुः' झलि पदान्ते च, 'खरि च' इति चर्त्वम् । आनञ्ज । आनञ्जतुः । आनञ्जिथ, आनङ्क्थ । आनञ्जिव, आनञ्ज्व—ऊदित्त्वादिड्विकल्पः । क्रादिनियमः प्रतिषेधविषय इत्युक्तम् । 'अत आदेः' इत्यभ्यासादेर्दीर्घः, 'तस्मान्नुड्' इति नुट् । अङ्क्ता, अञ्जिता । अङ्क्ष्यति, अञ्जिष्यति । अनक्तु, अङ्क्तात् । अङ्ग्धि । अनजानि । आनक् । आङ्क्ताम् । आनक् । आनजम् । आञ्ज्व । अञ्ज्यात्, अज्यात्—लिङौ । आञ्जीत् । आञ्जिष्टाम्—'अञ्जेः सिचि' इति नित्यमिट् । अञ्जिजिषति—'स्मिपूङ्रञ्ज्वशां सनि' इति नित्यमिट् । 'न न्द्राः' इति नकारस्य न द्विर्वचनम् । अञ्जयति । आञ्जिजत् । अञ्जित्वा, अङ्क्त्वा, अक्त्वा—अनिट्पक्षे 'जान्तनशां विभाषा' इति पक्षेऽनुनासिकलोपः, इट्पक्षे 'न क्त्वा सेट्' इत्यकित्त्वम् । अक्तः । अक्तवान्—'यस्य विभाषा' इत्यनिट्त्वम् । आज्यम्—'आङ्पूर्वादञ्जेः संज्ञायाम्' इति क्यप्यनुनासिकलोपः । व्यङ्ग्यम्—ण्यति कुत्वम् । अङ्गः—भावे घञ् । अञ्जिका—संज्ञायां ण्वुल् । लिपिविशेषः । अञ्जनम्—ल्युट् । काञ्जिकम् । अञ्जिः=अभिव्यक्तिः, केन जलेन अञ्जिरस्येति बहुव्रीहौ कप् । अञ्जलिः—'ऋतन्यञ्जि' इत्यादिनाऽलिच् । द्वे अञ्जली प्रमाणस्य द्व्यञ्जलम्, त्र्यञ्जलम्—'द्वित्रिभ्यामञ्जलेः' इति समासान्तोऽच् द्विगौ । 'अध्यर्धपूर्वाद्द्विगोः' इत्यार्हीयस्य ठको लुक् । अद्विगौ—द्व्यञ्जलिः ॥ २१ ॥

२८. तन्चु सङ्कोचने[1] । तनक्ति । तङ्क्तः । तन्चन्ति । तनक्षि । तनच्मि । ततन्च । ततन्चतुः । ततन्चिथ, ततङ्क्थ । ततन्चिव—ऊदित्त्वात् स्वरत्यादिना इड्विकल्पः । क्रादिनियमः प्रतिषेधविषय इत्युक्तम् । तङ्क्ता, तन्चिता । तङ्क्ष्यति, तन्चिष्यति । तनक्तु, तङ्क्तात् । तङ्ग्धि । तनचानि । अतनक् । अतङ्क्ताम् । अतन्चन् । अतनक् । अतनचम् । अतन्च्व । तन्च्यात् । आशिषि—तच्यात् । अतन्चीत्, अताङ्क्षीत् । तितन्चिषति, तितङ्क्षति । तातच्यते । तातङ्क्ति । तन्चयति । अततन्चत् । आतन्चनम् -ल्युट् । आतङ्कः—घञ् । तन्चित्वा, तक्त्वा—इट्पक्षे 'न क्त्वा सेट्' इत्यकित्त्वान्नलोपाभावः । तक्तः—'यस्य विभाषा' इत्यनिट्त्वम् । अयं प्रथमान्तोऽपि तृतीयान्तमध्ये ऊदित्प्रसङ्गादेकवर्गीयत्वाच्च पठितः । आत्रेयादयस्तु तृतीयान्तमेव पठन्ति । तक्रम्—'स्फायितञ्चि' इत्यादिना रक् । बाहुलकाच्चकारस्य ककारः ॥ २२ ॥

२९. ओविजी भयचलनयोः । विनक्ति । विङ्क्तः । विञ्जन्ति । विनक्षि । विनज्मि । विञ्ज्वः । विवेज । विविजतुः । विविजिथ । विविजिव—'विज इट्'

---

[1] 'तन्जू संकोचने' इति क्षीरस्वामी ।

इति इडादिप्रत्ययस्य पित्त्वेऽपि ङित्त्वान्न गुणः । विजिता । विजिष्यति । विनक्तु, विङ्क्तात् । विङ्ग्धि । विनजानि । अविनक् । अविङ्क्ताम् । अविनक् । अविनजम् । विञ्ज्यात् । विञ्ज्याताम् । विज्यात् । विज्यास्ताम् — लिङौ । अविजीत् । अविजिष्टाम् । विविजिषति । वेविज्यते । वेविजीति, वेवेक्ति । वेजयति । अवीविजत् । विजित्वा— 'न क्त्वा सेट्' इत्यकित्त्वेऽपि 'विज इट्' इति ङित्त्वान्न गुणः । विग्नः, विग्नवान्— ईदित्त्वादनिट्त्वम्, ओदित्त्वान्निष्ठानत्वम् । वेगितम् इति घञन्तात्तारकादित्वादितजित्युक्तम् । वेवेक्ति, वेविक्ते इति श्लौ गतम् । उद्विजते इति शे ॥ २३ ॥

३०. वृजी वर्जने । वृणक्ति । वृङ्क्तः । वृञ्जन्ति । ववर्ज । ववृजतुः । ववर्जिथ । ववृजिव । वर्जिता । वर्जिष्यति । वृणक्तु, वृङ्क्तात् । वृक्ताम् । वृङ्ग्धि । वृणजानि । अवृणक् । अवृङ्क्ताम् । अवृणजम् । अवृङ्क्त । वृञ्ज्यात् । वृज्यात्—लिङौ । अवर्जीत् । अवर्जिष्टाम् । विवर्जिषति । वरीवृज्यते । वरिवृजीति, वरीवर्क्ति इत्यादि । वर्जयति । अवीवृजत्, अववर्जत् । वर्जित्वा—'न क्त्वा सेट्' इत्यकित्त्वाद् गुणः । वृक्तः— इदित्त्वादनिट्त्वम् । प्रवर्ग्यम्—ण्यति कुत्वम् । अत्र 'वृचि वरणे' इति दुर्गादयः पठन्ति, तस्यापि वृजिवद्रूपं नेयम् ॥ २४ ॥

३१. पृची सम्पर्के । पृणक्ति । पृङ्क्तः । पृञ्चन्ति । पपर्च । पपृचतुः । पपर्चिथ इत्यादि वृजिवत् । सम्पर्की—'सम्पृच' इत्यादिना घिनुण् ॥ २५ ॥

३२. तृहादय उदात्ता उदात्तेतः[1] ।

३३. वृत्[1] । रुधादयो वृत्ता इत्यर्थः । धातुपारायणे तु गणसमाप्तिर्नेष्यते, तेन लुनति पुनति इति सिध्यतीति ॥

इति श्रीपूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसङ्गममहाराजमन्त्रिणा
मायणसुतेन माधवसहोदरेण सायणाचार्येण[2] विरचितायां
माधवीयायां धातुवृत्तौ रुधादयः सम्पूर्णाः ॥



---

१. सूत्रद्वयमिदं क्षीरस्वामी न पठति । २. 'सायणार्येण' इति ख. पुस्तके ।

# ८. तनादिगणः

१. तनु विस्तारे। तनोति। तनुतः। तन्वन्ति। तनोषि। तनोमि। तन्वः, तनुवः। तन्मः, तनुमः—'तनादिकृञ्भ्य उः' इति उप्रत्ययः। शपोऽपवादः। तस्य पिति 'सार्वधातुकार्धधातुकयोः' इति गुणः, अन्यत्राजादौ यणादेशः। वकारमकारादौ 'लोपश्चास्यान्यतरस्यां म्वोः' इति पक्षे लोपः। ततान। तेनतुः। तेनुः। तेनिथ। तेनथुः। तेन। ततान, ततन। तेनिव—किति लिटि 'थलि च सेटि' इत्येत्वाभ्यासलोपौ। तनिता। तनिष्यति। तनोतु, तनुतात्। तनुताम्। तन्वन्तु। तनु—'उतश्च प्रत्ययात्' इति हेर्लुक्। तनवानि। अतनोत्। अतनुताम्। अतन्वन्। अतनोः। अतनवम्। अतन्व, अतनुव। तनुयात्। तनुयाताम्। तनुयाः। तनुयाम्। आशिषि—तन्यात्। तन्यास्ताम्। अतनीत्। अतानिष्टाम्, अतनिष्टाम्—'अतो हलादेः' इति वा वृद्धिः। तनुते। तन्वाते। तन्वते। तनुषे। तन्वे। तनुवहे, तन्वहे। तेने। तेनाते। तेनिषे। तेनिवहे। तनिता। तनिष्यते। तनुताम्। तन्वाताम्। तनुष्व। तनवै। अतनुत। अतन्वाताम्। अतन्वत। अतनुथाः। अतन्व। तन्वीत। तन्वीयाताम्। तन्वीथाः। तन्वीय। आशिषि—तनिषीष्ट। तनिषीयास्ताम्। अतत, अतनिष्ट। अतथाः, अतनिष्ठाः। अतनिध्वम्—'तनादिभ्यस्तथासोः' इति तथासोः पक्षे सिचो लुक्। थासा साहचर्यादात्मनेपदस्य तशब्दस्येह ग्रहणाद् अतनिष्ट यूयमित्यत्र लुग्न भवति। तितनिषति, तितांसति, तितंसति—'तनिपतिदरिद्राणामुपसङ्ख्यानम्' इतीड्विकल्पः। 'तनोतेर्विभाषा' इति झलि सनि वा दीर्घत्वम्। एवं तङ्यपि त्रैरूप्यम्। तन्तंन्यते—'नुगतः' इत्यभ्यासस्य नुक्। तन्तन्ति। तन्तान्तः—'अनुनासिकस्य' इति दीर्घः। लुकि 'अनुदात्तोपदेश' इत्यादिनाऽनुनासिकलोपस्तनोत्यादीनामिति गणनिर्देशान्न भवति। तानयति। अतीतनत्। तायते, तन्यते—'तनोतेर्यकि' इति वाऽऽत्वम्। अवतनोतीति अवतानः—'तनोतेर्ण उपसङ्ख्यानम्' इति णः। तनित्वा, तत्वा—'उदितो वा' इतीड्विकल्पः। 'अनुदात्तोपदेश' इत्यनुनासिकलोपः। ततम्—'यस्य विभाषा' इत्यनिट्त्वम्, पूर्ववदनुनासिकलोपः। सततम्, सन्ततम्—'समो वा हिततततयोः' इति पक्षे मलोपः। ष्यत्रि सातत्यम् इति नित्यं मलोप इष्यते। वितत्य—'वा ल्यपि' इत्यस्य व्यवस्थितविभाषात्वान्नित्यमनुनासिकलोपः। तन्तिः—'न क्तिचि दीर्घश्च' इति क्तिचि दीर्घानुनासिकलोपयोर्निषेधः। ततिः—क्तिनि नलोपः। 'तितुत्र' इतीण्निषेधः। परीतत्—'गमः क्वौ' इत्यत्र गमादीनामिति वचनादनुनासिकलोपे तुक्, 'नहिवृति' इत्यादिना पूर्वपदस्य दीर्घः। तन्तुः—'सितनिगमि' इति तुन्। तन्त्रम—ष्ट्रन्।

तातः—'द्रुतनिभ्यां दीर्घश्च' इति तप्रत्यये अनुनासिकलोपे पूर्वस्य दीर्घः। तनुः—'भृमृशि' इत्यादिनोप्रत्ययः। गुणवचनत्वेन 'वोतो गुणवचनात्' इति वा ङीषि—तन्वी। तनुशब्दः स्त्रीजातिवचनोऽपि, तत 'ऊङुत' इत्यूङि तनूः। तथा च प्रयुज्यते 'ननु सुतनूमनुपालयानुयान्तीम्[1]' 'वरतनु सम्प्रवदन्ति कुक्कुटाः' इति। केवलस्य त्वस्याप्रसिद्धत्वादप्रयोगः। तनूः शरीरम्—'कृषिचमितनि' इत्यूकारः। तनुः। तनुषी—'अर्तिपृवपियजितनिधनितपिभ्यो नित्' इति उस्। तन्त्रम्—ष्ट्रन्। तातः—द्रुतनिभ्यां दीर्घश्च' इति क्तप्रत्यय अनुनासिकलोपे पूर्वस्य दीर्घः। तितउः परिपवनम्—'तनोतेर्डउः सन्वच्च' इति डउप्रत्यये डित्त्वाट्टिलोपः। सन्वद्भावाद् द्विर्वचनादि, सूत्रे 'डउः' इति व्यस्तोच्चारणान्न सन्धिकार्य्यम्। तनु श्रद्धोपकरणयोरिति युजादौ॥ १॥

२. षणु दाने। सनोति। सनुते इत्यादि तनोतिवत्। 'धात्वादेः षः सः'। णत्वन्तु निमित्तापायादपैति। विशेषस्तु 'जनसनखनां सञ्झलोः' इति झलादौ सनि क्ङिति च नित्यमात्वम्। 'ये विभाषा' इति यकारादौ क्ङिति वाऽऽत्वं च। सिषासति—'सनीवन्त' इत्यादिनेड्विकल्पः। इट्पक्षे सिसनिषति। अत्र षण्परत्वात् 'स्तौतिण्योरेव' इति नियमात् प्रकृतेस्सस्य न षत्वम्। सात्वा—उदित्त्वादिड्विकल्पः। इटि—सनित्वा। सातः, सातवान्—'यस्य विभाषा' इत्यनिट्त्वम्। तादावनुनासिकलोपं बाधित्वा 'जनसनखन' इत्यात्वं भवति। असात, असाथाः इत्यत्र 'तनादिभ्यस्तथासोः' इति सिचो लुकि तथासोर्ङित्त्वमाश्रित्य आत्वं भवति। सायते, सन्यते; संसन्यते, सासायते इति यकि यङि च 'ये विभाषा' इत्यात्वं वा भवति। सन्यात इत्यत्र तु 'ये विभाषा' इत्यात्वम् 'ये इत्यत्वतो निर्देशान्न भवति' इति धातुपारायणे। सातिः, सतिः, सन्तिः—'सनः क्तिचि लोपश्चास्यान्यतरस्याम्' इत्याकारः, पक्षे तदभावे नलोपविकल्पश्च। सातिः—'ऊतियूति' इत्यादिना क्तिनि निपात्यते॥ २॥

३. क्षणु हिंसायाम्। क्षणोति। क्षणुते। चक्षाण। चक्षणे। क्षणिता। क्षणितासि। क्षणितासे। क्षणिष्यति। क्षणिष्यते। क्षणोतु, क्षणुतात्। क्षणुताम्। क्षण्वाताम्। अक्षणोत्। अक्षणुत। क्षणुयात्। क्षण्वीत। क्षण्यात्। क्षणिषीष्ट। अक्षणीत्। अक्षणिष्टाम्—'ह्म्यन्त' इत्यादिना 'अतो हलादेः' इति वृद्धिनिषेधः। अक्षत, अक्षणिष्ट। अक्षथाः, अक्षणिष्ठाः—'तनादिभ्यः' इति वा सिचो लुक्, तथा तनोत्यादित्त्वादनुनासिकलोपः। चिक्षणिषति। चङ्क्षण्यते। क्षाणयति। अचिक्षणत्—'सन्वल्लघुनि' इति त्वनेकहल्व्यवधानेऽपि भवति, 'अत्स्मृदृत्वर' इत्यादिना इत्वापवादादत्वविधानाज्ज्ञापकात्। अयमप्युपदेशे तवर्गीयो मतः। लक्षणवशात्तु णत्वम्, तेन

---

१. अनुपलब्धमूलमिदं पद्यम्।

चक्षन्ति इत्यत्रानुस्वारपरसवर्णौ भवतः। णत्वं त्वनुस्वारीभूतो णत्वमतिक्राम-तीति तत्र तत्रोक्तत्वान्न भवति। क्षत्वा, क्षणित्वा—'उदितो वा' इत्युदित्त्वादिड्-विकल्पः। क्षतः—'यस्य विभाषा' इत्यनिट्त्वम्। क्षन्तिः इत्यत्र 'न क्तिचि दीर्घश्च' इति दीर्घानुनासिकलोपनिषेधः॥ ३॥

४. क्षिणु च[1]। हिंसायामित्यर्थः। क्षिणोति। क्षिणुते। चिक्षेण। चिक्षिणे। क्षेणिता। क्षेणितासे। क्षेणिष्यति। क्षेणिष्यते। क्षिणोतु। क्षिणुताम्। अक्षिणोत्। अक्षिणुत। क्षिणुयात्। क्षिण्वीत। क्षिण्यात्। क्षिणिषीष्ट। अक्षेणीत्। अक्षित। अक्षेणिष्ट। अक्षिथाः, अक्षिणिष्ठाः। पूर्ववत्पाक्षिके सिज्लुक्यनुनासिकलोपः। चिक्षिणिषति। क्षेणयति। क्षिणित्वा, क्षेणित्वा—'रलो व्युपधात्' इति कित्त्वविकल्पः। क्त्वायामुदित्त्वा-दिडभावे तु क्षित्वा—तनोत्यादित्वादनुनासिकलोपः। चेक्षिण्यते। चेक्षेण्ति। अय-मपि तवर्गीयोपदेशः॥ णत्वन्तु लाक्षणिकमितीह क्षणिवदनुस्वारीभूतो णत्वमति-क्रामति। क्षितः–'यस्य विभाषा' इत्यनिट्त्वम्। क्षितिः—'तितुत्र' इत्यनिट्त्वम्। अत्र सर्वत्र पिद्वचनेषु विकरणापेक्षो गुणः 'संज्ञापूर्वको विधिरनित्यः' इति न भवतीति आत्रेयमैत्रेयौ। तथा च आपिशलिः—'शब्विकरणे गुणः' इति धातुगुणम-भिधाय 'करोतेश्च' 'मिदेश्च' इत्यसूत्रयत्, 'पुगन्तलघूपधस्य च' इत्यत्र रक्षितेन चोक्तम्। एवञ्च 'पञ्चबाणः क्षिणोति' इति सिद्धयति। शाब्दिकाभरणे तु गुण एवोदाहृतः। शाकटायनक्षीरस्वामिभ्यामयं धातुर्न पठ्यते। अत एवात्रेयमैत्रेया-भ्यामपि स्वादौ छान्दसेषु पठितस्य क्षेर्धातोर्भाषायामपि प्रयोगाङ्गीकारेण क्षिणो-तीति साधितम्। शाकटायनः पुनस्तत्र छान्दसत्वमेवाह। इहापि क्षिणुं न पपाठेति तन्मते क्षिणोतिप्रयोगो भाषायामसाधुरेव॥ ४॥

५. ऋणु गतौ[2]। अयमपि तवर्गीयान्तोपदेशः। लाक्षणिकं णत्वम्। अर्णोति। अर्णुतः। अर्ण्वन्ति। अर्णोषि। अर्णोमि। अर्णुते। अर्ण्वाते। अर्ण्वते। अर्ण्वे। आनर्ण। आनृणतुः। आनर्णिथ। आनृण। आनृणिव। आनृणे। आनृणिषे। आनृणिवहे। क्षिणोतिवल्लिट्प्रक्रिया। अर्णिता। अर्णिष्यति, अर्णिष्यते। अर्णोतु। अर्णुहि—गुणे कृते संयोगपूर्वत्वादुकारस्य 'उतश्च प्रत्ययात्' इति हेर्लुग्न भवति। आर्णोत्। आर्णुत। आर्ण्वाताम्। अर्णुयात्। अर्ण्वीत। सर्वत्र विकरणापेक्षो गुणः। आशिषि ऋण्यात्। अर्णिषीष्ट। आर्णीत्। आर्णिष्टाम्। आर्णिष्ट, आर्त। आर्णिष्ट। आर्णिष्ठाः, आर्थाः—तनादित्वात्सिचो वालुक्यनुनासिकलोपः। अर्णिनिषति—गुणे कृते 'न न्द्राः' इति रेफवर्जितस्य द्विर्वचनम्। अत्र आत्रेयः–"नान्तोपदेशत्वेऽपि द्विर्वचने कर्तव्ये णत्वस्य नासिद्धत्वम्; 'पूर्वत्रासिद्धीयमद्विर्वचने' इति न्यायात्। तेन प्रकृत्यभ्यास-योर्द्वयोरपि णकारौ'' इत्याह। धातुपारायणे तु णत्वस्यासिद्धत्वादर्णत्वस्य द्विर्वचने

१. क्षीरस्वामी धातुमिमं दुर्गमतेन पठति, न तु स्वमतेनेति ध्येयम्।
२. 'दीप्तौ गमने च' इति मैत्रेयः।

परस्य व्यवधानात् णत्वाभावो दर्शितः। 'प्राणिणत्' इत्यादावनितेः साभ्यासस्य णत्वविधानात् लिङ्गात् 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्यानित्यत्वज्ञापनाण्णत्व-विषये तस्याप्रवृत्तेरूर्णोनूयत इत्यादिवण्णत्वस्यासिद्धत्वैत्र भवितव्यमिति पारायणिक-पक्षो ज्यायान्। अत एव पारायणिकपक्षविरोधाण्णोपदेशस्य पक्षो दूष्य एव। अर्णयति। आर्णयत्। मा भवानर्णिनत्, मा भवानृणिनत्—उत्त्रर्द्धा। मा भवानृणिनत्—पूर्ववत्परस्य णत्वं न भवति। ऋत्वा, अर्णित्वा—उदित्त्वादिड्विकल्पः। अनिट्-पक्षे 'अनुदात्तोपदेश' इत्यनुनासिकलोपः। ऋतः। ऋतवान्। ऋतिः। स्वर्णम्—पचाद्यचि गुणः, उपसर्गस्य यण्। 'तन्वादीनां छन्दस्युपसङ्ख्यानम्' इत्युपसर्ग-स्योवङि सुवर्णम्—'संज्ञाशब्दत्वाद्भाषायामप्यस्य प्रयोगः साधुः' इति आत्रेय-मैत्रेयौ। शोभनो वर्णोऽस्येत्यपि शक्यते व्युत्पादयितुम्। द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसुवर्णम्, द्विसौवर्णिकम्—'सुवर्णशतमानयोरुपसङ्ख्यानम्' इत्यार्हीयस्य ठकः पक्षे लुक्। लुगभावे 'परिमाणान्तस्य' इत्युत्तरपदवृद्धिः। अर्णः—असुन्। अर्णवः—'अर्णसो लोपश्च' इति मत्वर्थीये वप्रत्यये सलोपः। अत्र आत्रेयमैत्रेयादिभिः 'शवि-करणे गुणः, करोतेश्च, मिदेश्च' इति आपिशलिस्मरणाद्विकरणापेक्षो गुणोऽन्यस्य धातोर्न भवतीति क्षिणोति इत्यादि दर्शितम्। तथा च क्षीरस्वामी अपि क्षिणिप्रभृतीन् प्रस्तुत्य 'इमे सार्वधातुके सन्दिग्धगुणाः' इत्याह। सार्वधातुके इति सार्वधातुके परे उप्रत्यये इत्यर्थः। चन्द्रस्तु गुणाभावं न सहते। यदाह अर्णोतीत्याद्युदाहृत्य—'क्षिणे-र्धातोर्लघुरूपान्तस्य गुणो नेष्यत इत्येतस्यान्योऽभिप्रायो मृग्यः' इति। अतः काश्य-पादयः 'करोतेश्च' 'मिदेश्च' इति सूत्रमन्यथाऽव्याख्यन्—'करोतेः सम्बन्धिनि विकरणे धातोर्गुणो भवति अर्णोति' इति। अत्र वर्द्धमानः—'करोतेः सम्बन्धिनि गुण इति व्याख्यानं न्याय्यम्' इति। मुनित्रयाविरोधादस्य न्याय्यत्वम्॥ ५॥

६. तृणु अदने। तर्णोति। तर्णुते। ततर्ण। इत्यादि पूर्ववत्। तृणम्—घञर्थे कः। तृण्या—'पाशादिभ्यो यः' इति समूहे यः। कत्तृणं तृणजातिविशेषः—'तृणे च जातौ' इति कोः कद्भावस्तत्पुरुषे। 'स्वाभाविकमस्य धातोर्णत्वम्' इति केचित्, तेषां यङ्लुकि तरीतृण्ढि इति भाव्यम्। अन्येषां तु अनुस्वारीभूतो णत्वमतिक्राम-तीति तरीतृन्धि इति॥ ६॥

७. घृणु दीप्तौ। घर्णोति। घर्णुते। जघर्ण इत्यादि पूर्ववत्। घृणा—भिदादेरा-कृतिगणत्वादङ्। शिवस्वामी त्वकारोपधं पपाठ॥ ७॥

८. तनादय उदात्ताः स्वरितेतः।

९. वनु याचने। दन्त्योष्ठ्यादिः। वनुते। ववनुपे। वन्वे। वनुवहे। ववने। वव-निषे। वादित्वादेत्वाभ्यासलोपनिषेधः। वनिता। वनिष्यते। वनुताम्। अवनुत। वन्वीत। आशिषि—वनिषीष्ट। अवनिष्ट, अवत। अवनिष्ठाः, अवथाः। विवनिषते। वंवन्यते। वंवन्ति—'ग्लास्नावनुवमां च' इत्यनुपसृष्टानां मित्त्वविकल्पे 'वनु च

नोच्यते' इति घटादिकस्यास्य च ग्रहः—इत्येके। अन्ये 'अनन्तरस्य विधिः' इति न्यायेन 'घटादिकस्य वनतेरेव' इति। तेन वानयति। प्रवानयति इत्येव भवति। वनित्वा, वत्वा—उदित्त्वादिडभावे तनोत्यादित्वादनुनासिकलोपः। वतः, वतवान्—'यस्य विभाषा' इत्यनिट्त्वम्। वन्तिः—'न क्तिचि दीर्घश्च' इत्यनुनासिकलोपस्य दीर्घस्य च निषेधः। वनी याच्ञा, तामिच्छतीति क्यजन्तात् ण्वुल्, वनीयकः अर्थिपर्यायः। अन्ये तु वनीपक इति पकारान्तं पठन्ति। तेषां वनीं पातीति वनीपः, ततः संज्ञायां कन्। चान्द्रास्त्विमं परस्मैपदिनमाहुः। तन्मते वनोति। ववान् इत्यादि ॥ ८ ॥

१०. मनु अवबोधने[1]। मनुते। मेने इत्यादि वनुवत् ॥ ९ ॥

११. उदात्तावनुदात्तेतौ।

१२. डु कृञ् करणे। करोति। कुरुतः। कुर्वन्ति। करोषि। करोमि। कुर्वः। कुर्मः। कुरुते। कुर्वाते। कुरुषे। कुर्वे। कुर्वहे—'अत उत्सार्वधातुके' इति सार्वधातुकपरस्योप्रत्ययान्तस्य करोतेरकारस्योकारः। तपकरणाल्लघूपधगुणो न भवति। 'नित्यं करोतेः' इति वकारमकारादौ नित्यमुकारस्य लोपः। कृतेऽस्मिन् 'हलि च' इति दीर्घः 'न भकुर्छुराम्' इति निषिध्यते। न च 'उत्' इति तपरत्वेनैव विकारनिवृत्त्यर्थेन गुणवद्दीर्घोऽपि न भविष्यतीति मन्तव्यम्; तस्मिन्हि विकारनिवृत्त्यर्थे प्रसक्ते दीर्घस्य पूर्वत्रासिद्धत्वात्। न चोकारलोपस्य स्थानिवद्भावेनेह हल्परत्वाभावः; 'दीर्घविधिं प्रति न स्थानिवद्' इति वा 'पूर्वत्रासिद्धे न स्थानिवत्' इति वा स्थानिवत्त्वस्य निषेधात्। चकार। चक्रतुः। चकर्थ। चकृव—क्रादिव्यतिरेकाभावाल्लिटीडभावः। चक्रे। चक्राते। चकृषे। चकृवहे। न चाजादावन्तरङ्गत्वात्पूर्वं यण्यनच्कत्वाद् द्विर्वचनाप्रसङ्गः शङ्क्यः; द्विर्वचनेऽचि' इति यणः स्थानिवत्त्वात्। कर्ता। करिष्यति—'ऋद्धनोः स्ये' इतीट्। करोतु, कुरुतात्। कुरुताम्। कुरु। करवाणि। कुरुताम्। कुरुष्व। करवै—'अत उत्सार्वधातुके' इत्यस्मिन्कर्तव्ये 'उतश्च प्रत्ययात्' इत्यस्य हिलुकः 'असिद्धवदत्र' इत्यसिद्धत्वात्सार्वधातुकपरत्वेनोत्वं भवति। अकरोत्। अकरोः। अकरवम्। अकुरुत। अकुरुथाः। कुर्यात्। कुर्याताम्। कुर्युः—'ये च' इति यकारादौ करोतेरुप्रत्ययस्य नित्यं लोपः। कुर्वीत। कुर्वीयाताम्। कुर्वीय—यणादेशः। आशिषि—क्रियात्। क्रियास्ताम्—'रिङ् शयग्लिङ्क्षु' इति रिङादेशोऽन्त्यस्य, रीङि प्रकृते रिङ्विधानात् 'अकृत्सार्वधातुकयोः' इति दीर्घो न भवति। कृषीष्ट, कृषीयास्ताम्—रिङादेशे यकारादाविति सीयुटि न भवति। 'उश्च' इति लिङ्सिचोरात्मनेपदे कित्वान्न गुणः। अकार्षीत्। अकार्ष्टाम्—सिचि वृद्धिः। अकृत। अकृषाताम्—ह्रस्वादङ्गात्' इति सिचो लोपः। 'तनादिभ्यस्तथासोः' इति विकल्पितो लुग्न भवति; तनादित्वादेवास्योप्रत्यये

---

१. 'अवबोधे' इति क॰ पुस्तके। 'बोधने' इति मैत्रेयः।

सिद्धे पृथग्विधानादन्यत्तनादिकार्यं न भवतीति ज्ञापनात् । यद्वा—अस्तु विकल्पः, तथापि 'ह्रस्वादङ्गात्' इति लुगभावे लोपो भविष्यति। न च विकल्पेनास्य बाधः, असिद्धत्वाल्लोपस्य । न च विकल्पविधानसामर्थ्यादसिद्धत्वेऽपि बाधः, तस्यान्यत्र अतत, अतनिष्ट इत्यादौ चरितार्थत्वात् । एवं च विकरणविधौ कृञ उपादानं प्रपञ्चार्थं भवति। कर्मणि क्रियते, अकारि—'रिङ् शयग्लिङ्क्षु' इति रिङादेशो यकि। अत्र आत्रेयः—'कथं क्रियति इति पुरुषकारः' इत्युपादाय 'व्यत्ययो बहुलम्' इति कर्मण्यपि परस्मैपदसिद्धिः । तथा च गुरुटीकायाम् 'कृताः पुरोडाशाः, करिष्यन्निर्वापाः' इति । अत्र कर्मण्येव लृटि शतृप्रयोगो दृश्यते । प्रयोगमुखे तु तिङन्तप्रतिरूपको निपात इत्युक्तम्' इत्याह । कर्मकर्तरि—क्रियते कटः स्वयमेव, अकारि, अकृत कटः स्वयमेव—'अचः कर्मकर्तरि' इति तशब्दे च्लेर्वा चिण् । चिकीर्षति—इको झल्' इति कित्त्वान्न गुणः । 'अज्झनगमाम्' इति दीर्घे 'ॠत इद्धातोः' इतीत्वे रपरत्वे 'हलि च' इति दीर्घः । चेक्रीयते । रीङ्—चरीकर्ति इत्यादि । कारयति कटं देवदत्तं यज्ञदत्तः, देवदत्तेन इति वा—'हृक्रोरन्यतरस्याम्' इति वा प्रयोज्यं कर्म ।

संस्करोति—अलङ्करोतीत्यर्थः। तत्र संस्कुर्वन्ति समवयन्तीत्यर्थः। समस्करोत्। सञ्चस्कार । सञ्चस्करतुः । सञ्चस्करिथ । सञ्चस्करिव—'सुट् कात्पूर्वः' । 'अडभ्यासव्यवायेऽपि' इति अधिकारे 'संपर्युपेभ्यः करोतौ भूषणे' 'समवाये च' इति कात्पूर्वः सुट्, समवायः समुदायः । 'समः सुटि' इति समो मकारस्य रुः । तस्य 'खरवसानयोः' इति विसर्जनीये 'विसर्जनीयस्य सः' इति सत्वम् । 'वा शरि' इति विसर्जनीयो न भवति, व्यवस्थितविभाषाविज्ञानात् । वार्त्तिके तु 'संपुंकानां सो वक्तव्यः' इति रोरपवादः स एव विहितः । भाष्ये तु '''समः सुटि' इति द्विसकारकनिर्देशात्सूत्रेणैव सविधिः सिद्धः'' इत्युक्तम् । 'अत्रानुनासिकः पूर्वस्य तु वा' इति पक्षे सात्पूर्वस्यानुनासिकः । 'अत्र'ग्रहणं रुप्रकरणोपलक्षणम्, अनुनासिकाभावे 'अनुनासिकात्परोऽनुस्वारः' इत्यनुस्वार आगमः । क्रादिसूत्रे 'कृञोऽसुडिति वक्तव्यम्' इति वचनात्ससुट्कः क्राद्यन्यो भवतीति लिटीडागमः । 'भारद्वाजनियमोऽप्यसुट एवेष्यते' इति वृत्त्यादौ स्थितमिति नेड्विकल्पः । 'सुटि कात्पूर्वग्रहणं सुटोऽभक्तत्वज्ञापनार्थम्' इति व्यवस्थितत्वात् संस्क्रियते इत्यादावृकारान्तत्वेऽपि संयोगादित्वाभावात् 'गुणोर्तिसंयोगाद्योः' इति गुणो न भवति । तथा संस्कृषीष्ट, समस्कृषाताम् इत्यादौ 'लिङ्सिचोरात्मनेपदेषु' इति 'ॠतश्च संयोगादेः' इतीण्न भवति । 'ॠतश्च संयोगादेर्गुणः' इत्यत्र 'संयोगोपधग्रहणं कर्तव्यं कृञर्थम्' इति उक्तत्वात् संयोगवत्त्वाभावेऽपि ऋकारस्य सञ्चस्करतुः इत्यादौ किति लिटि गुणो भवति। एवम् उपस्करोति इत्यादि। परिपूर्वत्वे तु 'परिनिविभ्यः' इत्यादिना सुटः षत्वं भवति परिष्करोति इत्यादि । अड्व्यवाये तु 'सिवादिनां वाड्व्यवायेऽपि'

इति विकल्पो भवति—पर्यष्करोत्, पर्यस्करोत् इत्यादि । परिचस्कार इत्यादौ 'स्थादिष्वभ्यासेन' इति न षत्वम्; तत्र यतः 'प्राक्सिताद्' इत्यनुवर्तते । सम्पूर्वस्य क्वचिदभूषणेऽपि सुडिष्यते । 'त इषुं समस्कुर्वत' इति । सूत्रे च दृश्यते 'संस्कृतं भक्षाः' इति । उपात्कृञः 'उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु' इत्येतेष्वपि कात्पूर्वः सुड् भवति । प्रतियत्नस्सतो गुणान्तराधानहेतुरिह साराधिक्याय वृद्धस्य वा तादवस्थ्याय । विकृतमेव वैकृतम्, प्रज्ञादित्वात्स्वार्थेऽण् । गम्यमानार्थस्य वाक्यैकदेशस्य स्वरूपेणोपादानं वाक्याध्याहारः । एधो दकस्योपस्कुरुते—'कृञः प्रतियत्ने' इति कर्मणि शेषे षष्ठी, 'गन्धनादि'सूत्रेण प्रतियत्ने तङपि । उपस्करोत्यन्नम्, विकरोतीत्यर्थः । उपस्करोति, वाक्यैकदेशमध्याहरतीत्यर्थः । 'उपस्कृतं भुङ्क्ते, उपस्कृतं जल्पति' इति वृत्त्युदाहरणे हरदत्तेन क्रियाविशेषणं व्याख्यातम् । उपस्कुरुते दोषम् । श्येनो वर्तिकामवकुरुते । राजानं प्रकुरुते, परदारान्प्रकुरुते । एधो दकस्योपस्कुरुते । गाथाः प्रकुरुते । शतं प्रकुरुते—सूचयति, भर्त्सयति, सेवयते, सहसा प्रवर्तते, गुणान्तराधानाय ईहते, प्रकर्षेण कथयति, विनियुङ्क्त इति क्रमेणार्थाः । 'गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः' इत्येतेष्वर्थेषु वर्तमानात्कृञोऽकर्त्रभिप्रायेऽपि तङ् । तमधिकुरुते—'अधेः प्रसहने' इति तङ् । प्रसहनमभिभवः, अपराजयो वा, अपराजयः शक्तस्य क्षमयैव यस्तदभाव सः, तथा च भारविः—'भवादृशाश्चेदधिकुर्वते परान्[1]', इति क्षमया न पराजयन्ते क्षमन्ते इत्यर्थः । क्रोष्टा विकुरुते स्वरान्—'वेः शब्दकर्मणः' इति तङ् । अत्र कर्मेति कारकं गृह्यते, न क्रिया । अत्र सुधाकरः—"'वेः शब्दकर्मणः' इति चेदनुवाकं श्लोकं वा विकरोतीत्यत्रातिप्रसङ्गः । नेह शब्दविषयो व्यापारो यस्य शब्दो निर्वर्त्यः । तत्र हि करोतिर्विनाशयतीत्यर्थो न निर्वर्तयति" इति । विकुरुते सैन्धवः, साधु दान्तः शोभनं वल्गतीत्यर्थः । 'अकर्मकाच्च' इति विपूर्वात्तङ् । यदा संवल्गनायां वृत्तेः सौकर्यातिशयाद्वल्गनवचनस्तदा कर्तुः कर्मवद्भावेऽपि 'यक्चिणोः प्रतिषेधः' इत्यात्मनेपदाकर्मकत्वान्न यक्चिणाविति विकुरुते सैन्धवः स्वयमेव, व्यकृत सैन्धवः स्वयमेवेति भवतः । अत्र 'आत्मनेपदाकर्मकेत्यनेनात्मनेपदविधावर्थान्तरबलादकर्मणामन्तर्भावितण्यर्थानां सकर्मकाणां सौकर्यातिशयविवक्षया पुनरकर्मकाणां कर्मकर्त्रविवक्षया ग्रहणम्' इति येषां दर्शनं तेषां 'विकारहेतौ सति विक्रियन्ते[2]' इत्यत्र न यग्निषेधप्रसङ्गः; यतोऽत्र स्वत एव सकर्मकस्य कर्माविवक्षयाऽकर्मकत्वम् । येषां त्वात्मनेपदाकर्मकेति धातूपलक्षणं, तेषां विकरोतिरपि अर्थान्तर्वृत्त्या क्वचिदात्मनेपदनिमित्तं दृष्टमिति 'विकारहेतौ सति विक्रियन्ते' इत्यत्रापि कर्मकर्तरि यग्निषेधेन भाव्यम् । संस्कुरुते कन्या स्वयमेव, समस्कुरुत कन्या स्वयमेव—

१. किरा० १।४३ । परानित्यस्य स्थाने 'रतिम्' इति मल्लिनाथसम्मतः पाठः ।
२. कु० स० १।५९ ।

इत्यत्रापि भूषाकर्मकत्वान्न यक्चिणौ। पदं मिथ्या कारयते—स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः। 'मिथ्योपपदात्कृञोऽभ्यासे' इति ण्यन्तात्तङ्। 'गन्धनादि' सूत्रचतुष्कमेव चाकर्त्रभिप्रायार्थम्। अनुकरोति—'अनुपराभ्यां कृञः' इति परस्मैपदम्। इदं च कर्त्रभिप्राये गन्धनादौ च प्राप्तस्य तङोऽपवादः। अनेन च कृञस्तङ्निमित्तत्वमेव निषिध्यत इत्यनुचिकीर्षतीत्यादौ 'पूर्ववत्सनः' इति तङ् न भवति। अत्र आत्रेयः—'संज्ञापूर्वको विधिरनित्यः' इति 'मातः सर्वान्पराकृथाः' इति परस्मैपदाभावमाह। कृत्यम्, कार्यम्—'विभाषा कृवृषोः' इति क्यब्ण्यतौ। वासरूपेण तव्यादयोऽपि—कर्तव्यम्, करणीयम्। विद्या यशस्करी। श्रद्धाकर आस्तिकः, प्रैषकरो भृत्यः—'कृञो हेतुताच्छील्यानुलोम्येषु' इति कर्मण्युपपदे टप्रत्ययः। हेतुरैकान्तिकं कारणम्, ताच्छील्यं तत्स्वभावता, आनुलोम्यमनुकूलता। टित्त्वात्स्त्रियां ङीप्। शङ्करा नाम परिव्राजिका तच्छीला च—इत्यत्र ताच्छीलिकं परमपि टप्रत्ययं 'शमिधातोःसंज्ञायाम्' इत्यच्प्रत्ययस्तत्र धात्वधिकारेऽपि पुनर्धातुग्रहणाद्बाधते। तथा च वार्त्तिकम्—'शमिसंज्ञायां धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थम्' इति। अयं च टप्रत्ययः 'न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु' इति निषेधाच्छब्दादिषूपपदेषु न भवतीत्यणेव, शब्दकार इत्यादि। दिवा अह्नि प्राणिनश्चेष्टायुक्तान् करोतीति दिवाकरः—'दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु' इति दिवादिषूपपदेषु कृञष्टः। अहेत्वाद्यर्थ आरम्भः। तत्र दिवाशब्दस्याधिकरणप्रधानत्वात्कर्मत्वं न भवति। तत्र सुपीति संबध्यते। अन्येषु कर्मणीति। विभां करोतीति विभाकरः, प्रभाकरः इत्यादीनि उदाहार्याणि। भास्करः इत्यत्र अत्रैव भास्कर इति करोतौ परे सकारस्य निर्देशात्सत्वम्। 'अतः कृकमि' इति सत्वं तपरनिर्देशान्न प्राप्नोति। कर एव कार इति प्रज्ञादिः। अत्रान्तकरस्य नञ्समासेनैव सिद्धेऽनन्तग्रहणं कृदुत्तरपदप्रकृतिस्वरार्थम्। अन्यथा 'तत्पुरुषे तुल्य' इत्याद्युदात्तत्वं स्यात्। बहुशब्दो वैपुल्यवचनः, अन्यस्य संख्यात्वादेव ग्रहः। अत्रेष्टिः—'किंयत्तद्बहुषु कृञोऽज्विधानम्' इति। प्रयोजनं किंकरा इत्यादौ स्त्रियां टाप्। किंकरी इति तु पुंयोगे ङीष्, हेत्वादौ वा पूर्वसूत्रेण टप्रत्यये। तस्करः इत्यत्र 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' इति सुट्तलोपौ, धनुष्करः, अरुष्करः—'नित्यं समासेऽनुत्तरपदस्थस्य' इति विसर्जनीयस्य नित्यं षत्वम्। कर्मकरः—'कर्मणि भृतौ' इति कर्मशब्द उपपदे भृतौ गम्यमानायां टप्रत्ययः। भृतिः वेतनम्। अन्यत्र कर्मकारः। स्तम्बकरिः व्रीहिः। शकृत्करिः वत्सः—'स्तम्बशकृतोः' इतीन्। 'व्रीहिवत्सयोरिति वक्तव्यम्' इत्युक्तत्वादन्यत्र स्तम्बकारः, शकृत्कार इति। मेघङ्करः। ऋतिङ्करः। भयङ्करः—'मेघर्तिभयेषु कृञः' इति मेघादिषूपपदेषु खच्। खित्त्वान्मुम्। उपपदविधौ 'भयाढ्यादिग्रहणं तदन्तविधिं प्रयोजति' इत्युक्तत्वादभयशब्देऽप्युपपदे खच्

भवति अभयङ्करः–इति। क्षेमङ्करः, क्षेमकारः–'क्षेमप्रियमद्रेऽण् च' इति खजणौ। खचो विकल्पनेनैव कर्मण्यणि सिद्धेऽण्ग्रहणं हेत्वादिषु टप्रतिषेधार्थम्। एवं प्रियमद्रयो-रप्युदाहार्यम्। अनाढ्य आढ्यः क्रियते येन तत् आढ्यङ्करणम्—'आढ्यसुभग-स्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्' इति आढ्यादिष्वभूत-तद्भावविषयेषु अच्व्यन्तेषु करणकारके ख्युन्। स्त्रियाम् आढ्यङ्करणी—'टिड्ढाणञ्' इत्यादिना ङीप्। एवं सुभगङ्करणम् इत्यादि, खित्वान्मुम्। 'उपपदविधौ भयाढ्या-दिग्रहणं तदन्तविधिं प्रयोजयति' इत्युक्तत्वादनाढ्यादिष्वप्युपपदेषु ख्युन् भवति— अनाढ्यङ्करणमित्यादि। सुकृत्, शोभनं कृतवानित्यर्थः—'सुकर्मपापमन्त्रपुण्येषु कृञः' इति स्वादिषु कर्मसूपपदेषु कृञः क्विप्, एवं कर्मकृत् इत्यादि। राजानं कृतवान् राजकृत्वा—'राजनि युधि कृञः' इति राजनि कर्मण्युपपदे भूते क्वनिप् तुगागमः, स्त्रियां 'वनो र च' इति ङीब्रेफौ—राजकृत्वरी। सहकृत्वा—'सहे च' इति भूते क्वनिप्। अलङ्करिष्णुः—'अलंकृञ्निराकृञ्' इति ताच्छीलिक इष्णुच्। चक्रिः— 'भाषायां धाञ्कृञ्' इति किकिनोरन्यतरः, लिड्वद्भावाद् द्विर्वचनम्।

चक्रम्–घञर्थे कः, 'कृञादीनां के द्वे भवतः' इति द्विर्वचनम्। चक्रीवान्नाम राजा– 'आसन्दीवदष्ठीवच्चक्रीवत्' इति मतुपि चक्रीभावो निपातनात्। क्रिया। कृतिः— 'कृञः श च' इति शक्तिनौ। 'कृञः' इति योगविभागात्क्यप् तुगागमः—कृत्या इति। शस्य भावविषयत्वात्सार्वधातुकत्वाच्च यकि विकरणे 'रिङ् शयग्लिङ्क्षु' इति रिङादेशः। ईषदाढ्यङ्करो देवदत्तः, दुराढ्यङ्करः—'कर्तृकर्मणोश्च भूकृञोः' इति करोतेः कर्तृकर्मवाचिनि चकारादीषदादिषु चोपपदेषु खल्प्रत्ययः। 'कर्तृकर्मणो-श्च्व्यर्थयोः' इति वचनादभूततद्भावविषयोऽयं प्रत्ययः। तदयमर्थः—अनाढ्योऽ-नायासेन दुःखेन सुखेन वा आढ्यः क्रियते इति। चोरङ्कारमाक्रोशति—'कर्मण्या-क्रोशे कृञः खमुञ्' इति कर्मण्युपपदे आक्रोशे गम्यमाने खमुञ्। अत्र करोतिः स्वभावादुच्चारणक्रिय इति चोरशब्दोऽपि स्वरूपपरः। तदयमर्थः—चोरशब्द-मुच्चार्याक्रोशतीति। अत्र धातुसम्बन्धमात्रे विधानेऽपि णमुलन्तार्थानुरोधाया-क्रोशार्थस्यैवानुप्रयोगः। स्वादुङ्कारं भुङ्क्ते—'स्वादुमि णमुल्' इति णमुल्। स्वादुमीत्यर्थग्रहणात्—सम्पन्नङ्कारं भुङ्क्ते, लवणङ्कारं भुङ्क्ते इत्यत्रापि णमुल् भवति। अतएव 'स्वादुमि' इति निर्देशादुपपदस्य मान्तत्वम्। ननु प्रकृतः खमुञ् विधीयताम्, खित्वान्मान्तत्वं भविष्यति किं निपातनेन? एवं तर्हि लिङ्गविशिष्ट-परिभाषया 'वोतो गुणवचनात्' इति ङीषन्तस्य स्वाद्वीशब्दस्योपपदत्वं मा भूदिति निपातनम्। भावप्रत्ययविषये हि मान्तत्वनिपातने उकारान्तत्वाभावान्नास्ति ङीपः प्रसङ्गः। किं च–च्व्यन्तस्य स्वाद्वादेर्मान्तत्वार्थम्, तस्य ह्यव्ययत्वात् खित्व-निबन्धनो मुम्नास्ति। अत्र णमुल्विषये वासरूपविधिना क्त्वापि भवति—स्वादु-ङ्कृत्वा भुङ्क्ते इत्यादि। अन्यथाकारं भुङ्क्ते—'अन्यथैवंकथमित्थंसु सिद्धा-

प्रयोगश्चेत्' इत्यन्यथादिषु उपपदेषु णमुल्। सिद्धशब्दः प्राप्तवचनः, प्राप्तप्रयोगश्चेत्करोतिरित्यर्थः। प्राप्ताप्रयोगत्वं च निरर्थकत्वात्, तेनान्यथेति यावानर्थस्तावानेवान्यथाकारमिति। एवम् एवङ्कारम् इत्यादि। अत्रापि वासरूपेण क्त्वापि भवति, तेन अन्यथाकृत्वा परिहरति इत्यादि भवति। यथाकारमहं भोक्ष्ये तथाकारमहं भोक्ष्ये किन्तवानेन—'यथातथयोरसूयाप्रतिवचने' इति कृञः सिद्धाप्रयोगाद्यथातथयोरुपपदयोरसूयाप्रतिवचने गम्यमाने णमुल्। यत्र प्रश्ने प्रतिवचनमसूयया भवति तदसूयाप्रतिवचनम्। अकृतकारं करोति, अकृतं करोतीत्यर्थः—'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इति णमुल्। कषादित्वाद्यथाविध्यनुप्रयोगः। ब्राह्मण, पुत्रस्ते जातः, किं तर्हि वृषल: ? नीचैःकारमाचष्टे, नीचैःकृत्य, नीचैः कृत्वेति वा। 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' इति क्त्वाणमुलौ यथाभिप्रेतं न भवति तथा आख्याने गम्यमाने। अत्र हि पुत्रजन्मनि प्रियमुच्चैराख्येयं गोपनीयवत् केनचिन्नीचैराख्यायते। 'तृतीयाप्रभृतीन्यन्यतरस्याम्' 'क्त्वा च' इति समासविकल्पः, तिर्यक्कृत्य गतः, तिर्यक् कृत्वा गतः, तिर्यक्कारम् इति वा, समाप्य गत इत्यर्थः—'तिर्यच्यपवर्गे' इति क्त्वाणमुलौ। अपवर्गः समाप्तिः। पूर्ववत्समासविकल्पः। मुखतःकृत्य, मुखतः कृत्वा, मुखतःकारं गच्छति—'स्वाङ्गे तस्प्रत्यये कृभ्वोः' इति क्त्वाणमुलौ, पूर्ववदत्रापि समासविकल्पः। नानाकृत्य, नाना कृत्वा नानाकारम्, विनाकृत्य, विना कृत्वा, विनाकारम्। द्विधाकृत्य, द्विधा कृत्वा, द्विधाकारम्। द्वैधाकृत्य, द्वैधा कृत्वा, द्वैधाकारम्। एवं द्वैधं कृत्वा इत्यादि—'नाधार्थप्रत्यये च्व्यर्थे' इति क्त्वाणमुलौ। पूर्ववत्समासविकल्पः। सूत्रार्थो भवतावुक्तः। कृतः। कृतवान्। कृतं गृह्णाति कृतयति—'मुण्डमिश्र' इत्यादिना णिच्, स्वभावादगृह्णात्यर्थे प्रत्ययः। कृतमनेन कृती—'इष्टादिभ्यश्च' इतीनिः। कृतञ्च तदपकृतं च कृतापकृतम्—'कृतापकृतानामुपसङ्ख्यानम्' इति समासः। कृत्रिमम्—'ड्वितः क्त्रिः,' 'क्त्रेर्मम्नित्यम्' इति। कडति माद्यतीति कडः—अच्। कडं करोतीति कडङ्करो माषमुद्गादिकाष्ठम्, तदर्हतीति कडङ्कर्यः, कडङ्करीयः—'कडङ्करदक्षिणाच्छ च' इति अर्हतीत्यर्थे यच्छौ। अत्रैव निर्देशादचि मुमागमः। कर्म—मनिन्। कर्म शीलोऽस्य कार्मः—'छत्रादिभ्यो णः' इति णः। 'कार्मस्ताच्छील्ये' इति निपातनाट्टिलोपः। 'नस्तद्धिते' इति टिलोपे सिद्धे निपातनं 'णेऽपि क्वचिदण्कृतं कार्यं भवति' इति ज्ञापनार्थम्, तेन तापसी चौरी इत्यत्र णेऽप्यण्कृतो ङीब् भवतीति पूर्वत्रोक्तम्।

कर्मणे प्रभवति कार्मुकम्—'कर्मण उकञ्' इति 'तस्मै प्रभवति' इत्यर्थे उकञ्। सर्वकर्म व्याप्नोति सर्वकर्मीणः—'तत्सर्वादेः' इत्यादिना खः। कर्मणि घटते कर्मठः—'कर्मणि घटोऽठच्' इति अठच्। कर्मी—व्रीह्यादित्वादिनिः। कार्मणम्—'तद्युक्तात्कर्मणोऽण्' इति व्याहृतार्थवाग्युक्तात्कर्मणः स्वार्थेऽण्। 'अन्' इति प्रकृतिभावः। कारुः—'कृवापाजि' इत्युण्। क्रतुः—'कृञः कतुः' इति

कतुप्रत्ययः। कार्पासः —'कृञः पासण्' इति पासण्। कृकः— 'कृदाधारार्चिकलिभ्यः कः' इति कः, बाहुलकात्कलोपगुणयोरभावः। ऊरीकृत्य, पटपटाकृत्य—'ऊर्यादिच्विडाचश्च' इति कृभ्वस्तियोगे ऊर्यादीनां गतिसंज्ञा। तथा च वृत्तिः—'च्विडाचोः कृभ्वस्तियोगे विधानादूर्यादीनामपि तैरेव योगे गतिसंज्ञा' इति। वार्त्तिकमपि—'कृभ्वस्तियोग इति वक्तव्यम्' इति। गतिसंज्ञाप्रयोजनं समासादि। 'ऊर्यादीनां प्रयोगोऽपि कृभ्वस्तियोग एव' इति कैयटपदमञ्जर्यौः। कथं तर्हि भवति 'आविश्चक्षुषोर्भवदसाविव राग' इति, 'अभवद्युगपद्विलोलजिह्वायुगलीढोभयसृक्कभागमाविः' इति च? 'स्वतन्त्राः कवयः' इति हरदत्तः। तत्राप्याविःदुःशब्दौ मुक्त्वा अन्येषामूर्यादीनामर्थस्वभावात्करोतियोग एव प्रयोगः। अत एव वृत्तिकृता, गणवृत्तिकृता, अन्यैश्च शाकटायनादिभिः करोतियोगे एवोदाहरणं दर्शितम्। 'श्रच्छब्दस्य दधातिनैव योगे' इत्येके। श्रौषट् वौषट् वषट् स्वाहा स्वधेत्येतेषां पञ्चानां चादिषु पाठादक्रियायोगेऽपि प्रयोगः। अन्येऽप्यूर्यादय उदाहार्य्याः। कारिकाकृत्य, क्रियां कृत्वेत्यर्थः—'कारिकाशब्दस्योपसङ्ख्यानम्' इति गतित्वम्। '"धात्वर्थनिर्देशे ण्वुल्' इति ण्वुलन्तः कारिकाशब्दः" इति न्यासे। खाट्कृत्य—'अनुकरणं चानितिपरम्' इति गतिसञ्ज्ञा। अनुकरणस्य इतिपरत्वे तु खाडिति कृत्वा। सत्कृत्य, असत्कृत्य—'आदरानादरयोः सदसती' इति गतित्वम्। प्रीतिपूर्वकप्रत्युत्थानादिविषयत्वरा आदरः, अवश्यकर्त्तव्यं प्रत्युत्थानादिकं प्रत्युपेक्षा अनादरः। अन्यत्र सत्कृत्वा, असत्कृत्वा। शोभनमशोभनञ्च कृत्वेत्यर्थः। अलंकृत्य—'भूषणेऽलम्' इति गतित्वम्। भूषणादन्यत्र अलंकृत्वा, करणेनालमित्यर्थः। अनुकरणमित्यादयस्त्रयो योगाः स्वभावात् कृञ्विषयाः। पुरस्कृत्य पूर्वदेशे कृत्वेत्यर्थः। 'पुरोऽव्ययम्' इति गतिसंज्ञा। 'पूर्वाधरावराणामसिपुरधवश्चैषाम्' इति सप्तम्यन्तात् स्वार्थेऽसिप्रत्ययः पुरादेशश्च। 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वम्, 'नमस्पुरसोर्गत्योः' इति विसर्जनीयस्य सत्वम्। अव्ययादन्यत्र, पुरः कृत्वा गतः। अस्तंकृत्य 'अस्तञ्च' इति गतिसंज्ञा, चकारोऽव्ययमित्यनुकर्षणार्थः, तेनात्रैव निर्देशादस्तंशब्दो मकारान्तोऽव्ययमस्तीति ज्ञायते। अस्य त्वदर्शनमर्थः। अन्यत्र—अस्तङ्गतः, क्षिप्तं कृत्वेत्यर्थः। द्वाविमौ योगौ करोत्यविषयावपि दृश्येते, यथा—'तुरासाहं पुरोधाय', 'अस्तङ्गत्य सविता पुनरुदेति'। अदःकृत्य—'अदोऽनुपदेशे' इति गतित्वम्। उपदेशः परार्थे वाक्यप्रयोगः। ततोऽन्योऽनुपदेशः, स्वयमेव बुद्ध्या परामर्श इति यावत्। परस्य कथने तु अदः कृत्वा गत इति। 'सूत्रे अद इति द्वितीयान्तानुकरणेनामुना कृत्वेत्यर्थेऽदः कृत्वेत्येव भवति' इति आत्रेयः। तिरस्कृत्य—'विभाषा कृञि' इति तिरसो वा गतित्वम्। अन्तर्धौ 'तिरसोऽन्यतरस्याम्' इति विसर्जनीयस्य वा सत्वम्। अन्यदा तु 'कुप्वो≍क≍पौ च' इति जिह्वामूलीयविसर्जनीयौ द्रष्टव्यौ। अगतित्वे 'तिरसोऽन्यतरस्याम्' इति सत्वं गतेरितीह न भवतीत्यात्रेयः। केचित्तु तत्र गतिग्रहणं

नानुवर्तयन्ति, तेन तिरस्कृत्य इत्यत्रापि सत्वम्। अत एव पराभवेऽपि तिरस्कार इति। अयं पक्षो भाष्यवृत्तिन्यासपदमञ्जर्यादौ न दृश्यते। उपाजेकृत्य, उपाजे कृत्वा। अन्वाजेकृत्य, अन्वाजे कृत्वा इति—'उपाजेऽन्वाजे' इति वा कृञि गतित्वम्। उपाजेऽन्वाजेशब्दौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य सामर्थ्याधाने वर्तेते। साक्षात्कृत्य। साक्षात् कृत्वा—'साक्षात्प्रभृतीनि च' इति कृञि वा गतित्वम्। अत्र वार्त्तिकम्—'साक्षात्प्रभृतिषु च्व्यर्थग्रहणम्, तत्र च्विप्रत्ययप्रतिषेधः' इति। तेन च्व्यन्तस्योर्यादित्वाद् नित्यं गतित्वम्। अस्य च प्रयोजनमकारान्तेषु लवणीकृत्य इत्यादौ। अत्र लवणमुष्णमुदकं शीतमार्द्रमिति पञ्च पठ्यन्ते, एषामत्रैव निपातनाद् गतित्वसन्नियोगेन मान्तत्वम्। अत्राग्रीवशेप्रभृतयः केचिदेजन्ताः पठ्यन्ते, ते विभक्तिप्रतिरूपका निपाताः। प्रादुस्-आविस्शब्दाविह पठ्येते, तयोरूर्यादित्वान्नित्ये प्राप्ते विकल्पार्थः पाठः। ऊर्यादिपाठस्तु कृभ्वस्तियोगे नित्यार्थः। अत्र नमःशब्दः पठ्यते, स यदा गतिसंज्ञकस्तदोपसर्गवद्वृत्त्या कृञः प्रणामवचनत्वं द्योतयतीति प्रणामापेक्षया कर्मणि देवादौ 'नमःस्वस्ति' इत्येतद् बाधित्वा 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति नमस्यति देवान् इतिवत् नमस्करोति देवान् इति द्वितीयैव भवति। अगतित्वे तु करोतिक्रियाकर्मभावापन्नं विशेष्यभूतं प्रणाममाचष्ट इति देवादावकर्मणि 'नमः स्वस्ति' इति चतुर्थी। तथा च भट्टिः—'नमश्चकार देवेभ्यः[1]' 'रावणाय नमस्कुर्याः[2]' इति। स्वयम्भुवे नमस्कृत्य इत्यत्र तु नमसो गतित्वे कृञो विशेषकत्वात्प्राप्तां कारकविभक्तिं द्वितीयां 'क्रियार्थोपपदस्य' इति चतुर्थी बाधते। तदत्रायमर्थो वाच्यः—स्वयम्भुवं प्रीणयितुं प्रणम्येति। वर्द्धमानस्तु 'श्राद्धाय निगृह्लुते इतिवत्क्रियाग्रहणं कर्तव्यम्' इति चतुर्थीमाह। उरसिकृत्य, उरसि कृत्वा। मनसिकृत्य, मनसि कृत्वा बुद्धौ कृत्वेत्यर्थः—'अनत्याधान उरसिमनसी' इति उरसिमनसीत्यनयोर्वा गतित्वम्। अत्याधानमुपश्लेषः, तदभावोऽनत्याधानम्। अत्याधाने तु—उरसि कृत्वा पाणिं शेते इति। सप्तम्यन्तप्रतिरूपकावेतौ। मध्ये कृत्वा, मध्येकृत्य। पदे कृत्वा, पदेकृत्य। निवचने कृत्वा, निवचनेकृत्य—'मध्ये पदे निवचने च' इति वा गतित्वम्। अनत्याधाने मध्येपदेशब्दौ विभक्तिप्रतिरूपकौ, निवचनं वचनाभावः। सतृणमितिवदव्ययीभावः। 'उच्चारणसामर्थ्यात्सप्तम्या लुग् न भवति' इति न्यासे। हरदत्तस्तु 'निपातनादेकारान्तत्वम्। न पुनरेषा सप्तमी, वाचं नियम्येति व्याख्यानात्। निपातनं चाविशेषेण न तु संज्ञासंनियुक्तम्, निवचनेकृत्वेत्युदाहृतत्वादित्याहुः' इति। अत्याधाने—पदेकृत्वा शिरःशेते। हस्तेकृत्य। पाणौकृत्य—'नित्यं हस्ते पाणावुपयमने' इति नित्यं गतित्वम्। 'निपातनादलुक्' इति न्यासे। 'सप्तम्यन्तप्रतिरूपकौ' इति हरदत्तादयः।

---

1. भ० का० १४।१८। 2. भ० का० ८।९८।

'उपयमनं दारकर्म' इति वृत्तौ। अन्ये तु स्वीकरणमात्रमिच्छन्ति–'हस्तेकृत्य महास्त्राणि' इति। आत्रेयस्तु 'उपयमनन्नामपरित्यागलक्षणंस्वीकरणं, तथा च भट्टिः— 'हस्तेकृत्य त्वमाश्वासीः[1]' इति। प्राध्वंकृत्य शकटं गतः, बन्धनेनानुकूलं कृत्वा गत इत्यर्थः—'प्राध्वं बन्धने' इति गतित्वम्। प्राध्वंशब्दस्य मान्तस्याव्ययस्यानुकूल्यार्थत्वाद्बन्धन इत्यर्थद्वारेण बन्धने सति यदानुकूल्यमिति, अबन्धने तु प्राध्वं कृत्वा शकटं गतः, विनापि बन्धनेनानुकूलं कृत्वेत्यर्थः। जीविकामिव कृत्वा जीविकाकृत्य, उपनिषदमिव कृत्वा उपनिषत्कृत्य–'जीविकोपनिषदावौपम्ये' इति गतित्वम्। इतिशब्दप्रयोगे जीविकोपनिषदौ स्वार्थे वर्तेते, नौपम्ये इत्यगतित्वान्न समासः। मामधिकृत्वा ईश्वरो भव इति, मां विनियुज्येत्यर्थः। यथा 'स्वरितेनाधिकारः', 'ग्रामेऽधिकृतः' इत्यनयोः प्रयोगयोर्विनियोगो ह्यर्थः। 'विभाषा कृञि' इत्यधेरैश्वर्ये गम्यमाने कर्मप्रवचनीयसंज्ञा। अस्याः फलम् 'आकडारात्' इति गतिसंज्ञाबाधः। द्वितीया त्वधिकृञो विनियोगार्थत्वात्कर्मणीत्येव सिद्धा। अगतित्वे तु प्रादिसमासस्य 'कर्मप्रवचनीयानां प्रतिषेधः' इति निषेधाद्वाक्यमेव भवति। कर्मप्रवचनीयत्वाभावे तु गतित्वात्समासे मामधिकृत्येति ॥ १० ॥

१३. अनुदात्त उभयतोभाषः[2]।

इति श्रीपूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसङ्गममहाराजमन्त्रिणा

मायणसुतेन[3] माधवसहोदरेण सायणाचार्येण[4] विरचितायां

माधवीयायां धातुवृत्तौ उविकरणास्तनादयः सम्पूर्णाः।



1. भ० का० ५।१६। 'तां हस्तेकृत्य मा श्वसीः' इति तत्रस्थः पाठः।
2. 'वृत्' इत्यधिकं सूत्रं पठति मैत्रेयः। 3. 'मायणपुत्रेण'–क. पुस्तके।
4. 'सायणार्येण'–ख. पुस्तके।

# ९. क्र्यादिगणः

१. डु क्रीञ् द्रव्यविनिमये। क्रीणाति। क्रीणीतः। क्रीणन्ति। क्रीणासि। क्रीणामि। क्रीणीवः। क्रीणीते। क्रीणाते। क्रीणते। क्रीणीषे। क्रीणे। क्रीणीवहे इत्यादि। 'क्र्यादिभ्यः श्ना' इति शपोऽपवादः श्ना। 'श्नाभ्यस्तयोरातः' इति क्ङिति सार्वधातुक आलोपः। हलादौ तु 'ई हल्यघोः' इतीत्वम्। झिझयोः परत्वान्नित्यत्वादन्तरङ्गत्वात्पूर्वमन्तादेशाद्भावयोराल्लोपः। चिक्राय। चिक्रियतुः। चिक्रयिथ, चिक्रेथ। चिक्रियथुः। चिक्रिय। चिक्राय, चिक्रय। चिक्रिये। चिक्रियाते। चिक्रियिषे। चिक्रियिध्वे। चिक्रिये। चिक्रियिवहे—क्रादिनियमादिट्। थलि तु भारद्वाजनियमादिड्विकल्पः। अगुणवृद्धिविषये इयङ्। 'एरनेकाचः' इति यण् तु संयोगपूर्वत्वान्न भवति। क्रेता। क्रेष्यति। क्रेष्यते। क्रीणातु, क्रीणीतात्। क्रीणीताम्। क्रीणन्तु। क्रीणीहि। क्रीणानि। क्रीणाव। क्रीणीताम्। क्रीणाताम्। क्रीणताम्। क्रीणीष्व। क्रीणै। क्रीणावहै। तातङः स्वतो ङित्त्वाद्धेश्चापित्त्वेन ङित्त्वादीत्वम्। उत्तमे त्वाटः पित्त्वेन ङित्त्वाभावादीत्वाभावः। अक्रीणात्। अक्रीणीताम्। अक्रीणाः। अक्रीणीतम्। अक्रीणीत। अक्रीणाम्। अक्रीणीव। अक्रीणीत। अक्रीणीथाः। अक्रीणाथाम्। अक्रीणीध्वम्। अक्रीणि। अक्रीणीवहि। क्रीणीयात्। क्रीणीयाताम्। क्रीणीयाः। क्रीणीयाम्। क्रीणीयाव—यासुटो ङित्त्वात्पिद्वचनेष्वपीत्वम्। क्रीणीत। क्रीणीयाताम्। क्रीणीथाः। क्रीणीय। क्रीणीवहि। क्रीणीमहि। सीयुटि सलोपः, आल्लोपः। आशिषि—क्रीयात्। क्रीयास्ताम्। क्रेषीष्ट। क्रेषीयास्ताम् इत्यादि। अक्रैषीत्। अक्रैष्टाम्। अक्रैषम्—सिचि वृद्धिः। अक्रेष्ट। अक्रेषाताम्। अक्रेष्ठाः। अक्रेषि। चिक्रीषति, चिक्रीषते। चेक्रीयते। चेक्रेति। क्रापयति। अचिक्रपत्—'क्रीङ्जीनां णौ' इत्यात्वे पुक्। शतेन शताय वा परिक्रीणीते—'परिव्यवेभ्यः' इत्यकर्त्रभिप्रायेऽपि तङ्। एवं व्यवाभ्यामपि। इह पर्यादय उपसर्गा गृह्यन्ते इति बहु विक्रीणाति वनम् इत्यादौ न भवति। 'परिक्रयणे सम्प्रदानमन्यतरस्याम्' इति परिपूर्वस्य क्रीणातेः साधकतमस्य पक्षे सम्प्रदानत्वम्। परिक्रयणं वेतनादिना नियतकालं स्वीकरणम्। क्रीत्रिमम्—'ड्वितः क्त्रिः'। 'क्त्रेर्मम् नित्यम्'। क्रीतः, क्रीतवान्। अश्वेन क्रीता अश्वक्रीती। धनेन क्रीता धनक्रीती—'कर्तृकरणे कृता बहुलम्' इति तृतीयासमासः। स च 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः' इति क्रीतशब्देनेति 'क्रीतात्करणपूर्वात्' इत्यदन्तात् क्रीतान्तात्प्रातिपदिकाद्विधीयमानो ङीष् भवति। 'सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी' इत्यत्र तु बहुलग्रहणाट्टाबन्तेन समास इति अनदन्तत्वान्ङीषभावो वाच्यः। अन्तवद्भावेन टाबन्तोऽपि

कृदन्त एवेति कृदन्तलक्षणसमासलाभः । क्रयः—'एरच्' । अवक्रियते व्यवह्रियतेऽनेनेति अवक्रयः—आयस्थानेषु वणिजादिभिर्दीयमानः स्वामिग्राह्यो भागः, यस्य 'पिण्डकः' इति प्रसिद्धिः । 'पुंसि संज्ञायाम्' इति घः । क्रयार्थं प्रसारितं क्रय्यम्—'अचो यत्' इति यति 'क्रय्यस्तदर्थे' इत्ययादेशः। अत्र तच्छब्देन क्रयः परामृश्यते। अन्यत्र गुणे क्रेयः । क्रायकः—ण्वुल् । क्रयिकः—'क्रिय इकन्' इति इकन् ॥ १ ॥

२. प्रीञ् तर्पणे कान्तौ[१] च[१] । 'कान्तिः कामना' इति पुरुषकारे। प्रीणाति। प्रीणीते इत्यादि क्रीणातिवत् । प्रीणयति । अपिप्रीणत्—'धूञ्प्रीञोर्नुग्वचनम्' इति नुक् । प्रीणातीति प्रियः—'इगुपधज्ञाप्रीकिरः कः' इति कः । प्रेष्ठ इत्यादि दिवादावुक्तम् ॥ २ ॥

३. श्रीञ् पाके । श्रीणाति। श्रीणीते इत्यादि क्रीणातिवत्। श्राययति। अशिश्रयत् वृद्ध्यायौ ॥ ३ ॥

४. मीञ् हिंसायाम् । मीनाति । मीनीतः । मीनन्ति । मीनासि । मीनामि । मीनीवः । मीनीते । मीनाते । मीनीषे । मीने । मीनीवहे । ममौ । मिम्यतुः । ममिथ, ममाथ । मिम्यथुः । मिम्य । ममौ । मिम्यिव—'मीनातिमिनोति' इत्येज्विषये आत्वं ल्यपि च । अन्यत्र 'एरनेकाचः' इति यण् । मिम्ये । मिम्यिषे । मिम्ये । मिम्यिवहे । माता । मास्यति। मास्यते। मीनातु। मीनीताम्। अमीनात्। अमीनीत। मीनीयात्। मीनीत । आशिषि मीयात्—यासुटः कित्त्वादनेज्विषयत्वान्नात्वम् । मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त । अमासाताम् । आत्वे 'यमरमनमाताम्' इति सगिटौ। सनि मित्सति, मित्सते—'सनि मीमा' इत्यच इस् । 'सः स्यार्धधातुके' इति तत्वम् । 'अत्र लोप' इत्यभ्यासलोपः । मेमीयते । मेमेति—'मीनाति' इति श्तिपा निर्देशान्नात्वम् । मापयति—आत्वे पुक् । अमीमपत् । प्रमीणाति—'हिनुमीना' इत्युपसर्गस्थान्निमित्तात्परस्य मीनाशब्दनकारस्य णत्वम् । प्रमीणीतः, प्रमीणन्ति इत्यादौ परनिमित्तकस्येत्वस्याल्लोपस्य च पूर्वविधौ स्थानिवत्त्वादेकदेशविकृतस्यानन्यत्वाद्वा णत्वम् । मीत्वा । मीतः । मीतवान् । प्रमाय—'मीनाति' इति ल्यप्यात्वम् । ईषत्प्रमयः । मयः—'निमिमीलियां खलचोः प्रतिषेधः' इत्यात्वनिषेधः ॥४॥

५. षिञ् बन्धने । सिनाति । सिनीते इत्यादि क्रीणावित् । सिषाय । सेष्यति इत्यादि। 'आदेशप्रत्यययोः' इति षत्वम्। सिष्यतुः इत्यादौ 'एरनेकाचः' इति यण् । सिसीषति इत्यत्र 'स्तौतिण्योः' इत्यषत्वम् । 'अज्झनगमाम्' इति दीर्घः । सितः । सितवान् ॥ ५ ॥

६. स्कुञ् आप्रवणे[२] । 'सौत्रोऽयमित्याचार्याः' इति स्वामी । 'स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च' इत्यत्र वृत्तिकारः—'चत्वारः सौत्रा धातवः, स्कुञ् आप्रवणे

१–१ मैत्रेयो न पठति । २. 'आप्लवने' इति मैत्रेयः ।

क्र्यादिः' इति । स्कुनाति । स्कुनीतः । स्कुनन्ति । स्कुनासि । स्कुनामि । स्कुनीते । स्कुनीषे । स्कुने । स्कुनीवहे । स्तन्भ्वादिसूत्रेण पक्षे स्नुरपि—स्कुनोति । स्कुनुवे इत्यादि । चुस्काव । चुस्कुवतुः । चुस्कविथ, चुस्कोथ । चुस्कुव । चुस्कुविव । चुस्कुवे । चुस्कुविषे । चुस्कुविवहे–'शर्पूर्वाः' इति खयः शेषः । स्कोता । स्कोष्यति । स्कोष्यते । स्कुनातु । स्कुनीताम् । स्कुनीहि । स्कुनानि । स्कुनाव । स्कुनीताम् । स्कुनाताम् । स्कुनीष्व । स्कुनै । स्कुनावहै । स्कुनोतु । स्कुनुताम् । स्कुन्वन्तु । स्कुनु । स्कुनवानि । स्कुनुताम् । स्कुन्वाताम् । स्कुन्वताम् । स्कुनीष्व । स्कुनवै । अस्कुनात् । अस्कुनीताम् । अस्कुनाः । अस्कुनाम् । अस्कुनीत । अस्कुनाताम् । अस्कुनीथाः । अस्कुनि । अस्कुनीवहि । अस्कुनोत् । अस्कुनुताम् । अस्कुनोः । अस्कुनवम् । अस्कुनुत । अस्कुन्वाताम् । अस्कुनुथाः । अस्कुन्वि । स्कुनीयात् । स्कुनीयाः । स्कुनीयाम् । स्कुनीत । स्कुनीयाताम् । स्कुनीथाः । स्कुनीय । स्कुनुयात् । स्कुन्वीत । स्कुन्वीथाः । स्कुन्वीय । आशिषि—स्कूयात् । स्कूयास्ताम् । स्कोषीष्ट । स्कोषीय । अस्कौषीत् । अस्कौष्टाम् । अस्कोष्ट । अस्कोषाताम् । चुस्कूषति, चूस्कूषते । चोस्कूयते । चोस्कोति । स्कावयति । अचुस्कवत् । स्कुत्वा । स्कुतः । स्कुतवान् ॥ ६ ॥

७. युञ् बन्धने । युनाति । युनीते । योता इत्यादि स्कुनातिवत् । युयूषति इत्यत्र 'सनीवन्तर्ध' इत्यादौ युग्रहणेन ऊर्णुञ्साहचर्यान्निरनुबन्धकत्वाच्च मिश्रणार्थस्यादादिकस्य ग्रहणादिड्विकल्पो न भवति ॥ ७ ॥

८. क्र्यादयोऽनुदात्ता उभयतोभाषाः ।

अथ सेट आह—

९. क्नूञ् शब्दे । एतदादयो धूञन्ता उदात्ता उभयतोभाषाः । क्नूनाति । क्नूनीते इत्यादि स्कुनातिवत् । चुक्नाव । चुक्नुवतुः । चुक्नुवे । क्नुविता । आर्धधातुके त्विड्भवति । क्नुविष्यति । क्नविषीष्ट । अक्नावीत् । अक्नविष्टाः । सनि तूगन्तत्वात् 'सनि ग्रहगुहोश्च' इतीण्निषेधः । चुक्नूषति, चुक्नुषते इत्यादि ॥ ८ ॥

१०. द्रूञ् हिंसायाम् । द्रूणाति । द्रूणीते इत्यादि क्नूञ्वत् ॥ ९ ॥

११. पूञ् पवने । पवनं पूतीकरणम् । सकर्मकोऽयम् । तथा च 'पुनात्यग्निम्' 'पुनीते आत्मानम्' 'कर्षकेण वलजं पुपूषते' इत्यादौ सकर्मकत्वं दृश्यते । पुनाति । पुनासि । पुनामि । पुनीते । पुनीषे । पुने —'प्वादीनां ह्रस्वः' इति शिति परे ह्रस्वः । पुपाव । पुपुवतुः । पुपविथ । पुपुविव । पुपुवे । पुपुविरे । पुपुविषे । पुपुवे । पविता । पविष्यति । पविष्यते । पुनातु । पुनीताम् । पुनीष्व । पुनै । अपुनात् । अपुनीताम् । अपुनाः । अपुनाम् । अपुनीव । अपुनीत । अपुनाताम् । अपुनीथाः । अपुनि । अपुनीवहि । पुनीयात् । पुनीयाः । पुनीयाम् । पुनीत । पुनीयाताम् । पुनीथाः । पुनीय । आशिषि–पूयात् । पूयास्ताम् । पविषीष्ट । अपावीत् । अपाविष्टाम् । अपाविषुः । अपविष्ट । पुपूषति । पुपूषते—उगन्तत्वादनिट्त्वम् । पोपूयते । पोपोति ।

पावयति। अपीपवत्—'ओः पुयण्जि' इत्यभ्यासस्येत्वम्। 'दीर्घो लघोः' इति दीर्घः। पूत्वा। पूतः। पूनाः यवाः, विनष्टा इत्यर्थः—'पूञो विनाशे' इति निष्ठानत्वम्। शेषाः कृत्त्वः पवतिवत् ॥ १० ॥

१२. लूञ् छेदने। लुनाति। लुनीते इत्यादि पुनातिवत्। लवित्रम्—'अर्तिलू' इति इत्रः। लूत्वा, लूनः—'ल्वादिभ्यः' इति निष्ठानत्वम्। लूनिः—'ऋल्वादिभ्यः क्तिन्निष्ठावत्' इति नत्वम्। लवकः—'प्रसृल्वः समभिहारे वुन्'। अभिलावः—'निरभ्योः पूल्वोः' इति घञ्। अपोऽपवादः। लोत्रम्—करणे ष्ट्रन्। लोतः—'हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्' इति तन्। उभयत्र 'तितुत्र' इतीण्निषेधः ॥११॥

१३. स्तॄञ् आच्छादने[1]। स्तृणाति। स्तृणासि। स्तृणामि। स्तृणीते। स्तृणीषे। स्तृणे। तस्तार। तस्तरतुः। तस्तरिथ। तस्तरिव। तस्तरे। तस्तरिषे। तस्तरिवहे—'ऋच्छत्यॄताम्' इति गुणः। वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिः। कृते वा गुणे वृद्धिरित्युक्तम्। स्तरिता, स्तरीता। स्तरिष्यति, स्तरिष्यते; स्तरीष्यति, स्तरीष्यते—'वॄतो वा' इत्यलिटीटो दीर्घविकल्पः। स्तृणातु। स्तृणीहि। स्तृणानि। स्तृणाव। स्तृणीताम्। स्तृणीष्व। स्तृणै। अस्तृणात्। अस्तृणीताम्। अस्तृणाः। अस्तृणाम्। अस्तृणीत। अस्तृणीयाताम्। स्तृणीयात्। स्तृणीत। स्तृणीथाः। स्तीर्यात्। स्तीर्षीष्ट, स्तरिषीष्ट—'लिङ्सिचोरात्मनेपदेषु' इतीड्विकल्पः। 'उश्च' इति कित्वम्। इट्पक्षे 'वॄतः' इति दीर्घस्य 'न लिङि' इति निषेधः। अस्तारीत्। अस्तारिष्टाम्—'सिचि च परस्मैपदेषु' इतीटो न दीर्घः। अस्तीर्ष्ट, अस्तरीष्ट, अस्तरिष्ट—'लिङिसिचोः' इतीड्विकल्पः। इटि 'वॄतः' इति वा दीर्घः। अनिटि 'उश्च' इति कित्वम्। तिस्तीर्षति, तिस्तरिषति, तिस्तरीषति—'इट् सनि वा' इति वेट्। इटि पूर्ववद्दीर्घः। तास्तीर्यते। तास्तरीति, तास्तर्ति—'ऋतश्च' इति रिगादयस्तपरकरणान्न भवन्ति। उरदत्वे 'दीर्घोऽकितः' इति दीर्घः। स्तारयति। अतस्तरत्—'अत्स्मृदृत्वर' इत्यभ्यासस्यात्वम्। मणिप्रस्तारः—'प्रे स्त्रोऽयज्ञे' इति घञ्। यज्ञविषये त्वपि प्रस्तरः। विस्तारः—'प्रथमे वावशब्दे' इति घञ्। शब्दविषये तु विस्तरः। विष्टारः, पङ्क्तिच्छन्दः—'छन्दोनाम्नि च' इति योगाभ्यां घञ्षत्वे। अवस्तारः—'अवे तॄस्त्रोर्घञ्' इति करणाधिकरणयो घञ्। स्तीर्णः। स्तीर्णिः—'ऋल्वादिभ्यः क्तिन्निष्ठावत्' इति नत्वम् ॥ १२ ॥

१४. कॄञ् हिंसायाम्। कृणाति। कृणीते। चकार। चकरतुः। चकरुः इत्यादि स्तृणातिवत् ॥ १३ ॥

१५. वॄञ् वरणे। वृणाति। वृणीते। ववार। ववरे। वरिता, वरीता। वरिष्यति, वरीष्यति। वरिष्यते, वरीष्यते। वृणातु। वृणीताम्। अवृणात्। अवृणीत। वृणीयात्। वृणीत। आशिषि वूर्यात्—'उदोष्ठ्यपूर्वस्य' इत्यगुणवृद्धिविषये उत्वे रपरत्वे

---

१. 'छादने' इति क्षीरस्वामी।

च 'हलि च' इति दीर्घः । वरिषीष्ट । वूर्षीष्ट—'लिङ्सिचोरात्मनेपदेषु' इतीडभावपक्षे 'उश्च' इति कित्त्वादुत्वादि । इट्पक्षे पूर्ववत् 'न लिङि' इति अदीर्घत्वम् । अवारीत् । अवारिष्टाम्— पूर्ववत् 'वॄतः' इति दीर्घस्य 'सिचि च परस्मैपदेषु' इति निषेधः । अवरिष्ट, अवरीष्ट, अवूर्ष्ट—'लिङ्सिचोः' इतीड्विकल्पे 'वॄतः' इति दीर्घः । अनिटि 'उश्च' इति कित्त्वादुत्वादि । वुवूर्षति, विवरिषति, विवरीषति—इट् सनि वा' इतीड्विकल्पे 'वॄतः' इति दीर्घविकल्पः । अनिटि 'इको झल्' इति सनः कित्त्वे उत्वादि । वोवूर्यते । वावर्ति—'ऋतश्च' इति तपरनिर्देशान्न रुगादीत्युक्तम् । वारयति । अवीवरत् । वूर्णः । वूर्णवान् । वूर्णिः ॥ १४ ॥

१६. धूञ् कम्पने । धुनाति । धुनीते । दुधाव । दुधुवतुः । दुधविथ । दुधुविव । दुधुविम । दुधुवे । दुधुविषे । दुधुविध्वे, दुधुविढ्वे । दुधुविवहे—स्वरत्यादिसूत्रेण प्राप्तमार्द्धधातुकनिबन्धनमिड्विकल्पं पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात् 'श्र्युकः किति' इति निषेधो बाधते, तमपि क्रादिनियमो बाधते इति नित्यमिडित्यादि तत्र तत्रोक्तम् । धोता, धविता । धोष्यति, धविष्यति । धोष्यते, धविष्यते—'स्वरति' इत्यादिना इड्विकल्पः । धुनातु । धुनीताम् । अधुनात् । अधुनीत । धुनीयात् । धुनीत । आशिषि—धूयात् । धोषीष्ट, धविषीष्ट । अधावीत् । अधाविष्टाम् । अधोष्ट, अधविष्ट—'स्तुसुधूञ्भ्यः परस्मैपदेषु' इति नित्यं सिच इट् । दुधूषति, दुधूषते—'सनि ग्रहगुहोश्च' इतीण्निषेधः पूर्ववत् प्रतिषेधकाण्डारम्भसामर्थ्याद् स्वरत्यादिविकल्पम्बाधते । दोधूयते । दोधोति । धूनयति । अदूधुनत्—'धूञ्प्रीञोर्नुग्वचनम्' इति नुक् । धूत्वा—पूर्ववत् 'श्र्युकः किति' इतीण्निषेधः । धूतम्—'यस्य विभाषा' इत्यनिट्त्वम् । धुनोति, धुनुते इति स्वादौ । धुवति इति कुटादौ ॥ १५ ॥

१७. क्नूञादय उदात्ता उभयतोभाषाः[1] ।

१८. शॄ हिंसायाम् । इतो गृणात्यन्ता उदात्ता उदात्तेतः । शृणाति । शृणीतः । शृणासि । शृणामि । शशार । शश्रतुः, शशरतुः । शश्रुः, शशरुः । शशरिथ । शश्र । शशार, शशर । शश्रिव, शशरिव— 'असंयोगाल्लिट्' इत्यपितो लिटः कित्त्वे 'शॄदॄप्रां ह्रस्वो वा' इति ह्रस्वपक्षे यणादेशः । अन्यदा 'ऋच्छत्यॄताम्' इति गुणः । अपितो लिटः कित्त्वेन 'श्र्युकः किति' इति प्राप्तस्येण्निषेधस्य क्रादिनियमेन बाधः । शरिता, शरीता । शरीष्यति, शरीष्यति । शृणातु, शृणीतात् । शृणीहि । अशृणात् । अशृणीताम् । अशृणाः । अशृणाम् । अशृणीव । शृणीयात् । शृणीयाताम् । आशिषि शीर्यात् । शीर्यास्ताम्- 'ॠत इद्धातोः' इतीत्वे रपरत्वादि । अशारीत् । अशारिष्टाम्—इटो दीर्घस्य 'सिचि च परस्मैपदेषु' इति निषेधः । शिशरिषति, शिशरीषति, शिशीर्षति—'इट् सनि वा' इति पाक्षिकस्येटो 'वॄतः' इति दीर्घः । अनिटि 'इको झल्'

---

१. क्षीरस्वामी नेदं सूत्रं पठति ।

इति सनः कित्त्वादित्वम्। शेशीर्यते। शाशर्ति। शारयति। अशीशरत्। शारो वायुर्वर्णश्च। नीशारः अकृतप्रावरणः—नेः 'उपसर्गस्य घञि' इति दीर्घः। 'शॄ वायुवर्णनिवृतेषु' इति घञ्। निव्रियते इति निवृतं प्रावारः। शारुकः—'लषपतपद' इत्यादिनोकञ्। शरारुः—'शॄवन्द्योरारुः' इत्यारुः। किंशारुः सस्यशूकम्—'किञ्जरयोः श्रिणः' इति किंशब्दे उपपदे उण्। शरुः, आयुधम्—'शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' इत्यूप्रत्ययः। शरीरम्—'कॄशॄपॄकटिपटिशौटिभ्य ईरन्' इति ईरन् प्रत्ययः। शरत्—'शॄदृभसोऽदिः' इत्यदिप्रत्ययः। शरदिजः—'प्रावृट्शरत्कालदिवां जे' इत्यलुक्। शरदि भवं श्राद्धं शारदिकम्—'श्राद्धे शरदः' इति ठञ्। ऋत्वणोऽपवादः। शारदो रोगः, शारदिको रोगः—'विभाषा रोगातपयोः' इति वा ठञ्। अन्यदा ऋत्वण्। एवमातपेऽपि। शारदका मुद्गाः। शारदका दर्भाः—'संज्ञायां शरदो वुञ्' इति 'तत्र जातः' इत्यस्मिन्विषये वुञ्। दर्भविशेषस्य मुद्गविशेषस्य चेयं संज्ञा। परा शृणातीति परशुः—'आङ्परयोः खनिशॄभ्यां डिच्च' इत्युप्रत्ययः, डित्त्वाट्टिलोपः। बाहुलकात्परोपसर्गस्य ह्रस्वः। परशवे हितं परशव्यम्—'उगवादिभ्यो यत्' इति यत्। परशव्यस्य विकारः पारशवः—'कंसीयपरशव्ययोर्यञञौ लुक् च' इत्यञ्प्रत्ययः, यत्प्रत्ययस्य लुक्। आशरः—पचाद्यच्। पराशृणाति पापानीति पराशरः—अच्। पाराशर्यः—गर्गादित्वादपत्ये यञ्। पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयानाः पाराशरिणः भिक्षवः—'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' इति प्रोक्ते णिनौ तदन्तात् 'छन्दोब्राह्मणानि' इत्यध्येतृवेदित्रोरणः 'प्रोक्ताल्लुक्' इति लुक्। सूत्रस्यापि छन्दस्त्वं तत्रेष्यते। णिनावल्लोपयलोपौ ॥ १६ ॥

१९. पॄ पालनपूरणयोः। पृणाति। पपार। पप्रतुः। पप्रुः। परिता, परीता। परिष्यति, परीष्यति। पृणातु। अपृणात्। पृणीयात्। आशिषि पूर्यात्—'उदोष्ठ्यपूर्वस्य' इत्युत्वम्। अपारीत्। अपारिष्टाम्। पिपरिषति, पिपरीषति, पुपूर्षति—'इट् सनि वा' इतीडभावे 'इको झल्' इति कित्त्वादुत्वादि। पोपूर्यते। पापर्ति। पारयति। अपीपरत्। पूर्तः। पूर्तवान्—'न ध्याख्यापॄमूर्छिमदाम्' इति नत्वनिषेधः, 'उदोष्ठ्यपूर्वस्य' इत्युत्वम्। निष्ठानत्ववर्जं प्रक्रिया शृणातिवत्। पिपर्ति इति श्लौ ॥ १७ ॥

२०. स्पॄ[1] हिंसायाम्। स्पृणाति। पस्पार। इत्यादि पृणातिवत्। 'शॄदॄप्रां ह्रस्वो वा' इति त्वस्य न भवति। निष्ठानत्वं तु भवति—स्पूर्णः, स्पूर्णवान् इति ॥ १८ ॥

२१. वॄ[2] वरणे। वृणाति। ववार इत्यादि वृञ्वत्। तेनैव वृणातीत्यादिसिद्धावपि पुनरस्योपादानेन प्रयोजनम्? नैतद्युक्तम्; सिद्धे पदद्वये वृञो ञित्वाद्यतो न च फले तत्कर्त्रभिप्राये परस्मैपदसिद्धये इति। 'अत्र चाद्यं पवर्गतृतीयादिं ब्रहवः पठन्ति[3]' इति पुरुषकारेण उक्तम्। अत्राद्यशब्देन ञित् वृणातिरुच्यते। स्वामिशाकटायनावप्येवं पठित्वा भरणमर्थमाहतुः ॥ १९ ॥

---

१. 'मॄ' इति क्षीरस्वामी। 'स्वॄ' इति मैत्रेयः। २. 'वॄ मॄ' इति क्षीरस्वामी। ३. दै० ३८ पृ०।

२२. मॄ भर्त्सने[1]। भरणेऽप्येके। भृणाति। बभार इत्यादि वृञ्वत्। भरः—'ॠदोरप्'। भरणेन निर्वृत्तं भरिमम्—"भावप्रत्ययान्तादिमब्वक्तव्यः" इतीमप् ॥२०॥

२३. मॄ हिंसायाम्[2]। मृणाति। ममार इत्यादि वॄवत्। म्रियत इति तुदादौ॥२१॥

२४. दॄ विदारणे। दृणाति। ददार। ददरतुः, दद्रतुः। ददरुः, दद्रुः इत्यादि शृणातिवत्। विशेषस्तु 'अत्स्मृदृत्वर' इत्यभ्यासस्य णौ चङ्यत्वम् अददरत् इति अयं घटादिपाठान्मित्। भये दरयति। अन्यत्र दारयति। दरः—अप्। दरी—गौरादित्वान्ङीष्। पुरन्दरः—'पूःसर्वयोर्दारिसहोः' इति खच्। भगन्दरः—'भगे च दारेः' इति वक्तव्यात् खच्। 'खचि ह्रस्व' इति उत्तरपदस्य ह्रस्वः। दारः—'दारजारौ कर्तरि णिलुक् च' इति घञि णिलुक्। दरत् जनपदः—'शॄदृभसोऽदिः' इत्यदिप्रत्ययः। दृषत्—'दृणातेः षुग्घ्रस्वश्च' इति षुगागमो धातोर्ह्रस्वोऽदिश्च प्रत्ययः। द्रियते इति तुदादौ ॥ २२ ॥

२५. जॄ वयोहानौ। श्नाविषये जृणाति इत्यादि। अन्यत्र जीर्यतिवत्। यथा तु भाष्यवार्त्तिकवृत्तिन्यासपदमञ्जर्यादि तथा 'अयं धातुर्नास्तीति प्रतीयते' इति जीर्यतावुपादितम्। आत्रेयमैत्रेयदैवपुरुषकारादिषु दर्शनादिहास्माभिर्लिखितः॥

'धॄ[3] इत्येके' इति मैत्रेयः। धृणाति इत्यादि[3] ॥ २३ ॥

२६. नॄ नये[4]। नृणाति। नीर्णम्। नीर्णवान्। नरः—पचाद्यच्। ना—'नयतेर्डिच्च' इति नयतेर्ऋन्प्रत्यः स च डित्। नारी—'नृनरयोर्वृद्धिश्च' इति शार्ङ्गरवादिपाठान्ङीन् वृद्धिश्च ॥ २४ ॥

२७. कॄ हिंसायाम्। कृणाति इत्यादि कॄञ्वत्। तेनैव सिद्धे पुनः पाठः कर्त्रभिप्राये क्रियाफलेऽपि वृणातिवत्परस्मैपदार्थः॥ 'मॄ हिंसायामित्येके' मैत्रेयः, एवं वदतोऽस्य पूर्वं मृणातेः पाठोऽनभिमत इति प्रतीयते ॥ २५ ॥

२८. ॠ गतौ। ऋणाति। ऋणीतः। ऋणासि। ऋणानि। अराञ्चकार इत्यादि—'इजादेश्च गुरुमत' इत्याम्। अरिता, अरीता। अरिष्यति, अरीष्यति। ऋणातु। ऋणीताम्। ऋणीहि। ऋणानि। आर्णात्। आर्णीताम्। आर्णाः। आर्णाम्। आर्णीव। ऋणीयात्। ऋर्णीयाताम्। आशिषि ईर्यात्। ईर्यास्ताम्—इत्वरपरत्वादि। आरीत्। आरिष्टाम्—'सिचि च परस्मैपदेषु' इतीटो न दीर्घः। अरिरिषति, अरिरीषति, ईर्षिषति—'इट् सनि वा' इतीड्विकल्पः, इटि गुणः, पूर्ववद्वा दीर्घश्च। अनिटि सनः कित्त्वादित्त्वादि, 'न न्द्राः' इति रेफवर्जितस्य द्विर्वचनम्। आरयति। मा भवानरिरत्।

---

१. 'भर्जने च' इति क्षीरस्वामी। २. क्षीरस्वामी मैत्रेयश्च सूत्रमिदं न पठतः।

३—३. मुद्रितधातुप्रदीपे तु 'चॄ इत्येके। २३। चृणाति। चीर्णम्। चीर्णः।' इति पाठो लभ्यते। विद्वांसस्तत्रत्य टिप्पणमपि द्रष्टव्यम्।

४. इतः परं 'न्धी इत्येके' इति मैत्रेयः पठति।

ईर्त्वा । समीर्णः । समीर्णवान्—'उदोष्ठ्यपूर्वस्य' इत्यत्र प्रत्यासत्त्याऽङ्गावयव एवौष्ठ्यो गृह्यते इत्युत्वमत्र न भवति । ऋच्छति इति शपि । इर्यर्ति इति श्लौ ॥ २६ ॥

२९. गॄ शब्दे । गृणाति । जगार इत्यादि पूर्ववत् । 'अवाद्ग्रः' इति तङस्य न न भवति । तथा च भाष्यम्—'न चावपूर्वस्य गृणातेः प्रयोगोऽस्ति' इति । 'समः प्रतिज्ञाने' इत्यत्र पूर्वसूत्रगृहीतस्यानुवृत्तिरिति सङ्गृणातीत्यत्र तङ् न भवति । होत्रेऽनुगृणाति, प्रतिगृणाति—'अनुप्रतिगृणश्च' इत्यनुपूर्वस्य प्रतिपूर्वस्य च गृणातेः कारकं पूर्वस्याः क्रियायाः कर्तृभूतं सम्प्रदानमिति होतुः सम्प्रदानत्वम् । होता चात्र पूर्वक्रियायाः शंसने कर्ता भवति । अनुगरः प्रतिगर इति हि शंसितुः प्रोत्साहनमुच्यते । तदयं वाक्यार्थः—प्रथमं शंसति होता तमन्यः प्रोत्साहयतीति । जेगिल्यते । जागर्त्ति । जागीर्त्तः—'लुपसद' इत्यादावकारविकरणैः साहचर्यात्तौदादिकस्यैव ग्रहणमिति क्रियासमभिहार एवास्य यङ् । ईत्वरपरत्वयोः 'पूर्वत्रासिद्धम्' इति पूर्वम् 'ग्रो यङि' इति लत्वे रेफाभावान्न 'हलि च' इति दीर्घः । लत्वे हि गिलतिगृणात्योर्द्वयोर्ग्रहणमुक्तम् ॥ २७ ॥

३० शॄणातिप्रभृतय उदात्ता उदात्तेतः ।

३१. ज्या वयोहानौ । एतदादयो बध्नात्यन्ता अनुदात्ता उदात्तेतः । जिनाति । जिनीतः । जिनासि । जिनामि । जिनीवः—ग्रहिज्यादिना सम्प्रसारणे पूर्वरूपत्वे 'हलः' इति दीर्घे प्वादित्वाद्ध्रस्वः । जिज्यौ । जिज्यतुः । जिज्यिथ, जिज्याथ । जिज्यिव—क्रादिनियमादिट् । थलि भारद्वाजनियमाद्विकल्पः । किति परत्वात् पूर्वं सम्प्रसारणे द्विर्वचनम् । अकिति 'लिट्यभ्यासस्योभयेषाम्' इत्यभ्यासस्य सम्प्रसारणम् । ज्याता । ज्यास्यति । जिनातु । जिनीताम् । जिनीहि । जिनानि । जिनाव । अजिनात् । अजिनीताम् । अजिनाः । अजिनाम् । अजिनिव । जिनीयात् । जिनीयाताम् । जिनीयाः । जिनीयाम् । आशिषि—जीयात् । जीयास्ताम् । अज्यासीत् । अज्यासिष्टाम्—'यमरमनमाताम्' इति सगिटौ । जिज्यासति । जेजीयते । जाज्याति । ज्यापयति । अजिज्यपत् । जीत्वा । जीनः—'ल्वादिभ्यः' इति निष्ठानत्वम्, 'हलः' इति दीर्घः । प्रज्याय—'ज्यश्च' इति ल्यपि सम्प्रसारणनिषेधः । ज्यानिः—'ग्लाम्लाज्याहाभ्यो निः' इति निः ॥ २८ ॥

३२. री गतिरेषणयोः । रेषणं वृकशब्दः । रिणाति । रिणीतः । रिणासि । रिणामि । रिराय । रिर्यतुः । रिर्यिथ, रिरेथ । रिर्यिव—क्रादिनियमादिट् । थलि तु भारद्वाजनियमाद्विकल्पः । अजादौ 'एरनेकाचः' इति यणोऽसिद्धत्वात् 'हलि च' 'उपधायाश्च' इति दीर्घत्वन्न भवति । रिणातु । रिणीहि । रिणानि । अरिणात् । अरिणीताम् । अरिणाः । अरिणाम् । रिणीयाताम् । आशिषि—रीयात् । रीयाताम् ।

अरैषीत् । अरैष्टाम् । रिरीषति । रेरीयते । रेपयति । अरीरपत्—'अर्त्तिह्री' इत्यादिना पुक् । शेषं रीयतिवत् ।। २९ ।।

३३. ली श्लेषणे । लिनाति । लिनातु । अलिनात् । लिनीयात् । ललौ । लिलाय । लिल्यतुः । लिलयिथ, लिलेथ । लिलयिव । लिल्यिव—'विभाषा लीयतेः' इत्येज्विषये ल्यपि वाऽऽत्वविकल्पः । किति लिटि एज्विषयत्वाभावान्नात्वम् । लाता, लेता । इत्यादि सर्वं लीयतिवज्ज्ञेयम् ।। ३० ।।

३४. व्ली वरणे । व्लिनाति । व्लिनीतः । व्लिनासि । व्लिनामि । विव्लाय । विव्लियतुः । विव्लेथ, विव्लयिथ । विव्लियिव । व्लेता । व्लेष्यति । व्लिनातु । व्लिनीहि । व्लिनानि । अव्लिनात् । व्लिनीयात् । अव्लैषीत् । अव्लैष्टाम् । विव्लीषति । वेव्लीयते । व्लेपयति । अविव्लिपत्—'अर्त्तिह्री' इत्यादिना पुक् । व्लीत्वा, व्लीनः । ल्वादित्वान्निष्ठानत्वम् । प्रहीणं व्लीनाति, नैनं दक्षिणा व्लीनाति इत्यादौ दीर्घश्छान्दसः ।। ३१ ।।

३५. प्ली[1] गतौ[2] । ओष्ठ्यादिः । प्लिनाति इत्यादि व्लिनातिवत्[3] । केचिदमुं दन्त्योष्ठ्यादिं पठन्तो 'व्ली वरणे' इत्यमुं न पेठुः । मैत्रेयस्तु वरणार्थं पठित्वाऽमुं न पपाठ ।। ३२ ।।

३६. वृत् । ल्वादिपरिसमाप्त्यर्थोऽयम् । अन्ये तु—प्वादीनामपि परिसमाप्त्यर्थमिति । तत्रानन्तर्यात् 'ज्ञाजनोर्जा' इति दीर्घनिर्देशाच्च ल्वादिपरिसमाप्त्यर्थत्वमेव युक्तम् । 'ज' इति ह्रस्वान्तादेशेऽपि जायते जानातीत्यादौ 'अतो दीर्घो यञि' इति दीर्घेण सिद्धे प्वादित्वात् जानातीत्यत्र ह्रस्वो मा भूदिति हि दीर्घत्वम् । उक्तं चैवं हरदत्तादिभिरपि ।।

३७. व्री वरणे । व्रीणाति । व्रीणीतः । व्रीणासि । व्रीणामि । विव्राय । विव्रियतुः । विव्रेथ । विव्रियिव । व्रेता । व्रेष्यति । व्रीणातु, व्रीणीतात् । व्रीणीहि । व्रीणानि । अव्रीणात् । अव्रीणीताम् । अव्रीणाः । अव्रीणाः । अव्रीणाम् । व्रीणीयात् । आशिषि—व्रीयात् । अव्रैषीत् । अव्रैष्टाम् । विव्रीषति । वेव्रीयते । वेव्रेति । व्राययति । अविव्रयत् । स्वामिकाश्यपादयः 'अर्तिह्रीव्री' इति पठन्तो व्रेपयति इति पुकं प्रतिपन्नाः ।। ३३ ।।

३८. भ्री भये । भरणे इत्येके[4] । भ्रीणाति इत्यादि व्रीवत् ।। ३४ ।।

३९. क्षीष् हिंसायाम् । क्षीणाति । चिक्षाय इत्यादि व्रीवत् । षित्वादङ्—क्षीयः । क्षीतः । क्षीतवान्—'क्षियो दीर्घात्' इति निष्ठानत्वं ह्रस्वान्तस्य क्षियो 'निष्ठायामण्यदर्थे' इति कृतदीर्घस्य । क्षयति इति क्षये शपि । क्षियते इति निवासगत्योः । क्षिणोति इति तनोत्यादौ हिंसायाम् ।। ३५ ।।

---

1. 'ल्वी' इति क्षीरस्वामी । 2. सूत्रमिदं मैत्रेयः 'ली श्लेषणे' इत्यस्यानन्तरं 'प्ली च' इति कृत्वा पठति । 3. क्षीरस्वामिप्रभृतयः 4. मैत्रेय-क्षीरस्वामिप्रभृतयः ।

४०. ज्ञा अवबोधने[४] । जानाति । जानीतः । जानन्ति । जानासि । जानामि । जानीवः—'ज्ञाजनोर्जा' इति शित्प्रत्यये जादेशः। दीर्घनिर्देशसामर्थ्यात् 'प्वादीनाम्' इति ह्रस्वो नेति प्ली गतौ इत्यत्रोक्तम् । जज्ञौ । जज्ञतुः । जज्ञिथ, जज्ञाथ । जज्ञिव क्रादिनियमादिट् । थलि भारद्वाजनियमाद्विकल्पः । ज्ञाता । ज्ञास्यति । जानातु । जानीहि । जानानि । अजानात् । अजानीताम् । अजानाम् । जानीयात् । आशिषि— ज्ञायात् । ज्ञायास्ताम् । ज्ञेयात् । ज्ञेयास्ताम्–'वाऽन्यस्य संयोगादेः' इत्यैत्वविकल्पः । अज्ञासीत् । अज्ञासिष्टाम् । शतमपजानीते अपलपतीत्यर्थः—'अपह्नवे ज्ञः' इति तङ् । सोपसर्गश्चायमपह्नवे वर्त्तते । सर्पिषो जानीते, सर्पिषोपायेन प्रवर्त्तते इत्यर्थः–'अकर्मकाच्च' इति तङ् । 'ज्ञोऽविदर्थस्य करणे' इति शेषत्वेन विवक्षिते षष्ठी । मात्रा सञ्जानीते । मातरं सञ्जानीते । शतं प्रतिजानीते–'सम्प्रतिभ्यामनाध्याने' इति तङ् । सम्पूर्वत्वे 'संज्ञोऽन्यतरस्यां कर्मणि' इति पक्षे तृतीया । आध्यानमुत्कण्ठापूर्वकं स्मरणम्, ततोऽन्यदनाध्यानम् । आध्याने तु मातुः सञ्जानाति—'अधीगर्थ' इति कर्मणि शेषे षष्ठी । अशेषे तु–'संज्ञः' इति द्वितीयातृतीये भवतः । मातरं सञ्जानाति । मात्रा सञ्जानाति । कृद्योगे तु मातुः संज्ञानम्–कृद्योगलक्षणा षष्ठी परत्वाद्भवति । धर्मञ्जानीते—'अनुपसर्गाज्ज्ञः' इति कर्त्रभिप्राये तङ् । स्वयं जानाति, जानीते इति वा—'विभाषोपपदेन प्रतीयमाने' इति कर्त्रभिप्रायत्वे उपपदेन द्योत्यमाने तद्विकल्पः । धर्म्मञ्जिज्ञासते—'ज्ञाश्रुस्मृदृशां सनः' इति तङ् । सकर्मकार्थमिदम् । अकर्मकात्तु 'पूर्ववत्सनः' तङ् सिद्धः । अनुजिज्ञासति पुत्रम्—'नानोर्ज्ञः' इति तङ्-निषेधः । अयं च मध्येऽपवादन्यायेन 'ज्ञाश्रुस्मृदृशाम्' इत्यस्यापवादः । तेन औषधस्यानुजिज्ञासते इत्यत्र 'पूर्ववत्सनः' इत्यकर्मकत्वनिबन्धनस्तङ् भवति । औषधेन प्रवर्तितुमिच्छतीत्यर्थः । जाज्ञायते, जाज्ञाति । ज्ञापयति । अजिज्ञपत्— मारणादौ ज्ञपयति—घटादित्वान्मित्त्वम् । प्रपञ्चो घटादावेवावगन्तव्यः । जानातीति ज्ञः—'इगुपध' इति 'श्याद्व्यध' इति णापवादे के आल्लोपः । पन्थानं प्रजानातीति पथिप्रज्ञः—'प्रे दाज्ञः' इति अणोऽपवादः कः । प्राज्ञः–'आतश्चोपसर्गे' इत्यङ् । पाणिन्युपज्ञम् अकालकं व्याकरणम् । उपज्ञायत इत्युपज्ञा = प्रथमज्ञानम् । पूर्ववदङ् । कालपरिभाषाशून्यं व्याकरणं पाणिनिना प्रथमं ज्ञातमित्यर्थः । 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' इत्युपज्ञोपक्रमान्तस्य तत्पुरुषस्य नपुंसकत्वम् । तच्छब्देनोपज्ञोपक्रमयोरर्थः परामृश्यते । तेन यद्युपज्ञेयस्योपक्रम्यस्य च आदिराख्यातुमिष्यते इत्यर्थः । अत्र च कालपरिभाषाशून्यस्य व्याकरणस्य पाणिनिरादिराख्यातुमिष्यते । ज्ञप्तः । ज्ञपितः—'वा दान्त' इति पक्षे णेर्लुक्यनिट्त्वम् ॥ ३६ ॥

---

४, इतः परं क्षीरस्वामी 'अनुदात्ताः' इति सूत्रं पठति ।

४१. बन्ध बन्धने । बध्नाति । बध्नीतः । बध्नासि । बध्नामि । क्ङिति 'अनिदिताम्' इति नलोपः । बबन्ध । बबन्धतुः । बबन्धिथ । बबन्ध । बबन्धिव-क्रादिनियमादिट् । थलि तु विकल्पः । संयोगान्तत्वाल्लिटः कित्त्वाभावान्नलोपो न भवति । बन्द्धा—'झषस्तथोः' इति धत्वम्, 'झलां जश् झशि' इति पूर्वस्य दत्वम्, तस्य 'झरो झरि' इति पक्षे लोपः । भन्त्स्यति—'एकाचः' इति भष्भावः । 'खरि च' इति चर्त्वं तकारः । बध्नातु । बध्नीताम् । बधान—'हलः श्नः शानज्झौ' इति श्नः शानजादेशो हेर्लुक् । बध्नाव । अबध्नात् । अबध्नीताम् । अबध्नाः । अबध्नीतम् । अबध्नीत । अबध्नीव । बध्नीयात् । आशिषि—बध्यात् । अभान्त्सीत् । अबान्द्धाम् । अभान्त्सुः—'वदव्रज' इति वृद्धिः । 'पूर्वत्रासिद्धम्' इति भष्भावात्पूर्वम् 'झलो झलि' इति सिचो लोपः । कृते तस्मिन् प्रत्ययलक्षणेन सादिप्रत्ययमाश्रित्य भष्भावो न भवति; प्रत्ययलक्षणे सिज्लोपस्यासिद्धत्वात् । बिभन्त्सति । बाबध्यते । बाबन्धि । बन्धयति । अबबन्धत् । चक्रबन्धं बद्धः, चक्रे बद्ध इत्यर्थः । अट्टालिकाबन्धं बद्धः, बन्धविशेषस्यैषा संज्ञा—'अधिकरणे बन्धः', 'संज्ञायाम्' इति च सूत्राभ्यां णमुल् । कषादित्वात् यथाविध्यनुप्रयोगः । बद्धः—निष्ठा । चक्रे बद्धः चक्रबद्धः । दृषदि बद्धः दृषद्बद्धः—'सप्तमी' इति योगविभागात्समासः । 'तत्पुरुषे कृति बहुलम्' इत्यलुकः 'नेन्सिद्धबध्नातिषु च' इति निषेधः । चक्रे बन्धः चक्रबन्धः । दृषदि बन्धः दृषद्बन्धः—'सिद्धशुष्कपक्वबन्धैश्च' इति सप्तमीतत्पुरुषः । 'बन्धे च विभाषा' इति हलदन्तात् सप्तम्या घञन्ते बन्धशब्दे उत्तरपदे विभाषा अलुक् । पचाद्यजन्ते तु बन्धशब्दे उत्तरपदे 'नेन्सिद्ध' इति निषेधो भवति—चक्रबन्ध इति । इयं च विभाषा येननाप्राप्तिन्यायेन 'नेन्सिद्ध' इति प्रतिषेधं बाधते । परत्वात् 'अमूर्द्धमस्तकात्' इत्येतम् । तेन स्वाङ्गपूर्वपदबन्धान्ते बहुव्रीहावपि लुग्विकल्पो भवति । हस्ते बन्धोऽस्य हस्तबन्धः, हस्ते बन्धः इति । बधिरः—'इषिमदि' इत्यादिना किरच् । ब्रध्नः आदित्यः । बुध्नः मूलम्—'बन्धेर्ब्रधिबुधी च' इति बध्नातेर्नक्प्रत्ययो ब्रधिबुधी चादेशौ च भवतः । बन्धुः—'शॄस्वृ' इत्युप्रत्ययः । कौमुदगन्धीबन्धुः—'बन्धुनि बहुव्रीहौ' इति ष्यङः सम्प्रसारणे 'हलः' इति दीर्घः । बन्धुरः—'मन्दिवाशि' इति बाहुलकादस्याप्युरच् । अस्याजन्तमध्ये पाठो नित्यपरस्मैपदानुरोधात् ॥ ३७ ॥

४२. ज्यादयोऽनुदात्ताः परस्मैभाषाः ।

४३. वृङ् सम्भक्तौ ।

४४. उदात्त आत्मनेपदी । वृणीते । वृणाते । वृणीषे । वृणे । वृणीवहे । वृणीमहे । वव्रे । ववृषे । ववृढ्वे । वव्रे । ववृवहे । वरिता, वरीता । वरिष्यते, वरीष्यते । वृणीताम् । वृणाताम् । वृणताम् । वृणीष्व । वृणै । अवृणीत । अवृणाताम् । अवृणीथाः । अवृणि । वृणीत । वृणीयाताम् इत्यादि वृणोतिवत्प्रक्रिया, प्रपञ्चस्तत एवावगन्तव्यः । वर्या—'अवद्यपण्यवर्या' इति स्त्रियां यति निपात्यते । पुंसि ण्यति—

वार्या ऋत्विज इति भवति । वर्या इति निपातनमस्येति स्थितम् । वरेण्यः—'वृङ एण्यः' इत्येण्यः ॥ ३८ ॥

४५. श्रन्थ विमोचनप्रतिहर्षयोः[1] । एतदादयः खच्यन्ता उदात्ता उदात्तेतः । विष्णातिस्त्वनिट् । क्लिश्नातिस्तु विकल्पितेट् । इष्णातिरपि वार्त्तिककारमतेन तादौ । श्रथ्नाति । श्रथ्नासि । श्रथ्नामि । श्रथ्नीवः । श्रथ्नीमः—'अनिदिताम्' इति नलोपः क्ङिति । शश्रन्थ । श्रेथतुः । श्रेथुः । शश्रन्थिथ, श्रेथिथ । श्रेथ । शश्रन्थ । श्रेथिव । श्रेथिम—'श्रन्थिग्रन्थिदम्भि' इत्यादिना लिटः कित्त्वात् 'अनिदिताम्' इति नलोपः ङिति । अत्र हरदत्तः—'एत्वाभ्यासलोपावत्र वक्तव्यौ' इति । अन्यथा 'असिद्धवदत्र' इति नलोपस्यासिद्धत्वादत एकहल्मध्यस्थत्वाभावान्न तौ स्याताम् । ये तु श्रन्थ्यादीनां कित्त्वविकल्पमिच्छन्ति तेषां शश्रन्थतुरित्याद्यपि । 'इदं च कित्त्वं पिद्वचनेष्वपि' इति सुधाकरः । तन्मते शश्राथ । श्रेथिथ । शश्रथ । शश्राथ इति । श्रन्थिता । श्रन्थिष्यति । श्रथ्नातु । श्रथ्नीताम् । श्रथान—'हलः श्नः शानच्' इति । शानचि हेर्लुक् । श्रथ्नानि । अश्रथ्नात् । अश्रथ्नीताम् । अश्रथ्नाः । अश्रथ्नीव । श्रथ्नीयात् । श्रथ्नीयाताम् । आशिषि श्रथ्यात् । श्रथ्यास्ताम्—कित्त्वादनुनासिकलोपः । अश्रन्थीत् । अश्रन्थिष्टाम् । अश्रन्थिषुः । शिश्रन्थिषति । शाश्रथ्यते । शाश्रन्थीति, शाश्रन्ति—'झरो झरि' इति थलोपो विकल्पेन, लोपाभावे 'खरि च' इति चर्त्वेन थकारस्य तकारः । श्रन्थयति । अशश्रन्थत् । कर्मकर्तरि—'णिश्रन्थि' इत्यादिना यक्चिणोर्निषेधात्—श्रथ्नीते मेखला स्वयमेव, अश्रन्थिष्ट मेखला स्वयमेव इति भवति । श्रन्थना—'ण्यासश्रन्थो युच्' इति युच्प्रत्ययः । प्रश्रथः । हिमश्रथः—'अवोदैधौद्मप्रश्रथहिमश्रथाः' इति निपातनाद्घञि नलोपो वृद्ध्यभावश्च । श्रन्थित्वा, श्रथित्वा—'नोपधात्थफान्ताद्वा' इति कित्त्वविकल्पः । श्रन्थते इति शैथिल्ये शपि ॥ ३९ ॥

४६. मन्थ विलोडने । अयं द्विकर्मकः । मथ्नाति । ममन्थ । ममन्थतुः इत्यादि श्रथ्नातिवत् । अस्य लिटः कित्त्वं नास्ति । कर्मकर्तरि यक्चिणौ स्तः । मथ्यते । अमन्थि इति । मथति इति विलोडने । मन्थति इति हिंसासंक्लेशनयोः शपि ॥ ४० ॥

४७. ग्रन्थ सन्दर्भे । ग्रथ्नाति इत्यादि सर्वं श्रन्थिवत् । अत्रापि केचित्[2] श्रन्थि पठन्ति । पुनः पाठोऽर्थभेदात् । तथा च 'णिश्रन्थि' इत्यत्र न्यासे 'ग्रन्थ सन्दर्भे इति चुरादौ' इत्युक्त्वा 'क्र्यादावपि' इत्युक्तम् । 'अवोदैधौद्मप्रश्रथ' इत्यत्र तु श्रन्थ विमोचनप्रतिहर्षयोरिति । एवमुभयत्र पदमञ्जर्यामपि । पुरुषकारेऽपि "श्रन्थ विमोचनप्रतिहर्षयोः, अन्ये तु श्रन्थ ग्रन्थ सन्दर्भे इति क्र्यादौ पठन्ति ।

---

१. 'मोचनहर्षणयोः' इति मैत्रेयः ।

२. मैत्रेयप्रभृतयः ।

तथा च सन्दर्भग्रन्थनक्रियायां श्रन्थिग्रन्थिधातू वर्तेते इति क्षीरस्वामी[1]" इत्युक्तम्। ग्रन्थिः—इन्प्रत्ययः ॥ ४१ ॥

४८. कुन्थ संश्लेषणे। संक्लेशे इत्येके। तथा च दैवम्—'कुन्थ संक्लेशे[2]' इति। कुथ्नाति। चुकुन्थ इत्यादि मन्थिवत्। कुथेति दुर्गः। तन्मते–कुथ्नाति। चुकोथ। कोथिता इत्यादि। कुन्थति इति शपि। कुथ्यति इति पूतीभावे श्यनि ॥ ४२ ॥

४९. मृद क्षोदे। मृद्नाति। मृद्नीतः। मृद्नासि। मृद्नामि। ममर्द। ममृदतुः। ममृदुः। ममर्दिथ। ममृदथुः। ममृद। ममृदिव। ममृदिम। मर्दिता। मर्दिष्यति। मृद्नातु। मृदान—'हलः श्नः' इति श्नः शानच्। मृद्नानि। अमृद्नात्। अमृद्नाः। अमृद्नाम्। अमृद्नीव। मृद्नीयात्। आशिषि—मृद्यात्। अमर्दीत्। मिमर्दिषति। मरीमृद्यते। मरीमर्दीति, मर्मर्त्ति इत्यादि। मर्दयति। अममर्दत्, अमीमृदत्—उर्ऋद्वा। मृत्—क्विप्। मृत्तिका—'मृदस्तिकन्' इति स्वार्थे तिकन्। मृत्स्ना। मृत्सा—'सस्नौ प्रशंसायाम्' इति सस्नौ प्रत्ययौ। मर्दनम्। मृद्यम्—'ऋदुपधात्' इति क्यप्। मृदित्वा—'मृडमृद' इति सेटः क्त्वः कित्त्वम् ॥ ४३ ॥

५०. मृड च। मृड सुखे चेति केचित्। मृड सुखने इत्यपरे[3]। मृडित्वा इत्यादि मृदिवत्। 'ष्टुना ष्टुः' इति ष्टुत्वं णकारः। मृडति इति शे ॥ ४४ ॥

५१. गुध रोषे। गुध्नाति। जुगोध। गुधिता इत्यादि मृदिवत्। गुधितः। गुधितवान्—'उदुपधात्' इति निष्ठायां कित्त्वविकल्पो व्यवस्थितविभाषया शब्विकरणानामेवेत्युक्तम्। गुध्यति इति परिवेष्टने दिवादौ ॥ ४५ ॥

५२. कुष निष्कर्षे। निष्कर्षो बहिर्निःसारणम्। कुष्णाति। कुष्णासि। कुष्णामि। कुष्णीवः—'ष्टुना ष्टुः' इति ष्टुत्वम्, 'रषाभ्याम्' इति णत्वम्। चुकोष। चुकुषतुः। चुकोषिथ। चुकोषिव। निष्कोषिता, निष्कोष्टा। निष्कोषिष्यति, निष्कोक्ष्यति। कुष्णातु। कुषाण। अकुष्णात्। कुष्णीयात्। आशिषि—कुष्यात्। निरकोषीत्। निरकुक्षत्—'निरः कुषः' इति वलाद्यार्धधातुके इड्विकल्पः। अनिष्पूर्वत्वे तु नित्यमिडेव। लुङ्यनिट्पक्षे 'शल इगुपधात्' इति क्सः। निश्चुकुषिषति, निश्चुकोषिषति, निश्चुकुक्षति–पूर्ववदिड्विकल्पः। इटि 'रलो व्युपधात्' इति कित्त्वविकल्पः। कुष्यति पादः स्वयमेव, कुष्यते वा। अकुष्यत् पादः स्वयमेव। कुष्यतु कुष्यतां वा पादः स्वयमेव—'कुषिरञ्जोः प्राचां श्यन् परस्मैपदं च' इति श्यन् परस्मैपदे सार्वधातुके। अन्यत्र कोषिष्यते पादः स्वयमेव। अकोषि पादः स्वयमेव इत्यादि। निष्कुषितम्—'इण् निष्ठायाम्' इति नित्यमिट्। कुष्ठः—'हनिकुषि' इत्यादिना क्थन्। कोष्ठम्—'उषिकुषी' इत्यादिना थन्। कुक्षिः—'प्लुषिकुषि' इति क्सिप्रत्ययः। सर्वत्र 'तितुत्र' इतीण्निषेधः। कौक्षेयकः—'कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु' इति असावभिधेये शैषिकष्ढकञ्। अन्यत्र कौक्षेयः—'दृतिकुक्षि' इत्यादिना भवार्थे ढञ् ॥४६॥

---

1. दै० पृ० ७२। 2. दै० पृ० ७१। 3. क्षीरस्वामिप्रभृतयः।

५३. क्षुभ संचलने । क्षुभ्नाति । क्षुभ्नीतः । चुक्षोभ । चुक्षुभतुः । चुक्षोभिथ । चुक्षुभिव । क्षोभिता । क्षोभिष्यति । क्षुभ्नातु । क्षुभान । क्षुभ्नानि । अक्षुभ्नात् । क्षुभ्नीयात् । आशिषि—क्षुभ्यात् । अक्षोभीत् । अक्षोभिष्टाम् । चुक्षुभिषति इत्यादि क्षुभ्यतिवत् । क्षोभते इति भूवादौ । अक्षुभदिति क्षुभ्यतेः पुषादिपाठात् । 'क्षुभ्नादिषु च' इति णत्वनिषेधो यत्रैतद्रूपं तत्रैवेति क्षोभणम् इत्यत्र रूपान्तरे न भवति। क्षुभ्नीतः क्षुभ्नन्ति इत्यादौ त्वेकदेशविकृतस्यानन्यत्वात्स्थानिवत्त्वाद्भवत्येव ॥४७॥

५४. णभ तुभ हिंसायाम् । नभ्नाति । तुभ्नाति इत्यादि पूर्ववत् । लुङि अनभीत् । अनाभीत्—'अतो हलादेः' इति वृद्धिविकल्पः । प्रणिनभ्नाति । प्रनिनभ्नाति—'शेषे विभाषा' इति णत्वविकल्पः । नभ्यति तुभ्यति इति दिवादौ । नभते तोभते इति शपि ॥ ४८–४९ ॥

५५. क्लिशु विबाधने । क्लिश्नाति । क्लिश्नीतः । क्लिश्नासि । क्लिश्नामि—'शात्' इति श्चुत्वनिषेधः । चिक्लेश । चिक्लिशतुः । चिक्लिशिथ, चिक्लेष्ठ । चिक्लिशिव, चिक्लिश्व—ऊदित्त्वात् 'स्वरतिसूति' इत्यादिना वलाद्यार्धधातुक इड्विकल्पः । क्लेशिता, क्लेष्टा । क्लेक्ष्यति, क्लेशिष्यति—अनिटि व्रश्चादिना षत्वे यथायोगं ष्टुत्वकत्वे । क्लिश्नातु । क्लिशान । क्लिश्नानि । अक्लिश्नात् । क्लिश्नीयात् । आशिषि—क्लिश्यात् । अक्लेशीत् । अक्लेशिष्टाम् । अनिट्पक्षे 'शल इगुपधात्' इति क्सः—अक्लिक्षत् । चिक्लेशिषति, चिक्लिशिषति, चिक्लिक्षति । चेक्लिश्यते । क्लेशयति । अचिक्लिशत् । क्लिशित्वा, क्लिष्ट्वा । क्लिष्टः, क्लिशितः—'क्लिशः क्त्वानिष्ठयोः' इतीड्विकल्पः । क्त्वायामूदित्त्वाद्वा सेटः क्त्वः 'रलो व्युपधात्' इति विकल्पं बाधित्वा 'मृडमृद' इत्यादिना नित्यं कित्त्वम् । क्लिष्टं च तदक्लिशितं च क्लिष्टाक्लिशितम्—'क्तेन नञ्विशिष्टेन' इति कर्मधारयः । क्लिश्यते इति दिवादौ ॥ ५० ॥

५६. अश भोजने । अश्नाति । अश्नीतः । अश्नासि । अश्नामि । आश । आशिथ । आशिव । अशिता । अशिष्यति । अश्नातु । अशान । अश्नानि । आश्नात् । आश्नाः । आश्नाम् । अश्नीयात् । आशिषि—अश्यात् । आशीत् । आशिष्टाम् । अशिशिषति । अशाश्यते । आष्टि—'सूचिसूत्रि' इत्यादिना यङ् । आशयति—'निगरण' इति नित्यं परस्मैपदम् । मा भवानशिशत् । अनाश्वान्—'उपेयिवाननाश्वान्' इति नञ्पूर्वादश्नातेर्भाषायां भूतसामान्ये लिट्, क्सुरनिट् निपात्यते । इदमेवादेशवचनं भूतसामान्ये लिटः कल्पकम्, स चादेशविषयः । इदं च निपातनमुत्तरत्रानुवृत्तेर्लुङ्लङ्लिड्विषयं भवति, अस्य चोपादनं अदादौ कृतमिति तत एवावगन्तव्यम्[1] । अशनायति बुभुक्षते इत्यर्थः—'अशनायोदन्यधनाया' इत्यादिना

१. प्रकरणमिदं पूर्वं ३५२ पृष्ठे द्रष्टव्यम् ।

बुभुक्षायामीत्वापवाद आत्वम् । अश्नीत पिबतेति यस्यां क्रियायां सातत्येनोच्यते सा अश्नीतपिबता—मयूरव्यंसकादौ 'आख्यातमाख्यातेन क्रियासातत्ये' इति पाठात्समासे टाप् । अश्नुते इति स्वादौ ॥ ५१ ॥

५७. उ ध्रस उञ्छे । ध्रस्नाति । दध्रास । दध्रसिथ । ध्रसिता । ध्रसिष्यति । ध्रस्नातु । ध्रसान । अध्रस्नात् । ध्रस्नीयात् । आशिषि—ध्रस्यात् । अध्रासीत्, अध्रसीत् । दिध्रसिषति । दाध्रस्यते । दाध्रस्ति । ध्रासयति । अदिध्रसत् । ध्रसित्वा, ध्रस्त्वा—उदित्त्वादिड्विकल्पः । ध्रस्तम्—'यस्य विभाषा' इत्यनिट्त्वम् । अयं चुरादौ । अत्र क्षीरस्वामी उकारं धात्ववयवमाह । तन्मते—उध्रस्नाति । उध्रसाञ्चकार । औध्रस्नात् इत्याद्युदाहार्यम् । 'अनवयवत्वे क्नसवादिवद् ध्रसु इति ब्रूयात्' इति तस्याभिप्रायः । स एव भूवादौ यदाह—

"दरिद्राजागृदीधीङामेकाचां च चिरेर्जिरेः ।
अदन्तोर्णोतिवेवीङां स्मर्यते नेत् तथोलडेः[1] ॥" इति,

तदुदाहरणप्रदर्शनमात्रपरम्, न तु परिगणनम् ॥ ५२ ॥

५८. इष आभीक्ष्ण्ये । पौनःपुन्यं भृशार्थो वाऽऽभीक्ष्ण्यम्, तद्विषयायां क्रियायामित्यर्थः । सा च यथायोग्यम् । तथा च श्रूयते 'पुर इष्णासि पुरुहूत' इति । अत्र भाष्यम्—'आसुरीणां पुरो हननादिरर्थो गम्यते' इति । इष्णाति । इष्णीतः । इयेष । ईषतुः । ईषुः । इयेषिथ । इयेष । ईषिव । गुणविषये 'अभ्यासस्यासवर्णे' इतीयङ् । अन्यत्र सवर्णदीर्घः । एषिता । एषिष्यति । इष्णातु । इषाण । इष्णानि । ऐष्णात् । ऐष्णीताम् । ऐष्णाः । इष्णीयात् । आशिषि—इष्यात् । ऐषीत् । ऐषिष्यत् । एषिषिषति—परत्वाद्गुणे द्वितीयस्यैकाचो द्विर्वचनम् । एषयति । मा भवानिषिषत् । ऋदित्करणात्कृतह्रस्वे द्विर्वचनमिति तत्रैवोक्तम् । एषित्वा, इषितः—'तीषसह' इतीड्विकल्पस्तौदादिकस्यैव न दैवादिकक्रैयादिकयोरेतदर्थमेव तौदादिकमुदितं पठित्वा सूत्रे तमुदितं पठन्तीति वृत्तौ स्थितम् । अनुदित्पाठिनां तौदादिकस्यैव ग्रहणे तु हरदत्तेनाकारमात्रविकरणेन सहिना साहचर्यमुक्तम् । एवं वर्धमानसम्मतक्षीरतरङ्गिणीकारादयश्च तौदादिकस्यैव 'तीषसह' इत्यत्र ग्रहणमाहुः । काश्यपस्तु 'इषेस्तकारे श्यन्प्रत्ययात् प्रतिषेधः' इति वार्त्तिकप्रामाण्यादश्यन्विकरणयोस्तौदादिकक्रैयादिकयोर्द्वयोरपीड्विकल्पमाह । हरदत्तोऽपि 'यथा तु वार्त्तिकं तथा क्रैयादिकस्याप्यत्र ग्रहणमिष्यते' इति । एवञ्च तौदादिकस्योदित्त्वं वार्त्तिकविरुद्धम् । उक्तं च तत्र कैयटे पाठद्वयं प्रस्तुत्य—'तत्र वार्त्तिककारस्य मते त्रयोऽपीषयो निरनुबन्धकाः इति तीषसहेत्यत्र पाठः, तौदादिकस्य इषेरिति' इति ॥ ५३ ॥

---

1. क्षीरतरङ्गिण्यां ५ पृष्ठे ।

५९. विष विप्रयोगे। अनिट्कारिकायां विषिग्रहणेन जौहोत्यादिकोऽयं च गृह्यते' इति न्यासे। विष्णाति। विवेष। विवेषिथ। विविषिव–क्रादिनियमादिट्। विष्णातु। विषाण। विष्णानि। अविष्णात्। वेष्टा इत्यादि चेष्टिवत्॥ ५४॥

६०. प्रुष प्लुष स्नेहनसेवनपूरणेषु[1]। प्रुष्णाति। पुप्रोष। पुप्रोषिथ। पुप्रुषिव। प्रोषिष्यति। प्रुष्णातु। प्रुषाण। प्रुष्णानि। अप्रुष्णात्। प्रुष्णीयात्। आशिषि प्रुष्यात्। अप्रोषीत्। पुप्रुषिषति, पुप्रोषिषति। पोप्रुष्यते। पोप्रोष्टि। प्रोषयति। अपुप्रुषत्। प्रोषित्वा, प्रुषित्वा। प्रुषितः। एवं प्लुष्णाति इत्यादि। प्रुष्ट्वा। प्रुष्टः। प्लुष्ट्वा। प्लुष्टः इति भौवादिकयोर्दाहार्थयोरुदितोः। प्रुषिस्तु दिवादौ पुषादौ च॥५५–५६॥

६१. पुष पुष्टौ। पुष्णाति। पुष्णीतः। पुषाण। अपुष्णात्। पुष्णीयात्। पुपोष। पुपोषिथ। पोषिता इत्यादि प्रोषतिवत्। पुष्यतीत्यनिट् पुषादौ। पुषति[2] इति पुष वृद्धावित्यस्य शपि॥ ५७॥

६२. मुष स्तेये। मुष्णाति इत्यादि पूर्ववत्। अयं द्विकर्मक इत्युक्तम्, तन्निबन्धनानि च कार्याणि तत्रतत्रोक्तानीति नेह प्रतायन्ते। मुषित्वा। मुमुषिषति—'रुदविदमुष' इति क्त्वासनोर्नित्यं कित्त्वम् 'रलो व्युपधात्' इति विकल्पापवादः॥५८॥

६३. खच भूतप्रादुर्भावे। भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः। खच्ञाति—श्चुत्वेन ञकारः। चखाच। चखचिथ। चखचिव। खचिता। खचिष्यति। खच्ञातु। चखान। खच्ञानि। अखच्ञात्। खच्ञीयात्। खच्यात्। अखचीत्, अखाचीत्–'अतो ह्लादेः' इति वा वृद्धिः। चिखचिषति। चाखच्यते। चाखचीति, चाखक्ति। खाचयति। अचीखचत्। खचित्वा। खचितः। 'खव इत्येके' इति मैत्रेयः। स्वामी अपि खच्ञातीत्युक्त्वा 'खौनातिरिति सभ्याः' इति[3]। खौनाति। खौनातु। खौनाहि—अनुनासिकादावूठ्, हौ च श्नः शानचः पूर्वं परत्वादूठि पश्चाद्धलन्तत्वाभावान्न शानच्। अखौनात्। खौनीयात्। आशिषि खव्यात्। शेषं खचिवत्। अत्र [4]क्वचिद् हेठ् चेति पठ्यते, तत्र हेठति इत्यादि। हेठ विबाधायामिति शपि॥ ५९॥

६४. ग्रन्थादय उदात्ता पिषिवर्जम्। क्लिशिस्तु विभाषितेट्। इषिरपि तकारादौ वार्त्तिकमतेन। सर्वे परस्मैपदिनः॥

६५. ग्रह उपादाने।

६६. उदात्तः स्वरितेत्। गृह्णाति। गृह्णीतः। गृह्णासि। गृह्णामि–'ग्रहिज्या' इत्यादिना सम्प्रसारणं क्ङितोः। गृह्णीते। गृह्णीषे। गृह्णे। गृह्णीवहे। जग्राह। जगृहतुः। जगृहुः। जगृहिथ। जगृहथुः। जग्राह, जग्रह। जगृहिव। जगृहे। जगृहाते। जगृ-

---

१. 'सेचनेषु' ख. पुस्तके। 'सेचनपूरणेषु' इति क्षीरस्वामी। 'स्नेहनमोचनपूरणेषु' इति मैत्रेयः। २. पोषतीति पाठो युक्तः। पुषतीति पाठे 'संज्ञापूर्वको विधिरनित्यः' इति गुणाभावः। ३. 'इदं न स्वामिमतमुद्धृतं सायणाचार्येण, अपि तु दुर्गमतम्' इति क्षीरतरङ्गिणीसम्पादकाः। ४. क्षीरतरङ्गिण्यादिषु।

ह्रिषे । जगृहिढ्वे, जगृहिध्वे । जगृहिवहे । ग्रहीता । ग्रहीष्यति । ग्रहीष्ये—'ग्रहोऽलिटि दीर्घः' इत्यलिटीटो दीर्घः । गृह्णातु । गृहाण । गृह्णानि । गृह्णीताम् । गृह्णाताम् । गृह्णीष्व । गृह्णै । अगृह्णात् । अगृह्णीताम् । अगृह्णीत । अगृह्णाताम् । गृह्णीयात् । गृह्णीयाताम् । गृह्णीयाः । गृह्णीत । गृह्णीयाताम् । गृह्णीरन् । आशिषि—गृह्यात् । गृह्यास्ताम् । ग्रहीषीष्ट । ग्रहीषीयास्ताम् । अग्रहीत् । अग्रहीष्टाम्—'ह्यन्त' इति न वृद्धिः । अग्रहिष्ट । अग्रहिषाताम् । जिघृक्षति । जिघृक्षते—'सनि ग्रहगुहोश्च' इतीण्निषेधः । 'रुदविदमुषग्रहि' इति सनः कित्त्वात्सम्प्रसारणम् । हो ढः, भष्भावः । 'षढोः' इति कत्वे षत्वम् । जरीगृह्यते—यङि संप्रसारणे द्विर्वचनम् । 'रीगृत्वतः' इत्यभ्यासस्य रीक् । जाग्राढि—यङो लुका लुप्तत्वान्न संप्रसारणम्, ढत्वधत्वष्टुत्वढलोपदीर्घाः । जागृढः—ढत्वादि दीर्घवर्जम् । तत्र हि पूर्वाणो ग्रहणम् । सम्प्रसारणं त्वपित्सार्वधातुकापेक्षम् । जाग्रहीति— झल्परत्वाभावान्न ढत्वम् । जाघृक्षि—ढत्वभष्भावकत्वषत्वानि । जागृढि । जागृह्वः । जाग्रहाञ्चकार । जाग्रहीता । जाग्रहीष्यति—'ग्रहोऽलिटि' इत्यत्र गृहेर्यद्विहितमार्धधातुकं तस्य य इडिति विहितविशेषणत्वेऽपि द्विःप्रयोगरूपत्वाद् द्विर्वचनस्य द्विरुक्तोऽपि स एव ग्रहिरिति दीर्घो भवति । विहितविशेषणाङ्गीकारस्य च प्रयोजनं जरिगृह्यशब्दाद्धलाद्यार्धधातुके इट्यल्लोपयलोपयोर्जरिगृहिता इत्यादौ दीर्घनिवृत्तिः । अत्र च न ग्रहेर्विहितमार्धधातुकम्, किं तर्हि ? यङन्तात् । जाग्राढु । जागृढाम् । जागृढि—अत्र हेरपित्त्वात्सम्प्रसारणादौ ढत्वादि । अजाग्राट् । अजागृढाम् । अजागृहुः । अजाग्रहम् । अजाग्राट्—तिप्सिपोर्हल्ङ्यादिलोपे पदान्तत्वाड्ढत्वभष्भावयोर्जश्त्वचर्त्वे । जागृह्यात् । जागृह्याताम् । जागृह्यास्ताम् । अजाग्रहीत् । अजाग्रहीः । 'स्यसिच्सीयुट्' इत्यादिना चिण्वदिटि ग्राहिष्यते इत्यादि । 'ग्रहोऽलिटि दीर्घः' प्रकृतस्येट इतीह न भवति । प्रगृह्यं पदम्, यस्य प्रगृह्यसंज्ञा विधीयते । गृह्यकाः शकुनयः, अस्वतन्त्रा इत्यर्थः । ग्रामगृह्या चाण्डालवाटिका, ग्रामाद्बहिर्भूतेत्यर्थः । अर्जुनगृह्यः अर्जुनपक्ष्यः—'पदास्वैरिबाह्यापक्षेषु च' इति ग्रहेः क्यप्, बाह्येति स्त्रीलिङ्गनिर्देशो लिङ्गान्तरे मा भूदिति । तेन ग्रामग्राह्यश्चाण्डाल इत्यत्र ण्यदेव भवति । गृह्यका इत्यत्रानुकम्पायां कन् । पाणिगृहीती—'पाणिगृहीती' इति ङीष् । ग्राही—नन्द्यादिना णिनिः । ग्राहः, ग्रहः—विभाषा ग्रहः' इति कर्तरि वा णः । अन्यदा च व्यवस्थितविभाषाविज्ञानात् जलचरे ग्राहः, ज्योतिषि ग्रहः । गृह्णात्युपादत्ते धान्यादिकमिति गृहं गेहम्—'गेहे कः' इति ग्रहेर्गेहे कर्तरि के प्रसारणम् । यदायं तात्स्थ्यात्तद्वचनस्तदा स्वभावात्पुल्लिङ्गो बहुवचनान्तश्च । शक्तिं गृह्णातीति शक्तिग्रहः—अच्प्रकरणे 'शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुःषु ग्रहेरुपसङ्ख्यानम्' इत्यच् । अणोऽपवादः । एवं लाङ्गलग्रह इत्यादि । सूत्रं धारयतीति सूत्रग्रहः—'सूत्रे च धार्यर्थे' इति धारयत्यर्थाद् ग्रहेरच् । फलेग्रहिः अवन्ध्यवृक्षादिः इति नैघण्टुकाः । 'फलेग्रहिरात्मंभरिश्च' इति इन्प्रत्ययः उपपदस्य चेकारान्तत्वं

निपात्यते। भट्टिकाव्ये तु फलग्राहिमात्रे प्रयुज्यते 'फलेग्रहीन् हंसि वनस्पतीनाम्[1]' इति। उद्ग्राहः—'उदि ग्रहः' इति घञ् 'ग्रहवृदृनिश्चि' इत्यपोऽपवादः। संग्राहो मल्लस्य अङ्गुलिसंनिवेशस्य दार्ढ्यमित्यर्थः। 'समि मुष्टौ' इति घञ् अपोऽवादः पूर्ववत्। 'मुष्टौ' इति मुष्टिविषयश्चेद्धात्वर्थ इत्यर्थः। अवग्राहो हन्त ते वृषल भूयात्। एवं निग्राहः—'आक्रोशे वन्योर्ग्रहः' इति घञ् पूर्ववद् अपोऽपवादः। आक्रोशः शपनम्। अन्यत्र विग्रहः पदस्य, निग्रहः चोरस्य–'ग्रहवृदृनिश्चिगमश्च' इत्यप्। पात्रप्रग्राहेण चरति भिक्षुः, लिप्सुः पात्रं गृहीत्वा चरतीत्यर्थः—'प्रे लिप्सायाम्' इति घञ् लिप्सायां गम्यमानायाम्। परिग्राहो वेद्याः—'परौ यज्ञे' इति ग्रहेर्घञ्। अन्यत्र परिग्रहो धनस्य—पूर्ववदप्। अवग्रहो देवस्य, अवग्राह इति वा—'अवे ग्रहो वर्षप्रतिबन्धे' इति घञपौ। वर्षस्य प्रतिबन्ध इत्यर्थः। तुलाप्रग्राहः, तुलाप्रग्रहः तुलासूत्रमित्यर्थः–'प्रे वणिजाम्' इति वा घञ्। 'वणिजामित्यनेन तुलासूत्रं लक्ष्यते, तेषां तेन सम्बन्धात्, न तु वणिजस्तन्त्रम्' इति वृत्त्यादौ स्थितम्। प्रग्राहः अश्वादेः, प्रग्रह इति वा—'रश्मौ च' इति वा घञ्। अश्वानां नियमनार्था रज्जुरिह रश्मि-शब्देनाच्यते। जीवग्राहं गृह्णाति—'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इति जीवशब्दे कर्मण्युपपदे ग्रहेर्णमुल्। कषादित्वाद्यथाविध्यनुप्रयोगः, जीवन्तं गृह्णातीत्यर्थः। हस्तग्राहं गृह्णाति। पाणिग्राहं गृह्णाति, हस्तेन गृह्णातीत्यर्थः—'हस्ते वर्त्तिग्रहोः' इति करणवाचिनि हस्तार्थे उपपदे णमुल्। पूर्ववदनुप्रयोगः। नामग्राहमाह्वयति, नाम गृहीत्वा आह्वयतीत्यर्थः—'नाम्न्यादिशिग्रहोः' इति नाम्न्युपपदे णमुल्। तृतीयाप्रभृतित्वात्समासविकल्पः। धातुसम्बन्धाधिकारादनुप्रयोगः। वासरूपेण क्त्वाप्यनुज्ञायते इति नाम गृहीत्वा इति भवति। गृहू ग्रहणे इति शपि। कुत्सायां गर्हते इति शपि। शप्येव गल्हते इति ॥ ६० ॥

इति श्रीपूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसङ्गमहाराजमहामन्त्रिणा मायणसुतेन माधवसहोदरेण सायणाचार्येण विरचितायां माधवीयायां धातुवृत्तौ क्र्यादयः सम्पूर्णाः।



१. भ० का० २।३३।

# १ चुरादिगणः*

१. चुर स्तेये । अकार उच्चारणार्थः, प्रयोजनान्तराभावात् । न च तदर्थोऽनुदात्त इत् स्यात्; 'सत्यापपाश' इत्यादिना चुरादिभ्यः स्वार्थे णिचो विधानादणिचः प्रयोगाभावात् । तथा च काश्यपः—'कार्याभावादेकश्रुत्या च पठ्यते' इति । अत्र आभरणे—'घुषिरविशब्दने इति ज्ञापकादक्रियमाणेऽपि वाग्रहणे चुरादिभ्यो णिज्वा' इत्युक्तम्। 'अत एकहल्' इत्यत्र वृत्तौ जगणतुः जगणुः इति प्रत्युदाहरणसमर्थनार्थम् 'अनित्यण्यन्ताश्चुरादयः' इति न्यासकारेणाभिधानाद् 'इदं ज्ञापकं सामान्यापेक्षञ्च' इत्युक्त्वा '''आधृषाद्वा' इति गणकारवचनं चानुवादः'' इत्युक्तम् । ज्ञापकस्य स्वरूपमस्माभिर्घोषतौ लिखितमिति नेह प्रदर्शितम् । तत्र ज्ञापकस्य सामान्यापेक्षत्वं कैयटविरुद्धम् । यदाह—'णेरणौ' इत्यत्र 'गणयति गणम्' इति भाष्यव्याख्याने—'नित्यत्वाण्णिचः केवलानां चुरादीनां प्रयोगाभावाद्' इति । भाष्यविरुद्धं च । तथा हि—"किमर्थमविशब्दन इत्युच्यते ? न विशब्दने घुषेर्णिचा भवितव्यम् । एवं तर्हि सिद्धे सति यदविशब्दनग्रहणं करोति तज्ज्ञापयत्याचार्यः—'विशब्दने घुषेर्विभाषा णिज् भवति' इति । किमेतस्य ज्ञापने प्रयोजनम् ? 'महीपालवचः श्रुत्वा जुघुषुः पुष्यमाणवाः' इत्येष प्रयोग उपपन्नो भवति[१]" इति विशिष्टविषयत्वेनाभिधानात् । 'ऋदुपधाच्चाक्लृपिचृतेः' इत्यत्र 'अनित्यण्यन्ताश्चुरादयः' इति सामान्येन यदुक्तं पदमञ्जर्यां तदपि मतान्तरापेक्षम्, न तु स्वमतेन। यद्वक्ष्यति 'घुषिरविशब्दने' इत्यत्र घुषिविषयमेव ज्ञापकमुक्त्वा "अन्ये त्वाहुः—'अनित्यण्यन्ताश्चुरादयः' इति सामान्येन ज्ञाप्यते" इति । याऽपि 'ऋदुपधाच्च' इत्यादौ 'अनित्यण्यन्ताश्चुरादयः' इति न्यासकृतः सामान्योक्तिः साऽपि येषां लिङ्गेन वचनेन वा णिज्विकल्पस्तन्मात्र-

---

* चुरादिगणव्याख्यानं प्रारिप्सुः क्षीरस्वामी आह—

"व्याख्यातेयं नवगणी कुशकाशावलम्बनात् ।
चुरादिरधुनारब्धो यत्र मग्ना महारथाः ॥
पाठेऽर्थे चागमभ्रंशान्महतामपि मोहतः ।
न विद्मः किं नु जहिमः किं वात्राद्ध्महे वयम् ॥" इति ।

अस्माकमप्येषैव स्थितिः । माधवीयधातुवृत्तिसंस्करणेष्वेवैतद्गणस्थधातूनां प्रचुरः पाठभेदो दृश्यते, का कथा मैत्रेयक्षीरस्वाम्याद्युद्धृतपाठानामिति वयमपि यथामति एकमेव पाठं स्वीकृत्य सर्वमपि भिन्नं पाठं तत्रतत्र टिप्पण्यां स्थापयिष्यामो विदुषां परितोषार्थम् । —स०

१. म० भा० ७।२।२३ ( पा० सू० ) ।

विषयैव । तथा च 'णेरणौ' इत्यत्र तेनैवोक्तम्—'चौरादिकानामप्यनित्यण्यन्तत्वाद् विभाषितणिचां केषांचिद्विद्यमानत्वात्' इति । 'यस्मात् णेः प्राक्कर्म कर्ता वा विद्यते न चैतस्माण्णेः प्राक्कर्म कर्ता वा विद्यते' इति गणे नित्यण्यन्तत्वाभिधानं च विरुध्येत । तथा जगणतुरिति प्रत्युदाहरणे पदमञ्जर्यामपि —'चुरादित्वादत्र णिच् प्राप्नोति, यदि नेष्यते अनित्यण्यन्ताश्चुरादयः' इति यदिना ह्यपरितोषः सूच्यते । अपरितोषश्च पूर्वोक्तो भाष्यविरोधः । तदेवं नित्ये णिचि 'स्वरितेत्स्यात् ग्रहिः क्र्यादौ लक्षिश्चेष्टश्चुरादिषु' इति वचनाल्लक्षेः स्वरितेत्त्वाल्लिङ्गादन्येभ्यश्चुरादिभ्यो 'णिचश्च' इति कर्त्रभिप्रायेऽपि तङ् नेत्युक्त्वा चन्द्रस्त्वत्राप्युभयपदित्वमास्थित । 'णिज्विकल्पश्च' इत्याह स्वामी । एवं देवो नन्दी चाहतुः । मैत्रेयस्तु स्वरितेत्त्वमस्य नेच्छति, यदाह—'स्वरितेत्त्वमस्य कश्चित्प्रतिपद्यते' इति । 'णिचश्च' इत्यत्र हरदत्तोऽपि लक्षेः स्वरितेत्त्वं प्रस्तुत्याह—'नात्राप्तभाषितमस्ति, पारायणेऽपि 'चुरादिणिच आत्मनेपदमुदाहृतम्' इति । एवं च लक्षञिति पठित्वा "ञित्करणादन्येभ्यश्चुरादिभ्यः 'णिचश्च' इति तङ् न भवति" इति च श्रीभद्रवचनमपि प्रत्युक्तम् । प्रक्रियारत्ने च 'चितेरिदित्त्वात् ज्ञापकाच्चुरादिणिचोऽनित्यत्वाच्चट स्फुट भेदने इत्यादौ चटति इत्याद्यपि यथादृष्टं द्रष्टव्यम्' इत्येकीयमतमुक्त्वा 'तद्भाष्योक्तज्ञापकविरुद्धम् । एवं हि घुषिरविशब्दन इत्यस्याप्यण्यन्तस्य सम्भवात्तद्व्यावृत्त्यर्थाऽविशब्दनोक्तिः कथं ज्ञापिका स्यात्' इति तन्मतं दूषितम् । तस्माद्यत्र लिङ्गं वचनं चास्ति तत्र विकल्प इति सिद्धमिति । वचनं स्पष्टम् । लिङ्गमपि तत्रतत्र धातावुपदर्शयिष्यते । यत्तु जगणतुः, जगणुरिति लिङ्गवचनयोरभावेऽप्यण्यन्तस्य प्रत्युदाहरणम् 'अत एकहल्' इत्यत्र वृत्तौ, तत् 'अनित्यण्यन्ताः' इति सामान्यवादिमतापेक्षया, न तु सिद्धान्तबुद्धया । चोरयति । चोरयतः । चोरयन्ति । चोरयसि । चोरयथः । चोरयथ । चोरयामि । चोरयावः । चोरयामः । चोरयते । चोरयेते । चोरयन्ते । चोरयसे । चोरयथे । चोरयध्वे । चोरये । चोरयावहे । चोरयामहे । चोरयाञ्चकार । चोरयाञ्चक्रे । चोरयामास । चोरयाम्बभूव । प्रत्ययान्तत्वादाम्प्रत्ययः । 'अयामन्त' इति णेरयादेशः । चोरयिता । चोरयिष्यति । चोरयिष्यते । चोरयतु । चोरयताम् । अचोरयत् । अचोरयत । चोरयेत् । चोरयेत । चोर्यात्—'णेरनिटि' इति णिलोपः । चोरयिषीष्ट । अचूचुरत् । अचूचुरत—'णिश्रि' इत्यादिना चङ् । शत्रादिकार्यं भूवज्ज्ञेयम् । चुचोरयिषति । चुचोरयिषते—चिण्वदिटि तस्यासिद्धत्वाण्णिलोपे चोरिष्यते । अचोरिषाताम् । एकवचने चिणिति सिचोऽभावः—अचोरि । चोरिषीष्ट । चोरिता इति भवति । चोरः—पचाद्यच् । चौरः—प्रज्ञादित्वात्स्वार्थेऽण् । चोरणा—'ण्यासश्रन्थ' इति युच् । चुरा—छत्रादिपाठादकारप्रत्ययः, गुणाभावश्च । चुरा शीलमस्याः चौरी—'छत्रादिभ्यो णः' इति णेऽपि 'णेऽपि क्वचिदण्कृतम्' इति ङीप् । एतच्च करोतावुपपादितम् ॥ १ ॥

२. चिति स्मृत्याम् । इदित्त्वान्नुम्—चिन्तयति इत्यादि । चिन्ता—'चिन्ति-पूजि' इत्यादिना अङ्प्रत्ययः । अत्र मैत्रेयः 'अकारे विधातव्येऽङो विधानं गुणाभावार्थम्, तत्सामर्थ्यात्कदाचिण्णिलोपो नास्ति' इति तत्र चिन्तिया इतीयङुदाहर्त्तव्यः । चिन्त स्मृत्यामिति सानुषङ्ग एव पठितव्ये इदित्पाठान्नलोपाभावार्थादस्य णिच् पाक्षिकः । नित्ये हि णिचि तस्य स्थानिवद्भावाद्व्यधानान्न क्वापि कित्परत्वमिति चिन्ता इत्यादौ नलोपाप्रसङ्गः । तेन चिन्तति । चिचिन्त । चिन्तिता इत्याद्यपि भवति । एवमन्यत्रापीदित्त्वं णिज्विकल्पार्थं द्रष्टव्यम् । चेतति इति शपि संज्ञाने । चेतयते इत्याकुस्मीयः ॥ २ ॥

३. यत्रि सङ्कोचने । यन्त्रयति । यन्त्रणा । यन्त्रितः । अत्रापि पूर्ववदिदित्करणाद्यन्त्रतीत्याद्यपि भवति । अत्र आमरणे यन्त्र् इति पठित्वा "ऋकारः 'नाग्लोपि' इति विशेषणार्थः" इत्युक्तम् । अयं पाठश्चिरन्तनव्याख्यानेषु न दृश्यते, प्रत्युत यन्त्रणादिशब्दमस्मादेव मैत्रेयादयो व्युदपादयन् । अनेकविकरणविवरणे दैवे, तद्व्याख्याने पुरुषकारे वा प्रयत्नार्थनिकारार्थवत्सङ्कोचार्थो नोपादीयते इति तस्य मूलं मृग्यम् ॥ ३ ॥

४. स्फुडि परिहासे । स्फुण्डयति, स्फुण्डति इत्यादि । 'स्फुटि इति प्रथमान्त केचिद् पठन्ति । तस्यार्थः परिहासः' इति दुर्गः । तत्र स्फुण्टयति । स्फुण्टति इत्यादि ॥ ४ ॥

५. लक्ष दर्शनाङ्कनयोः । लक्षयति इत्यादि । लक्ष्मीः—'लक्षेर्मुट् च' इतीकारप्रत्ययो मुडागमश्च । लक्ष्मीवान् । लक्ष्मणः—'लक्ष्म्या अच्च' इति मत्वर्थीयो नकारप्रत्यय ईकारस्य चाकारः । लक्ष्यम्, लक्षणम्—अचो यति ल्युटि च णेर्लोपः । लक्ष्यमधीते वेद वा लाक्षिकः । लाक्षणिकोऽप्येवम् । उक्थादौ 'लक्ष्य लक्षणे' इति पाठाट्ठक् । शम लक्ष आलोचने इत्याकुस्मीयो भविष्यति ॥ ५ ॥

६. कुद्रि अनृतभाषणे । कुन्द्रयति । अचुकुन्द्रत् । कुन्द्रतु इत्यादि । अत्र स्वामी 'ऋदिदित्येके' इति । तत्र कोदयति इत्यादि । ऋदित्फलं तु अचुकोदत् इत्यत्र ह्रस्वनिवृत्तिः ॥ ६ ॥

७. लड उपसेवायाम् । लाडयति इत्यादि । लडति इति विलासे शपि ॥ ७ ॥

८. मिदि स्नेहने । मिन्दयति । मिन्दति इत्यादि । अत्र क्षीरस्वामी अनिदितं पठित्वा 'केश्चिदिदित् पठ्यते' इत्याह । तथा कौशिकोऽप्यनिदितं पपाठ । स्नेहने मेदते मेद्यति इति शप्श्यनोः । ऋदितोऽपि शपि मेधाहिंसनयोः मेदते[1] ॥ ८ ॥

९. ओ लडि उत्क्षेपणे । ओलण्डयति । ओलण्डति । ओलिलण्डयिषति । अजादित्वाद् द्वितीयस्यैकाचो द्विर्वचनम् । अत्र स्वामिकाश्यपसम्मताकाराः केचिदोदितं

१. तु०—मेदते मेद्यतीत्येते स्नेहने मिन्दयेण्णिचि ।
ऋदितो मेदते मेदेन्मेधाहिंसनयोर्द्वयोः ॥ दै० १०४ का० ।

पठन्ति तेषां मते लण्डयति, लण्डति इति। अपरे तूकारादिं पठन्ति, तदोकारं धात्ववयवमुदाहरतां मैत्रेयादीनामित्संज्ञकत्वमभिदधतामन्येषां च सर्वेषामनभिमतम् ॥ ९ ॥

१०. जल अपवारणे। जालयति इत्यादि। नन्दिस्वामी ताकारौ आद्यंतौ विपर्यस्य पठतः—लज इति, तन्मा भूदिति मैत्रेयो जालम् इत्युदाजहार ॥ १० ॥

११. पीड अवगाहने[1]। पीडयति। अपीपिडत्। अपिपीडद्—'भ्राजभास' इत्यादिना णौ चङ्युपधाह्रस्वविकल्पः। पीडा—भिदादिपाठादङ्। पाणावुपपीडं धारयति, पाण्युपपीडं धारयति, पाणिनोपपपीडम् इति वा—'सप्तम्यां चोपपीड' इति सप्तमीतृतीयान्तयोर्णमुल्। तृतीयाप्रभृतित्वात् समासविकल्पः। 'धनुररिभिरसह्यं मुष्टिपीडं दधाने[2]' इति वदन् भट्टिकार उपोपसर्गग्रहणमतन्त्रं मन्यते ॥ ११ ॥

१२. नट अवस्यन्दने। अवस्यन्दनं नाट्यम्। नाट्य इत्येव चन्द्रः। चौरस्योन्नाटयति—'जासिनिप्रहण' इति कर्मणि शेषे षष्ठी। अनेकार्थत्वाद्धिंसार्थत्वमुत्पूर्वस्य। 'जास्यादीनां विकृतनिर्देशाण्णौ चङि ह्रस्वे नायं विधिः' इत्युक्तं न्यासे। तत्फलं चोरमनीनटत् इत्यत्र षष्ठ्यभावः। अयं पक्षो भ्वादौ दूषितः ॥ १२ ॥

१३. श्रथ प्रयत्ने। 'प्रतियत्ने' इति मैत्रेयः। प्रतिहर्षे इति बह्वः[3]। श्राथयति। क्रथिमपि केचिदत्र पठन्ति। स मैत्रेयादौ न दृश्यते। तथा क्रथश्रथौ हिंसायाम्, क्राथयेत्, क्रथते, क्रथेते इति घटादौ युजादौ च पठता देवेनापि न पठितः ॥ १३ ॥

१४. वध संयमने। बाधयति। बन्धेति चन्द्रः। बध्नाति इति बन्ध बन्धने इति क्रैयादिकस्य। बीभत्सते इति भौवादिकस्य नित्यसन्नन्तस्य बधेर्वैरूप्ये ॥१४॥

१५. पॄ पूरणे। पारयति। अत्र श्रीभद्रादयः 'दीर्घोच्चारणसामर्थ्यात्पक्षे णिज् न' इति। तथाहि—दीर्घोच्चारणं परितेत्यादौ 'अदन्तमृदन्तम्' इति इट्सिद्धये, तण्णिचो विकल्पस्य कल्पकं भवति। ननु परितेत्यादि पृणातिपिपर्त्योरन्यतरेणापि सिद्ध्यति, किं विकल्पकल्पनया? सत्यम्; परितेत्यादि सिध्यति, परतीत्यादिसिद्धिस्तु प्रयोजनं भविष्यति ॥ १५ ॥

१६. ऊर्ज बलप्राणनयोः[4]। प्राणनं जीवनम्। ऊर्जयति। और्जिजत्। ऊर्जिजयिषति—'न न्द्राः' इति रेफवर्जस्य द्वितीयस्यैकाचो द्विर्वचनम्। ऊर्क्—'भ्राजभास' इत्यादिना क्विप्। 'चोः कुः' इति कुत्वम्। णिलोपस्य 'पूर्वत्रासिद्धे न स्थानिवत्' इति स्थानिवत्त्वनिषेधात्पदान्तता, संयोगान्तलोपस्तु 'रात्सस्य' इति नियमान्न भवति ॥ १६ ॥

१७. पक्ष परिग्रहे[5]। पक्षयति। अपपक्षत् ॥ १७ ॥

---

१. 'गहने' इति क्षीरस्वामी। २. भ० का० १।२६। ३. क्षीरस्वाम्यादयः। ४. 'बल प्राणधारणयोः' इति मैत्रेयः। ५. मैत्रेयो नेदं सूत्रं पठति।

१८. वर्ण चूर्ण प्रेरणे । एवं मैत्रेयः । अन्ये[1] तु 'वर्ण वर्णने । चूर्ण प्रेरणे' इति । वर्णयति । चूर्णयति । वर्णं गृह्णाति वर्णयति, चूर्णैरवध्वंसयति अवचूर्णयति–'सत्यापपाश' इति वर्णचूर्णाभ्यां प्रातिपदिकाभ्यां ग्रहणावध्वंसनयोर्णिच् ॥ १८–१९ ॥

१९. प्रथ प्रख्याने[2] । प्राथयति । अपप्रथत्—'अत्स्मृदृत्वर' इत्यभ्यासस्याकारः । 'नान्ये मितोऽहेतौ' इति सम्भवद्धेतुमण्णिचां चुरादिणिचि मित्त्वाभावात् 'प्रथ प्रख्याने' इति घटादिकत्वमस्य न भवति ॥ २० ॥

२०. पृथ प्रक्षेपे । पार्थयति । अपपर्थत्, अपीपृथत्—उर्ऋद्वा । 'पथ इत्येके' इति स्वामी, पाथयति । अपीपथत् ॥ २१ ॥

२१. षम्ब सम्बन्धने । सम्बयति । अससम्बत् । शम्ब चेति मैत्रेयः । शम्बेत्येके इति स्वामी । शम्बयति । अशशम्बत् । शम्बरम् । बाहुलकादरः । साम्ब इति केचिद्दन्त्यादिं दीर्घवन्तं च पठन्ति[3] ॥ २२ ॥

२२. भक्ष अदने । भक्षयति पिण्डीं देवदत्तः । अतो हेतुमण्णिचि भक्षयति पिण्डीं देवदत्तेनेति–'गतिबुद्धिप्रत्यवसानार्थ' इति प्रयोज्यस्य कर्मत्वम् 'भक्षेरहिंसार्थस्य' इति वार्त्तिकेन निषिध्यते । अत्र च 'आदिखाद्योः प्रतिषेधः' इत्यतः प्रतिषेधग्रहोऽनुवर्तते । 'गतिबुद्धि' इत्यादौ चाणिग्रहणेन हेतुमण्णिचो निषेधः । हिंसायां तु—भक्षयति यवान् बलीवर्दान् इति भवति । अत्र भक्षयतिर्हिंसाङ्गे भक्षणे वर्तते, हिंसा च 'सर्वे भावाः सचेतनाः' इति दर्शनेन यवानां सचेतनत्वादस्ति । दर्शनान्तरे 'यवानां भक्षणे स्वामिनो हिंसा भवति' इति तदपेक्षं भक्षणस्य हिंसाङ्गत्वम् ॥ २३ ॥

२३. कुट्ट छेदनभर्त्सनयोः[4] । एवं बहवः । 'छेदनपूरणयोः' इति स्वामी । 'छेदने' इत्येवं जिनेन्द्रदुर्गौ । कुट्टयति । अचुकुट्टत् । कुट्टाकः–'जल्पभिक्षकुट्ट' इति षाकन् । षित्त्वात् स्त्रियाम् कुट्टाकी । कुट्टनम् कुट्टः—'एरच्' । कुट्टेन निवृत्तं कुट्टिमम्—'भावप्रत्ययान्तादिमब्वक्तव्यः' इति 'तेन निर्वृत्तम्' इति विषये इमप् ॥ २४ ॥

२४. पुट्ट[5] चुट्ट अल्पीभावे । पुट्टयति । अपुपुट्टत् । चुट्टयति । अचुचुट्टत् ॥२५–२६॥

२५. अट्ट षुट्ट अनादरे । अट्टयति । आट्टिटत् । अयन्दोपधः, लक्षणवशेन टकार इति 'न न्द्राः' इति दकारवर्जस्य द्वितीयस्यैकाचो द्विर्वचने पश्चात् ष्टुत्वम् ॥ सुट्टयति । असुषुट्टत् ॥ २७–२८ ॥

२६. लुण्ठ[6] स्तेये । लुण्ठयति । अलुलुण्ठत् । लुण्ठतीति लुठि स्तेये इत्यस्य शपि । ननु लुण्ठतेरिदित्पाठेनापि लुण्ठयति लुण्ठति इति रूपद्वयं भविष्यति, किं

---

१. क्षीरस्वामिप्रभृतयः । २. सूत्रमिदं क्षीरस्वामी न पठति । ३. क्षीरस्वामिप्रभृतयः । ४. 'छेदनकुत्सनयोः' इति क्षीरस्वामी । ५. क्षीरस्वामी न पठति । ६. 'लुण्ट' इति ख. पुस्तके । रूपाण्यपि तथैव बोध्यानि ।

भ्वादीदित्पाठेन ? सत्यम्; सिद्ध्यतीदं रूपद्वयम्, लुण्ठितेति ताच्छीलिकस्तृन् न स्यात्। 'जल्पभिक्षकुट्टलुण्ठ' इति षाकना बाधात्। लुण्टिपाठे तु प्रतिपदोक्तत्वादस्यैव तत्र ग्रहणमिति भौवादिकात्तृनि लुण्ठितेति भवतीत्युभयत्र पाठः कर्तव्यः। अत एव न्यासे—'कुट्ट छेदे, लुण्ठ स्तेये; चौरादिकावेतौ' इत्युक्तम्। लुण्ठाकः—'जल्पभिक्ष' इत्यादिना षाकन्। षित्त्वान्ङीष्—लुण्ठाकी ॥ २९ ॥

२७. शठ श्वठ असंस्कारगत्योः। शाठयति। श्वाठयति। अशीशठत्। अशीश्वठत्। 'इदिद् द्वितीयः' इति दुर्गः। मैत्रेयोऽपि 'श्वठीत्येके' इति। श्वण्ठयति। अशश्वण्ठत्। श्लाघायां शाठयते इत्याकुस्मीयः। शठयति श्वठयति इति कथादौ। कैतवे शठति इति शपि गतम् ॥ ३०–३१ ॥

२८. तुजि पिजि हिंसाबलादाननिकेतनेषु। तुञ्जयति। अतुतुञ्जत्। पिञ्जयति। अपिपिञ्जत्। इदित्करणात्तुञ्जति पिञ्जति इत्यपि भवतः। तुजि हिंसायां तुजि पालने चेति भूवादिपाठादेव हिंसायां तुञ्जति इति सिद्धाविदित्त्वेन णिजनित्यत्वं बलादाननिकेतनयोरपि तुञ्जति इति रूपसिद्धये। एवं तर्ह्यनेनैव सिद्धे भूवादिपाठः किमर्थ इति चेत्; पालने तुञ्जति इत्यर्थः। तुञ्जयति पिञ्जयति इति भाषार्थावपि भविष्यतः। शाकटायनस्तुज पिजेति पपाठ। पिज वर्णे इत्यदादौ। इह लजि लुजि इत्यपि क्वचिद्[1] दृश्येते। तौ मैत्रेयादिभिर्न पठ्येते ॥ ३२–३३ ॥

२९. पिस गतौ। पेसयति। अपीपिसत्। पेसति इति शपि ॥ ३४ ॥

३०. षान्त्व सामप्रयोगे। सान्त्वयति। अससान्त्वत्। सिषान्त्वयिषति ॥ ३५ ॥

३१. श्वल्क वल्क[2] परिभाषणे। श्वल्कयति। वल्कयति। अशश्वल्कत्। अववल्कत् ॥ ३६–३७ ॥

३२. ष्णिह[3] स्नेहने। षोपदेशः। स्नेहयति। असिष्णिहत्। स्निह्यति इति प्रीतौ दिवादिः। अत्र स्फिट स्नेहने इति क्वचित्कोशे दृश्यते। तद् धनपालशाकटायनमैत्रेयदेवादिभिश्चिरन्तनैर्व्याख्यातृभिर्न लिख्यते ॥ ३८ ॥

३३. स्मिट[4] अनादरे। स्मेटयति। असिस्मिटत्। 'स्मिङ् इत्येके' इति मैत्रेयः। स्माययते। 'अवयवे कृतं लिङ्गम्' इति न्यायेन ण्यन्तस्य ङित्त्वादात्मनेपदम्। आत्वं स्मयतेरिति निर्देशाद्धेतुमण्णौ विधानान्न भवति। शाकटायनस्तु अट स्मिट गताविति टान्तप्रकरणे पपाठ। स्मयते इतीषद्धासे शपि ॥ ३९ ॥

३४. श्लिष श्लेषणे[5]। श्लेषयति। अशिश्लिषत्। श्लेषति इति दाहे शपि। श्लिष्यति इत्यालिङ्गने श्यनि ॥ ४० ॥

---

१. 'लुजि' इति क्षीरतरङ्गिण्याम्। २. 'श्वल्क' इति मैत्रेयादयः।
३. 'स्निट्' इति क्षीरस्वामी। ४. 'स्फिट' इति क्षीरस्वामी।
५ 'आलिङ्गने' इति मैत्रेयः।

३५. पथि[1] गतौ। पन्थयति। अपपन्थत्। पन्थति। अपन्थीत्—इदित्त्वाण्णिज्विकल्पः। पथति इति पथे गतावित्यस्य शपि ॥ ४१ ॥

३६. पिच्छ[2] कुट्टने। पिच्छयति। अपिपिच्छत् ॥ ४२ ॥

३७. छदि[3] संवरणे। छन्दयति। अचच्छन्दत्। छन्दति। अच्छन्दीत्। शाकटायनस्तु आत्मनेपदिष्वप्यमुं पपाठ। स्वाम्यादयः छदेत्यनिदितं पठित्वा छादयति इत्युदाजह्रुः। तेषां छदयति इति रूपस्य छद अपवारणे इत्याधृषीयेणैव सिद्धत्वादिह पाठो व्यर्थः स्यात्। इदित्त्वाभावे छन्दःशब्दोऽपि न स्यादिति मैत्रेयाद्युक्त इदित्पाठ एव न्याय्यः। अत एव न्यासपदमञ्जर्यादौ 'छादेर्घे' इत्यत्रोरश्छदादि छद अपवारण इत्यस्मादेव व्युत्पादितम् ॥ ४३ ॥

३८. श्रण[4] दाने। प्रायेणायं विपूर्वः। विश्राणयति। व्यशिश्रणत्। घटादिपाठात् श्रणयति इत्यादि ॥ ४४ ॥

३९. तड आघाते। ताडयति। अतीतडत् ॥ ४५ ॥

४० खड खडि कडि भेदने। खाडयति। अचीखडत्। खण्डयति। अचखण्डत्। खण्डति। अखण्डीत्। कण्डयति। अचकण्डत्। कण्डति। अकण्डीत्। खण्डति इति मन्थने शपि। तथा कण्डते इति भेदे। क्षीरस्वामी तु भ्वादौ परस्मैभाषं कडतिमनिदितमपि कडीतीदितं पठित्वा 'कडेति दुर्गः' इत्याह। अस्य निर्णयस्तत्र कृतः ॥ ४६–४८ ॥

४१. कुडि[5] रक्षणे। कुण्डयति। कुण्डति। कुण्डते इति वैकल्यदाहयोः शपि गतम्। 'वैकल्यार्थष्टान्तः' इति शाकटायनः। 'टान्तमेके' इति स्वामी। इमावपि पाठभेदौ तत्रापि दर्शितौ ॥ ४९ ॥

४२. गुडि वेष्टने। गुण्डयति। गुण्डति। 'रक्षणे' इत्येके। प्रथमादि द्वितीयान्तमेके पठन्ति। अवकुण्ठयति। अवकुण्ठति ॥ ५० ॥

४३. खुडि खण्डने। खुण्डयति। खुण्डति ॥ ५१ ॥

४४. वटि[6] विभाजने। वडीति शाकटायनः। वण्टयति। अत्र मैत्रेयो भौवादिकस्य विभाजनार्थस्य वटेर्हेतुमण्णौ वण्टयति इति सिद्धे 'चुरादौ पाठः कर्त्रभिप्रायेऽपि परस्मैपदार्थः' इति। असौ हि 'णिचश्च इति तङ् चुरादिण्यन्तस्य न' इति मन्यते। अन्ये तु—"'णिचश्च' इति तत्रापीष्यते इति नेदं प्रयोजनम्, किन्तु चिन्तीत्यादिवदिदित्त्वबलाण्णिचो विकल्पेन विभाजनेऽप्यर्थे वण्टति इति सिद्धिः"

---

१. 'पति' इति ख. पुस्तके। २. 'पिच' इति क्षीरस्वामी। ३. 'छद' इति क्षीरस्वामी। ४. 'श्रणु' इति क पुस्तके। ५. 'गुडि' इति क्षीरस्वामी। ६. 'वडि' इति क्षीरस्वामी।

इति। ये तु भूवादावपि विभाजने इति पठन्ति, तेषां तु नैवास्य चोद्यस्यावतारः ॥ ५२ ॥

४५. मडि भूषायां हर्षे[1] च[1]। मण्डयति। मण्डते इति वेष्टने शपि। मडि भूषायामिति भूवादौ पाठादेव मण्डति इति सिद्धेरस्येदित्त्वं नुम्मात्रार्थम्, न तु णिज्विकल्पार्थमपि। तेन हर्षे मण्डति इति न भवति ॥ ५३ ॥

४६. मडि कल्याणे। मण्डयति। मण्डति। परिभाषणे भण्डते इति शपि। 'परिहासे' इत्येके तत्र ॥ ५४ ॥

४७. छर्द वमने। छर्दयति। अचच्छर्दत् ॥ ५५ ॥

४८. पुस्त बुस्त आदरानादरयोः। पुस्तयति। पुस्तकम्। बुस्तयति। बुस्तम् ॥ ५६-५७ ॥

४९. चुद सञ्चोदने। सञ्चोदनं प्रश्नः, प्रेरणा च। तत्र प्रश्ने द्विकर्मकत्वम्—देवदत्तमर्थं चोदयति। चूडा—भिदादिपाठादङ्, डत्वं दीर्घत्वं च। चूडालः—'प्राणिस्थादातो लजन्यतरस्याम्' इति मत्वर्थे लच्। चूडा नाम काचित्, तस्या अपत्यं चौडिः—'बाह्वादिभ्यश्च' इतीञ् 'द्व्यचः' इति ढकोऽपवादः ॥ ५८ ॥

५०. नक्क धक्क नाशने। अयं तवर्गीयादिः, णोपदेशपर्युदासे नृतिनन्दीत्याद्युपादानात्। नक्कयति। धक्कयति ॥ ५९—६० ॥

५१. चक्क चुक्क व्यथने। चक्कयति। चुक्कयति। चिक्क इत्यपि क्वचित् पठ्यते ॥ ६१—६२ ॥

५२. क्षल शौचकर्मणि। क्षालयति। अचिक्षलत् ॥ ६३ ॥

५३. तल प्रतिष्ठायाम्। तालयति। अतीतलत्। तालम्। तलम्—अच्। 'संज्ञापूर्वको विधिरनित्यः' इति वृद्ध्यभावः। मैत्रेयस्तु 'घुषिरविशब्दने, इति ज्ञापकं सामान्यमित्युक्त्वा णिजभावे तलशब्दमाह ॥ ६४ ॥

५४. तुल उन्माने। तोलयति। अतूतुलत्। तुला 'इति णिचोऽनित्यत्वा' इति मैत्रेयः। अन्ये तु णिजभावे प्रमाणाभावात् 'तुल्यार्थै' इत्यादौ तुलेति निपातनादङि णिलुकि तुला इति। तुलयति। अतूतुलत् इति-तुलाशब्दात् 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति णिचि, 'दीर्घो लघोः' इति णौ चङ्यभ्यासस्य दीर्घत्वमग्लोपित्वान्न भवति। तुला कृष्णस्य नास्ति—'तुल्यार्थैः' इति विधीयमाना तृतीया तत्रैव 'अतुलोपमाभ्याम्' इति वचनान्न भवति। तुलया सम्मितं तुल्यम्—'नौवयोधर्म' इति यत्। तुलया सम्मितमिति व्युत्पत्तिमात्रम्, रूढशब्दस्त्वयं सदृशपर्यायः। तुल्यश्वेतः—'कृत्यतुल्याख्या अजात्या' इति समानाधिकरणसमासः। अयं च पूर्वनिपातनियमबाधनार्थः। तथा तुल्यमहान् इत्यत्र 'सन्महत्' इति मह-

---

१—१. क्षीरस्वामी न पठति। अथ चैतत्पूर्वं 'चडि कोपे' इत्यपि पृथक्सूत्रं पठतः स्वामिमैत्रेयौ।

च्छब्दस्य प्राप्तपूर्वनिपातबाधार्थः। कृष्णस्य तुल्यः, कृष्णेन वा—'तुल्यार्थैः' इति षष्ठीतृतीये ॥ ६५ ॥

५५. दुल उत्क्षेपे । दोलयति । अदूदुलत् । दोला—भिदादेराकृतिगणत्वादङ् । दुलिः कमठी—'अच इः' इति इप्रत्ययः । 'बहुलमन्यत्रापि संज्ञाच्छन्दसोः' इति णिलुक् ॥ ६६ ॥

५६. पुल महत्त्वे[1] । पोलयति । पोलति इति शपि । 'पुलति इति शे' इति भूवादौ स्वामी ॥ ६७ ॥

५७. चुल समुच्छ्राये[1]। चोलयति । चोलः । चोलस्यापत्यमपि चोलः—'द्व्यञ्मगध' इत्यण् । तस्य 'कम्बोजादिभ्यो लुग्वचनञ्चोलाद्यर्थम्' इति लुक् ॥ ६८ ॥

५८. मूल रोहणे । मूलयति । मूलति इति प्रतिष्ठायां शपि ॥ ६९ ॥

५९. कल विल[2] क्षेपे । कालयति । वेलयति । वेला । कलयति इति गतिसंख्यानयोः कथादौ भविष्यति । कलते इति शब्दसंख्यानयोः शपि । वेलते इति वेलेश्शा-चलने । विलति इति संवरणे शे । क्वचित्[3] किलेत्यप्यत्र पठ्यते । मैत्रेयादिभिस्तु न पठ्यते । श्वैत्यक्रीडनयोः किलति इति शे ॥ ७०–७१ ॥

६०. बिल भेदने । बेलयति । 'बेलति इति शपि इत्यात्रेयः' इत्युक्तम् ॥ ७२ ॥

६१. तिल स्नेहने । तेलयति । तिलति इति शे । तेलति इति गतौ शपि ॥ ७३ ॥

६२. चल[4] भृतौ । चालयति । चलति इति विलसनकम्पनयोः शशपोः ॥ ७४ ॥

६३. पाल[5] रक्षणे । पालयति । अपीपलत् । पातेरपि हेतुमण्णौ 'पातेर्लुग्वक्तव्यः' इति लुगागमे पालयति ॥ ७५ ॥

६४. लूष हिंसायाम् । लूषयति । अलूलुषत् ॥ ७६ ॥

६५. शुल्व माने । शुल्वयति । अशुशुल्वत् । 'शूर्प माने' इति श्रीमद्भमैत्रेयादयः । शूर्पयति । शूर्पम्—एरचि पचाद्यचि वा णिलोपः । शूर्पेण क्रीतं शौर्पम्, शौर्पिकम्—'शूर्पादञन्यतरस्याम्' इत्यार्हीयेष्वर्थेष्वञ्ठञौ । द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्—इत्यत्र 'अध्यर्धपूर्वात्' इति ठञञोर्वा लुक् ॥ ७७ ॥

६६. चुट[6] छेदने । चोटयति । चुटति इति शे गतम् ॥ ७८ ॥

६७. मुट[7] संचूर्णने । मोटयति । मोटति इति मर्दने शपि । मुटति इति प्रमर्दनाक्षेपयोः शे ॥ ७९ ॥

---

१. सूत्रद्वयस्यास्य स्थाने क्षीरस्वामी 'पुल समुच्छ्राये' इति सूत्रमेकमेव पठति । ततश्च 'चुल निमज्जने' इत्यधिकं सूत्रमपि पठति । २. स्वामी न पठति । मैत्रेयस्तु 'पिल' इति । ३. क्षीरतरङ्गिण्यादौ । ४. 'वल' इति मैत्रेयः । ५. 'पल' इति क्षीरस्वामी, मैत्रेयश्च । ६. 'छुट' इति क्षीरस्वामी । ७. 'पुट' इति क्षीरस्वामी ।

६८. पडि[1] पसि नाशने। पण्डयति। पण्डति॥ पंसयति। पंसति। पांसुः—'अर्जिदृशि' इत्यादिना उप्रत्ययो दीर्घश्च। पण्डते इति गतौ शपि॥ ८०–८१॥

६९. व्रज मार्गसंस्कारगत्योः। व्राजयति। वजि मार्गसंस्कारयोर्गतौ चेति मैत्रेयादयः। अत्र धनपालः 'मार्गे च' इति पठति। स्वामी तु व्रजस्थाने वजि पठित्वा मार्गेति द्वितीयं धातुमाह। तन्त्रान्तरे तु वजिव्रजी द्वौ पठित्वा मार्गसंस्कारगती अर्थौ उक्तौ। वाजयति। मार्गयति। व्रजति वजति इति शपि। वाजयति इति वातेर्णौ 'वो विधूनने जुक्' इति जुगागमे। मृग अन्वेषणे कथादौ। मार्ग अन्वेषणे इति युजादौ॥ ८२–८३॥

७०. शुल्क अतिस्पर्शने[2]। शुल्कयति॥ ८४॥

७१. चपि गत्याम्। चम्पयति। चम्पति॥ ८५॥

७२. क्षपि[3] क्षान्त्याम्। क्षम्पयति। क्षम्पति। क्षपयति इति प्रेरणार्थस्य कथादित्वेन॥ ८६॥

७३. क्षजि कृच्छ्रजीवने। क्षञ्जयति। क्षञ्जति। क्षञ्जते इति गतिदानयोर्घटादौ॥ ८७॥

७४. श्वर्त[4] गत्याम्। श्वर्तयति॥ ८८॥

७५. श्वभ्र च। श्वभ्रयति॥ ८९॥

७६. ज्ञप मिच्च[5]। 'ज्ञापने मारणादिषु चाभिधानमस्य' इति मैत्रेयादयः। अन्ये तु शाकटायनानुसारिणो 'ज्ञप मारणतोषणनिशामनेषु मिच्च' इति पठन्ति। तथा 'इको झल्' इत्यत्र न्यासे 'ज्ञप मिच्च' इति पठित्वा 'अन्ये तु ज्ञपमारणतोषणनिशामनेष्विति पठन्ति' इति। घटादिवदत्रापि केचिन्निशामनस्थाने निशानशब्दं पठन्ति। घटादिषु मारणादिसूत्रस्य पाठादेव मित्त्वे सिद्धे पुनर्मारणादिषु मित्त्ववचनम् 'ज्ञपादिवर्जमन्ये स्वार्थण्यन्ता न मितः' इति ज्ञापनार्थमिति पुनः पाठफलं चाहुः काश्यपादयः। ज्ञपादीननुक्रम्य 'नान्ये मितोऽहेतौ' इति ज्ञपादिव्यतिरिक्तानामेवाहेतुमण्णौ मित्त्वाभावस्य वक्ष्यमाणत्वान्नेदं फलम्। किं चार्थविशेषपरिगणनमप्ययुक्तम्; प्रच्छ ज्ञीप्सायाम्, ज्ञप्तिः, श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः, इत्यत्र 'ज्ञीप्स्यमानो ज्ञपयतुमिष्यमाणो बोधयितुमभिप्रेतः' इत्यादौ ज्ञानमात्रे ज्ञापने च प्रयोगदर्शनात्। न चैवं शक्यते वक्तुम्—'निशामनं ज्ञानमात्रं तदर्थादस्मादहेतुमण्णौ चुरादित्वेन प्रच्छ ज्ञीप्सायाम्, ज्ञप्तिरिति भविष्यति, स्थाशपां ज्ञीप्स्यमानः इत्यादिस्तु हेतुमण्णौ घटादित्वेन' इति। एवं तर्हि घटादिर्ज्ञपनविषयः, अयं तु

---

१. स्वामिमैत्रेयौ न पठतः। २. 'अतिसर्जने' ख. पुस्तके। 'सर्जने' इति स्वामी। मैत्रेयस्तु सूत्रमेव न पठति। ३. 'क्षपि' इति स्वामी। ४. 'स्वर्त' इति क्षीरस्वामी। ५. 'मारणतोषणनिशामनेषु मिच्च' इति क्षीरस्वामी।

ज्ञानविषय इत्यर्थभेदस्य विद्यमानत्वात् घटादित्वादेव मित्त्वे सिद्धे पुनर्मारणादिषु मित्त्ववचनं ज्ञापनार्थमिति स्वोक्तेन विरोधः स्याद् । अथ मतम्—घटादित्वादेव मित्त्वे सिद्धे पुनर्मारणादिषु मित्त्ववचनं ज्ञापनार्थम् 'निशामनस्य ग्रहणं विध्यर्थमितरयोस्तु नियमार्थम्' इति ? एवमपि मारणादिष्वितिवचनमयुक्तम्, मारणतोषणयोरिति तु वक्तव्यम् । किं चास्य ज्ञानमात्रार्थत्वे 'श्लाघह्नुङ्' इत्यत्र न्यासकारहरदत्तादिभिश्चौरादिकाद् व्युत्पादनं विरुद्धयेत । 'सर्वथा तज्ज्ञापयत्याचार्यः', 'विज्ञापना भर्तृषु सिद्धिमेति' 'ज्ञापकं स्यात्तदन्तत्वे' इत्यादिस्तु न सिध्यति । अथ मारणतोषणनिशामनेष्विति घटादाविह च पाठाज्ज्ञापयत्यादि सिध्यति ? ज्ञीप्स्यमानः, ज्ञप्तिरिति न सिध्यति । यदि तु मतम्—घटादौ निशामनमिति पाठः, इह तु निशानमिति घटादेर्ज्ञपयति, अस्माज्ज्ञपयतीति भविष्यति' इति ? एवमपि स्थाशपां ज्ञीप्स्यमानः, इत्यादि न सङ्गच्छते । अत्र हि बोधनार्थो धातुः, तत्र तु बोधनं निशामनशब्दार्थो न तु बोधनेति । अथ तत्रापि बोधनार्थः ? प्रच्छ ज्ञीप्सायाम्, ज्ञीप्स्यमानः, ज्ञप्तिरिति न सिध्यति । तस्मात् 'ज्ञप मिच्च' इत्येव युक्तः पाठः । अत एव 'इको झल्' इत्यादौ 'ज्ञप मिच्च' इति न्यासकारहरदत्तादयः पठन्ति । तेनास्य यथाप्रयोगमर्थं इति ज्ञापने ज्ञानमात्रे च वृत्तिरिति प्रच्छ ज्ञीप्सायाम्, ज्ञप्तिः, ज्ञीप्स्यमानः, ज्ञपयितुमिष्यमाणः इत्यादि सर्वमुपपद्यते । ज्ञापयत्यादिप्रयोगस्तु ज्ञानमात्रवचनाज्जानातेः । घटादिमित्त्वं तु चाक्षुषज्ञानार्थकनिशामनार्थस्य चेतीह न भवति । निशामनं चाक्षुषज्ञानमित्यवोचाम । पुरुषकारेऽपि अस्मदुक्तरीत्या 'ज्ञप मिच्च इत्येव पाठो युक्तः' इति सिद्धान्तितम्[1] । एवं च चुरादिणिचः 'णिचश्च' इति कर्त्रभिप्राये तङ् नास्ति इति दर्शनाश्रयणेन 'उक्तस्योक्तिर्णिचश्चेत्युदितविहतये'' इति कर्त्रभिप्रायेऽपि मारणादौ परस्मैपदसिद्धिः पुनः पाठफलमिति यत् देवेनोक्तं तदपि मतम्—

'जानातीति ज्ञि सिध्येत्, ज्ञपयति तु पुनर्मारणादौ घटादे-
श्चौ मित्त्वेऽपीदमेव ज्ञप मिदिति पदं ज्ञापने मारणादौ ।
तेनार्थाज्ज्ञापनार्थे ज्ञपयतिपदवत् ज्ञापयेदित्यपि स्यात्[2]' । इति

स्वेनैव ज्ञपमिदित्यर्थविशेषोपादानरहितं पाठमङ्गीकृत्य तस्य च प्रयोजनं मारणादिव्यतिरिक्ते ज्ञपयत्यर्थे ज्ञपयतीति सिद्धिरित्युक्तत्वादुक्तस्योक्त्यसंभावान्निराकृतम् । ज्ञपयति । संज्ञपयति । विज्ञपयति । प्रज्ञपयति । स्वभावान्मारणादावप्यस्य वृत्तिरित्युक्तम्, तत्र कौमारमतेन सोपसर्गः प्रदर्शितः । जिज्ञपयिषति । ज्ञीप्सति—'सनीवन्त' इत्यादिना पक्षे इडभावः । 'आप् ज्ञप्यृधाम्' इति झलादौ सन्यच ईकारः । 'अत्र लोपः' इत्यभ्यासलोपः । 'णेरनिटि' इति णिलोपः । 'वा

१. दै० पृ० १६ । २. दै० पृ० १६ ।

दान्त' इत्यत्र ज्ञप्त इति निपातनं ज्ञपेरिति 'निष्ठायां सेटि' इत्यत्र कैयटपदमञ्जर्यो-रुक्तत्वादिह ज्ञप्तः ज्ञपित इति मैत्रेयेणोदाहरणस्य प्रदर्शनमयुक्तम् ॥ ९० ॥

७७. यम च[1] परिवेषणे। 'चकारेण मिदित्यपेक्ष्यते' इति मैत्रेयादयः। इह परिवेषणं परिवेष्टनम्; न तु भोजना, नापि वेष्टना। तत्र हि घटादित्वात्सिद्धम्। न च वेष्टनेऽपि घटादित्वेन मित्त्वसिद्धिः; हेतुमण्ण्यन्तस्य तद्विधानात् तस्य च वेष्टनार्थः, न तु वेष्टनमिति। यमयति चन्द्रम्, परिवेष्टत इत्यर्थः। अन्यत्र नियामयति। क्वचिद् 'यमोऽपरिवेषणे' इति पठ्यते, तदनार्षम्; 'चकारेण मिदित्यपेक्ष्यते' इति मैत्रेयादिविरोधात्। किं च घटादौ 'यमोऽपरिवेषणे' इति परिवेषणादन्यत्र मित्त्वं निषिध्यते, अनेन तु तत्रैव विधीयते इति विधिनिषेधयोर्विषयविभागो न प्रकल्पेत। येषां तु दर्शनम्—'घटादावपरिवेषणे मित्त्वं विधीयते' इति, तेषान्तु तत्रैवानेनापि मित्त्वं विधीयते इति वैयर्थ्यमेव प्रसज्येत। इदं च घटादावपरिवेषणे मित्त्वविधानदर्शनं तत्रैव दूषितम् ॥ ९१ ॥

७८. चह परिकल्कने। चहयति। मैत्रेयस्तु चपेति पठित्वा चपयति इत्युदाजहार। चहेत्यूष्मान्तमेव चन्द्रोऽपि। अयं कथादावपि पठिष्यते, तस्य फलमग्लोपित्वात् 'सन्वल्लघुनि' इति इत्वस्य 'दीर्घो लघोः' इति दीर्घस्य चाभावः। तेन अचचहत् इति भवति। इह पाठात् अचीचहत् इतीत्वदीर्घौ भवतः। तथास्य मित्त्वात् अचहि, अचाहि; चहंचहम्, चाहंचाहम् इति 'चिण्णमुलोः' इति दीर्घविकल्पो भवति। चहति इति भूवादिः ॥ ९२ ॥

७९. रह त्यागे[2]। इतीह केचित्पठन्ति। रहयति। 'कथादावयं पठिष्यते, तत एव सिद्धेरिह पाठो व्यर्थः' इति स्वामी, तन्न; चहिवत्कथादेरग्लोपित्वदीर्घयोरभावात् अररहत् इति भवति, इह पाठाद् अरीरहदिति, तथा अरहि, अराहि, रहंरहं, राहंराहम् इति मित्त्वात् 'चिण्णमुलोः' इति दीर्घविकल्पोऽस्य भवतीति प्रयोजनसद्भावात्। रहति इति शपि। रंहति इति तत्रैव रहि गतावित्यस्य ॥ ९३ ॥

८०. बल प्राणने। ओष्ठ्यादिः। बलयति ॥ ९४ ॥

८१. चिञ् चयने[3]। ञित्करणात्कर्त्रभिप्राये तङ्विध्यर्थाण्णिजस्य विकल्पेन भवति। णिचि 'चिस्फुरोर्णौ' इत्यात्वं पक्षे भवति। तत्र पुकि मित्त्वात्तस्य ह्रस्व इति। चपयति। चययति। अणिचि—चयति, चयते इति भवति। अत्र काश्यपः 'इकारोच्चारणसामर्थ्यादात्वं न' इति, तच्चिन्त्यम्; आत्वस्य वैकल्पिकत्वात्तदभावे वृद्ध्याय्ह्रस्वेषु चययति इति रूपसिध्यर्थत्वात्तस्य, तथा णिजभावे गुणायोः चयति इति रूपार्थत्वाच्च। रहत्यादयो यद्यप्यत्र मैत्रेयादिभिर्न पठितास्तथापि काश्यपादिप्रामाण्यादस्माभिः पठिताः। चिनोति इति स्वादेः ॥ ९५ ॥

---

१. क्षीरस्वामी न पठति। २. सूत्रमिदं स्वामिमैत्रेयौ न पठतः।
३. नेदं सूत्रं मैत्रेयेण पठितम्।

८२. नान्ये मितोऽहेतौ। ज्ञपादिव्यतिरिक्ता अहेतुमण्णौ मितो न भवन्ति। तेन ज्ञपादिव्यतिरिक्तानां चौरादिकानां शमादीनां 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इत्यादिना सामान्यलक्षणेन प्राप्तं मित्त्वं न भवति।

८३. घट्ट चलने। घट्टयति। घट्टते इति शपि॥ ९६॥

८४. श्रस्त सङ्घाते[1]। श्रस्तयति। क्वचिदयं वक्ष्यमाणस्य पुंसेरनन्तरं पठ्यते॥ ९७॥

८५. खट्ट संवरणे। खट्टयति॥ ९८।

८६. षट्ट स्फिट्ट[2] चुबि[2] हिंसायाम्। सट्टयति। स्फिट्टयति। चुम्बयति। चुम्बति इति वक्त्रसंयोगे शपि। केचिद् द्वितीयं षुट्टेत्युकारवन्तमनोष्ठ्यं च पठन्ति। अस्माभिस्तु मैत्रेयादीनामनुसारेण पूर्वमेव षुट्टिः पठित इतीह न लिखितः, तदनुरोधादेवेह स्फिट्टिश्च पठितः। इह 'व्यय क्षय' इति नन्दी पठति। व्ययेत्यपरे। मैत्रेयदेवादयस्तूभयमपि न पठन्ति॥ ९९–१०१॥

८७. पूल संघाते। पूलयति। पूलति इति शपि। पुरुषकारे तु 'पूर्णेति क्षीरस्वामी, पुणेति शाकटायनः' इत्युक्त्वा 'कोशशुद्धिस्त्वीदृशेऽर्थे कीदृशीति न विद्मः!' इत्युपहसितम्॥ १०२॥

८८. पुंस अभिवर्धने[3]। पुंसयति॥ १०३॥

८९. टकि बन्धने। टङ्कयति। टङ्कति। टङ्कः। विटङ्कः॥ १०४॥

९०. धूस कान्तिकरणे। 'दन्त्योष्मान्तः' इति श्रीमद्भमैत्रेयादयः। 'मूर्धन्योष्मान्तः' इति स्वामी। तथा च मैत्रेयोऽपि 'धूष इत्येके' इति। काश्यपस्तु तालव्योष्मान्तमाह। धूसयति धूसरः—बाहुलकादरप्रत्ययः॥ १०५॥

९१. कीट वर्णे[4]। कीटयति॥ १०६॥

९२. चूर्ण[5] सङ्कोचने। चूर्णयति। पुनः पाठोऽर्थभेदकृतः॥ १०७॥

९३. पूज पूजायाम्। पूजयति। पूजा—'चिन्तिपूजि' इत्यङ्, 'ण्यासश्रन्थ' इति युचोऽपवादः। पूजितो राज्ञाम्—'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः। 'क्तस्य च वर्तमाने' इति कर्तरि षष्ठी। 'क्तेन च पूजायाम्' इति समासनिषेधः। 'पूजितो यः सुरासुरैः इत्यार्षः प्रयोगः' इत्याहुः[6]॥ १०८॥

९४. अर्क स्तवने। 'तपने' इत्येके। 'अर्चयन्त्यर्कमर्किणः' इति दर्शनात् स्तवनपाठो युक्तः। अर्कयति॥ १०९॥

---

१. सूत्रमिदं स्वामिमैत्रेयौ न पठतः, 'मुस्त सङ्घाते' इति दीक्षितः। २-२. क्षीरस्वामी न पठति। ३. 'अभिमर्दने' इति क्षीरस्वामी। ततश्च 'मुस्त सङ्घाते' इत्यधिकं सूत्रं पठति। 'पुस्त सङ्घाते' इति मैत्रेयः। ४. 'बन्धने' इति मैत्रेयः। ५. 'चूण' इति क्षीरस्वामी। ६. अत्रत्यं भट्टोजिदीक्षितमतखण्डनं भूमिकायां द्रष्टव्यम्।

९५. शुठ आलस्ये । शोठयति । शोठति इति गतिप्रतिघाते शपि ।। ११० ।।

९६. शुठि शोषणे । शुण्ठयति । शुण्ठति । अत्र क्षीरस्वामी—'केचिदेनमकारान्तं पठन्ति, लक्ष्यतस्तदपि प्रमाणम्' इति । एवं तु 'शुठ आलस्ये' इति पूर्वत्रैव शोषणमपि निर्दिशेत् । शोषणे शोठयति इति प्रयोगो दृष्टश्चेत् शोठयतेरनेकार्थत्वेन निर्वाह्यः । तस्मात् 'शुठि शोषणे' इति युक्तः पाठः । अस्येदित्त्वादेव शुण्ठ इति सिद्धे भ्वादौ शुण्ठेः पाठः प्रपञ्चार्थः ।। १११ ।।

९७. जुड प्रेरणे । जोडयति । बन्धने जुडति इति शे ।। ११२ ।।

९८. गज मार्ज[1] शब्दार्थौ । गाजयति । गजते गञ्जति इति शपि । गर्जति गृञ्जति इति च । मार्जयति । शौचालङ्कारयोः मार्जयति, मार्जति इति युजादौ भविष्यति । मृजूष् शुद्धावित्यस्य मार्ष्टि इत्यदादौ । अत्र मर्चिमपि केचित्पठन्ति । मर्चयति । शपि मर्चति ।। ११३–११४ ।।

९९. घृ प्रस्रवणे । घारयति । अत्र क्षीरस्वामी स्रवणे इति पठित्वा अभिघारयतीत्युदाजहार । घरति इति शपि । जिघर्ति इति श्लौ । छान्दसौ चेताविल्युक्तम् ।। ११५ ।।

१००. पचि विस्तारवचने । पञ्चयति । पञ्चति, पञ्चते इति व्यक्त्यर्थस्य शपि ।। ११६ ।।

१०१. तिज निशाने[2] । तेजयति । तितिक्षते इति भौवादिकस्य तिजेर्नित्यसनन्तस्य क्षमायाम् । तेजति इति शपि पालनार्थस्य ।। ११७ ।।

१०२. कृत[3] संशब्दने । कीर्तयति—'उपधायाश्च' इतीत्वरपरत्वयोः 'हलि च' इति दीर्घः । अचिकीर्तत् । अचीकृतत्–उर्ऋद्वा । अन्यदा णौ कृतं स्थानिवदितीत्वस्य स्थानिवत्त्वं न भवति । यत्र द्विरुक्तौ परभागस्याद्योऽजवर्णस्तत्रैवेयं परिभाषेत्येवं 'द्विर्वचनेऽचि' इत्यादौ भाष्यकैयटयोः स्थितम् । एवमेव 'उर्ऋत्' इत्यादौ पदमञ्जर्यादिष्वपि । यत्तु 'स्तौतिण्योरेव' इत्यत्रास्य सिषेचयिषति इत्यादौ गुणे सनीटि गुणायादेशयोरुत्तरखण्डस्यावर्णाभावेऽप्यनया परिभाषया गुणस्य स्थानिवत्त्वेन सिचशब्दस्य द्विरुक्तेवंचनं तदस्याः परिभाषायाः सामान्यताश्रयणेन स्थानिवत्त्वेऽपि रूपसिद्धौ विशेषो नास्तीत्येतावता, न तु सिद्धान्तस्थित्या । कथन्तर्हि 'लोपः पिबतेः' इत्यत्र वृत्तौ अपीप्यदित्यत्र पिबतेर्णौ युकि चङि 'लोपः पिबतेरीच्चाभ्यासस्य' इत्युपधालोपे तस्यानया परिभाषया स्थानिवत्त्वमाश्रित्य पायूशब्दस्य द्विरुक्तिरुक्ता, नह्यत्रोत्तरखण्डस्याद्यमचमवर्णं पश्यामः ? यद्यपि प्रयोगे न पश्यामः, स्थानिवत्त्वेन पायूशब्दे द्विरुक्ते प्रक्रियायामुत्तरखण्डेऽवर्णं पश्याम इति न दोषः । तस्य च 'लोपः

---

१. 'मर्च मार्ज' इति क्षीरस्वामी । २. निशाने' इति ख. पुस्तके । 'निशामने' इति क्षीरस्वामी, मैत्रेयश्च । ३. 'कृत' इति क्षीरस्वामी ।

पिबतेः' इत्यस्य पुनः प्रवृत्त्या प्रयोगे दर्शनम्। एवमौजढदित्यत्राप्यूढशब्दाण्णिचि टिलोपे तस्य स्थानिवत्त्वाड्ढत्वादीनां चासिद्धत्वे हृतशब्दस्य द्विरुक्तेः प्रक्रियावाक्ये उत्तरखण्डस्याजवर्ण इति न कश्चिद्दोषः। एवं च औजिढत्, अपीप्यदित्यादिसिद्ध्यर्थमस्याः परिभाषायाः सामान्यत्वमाश्रित्यात्र 'लोपः पिबतेः' इत्यत्र वृत्तिकारवचनम्, 'स्तौतिण्योरेव' इत्यत्र न्यासकारवचनं च संवादयन् अचिकीर्तदिति सिद्ध्यर्थमनित्यत्वं चास्या वदन् सीरदेवोऽपि प्रत्युक्तः।

प्रकृतमनुसरामः। कीर्त्तिः—'ऊतियूति' इत्यादिना युजपवादः क्तिन्। काशकृत्स्नास्तु युचमपीच्छन्ति कीर्तना इति। 'ऋदुपधाच्चाक्लृपिचृतेः' इत्यत्र तपकरणाद् ऋकारोपधकीर्तयतिव्यावृत्त्यर्थादस्माण्णिचोऽनित्यत्वं ज्ञाप्यते। नित्ये णिच्यनुपधात्वादेव ऋकारस्यात्र क्यब् न भविष्यतीति किं तपरकरणेनैतद्व्यावृत्त्यर्थेन! तेन कीर्तति इत्यादि च भवति॥ ११८॥

१०३. वर्ध छेदनपूरणयोः। वर्धयति। अववर्धत्॥ ११९॥

१०४. कुबि छादने। कुम्बयति। कुम्बति। कुम्बा—'चिन्तिपूजि' इत्यादिना युचोऽपवादोऽकारः। एवं स्वामिकाश्यपमैत्रेयादयो बशन्तं पठन्ति[1]। अपरे तु भकारान्तं पठन्ति। कुम्भयति इत्यादि॥ १२०॥

१०५. लुबि तुबि[2] अदर्शने। 'अर्दने' इति मैत्रेयः[3]। लुम्बयति। तुम्बयति। अनयोरिदित्त्वादेव लुम्बति तुम्बति इति सिद्धेरर्दनेऽर्थे भ्वादौ पाठो व्यर्थः स्यात्। इहादर्शनेऽर्थे त्वर्थभेदात्सोऽपि सार्थकः॥ १२१–१२२॥

१०६. ह्लप व्यक्तायां वाचि। ह्लापयति। क्लपेत्येके। क्लापयति॥ १२३॥

१०७. चुटि[4] छेदने। चुण्टयति। चुण्टति। अत्र कश्चिन्मृडि तुडीति तृतीयान्तौ पठ्येते, तावाद्येषु व्याख्यानेषु न दृश्येते, अतः प्रामादिकः पाठोऽनयोः॥ १२४॥

१०८. इल प्रेरणे। एलयति। ऐलिलत्। इलति इति तुदादौ॥ १२५॥

१०९. म्रक्ष म्लेच्छने। म्लेच्छनमपशब्दनम्। 'म्लेच्छो ह वा एष यदपशब्दः' इति श्रुतेः। म्रक्षयति। म्रक्षति इति संघाते शपि। म्लक्ष म्रक्ष छेदने इत्यपि कश्चित्पठ्येते॥ १२६॥

११०. म्लेच्छ अव्यक्तायां वाचि। इहाव्यक्तवागपशब्दनम्। म्लेच्छयति। म्लेच्छति इति भ्वादौ॥ १२७॥

१११. ब्रूस[5] बर्ह हिंसायाम्। ब्रूसयति। बर्हयति। बर्हति इति बृह वृद्धावित्यस्य शपि। बर्हते इति च प्राधान्ये। बृंहयेत् बर्हयेदिति भाषार्थोऽग्रे भविष्यति।

---

१. क्षीरस्वामिमते तु पकारान्तः पाठ एवोपलभ्यते। २. 'तुबि तुपि' इति मैत्रेयः। ३. क्षीरस्वामी अपि। ४. 'चुट' इति क्षीरस्वामी। ५. 'ब्रीस' इति क्षीरस्वामी।

अत्र 'गर्ज गर्द शब्दे, गर्ध अभिकाङ्क्षायाम्' इति[1] क्वचित्पठ्यते। गर्जयति। गर्दयति। गर्द्धयति। शप्यपि गतावाद्यौ। गृध्यति इति श्यनि गृधेः ॥१२८–१२९॥

११२. गुर्द [2]पूर्वनिकेतने। अत्र क्षीरस्वामी—'पूर्वनिकेतनमासाद्याभ्यवहारः[3]' इति। पारायणे 'द्वौ धातू' इति। पुरुषकारे तु 'पुर्व निकेतने' इति पठित्वा 'निकेतो निवासः पूर्वनिवासः' इत्युक्त्वा पूर्वयति इत्यत्र 'उपधायां च' इति दीर्घं उक्तः। गूर्दयति। पूर्वयति। पूर्वति इति पूरणे शपि। गुर्दिस्तु कुर्द खुर्द इत्यत्र प्रपञ्चितः। 'पूर्व्यतीति तु यत्स्वप्रभावयोस्तत्कण्ड्वादिषु दर्शनात्' इत्युक्तं[4] दैवे। तच्च भूवादौ पूर्वतौ दूषितम् ॥ १३० ॥

११३. जसि रक्षणे[5]। 'मोक्षणे' इति देवः। जंसयति। जंसति। जस्यति इति श्यनि मोक्षणे। इहैव हिंसायां जासयति इति भविष्यति। तथा ताडनेऽपि॥१३१॥

११४. ईड स्तुतौ[6]। ईडयति। ऐडिडत्। ईट्टे इत्यदादौ ॥ १३२ ॥

११५. जसु हिंसायाम्। जासयति चोरस्य चोरमिति वा—'जासिनिप्रहण' इति कर्मणि शेषे षष्ठी। 'जासीति निर्देशात् चोरमजीजिसत् इत्यत्र न षष्ठी' इति न्यासे। इदमपि दूषितं प्रागेव। क्त्वायामिड्विकल्पार्थादूदित्करणादस्य णिजनित्य इति जसति इति भवति। जसित्वा, जस्त्वा। जस्तम् ॥ १३३ ॥

११६. पिडि संघाते। पिण्डयति। पिण्डति ॥ १३४ ॥

११७. रुष[7] रोषे। रोषयति। शपि रोषति। हिंसायां श्यनि रुष्यति। 'रोषे रुड् इत्येके' इति मैत्रेयरक्षितः ॥ १३५ ॥

११८. डिप क्षेपे[8]। डेपयति। डप डिप संघाते इत्यत्रैवाग्रे आकुस्मीयः। क्षेपे डिपयति, डिप्यति इति गतौ ॥ १३६ ॥

११९. ष्टूप[9] समुच्छ्राये। स्तूपयति। अतुष्टुपत् ॥ १३७ ॥

१२०. आ कुस्मादात्मनेपदिनः। 'कुस्मनाम्नो वा' इति वक्ष्यति। आ एतस्मादात्मनेपदिनोऽकर्त्रभिप्रायेऽपि। आङभिविधौ, मर्यादायामसन्देहार्थं प्रागित्येव ब्रूयात् ॥

१२१. चित सञ्चेतने। सञ्चेतनं संज्ञानम्। चेतयते। अचीचितत्। चिन्तयति। चिन्तयति इति स्मृत्यामिह गतम्। शपि चेतति संज्ञाने ॥ १३८ ॥

१२२. दशि[10] दंशने। दंशयते। 'आकुस्मीयमात्मनेपदं णिच्सन्नियोगेन' इति व्याख्यातारः। तेनेदित्करणसामर्थ्याण्णिजभावे दंशति। दशति इति शपि ॥१३९॥

---

१. क्षीरतरङ्गिणी-धातुप्रदीपादौ। २. 'पूर्व निकेतने' इति मैत्रेयः। ३. 'पूर्वनिकेतनम् आद्यनिवासः' इति क्षीरतरङ्गिणीस्थः पाठः। ४. दै० ९८ पृ०। ५. क्षीरस्वामी 'दहि च' इत्यपि पठति। ६. 'गतौ' इति क. पुस्तके। ७. 'रुट' इति क्षीरस्वामी। ८. अत्र क्षीरस्वामी 'डपि डिपि संघाते', 'दम दिभि तिप टिप डिप क्षिप क्षेपे' इति सूत्रद्वयं पठति। ९. 'स्तुप' इति क्षीरस्वामी। १०. इतः पूर्वं 'दाश्रु दाने' इति क्षीरस्वामी अधिकं सूत्रं पठति।

१२३. दसि दर्शनदंशनयोः । 'दंशनदर्शनयोरिति प्रायेण[1] दृश्यते' इति पुरुषकारे । दंसयते, दंसति । पूर्ववदणिचि परस्मैपदम् । दंसति इति रक्षणे गतमैकीयमतेन । दस्यति इत्युपक्षये श्यनि । दासत इति दाने शपि । दासः, दासी— 'दंसेष्टटनौ न आ च' इति टटनौ नकारस्य चाकारः । टित्त्वात् स्त्रियां ङीप् । टटनोः स्वरे विशेषः । अत्र दसेत्यनिदितमपि केचित्पठन्ति । यदाह—'पितेव पुत्रं दसये वचोभिः' इत्यत्र भट्टभास्करः—'दसये संगृह्णामि । दस दंशनदर्शनयोः चौरादिक उदात्तेत्, व्यत्ययेन वृद्ध्यभावः' इति । दासीदासम्—गवाश्वप्रभृतित्वादेकवद्भावः, एकशेषाभावश्च ।। १४० ।।

१२४. डप डिप संघाते[2] । डापयते । डेपयते । डेपयति क्षेपे गतः ।।१४१-१४२।।

१२५. तत्रि कुटुम्बधारणे । तन्त्रयते । तन्त्रति । तन्त्रम् । चान्द्राः 'कुटुम्ब' इति पृथग्धातुं मत्वा कुटुम्बयते इत्याहुः ।। १४३ ।।

१२६. मत्रि गुप्तभाषणे । मन्त्रयते । मन्त्रति ।। १४४ ।।

१२७. स्पश [3]ग्रहसंश्लेषणयोः । स्पाशयते । अपस्पशत । 'अत्स्मृदृत्वर' इत्यादिनाऽभ्यासस्याकार इत्त्वापवादः । स्पशति । स्पशते इति स्पश बाधनस्पर्शयोरित्यस्य हिक्कादेः ।। १४५ ।।

१२८. तर्ज भर्त्स सन्तर्जने । तर्जयते । भर्त्सयते । 'तर्जयन्निव केतुभिः' इति भौवादिकस्य तर्जयतेर्णिचि ।। १४६–१४७ ।।

१२९. बस्त[4] गन्ध अर्दने । बस्तयते । गन्धयते ।। १४८–१४९ ।।

१३०. विष्क[5] हिंसायाम् । विष्कयते । क्वचित्कोशे हिष्क इति पठ्यते[6] । हिष्कयते ।। १५० ।।

१३१. निष्क परिमाणे । निष्कयते । निष्कः—अच् । निष्केण क्रीतं नैष्किकम्— 'असमासे निष्कादिभ्यः' इति क्रीताद्यर्थे ठक् । द्वाभ्यां निष्काभ्यां क्रीतम् द्विनैष्किकम्, द्विनिष्कम्—'द्वित्रिपूर्वान्निष्कात्' इति पक्षे प्राग्वतीयस्य ठको लुक् । एवं त्रिपूर्वस्यापि । 'परिमाणान्तस्य' इत्युत्तरपदवृद्धिर्लुगभावे ।। १५१ ।।

१३२. लल ईप्सायाम् । लालयते । अलीललत् । कुं लालयते इति कुलालः— कर्मण्यण् । कुलालेन कृतं कौलालिकम्—'कुलालादिभ्यो वुञ्' इति वुञ् ।। १५२ ।।

१३३. कूण सङ्कोचने । कूणयते । कूणिः । अन्ये तु कुणेति ह्रस्वोपधं पठन्ति । वयं तु कूणेत्यादिदर्शनान्मैत्रेयाद्युक्तं दीर्घोपधत्वमेव बहु मन्यामहे । ह्रस्वोपधस्तु कथादौ भविष्यति । शब्दोपकरणयोः कुणति इति शे ।। १५३ ।।

---

१. धातुप्रदीपादौ । २. सूत्रमिदं क्षीरस्वामी न पठति । ३. 'ग्रहण' इति क्षीरस्वामी । ४. 'वस्तु' इति मैत्रेयः । ५. 'किष्क' इति ख. पुस्तके । ६. धातुप्रदीपादौ ।

१३४. तूण पूरणे । तूणयते । तूणः । तूणीरः—बाहुलकादीरन् ॥ १५४ ॥

१३५. भ्रूण आशायाम्[1] । भ्रूणयते । भ्रूणः ॥ १५५ ॥

१३६. शठ श्लाघायाम् । शाठयते ॥ १५६ ॥

१३७. यक्ष पूजायाम् । यक्षयते ॥ १५७ ॥

१३८. स्यम वितर्के । स्यामयते । स्मयति इति शब्दार्थः शपि ॥ १५८ ॥

१३९. गूर[2] उद्यमने । गूरयते । क्वचिदयं लघूपध ईदिच्चेह पठ्यते । तत् आत्रेयमैत्रेयविरोधादुपेक्ष्यम् । 'चुरादौ दीर्घोपधः' इति भिदादौ आत्रेयः, दिवादौ च तेनायमर्थः स्फोरितः । मैत्रेयस्तु चुरादौ दीर्घोपधमनीदितं पठित्वा गूरयते इत्येवोदाजहार । तथा च दैवपुरुषकारयोरयमनीदिद्दीर्घोपधः पठितः ॥ १५९ ॥

१४०. शम लक्ष आलोचने । शामयते । लक्षयते । दर्शनाङ्कनयोः लक्षयति, लक्षयते इति गतम् ॥ १६०-१६१ ॥

१४१. कुत्स अवक्षेपणे । कुत्सयते । कुत्सा इति—णिदि कुत्सायामिति निर्देशादङ् ॥ १६२ ॥

१४२. त्रुट छेदने । त्रोटयते । अयं तुदादौ च । 'कुटेत्येके' इति स्वामी ॥१६३॥

१४३. गल श्रवणे[3] । गालयते । गलति इति शपि ॥ १६४ ॥

१४४. भल आमण्डने । भालयते । भलते इति शपि ॥ १६५ ॥

१४५. कूट अप्रदाने[4] । अवसादने इत्येके । कूटयते । अत्र पुरुषकारे—"'कुट-प्रतापने इत्यप्येके' इति मैत्रेयरक्षितः । स एव तु पाठः प्रायेण दृश्यते । तदा कोटयते ॥ १६६ ॥

१४६. कुट्ट[5] प्रतापने । कुट्टयते इति क्षीरस्वामी । अयं कथादावपि । कुटति इति शे ॥ १६७ ॥

१४७. वञ्चु प्रलम्भने । वञ्चयते । क्त्वायामिड्विकल्पार्थादुदित्त्वाण्णिजस्यानित्य इति वञ्चति इत्यपि भवति । वञ्चित्वा, वचित्वा, वक्त्वा—'वञ्चिलुञ्च्यृतश्च' इति सेटः क्त्वः कित्त्वविकल्पनात्पक्षे नलोपः । इडभावे तु नित्यम् । अत्र सूत्रे वञ्चु गताविति भौवादिकस्य चास्य ग्रहणमाह हरदत्तः । तत्र च तेन चौरादिक ऊदित्पठितः । तन्मते वलाद्यार्धधातुकमात्रे इड्विकल्पेन भाव्यम् । पाठद्वयेऽपि निष्ठायाम्—वक्तः । 'गृधिवञ्च्योः प्रलम्भने' इत्यत्र भौवादिकस्यैव ग्रहः, नास्य; आकुस्मीयत्वादेवाकर्त्रभिप्रायेऽपि तङः सिद्धत्वात् । पूर्वोत्तरयोगसाहचर्याद् गृधिसाहचर्याच्च कारितण्यन्तस्यैव वञ्चेस्तत्र ग्रहणस्य युक्तत्वाच्च । अत एव

---

१. 'आशंसायाम्' इति मैत्रेयः । २. 'गूरी' इति क्षीरस्वामी । ३. मैत्रेयो नेदं सूत्रं पठति । ४. सूत्रमिदं न पठति इति क्षीरस्वामी । 'अप्रमादे' इति मैत्रेयः । ५. 'कुट' इति क्षीरस्वामी । 'त्रुट छेदने' इति मैत्रेयः ।

तत्र वृत्तौ वञ्चु गताविति भौवादिक एवोपात्तः। यदाऽयं कारितण्यन्तस्तदापि प्रलम्भनार्थः, न तु प्रलम्भनमिति नास्य तत्र ग्रहणप्रसङ्गः। आकुस्मीयनिबन्धनश्च तङ् स्वार्थण्यन्तस्येति प्रागेवोक्तमिति स्वार्थण्यन्तादस्मात्कारितणौ वञ्चयति वञ्चयते इत्युभयं भवति। अत्र सुधाकरेण—

'इन्द्रनीलदृषदः प्रथीयसीराश्रिताः कथममी जिघांसतः।
उन्नतश्रवणबालनिस्वनान् वञ्चयन्ति शरभान् करेणवः॥'

इति प्रयोगस्य चौरादिकोऽप्यात्मनेपदीत्युक्त्वा वञ्चयन्ति अन्यपथं गमयन्तीति प्रतीतेः प्रलम्भनाभावान्न तङिति निर्वाहात्कारितण्यन्तादस्मादपि 'गृधिवञ्च्योः' इति तङा भाव्यमिति न मन्तव्यम्; यतः कारितण्यन्तस्यात्र प्रयोज्यान्तराभावादर्थो न सङ्गच्छते। स्वार्थण्यन्तस्याकुस्मीयत्वात्तङा भाव्यमित्येव तस्याभिप्रायः। वनीवच्यते—'नीग्वञ्चु' इत्यादिना नीगभ्यासस्य॥ १६८॥

१४८. वृष शक्तिबन्धने। 'शक्तिबन्धनं प्रजननसामर्थ्यम्' इति केशवस्वामी। 'शक्तिसम्बन्धने' इति मैत्रेयः। वर्षयते। वर्षति इति वृष सेचने इत्यस्य शपि। वर्षते इति वर्ष स्नेहने इत्यस्य॥ १६९॥

१४९. मद तृप्तियोगे। एवं मैत्रेयादयः। अन्ये 'तृप्तिशोधने' इति पठन्ति। यदाह क्षीरस्वामी—'तृप्तिशोधने तर्पणशुद्धौ' इति। मादयते। हर्षे माद्यति इति श्यनि। इदितः स्तुत्यादौ शपि मन्दते॥ १७०॥

१५०. दिवु परिकूजने। देवयते। परिदेवकः—'देविक्रुशोश्चोपसर्गे' इति ताच्छीलिको वुञ्। अत्र 'दीव्यतेर्ण्यन्तस्यास्य च ग्रहः' इति हरदत्तः। सम्पृचादौ नानयोः। यदाह वृत्तिकारः—परिदेविर्भ्वादिर्गृह्यते' इति। अत्र हरदत्तः—'क्रीडाद्यर्थस्य हेतुमण्ण्यन्तस्य दिवु परिकूजने इत्यस्य चुरादिण्यन्तस्य ग्रहणं न भवति, लाक्षणिकत्वादण्यन्तैः साहचर्याच्च' इति। अत्र मैत्रेयः 'वञ्चुप्रभृतिमुदितं पठन्ति, स एवायं धातुरर्थान्तरे चुरादिरित्येवं बोधनार्थम्' इति, तन्मते ऊदित्त्वं प्रत्यभिज्ञानार्थत्वात् णिचो विकल्पाय न प्रकल्पते। प्रत्यभिज्ञामात्रएव फलेऽनुदित एव पठ्येरन् १७१॥

१५१. गृ[1] विज्ञाने। गारयते। गिरति इति निगरणार्थस्य शे। गृणाति इति शब्दार्थस्य श्नि। गरति इति ह्रस्वान्तस्य सेवनार्थस्य शपि॥ १७२॥

१५२. विद चेतनाख्याननिवासेषु[2]। 'विद वेदने' इत्येके। 'विद वेदनाख्यानपरिवादेषु' इत्यपरे। वेदयते।

सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे।
विन्दते विन्दति प्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात्[3]॥ १७३॥

---

१. 'गॄ' इति क्षीरस्वामी, मैत्रेयश्च। २. '०विवादेषु' इति क्षीरस्वामी। 'वेदना' इति मैत्रेयः। ३. तु०—दै० १११ का०।

१५३. मन स्तम्भे । मानयते । ज्ञाने मन्यते । अवबोधने मनुते ॥ १७४ ॥

१५४. यु जुगुप्सायाम् । यावयते । युनाति च युनीते च बन्धने । यौति इति मिश्रणे ॥ १७५ ॥

१५५. कुस्म नाम्नो वा[1] । कुस्ममिति दृष्टम् । 'कुस्मयतिरकारितमिति' चेत् कोर्नित्यसमासत्वादुपसर्गस्य च बाह्यत्वात्कारितमेव । 'कुत्सितस्मयनेऽस्य वृत्तिः' इति मैत्रेयदुर्गादयः । कुस्मयते । नाम्नो वा इत्यस्यायमर्थः—वा = अथवा, नाम्नः = प्रत्यासत्या कुस्मेत्यस्मान्नाम्नः कुस्मप्रातिपदिकात् तत्करोतीति णिचि कुस्मयते इति भविष्यतीति । कुस्मधातोरेवाभावात् कुतो नामायमनूद्यतेत्याह—कुस्ममिति दृष्टमिति । कुशब्दपूर्वात्स्मयतेः 'अन्येष्वपि दृश्यते' इति डप्रत्यये 'कुगतिप्रादयः' इति समासे समासत्वान्नाम प्रातिपदिकमिति लक्षणेन निर्ज्ञातमित्यर्थः । ननु किमनेन प्रातिपदिकात्कारितणिचा, यतः कुपूर्वात्स्मयतेः कुस्मयते इति सिद्धमित्याह—कुस्मयतिरकारितमिति चेत् कोर्नित्यसमासत्वादुपसर्गस्य च बाह्यत्वात् कारितमेवेति । कुपूर्वः स्मयतिरेव कुस्मयते इत्यत्र भविष्यति प्रकृतिः, तेनाकारितं कारिताभावोऽस्त्विति चेत्, तन्न; कोरत्र नित्यसमासत्वात् । यदि तिङन्तेन कोरन्वयः स्यात् 'कुगतिप्रादयः' इत्यत्राप्यतिङिति सम्बन्धात् समासो न स्यात्, ततश्च वाक्यत्वादैकपद्यं न स्यात् । पूर्वप्रयोगवत्परप्रयोगश्च स्यात् । तथा तदुपसर्गस्य बाह्यत्वात् प्रकुस्मयते इति स्मयतेः प्राक् प्रयोगः स्यात् । क्रियमाणे च कुस्मनाम्न इति कुशब्दादप्युपसर्गस्य बाह्यत्वस्येष्यमाणत्वात् न तिङन्त्वेन कोरन्वयः । यदि हि स्यात्, 'ते प्राग्धातोः' इति कुप्रस्मयते इति स्मयतेः प्राक् प्रयोगः स्यात् । क्रियमाणे च 'कुस्मनाम्नो वा' इत्यस्मिन्नेतत्करणसामर्थ्यान्न कुपरस्य स्मयतेः, नापि कोर्व्यवहितस्य प्रयोगः । उपसर्गस्य चेति चकारेणान्येऽपि दोषाः सूच्यन्ते—तत्र तावत्, कुस्मयांचक्रुरिति आम् न स्यात् । चुकुस्मयिषति इत्यत्र कोर्द्वित्वं न स्यात् । अचुकुस्मयत इत्यत्र चङ् न स्यात्, अट् च कोः परः स्यात् । कुस्मना इति युज् न स्यात्, कुस्मतिरिति च स्यात् । कुस्मयिता इत्यादाविड् न स्यात् । कुस्मयित्वेत्यत्र ल्यप् स्यात् । क्विपि च णिसंयोगान्तलोपयोः सकारस्य च रुत्वे 'र्वोः' इति दीर्घे कूः इति सिध्यति । तथा ण्वुलि णिलोपे कुस्मक इति सिद्ध्यति, अन्यदा कुस्मायक इति स्यात् । किं च कुस्मतीति न स्यात् । कुस्मायत इत्यादौ क्यङादयोऽपि न स्युः । एषां प्रातिपदिकादाचारे विधानादतो धात्वन्तरं प्रातिपदिकं वाऽश्रयणीयमिति निगमयति—कारितमेवेति । ननु धातुपक्षे कथमाचारे क्विबादयः स्युः ? सत्यम्, कारितान्तादपि णिचि णिलोपे कुस्मप्रातिपदिकात् क्विबादयो भविष्यन्तीति न दोषः ॥ १७६ ॥

---

१. 'कुस्म कुस्मयने' इति मैत्रेयः ।

१५६. चर्च अध्ययने। चर्चयति। चर्चति इति हिंसादौ गतम्। चर्चा—'चिन्तिपूजि' इत्यादिना युचोऽपवादोऽङ्। चिन्त्यादयः सर्वे चौरादिका गृह्यन्ते ॥१७७॥

१५७. बुक्क भाषणे। बुक्कयति। बुक्कति इति शपि। अत्र स्वामी—'शब्द उपसर्गादाविष्कारे च' इति पठित्वा उपसर्गपूर्वात् शब्द इत्यस्मादाविष्कारे चकाराद्भाषणे च णिचमुक्त्वा प्रतिशब्दयतीत्युदाहृत्य 'प्रतिश्रुतमाविष्करोतीत्यर्थः' इत्याह। पुनश्चानुपसर्गाच्चेति पठित्वा 'आविष्कारे शब्दयति' इत्याह। मैत्रेयस्तु द्वावेतावपठन् 'शब्द शब्दक्रियायाम्' इति पठित्वा 'शब्दयति' इत्याह। अत्र पाठे 'प्रातिपदिकाद्धात्वर्थे' इति णौ प्रतिशब्दयति शब्दयति इति वाविष्कारे सिद्धम्। स्वामिपाठे तु शब्दकरणे शब्दयति इति न सिद्ध्यति; 'शब्दवैर' इति क्यङा 'तत्करोति' इति णिचो बाधात्। तस्मान्मैत्रेयपाठो ज्यायान्। येषां तु क्यङा न णिचो बाधस्तेषां न विशेषः। शब्दति इति शपि ॥ १७८ ॥

१५८. कण निमीलने। काणयति। अचीकणत्, अचकाणत्—'काण्यादीनां वा' इति ह्रस्वविकल्पौ णौ चङ्युपधायाः। काणः—स्वभावादयमेकनेत्रनिमीलनवचनः। कणति इति शब्दे ॥ १७९ ॥

१५९. जभि नाशने। जम्भयति। इदित्त्वात् जम्भति। चन्द्रस्तु जभेति पठित्वा जम्भयति इत्युदाजहार। 'रधिजभोरचि' इति नुमं मन्यते। अत्र मते नाशने न जम्भति इत्यस्ति। अयं चानिदित्पाठो न्यासकारहरदत्तादीनामनभिमतः। अन्यथा 'रधिजभोरचि' इत्यत्र 'जभजृभी' इतिवदमुमप्युपाददीरन्। जम्भते इति शपि जृम्भणे ॥ १८० ॥

१६०. षूद क्षरणे। केचिदाश्रवणे इति पठन्ति[1]। सूदयति। असूषुदत्। सूदते इति शपि ॥ १८१ ॥

१६१. जसु[2] ताडने। जासयति चोरस्य-जासिनिप्रहण' इति कर्मणि शेषे षष्ठी। हिंसायां पठितस्यास्य पुनः पाठोऽर्थभेदात्। नहि ताडनं हिंसा, तज्जन्यत्वात्तस्याः। उदित्त्वादस्यापि णिज्विकल्पितः। तेन जसति इति भवति ॥ १८२ ॥

१६२. पश बन्धने। पाशयति ॥ १८३ ॥

१६३. अम रोगे। चोरस्य आमयति। आमयतः। 'रुजार्थानाम्' इति कर्मणि शेषे षष्ठी। 'नान्ये मितोऽहेतौ' इति मित्त्वनिषेधः। आमः—घञि अचि वा णिलोपः। आमशब्दस्तु 'मीङ् हिंसायाम्' इत्यस्याचि। गत्यादौ अमति इति शपि। अस्य च हेतुमण्णौ अमन्तत्वेन मित्त्वात् अमयति इति। अस्य चोदात्तोपदेशत्वात् 'नोदात्तोपदेशस्य' इति ञिति णिति कृति वृद्धिनिषेधात् घञ्ण्वुलोः—अमः। अमक इति ॥ १८४ ॥

---

१. क्षीरस्वामिप्रभृतयः। २. 'जस' इति क्षीरस्वामी।

१६४. चट स्फुट भेदने । चाटयति । स्फोटयति । विकारो शशपोः स्फुटति स्फोटते । स्फुटति इति विशरणे ॥ १८५–१८६ ॥

१६५. घट सङ्घाते[1] । घाटयति । घट चेष्टायामित्यस्य घटते । घटयते, घण्टयतीत्यग्रे भाषार्थे भविष्यति ॥ १८७ ॥

१६६. हन्त्यर्थाश्च[2] । नवगण्यामुक्ता अपि हन्त्यर्थाः स्वार्थे णिचं लभन्ते इत्यर्थः । घातयति । एवं[3] मैत्रेयानुरोधेन चटादयो व्याख्याताः । अत्र धनपालः—'चट स्फुट भेदने, घट च सङ्घाते । चकारात्पूर्वौ चात्रार्थे णिचमुत्पादयतः' इति । स्वामी तु—'चट स्फुट भेदने, चाटयति, स्फोटयति । घट च—घटधातुश्च भेदने वर्त्तते । हन्त्यर्थाश्च धातवो णिचमुत्पादयन्ति' इत्युक्त्वा दर्शनान्तरमप्याह— 'घट च हन्त्यर्थाः, चट स्फुट धातू द्वौ, घटश्च धातुः—त्रय एते हन्त्यर्थाः=हन्तिना समानार्थाः णिचमुत्पादयन्ति' इति । शाकटायनोऽपि 'चटस्फुटौ घट च हन्त्यर्थाः' इति वदन् अस्यामनुकूलः । माधवोऽपि–'चटस्फुटघटा हन्त्यर्था णिचमुत्पादयन्ति' इति । काश्यपस्तु–चट स्फुट भेदने, घट च हिंस च हन्त्यर्थाः' इति । तन्मते चकारेण घटः समुच्चीयते इति बोद्धव्यम्[3] ।

१६७. दिवु मर्दने[4] । देवयति शत्रून् । उदित्त्वाद् देवति । परिकूजने आकुस्मीयो गतः । 'अयमपि परिकूजनार्थः' इति चन्द्रादयः ॥ १८८ ॥

१६८. अर्ज प्रतियत्ने । सतो गुणान्तराधानं प्रतियत्नः । अर्जयति । 'द्रव्यमर्जयन् इत्यादिप्रयोगदर्शनादयमर्थान्तरेऽपि । अर्जति इत्यर्जने शपि ॥ १८९ ॥

१६९. घुषिर् विशब्दने[5] । शब्दनं शब्देन स्वाभिप्रायप्रकाशनम्, ततोऽन्यद्विशब्दनम् । 'घुषिरविशब्दने' इति काश्यपः पपाठ । तथा च स्वामी—'अविशब्दने इत्येके' इति, तदसत्; भाष्यविरोधात् । यदाह 'घुषिरविशब्दने' इत्यत्र—"किमर्थं 'विशब्दने' इत्युच्यते ? न विशब्दने घुषेर्णिचा भाव्यम्" इति । एवं वृत्तिन्यासपदमञ्जर्यादिष्वपि स्थितम् । 'घुषिरविशब्दने' इत्यत्र अविशब्दनग्रहणमन्तरेण घुषिरित्येतावत्युच्यमानेऽपि भौवादिकस्य अविशब्दनार्थस्यैवानन्तरा निष्ठा सम्भवतीति तस्यैव ग्रहणे सिद्धे पुनर्विशब्दनप्रतिषेधादस्य णिज्विकल्पो ज्ञाप्यते । नित्ये हि णिचि तेन व्यवधानाद्विशब्दनार्थादितस्मादनन्तरा निष्ठा नेति किं प्रतिषेधेन ! इदञ्च घोषतावुक्तं । मन्दबुद्ध्यनुग्रहायेह स्मारितम् । एवं चेरित्त्वम्—अघुषत्, अघोषीत् इत्यत्र पक्षेऽङर्थत्वेनावयवे चरितार्थमिति अजूघुषद् इत्यत्र 'णिश्री' इति चङं न बाधते । घोषयति । घोषति । अवघुषितमिति निष्ठायाम् इट् प्रतिषेधो भौवादिकस्येत्युक्तम् ॥ १९० ॥

---

१. 'च' क्षीरस्वामी । २. 'हन्त्यर्थाः' इति क्षीरस्वामी । ३–३ पाठोऽयं क. पुस्तके नास्ति । ४. 'अर्दने' इति क्षीरस्वामी मैत्रेयश्च । ५. 'घुषिरविशब्दने' इति मैत्रेयः ।

१७०. आङः क्रन्द सातत्ये। अत्र काश्यपमैत्रेयौ—'आङः परः क्रन्दिः सातत्ये णिचमुत्पादयति' इति। इदञ्च सातत्यं कुस्मयतेरनन्तरं मैत्रेयेण गणान्तस्थधातूननूद्य 'पुनर्द्वितीयं परस्मैपदप्रकरणमधुनोच्यते' इत्युक्तत्वादयमपि भौवादिकस्यानुवाद इति। तत्र क्रन्देर्योऽर्थ आह्वानादिस्तदपेक्षमिति बोद्धव्यम्। आक्रन्दयति। आक्रन्दति इत्याह्वानादौ शपि गतम्। क्रन्दते इति वैक्लव्ये घटादौ। स्वामी तु 'आङ्पूर्वो घुषिः क्रन्द सातत्ये चुरादिः, आघोषयति' इत्युक्त्वा 'मैत्रेयाद्युक्तमपरमाहुः' इत्याह॥ १९१॥

१७१. लस शिल्पयोगे। अत्र स्वामी 'शिल्पोपयोगे' इति पठित्वा 'केचिन्मूर्धन्यान्तं पठन्ति' इत्याह। लासयति। श्लेषणक्रीडनयोर्लसति इति शपि॥ १९२॥

१७२. तसि[1] भूष अलङ्कारे। अवतंसयति। भूषयति। भूषति इति शपि। तसेरिदित्त्वाण्णिचो विकल्पे वतंसति, अवतंसति—'वष्टि भागुरिरल्लोपम्' इत्यल्लोपः। दौर्गास्तु शप्यपि पेठुः—तसि भूष अलङ्कार इति। पुरुषकारे तूक्तम्—'उभयत्रापि भूषेवेत्येव बहवः' इति॥ १९३–१९४॥

१७३. मोक्ष असने[2]। मोक्षयति शरान्॥ १९५॥

१७४. अर्ह पूजायाम्। अर्हयति। अर्हणा। शपि अर्हति। अर्हा॥ १९६॥

१७५. ज्ञा नियोगे[3]। अत्र नियोगः प्रेषणम्। स्वभावादयमाङ्पूर्वः। आज्ञापयति। मारणादौ ज्ञपयतीति गतं बोधनेऽपि। ज्ञाने तु ज्ञपयति, विज्ञापयति इत्युभयम्। इदं च घटादौ, 'ज्ञप मिच्च' इत्यत्र चोपपादितम्। श्नि जानातीति॥१९७॥

१७६. भज विश्राणने। भाजयति। भाज पृथक्कर्मणीति वक्ष्यमाणस्य भाजयति, भञ्जयति इति भाषार्थेऽग्रे। भजति, भजते इति शपि सेवायाम्। भनक्ति इत्यामर्दने श्नमि॥ १९८॥

१७७. शृधु प्रसहने[4]। शर्धयति। अशशर्धत्। अशीशृधत्। उदित्त्वात् शर्धति इत्यपि भवति। शर्धित्वा। शृद्ध्वा। शृद्धः। शर्धते इति शपि, शब्दकुत्सायां द्युतादिः, उन्दने हिक्कादौ शपि शर्धति इति च॥ १९९॥

१७८. यत निकारोपस्कारयोः इति मैत्रेयः। क्रियानिघण्टौ तु 'यत्ने प्रैषे निराकारे यातयेदप्युपस्कृतौ' इति। क्षीरस्वामी तु 'निराकारोपस्कारयोरिति तु पाठो दृश्यते', 'निराकारः परिभवः' इति चाह। यातयति। निरश्च धान्यधनयोः प्रतिदाने च। ऋणं निर्यातयति। प्रतिददाति इत्यर्थः। यतते इति प्रयत्नार्थे शपि॥ २००॥

१७९. वस स्नेहनच्छेदनापहरणेषु। 'छेदोपहरणेषु' इत्येके। वासयति। अयं निवासे कथादिर्भूवादिश्च। वस्ते इत्याच्छादने। वस्यति इति स्तम्भने। वास उपसेवायामिति दीर्घोपधश्च कथादौ॥ २०१॥

१. धातुमिमं क्षीरस्वामी दुर्गमतेन पठति। २. 'आसने' इति ख. पुस्तके।
३. 'नियोजने' इति क्षीरस्वामी, मैत्रेयश्च। ४. 'अप्रसहने' इति क्षीरस्वामी।

१८०. चर संशये । चारयति । चरति इति गतौ शपि ॥ २०२ ॥

१८१. च्यु हसने । सहने चेत्येके[1] । च्यावयति । च्यवते इति गतौ शपिः । 'च्युसेत्येके' इति स्वामी । च्योसयति ॥ २०३ ॥

१८२. भुवोऽवकल्कने । 'अवकल्कनं मिश्रीकरणम् इति क्षीरस्वामी' इति पुरुषकारे । 'अवकल्कनं चिन्तनमिति काश्यपः । क्वचत्स्वामिग्रन्थेऽनुकल्कनमिति पठित्वा अनुकल्कनं मिश्रीकरणमिति दृश्यते, नन्दी तु 'भुवो विकल्कने' इति, विकल्कनं विपाचनम् । तथा च प्रयुज्यते-तपोभावितमात्मानमिति । अवकल्कन इत्यपरे । तथा च धनपालः-'कृपेस्तादर्थ्ये' इति पठित्वाऽवकल्कयतीत्युदाजहार । तादर्थ्यं इति भुव इति पूर्वधातोर्योऽर्थस्तदर्थत्वे सतीत्यर्थः । भावयति । भावयते इति प्राप्तौ युजादिः । भवति इति शपि ॥ २०४ ॥

१८३. क्लृपेश्च[2] । कल्पयति । सामर्थ्ये शपि कल्पते । क्षीरस्वामी तु 'कृपेस्तादर्थ्ये' इति पठित्वा 'तादर्थ्ये प्रस्तुतस्य भुवोऽर्थे मिश्रीकरणे[3] । अथ वा तच्छब्देन क्लृपिः परामृश्यते, तस्य योऽर्थः सामर्थ्यलक्षणस्तदर्थत्वे सति' इत्यर्थद्वयमाह । एवं च भुवो विकल्कने इति पाठस्य संवादत्वेनोक्तमवकल्पयतीति धनपालोदाहरणं भुवोऽवकल्कन इति पाठेऽप्युपपद्यते ॥ २०५ ॥

१८४. रक लग आस्वादने । राकयति । लागयति । 'रघ लघ इत्येके' इति मैत्रेयः । राघयति । लागयति । अपरे त्वाद्यमपि रगेति तृतीयान्तं पठन्ति । रगयति लगयति इति शङ्कायां संगे च घटादिः ॥ २०६-२०७ ॥

१८५. अञ्चु विशेषणे । विशेषणं व्यावर्तनम् । उदित्त्वाद्विभाषितो णिच् । अञ्चयति । अञ्चति । गतिपूजनयोरञ्चति इति भ्वादौ, गतियाचनयोः अञ्चते इत्यपि ॥ २०८ ॥

१८६. लिगि चित्रीकरणे । लिङ्गयति । लिङ्गति । गतौ च शपि लिङ्गति ॥ २०९ ॥

१८७. मुद संसर्गे । मोदयति सक्तून् घृतेन । मोदते शपि हर्षणे ॥ २१० ॥

१८८. त्रस धारणे[4] । 'ग्रहणे' इति नन्दी । अत्र 'धारणं धारणम्' इति मैत्रेयः । 'वारणे' इत्येव शाकटायनः । त्रासयति मृगान् । त्रंसयति इति भाषणे भविष्यति । त्रस्यति त्रसति इति दिवादावुद्वेगे ॥ २११ ॥

१८९. उध्रस उञ्छे । क्र्यादिकस्योकार इत् । अस्य तु धातोरवयव इति काश्यपादिः । मैत्रेयस्तु पूर्वं एवायं धातुरिह पठ्यते, तेनायमुदिदिति । अन्ये तूभयत्रापि धात्ववयव उकार इति । ध्रासयति इति मैत्रेयमते । अन्येषामुध्रासयति इति ॥ २१२ ॥

१९०. मुच प्रमोचने[5] । ऋणं निर्मोचयसि । प्रतिददातीत्यर्थः । मुञ्चतीति कल्कने शपि; शे तु मुञ्चति इति मोक्षणे ॥ २१३ ॥

---

१. क्षीरस्वामिप्रभृतयः । २. 'कः' इत्यधिकं ख. पुस्तके । ३. 'तादर्थ्यमुद्देश्यविषयम्' इति क्षीरतरङ्गिणीपाठः । ४. सूत्रमिदं क्षीरस्वामी न पठति । ५ 'मोदने च' इत्यधिकं क. पुस्तके ।

१९१. आ स्वदः सकर्मकात् । अत्रान्ये स्वाद इति दीर्घोपधं पठन्तो वक्ष्यमाणं स्वद आस्वादने इति धातुमपि दीर्घोपधं पठन्ति । आकुस्मादितिवदभिविधावयमाकारः । तेन ग्रसिप्रभृतिभ्यः ष्वद आस्वादने इति वक्ष्यमाणपर्यन्तेभ्यः सकर्मकेभ्य एव णिज् भवति । इदं च सकर्मकत्ववचनं कर्मसापेक्षक्रियामात्रवाचित्वेनाप्रयुज्यमानेऽपि कर्मण्ययं विधिर्भवति । अत एव हि मैत्रेयः—'सम्भविकर्मकाण्णिच्' इत्याह । उक्तं च पुरुषकारे—'सम्भविकर्मकत्वकथनेन सत्यसति वा कर्मणः प्रयोगे तत्सम्भवमात्रेण णिज् भवतीत्युक्तं भवति । कर्मसम्भवः पुनरनेकार्थत्वेनार्थान्तरवाचितायां यथाप्रयोगं द्रष्टव्यः' इति[1] । कर्मकर्तृविषयेऽप्यर्थान्तरवृत्तित्वं समानमिति न तस्येह पृथग्विषयत्वेनोपादानम् । अत्र केचित् 'पञ्चमीप्रकरणाभ्यां सन्निहितेन णिचाऽर्थप्राप्तमेवकारं सम्बन्धयन्तः सकर्मकाण्णिजेव भवति, अकर्मकात्तु यथायोगम्' इत्याहुः, तदसत्; एवकारस्य सकर्मकादिति श्रुतेनान्वयलाभे अश्रुतेनान्वयायोगात् । अनेन खल्वभिप्रायेण मैत्रेयादयः सकर्मकादेवेत्येवं व्याख्यन् । अत्र मतान्तरमप्याह मैत्रेयः—'आस्वद एव सकर्मकादित्येके' इति । तथा च क्षीरस्वामी—'आङ्पूर्वात्स्वदेः सकर्मकाण्णिज् भवति' इति । अयं पक्षः पुरुषकारे दूषितः । तत्र चाभिविधिपक्ष एव युक्तः प्रत्यवभासते । इहाप्याङः पूर्वापरेष्विवाभिविध्यर्थताया एवौचित्यात् । आकुस्मादिति हि पूर्वत्राभिविधावाङ् दृष्टः, 'आ धृषाद्वा' इति 'आगर्वात्' इति च समनन्तरमेवैवं वक्ष्यते । तत्रायमपि तन्मध्यपाती तच्छायश्चाङ् तदर्थ एव व्यक्तमवभासते । तदत्र पक्षान्तरं व्याचक्षाणानामाशयश्चिन्त्य इति ॥

१९२. ग्रस ग्रहणे । ग्रासयति फलम् । ग्रसते इत्यदने शपि ॥ २१४ ॥

१९३. पुष धारणे । पोषयति आभरणम् । पोषति, पुष्यति, पुष्णाति—इति शप्श्यन्श्नासु पुष्टौ ॥ २१५ ॥

१९४. दल विदारणे । दालयति । दलति इति विशरणे घटादौ ॥ २१६ ॥

१९५. पट पुट लुट तुजि मिजि पिजि लुजि भजि[2] लघि त्रसि पिसि कुसि दशि कुशि घट घटि बृहि बर्ह बल्ह गुप धूप विच्छ चीव पुथ लोकृ लोचृ णद कुप तर्क वृतु वृधु भाषार्थाः । मैत्रेयानुरोधेनायं पाठो दण्डकस्य । 'भासार्था इत्येके' इति मैत्रेयः । तथा च क्षीरस्वामी—'भासा दीप्तिरर्थो येषान्ते भासार्थाः' इति । पाटयति । पटयति इति कथादौ ग्रन्थे । पटति इति गतौ शपि । पोटयति । पुटयति इति संसर्गे कथादौ । संसर्गे पुटति इति शे । लोटयति । शप्श्यनोर्लोटति लुट्यति इति लोडने । लोटते इति द्युतादौ प्रतिघाते । लुण्टति इति लुटि स्तेये शपि । लुण्टयति इतीहैव गतः । तुञ्जयति । इदित्त्वात्तुञ्जति इति । हिंसायामिदितोऽनिदितश्च तुञ्जति तोजति इति शपि । मिञ्जयति । मिञ्जति । पिञ्जयति । पिञ्जति । अदादौ वर्णे

1. दै० पृ० ४० । 2. 'भजि भुजि' इति मैत्रेयः ।

पिङ्क्ते । लुञ्जयति । लुञ्जति । मञ्जयति । भजति इति भज सेवायां शपि । भनक्ति इत्यामर्दने श्नमि । भाजयति इति विश्राणने गतः । पृथक्कर्मणि च भविष्यति । लङ्घयति । लङ्घति । शोषणे शपि लङ्घति । गत्यान्तु लङ्घते । त्रंसयति । त्रंसति । त्रासयति इति धारणे गतम् । त्रस्यति त्रसति इति उद्वेगे वा श्यनि । पिंसयति । पिंसति । पेसयति इति गतौ गतम् । पेसति इति तु शपि । कुंसयति । कुंसति । भ्रुकुंसः स्त्रीवेशधारित्वाद् भ्रुवा कुंसयति पुरुषत्वमिति । दंशयति । दंशति । दशति इति दंशने शपि । कुंशयति । कुंशति । घाटयति । अयं सङ्घातेऽपि गतः । 'पुनः पाठोऽर्थभेदाद्' इति मैत्रेयः । घटते इति घटादौ चेष्टायाम् । घण्टयति । घण्टति । घण्टा । बृंहयति । बृंहति । वर्धति इत्यनिदितो बृंहेः शपि वृद्धौ, इदितस्तु बृंहति इति शब्दे च । बर्हयति । बल्हयति । बर्हते बल्हते इति प्राधान्ये शपि । गोपयति । धूपयति । आये शपि रक्षणसन्तापयोः गोपायति । धूपायति इति । गुप्यति इति व्याकुलत्वे श्यनि । सन्तापे । धूपति इति शे । विच्छयति । विच्छाययति इति शे गतौ । चीवयति । पोथयति । हिंसायां पुथ्यति इति श्यनि । पुन्थति इति शपि संक्लेशे । लोकयति । अलुलोकत् । लोचयति । अलुलोचत्–ऋदित्त्वान्नाग्लोपीति ह्रस्वनिषेधः । लोचते लोकते इति दर्शने शपि । नादयति । नदति इति शपि शब्दे । कोपयति । कुप्यति इति कोपे श्यनि । तर्कयति । 'ऊहेऽप्ययमभिधीयते' इति मैत्रेयः । वर्तयति । वर्धयति । उदित्त्वाद्वर्तति वर्धति इति च । वर्तते वर्धते इति वर्तनवृद्ध्योः शपि । वृत्यते इति वरणे श्यनि ।। २१६–२४७ ।।

१९६. रुट लजि भजि दसि भृशि रुशि रुसि शीक नट पुटि जुचि रघि अहि रहि महि–इत्येते पञ्चदश स्वामिकाश्यपानुसारेण लिख्यन्ते । रोटयति । स्तेये शपि रुण्टति । प्रतिघाते द्युतादौ रोटते । लञ्जयति । लञ्जति । लजति, लञ्जति इति भर्जने शपि । लाजति लाञ्जति भर्त्सने शपि । लज्जते इति व्रीडे तुदादौ । प्रकाशे लञ्जयति इति कथादौ । भञ्जयति । भञ्जति । अनक्ति इति श्नमि व्यक्त्यादौ । दंसयति । दंसति । भृंशयति । भृंशति । भर्शति भृश्यति इति शप्श्यनोरधःपतने । रुंशयति । रुंशति । रुंसयति । रुंसति । शीकयति । शीकति । शीकते इति सेचने शपि । नाटयति । अयमवस्यन्दने गतः । नटति इति नृत्तौ घटादिः । पुण्टयति । पुण्टति । परिवर्तने शपि पोटते । जुञ्चयति । जुञ्चति । रङ्घयति । रङ्घति । गतौ शपि च रङ्घति । अंहयति । अंहति । अंहते इति गतौ शपि । रंहयति । रंहति । रहयति इति त्यागे कथादौ भविष्यति । मित्प्रकरणे च गतः । रहति इति गतित्यागयोः शपि । मंहयति । मंहति । महति इति कथादौ पूजायाम् । महति इति शपि । मंहते इति वृद्धौ । महीयते इति कण्ड्वादौ ।। 'भजिपिसिलडिवृहितुडिनडीत्यन्ये पठन्ति' इति स्वामी । तत्राद्यौ वृहिश्च मैत्रेयानुरोधेनास्माभिर्दण्डके पठिताः । लण्डयति । लण्डति । लाडयति इत्युपसेवायां गतम् । विलासे लडति इति शपि । तोडयति ।

तोडति तुण्डते इति शपि तोडने । तुडति इति शे । नाड्यति । नडति इति गतौ शपि ॥ २४८–२६२ ॥

१९७. पूरी आप्यायने । पूरयति । ईदित्त्वान्निष्ठायामनिडर्थादस्यापि णिज्विकल्पितः । तेन पूरति । पूर्यते इति श्यनि ॥ २६३ ॥

१९८. रुज हिंसायाम् । रोजयति । रुजति इति शे भङ्गे ॥ २६४ ॥

१९९. ष्वद आस्वादने । स्वाद इत्येके । 'संवरणे' इति क्षीरस्वामिधनपालशाकटायनाः । स्वादयति । असिष्वदत्—'सः स्विदि' इति सत्वं ण्यन्तात्सनि । स्वादते स्वदते इति शपि ॥ २६५ ॥

इति आस्वदीयाः ।

२००. आ धृषाद्वा । 'धृष प्रहसने' इति वक्ष्यमाणसहिता विभाषितणिचो वेदितव्याः । आकुस्मादितिवदभिविधावाङ् ॥

२०१. युज॰ पृच संयमने[1] । योजयति । पर्चयति । अन्यत्र योजति । पर्चति । योक्ता । अयौक्षीत्—'त्यजि यजि युजिरुजि' इत्यनिट्कारिकापाठादनिट्कः । पर्चिता । अपर्चीत् । युनक्ति, युङ्क्ते योगार्थे श्नमि । श्यनि युज्यते इति समाधौ । पृणक्ति सम्पर्के श्नमि । पृङ्क्ते इति लुकि ॥ २६६–२६७ ॥

२०२. अर्च पूजायाम् । अर्चयति । अर्चति इति भौवादिकेन स्वरितेतार्ऽचिनैव सिद्धे णिज्विकल्पनं कर्तृगामिफले अर्चति इति यथा स्यादिति । शाकटायनस्तु 'अयमात्मनेपदी' इति, तन्मते णिज्विकल्पस्य फलमकर्त्रभिप्रायेऽपि तङ्सिद्धिरिति बोद्धव्यम् ॥ २६८ ॥

२०३. षह मर्षणे । साहयति । सहति । सहते इति शप्यनुदात्तेत् । अस्येह पाठो वृत्तिकारादीनामनभिमत इति दिवादावेवावोचाम ॥ २६९ ॥

२०४. ईर क्षेपे । ईरयति । ईरति । लुकि ईर्ते गतिकम्पनयोः ॥ २७० ॥

२०५. ली द्रवीकरणे । लाययति । लयति । लेता । 'श्विडीङिवर्णेष्वथशीङ्श्रिञावपि' इत्येते एवेवर्णान्तेषु सेट इति नियमान्नेट् । 'विभाषा लीयतेः' इत्यात्वविकल्पमस्यापीच्छन् मैत्रेयो 'लीलोर्नुग्लुकौ' इत्यात्वपक्षे लुको विकल्पनाल्लुकं पुकं चोदाजहार । अनात्वे तु नुकम्, तदभावे वृद्ध्यायौ च, तदयुक्तम्; 'आत्वे लीनातिलीयत्योर्यका निर्देशः' इति भाष्ये उक्तत्वादस्यात्वाभावात् । पुरुषकारेऽप्युक्तम्—'दैवेनास्यात्वे लुगादि प्रदर्शनं मैत्रेयविश्रम्भादुक्तम्; अयुक्तं चेदं भाष्यविरोधित्वाद्' इति[2] । श्लेषणे श्यनि लीयते । लिनाति इति श्नि ॥ २७१ ॥

२०६. वृजी वर्जने । वर्जयति । वर्जति । वर्जिता । ईदित्त्वं निष्ठायामनिडर्थम्—वृक्त इति । वृङ्क्ते वृणक्ति इति लुक्श्नमोः ॥ २७२ ॥

---

१. 'युज पृची सम्पर्चने' इति तरङ्गिणीपाठः । २. दै॰ पृ॰ २५ ।

२०७. वृञ् आवरणे । वारयति । वरति, वरते । वरिता, वरीता—इटो दीर्घ-विकल्पः । आत्मनेपदेषु लिङ्सिचोः सनि च 'लिङ्सिचोरात्मनेपदेषु' 'इट् सनि वा' इतीड्विकल्पः । लिङि परस्मैपदपरे सिचि च 'न लिङि', 'सिचि च परस्मै-पदेषु' इतीटो दीर्घाभावश्च वृञ्वन्नेयः । ञित्त्वादुभयपदित्वम् । वृणोति, वृणुते इति श्नौ । वृणीते इति सम्भक्तौ श्नि ।। २७३ ।।

२०८. जृ वयोहानौ । जारयति । जरति । जरिता, जरीता–'वृतो वा' इत्यादि । जीर्यते जृणातिवत् । 'ज्रि' इति नन्दी । ज्रायति । ज्रयति । क्रैयादिकोऽप्येवमिति सः । ज्रिणाति ।। २७४ ।।

२०९. रिच वियोजनसम्पर्चनयोः । रेचयति । रेचति । रेक्ता—अनिट्कारिका-पाठादनिट्त्वम् । विरेचने रिङ्क्ते रिणक्ति इति श्नमि ।। २७५ ।।

२१०. शिष असर्वोपयोगे । शेषयति । शेषति । शेष्टा—शिषिं पिषिम्' इत्यनिट्-कारिकासु पाठादनिट्त्वम् । अत एव लुङि अशिक्षदिति क्सो भवति । लुङ्यङो-ऽभावादशेषीदिति देवेन यदुक्तं तदस्यानिट्त्वादयुक्तमिति पुरुषकारे एव दूषितम्[1] । शिनष्टि इति विशेषणे श्नमि । विपूर्वोऽतिशये । विशेषयति । विशेषति ॥ २७६ ॥

२११. तप दाहे । तापयति । तपति । तप्ता— 'तपिं तिपिम्' इति वचनादनिट्-त्वम् । तपति इति शपि सन्तापे । तप्यते, तपति इत्यैश्वर्ये वा; दिवादित्वात् ।।२७७।।

२१२. तृप तृप्तौ । 'संदीपने' इति क्षीरस्वामी । तर्पयति । तर्पति । तर्पिता—अनिट्कारिकायां तृप्यति इति श्यना निर्देशान्नास्यानिट्त्वम् । तृपति, तृम्पति इति शे । तृप्यति इति श्यनि । अस्य स्वादौ पाठो वृत्तिकारादीनामनभिमत इत्यवोचाम ।। २७८ ।।

२१३. छृदी सन्दीपने । छर्दयति । छर्दति । छर्दिता । छर्दिष्यति—'सेऽसिचि' इतीड्विकल्पः कृतादिसाहचर्याद्रौधादिकस्य, अत एवायं निष्ठायामनिडर्थमीदि-त्पठ्यते । छृण्णः । छृण्णवान् इति । छृन्ते छृणत्ति इति दीप्तिदेवनयोः श्नमि । धनपालशाकटायनौ तु छृदेत्यनिदितं पेठतुः । तत्र निष्ठायां छृदितमिति फले भेदः । क्षीरस्वामिनस्तु पान्तोऽयम् । यदाह—'चृप छृप तृप दृप संदीपने । संदीपनक्रियायां चृपादयश्चत्वारो वर्तन्ते' इति । चर्पयति । छर्पयति । तर्पयति । दर्पयति ।। २७९ ।।

२१४. दमी भये[2] । दर्भयति । दर्भति । दर्भिता । दब्धः—ईदित्त्वाद-निट्त्वम् ।। २८० ।।

२१५. दम सन्दर्भे । अस्यानिदित्त्वान्निष्ठायामपि सेट्त्वं विशेषः । 'अमुं [3]बहवो न पठन्ति' इति पुरुषकारे । अस्माभिस्तु देवमैत्रेयानुसारेण पठितः । तुदादेरीदितो ग्रन्थने दृभति इति ।। २८१ ।।

---

१. दै० पु० १०५ । २. 'ग्रन्थे' इति ख. पुस्तके । ३. क्षीरस्वामिप्रभृतयः ।

२१६. श्रथ मोक्षणे । 'हिंसायामित्यपरे'[1] इति पुरुषकारे । श्राथयति । श्रथति । श्राथयति इति प्रयत्नेऽपि गतः । श्रथयति इति कथादौ दौर्बल्ये ॥ २८२ ॥

२१७. मी गतौ[2] । माययति । मयति । मेता—'श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि' इति नियमान्नेडागमः । 'सनि मीमा' इत्यत्र चौरादिकैः साहचर्यात्तादृश एव गृह्यते इति मिमीषति इत्यत्राच इस्भावो न भवति । मीञः मिनाति मीनीते हिंसायाम् । मीयते ङितः । मिनोति मिनुते स्वादौ ह्रस्वान्तस्य ॥ २८३ ॥

२१८. ग्रन्थ बन्धने । ग्रन्थयति । ग्रन्थति । अत्र देवमैत्रेयौ[3] क्रथ हिंसायामिति स्वरितेतं पठित्वा क्राथयति । क्रथति । क्रथते इत्याहतुः । शाकटायनस्तु परस्मैपदिनम् । जासिनीत्यत्र क्राथेति निपातनाद् वृद्धिरित्युक्तत्वाद् वृत्तिकारादीनामनभिमतश्चुरादौ पाठ इति घटादौ क्रथति इत्यत्रावोचाम ॥ २८४ ॥

२१९. शीक मर्षणे[4] । शीकयति । शीकति । शीकिता । सेचने शपि शीकते ॥२८५॥

२२०. चीक च[5] । चीकयति । चीकति । चीकिता ॥ २८६ ॥

२२१. अर्द[6] हिंसायाम् । अर्दयति । अर्दति । अर्दते । 'अयं स्वरितेत्' इति देवमैत्रेयौ । आत्मनेपदीति शाकटायनः । गतियाचनयोः अर्दति इति शपि ॥ २८७ ॥

२२२. हिसि हिंसायाम्[7] । हिंसयति । हिंसति । इदित्त्वादेव णिज्विकल्पः सिद्ध इति युजादिपाठे प्रयोजनं चिन्त्यम् । हिनस्ति इति श्नमि ॥ २८८ ॥

२२३. आङः षदः पद्यर्थे । पद्यर्थो गतिः । आसादयति । आसीदति इति शपि सीदादेशः । आसत्ता । आसात्सीत्—'शदिं सदिं स्विद्यतिपद्यती खिदिम्' इत्यनिट्कारिकायां पाठादनिट्त्वम् । विसरणार्थकस्य ज्वलादिकस्य तौदादिकस्य च लृदित्त्वादङ्—आसदत् इति ॥ २८९ ॥

२२४. शुन्ध शौचकर्मणि[8] । शुन्धयति । शुन्धति । शुन्धिता । शुन्धति इति शपि शुद्धावकर्मकः ॥ २९० ॥

२२५. छद अपवारणे[9] । स्वरितेदिति मैत्रेयदेवौ । परस्मैपदीति शाकटायनः । छादयति । छदति । छदयतीत्यूर्जने घटादौ । छन्दयति इतीहैव संवरणे गतः ॥२९१॥

२२६. जुष परितर्कणे[10] । 'परितर्कणमूहो हिंसा वा, परितर्पणे परितृप्तिक्रियायाम्' इति क्षीरस्वामी । जोषयति । जोषति । प्रीतिसेवनयोर्जुषते इति तुदादौ ॥

२२७. धूञ् कम्पने । धूनयति । धवति । धवते । 'धूञ्प्रीञोर्नुग्वचनम्' इति नुक् । 'धूञ्प्रीणोः' इति हरदत्तकौमारादीनां पाठः । तन्मते प्रीणातिसाहचर्यात्

---

१. क्षीरस्वामिप्रभृतयः । २. 'गतौ, मनने' इति क्षीरस्वामी । ३. क्षीरस्वामी चेति शेषः । ४. 'आमर्षणे' इति क्षीरस्वामी । ५. क्षीरस्वामी नेदं सूत्रं पठति । ६. 'अर्द हिसि' इति क्षीरस्वामी, मैत्रेयश्च । ७. मैत्रेयक्षीरस्वामिमते नेदं पृथक् सूत्रम् । ८. 'शौचकरणे' इति क्षीरस्वामी । ९. सूत्रमिदं क्षीरस्वामी न पठति । १०. 'परितर्पणे' इति मैत्रेयः ।

धूञोऽपि क्रैयादिकस्यैव नुका भाव्यम् । अत एवात्र मैत्रेयो धावयति इत्युदाजहार । एवञ्च स्वादौ दीर्घवादिनामपि धावयति इति भवति । धुनाति धुनीते इति क्र्यादौ । धुनोति धुनुते इति स्वादौ । धूनोति धूनुते इति च तत्रैव विधूनने । शे धुवति इति कुटादिः ॥ २९३ ॥

२२८. प्रीञ् तर्पणे । अत्र केचन धातुवृत्तिकाराः 'धूञ्प्रीञोर्नुग्वचनम्' इति पठन्तः प्रीणयति इत्युदाहरन्ति । हरदत्तस्तु 'धूञ्प्रीञोरिति श्नानुकरणाद्दैवादिकस्य न' इत्याह[1] । 'दैवादिकग्रहणेनात्र चौरादिकोऽप्युपलक्षयितव्यः' इति[2] पुरुषकारे । तन्मते प्राययति इत्येव भाव्यम् । मैत्रेयोऽप्यनेनैवाभिप्रायेण प्राययति इत्युदाजहार ॥ २९४ ॥

२२९. श्रन्थ ग्रन्थ सन्दर्भे । श्रन्थयति । ग्रन्थयति । श्रन्थति । ग्रन्थति । 'णिश्रन्थिग्रन्थि' इति वचनात् ग्रन्थयते स्वयमेव इति भवति । श्रथ्नाति ग्रथ्नाति इति क्नि । श्रन्थते ग्रन्थते इति शैथिल्यकौटिल्ययोः शपि ॥ २९५–२९६ ॥

२३०. आप्लृ लम्भने । आपयति, आपति । लृदित्त्वादङि आपत् । आप्ता । 'तपि तिपिम्' इति कारिकापाठादनिट्त्वम् । मैत्रेयेण आपते इत्यात्मनेपदमपि दर्शितम् । अन्ये तु नैतन्मृष्यन्ति ॥ २९७ ॥

२३१. तनु श्रद्धोपकरणयोः । उपसर्गाच्च दैर्घ्ये । तानयति । वितानयति । तनति । वितनति । तनुते इति विस्तारे । अत्र क्वचित् 'चन श्रद्धोपहिंसनयोः' इति पठ्यते । चानयति । चनति । चनयति इति घटादौ ॥ २९८ ॥

२३२. वद सन्देशवचने[3] । स्वरितेत् । शाकटायनस्य त्वात्मनेपदी । वादयति । वदति । वदते । व्यक्तवाचि शपि वदति ॥ २९९ ॥

२३३. वच परिभाषणे[4] । वाचयति । वचति । वक्ता । अवाचीत्—अङ्विधौ वक्तीति लुग्विकरणस्य निर्देशान्नास्य ग्रहः । 'पचि वचिम्' इति पाठादनिट्त्वम् । पारायणेऽयं नाधीयते ॥ ३०० ॥

२३४. मान पूजायाम् । मानयति । मानति । मानिता । 'मान्बध' इत्यत्र "नह्येतेभ्यः प्राक् सन आत्मनेपदं नापि परस्मैपदं पश्यामः' इति भाष्यं भौवादिकस्य विचारणार्थस्यैव नित्यसन्नन्तत्वं प्रतिपादयतीत्यस्माल्लिडाद्युत्पत्तिः । स्तम्भे मानयते इत्याकुस्मीयः । मन्यते मनुते इति दिवादौ तनादौ च ॥ ३०१ ॥

२३५. भू प्राप्तौ आत्मनेपदी[5] । अयं प्राप्तौ वा णिचमुत्पादयति आत्मनेपदी चेत्यर्थः । अत्र केचिदात्मनेपदं णिच्सन्नियोगेनैव, तेनान्यदा नेत्याहुः । मैत्रेयस्तु 'आकुस्मीयप्रकरणे भूप्राप्तौ वेति लघुनैव न्यासेन णिच्यात्मनेपदे वाग्रहणाण्णिचो

---

१. प० म० ७।३।३७ । पा० सू० । २. ०० पृ० २६ । ३. 'सन्देशने' इति क्षीरस्वामी, मैत्रेयश्च । ४. 'भाषणे' इति क्षीरस्वामी मैत्रेयश्च । ५. क. पुस्तके, क्षीरतरङ्गिण्यां च 'वा' इत्यधिकम् ।

विकल्पे च सिद्धे पुनरिह पठित्वात्मनेपदीति वचनाण्णिजभावे आत्मनेपदम्' इत्याह। इदं पुरुषकारे दूषितम्। 'आकुस्मीयकाण्डे भू प्राप्तौ वेति पठ्यमाने अनन्तरप्रकृतस्यात्मनेपदीतिवचनस्य विकल्पः स्यात्, न तु परमप्रकृतस्य णिच इति। ण्यभावे परस्मैपदमुदाहरन्तौ धनपालशाकटायनावप्यत्रैवानुकूलौ' इति चोक्तम्। तथा भूसूत्रे सुधाकरोऽपि—'भवत इति प्रस्तुत्य आत्मनेपदं मैत्रेयोक्तेन कारणेन सामर्थ्याण्णिच्सन्नियोगेनात्मनेपदित्वादसाधनम्। अत एव 'ते सुराष्ट्रमभवन्' इत्यादि प्रयुज्यते' इत्याह। अन्ये तु—पुराणव्याकरणेषु 'भुवो णिङ् इति सूत्रस्य णिङो ङकारः प्रत्ययान्तादात्मनेपदार्थः, प्रकृतौ तु केवलादिति श्रीमद्भादिभिर्व्याख्यानात्तन्त्रान्तरवचनानुरोधेन सन्नियोगन्यायो बाध्यते' इत्याहुः। तथा च 'वर्षाभ्वश्च' इत्यत्र कैयटेन 'वर्षासु भवति वर्षा वा भवते' इत्यात्मनेपदं दर्शितम्। भावयते। भवते। भविता॥ ३०२॥

२३६. गर्ह निन्दने[1]। गर्हयति। गर्हति। गर्हते इति शपि॥ ३०३॥

२३७. मार्ग अन्वेषणे। मार्गयति। मार्गिता। मार्गमाणः इति चानशि। मृगयते इति कथादौ॥ ३०४॥

२३८. कठि शोके। कण्ठयति। कण्ठति। कण्ठिता। कण्ठते इति शपि। कठति इति तु कृच्छ्रजीवने। कठिः प्रायेणोत्पूर्वं उत्कण्ठावचनः॥ ३०५॥

२३९. मृजू शौचालंकरणयोः। मार्जयति। मार्जति। मार्जिता, मार्ष्टा—ऊदित्त्वादिड्विकल्पः। निष्ठायाम्—मृष्टः। वृद्ध्यादि मार्ष्टिवत्। मार्जयति इति शब्दे गतः॥ ३०६॥

२४० मृष तितिक्षायाम्। पुरुषकारेण 'अयं स्वरितेत्' इत्युक्त्वा 'शाकटायनस्य त्वात्मनेपदी' इत्युक्तम्। मर्षयति। मर्षति। मर्षते। मृष्यति, मृष्यते इति दिवादौ सेचने। शपि मर्षति॥ ३०७॥

२४१. धृष प्रसहने[2]। आदित् शाकटायनस्य। धर्षयति। धर्षिता। धर्षितः। शाकटायनस्य तु धृष्टः। धृष्णोतीति श्नौ। एषु पशबन्धन इति केचित्पठन्ति, तदुक्तं मैत्रेयेण—'पश बन्धने इत्यत्र 'पशबन्धने' इति युजादौ इति॥ ३०८॥

इति आधृषीयाः।

२४२. कथ वाक्यप्रबन्धे। कथयति॥ ३०९॥

२४३. एतदादयोऽदन्ताः[3]। तत्फलञ्च कथयति इत्यादौ अल्लोपस्य स्थानिवद्भावाद्यथायोगं वृद्धिगुणयोरभावः। तथा अचकथत् इत्यत्र 'सन्वल्लघुनि' इत्यस्य 'दीर्घो लघोः' इति दीर्घस्य चानग्लोप इति निषेधः। अन्यदपि प्रयोजनं तत्रवक्ष्यते।

२४४. वर ईप्सायाम्। वरयति। वारयति इति वृञः॥ ३१०॥

---

१. 'निन्दायाम्' क. पुस्तके। 'विनिन्दने' इति क्षीरस्वामी। २. 'अप्रसहने' इति क्षीरस्वामी। ३. 'अदन्ताः' इति क्षीरस्वामी इतः पूर्वमेव पठति।

२४५. गण संख्याने । गणयति । अजीगणत्, अजगणत्—'ई च गणः' इति णौ चङि ईत्वात्वे । इह सङ्ख्यानं नाम सङ्ख्यानिमित्तं ज्ञानविशेषो भागशोऽवस्थापनं च । तत्राद्योऽर्थः कर्तृस्थो भाव इति न कर्मकर्ताऽस्ति, तत्र इतरत्र कर्मस्थभावकत्वाद् गणयते गणः स्वयमेव इति भवति, भागशोऽवस्थाप्यमानो गणस्तत्रानुकूलत्वात्स्वयमेव भागशोऽवतिष्ठते इत्यर्थः । अवस्थानं हि कर्मस्थो भावः । यक्चिणौ तु 'णिश्रन्थि-ग्रन्थि' इति न भवतः । एवं च 'णेरणौ' इत्यत्र गणयति गणः स्वयमेव इति वृत्तिस्थस्य, गणयते गणः स्वयमेव इति भाष्यस्थस्य चोदाहरणस्य विरोधोऽपि न भवति । गणिका—ण्वुलि 'प्रत्ययस्थात्' इतीत्वम् । गणिकानां समूहो गाणिक्यम्—'गणिकायाश्चेति वक्तव्यम्' इति यञ् ॥ ३११ ॥

२४६. शठ श्वठ सम्यगवभाषणे[1] । आभाषणे इति केचित् । शठयति । श्वठयति । शाठयति, श्वाठयति इति गत्यादौ गतम् । शाठयते इति श्लाघायामा-कुस्मीयः । शठति इति कैतवादौ शपि ॥ ३१२–३१३ ॥

२४७. पट वट ग्रन्थे । 'वट वेष्टने' इति क्षीरस्वामी । पटयति । पाटयति इति भाषार्थे गतः । पटति इति गतौ शपि । वटयति । वेष्टने शपि वटति, तस्य कारिते वाटयति । वटयति इति परिभाषणे घटादिः । ओष्ठ्यादिं बहवः पठन्तीति तत्रैवोक्तम् ॥ ३१४–३१५ ॥

२४८. रह त्यागे[2] । रहयति । अररहत् । रहति इति शपि । गतौ तु रंहति ॥ ३१६ ॥

२४९. स्तनगदी देवशब्दे । 'द्विवचननिर्देशो वैचित्र्यार्थे' इति मैत्रेयः । 'अज्-दन्त्यपराः' इति षोपदेशलक्षणं स्मिङ्स्विदाद्येकाच्साहचर्यादनेकाक्षु न प्रवर्तते । स्तनयति । अतस्तनत् । तिस्तनयिषति इत्यत्राषोपदेशत्वात् षत्वं न भवति । अभि-निस्तनो मेघस्येत्यत्र अभिनिष्टानवन्नायं शब्दविशेषस्य संज्ञेति 'अभिनिसस्तन' इति षत्वं न भवति । गदयति । स्तनति, गदति इति शपि । स्तनयित्नुः—'स्तनिहृषि-पुषिगदिमदिभ्योर्णेरित्नुच्' इति इत्नुच्, 'अयामन्त' इत्ययादेशः ॥ ३१७–३१८ ॥

२५०. पत गतौ वा । 'वाशब्दं केचिन्न पठन्ति' इति पुरुषकारे । अयं विक-ल्पेन णिचमुत्पादयति । पतयति । पतति इति । तत्र भूवादिपाठादेव पतति इति सिद्धे णिज्विकल्पस्य प्रयोजनमस्यानेकाच्त्वात् पताञ्चकारेत्याम्सिद्धिः । तथा अपतीत् इत्यस्य लृदित्त्वाभावेनाङभावात्सिद्धिरिति पुरुषकारादौ । अन्ये वाशब्दमेवं व्याचक्षन्ते—न्यायतस्त्वनन्तरत्वाददन्तत्वस्यैव विकल्पनं युक्तम्, न तु परमप्रकृ-तस्य णिचः । तेन पतयति पातयति इत्युदाहर्तव्यम् । उक्तञ्च स्वेनैव पुरुषकार-

---

१. 'असम्यगाभाषणे' इति क्षीरस्वामी ।

२. 'रहि गतौ' इति क्षीरस्वामिसम्मतमेकमधिकं सूत्रम् ।

कृता 'भू प्राप्तौ वात्मनेपदी' इत्यत्र, 'आकुस्मादात्मनेपदीतिप्रकरणे भू प्राप्तौ वेति वक्तव्ये आत्मनेपदीतिवचनं केवलाण्णिजन्तादस्यात्मनेपदं यथा स्यात्' इति मैत्रेय-ग्रन्थदूषणावसरे "यदि खल्वाकुस्मीयकाण्डे भू प्राप्तौ वेत्युच्यमाने तदा 'अनन्तरस्य विधिः' इति न्यायेन अनन्तरस्यात्मनेपदित्वस्यैव विकल्पः प्रतीयेत न पुनर्महा-प्रकृतस्य चुरादिणिचः'' इति । अत्र स्वामी—संहितया धातुपाठाद्वाशब्दमुत्तर-धातुशेषं वष्टि, तत् 'निपातस्य वाशब्दस्य चशब्दादिवत् पूर्वप्रयोगो न' इति हेलाराजीयादौ समर्थनादयुक्तम् । पतयालुः—'स्पृहिगृहिपति' इत्यादिनाऽऽलुच् ।।३१९।।

२५१. पष अनुपसर्गात्[1] । गतावित्यत्रापि सम्बध्यते । पषयति । सोपसर्ग-त्वात् आपाषयति इति । अत्र केचित् तालव्यान्तं पठन्तो वाग्रहणं चानुवर्त्यादन्तत्वं विकल्पयन्ति स्वाम्यनुसारिणः । अत्रादन्तत्वविकल्पनमनन्तरत्वाद्युक्तम् । तालव्या-न्तत्वं तु पुरुषकारोऽपि न सहते, यदाह—'पाषाणादिस्तु पष अनुपसर्गादित्यस्य भविष्यति' इति ।। ३२० ।।

२५२. स्वर आक्षेपे । स्वरयति । स्वरति इति शब्दोपतापयोश्शपि ।। ३२१ ।।

२५३. रच प्रतियत्ने । रचयति ।। ३२२ ।।

२५४. कल गतौ संख्याने च । कलयति । कालयति इति क्षेपे गतम् । कलति इति शपि ।। ३२३ ।।

२५५. चह परिकल्कने[2] । परिकल्कनं दम्भः । चहयति । मित्प्रकरणे इह च पाठस्य तत्रैव प्रयोजनमुक्तम् । चहति इति शपि ।। ३२४ ।।

२५६. मह पूजायाम् । महयति । महति इति शपि महि वृद्धावित्यस्य । मंहते इति क्षीरस्वामी, तन्मतेन महि भाषितार्थोऽत्रैव दण्डके गतः ।। ३२५ ।।

२५७. सार कृप श्रथ दौर्बल्ये । सारयति । कृपयति । कल्पयति इति कृपेस्ता-दार्थ्ये इत्यस्य गतम् । कल्पते इति कृपेः शपि । श्रथयति । श्राथयति इति प्रयत्ने गतः । मोक्षणे श्राथयति, श्रथति इत्याधृषीयः ।। ३२६–३२८ ।।

२५८. स्पृह ईप्सायाम् । पुष्पेभ्यः स्पृहयति—'स्पृहेरीप्सितः' इति ईप्सितस्य संप्रदानत्वम् । स्पृहयालुः—'स्पृहिगृहि' इत्यादिना आलुच् ।। ३२९ ।।

२५९. भाम क्रोधे । भामयति । भामते इति शपि ।। ३३० ।।

२६०. सूच पैशुन्ये । सूचयति । अजन्तलक्षणस्यैकाज्विषयत्वादषोपदेशत्वात् सोसूच्यते इत्यादौ न षत्वम् । 'सूचिसूत्रि' इत्यादिना यङ् ।। ३३१ ।।

२६१. खेट भक्षणे । 'तृतीयान्तः' इति दुर्गः । खेटयति । आखेटना । 'खोट' इत्येके । खोटयति इति मैत्रेयः । खेटति इत्युत्त्रासे शपि ।। ३३२ ।।

२६२. क्षोट क्षेपे । क्षोटयति ।। ३३३ ।।

२६३. गोम उपलेपने । गोमयति ।। ३३४ ।।

---

1. 'अनुपसर्गे' इति मैत्रेयः । 2. 'कल्कने' इति क्षीरस्वामी ।

२६४. कुमार क्रीडायाम् । कुमारयति ।। ३३५ ।।

२६५. शील उपधारणे । उपधारणमभ्यासः । शीलयति । शीलितः—'मति-बुद्धि' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् वर्तमाने क्तः । समाधौ शीलति इति शपि ।। ३३६ ।।

२६६. साम सान्त्वप्रयोगे[1] । सामयति । 'साम सान्त्वने' इति पठितस्येह पाठः अग्लोपित्वात् अससामत् इति सिद्धये ।। ३३७ ।।

२६७. वेल कालोपदेशे[2] । वेलयति । वेला । 'काल इत्यपि धातुः' इति मैत्रेयः । कालयति । वेलयति इति शपि चलने ।। ३३८ ।।

२६८. पल्पूल[3] लवनपवनयोः । पल्पूलयति । 'पंल्पूलनं शोधनद्रव्यम्' इति 'नास्य पल्पूलनेन वासः पल्पूलयेयुः' इत्यत्र भाष्यम्[4] ।। ३३९ ।।

२६९. वात सुखसेवनयोः । 'गतिसुखसेवनेषु' इत्येके[5] । वातयति ।। ३४० ।।

२७०. गवेष मार्गणे । गवेषयति ।। ३४१ ।।

२७१. वास उपसेवायाम् । वासयति । वासना-युच् । वसेरपिस्नेहनादौ वासयतीति गतम् । वसति इति वस निवासे इत्यस्य शपि । 'अयं कथादावपि' इति दैवपुरुषकारयोः । वस्ते इत्याच्छादने शब्लुकि । वस्यति इति स्तम्भने श्यनि ।। ३४२ ।।

२७२. निवास आच्छादने । निवासयति । अत्र केचित्—'पितेव पुत्रं दसये वचोभिः' इत्यत्र चुरे 'पितेव पुत्रं दसये निरवासयामि स्तुतिभिः' इति व्याख्यानात् 'दस निरवसाने' इति पठन्ति । भट्टभास्करेण त्वाकुस्मीयेषु दस दसि दंसनदर्शनयोरिति पठित्वा धातूनामनेकार्थत्वेन 'वचोभिः स्तुतिभिः संगृह्णामि, यथा पिता दुश्शीलं पुत्रं स्तुतिपदैः' इति व्याख्यातम् । तस्मात् चुरेऽपि आकुस्मीय एव निरवसानार्थः कथितः' इति वक्तुं शक्यत्वान्नैतावता कथादौ धात्वन्तरत्वं शक्यते कल्पयितुम् ।। ३४३ ।।

२७३. भाज पृथक्कर्मणि । विभाजयति ।। ३४४ ।।

२७४. समाज प्रीतिदर्शनयोः[6] । प्रीतिसेवनयोरित्यन्ये । समाजयति ।।३४५।।

२७५. ऊन परिहाणे । ऊनयति । मा भवानुनिनत् । माषेणोनः माषोनः—'पूर्वसदृशसमोनार्थ' इति तृतीयासमासः ।। ३४६ ।।

२७६. ध्वन शब्दे । ध्वनयति । ध्वनति इति शपि ।। ३४७ ।।

२७७. कूट परितापे[7] । परिदाहे इत्यन्ये[8] । कूटयति । कुटयतीत्यवसादे आकुस्मीयः । अर्थभेदाः पाठभेदाश्च तत्रैव दर्शिताः ।। ३४८ ।।

---

१. 'सान्त्वने' इति क्षीरस्वामी । २. 'कालोपयोगे' इति क. पुस्तके । ३. 'पल्यूल' इति क. पुस्तके । ४. तैत्तिरीयसंहिताभाष्यमित्यर्थः । ५. क्षीरस्वामिप्रभृतयः । ६. 'प्रीतिदर्शने' इति क्षीरस्वामी । ७. 'परिहासे' ख. पुस्तके । 'दाहे' इति क्षीरस्वामी । ८. मैत्रेयादयः ।

२७८. सङ्केत ग्राम कुण गुण चामन्त्रणे। 'चकारेण कुट इत्यपेक्षते' इति मैत्रेयः। कूटयति। संकेतयति। ग्रामयति। कुणयति। कुणति इति शब्दोपकरणयोश्शे। गुणयति। अपरे[1] तु पठन्ति—केत स्रावणे निमन्त्रणे च। केतयति। निकेतयति। कुण गुण चामन्त्रणे। चकारात्केत चेति, कूण संकोचने इति चात्र पठन्ति ॥३५२॥

२७९. स्तेन चौर्ये। अनेकाच्त्वादषोपदेशत्वम्। स्तेनयति। अतिस्तेनत्। स्तेनः। स्तेयम्—'स्तेनाद्यन्नलोपश्च' इति भावकर्मणोर्यन्नलोपौ। स्तैन्यम्—'स्तेनात्' इति योगविभागात् ष्यञ् ॥ ३५३ ॥

२८०. आ गर्वादात्मनेपदिनः। इतः परे गर्व माने इति वक्ष्यमाणपर्यन्ता आत्मनेपदिनः।

२८१. पद गतौ। पदयते। अपपदत। पद्यत इति श्यनि ॥ ३५४ ॥

२८२. गृह ग्रहणे। गृहयते। गृहयालुः—'स्पृहिगृहि' इत्यादिना आलुच्। गर्हते इति गृहेर्गर्हेश्च शपि। तत्रान्त्यः कुत्सार्थः। गृह्णाति, गृह्णीते इत्युपादानार्थस्य प्रसारिणः क्र्यादेः। गर्हयति, गर्हति इति गर्हेराधृषीयस्य निन्दार्थस्य ॥ ३५५ ॥

२८३. मृग अन्वेषणे। मृगयते। 'मृग्यति इति कण्ड्वादिपाठाद्' इति मैत्रेयः। मार्गयति, मार्गति इति मार्गेराधृषीयस्य ॥ ३५६ ॥

२८४. कुह विस्मापने। कुहयते। कुहना। कुहूः। बाहुलकादूकारप्रत्यये कुहूशब्दमाह मैत्रेयः ॥ ३५७ ॥

२८५. शूर वीर विक्रान्तौ। शूरयते। वीरयते। शूर्यते इति हिंसास्तम्भनयोः श्यनि ॥ ३५८–३५९ ॥

२८६. स्थूल परिबृंहणे। स्थूलयते। अतुस्थूलत। स्थूलः। स्थविष्ठः। स्थवीयान्—'स्थूलदूर' इत्यादिना यणादि लुप्यते, पूर्वस्य च गुणः। पृथ्वादिष्वपाठादिमनिजस्य नास्तीति नोदाहृतम्। स्थावयति—'णाविष्ठवत्' इति यणादिलोपो गुणश्च ॥ ३६० ॥

२८७. अर्थ उपयाच्ञायाम्। अर्थयते। आर्तिथत। अर्तिथयिषते। 'प्रार्थयन्ति शयनोत्थितं प्रियाः' इत्यादि कृदन्तात्तत्करोतीति णिचि नेयम् ॥ ३६१ ॥

२८८. सत्र सन्तानक्रियायाम्। सत्रयते ॥ ३६२ ॥

२८९. गर्व माने। गर्वयते। गर्वति इति शपि ॥ ३६३ ॥

इति आगर्वीयाः।

२९०. सूत्र वेष्टने। अन्ये[2] तु 'विमोचने' इति पठन्तः 'विमोचनं मोचनाभावः' इति। ग्रन्थनमित्यपरे। सूत्रयति। सोसूत्र्यते—'सूचिसूत्रि' इति यङ् ॥ ३६४ ॥

२९१. मूत्र प्रस्रवणे। मूत्रयति। मोमूत्र्यते—पूर्ववद्यङ् ॥ ३६५ ॥

---

१. मैत्रेयक्षीरस्वामिप्रभृतयः। २. क्षीरस्वामिप्रभृतयः।

२९२. रूक्ष पारुष्ये । रूक्षयति । रुक्षति इति शपि ।। ३६६ ।।

२९३. पार तीर कर्मसमाप्तौ । पारयति । तीरयति ।। ३६७–३६८ ।।

२९४. पुट संसर्गे[1] । पुटयति । पोटयति इति भाषार्थो दण्डके गतः । पुटति इति संश्लेषे तुदादिः ।। ३६९ ।।

२९५. कत्र[2] शैथिल्ये । कत्रयति । कत्रिः–इप्रत्ययः । कात्रेयकम्—'कत्र्यादिभ्यो ढकञ्' इति शैषिको ढकञ्। कुत्सितास्त्रयः इति वा कत्त्रिशब्दव्युत्पत्तिः । 'कद्भावे त्रावुपसङ्ख्यानम्' इति कुशब्दस्य कद्भावः । अत्र दुर्गः— कर्त इत्यपि पठति । कर्त्तयति ।। ३७० ।।

२९६. प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च । प्रातिपदिकाद्धात्वर्थे णिच्, तस्मिंश्चेष्ठनीव कार्यं भवति । इदं च 'तत्करोति तदाचष्टे' 'तेनातिक्रामति' इत्यादीनां वक्ष्यमाणत्वात् तद्विषयम् । पटुमाचष्टे पटयति । लघुमाचष्टे लघयति । अपीपटत्, अलीलघत् । अत्र परत्वाद् वृद्धौ 'णाविष्ठवत्' इति टिलोप इत्यग्लोप्यङ्गं नेति 'सन्वत्' इतीत्वम् 'दीर्घो लघोः' इति दीर्घश्च भवति । अत्र केचित् 'नाग्लोपि' इत्यत्रागितिप्रत्याहारग्रहणसार्थ्याद् वृद्धेः प्रागेव टिलोपः इत्यग्लोप्यङ्गमितीत्वदीर्घत्वे नेच्छन्ति—अपपटत्, अललघत् इति, तदसत्; 'हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थम्' इति वार्त्तिकविरोधात् । यदि हि वृद्धेः प्राक् टिलोपः स्याद् अग्लोप्येवाङ्गमिति किमदन्तत्वनिपातनक्लेशेन ! प्रत्याहारग्रहणस्य तु प्रयोजनम् स्वामिनमाख्यत् असस्वामत्, गोमिनमाख्यत् अजुगोमत्, वीरुधमाख्यत् अविवीरुत्, प्रावृषमाख्यत् अपप्रावत्, यादृशमाख्यत् अययादत् इति स्यात् । येषामेषूदाहरणेषु 'अनभिधानाण्णिज् न' इति मतम्, तेषामपि स्रग्विणमाख्यद् इत्यादौ 'विन्मतोर्लुक्' इतीष्ठवद्भावेन विनो लुकि ह्रस्वाद्यभावः प्रयोजनमेव असस्रजदिति । अत्र बहुलग्रहणात् स्रजयति इत्यत्र वृद्धिर्न भवति । तथा कुमारीमाचष्टे कुमारयति इत्यत्राप्रातिपदिकत्वेऽपि णिजिति केचित् । अन्ये तु—'प्रकृत्यैकाच्' इति प्रकृतिभावादेव स्रजयति इत्यत्र वृद्धिर्न भविष्यति । तथा 'यथाकथञ्चित्प्रातिपदिकग्रहणे लिङ्गविशिष्टपरिभाषाया 'ङ्याप्प्रातिपदिकात्' इति सूत्रे भाष्ये स्थापनात् 'कुमारयति इत्यादौ णिजपि सिद्धः' इति बहुलग्रहणं विकल्पमात्रफलमाहुः ।

२९७. तत्करोति, तदाचष्टे । तदिति द्वितीयान्तोपलक्षणम् । 'तत्करोत्याचष्टे' इत्यत्र धात्वर्थमात्रं णिजर्थो न कर्तापि । तथा चैवोदाहृतम् ।

२९८. तेनातिक्रामति । अत्रापि तेनेति तृतीयान्तोपलक्षणम् । अश्वेनातिक्रामति अश्वयति । हस्तिनातिक्रामति हस्तयति ।

---

१. सूत्रस्यास्य स्थाने क्षीरस्वामी 'श्लेष्क दर्शने' इति सूत्रं पठति ।
२. 'कर्त' क्षीरस्वामी ।

२९९. धातुरूपञ्च। णिच्प्रकृतिर्धातुरूपं प्रतिपद्यते। अनेन 'आख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्' इत्येतत्सूच्यते। कंसवधमाचष्टे कंसं घातयति इत्युदाहरणम्।

३००. कर्तृकरणाद्धात्वर्थे[1]। अत्र कर्तृग्रहणं करणस्य विशेषणम्। कर्तुः करणाद्धात्वर्थे णिजिति सूत्रार्थः। करिभिरवबध्नाति अवकरयति। असिना हन्ति असयति। परशुना छिनत्ति परशयति। दात्रेण लुनाति दात्रयति। अत्र कर्त्ता करणस्य विशेषणं करणशब्दवाच्यत्वेन लोकप्रसिद्धानां चक्षुरादीन्द्रियाणां परिग्रहो मा भूद् इति।

३०१. वष्क दर्शने[2]। वष्कयति॥ ३७१॥

३०२. चित्र चित्रकरणे[3]। चित्रयति। 'चित्रकरणमालेख्यकरणम्' इति मैत्रेयः। 'चित्र आलेख्यकरणे' इत्येव दुर्गः॥ ३७२॥

३०३. कदाचिद्दर्शने। चित्र इत्ययं कदाचिद्दर्शने अद्भुतदर्शने णिचमुत्पादयति। चित्रयति। चित्रीयते इति चित्रप्रातिपदिकादाश्चर्यवृत्तेः 'नमोवरिवश्चित्रङः क्यच्' इति क्यचि। तत्र हि चित्रङ् आश्चर्ये इत्युच्यते, प्रातिपदिकस्य ङित्त्वम् 'अवयवे कृतं लिङ्गं समुदायस्य विशेषकम्' इति न्यायात् प्रत्ययान्तात्तङर्थम्॥

३०४. अंस समाघाते। अंसयति। अंसः॥ ३७३॥

३०५. वट विभाजने। वटयति॥ ३७४॥

३०६. लज[4] प्रकाशे[4]। लजयति। अत्र मैत्रेयः—'वटेः पुनः पाठोऽर्थभेदात्'। वटि लजि इत्येके[5]। वण्टयति। लञ्जयति। 'अदन्तेषु पाठबलाददन्तत्वे वृद्धिः' इत्यपरे। वण्टापयति। लञ्जापयति। तथा च शाकटायनसूत्रम्—'कथादिपातिस्फायो णौ पुग्लुग्वत्वम्' इति[6]। अस्यार्थः—कथादीनां पातेश्च णौ पुग् लुग् इत्येतावागमौ स्फायोऽन्त्यस्य वत्वं क्रमेणेति। एवञ्च शाकटायनमतेन कथादीनामागमे पुकि वृद्धौ कथापयति इत्युदाहार्यम्॥ ३७५॥

३०७. मिश्र सम्पर्के[7]। मिश्रयति। गुडमिश्रः—'पूर्वसदृश' इत्यादिना तृतीयान्तस्य मिश्रशब्देन तत्पुरुषः॥ ३७६॥

३०८. संग्राम युद्धे। अयमनुदात्तेत्। तथा च 'भृशादिभ्यः' इत्यत्र कैयटे—'संग्रामयतिरनुदात्तेद्बोद्धव्यः' इति। पदमञ्जर्यां च 'अनुदात्तेदयं संग्रामयतिरिष्यते' इति। तथा च तत्र भाष्यमपि—असंग्रामयत शूर इति। संग्रामशब्दात्तत्करोतीति

---

१. 'कर्तृकरणार्थे' इति क्षीरस्वामी। २. सूत्रमिदं मैत्रेयः क्षीरस्वामी च न पठतः। ३. 'चैत्रस्य करणे' इति क्षीरस्वामी। ४–४. 'जल०' इति ख. पुस्तके। 'लज प्राणने' इति मैत्रेयः। ५. मैत्रेयक्षीरस्वामिप्रभृतयः। ६. 'कथादिपातिस्फायोऽग्लग्वम्' (४।१।१९७) इति शाकटायनसूत्रम्। ७. 'सम्पर्चने' इति क्षीरस्वामी।

णिचापि सिद्धाविह संग्रामस्य पाठः सोपसर्गात्सङ्घातात्प्रत्यार्थः, तेन असंग्रामयत इत्युपसर्गात्पूर्वमड् भवति। तथा संग्रामयित्वा इत्यत्राधीत्येत्यादिवल्ल्यब्न भवति। सिसंग्रामयिषते इत्यत्र समो द्वित्वं भवति। नन्वयमनुदात्तेत्त्वार्थमवश्यं पठनीयः इति कथं सङ्घातादुत्पत्त्यर्थः? एवमपि 'ग्राम युद्धे' इत्येतावति पठ्यमानेऽप्यर्थ-स्वाभाव्यादिङ्कोरधिवत्संपूर्वत्वे लब्धे सङ्घातपाठस्योपसर्गादुत्पत्त्यर्थं एव। अत एव सङ्घातादुत्पत्तिवचनादन्यत्र धातूपसर्गसमुदायात्प्रत्यये विधित्सिते उपसर्गाः पृथक् क्रियन्ते इति ज्ञाप्यते। तेन परिवृढय्येत्यत्र ल्यबादि भवति[1] ॥ ३७७ ॥

३०९. स्तोम श्लाघायाम्। स्तोमयति। स्तोमः। अग्निष्टोमः—'अग्नेः स्तुत-स्तोम' इति षत्वम् ॥ ३७८ ॥

३१०. छिद्र कर्णभेदने[2]। करणभेदने इति गुप्तः। मैत्रेयस्तु छिद्रयति कर्ण-यति इति कर्णमपि पृथग्धातुमुक्त्वा 'कर्णेन भाषयति कर्णयति इति व्याचक्षते' इत्याह ॥ ३७९ ॥

३११. अन्ध दृष्ट्युपघाते। उपसंहारे इत्येके[3]। अन्धयति ॥ ३८० ॥

३१२. दण्ड दण्डनिपातने। दण्डयति। अयं द्विकर्मक इत्युक्तं नाथतौ। तत्र कर्मणि लादयो नाथत्यादौ प्रपञ्चिताः, तद्वदिहापि नेयाः ॥ ३८१ ॥

३१३. अङ्क पदे लक्षणे च[4]। अङ्कयति अङ्कते इति शपि। तत्रैव कुटिलायां गतौ अकति इति ॥ ३८२ ॥

३१४. अङ्ग च। अङ्गयति। अङ्गति इति गतौ शपि ॥ ३८३ ॥

३१५. सुख दुःख तत्क्रियायाम्। तच्छब्देन सुखदुःखे प्रातिपदिकार्थौ निर्दिश्येते। "'प्रातिपदिकाद्धात्वर्थः' इति सिद्धे इहानयोः पाठस्सोपसर्गात्प्रत्ययार्थः" इति मैत्रेयः। सुखयति। दुःखयति। 'सुखादिभ्यः कर्तृवेदनायाम्' इति क्यङि 'अकृत्सा-र्वधातुकयोः' इति दीर्घे सुखायते, दुःखायते। सुखादिभ्यो वेदनायां क्यङ् भवति, तानि च सुखादीनि संनिधानाद्वेदनायां कर्तुस्सम्बन्धीनि चेदिति सूत्रार्थः। 'कर्तृ' इत्यविभक्तिको निर्देशः, तेन सुखं वेदयते प्रसाधको देवदत्तस्य इत्यत्र क्यङ् न भवति। सुख्यति, दुःख्यति इति कण्ड्वादियगन्तस्य ॥ ३८४–१८५ ॥

३१६. रस आस्वादनस्नेहनयोः। रसयति। रसति इति शपि ॥ ३८६ ॥

३१७. व्यय वित्तसमुत्सर्गे[5]। व्यययति। व्ययते इति गतौ शपि ॥ ३८७ ॥

---

१. इतोऽग्रे क. पुस्तके 'अस्यानुदात्तेत्वमपाणिनीयमिति पाठस्य तदर्थतया न ज्ञापकत्वमङ्गः' इत्यधिकः पाठो दृश्यते। २. '०भेदे' इति क्षीरस्वामी। ३. क्षीरस्वामि-प्रभृतयः। ४. 'अकि लक्षणे' इति क्षीरस्वामिसम्मतं सूत्रम्। ५. 'व्यय गतौ, वित्त समुत्सर्गे' इति क्षीरस्वामी।

३१८. रूप रूपक्रियायाम् । 'रूपस्य दर्शनं करणं वा रूपक्रिया' इति स्वामी । रूपयति । रूपं निरूपयतीत्यनेकार्थत्वाद्विचारणे ॥ ३८८ ॥

३१९. छेद द्वैधीकरणे । छेदयति । छिनत्ति इति छिदेः श्नमि । [1]क्वचिदिहापि छद अपवारणे इति पठ्यते ॥ ३८९ ॥

३२०. लाभ प्रेरणे । लाभयति । प्राप्त्यर्थे लभते इति शपि ॥ ३९० ॥

३२१. व्रण गात्रविचूर्णने । व्रणयति । व्रणति इति दीप्त्यर्थे शपि ॥ ३९१ ॥

३२२. वर्ण वर्णक्रियाविस्तारगुणवचनेषु। वर्णक्रिया वर्णकरणं वर्णनं वा । सुवर्णं वर्णयति । कथां वर्णयति, विस्तृणातीत्यर्थः । राजानं वर्णयति, स्तौतीत्यर्थः । वर्णं गृह्णाति वर्णयति—'सत्यापपाश' इत्यादिना णिच् ॥ ३९२ ॥

३२३. बहुलमेतन्निदर्शनम् । क्वचित्तु 'निदर्शितम्' इति पठ्यते । तत्रापि भावे निष्ठेति निदर्शनमित्येवार्थः । चुरादावदन्तधातुनिदर्शनं बहुलं वेदितव्यम् । अतोऽनुक्ता अपीह धातवो वेदितव्याः ॥

३२४. पर्ण हरितभावे[2] । पर्णयति ॥ ३९३ ॥

३२५. विष्क दर्शने । विष्कयति ॥ ३९४ ॥

३२६. क्षप प्रेरणे । क्षपयति ॥ ३९५ ॥

३२७. वस निवासे । वसयति ॥ ३९६ ॥

३२८. तुत्थ आवरणे[2] । तुत्थयति । एवं गन्धयति, आन्दोलयति, ओजयति, वर्णयति, स्फुटयति, स्फुटा, स्फुटितः, अवधीरयति इत्यादयो यथाभिधानमिति मैत्रेयादयः । अन्ये तु—'भूवादिष्वेतदन्तेषु दशगणीषु धातूनां पाठो निदर्शनाय, तेन स्तम्भुप्रभृतयः सौत्राः, चुलुम्पादयो वाक्यकारीयाः[3], प्रयोगसिद्धा विक्लवत्यादयश्च[1] संगृह्यन्त इति—

मिलन्त्याशासु जीमूता विक्लवन्ते दिवि ग्रहाः ।
क्षपन्ति विद्युतः प्रावृट् क्षीयन्ते कामिविग्रहाः[4] ॥

इत्यादयः प्रयोगा उपपद्यन्ते' इत्याहुः ॥ ३९७ ॥

३२९. णिङ्ङ्गान्निरसने।अङ्गवाचिनः प्रातिपदिकान्निरसने णिङ्भवति। ङकार आत्मनेपदार्थः । हस्तौ निरस्यति हस्तयते । पादौ निरस्यति पादयते ।

३३०. श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च । श्वेताश्वादीनां चतुर्णां यथासंख्यमश्वतरेतक इत्येते लुप्यन्ते । णिङ् च धात्वर्थे । 'अबाधापि णिचो

---

१. क्षीरतङ्गिण्यादिषु । २–२ः सूत्रपञ्चकमिदं क्षीरस्वामी न पठति । ३. वार्त्तिकेषु पठिता इत्यर्थः । तु०–'मिलिविक्लविक्षपिप्रभृतीनां धातुत्वम्'–काव्याल० सू० ५।२।२ । ४. श्रीभोजः ।

बाहुलकात्' इति मैत्रेयादयः। श्वेताश्वमाचष्टे तेनातिक्रामति वा श्वेतयते। एवम् अश्वयते, गालोडयते, आह्वरयते इति। अत्र स्वामी–'पारायणिकास्त्वर्थवद् णिचमनुवर्णयन्ति' इति। एवं काश्यपोऽपि व्याचक्षाणः श्वेतयति इत्यादि परस्मैपदमुदाजहार।

३३१. पुच्छादिषु धात्वर्थ इत्येव सिद्धम्। अत्र मैत्रेयः–"पुच्छादिषु प्रातिपदिकेभ्यो धात्वर्थ इत्येव सिद्धम्। आत्मनेपदं णिजन्ताद्बहुलवचनाद्विज्ञेयमित्येवं 'पुच्छभाण्डचीवराण्णिङ्' इति न वक्तव्यम्" इति। अन्ये तु—पुच्छादीनां 'पुच्छभाण्ड' इत्यनेन णिङ उक्तत्वादिह णिङ् नास्तीति व्याचक्षते। पुच्छमुदस्यति उत्पुच्छयते। भाण्डानि समाचिनोति सम्भाण्डयते। चीवराण्यर्जयति परिधत्ते वा संचीवरयते। सिद्धशब्दो मङ्गलार्थः।

इति श्रीपूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसंगममहाराजमहामन्त्रिणा
मायणसुतेन माधवसहोदरेण सायणाचार्येण विरचितायां
माधवीयायां धातुवृत्तौ चुरादयः सम्पूर्णाः॥



❀ सम्पूर्णा चेयं माधवीया धातुवृत्तिः ❀

❀ शुभं भवतु ❀

॥ तस्मै श्रीगुरवे नमः ॥

# माधवीया नामधातुवृत्तिः

यस्या रूपप्रहाणेन न ख्यातुमपि किञ्चन ।
शक्यते वस्तु लोकेषु जयत्येषा सरस्वती ॥ १ ॥
धातुपाठे निविष्टानां धातूनां यः पुरा व्यधात् ।
विवृत्तिं माधवीयाख्यां माध्यन्नहृदयङ्गमाम् ॥ २ ॥
तेन मायणपुत्रेण व्याख्या कापि विरच्यते ।
धातूनां प्रत्ययान्तानां गणपाठजुषामपि ॥ ३ ॥
तत्र प्रतिपदं शिष्टा गणमात्रजुषस्त्विमे ।
गणास्तत्रापि बहवः किं च सूत्राण्यधीयत ॥
आचार्येण पुरा प्रोक्तास्तानादौ विवृणोम्यहम् ॥ ४ ॥
एतावदेव सर्वस्मादर्थये सुमनोजनात् ।
[1]नामास्तु भवतां सार्थमन्यथा तु न मे क्षतिः ॥ ५ ॥

कण्ड्वादिभ्यो यक् ( ३।१।२७ ) एभ्यो यक् स्वार्थे। एते च धातवः प्रातिपदिकानि च। तत्र धातुत्वं यको धातुविहितत्वेन तन्निमित्तगुणनिषेधार्थेन कित्त्वेनावसीयते। प्रातिपदिकत्वं तु कण्ड्वादीनां केषाञ्चिद्दीर्घान्तपाठात्। कण्डूयति इत्यादिरूपं तु ह्रस्वान्तादपि यकि मन्तूयति इत्यादिवत् 'अकृत्सार्वधातुकयोः' इति दीर्घेण भविष्यति। तत्र धात्वधिकारात् धातुभ्यो यक् प्रत्ययः।

नन्वेषां प्रातिपदिकत्वमेवास्तु, मास्तु दीर्घपाठः प्रत्ययस्य कित्त्वं च। न च 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घविधौ अङ्गं धातुराश्रीयते, किं त्वङ्गमात्रमेव। कण्डूरिति च कण्डूयशब्दात्सम्पदादित्वाद्भावे क्वावल्लोपे वलिलोपेन यलोपे च सिद्धम्। यलोपेऽल्लोपस्य स्थानिवत्त्वम् 'न पदान्त' इति निषिद्धम्। वलिलोपश्च 'लोपो व्योः' इति विधेयस्य पश्चान्निर्दृश्यस्य पूर्वनिर्देशादपृक्तलोपात्पूर्वं भवति। यद्येवम्, कण्डूशब्दस्य प्रत्ययलक्षणेन यगन्तत्वेन धातुत्वादल्लोपस्य पूर्वविधौ स्थानिवत्त्वादुवङ् स्यात्, नैतदस्ति; सति स्थानिवत्त्वेऽकारस्य तदन्त एव धातुर्नोकारान्तः। एवं तर्हि यण् प्राप्नोति, अस्तु; क्विबाश्रयः 'च्छ्वोः शूठ्' इत्यूठ् भविष्यति। न चोठ्यल्लोपस्य स्थानिवत्त्वात् ऊठोऽभावः; वकारस्यादिष्टादचः पूर्वत्वात्स्थानिवत्वा-

1. 'नामस्त भवता सार्थं०' इति क. पुस्तके।

भावात् । न च स्थानिवत्त्वेनानादिष्टादचः पूर्वत्वम्, तस्याशास्त्रीयकार्यत्वात् । अत एवादिष्टाचः पूर्वत्वादूठि पुनर्यणभावः । यद्वा— 'क्वौ लुप्तन्न स्थानिवत्' इति अल्लोपस्य स्थानिवत्त्वनिषेधाद्यण एवाप्रसङ्गः । यद्येवम् कण्ड्वौ इत्यादावुवङ् स्यात् । न च 'ओः सुपि' इति यणः प्रसङ्गः; संयोगपूर्वत्वात् । अस्त्वत्रोवङ्, क्विपः प्रत्ययलक्षणेनोठ् भविष्यति ? एवमपि पुनरुवङ् स्यात्, पुनरूठुवङौ पर्यायेणेति व्यवस्था न स्यात् । किंच कण्डूरित्यादिवन्मन्तूरिति च स्यात्, न च भवतीष्टं मन्तूरित्यादि । अथ 'धातोः कर्मणः' इत्यतो वाग्रहणमनुवर्त्तते, तेन यकः पक्षे अनुत्पादाद्यद्यपि सिद्धं मन्तुरिति, तथापि कण्डूरितिवद्यकि दीर्घे अल्लोपयलोपयोश्च दुर्वारं मन्तूरित्यादि । तथा यगभावपक्षे मन्तुरित्यादिवत्कण्डुरिति च स्यात् । सुखादिभ्यश्च यकि तस्याधातुविहितत्वेनानार्द्धधातुकत्वादतोलोपाभावात् 'अकृत्सार्वधातुकयोः' इति दीर्घे सुखायतीत्यादि स्यात्, न त्विष्टं सुख्यतीत्यादि । हलन्तपाठे तु न कदाचन सुखादेरकारान्तता सिध्यति, तस्माद्यथाभ्यासमेवास्तु । नन्वेवमपि प्रातिपदिकेभ्यः कण्डूः मन्तुरित्यादि यद्यपि सिध्यति, तथापि धातुभ्यो यकि कण्डूयशब्दात् क्वावल्लोपयलोपयोरजादौ सुप्युवङि कण्डूवावित्यादि प्राप्नोत्येव । तथा मन्तूयादेर्मन्तूरित्यादि, सुखादेश्च सुगित्यादि हलन्तम्, नैष दोषः; एतेभ्यः क्विबेव नोत्पद्यते । उक्तं च भाष्ये— 'नैतेभ्यः क्विब् दृश्यते' इति, न तर्हि इदानीमिदं भवति कण्डुवाविति ? भवति; यदा प्रातिपदिकात्क्विबन्तात् क्यजन्ताद्वा क्विप्यल्लोपयलोपयोः स्वाद्युत्पत्तिः । यद्येवं कण्ड्वादयः प्रातिपदिकान्येव सन्तु, यथाभ्यासं दीर्घान्ताश्च तथैव भवन्तु, ककारश्च प्रत्यये मासञ्जि, वाग्रहणं चानुवर्तिष्यते । तत्र कण्डूयति, मन्तूयति इत्यादयो यकि भवन्ति; कण्डूः, मन्तुरित्यादयश्च यगभावपक्षे प्रातिपदिकात् स्वाद्युत्पत्तौ यगन्तात्क्विबभावस्येदानीमेवोक्तत्वात्स एव धातुः प्रातिपदिकं च कण्डूशब्दो न भवति, तत्किंस्वाद्युत्पत्तावुवङ् प्रसज्येत ! तथा अत एव यगन्तात् क्विबभावान्मन्त्वादेर्दीर्घत्वं सुखादेर्हलन्तत्वं च न भवति, तत् किं कण्ड्वादीनां धातुत्वमाश्रित्य तेभ्यः प्रत्ययविधानेन ? सत्यम्; एतदेवं स्यात्, सुख्यतीति न सिध्येत्; प्रातिपदिकात् प्रत्यये तस्यानार्धधातुकत्वेनातोलोपाप्रसङ्गात् ।

अथोदाहरणानि—

१. कण्डूय गात्रविघर्षणे । कण्डूयति । कण्डूञो ञित्करणस्य 'अवयवेऽकृतार्थं लिङ्गं समुदायस्य विशेषकं भवति' इति समुदायस्य ञित्वादात्मनेपदं भवति । एवमनुबन्धान्तरस्यापि समुदायार्थत्वं द्रष्टव्यम् ॥ १ ॥

२. मन्तु अपराधे । रोष इत्यपरे । मन्तूयति । चन्द्रस्तु ञितं पठित्वा मन्तूयते इति चाह ॥ २ ॥

३. वल्गु पूजामाधुर्ययोः । वल्गूयति ॥ ३ ॥

४. असु मनस् एतावुपतापे । असूयति । मनस्यति । असूयुः—'मृगय्वादयश्च' इत्युप्रत्ययः । अत्र वर्धमानहरदत्तगणरत्नमहोदधिकारादयः असुशब्दम् असिति सान्तं पठित्वा 'असूञिति दीर्घान्तमेके पठन्ति' इत्याहुः । तन्मते अस्यति, असूयति, असूयते इति भवति ॥ ४–५ ॥

५. लेट् लोट् धौर्त्ये पूर्वभावे स्वप्ने च । लेट्यति । लेटिता । लोट्यति । लोटिता । अकारस्यातो लोपे यलोपः । अत्र देवः–अर्थनिर्देशार्थं पूर्वशब्दं प्रकृतिनिर्देशार्थं मत्वा 'पूर्व्यतीति तु यत्स्वप्ने तत्कण्ड्वादिषु दर्शनात्'[1] इत्याह । तदेतदमोघायां शाकटायनधातुवृत्तौ अर्थनिर्देशरहिते गणपाठे पूर्वशब्दस्य पाठाभावादयुक्तमिति पुरुषकार एव दूषितम् । अन्ये तु लेट्लोटौ दीप्त्यर्थावाहुः । अत्र 'लेला दीप्तौ' इत्येके पठन्ति, पठ्यते च 'वातो भूतो लेलायत्स', 'यदा वीतार्तिहस्ताय' इति ॥ ६–७ ॥

६. इरञ् ईर्ष्यायाम् । अत्र वर्धमानहरदत्तौ इरस् इरज् इरञ् ईर्ष्यायामिति त्रीन्पेठतुः । इरस्यति । इरज्यति । ईर्यति । अत्र 'हलि च' इति दीर्घः । 'इरज्यन्नग्ने प्रथयस्व जन्तुभिः' इत्यत्र भट्टभास्करादिभिः दीप्त्यर्थोऽयमभिहितः । तथा 'इरज्यन्ता वसव्यस्य भूरेः' इत्यत्रैश्वर्यार्थः ईर्यतिर्मार्गोपस्थानार्थोऽपि । उक्तं च 'चर्या त्वीर्या पथि स्थितिः' इति ॥ ८ ॥

७. इयस् ऐश्वर्ये । इयस्यति । 'अमुं दुर्गो न पठति' इति गणरत्नमहोदधौ ॥९॥

८. उषस् प्रभातभावे । उषस्यति रात्रिः ॥ १० ॥

९. वेद धौर्त्ये स्वप्ने प्रभाते च । वेद्यति ॥ ११ ॥

१०. मेधा आशुग्रहणे । मेधायति ॥ १२ ॥

११. कुषुभ क्षेपे । कुषुभ्यति । गणरत्नमहोदधौ तु 'आत्मनोऽन्यकर्तृकनिरसनसमर्थः' इत्युक्तम् ॥ १३ ॥

१२. मगध परिवेष्टने । नीचदास्ये इत्येके । मगध्यति ॥ १४ ॥

१३. तन्तस् पम्पस् दुःखे । तन्तस्यति । पम्पस्यति ॥ १५–१६ ॥

१४. सुख दुःख तत्क्रियायाम् । तच्छब्देन सुखदुःखार्थौ परामृश्येते । तेन सुखदुःखरूपायां क्रियायामित्यर्थो भवति । सुख्यति । दुःख्यति । सुखमनुभवति, दुःखमनुभवतीत्यर्थः ॥ १७–१८ ॥

१५. सपर पूजायाम् । अकारान्तोऽयं महोदधौ । सपर्यति ॥ १९ ॥

१६. अरर क्रूरकर्मणि । अरा प्रतोदा । अरर्यति ॥ २० ॥

१७. भिषज् चिकित्सायाम् । भिषज्यति ॥ २१ ॥

१८. तिषज् उपसेवायाम् । तिषज्यति ॥ २२ ॥

१९. इषुध शरधारणे । इषुध्यति ॥ २३ ॥

---

१. दै० पृ० ९८ ।

२०. चरण गतौ । चरण्यति । 'वरण' इति भोजः । उक्तं च क्वचित् तथोदाहरणं काव्ये—'वरण्यन्चारणैर्वेलाम्' इति ॥ २४ ॥

२१. चुरण चौर्ये । चुरण्यति ॥ २५ ॥

२२. तुरण त्वरायाम् । तुरण्यति ॥ २६ ॥

२३. भुरण धारणपोषणयोः । प्रहरणधारणयोरित्यन्ये । भुरण्यति ॥ २७ ॥

२४. गद्गद वाक्स्खलने[1] । गद्गद्यति ॥ २८ ॥

२५. एला केला खेला विलासे । एलायति । केलायति । खेलायति । अत्रैलास्थाने इलेत्यपरे पठन्ति । इलायति ॥ २९–३१ ॥

२६. लेखा स्खलने च[2] । लेखायति । 'अकारान्तः' इत्यन्ये । तत्रातो लोपः—लेख्यति ॥ ३२ ॥

२७. लिट् अल्पार्थे कुत्सायां च । लिट्यति ॥ ३३ ॥

२८. लाट् जीवने । लाट्यति ॥ ३४ ॥

२९. हृणीङ् रोषणे लज्जायां च । ङकारस्तङर्थः । हृणीयते ॥ ३५ ॥

३०. महीङ् पूजायाम् । अत्र पूजा पूज्यमानकर्तृका, तेनायमकर्मकः । महीयते पूजामधिगच्छतीत्यर्थः ॥ ३६ ॥

३१. रेखा श्लाघासादनयोः । आसादनं प्राप्तिः प्रापणा वा । रेखायति । श्लाघामनुभवति, अनुभावयति वेत्यर्थः ॥ ३७ ॥

३२. द्रवस् परितापपरिचरणयोः । द्रवस्यति ॥ ३८ ॥

३३. तिरस् अन्तर्द्धौ । तिरस्यति ॥ ३९ ॥

३४. अगद नीरोगत्वे । अगद्यति । 'अमुं भोजः नेच्छति' इति गणरत्नमहोदधौ ॥ ४० ॥

३५. लेखा[3] । लेखायति । रेखायतिवदर्थः ॥ ४१ ॥

३६. उरस् बलार्थः । उरस्यति । बलवान्भवतीत्यर्थः ॥ ४२ ॥

३७. तरण गतौ । तरण्यति ॥ ४३ ॥

३८. पयस् प्रसृतौ । पयस्यति ॥ ४४ ॥

३९. सम्भूयस् प्रभूतभावे । सम्भूयस्यति । अत्र गणरत्नमहोदधौ 'अम्बर सम्बर इति वामनः' इति । अम्बर्यति, सम्बर्यति । अत्र गणरत्नमहोदधावेव लेट्लोटाविति पठित्वा मतान्तरेणादन्तत्वमुक्त्वा 'लेटायति, लोटायति, लेट्यति लोट्यति' इत्युक्तम् । अस्याकृतिगणत्वाद्धवलादिभ्यो रायति धवल्यति चोक्तम् । यदा कण्ड्वादिभ्यः सन्नुत्पद्यते तदा कण्ड्वादीनां तृतीयस्यैकाचो द्वे भवत इति कण्डूयियिषति इत्यादि भवति ॥ ४५ ॥

इति कण्ड्वादिः

---

१. 'वाक्चलने' इति ख. पुस्तके । २. 'खेला सस्वचलने च' इति ख. पुस्तके ।
३. क. पुस्तकेऽयं धातुर्नास्ति ।

## अथ सौत्रधातवः प्रक्रियन्ते–

१. 'ऋतेरीयङ्' (३।१।२९) अयं स्वार्थे। ऋतिर्घृणायाम्, सा चेह 'घृणा जुगुप्सा-कृपयोरित्युक्त्वापि ऋतीयाशब्दस्य निघण्टुषु निरूढा जुगुप्सैव' इति व्याख्यातारः। अत्रेयङ्प्रत्ययस्य क्त्वेनापि गुणाभावसिद्धौ ङित्करणमात्मनेपदार्थमपि। ऋतीयते। ऋतीयेते। ऋतीयाञ्चक्रे इत्यादि। ङिल्लकारेषु अजादित्वात् 'आटश्च' इति वृद्धौ आर्तीयत, आर्तिचिष्ट, आर्तीयिषत इति भवति। यदायमवर्णान्तादुपसर्गात्परो भवति तदा 'उपसर्गादृति धातौ' इति वृद्धौ प्रार्तीयते, उपार्त्तीयत इत्यादि भवति। अत्रोपसर्गग्रहणाद्धाताविति सिद्धे 'उपसर्गादृति' इत्येव वक्तव्ये पुनर्धातुग्रहणं योगविभागेनाधिकविधानार्थमिति 'ऋत्यकः' इति पाक्षिकः प्रकृतिभावोऽत्र बाध्यते, उपसर्गग्रहणं प्राद्युपलक्षणमित्येतत्तु यत्र 'उपसर्गादध्वनः' इत्यादौ उपसर्गत्वं न सम्भवति तत्रैवेतीह न भवतीति हरदत्तादयः। तेनागता ऋतीयका अमुं देशम् आर्तीयको देश इत्यादौ 'यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा' इत्याङा-दीनां गम्यादिक्रियापेक्षयोपसर्गत्वम्, न तु ऋतीयक्रियापेक्षयेति तां प्रत्युपसर्गत्वा-भावात् 'आद्गुणः' इति गुणः, 'ऋत्यकः' इति शाकलप्रकृतिभावश्च भवतः। यदा-यमीयङ् 'आयादय आर्धधातुके वा' इति वचनादार्धधातुके न भवति तदा आनर्त, अर्तित्ता, अर्तिष्यति, आर्तीत्, आर्तिष्यत्, अर्तित्वा, ऋतित्वा इत्यादि भवति। अत्र 'वश्चिलुञ्च्यृतश्च' इति सेटः क्त्वः कित्त्वविकल्पनात् पक्षे गुणः। 'आयादय आर्धधातुके वा' इत्यत्रार्धधातुकेत्यस्य विषयसप्तमीत्वादार्धधातुकेषु विषयभूतेषु आयादयो नोत्प-द्यन्त इत्यर्थः, न तु भूत्वा निवर्तन्त इति। अन्यथा ऋतीयशब्दाल्लिटि प्रत्ययान्त-त्वेनामि ईयप्रत्ययस्य निवृत्तौ ऋताञ्चकारेति स्यात्, आनर्तेति च न स्यात्। तथा अर्ति-तासि, अर्तिष्यति, ऋत्यात्, आर्तीदित्यादौ परस्मैपदं न स्यात्, तथा तास्यादेरार्ध-धातुकस्येयङो निवृत्तेर्निमित्तत्वात्तदपेक्षो गुणः 'न धातुलोप आर्धधातुके' इति निषे-धान्न स्यात्। अनेनाभिप्रायेण गुणाभावः उदाहृतः, प्रत्युत आर्तिष्ट, ऋतिषीष्टेत्यादि स्यात्। यदीयङन्तादुत्पन्नेषु तिङ्क्षु तदाश्रयेण पश्चादुत्पन्नेषु विकरणेषु आर्धधातुके-ष्वीयङोनिवृत्तिः क्रियते, तर्हीयङो ङित्त्वात्तदन्ताच्चोत्पद्यमानास्तिङ आत्मनेपदान्येव। तथा क्तिनि ऋतिरिति न स्यात्, अप्रत्ययादित्यकार ईयङो निवृत्तावृत्तेति च स्यात्, एवमादीनि दूषणानि। अत्र कचिद् वृत्तिकोशे ऋतेश्छङित्येव सिद्धे ऋतेरीयङ्वचनं ज्ञापकं धातुविहितानां प्रत्ययानामायनादयो न भवन्तीति। तेन शमेः खः शङ्खः, किमेष्ठः कण्ठः इति। अत्रेनकादेशौ न भवतः। ननु ऋतेश्छङित्युच्यमाने छङ आर्धधातुकत्वेन परत्वादिडागमे कृते छकारस्य प्रत्ययादित्वं विप्रतिपन्नमिति 'आयनेयी' इत्यादिना विधीयमानः कथमीयादेशः सिध्यति? नैष दोषः; यदायनादिषू-पदेशिवद्वचनस्य चोदितत्वादन्तरङ्गत्वादिटः पूर्वमीयादेशो भविष्यति। अत्र हरदत्तः–

'द्विवचनविभज्योपपदे' इत्यत्र तरप्छसुनाविति वक्तव्ये इयसुन्वचनादधातुविहितानामपि प्रत्ययानामायनादयो न स्युः। वचनसामर्थ्याच्चेदुभयेषामपीति ज्ञापकं भङ्क्त्वा कण्ठादौ बाहुलकादिकाद्यभावमाह ॥ १ ॥

२. 'स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च' (३।१।८२) एभ्यः कर्तृवाचिनि सार्वधातुके श्नुर्भवति, चकाराच्श्ना च। तत्र पञ्चमो धातुषु पठितो व्याख्यातश्च, प्रथमतृतीयौ स्तम्भार्थौ, द्वितीयो निष्कोषणार्थः, चतुर्थो धारणार्थः। उदित्त्वं क्त्वायामिड्विकल्पार्थम्। अत एव श्नाव्यतिरिक्तविषयाश्चैते भवन्ति। स्तभ्नोति। स्तभ्नुतः। स्तभ्नुवन्ति। स्तभ्नोषि। स्तभ्नोमि। स्तभ्नुवः। स्तभ्नुमः—'अनिदिताम्' इति नलोपः। वस्मसोः 'लोपश्चास्यान्यतरस्याम्' इत्युकारलोपः संयोगपूर्वत्वान्न भवति। स्तभ्नाति। स्तभ्नीतः। स्तभ्नन्ति। स्तभ्नासि। स्तभ्नामि हलादौ क्ङिति 'ई हल्यघोः' इतीत्वम्। अजादौ तु 'श्नाभ्यस्तयोः' इत्याल्लोपः। तस्तम्भ। तस्तम्भतुः। तस्तम्भुः। तस्तम्भिथ। तस्तम्भ। तस्तम्भिव। तस्तम्भिम। स्तम्भिता। स्तम्भिष्यति। स्तभ्नोतु, स्तभ्नुतात्। स्तभ्नुताम्। स्तभ्नुवन्तु। स्तभ्नुहि। स्तभ्नवानि। हेः 'उतश्च' इति लोपः संयोगपूर्वत्वान्न भवति। स्तभ्नातु, स्तभ्नीतात्। स्तभ्नीताम्। स्तभ्नन्तु। स्तभान—हौ 'हलः श्नः शानज्झौ' इति शानजादेशे 'अतो हेः' इति हेर्लुक्। अस्तभ्नोत्। अस्तभ्नुताम्। अस्तभ्नुवन्। अस्तभ्नोः। अस्तभ्नवम्। अस्तभ्नात्। अस्तभ्नीताम्। अस्तभ्नन्। स्तभ्नुयात्। स्तभ्नुयाताम्। स्तभ्नुयुः। स्तभ्नुयाः। स्तभ्नुयाम्। स्तभ्नीयात्। स्तभ्नीयाताम्। स्तभ्यात्। स्तभ्यास्ताम्। स्तभ्यासुः—यासुटः कित्त्वादनुनासिकलोपः। अस्तभत्। अस्तभताम्। अस्तभन्—'जृस्तम्भु' इति परस्मैपदे च्लेर्वाङि 'अनिदिताम्' इति नलोपः। अन्यदा सिचि अस्तम्भीत् इत्यादि। अस्तम्भिष्यत्। तिस्तम्भिषति। तास्तभ्यते। तास्तम्भीति, तास्तब्धि। तास्तम्भति इत्यादि। स्तम्भयति। अतस्तम्भत्। अत्यष्टभ्नोत्। प्रत्यष्टभ्नोत्। प्रतिष्टभ्नाति। प्रत्यतष्टम्भत् इत्यादौ स्तम्भेः 'प्राक् सितादड्व्यवायेऽपि' इति इणन्तादुपसर्गात्परत्वेन षत्वम्, तत्राप्रतेरिति नानुवर्तते। प्रतितिष्टम्भिषति—'स्थादिष्वभ्यासेन' इति षत्वम्। अवष्टभ्नाति अवलम्बत इत्यर्थः। अवष्टब्धा सेना, आसन्नेत्यर्थः। 'अवाच्चालम्बनाविदूर्ययोः' इति षत्वम्। मा प्रतिस्तम्भदित्यत्र 'स्तम्भुसिवुसहाम्' इति निषेधात् 'स्तम्भेः' इति षत्वं न भवति, सन्वदित्वं लघुपरत्वाभावान्न भवति, दीर्घत्वं त्वलघुत्वादपि न भवति। स्तम्भित्वा, स्तब्ध्वा—उदित्वादिड्विकल्पः, इटि 'न क्त्वा सेट्' इति कित्त्वप्रतिषेधान्नानुषङ्गलोपः। स्तब्धः 'यस्य विभाषा' इत्यनिट्त्वम्। प्रतिष्टब्धः, निष्टब्धः—'प्रतिस्तब्धनिस्तब्धौ च' इति षत्वम्। 'स्तम्भेः' इति सानुषङ्गनिर्देशादयमेव स्तभिः सौत्रोऽत्र गृह्यते, न त्वत्र भौवादिकः स्तभिरपीति प्रतिस्तम्भादयः प्रयोगास्तस्य द्रष्टव्याः। उत्तब्धः—'तितुत्र' इतीण्निषेधः, 'उदः स्थास्तम्भोः पूर्वस्य' इति पूर्वसवर्णस्तकारः। एवमुत्तभ्नोती

त्यादावपि तत्वम् । स्तुभ्नोति । स्तुभ्नाति । स्कम्नोति । स्कम्नाति । स्कुम्नोति । स्कम्नाति इत्यादि स्तभ्नातिवत् । विष्कभ्नोति, विष्कम्नाति, विष्कम्भ इत्यादौ 'वेः स्कभ्नातेर्नित्यम्' इति षत्वम् । श्नानिर्देशः स्कम्भतेर्निवृत्त्यर्थम्, तेन तस्य विस्कम्भ इत्यादि भवति ॥ २–६ ॥

३. सातिः सुखे । 'अयं हेतुमण्ण्यन्तः' इति जिनेन्द्रहरदत्तौ । तन्मते सतिरिति प्रकृत्या भवितव्यम् । सातिः सौत्रो धातुरिति वृत्तिबोधिन्यासयोः । सातयति इत्यादि । सातयः—'अनुपसर्गाल्लिम्प' (३।१।१३८) इत्यादिना शे शपि गुणायादेशौ ॥ ७ ॥

४. जु वेगितायां गतौ । जवति । जोता इत्यादि—स्वरान्तत्वादनिट्त्वम् । जुजूषति । अजीजवत् इत्यत्र णेश्चङि णौ कृतस्य स्थानिवत्त्वेनाभ्यासस्योवर्णान्तत्वात् 'ओः पुयणजि' इतीत्वे 'दीर्घो लघोः' इति दीर्घः । जवनः—'जुचङ्क्रम्य' (३।२।१५०) इति युच् । प्रजवी—'प्रजोः' इति इनिः । जूः । जुवौ - 'भ्राजभास' इति क्विप् ताच्छीलिकः । "तत्रैव सूत्रे 'जू' इति दीर्घपाठाश्रयणात् क्विप्सन्नियोगेन दीर्घः" इत्येके । अन्ये तु 'उत्तरसूत्रे दशिग्रहणस्येहाप्यभिसम्बन्धाद्दीर्घः' इत्याहुः । जूतिः—'ऊतियूतिजूति' इति क्तिनि दीर्घान्तोदात्तत्वे निपात्येते । जवः—'ऋदोरप्' इत्यप् । जवसवौ छन्दसीत्यज्विधानं तत्रान्तोदात्तार्थम्, न तु भाषायामेतद्रूपनिवृत्त्यर्थम् । विजावको नाम देशः—संज्ञायां ण्वुल् । तत्र भवादिः वैजावकः—'कच्छादिभ्यश्च' इत्यण् शैषिकः । 'कोपधादण्' इत्येवाणि सिद्धे कच्छादिष्वस्य पाठो यदा भवादिर्मनुष्यस्तत्स्थो वा भवति तदा वैजायक इति कच्छाद्यधिकारेण विधीयमानो मनुष्यतत्स्थयोर्वुञमुष्मादपि यथा स्यादिति ॥ ८ ॥

इति सौत्रधातवः



## अथ नामप्रत्ययाः धातवः प्रदर्श्यन्ते—

'सुप आत्मनः क्यच्' (३।१।८) कर्मण इच्छायां वेति वर्तते । इहात्मशब्दः परव्यावृत्तिवचनः स्वशब्दपर्यायः, न चेतनद्रव्यवचनः । तस्मिन्हि किमयं कर्तृषष्ठ्यन्तः सन् इच्छया सम्बध्यते ? उत शेषषष्ठ्यन्तः सुबन्तेन ? तत्राद्यपक्षे इच्छायाश्चेतनकर्तृत्वाव्यभिचारादानर्थक्यमात्मशब्दस्य । किं च–राज्ञः पुत्रमिच्छत्यमात्य इत्यादौ परेच्छायामपि चेतनस्यैव कर्तृत्वात्क्यच् स्यात् । यत्तु भाष्ये इहासामर्थ्यात्प्रत्ययाभाववचनं तत्प्रौढिवादमात्रम्, इष्यमाणं वस्तु स्वत एव नित्यमन्यदपेक्षते इति नैतावतास्य सामर्थ्यम् । अतएव वृत्तौ आत्मग्रहणस्येदमेव प्रत्युदाहृतम् । सुबन्तसम्बन्धपक्षेऽपीह राजादिना चेतनेनैव पुत्रादेः सम्बन्धात् क्यच्॰ प्रसज्येतैव । आनर्थक्यं

चाविशिष्टमेवात्मग्रहणस्य, अचेतनस्य व्यावर्त्यस्याभावात् । अतएव तत्र हरदत्तः— वृक्षस्य फलमिच्छति, खट्वाया पादमिच्छति इत्यादौ यत्राचेतनार्थं किञ्चिदिष्यते तद्व्यावर्त्यमिति चेन्न, तत्रापि चेतनस्यैव परिशेषितत्वात् । सर्वमेव हि भोज्यं चेतनानामेव शेषभूतं। खट्वायाः पादमिच्छतीत्यत्रापि यस्य तत्खट्वादिकमुपभोग्यं तदर्थमेव तदिष्यते, खट्वादिकं तु द्वारमात्रम्। अतः परव्यावृत्तिवचनमात्र एवात्मशब्द इति । तत्राप्यसौ यदि कर्तृषष्ठ्यन्तः सन्निच्छया सम्बध्येत तर्ह्येषितारमन्तेरणेच्छाया अभावात् अनर्थकः स्यात् । तस्मात्स्वशब्दपर्यायः शेषषष्ठ्यन्तः सुबन्तेन सम्बध्यते । तेनायमर्थः सूत्रस्य—इषेः सन्निधानात्कर्मण एषितुरेवात्मनः सम्बन्धिनः सुबन्तस्यात्मना सुबन्तादिच्छायामर्थे वा क्यजिति । एवं च आत्मनः पुत्र परस्य दासमिच्छति इत्यादौ वस्तुतः सुबन्तस्यात्मना सम्बन्धेऽपि परार्थमिष्यमाणत्वादिषिकर्त्रवच्छेदेनात्मना सम्बन्धाभावान्न क्यचः प्रसङ्गः । ककारः 'नः क्ये' इति सामान्यग्रहणार्थः । चकारस्तदविघातार्थः । स्वरस्तु प्रत्ययस्वरेण धातुस्वरेण वा सिध्यति ।

अथोदाहरणानि—

पुत्रमात्मन इच्छति पुत्रीयति–अत्र 'अकृतव्यूहाः पाणिनीयाः', 'कृतमपि शास्त्रं निवर्तयन्ति' इति वा 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग् बाधते' इति वा सन्धिकार्यरहितस्य अमः 'सुपो धातुप्रातिपदिकयोः' इति लुकि 'क्यचि च' इत्यवर्णस्येत्वे सनाद्यन्तत्वेन धातुत्वाल्लडादि। अश्वस्यति। क्षीरस्यति। वृषस्यति। लवणस्यति— 'अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि' इत्यसुगागमः । अत्रात्मप्रीतौ इत्यपनीय 'अश्ववृषयोर्मैथुनेच्छायाम्', 'क्षीरलवणयोर्लालसायाम्' इत्यर्थान्तरमुक्तम्, तेनाद्ययोरुदाहरणयोरश्ववृषौ मैथुनायेच्छत इत्यर्थः । अन्ये तु–'परित्यक्तप्रकृत्यर्थान्मैथुनेच्छैवार्थः' इत्याहुः । तथा च भट्टिः—'इति रामो वृषस्यन्तीम्' इति । निघण्टुश्च 'वृषस्यन्ती तु कामुकी' इति । इतरयोरपि तृष्णातिरेकोऽभ्यवजिहीर्षातिरेको लालसा; तेन क्षीरलवणेच्छायां लालसारूपायामित्यर्थलाभात् क्षीरलवणे अतिशयेनाभ्यवहर्तुमिच्छतीत्यर्थो भवति । अत्र क्यच्प्रकृतीनां प्रत्ययलक्षणेन यत्पदत्वं प्राप्तं तत् 'नः क्ये' इति नियमेन नान्तविषयमिति प्रकृत्यसुगकारयोः सवर्णदीर्घत्वं बाधित्वा 'अतो गुणे' इति पररूपं भवति । अकारोच्चारणफलं तु पूर्वसूत्रोदाहरणे ब्राह्मणास इत्यादौ । तथा 'सर्वप्रातिपदिकेभ्यो लालसायामसुग्वक्तव्यः' इत्यनकारान्तादसुकि दध्यस्यति इत्यादौ च । अपरे त्वाहुः–'सुग्वक्तव्यः' इति दधिस्यति, मधुस्यति । 'अश्वक्षीर' इत्यत्र भाष्ये द्वाविमावागमौ प्रस्तुत्य दध्यस्यति, मध्वस्यति, दधिस्यति, मधुस्यति इत्येवमर्थमित्यभिधानाद्दधिमधुशब्दावेवागमिनौ इत्येके । अन्ये तु 'सर्वप्रातिपदिकेभ्य इत्येके इति सर्वग्रहणात् बहुवचननिर्देशाच्च सर्वत्र भवतः । भाष्यं तूदाहरणमात्रम्' इत्याहुः । अत्र मते दध्यस्यति मध्वस्यतीत्येव-

मर्थमित्यर्थशब्दः स्वार्थं न पुष्यति। अशनोदकधनेभ्यः क्यचि 'अशनायोदन्य धनायाबुभुक्षा' इति क्रमेणैतेष्वर्थेषु द्योत्येष्वाद्यन्तयोरीत्वापवाद आत्वम्, उदकस्य उदन्नादेशो निपात्यते। तेन अशनायति। उदन्यति। धनायति। अशनायतिप्रभृतीनां तदात्वे भोक्तुकामोऽशनमिच्छति, पातुकाम उदकमिच्छति, सत्यपि धने भूयो धनमिच्छतीति क्रमेणार्थः। यस्त्वौत्तरकालिकमशनं, स्नानार्थमुदकं, दरिद्रः सन् धनमिच्छति तत्र अशनीयति, उदकीयति, धनीयति इति भवति। तत्रान्ये अशनायतीत्यादीनां प्रकृत्यर्थमनपेक्ष्य केवलं बुभुक्षादीनेवार्थान्मन्यन्ते। अत्र भारविरमुमेव पक्षं प्रतिपेदे, तदाह—'किमु धनं धनायितुम्' इति। निघण्टुश्च 'उदन्या तु पिपासा तृड्[1]' इति। गार्ग्यमिच्छति गार्गीयति। अत्र 'क्यच्व्योश्च' इत्यपत्यप्रत्ययकारस्य हलुत्तरस्य लोपे 'क्यचि च' इतीत्वम्। उपार्षभीयति, उपर्षभीयति। उपाल्कारीयति। उपल्कारीयति—अत्र 'वा सुप्यापिशलेः' इति सुबन्तावयवऋकारादिधातुपरत्वात् पूर्वपरयोरेका वृद्धिर्वा भवति। ऋकारलृकारयोः सावर्ण्यादियम् लृकारादावपि भवति, तत्र 'उरण् रपरः' इति प्रत्याहारग्रहणात् लपरत्वम्। वाग्रहणमाद्गुणस्य प्राप्त्यर्थमिति वृद्ध्यभावेऽपि स भवति।

नन्वेतद्वाग्रहणं यथाप्राप्ताभ्यनुज्ञानार्थे स्यात्, इति 'ऋत्यकः' इति प्रकृतिभावः पक्षे कस्मान्न भवति ? उच्यते, अत्राप्यनुवृत्तस्य धातुग्रहणस्य 'उपसर्गादृति' इत्यत्रैव तद्बाधनार्थत्वात् इदं च धातुग्रहणस्य प्रकृतिभावबाधनार्थत्वमृतीयतावुपपादितम्। अतएव 'वा सुपि' इत्यत्र वृत्तौ वाग्रहणस्य प्रयोजनं गुण एव दर्शितम्। उपगता ऋषभीयका अमुं देशमित्यत्र उपर्षभीयकः, उपऋषभीयकः देश इति गुणप्रकृतिभावौ भवतः, वृद्धिस्तु पूर्वसूत्रवत् 'वा सुपि' इत्यत्रानुवृत्तस्योपसर्गग्रहणस्य प्राद्युपलक्षणार्थत्वाभावान्न भवति। उपलक्षकत्वाभावश्च ऋतीयतावुक्तः। ऋषभस्य समीपमुपर्षभं तदिच्छति उपर्षभीयतीत्यत्र तु संग्रामयतीतिरूपस्य संग्रामं करोतीति संग्रामशब्दात्तत्कारिणि च सिद्धावपि चुरादौ 'संग्राम युद्धे' इति पाठात्सम उपसर्गात्पूर्वमडाद्यर्थात्पाठादन्यत्र सोपसर्गात्संघाताद्धातुसंज्ञानिमित्ते प्रत्यये चिकीर्षिते उपसर्गाः पृथक् क्रियन्ते इति ज्ञापनात्, सोपसर्गात् संघातात् धातुसंज्ञानिमित्तः प्रत्ययो यदि भवति संग्रामयतेरेवेति नियमाद्वा पृथक्कृतोपसर्गादेव स भवतीतीहाप्यृषभशब्दादेव क्यचा भवितव्यम्। सुपस्तूपर्षभशब्दाद्विधानात् प्रत्ययग्रहणपरिभाषया तस्यैव सुबन्तत्वम्, न तु तदवयवस्य ऋषभशब्दस्यापीत्यृषभीयशब्दः सुबन्तावयवो धातुर्न भवतीति तत्परत्वाभावादनुपसर्गत्वाच्च 'वा सुपि' इति वृद्धेरप्रसङ्गः। अत एवोपसर्गस्य पृथक्कारे उपार्षभीयतीत्यत्र ऋषभीयस्यैवाङ्गत्वात्तस्यैवाड् भवति, तस्मादेव क्त्वायामुपेन प्रादिसमासे ल्यप्युपर्षभीय्य इति भवति। तथा सनि तस्यैव धातुत्वात् षशब्दस्य द्विर्वचने उपर्षिषभीयिषति इति। नन्वयं

1. अ० को० २।९।५५।

भा० धा० ५४

सङ्ग्रामशब्दः उपसर्गसदृशावयवोऽस्त्विति, कथमुक्तस्यार्थस्य प्रमाणं स्यादिति ? उच्यते, यत् वापदान्तस्येति कृतपरसवर्णं पठ्यते। अत्र हरदत्तः—संग्रामशब्दोऽनुदात्तेत्त्वार्थः स्यात्। न च तन्मात्रार्थत्वे 'ग्राम युद्धे' इति शक्यते पठितुम्, अध्यैष्ट-इत्यादौ आट इव मध्येऽटः प्रसङ्गादिति ज्ञापकमभाङ्क्षीत्। तदास्यानुदात्तेत्त्वमपाणिनीयमिति नोदेति। अत एव भृशादौ कैयटे 'संग्रामयतिरनुदात्तेद् बोद्धव्यः' इत्युक्तम्। 'अयं चानुदात्तेत्संग्रामयतिरिष्यते' इति भाष्ये च ज्ञापकत्वमेवोक्तम्।

ऋकारमिच्छति ऋकारीयति, उपर्कारीयति इत्यत्र 'वा सुपि' इति वृद्धिः ऋतीति तपरकरणान्न भवति। अत एव शाकलः प्रकृतिभावोऽपि। मालीयति—अत्र 'अकृतव्यूहाः पाणिनीयाः' इति माल आ अस् य स्थिते सुब्लुक्यन्तरङ्गत्वेन पूर्वमेकादेशे परमपीत्वं पश्चाद्भवति। उक्तं च भाष्ये—'ङ्यापोरेकादेश ईत्वलोपाभ्यां भवति अन्तरङ्गः' इति। ननु पूर्वमपीत्वे 'यस्य' इति लोपेनेष्टसिद्धिरिति चेत्, न; तस्मिन्नीत्वस्य बहिरङ्गस्यासिद्धत्वात्। उस्रामैच्छत् औस्रीयत्। औङ्कारीयत्। आ ऊढः ओढः, औढीयत्। अत्र 'उस्यपदान्तात्' 'ओमाङोश्च' इति पररूपम् 'आटश्च' इति पुनर्वृद्धिविधानार्थेन चशब्देन बाध्यते। तथा च वार्त्तिकम्—'उस्योमाङ्क्ष्वाटः प्रतिषेधः' इति, उसि ओमाङोश्च परयोराटः पररूपं नेत्यर्थः। औढीयदित्यत्राङ ओकारेण सहैकादेशे उपसर्गरूपत्वं पृथङ्न प्रतीयत इति सोपसर्गात्संग्रामयतेरित्यस्याप्रवृत्तेरोकारात्पूर्वमाटि तस्यान्तवद्भावेन लब्धाङ्गव्यपदेशस्यौकारस्य आटश्च 'ओमाङोश्च' इति प्राप्तेन पररूपेण वृद्धेः बाधः स्यादिति वार्त्तिके आङ्ग्रहणम्। एवम् आ + इतः=एतः ऐतीयत् इत्यपि द्रष्टव्यम्। आ + इत एतः= एतीयति, प्र + एतीयति=प्रेतीयति इत्यत्र प्राप्तमवर्णान्तोपसर्गविषयमेङि पररूपं बाधित्वा प्राप्ताम् 'एत्येधति' इति वृद्धिस् 'ओमाङोश्च' इति पररूपं परत्वाद्बाधते। आ + ऋश्या=अर्श्या, आगता ऋश्येति प्रादिसमासः। 'आद्गुणः' इत्यनेनाङृकारयोर्गुणः, तमिच्छति आर्श्यीयति। आर्श्यीयत्—अत्र गुणस्यान्तवद्भावेनाङः 'ओमाङोश्च' इति प्राप्तं पररूपं परत्वाद्बाधित्वा प्राप्तः सवर्णदीर्घश्चकारेण पुनः पररूपविधानात् बाध्यते।

दधीयति। मधूयति—'अकृत्सार्वधातुकयोः' इति दीर्घः। कुमारीयति। वधूयति। अरमिच्छति रीयति—ऋकारस्य 'रीङ ऋतः' इति रीङादेशः। ऋकारलृकारयोः सावर्ण्येन अलमिच्छतीत्यत्रापीदमेव रूपम्। अत्र तपरकरणाद् ॠकारस्य रीङभावात् ॠयति इति भवति। ॠत इत्त्वन्तु ॠकारान्तस्य धातोरितीह न प्रसजति। हेशब्दमिच्छति हेयति। गामिच्छति गव्यति—'वान्तो यि' इत्यवादेशः। गव्यिता इत्यादौ अतो लोपे 'क्यस्य विभाषा' इति हल उत्तरस्य क्यप्रत्ययकारस्यार्धधातुके विधीयमानो लोपः सन्निपातपरिभाषया न भवति। अगव्यीत् इत्यत्र 'वदव्रज' इत्यत्रान्तग्रहणस्य हल्समुदायस्य प्रतिपत्त्यर्थत्वेऽपि

अल्लोपस्य स्थानिवत्त्वेनाङ्गस्य हलन्तत्वाभावात् न वृद्धिः। रैयति। ग्लाव्यति। ग्लाव्यिता—गव्यतिवद्वान्तादेशो यलोपाभावश्च। श्वलिह्यति। श्वलिह्यिता, श्वलिहिता—अल्लोपस्य पूर्वविधौ स्थानिवत्त्वात् 'न धातुलोपे' इति लघूपधगुणाभावः। अश्वलिहीत्। अश्वलिह्यात्—अत्राल्लोपस्य स्थानिवत्त्वाद्धलन्तलक्षणायाः वृद्धेरभावः। अत्र हो ढो न भवति, 'नः क्ये' इति नान्तस्यैव क्ये पदत्वाद्धकारस्य पदान्तत्वाभावात्। अत एव गोदुह्यति इत्यत्र 'दादेः' इति घत्वम्। मित्रद्रुह्यति इत्यादौ 'वा द्रुह' इति तद्विकल्पः। उपानह्यति इत्यत्र 'नहो धः' इति धत्वम्। अनुडुह्यति इत्यत्र 'वसुस्रंसु' इति दत्वं च न भवति। पुरमिच्छति पुर्यति। खयमिच्छति खयति। दिवमिच्छति दिव्यति—'हलि च' इति दीर्घो रेफवकारान्तस्य धातोर्हल्परत्वे इतीह न भवति। चतुर्यति—अत्रापि धातुर्न रेफान्त इति दीर्घो न भवति। गिरमिच्छति गीर्यति—अत्र गिरः कौ ऋत इत्त्वे रेफान्तो धातुः हल्पर इति दीर्घः। गीर्यिता, गिरिता—'क्यस्य विभाषा' इति यलोपपक्षे हल्परत्वाभावान्न दीर्घः। 'र्वोरुपधायाः' इति रेफवकारान्तस्य धातोः पदस्य विधीयमानेऽपि न भवति, 'नः क्ये' इति नियमेन पदत्वाभावात्। स्वरिच्छतीत्यादावव्ययेभ्यः क्यचि 'मान्ताव्ययेभ्यः प्रतिषेधः' इति क्यचः प्रतिषेधाद् वाक्यमेव। यत्तु तत्र 'गोसमानाक्षरनान्तादित्येके' इति क्यचः प्रकृतिपरिगणनम्, तद्वाच्यतीत्याद्यसिद्धिप्रसङ्गात् न स्थितः पक्ष इति कैयटादौ स्थितम्। फलमिच्छति फल्यति। यल्यति। इदमिच्छतीत्यत्र क्यचि मान्ताव्ययप्रतिषेधाद्वाक्यमेव। इह मान्तग्रहणेन प्रातिपदिकस्य विशेषणात् इमाविच्छति, काविच्छतीत्यादावपि वाक्यमेव भण्यते।

प्राणितीति प्राण्, प्राण्यति। राजीयति—'नः क्ये' इति पदत्वात् 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे 'क्यचि च' इतीत्वम्। न च नलोपस्यासिद्धत्वम्, 'नलोपः सुप्स्वरसञ्ज्ञातुग्विधिषु कृति' इति नियमात्। अहर्यति—'रोः सुपि' इति अह्नः पदस्य सुप्परत्वाभावात् 'अहन्' इति रुत्वापवादो रेफः। नन्वसौ नलोपे पूर्वत्रासिद्धः स्यात्, अस्ति च वचनस्यावकाशः—हे अहरित्यत्र 'स्वमोर्नपुंसकात्' इति सोर्लुका लुप्तत्वे तस्य नलोपश्च 'न ङिसम्बुध्योः' इति निषिध्यते, नैष दोषः; 'अहन्नित्यत्राह इति षष्ठ्यानिर्देश्येऽहन्निति प्रथमान्तेन निर्देशादहन्नित्यावृत्त्याऽहन्नेव, न तु लुप्तनकारः' इति स्थितम्। स एव चाहन्शब्द इहापि रेफविधावनुवर्तत इति। उज्झेः क्विबन्तादनुकरणाद्वा उज्झ्यति। ककुभ्यति। अर्घ्यति। परिव्रड्यति। विलम्ब्यति। अङ्ग्यति। मृड्यति। अर्घादिभ्यस्तत्करोतीति णौ लोपे णेश्च क्वावुदाहरणानि। परिवृढेर्णाविष्ठवदित्यतिदेशादृकारस्य 'र ऋतो हलादेः' इति रभावः। अतोऽन्यत्राङ्गादेर्धातोरनुकरणात्क्विबन्ताद्वा क्यच् द्रष्टव्यः। युध्यति भिषज्यतिप्रभृतयो गताः। प्रक्रियासाम्याद् दृष्टान्तेन प्रदर्शिताः।

त्वामिच्छति, मामिच्छति, त्वद्यति, मद्यति—'प्रत्ययोत्तरपदयोश्च' इत्येकार्थं-वृत्तयोर्युष्मदस्मदोर्मपर्यन्तस्य त्वमावादेशौ भवतः। 'त्वमावेकवचने' इत्यत्र एकस्य वचनमेकवचनम्, न तु पारिभाषिकमिति स्थिते तत्रापि तस्यैवानुवर्तना-देकार्थानुवृत्तयोरित्युक्तम्। तेन युस्मदस्मच्छब्दौ यदा एकार्थे, समासस्तु द्विबह्वर्थः, तदापि त्वमौ भवतः। यथा—अतित्वामतिमामिच्छति अतित्वद्यति, अतिमद्यति। अत्र विग्रहवाक्ये अतित्वामतिमामिति रूपम्। युष्मदस्मदोर्द्वितीयाद्विवचने तस्य 'ङेप्रथमयोः' इत्यमि कृते युष्मदस्मदोरेकार्थत्वात् 'त्वमावेकवचने' इति मपर्यन्तस्य त्वमयोर्दकारस्य शेषेलोपापवादे 'द्वितीयायां च' इत्यात्वे एकादेशे च 'युवावौ द्विवचने' इत्यत्रापि द्वयोर्वचनं द्विवचनमिति स्थिते तत्र च युष्मद-स्मदोर्युवावादेशौ न शङ्क्यौ। अतित्वान्, अतिमान् इति तु 'ङेप्रथमयोः' इत्यमादेशापवादे 'तस्मादित्युत्तरस्य' इति परिभाषया 'शसो न' इति तदा-देर्नकारे पूर्ववद् आत्वैकादेशयोश्च सकारस्य संयोगान्तलोपे च भवति। नन्वत्र युष्मदस्मदोरेकार्था विभक्तिः परेति 'त्वमावेकवचने' इत्येव त्वमयोः सिद्धेः किं पुनः प्रत्ययोत्तरपदवचनेन? भवेदेतदेवं विभक्तिपरत्वे सिद्धे, तदेव तु न सिद्ध्यति; विभक्तेर्लुका लुप्तत्वेन तत्प्रत्ययलक्षणाभावात्। नन्वतरङ्गत्वाल्लुकः पूर्वं त्वमादेशौ भविष्यतः। न च लुका लुप्तत्वेनानयोर्बाधनमाशङ्क्यम्, अन्तर-ङ्गत्वादादेशयोर्नित्यान्तरङ्गयोरन्तरङ्गं बलीयः, यथोक्तम्—परनित्यान्तरङ्गप्रति-पदविधयो विरोधिसन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वम्' इति। एवं तर्हीदमेव 'प्रत्ययोत्तरपदयोश्च' इत्यादेशविधानं ज्ञापकम् 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति। नन्वेतत् परमस्त्वम् त्वत्तरः, त्वं प्रधानमस्य त्वत्प्रधानः, तुभ्यं हितं त्वद्धितम्, तवेदं त्वदीयम्, तव पुत्रः त्वत्पुत्रः; परमोऽहं मत्तरः, अहं प्रधानमस्य मत्प्रधानः; मह्यं हितं मद्धितम्, ममेदं मदीयम्, मम पुत्रो मत्पुत्र इति 'त्वाहौ सौ' 'तुभ्यमह्यौ ङयि' 'तवममौ ङसि' इति विधीयमानानन्त-रङ्गानपि त्वाहादीन् बाधित्वा त्वमादेशविधानेन अर्थवद्वचनमिति कथं ज्ञापकं स्यात्? इदं तर्हि ज्ञापकम् 'उत्सर्गसमानदेशा अपवादाः' इति त्वाहाद्यपवा-दत्वेनेव त्वमयोर्मपर्यन्तविषयत्वे सिद्धे यत्पुनर्मपयन्तस्येत्यनुवृत्त्या तयोर्विधानम्, बाधे तु लुकान्तरङ्गाणामपि त्वाहादीनां तदपवादत्वेनैव त्वमयोर्मपर्यन्तविषय-त्वस्य सिद्धेः किं तदर्थेनानेन मपर्यन्तस्येत्यनेन! ननु शब्कल्पबाद्यपवादानां बहुजादीनां भिन्नविषयाणामपि दर्शनात् सर्वादेशनिवृत्त्यर्थमेतत् स्यादिति कथं ज्ञापकं भवति? उच्यते, इह त्वाहादयो विषयनिर्देशार्थमनुवर्तन्ते, तेन त्वाहादीनां प्रसङ्गे प्रत्ययोत्तरपदयोस्त्वमयोर्विधानादेव मपर्यन्तविषयत्वे सिद्धे यत्पुनर्मपर्यन्त-स्येत्यनुवर्तनेनानयोर्विधानं तत् त्वया कृतं त्वत्कृतम्, त्वामिच्छति त्वद्यतीत्याद्येव-मर्थमिति ज्ञापकमेवोक्तार्थस्य। एवं च युवामिच्छति युष्मद्यति, अतियुवामिच्छति

अतियुष्मद्यति, आवामिच्छति अस्मद्यति, अत्यावामिच्छति अत्यस्मद्यति इत्यत्र युष्मदस्मदोर्द्विवचनत्वेऽपि विभक्तेर्लुप्तत्वेन तत्परत्वाभावात् 'युवावौ द्विवचने' इति युवावौ न भवतः। लुकः पूर्वत्वेनानयोरन्तरङ्गत्वेऽपि न प्रसङ्गः; बहिरङ्गेणापि लुका बाधस्येदानीमेव ज्ञापितत्वात्। 'प्रत्ययोत्तरपदयोः' इति त्वमौ त्वमेकार्थत्वान्न प्रसजतः। वाक्येऽतित्वामतियुवामिति रूपं युष्मदस्मद्भ्यां द्वितीयैकवचनद्विवचनयोः 'ङेप्रथमयोः' इत्यमिति प्रकृत्योर्मपर्यन्तस्य युवावयोर्दकारस्य 'द्वितीयायां च' इत्यात्वे सवर्णदीर्घे अमिपूर्वत्वे च। अतियुवान् अत्यावानिति रूपं तु शसि तदादेरमादेशापवादे 'शसो न' इति नकारे प्रकृत्योः पूर्ववत् युवावयोरात्वे सकारस्य संयोगान्तलोपे च भवति। अतियुष्मामतियुष्मानिच्छति अतियुष्मद्यति, अत्यस्माम् अत्यस्मानिच्छति अत्यस्मद्यति इत्यत्रापि 'प्रत्ययोत्तरपदयोः' इति त्वमौ प्रकृत्योरनेकार्थत्वादेव न भवतः। अत्रापि वाक्ये अतियुष्मामित्यादिरूपमतियुवामित्यादिवन्नेयम्। उख्यति। तृष्यति। उच्छ्यति। मव्यति। मर्व्यति। अर्घ्यत्यादिवत्प्रक्रियोन्नेया। अत्रोच्छिर्न क्विबन्तः, तत्र हि 'च्छ्वोः शूडनुनासिके' इति शकारेण भवितव्यम्। वाच्यति। अव्यति। मरुत्यति। शक्यति। क्षुप्यति। दिश्यति। पुष्यति। पयस्यति—अत्र पुत्रादेः कर्मणः जीवत्यादिवत् क्यजन्तेऽन्तर्भावादकर्मत्वाल्लडादयो भावकर्त्रोर्भवन्ति। उदाहृतं कर्त्तरि।

भावे—पुत्रीयते इत्यादि द्रष्टव्यम्।

पुत्रीयादेः सनि 'यथेष्टं नामधातूनाम्' इति पर्यायेण सर्वस्यैकाचो द्विर्वचनात् पुपुत्रीयिषति। पुतित्रीयिषति। पुत्रीयियिषति इत्यादि भवति। इह कस्मान्न भवति महान्तं पुत्रमिच्छति महापुत्रीयति इति ? किमत्रात्वाभावश्चोद्यते, अथ केवलात् प्रत्ययाभावः, समुदायाद्वा ? आत्वं तावन्न भवति, प्रत्ययार्थेन सापेक्षत्वात्, समासाभावादनुत्तरपदत्वात्, केवलात्प्रत्ययाभावो महता सापेक्षत्वेनासामर्थ्यात्। समुदायात्त्वकर्मकत्वात् विशिष्टस्य पुरुषस्येष्यमाणत्वेनाकर्मकत्वेन परस्परं प्रत्ययार्थत्वेन च सम्बन्धे नास्ति सामर्थ्यम्। सुब्ग्रहणं च पदविधित्वेन समर्थपरिभाषोपस्थानार्थमेव क्रियते। ननु धातुव्यावृत्त्यर्थं स्यात्; सन् तत्र बाधको भविष्यति। ङ्याप्प्रातिपदिकादुत्पत्तावपि नान्ते नलोपस्तु सुबन्तादुत्पत्तौ यद् 'नः क्ये' इति पदत्वस्य नियामकं तदेवात्र विधायकमिति भविष्यति। नन्वसति सुब्ग्रहणे विशेषाभावात् प्रातिपदिकादिव सुबन्तादपि प्रत्ययोत्पत्तेः वाच्यति इत्यादौ कुत्वं स्यात्; एवं तर्हि 'नः क्ये' इति वचनं सुबन्तादुत्पत्तौ नियमार्थं प्रातिपदिकादुत्पत्तौ विध्यर्थं च भविष्यति। नन्वत्र कर्मग्रहणेनैव सुबन्तत्वं लप्स्यते, पञ्चकपक्षेऽप्यस्य द्योतिकया विभक्त्या भाव्यम्। अतोऽन्तरेणापि सुब्ग्रहणं वस्तुतः पदविधित्वेन समर्थपरिभाषोपस्थास्यते इति किं तद्ग्रहणेन ? मैवम्; यत्र हि पदस्यैवासाधारणं किञ्चिद्रूपमाश्रीयते स एव पदविधिः, न त्वीदृशमपीति। कर्मग्रहणं तु न पदस्यैवा-

साधारणम्; 'धातोः कर्मणः' इत्यपि दर्शनात्। न तर्हीदानीमिदं भवति महापुत्रीयतीति ? भवति; यदेतद्वाक्यं महान्पुत्रः महापुत्रस्तमिच्छतीति।

काम्यच्च (३।१।९)—क्यचो विषयेऽयं भवति, 'मान्ताव्ययेभ्यः' इति निषेधात् तान्येवास्याप्राप्तक्यज्विषयः स्यादिति न वाच्यम्; पाश्चात्त्यस्य कात्यायनवचनस्य सूत्रप्रणयनकालेऽभावात्। पुत्रमात्मन इच्छति पुत्रकाम्यति इत्यादि। त्वत्काम्यति, मत्काम्यति, युष्मत्काम्यति, अस्मत्काम्यति इत्यत्र 'प्रत्ययोत्तरपदयोः' इति त्वमौ, तदभावश्च। क्यचि चित्करणं पुत्रकामिष्यति इत्यादौ सतिशिष्टस्वरं बाधित्वा धातुस्वरो यथा स्यादिति। ककारस्तु नेत्, प्रयोजनाभावात्। अग्निकाम्यति इत्यादावधातुविहितत्वादार्धधातुकत्वाभावान्नास्ति गुणप्रसङ्गः। कंसं परिमार्ष्टि कंसपरिमृट्, कंसपरिमृट्काम्यतीत्यत्र मृजेर्वृद्धिः प्रत्ययमात्रे विधीयमानाऽपि धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् न प्रसजति। तत्प्रत्ययः= धातुसंशब्दनेन विहितः प्रत्ययः। यजेः 'विजुपेश्छन्दसि' इति विचि उपयट्। वचेः वाक्, उपयट्काम्यति, वाक्काम्यति इति। अत्र यजादिभिः कितो विशेषणात् 'धातोः स्वरूपग्रहणे' इति वा सम्प्रसारणाप्रसङ्गः। अन्तर्वर्तिन्या विभक्त्या यथायोगं पदकार्याणि द्रष्टव्यानि। पयस्काम्यति। यशस्काम्यति—अन्तर्वर्तिन्या विभक्त्या पदत्वेन सोः रुत्वे विसर्जनीये तस्य कुप्वोरपदाद्योः परयोर्विधीयमानं 'सोऽपदादौ' इति सत्वं भवति। स्वःकाम्यति इत्यादौ 'सोऽपदादौ', 'अनव्ययस्य' इति वचनात् सत्वाभावः। अधिकरणशक्तिप्रधानस्याप्यस्य वृत्तिविषये शक्तिमत्प्रधानत्वादिषिणा कर्मत्वेन योगः षष्ठ्या। यथा—दिवाभूता रात्रिः, दोषाभूतमहः इत्यादावधिकरणशक्तिप्रधानत्वेऽपि शक्तिमत्प्राधान्यमद्भूतत‌द्भावयोगः। श्रीःकाम्यतीत्यादौ 'रोः काम्ये' इति रोरेव विसर्जनीय इति काम्ये सत्वनियमात्सत्वाभावः। सर्पिष्काम्यति, धनुष्काम्यति इत्यादौ सत्वं बाधित्वा 'इणः षः' इति षत्वं भवति। इदञ्च सत्वस्यापवाद इति यत्र तत्प्रसङ्गस्तत्रैव भवतीति उच्चैः काम्यति, गाः काम्यति इत्यादौ न भवति। पुंस्काम्यति इत्यत्र पुंसः संयोगान्तलोपे 'पुमः खय्यम्परे' इति रुत्वं निर्वर्त्य 'संपुंकानां सो वक्तव्यः' इति सत्ववचनान्नास्ति विसर्जनीय इति न षत्वप्रसङ्गः।

उपमानादाचारे (३।१।१०)—कर्मणः सुप इति च वर्त्तते। तत्र प्रत्ययार्थस्याचारक्रियायाः सन्निधानात्तदपेक्षया कर्मण उपमानात् सुबन्तादाचारे क्यजित्यर्थो भवति। यद्यपि काम्यजनन्तरस्तथापि पूर्वसूत्रे चकारेणेहाद्य एव क्यजनुकृष्टः स एवात्र विधीयते—पुत्रमिवाचरति छात्रम्। उदाहरणान्यवशिष्टानि प्रक्रिया च इच्छाक्यजन्तवद् द्रष्टव्यानि। अत्रोपमानेनोपमेयमाक्षिप्यते। तत्र प्रत्यासत्त्या साधारणधर्मभूताचारक्रियापेक्षया कर्म भवत् उपमानकर्मवत् प्रत्ययान्ते धातावनन्तर्भावादनभिहितमिति तत्र द्वितीया भवति। तथा पुत्रीयतं इत्यादौ कर्मणि

यगादयोऽपि भवन्ति। नन्वन्या पुत्रविषयाचारक्रिया, अन्या छात्रविषयेति आचार-क्रियायाः वस्तुतो भेदादेककर्मधर्मसमावेशस्यात्राभावात्कथमौपम्यम्? उच्यते, आचारितुरेकत्वादाचारसमावेशादाचार एकोऽवसास्यते, अन्यथा सर्वत्रैवोपमा-नोपमेयगतस्य धर्मस्य वस्तुतो भेदादौपम्यव्यवहारच्छेदः स्यात्। 'अधिकरणाच्चेति वक्तव्यम्' इत्युक्तत्वात् प्रासादीयति कुड्य इत्यादौ सप्तम्यन्तादपि भवति।

त्वयीवाचरति त्वद्यति, मयीवाचरति मद्यति—युष्मदस्मदोरेकार्थत्वात् 'प्रत्ययोत्तरपदयोः' इति त्वमौ। युवयोरिवाचरति युष्मद्यति, आवयोरिवाचरति अस्मद्यति—अत्र नास्त्येकार्थत्वमिति त्वमौ न भवतः। द्विवचनत्वेऽपि विभक्ते-र्लुका लुप्तत्वान्न युवावौ। लुकः पूर्वं तु न भवतः, 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुक् बाधते' इत्युक्तत्वात् युष्मास्विव आचरति, अस्मास्विवाचरति इत्य-त्रापि एकार्थत्वाभावान्न भवतस्त्वमौ। त्वामतिक्रान्ते अतित्वयि, अतिक्रान्तयोः अतित्वयोः, अतिक्रान्तेषु अतित्वासु। एवम् अतिमयि, अतिमयोः, अतिमासु—सर्वत्रात्र प्रकृत्योरेकार्थत्वात्त्वमयोरजादावनादेशे विभक्तौ 'योऽचि' इति दकारस्य यकारः। हलादौ तु युष्मदस्मदोरनादेशविभक्तिपरत्वादात्वम्। एभ्योऽपि क्यचि त्वमयोः त्वद्यति मद्यति इति भवतः। युवामतिक्रान्ते अतियुवयि, अतिक्रान्तयोः अतियुवयोः, अतिक्रान्तेषु अतियुवासु। एवम् अत्यावयि, अत्यावयोः, अत्यावासु—अत्र प्रकृत्योर्द्विवचनत्वे युवावयोर्दकारस्य पूर्ववद्यत्वात्वे। एभ्यस्तु क्यचि प्रकृत्यो-रेकार्थत्वाभावात् न त्वमौ भवतः; युष्मद्यति अस्मद्यति इति भवतः। द्विवचन-त्वेऽपि विभक्तेर्लुका लुप्तत्वेन तत्परत्वाभावात् युवावौ न भवतः। तथा लुकः पूर्वमपि न भवतीति इदानीमेवोक्तम्। युष्मानतिक्रान्ते अतियुष्मयि, अति-क्रान्तयोः अतियुष्मयोः, अतिक्रान्तेषु अतियुष्मासु। एवम् अत्यस्मयि, अत्यस्मयोः, अत्यस्मासु—पूर्ववद्दकारस्य यत्वात्वे। अत्रापि क्यचि प्रकृत्योरेकार्थत्वाभावेन त्वमयोरभावात् अतियुष्मद्यति, अत्यस्मद्यति इति भवतः।

कर्तुः क्यङ् सलोपश्च (३।१।११)—उपमानात् सुपः आचारे वेति वर्तते। अत्रापि पूर्ववत् सन्निहिताचारक्रियापेक्षया कर्तृत्वोपमानत्वे। तेनायमर्थः—उप-मानादाचारक्रियायाः कर्तुः सुबन्तादाचारेऽर्थे वा क्यङिति। ककारः 'नः क्ये' इति सामान्यग्रहणार्थः। ङकारस्तदविघातार्थस्तङर्थश्च। सलोपश्च इति चशब्दोऽ-न्वाचये। सेति लुप्तषष्ठीकं पृथक् पदम्। तेन च लोपापेक्षया स्थानषष्ठ्यन्तत्वेन सम्बन्धिनो जायमानस्य कर्तुर्नित्यं तस्य विशेषणात्तदन्तविधौ सकारान्तेभ्यः क्यङ् तस्य सकारस्य लोप इत्यर्थो भवति। अत्रापि वेत्यस्य सम्बन्धात्तस्य च व्यवस्थितविभाषात्वादोजोप्सरसोर्नित्यं सलोपो भवति, अन्यत्र विकल्पेन। उक्तं च—'ओजसोऽप्सरसोर्नित्यं पयसस्तु विभाषया' इति। 'पयस इति ओजोऽप्सरो-व्यतिरिक्तानां सकारान्तानामुपलक्षणम्' इति व्याख्यातारः। श्येन इवाचरति

श्येनायते । काकायते । ओजायते । अप्सरायते । पयस्यते, पयायते । यशस्यते, यशायते । ओजःशब्दो वृत्तिविषये तद्वति वर्तते । अर्चिष्यते, सर्पिष्यते इत्यादौ प्रत्ययसकारत्वात्षत्वम् । अत्र 'नः क्ये' इति नियमेन सकारस्य पदान्तत्वाभावः । पदान्तत्वे हि 'अपदान्तस्य मूर्धन्यः' इति वचनात् षत्वं न स्यात् । अन्तस्य सकारस्य लोपवचनात् हंसायते, सारसायते इत्यादौ अनन्त्यस्य लोपो न भवति । उपमानकर्तुरिव उपमेयकर्तुः प्रत्ययान्ते धातावन्तर्भावात् तत्र लादयो भवन्ति । अकर्मकत्वात् भावे च श्येनायते इति । त्वामिवाचरति त्वद्यते, मद्यते—'प्रत्ययोत्तरपदयोश्च' इति युष्मदस्मदोरेकार्थयोस्त्वमौ । युवामिवाचरति युष्मद्यते । अस्मद्यते—अत्रानेकार्थत्वान्न त्वमौ; अन्तर्वर्तिन्या विभक्तेर्लुका लुप्तत्वात् 'युवावौ द्विवचने', 'यूयवयौ जसि' इति युवावादयो न भवन्ति । लुकः पूर्वं तु बहिरङ्गेणापि तेन बाधस्योक्तत्वान्न भवन्ति । त्वामतिक्रान्तः अतित्वम्, अतिक्रान्तौ अतित्वाम्, अतिक्रान्ताः अतित्वम् । मामतिक्रान्तः अत्यहम्, अतिक्रान्तौ अतिमाम्, अतिक्रान्ताः अतिमम्—सर्वत्र विभक्तेः 'ङेः प्रथमयोरम्' इत्यम्भावः । द्विवचनादन्यत्र 'शेषे' इति दकारलोपस्तत्र 'प्रथमायाश्च द्विवचने' इत्यात्वम्, तत्र सौ 'त्वाहौ सौ' इति त्वाहौ, अन्यत्र 'त्वमावेकवचने' इति त्वमौ । आभ्याम्पराभ्यामपि त्वाहयोर्न बाधः; त्वाहादीनां तु पूर्वविप्रतिषेधेन त एवेष्यन्ते इति उक्तत्वात् । जसि तु न्याय्यविप्रतिषेधेन युवावौ न भवतः । एवम् एभ्यः क्यङि अतित्वद्यते, अतिमद्यते इति भवतः । युवामतिक्रान्तः अतित्वम्, अतिक्रान्तौ अतियुवाम्, अतिक्रान्ताः अतियूयम् । एवं मामतिक्रान्तो अत्यहम्, अतिक्रान्तौ अत्यावाम्, अतिक्रान्ताः अतिवयम् । सौ जसि च 'त्वाहौ सौ', 'यूयवयौ जसि' इत्याभ्यां पराभ्यां 'युवावौ द्विवचने' इत्यस्य बाधः । द्विवचने तु युवावयोः 'प्रथमायाश्च द्विवचने' इति दकारस्यात्वम्, इतरयोस्तु शेषे लोपः । एभ्यस्तु क्यङि युष्मदस्मदोरनेकार्थत्वात्त्वमयोरभावात् अतियुष्मद्यते, अत्यस्मद्यते इति भवतः । अन्तर्वर्तिनीं विभक्तिमाश्रित्य तत्तदादेशाभावः तत्रतत्रोक्तः । युष्मानतिक्रान्तः अतित्वम्, अतिक्रान्तौ अतियुष्माम्, अतिक्रान्ताः अतियूयम् । एवमस्मानतिक्रान्तो अत्यहम्, अतिक्रान्तौ अत्यस्माम्, अतिक्रान्ताः अतिवयम्—पूर्ववत् प्रथमाया अम्भावे द्विवचने आत्वम् । अन्यत्र शेषेलोपो यथायोगं 'त्वाहौ सौ' 'यूयवयौ जसि' इति त्वाहादयश्च । एभ्योऽपि क्यङि अतियुष्मद्यते, अत्यस्मद्यते इति भवतः । उदाहरणान्यवशिष्टानि प्रक्रिया च इच्छाक्यजन्तवदुन्नेयानि । अवर्णस्येत्यादिकं 'क्यचि च' इति विधीयमानमिह न भवति ।

कुमारीवाचरति कुमारायते, हरिणीवाचरति हरितायते, गौरीवाचरति गौरायते, गुर्वीवाचरति गुरूयते—'क्यङ्मानिनोश्च' इति स्त्रीशब्दस्य पुम्वच्छब्दः । अत्र 'स्त्रियाः पुंवद्भाषितपुंस्कात्' इति वर्तते, तत्र स्त्रीशब्देन स्त्र्यर्थे शब्द उच्यते,

पुंवच्छब्देन पुमर्थः। भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कः, तद्योगाच्छब्दोऽपि, स चेह स्त्र्यर्थः। ऊङोऽभावः अनूङ्, षष्ठ्यर्थे प्रथमा। भाषितपुंस्कात् पर ऊङोऽभावो यस्मिन् स्त्रीशब्दे स भाषितपुंस्कादनूङ्। निपातनात् पञ्चम्या अलुक्। एतदुक्तं भवति—पुंसि यत्प्रवृत्तिनिमित्तं तदुक्तस्वार्थवाचिनः शब्दस्य पुम्शब्द आदेशो भवति, ऊङन्तस्य नेति। तेन 'श्वसुरस्योकाराकारलोपश्च' इति ऊङि श्वश्रूयते इत्यत्र पुवत्त्वं न भवति। तथा भाषितपुंस्कत्वाभावाद् द्रोणीयते इत्यादौ न भवति। अत्र हरदत्तः—पुंसि द्रोणशब्दस्य परिमाणं प्रवृत्तिनिमित्तमाह। स्त्रियां तु द्रोणीत्वं जातिः। कैयटकारस्तु—'द्रोणशब्दः परिमाणवृत्तिर्भाषितपुंस्कः, स एव भेदोपचारात्सादृश्यनिबन्धनप्रत्यभिज्ञानवशात् तत्त्वनिबन्धनप्रत्यभिज्ञानवशाद्वा स्त्रियां वर्तते' इति। नन्वत्र पुंसि स्त्र्यर्थशब्दः अर्यमाणत्वेन निमित्तेन पुंसि वर्त्तते इति पुंसि प्रवृत्तिनिवृत्तेनार्यमाणत्वेन युक्तस्य स्त्र्यर्थयोगोऽस्तीति स्यादेव द्रोण्यादीनां भाषितपुंस्कत्वम्, नैतत्; एवं हि व्यावर्त्याभावाद् भाषितपुंस्कग्रहणमनर्थकं स्यात्। अतो यः शब्दो भाषितपुंस्केन यत्प्रवृत्तिनिमित्तेन युक्तस्तद्युक्तं स्त्र्यर्थं तद्रूपेणाह स एव भाषितपुंस्क आश्रीयते, न तु रूपान्तरेणापि। न च द्रोण्यादिशब्दः स्वार्थमर्यमाणतयाऽऽहेति। एवमपि द्यौरिवाचरति दीव्यति इति दिवशब्दस्य स्वर्गशब्दस्य चैकमेव प्रवृत्तिनिमित्तम्। अस्ति च तद्युक्ततया स्वार्थभिधानमित्यर्थसाम्यात् पुंल्लिङ्गः स्वर्गशब्दः प्राप्नोति, नैष दोषः; यस्य शब्दस्य पुंवद्भावः स एव शब्दः स्त्रीकृतविकृतिरहितः पुमांसमाहेति प्रत्यासत्त्या लब्धत्वात्। न च दिवशब्दः पुमांसमाह। इदमत्र सूत्रार्थतत्त्वम्—यः शब्दो येन प्रवृत्तिनिमित्तेन पुंसि प्रवृत्तः तेनैव चेत् स्त्रियां वर्तते तस्य पुंवद्भाव; ऊङन्तस्य नेति। एवं च हंसस्य स्त्री वरटा, सारसस्य लक्ष्मणा, अङ्गारकस्य कालिका, कच्छपस्य डुलिः, ऋषभस्य रोहिणी, पुरुषस्य योषिदित्यादौ नित्यस्त्रीवचनानां वरटादीनां पुंवत्त्वेन हंसादयो न भवन्तीति वरटायते इत्यादि भवति। शक्यन्ते च साहचर्यात्पुंशब्दैरपि स्त्रीशब्दार्थं प्रतिपादयितुम्। यद्येवं गर्भिणीवाचारति गर्भीयते इत्यत्र कथं पुंस्त्वम्; यतो गर्भो व्रीहिरित्यादौ पुंस्यवयवभूतगर्भसम्बन्धः प्रवृत्तिनिमित्तम्, स्त्रियान्त्वनवयभूतगर्भसम्बन्ध इति प्रवृत्तिनिमित्तं भिद्यते? नेष दोषः; यदुभयत्रापि गर्भसम्बन्धमात्रमेव प्रवृत्तिनिमित्तम्। एवं प्रसूतप्रजातादिशब्दानामप्यपत्यापत्यवत्सम्बन्धमात्रं प्रवृत्तिनिमित्तम्; न तु पुंसि गर्भाधानम्, स्त्रियां तु गर्भविमोचनमिति समानप्रवृत्तिनिमित्तत्वात् प्रसूतायते इत्यादौ पुंस्त्वं भवति। इदं च प्रसूतभार्य इत्याद्यर्थमवश्यमेवेष्टव्यम्। समानः पतिरस्याः सपत्नी—'नित्यं सपत्न्यादिषु' इति नकारे ङीप्। अत एव निर्देशात्समानस्य सभावः। सपत्नीवाचरति इत्यत्र 'सपत्नीयते इति भवितव्यम्' इति न्यासे, यदाह 'नित्यं सपत्न्यादिषु' इत्यत्र–'समुदायस्योच्चारणं

नियोगत एषां समुदाय ईकारान्त एव यथा स्यादित्येवमर्थम्। तेन सपत्नीभार्य इति स्त्रियाः पुंवद्भावो न भवति' इति। तसिलादिष्वित्यत्र भाष्यकैयटयोस्तु 'भस्याढे तद्धिते' इति पुंवत्त्वं प्रस्तुत्य कुण्डिनीशब्दाद् गर्गादियञि पुंवत्त्वेन कुण्डिञ्छब्दे 'नस्तद्धिते' इति टिलोपे कौण्ड्यः इति प्राप्नोति। तथा सपत्नी-शब्दात् शिवाद्यणि सपतिशब्दादेशे सापत इति चोदयित्वा ढग्रहणमपनीय तत्र 'अनपत्ये' इति न्यस्यापत्यप्रत्यये पुंवद्भावाभावाद्यत्रीकारस्य 'यस्येति च' इति लोपे तस्य 'नस्तद्धिते' इति टिलोपस्य स्थानिवत्त्वान्नान्तस्य तद्धितपरत्वाभावात् कौण्डिन्य इति सिध्यति। तथा शिवाद्यणोऽपत्यप्रत्ययत्वात्सपतिशब्दादेशाभाव इति परिहृत्य एवं सति गार्ग्यायण्या अपत्ये कुत्सिते, 'गोत्रस्त्रियाः कुत्सने ण च' इति णे तस्यापत्यप्रत्ययत्वेन पुंवद्भावाद्गार्ग्यायण इति स्यात्, न त्विष्टम् गार्ग्यः इति दोषमुद्भाव्य तत्सम्परिहाराय 'भस्याढे' इत्येव संस्थाप्य कौण्डिन्ये 'आग-स्त्यकौण्डिन्ययोः' इति निपातनात् परिहृत्य सापत्ने तु 'नित्यं सपत्नी' इति समु-दायनिपातनं परिहारमनभिधाय शत्रुपर्यायात्सपत्नशब्दाच्छार्ङ्गरवादिषु दृष्टत्वात् ङीनि शिवाद्यणिति परिहृतम्। अत एव शिवादौ समानपतिलक्षणस्य सपत्नी-शब्दस्य ग्रहणं नेत्यवसीयते। ग्रहणे हि तस्मादणि पुंवत्त्वेन सापत इति रूपं दुर्वारमेव स्यात्। अत एव 'सापत इति प्राप्नोति' इति भाष्ये[1] 'नित्यं सपत्न्यादिषु' इति निर्देशेन भवन्समानस्य सभावो ङीम्नकारयोरसंयोगेऽपि भवतीत्यवसीयते। एवं च न्यासोक्तपुंवत्त्वाभावो भाष्यकृतोऽनभिमत इत्यवसीयते। समुदायनिपातनं तु रूढ्यर्थेऽपि स्यादिति न सूत्रभाष्यविरोधः। एवं सति समानपतिलक्षणात्सपत्नी-शब्दाल्लिङ्गविशिष्टपरिभाषया पत्युत्तरपदलक्षणे ण्ये सापत्य इति भाव्यम्। तथा भावकर्मणोरपि पत्यन्तलक्षणे यकि सापत्यमिति।

युवतिरिवाचरति युवायते। यस्तु 'ङ्याप्'सूत्रभाष्ये युवतितरा इत्युदाहरणे 'तसिलादिष्वाकृत्वसुचः' इति पुंवत्त्वाभावः, स तत एव निर्देशात्, नत्वभाषित-पुंस्कत्वात्, नापि यौवनस्य जातित्वेन जातिवाचकत्वात् 'जातेश्च' इति प्रति-षेधात्; यतः स्थानिवत्सूत्रे युवजानिरिति प्रत्युदाजहार। पट्वी च मृद्वी च पट्वी-मृद्व्यौ, ते इवाचरति पट्वीमृदूयते—पूर्वपदस्य क्यङ्परत्वाभावान्न पुंवत्त्वम्। पचेर्ण्वुलि पाचिका, 'मद्रवृज्योः कन्' इति शैषिके कनि मद्रिका; पाचिकायते, माद्रिकायते—'न कोपधायाः' इति पुंवत्त्वनिषेधः। अत्र तद्धितग्रहणात्तद्धितेन वा 'युवोरनाकौ' इत्यकादेशेन वा यः कोपधस्तस्यैव ग्रहणमिति पाकायते इत्यत्र पुंवत्त्वं भवति। नन्वत्राजादिपाठाट्टापा वयोलक्षणस्य ङीपो बाधात्पुंवत्त्वापुंवत्त्व-योर्न विशेषः, सत्यम्; अत्राविशेषेऽपि अस्ति पाकभार्य इत्यत्र विशेषः। चतुर्थीयते—

---

१. 'कैयटे' इति युक्तः पाठः।

'संज्ञापूरण्योश्च' इति पुंवत्त्वनिषेधः। स्त्रौघ्नीयते—'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इति पुंवत्त्वनिषेधः। वृद्धेर्निमित्तं ञकारो णकारो वा यस्मिन्निति बहुव्रीह्याश्रयणात् यावतीवाचरति यावत्यते इत्यत्र पुंवत्त्वं भवति। अत्र 'आ सर्वनाम्नः' इत्याकारस्य वृद्धेर्वतुरेव निमित्तमिति नासौ वृद्धिनिमित्तः। 'तद्धितस्य' इति वचनात्काण्डलावीवाचरति काण्डलावायते इत्यत्र पुंवत्त्वं भवति। तथा 'अरक्तविकारे' इति वचनात्कषायेण रक्ता शाटी काषायी—'तेन रक्तं रागात्' इति अणि ङीप्, खदिरस्य विकारः खादिरी ईषा—'पलाशादिभ्यो वा' इति विकारेऽणञोरन्यतरस्मिन् ङीप्—काषायायते, खादिरायते इति पुंवत्त्वं भवति। व्याकरणमधीते वैयाकरणी—'तदधीते तद्वेद' इत्यणि ङीप्, सेवाचरति वैयाकरणायते—'न य्वाभ्याम्' इति निषेधादणो नास्ति वृद्धिनिमित्तकत्वमिति पुंवद्भावः। निमित्तशब्दः कुर्वद्रूपवचनः। दीर्घाः केशा अस्या दीर्घकेशी। एवं श्लक्ष्णाङ्गी—'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्', 'अङ्गगात्रकण्ठेभ्यश्चेति वक्तव्यम्' इति पाक्षिको ङीप्। दीर्घकेशीयते, श्लक्ष्णाङ्गीयते—'स्वाङ्गाच्चेतोमानिनि' इति स्वाङ्गवचनात् परो य ईकारस्तदन्तस्य मानिनोऽन्यस्मिन्परे पुंवत्त्वं निषिध्यते। करिणीयते, इडविडयते, दरधते, कठीयते—'जातेश्च' इति पुंवत्त्वनिषेधः। 'गोत्रञ्च चरणैः सह' इति गोत्रचरणयोर्जातिवाचित्वम्। इहापत्यमात्रं गोत्रम्, अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यते इति। चरणशब्दः शाखाध्यायिनि रूढः। अत्र इडविड् नाम जनपदो राजा चेति जनपदसमानशब्दत्वात् 'जनपदसमानशब्दात्क्षत्रियादञ्' इत्यञः 'ते तद्राजाः' इत्यापादपरिसमाप्तेः प्रत्ययानां तद्राजसंज्ञकत्वात् 'अतश्च' इति अकारप्रत्ययत्वेन स्त्रियां लुकि इडबिड् स्त्री, ऐडबिडः पुमान् भवति। दरदोऽपि जनपदसमानशब्दत्वात् 'द्वयञ्मगध' इत्यणः पूर्वं लुकि दरद् स्त्री, दारदः पुमान्। एते गोत्रवचनाः। कठशब्दात् 'कलापिवैशम्पायनान्तेवासिभ्यश्च' इति प्रोक्ते छन्दसि णिनेः 'कठचरकाल्लुक्' इति लुकि 'छन्दोब्राह्मणानि च तद्विषयाणि' इति छन्दोब्राह्मणप्रत्ययान्तानामध्येतृप्रत्ययविषयत्वात् 'तदधीते तद्वेद' इत्यणि तस्य 'प्रोक्ताल्लुक्' इति प्रोक्तप्रत्ययान्तात्परत्वेन लुकि शाखाध्येतरि वृत्तिः।

भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ( ३।१।१२ )—अत्राच्वेरित्येकवचनं भृशाद्यवयवापेक्षम्। अयं च पर्युदास इति तत्सदृशप्रतिपत्त्या अभूततद्भावविषयेभ्यो भुवि भवत्यर्थे क्यङिति अर्थो भवति। प्रसज्यप्रतिषेधे तु भवतियोगे च्विविधानाद् भवतिनैव स्वार्थस्य भवनस्योक्तत्वान्न क्यङः प्रसङ्गः इति अच्वेरिति वचनमनर्थकं स्यात्। न च सत्यस्मिन् च्व्यन्तादुत्पद्यमानेन क्यङा भवतेरनुप्रयोगस्य बाधनमाशङ्क्यम्; यदिदमच्व्यन्ते सावकाशं भवतेरभावे च्वेरप्यभावस्तद्योगे तस्य विधानात्। न च क्यषा योगे डाच इव वचनप्रामाण्याद्भवतेरभावेऽपि क्यङो योगे च्वेः कल्पनं युक्तम्; यत इदं वचनमच्व्यन्ते सावकाशम्। 'भृशादिभ्यः' इति पञ्चमी

लोपविधौ स्थानषष्ठी सम्पद्यते। तत्र विशेषणेन हला तदन्तविधौ भृशादिषु हलन्तानामन्त्यस्य लोप इति अर्थो भवति। एवं चशब्दोऽन्वाचये भवति। अभृशो भृशो भवति भृशायते। शीघ्रायते। चपलायते। मन्दायते। पण्डितायते। रेहायते— 'रेहः शब्दो रहसि निर्घृणत्वे भिक्षाभिलाषस्य च निवृत्तौ वर्तते' इति गणवृत्तौ। तृपायते—तृपश्चन्द्रः समुद्रश्च। वेहायते—वेहद्गर्भोपघातिनी। अण्डरायते— 'अण्डरो मूर्खोऽपुष्करश्च' इति गणवृत्तौ। 'अण्डार इत्यन्ये' इति च। ओजायते, वर्चायते—ओजोवर्चसौ वृत्तिविषये तद्वति वर्तेते। रोहायते—रोहस् सरोष इति गणवृत्तौ। दुर्मनायते। सुमनायते। उत्सुकायते। उन्मनायते। शण्डायते। बृहायते। अभिमनायते—अत्र सुदुरभिभ्यो मनःशब्दः पठ्यते, तत्र सोपसर्गात्संग्रामयतेरेव धातुसंज्ञानिमित्तः प्रत्यय इति ज्ञापनान्मनस एव प्रत्यय इति स्वमनायते इत्यादि भवति। 'सुबामन्त्रित' इत्यत्र 'मनस्युपसर्गे' इति मनसि परे उपसर्गस्य पराङ्गवद्भाववचनात्सुमनायते इत्यादौ 'तिङ्ङतिङः' इति निघातो न भवति। देवदत्तः सुमनायते इत्यादौ सोपसर्गस्य निघातो भवति। अत्रामी भृशादयोऽस्माभिः श्लोकगणपाठानुरोधेन पठिताः। गणवृत्तौ तु बृहच्छब्दो न दृश्यते। मन्द्रशब्दस्तु पठ्यते, तथा कण्डरशब्दश्च त्वचोऽभ्यन्तरे स्थूलतन्त्वाभा असंयुक्ता स्नायुः महास्नायुः कण्डरा, तद्वान्कण्डरः, मत्वर्थे 'अर्शआदिभ्योऽच्' इति व्याख्यातं च।

लोहितादिडाज्भ्यः क्यष् (३।१।१३)—अत्र भुवीति वर्तते, अच्वेरिति च। अत्रैतड्डाचो न विशेषणम्, असम्भवात्। 'अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्' इति डाच् विधीयते। यत्र ध्वनौ वर्णविशेषा न व्यज्यन्ते सोऽव्यक्तः, तस्यानुकरणमव्यक्तानुकरणम्। तस्मात् 'डाचि बहुलं द्वे भवतः' इति डाचि विषयभूते द्विरुक्ताद् द्व्यजवरार्धात् अनितिपरात् कृभ्वस्तियोगे डाज् भवतीति सूत्रार्थः। यस्य द्विरुक्तस्य समुदायस्य प्रविभज्यमानमर्द्धं अवरं सुष्ठु न्यूनं द्व्यज् भवति तद् द्व्यजवरार्धम्। अवरशब्दोऽपकर्षे। अतएव वचनात् कृभ्वस्तिभिरिव क्यषापि योगे डाज् भवतीत्यवसीयते। न च भवतियोगे डाचि कृते क्यषः प्रसङ्गः, भुवो भवतिनैवोक्तत्वात्। अलोहितो लोहितो भवति लोहितायति। लोहितायते—'वा क्यषः' इति पक्षे तङ्। लिङ्गविशिष्टपरिभाषया लोहिनीशब्दात्क्यषि लोहिनीयति, लोहिनीयते इति भवति। पटपटायति। पटपटायते— अत्र 'डाचि बहुलम्' इति द्विरुक्ते 'नित्यमाम्रेडिते डाचि' इत्यव्यक्तानुकरणस्यान्त्यस्याम्रेडितादेः पररूपे 'टेः' इति टिलोपः। इदमेव पररूपवचनं ज्ञापकम् 'डाचि बहुलं द्वे' इत्यस्य विषयसप्तमीत्वे। अत्र लोहितात्परेषां नीलहरितमन्द्रफेनमुण्डानां भृशादौ पाठः कर्त्तव्यः। तथा च वार्त्तिकम् 'लोहितादिडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि' इति। अत्र वृत्तौ— "न हि पठितेषु लोहितादिषु नान्तोऽस्तीति 'नः क्ये' इति पदत्वसामान्यग्रहणार्थेन क्यषः ककारेणास्याकृतिगणत्वज्ञापनादन्यानि संगृह्यन्ते, तेषां भृशादावनुप्रवेशः"

इति स्थितम्, यदाह—'यानि पठ्यन्ते तेभ्यः क्यङेव भवात, अपठितेभ्यस्तु क्यषेव' इति। तेन निद्रायति, निद्रायते, करुणायति, करुणायते, चर्मायति, चर्मायते इत्यादि भवति। निद्राकरुणाशब्दौ वृत्तिविषये तद्वति वर्तेते। यद्वा निद्रातेः 'आतश्चोपसर्गे' इति कर्तरि कप्रत्ययान्तो निद्राशब्दो भवति। अत्र गणवृत्तौ—

'लोहितश्यामदुःखानि हर्षगर्वसुखानि च। मूर्च्छा निद्रा कृपा धूमा करुणा नित्यचर्मणी।'

इत्याकृतिगणसिद्धानि पठ्यन्ते।

कष्टाय क्रमणे (३।१।१४)—क्रमणमनार्जवः। अत एव निर्देशाच्चतुर्थ्यन्तात् कष्टशब्दादनार्जवे क्यङ् भवति, कष्टं कृच्छ्रं दुःखम्, इह तु तत्कारणं कर्म। कष्टाय कर्मणे क्रामति कष्टायते, कष्टं कर्तुं कुटिलमाचरतीत्यर्थः। अत्र वार्त्तिकम्—'सत्रकष्टकक्षकृच्छ्रगहनेभ्यः कण्वचिकीर्षायाम्' इति। कण्वस्य पापस्य चिकीर्षा कण्वचिकार्षा, सा चेह वृत्तिविषये 'सत्रादयः पापवचनाः चिकीर्षायां प्रत्ययः' इति समुदायार्थो भवति। एवं च पापवचनेभ्यो द्वितीयान्तेभ्यः सत्रादिभ्यः चिकीर्षायां प्रत्यय इति वार्त्तिकार्थः सम्पद्यते। सत्रायते इत्यादि।

कर्मणो रोमन्थतपोभ्यां वर्तिचरोः (३।१।२५)—कर्मण इत्यवयवापेक्षमेकवचनम्, तेन रोमन्थतपोभ्यां कर्मभ्यां यथासंख्यं वर्तिचरोर्धात्वर्थयोः क्यङ् प्रत्ययो भवतीत्यर्थो भवति। कर्मत्वं च रोमन्थतपसोः श्रुतवर्तिचरिक्रियापेक्षम्। वर्तिरित्यत एव निर्देशाण्ण्यन्तादपि क्तिन्। चरिति चरतेः सम्पदादित्वाद्भावे क्विप्। रोमन्थं वर्तयति रोमन्थायते, तपश्चरति तपस्यति—'तपसः परस्मैपदं च' इति परस्मैपदम्। अत्र 'हनुचलन इति वक्तव्यम्' इत्युक्तत्वात् कीटो रोमन्थं वर्तयतीत्यत्र क्यङ् न भवति। अत्र न्यासपदमञ्जर्योः अपानप्रदेशान्निःसृतं द्रव्यं कीटो वर्तुलं करोतीत्यर्थोऽभिमतः। कैयटे त्वपानप्रदेशान्निसृतं द्रव्यमश्नातीति।

बाष्पोष्मभ्यामुद्वमने (३।१।१६)—'फेनाच्चेति वक्तव्यम्'। कर्मग्रहणमनुवर्तते, तच्च श्रुतोद्वमनक्रियापेक्षं बाष्पादिभिः सम्बध्यते। बाष्पमुद्वमति वाष्पायते।

शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे (३।१।१७)—कण्वशब्दः पापवचनः। करणं क्रिया करोत्यर्थः, न पारिभाषिकम्; तस्मिन्हि कर्मण इत्यनेन सम्बद्धैः शब्दादिभिः सम्बन्धो न स्यात्। शब्दादिभ्यः कर्मभ्यः करणे क्यङ् भवति। शब्दं करोति शब्दायते। एवं वैरायते। कलहायते। अभ्रायते। कण्वायते। मेघायते। अत्र न्यासे 'यद्यप्ययं तत्करोतीति णिचि प्राप्ते आरभ्यते, तथापि तन्न बाध्यत इति शब्दयतीत्याद्यपि भवति' इत्युक्तम्। अत्र वार्तिकम्—'सुदिनदुर्दिनाभ्यां च', 'नीहाराच्च', 'अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणं कर्तव्यम्' इति। पोटा, स्त्रीपुंसलक्षणा स्त्री। अतोऽन्ये अटाट्टादयः क्रियावचनाः। सुदिनं करोति इति सुदिनायते इत्याद्युदाहार्यम्।

सुखादिभ्यः कर्तृवेदनायाम् (३।१।१८)—'कर्तृ' इति पृथक् पदं लुप्तषष्ठीकम्। वेदनाज्ञानकर्तृत्वं च श्रुतवेदनक्रियापेक्षम्, तेन वेदनक्रियायाः कर्तुराधाराधेयभावेन सम्बन्धिभ्यः सुखादिभ्यो वेदनायामर्थे क्यङ् भवतीत्यर्थो भवति। सुखं वेदयते सुखायते, सुखमनुभवतीत्यर्थः। वेदयित्रा सुखादीनां विशेषणात्सुखं वेदयते प्रसाधको देवदत्तस्येत्यत्र क्यङ् न भवति। अत्र प्रसाध्यगतं सुखं प्रसाधकोऽक्षिनिमीलनादिना जानातीत्यर्थ इति सुखं वेदयितृगतं न भवति। अत्र श्लोकगणकारः—

'सुखदुःखगहनतृप्राण्यस्त्रालीकप्रतीपकरुणाश्च।
कृपणः सोढ इतीमे सुखादयो दश गणे पठिताः॥' इति।

अत्र गणरत्नमहोदधौ आस्त्रशब्दोऽपि पठ्यते। यदाह—'आस्त्रमेवास्त्रम्' इति। तृप्रं दुःखम्, सोढं सहनम्, अभिभवो वा।

नमोवरिवश्चित्रङः क्यच् (३।१।१९)—अत्रानुवृत्तं करणग्रहणम् अभिधानशक्तिस्वाभाव्यात् क्रियाविशेषपरम्। यदाह वृत्तिकारः—'नमसः पूजायाम्, वरिवसः परिचर्यायाम्, चित्रङ् आश्चर्ये' इति। नमस्यति देवान्, वरिवस्यति गुरून्, चित्रीयते, आश्चर्यवान् भवतीत्यर्थः। अन्ये तु परस्याश्चर्यङ्करोतीत्यर्थ इति। यदाह भट्टिः—'ततश्चित्रीयमाणौऽसौ[1]' इति। अत्रावयवे कृतं लिङ्गं समुदायस्येति न्यायेन चित्रङो ङकारस्य समुदायार्थत्वादात्मनेपदम्। नमस्यति देवान् इत्यत्र 'उपपदविभक्तेः कारकविभक्तिः' इति 'नमः स्वस्ति' इति चतुर्थीम्बाधित्वा कर्मणि द्वितीया भवति।

पुच्छभाण्डचीवराण्णिङ् (३।१।२०)—ङकारस्तङर्थो णिग्रहणेषु सामान्याविघातार्थश्च। णकारो णिग्रहणेषु सामान्यग्रहणायैव, वृद्धिभाजः प्रकृतेरभावात्। इहाप्यनुवृत्तं करणग्रहणं पूर्ववदभिधानस्वाभाव्यात् क्रियाविशेषपरम्। तदुक्तं वृत्तौ—'पुच्छादुदसने पर्यसने वा, भाण्डात्समाचयने, चीवरादर्जने परिधाने वा' इति। उदसनमुत्क्षेपणम्। पर्यसनं परितः क्षेपणम्। समाचयनं राशीकरणम्। अर्जनमार्जवनम्। परिधानमाच्छादनम्। उत्पुच्छयते। सम्भाण्डयते। सञ्चीवरयते। अत्रोदादीनां प्रयोग उदसनाभिव्यक्तये, पुच्छादेः कर्मणो धातावन्तर्भावादकर्मका एते। यक्चिणोः प्रतिषेधे 'णिश्रन्थिग्रन्थि' इत्यत्र णिग्रहणेनाप्यस्य ग्रहणात्कर्मकर्तरि पक्षे यक्चिणोरभावात् उत्पुच्छयतं गौः स्वयमेव, उदपुपुच्छत गौः स्वयमेव इति शप्चङौ भवतः। यदा उत्पुच्छयतिरन्तर्भावितण्यर्थस्तदा उत्पुच्छयते गामिति गौः कर्म भवतीति कर्मकर्तृत्वलाभः। उत्पुच्छयतेः क्वौ णेर्लोपे सोर्हल्ङ्याब्भ्यादिलोपे संयोगान्तलोपे उत्पुत् इति भवति। व्रश्चादिषत्वं संयोगान्तलोपे न भवति। ननु 'छ्वोः शूड्' इति शत्वे तस्य व्रश्चादिषत्वे तस्य च जश्त्वे उत्पुडिति भाव्यम्, तन्न; यतः शत्वविधौ सतुक्कच्छो गृह्यते, इह तु पुदं (गुदं) छादयतीति पुच्छशब्द-

---

1. भ० का० ५।४६।

व्युत्पत्तेस्तकारस्तुकः सम्बन्धी न भवति। ननु यत्र सतुक् छकारो न सम्भवति तत्र केवलो गृह्यते इत्यपि स्थितेः वाञ्छतेः क्वौ वान्, वांशौ इतिवदत्रापि शत्वेन भवितव्यम्? भवतु कामम्, तस्यापि संयोगान्तलोपे उत्पुद् इति भविष्यति। द्विवचनादौ 'स्तोः श्चुना श्चुः' इति दकारस्य श्चुत्वे 'शश्छोऽटि' इति शकारस्य छत्वे उत्पुच्छौ इत्यादि सेत्स्यति।

'मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्' (३।१।२१)—एभ्यः करणे णिच् भवति। मुण्डं करोति मुण्डयति माणवकम्। मिश्रयत्यन्नम्। श्लक्ष्णयति वस्त्रम्। लवणयति व्यञ्जनम्। व्रताद्भोजने तन्निवृत्तौ वा—पयो व्रतयति, पयो भुङ्क्ते इत्यर्थः। वृषलान्नं व्रतयति, परिहरतीत्यर्थः। अत्र भोजनतन्निवृत्ती व्रतशब्दार्थाविति पूर्ववत्करणे प्रत्ययः। श्रूयते च भोजने व्रतशब्दः—'यदस्य पयोव्रतं भवत्यात्मानमेव तद्वर्धयति, त्रिव्रतो वै मनुरासीत्, द्विव्रता असुराः, एकव्रता देवाः' इति। पस्पशायां च 'शक्यं चानेन श्वमांसादीन्यपि व्रतयितुम्' इति। अयमेव व्रतशब्दो दर्शादिवद्विपरीतलक्षणया तन्निवृत्तौ वर्तते। 'वस्त्रात्समाच्छादने'—संवस्त्रयति प्रावरणम्, अत्रापि पूर्ववत्समाच्छादनं प्रकृत्यर्थं इति केचित्। प्रत्ययार्थे हि प्रकृत्यर्थेन वस्त्रेणैकार्थीभूतस्य प्रावरणान्वये सामर्थ्याभावान्न स्यात्। अथ 'मुण्डयति नापितः' इत्यादौ व्यपेक्षाभावे साकांक्षं मुण्डादिभ्यो णिज्वचनं 'तत्करोति' इत्येव सिद्धे णिच्यारभ्यमाणत्वाद्यथा माणवकं मुण्डयतीत्यादौ सापेक्षत्वेऽपि भवति तथेहापि स्याद्, नैतदस्ति; तत्र हि मुण्डादयो धर्मिवचना धर्ममपेक्षन्ते, न तद्वदिह वस्त्रमपेक्षते। अथैवं स्यात्—मुण्डादौ प्रकृतेरन्यापेक्षावदत्र प्रत्ययार्थस्यान्यापेक्षास्तीति? एवं ह्यर्थो न सङ्गच्छते; यतः संवस्त्रयति प्रावारमित्यस्य प्रावारं वस्त्रं छादयतीत्यर्थः स्यात्, न चैवमिष्यते, प्रावारमाच्छादयतीत्येवेष्यते। अथोच्यते उभयमपीष्यताम् इति? एवं हि वस्त्रसामान्ये प्रावारस्यान्तर्भावात्तत्प्रयोगो व्यर्थः स्यात्। अथ 'ब्राह्मणा आयाता वसिष्ठोऽप्यायातः' इतिवत् विशेषस्य प्रावारस्य प्राधान्यख्यापनाय प्रयोगः स्यात्, तन्न; यत एकस्मिन्वाक्ये एकस्य प्राधान्यमपरस्य चाप्राधान्यं प्रतिपादयितुं न शक्यते। अत्र सुधाकरः समाच्छादनं प्रत्ययार्थमेवाह, विशेषकर्मणोऽनभिहितत्वात् तद्विशेषप्रयोगो यथा भवति माणवकमितीति। एवं सति वस्त्रसामान्यस्य प्रावारो विशेषको भवति। हलादीनां त्रयाणां ग्रहणे प्रत्ययः। हलं गृह्णाति हलयति। एवं कलयति। कृतयति इत्यादि। अत्र वार्त्तिकम्—'हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थम्' इति, ततः अजहलत्, अचकलत्—इत्यत्राग्लोपित्वात् 'सन्वल्लघुनि' इतीत्वं न भवति। अक्रियमाणे पुनरत्वनिपातने इकारस्य णाविष्ठवदिति टिलोपात्परत्वाद् वृद्धावैकारे तस्यादेशात्पूर्वं परत्वाल्लोपे अग्लोप्यङ्गं न स्यात्। नन्वैकारस्य लोपस्य पूर्वविधावित्वे 'अचः परस्मिन्पूर्वविधौ' इति स्थानिवत्त्वेनाङ्गस्य चङ्परणिपरत्वविघातात्

किमनेनाग्लोपित्वार्थेनात्वनिपातनेन ? नैतदस्ति; अभ्यासस्य आदिष्टादचः पूर्वत्वेन तस्येत्वे स्थानिवत्त्वाप्रसङ्गात् । एवमपि कृताकृतप्रसङ्गित्वेन नित्यत्वाद् वृद्धेः पूर्वमेवेकारो लोप्स्यते इति अग्लोपित्वसिद्धेर्नार्थोत्वनिपातनेनेति चेत्, न; यस्माद् वृद्धौ शब्दान्तरप्राप्त्या भवत्यनित्यो लोपः । तूस्ताद्विहनने, 'तूस्तं केशः' इति श्रीमद्रः । 'जटीभूताः केशाः' इति बोधिन्यासे । 'पापम्' इति वैजयन्त्याम् । तूस्तानि विहन्ति वितूस्तयति । विहननद्योतनाय वेः प्रयोगः ॥

**सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूरादिभ्यो णिच् ( ३।१।२५ )**— अत्राप्यनुवृत्तं करणग्रहणं क्रियाविशेषोपलक्षणम्, अत्र 'सत्याप' इति निर्देशेन णिचः सन्नियोगेन सत्यस्मात्पुक्, टिलोपाभावश्च भवति । अत्र वार्त्तिकम्—'अर्थवेदसत्यानामापुग्वक्तव्यः' इति । अत्र भाष्यम्—'सत्यस्य कृञि आपुक्च' इति । वृत्तौ तु 'सत्यमाचष्टे सत्यापयति' इत्युक्तम् । अत्र हरदत्तः—'भाष्ये कृञीत्यर्थनिर्देशः प्रयोगदर्शनवशादिहाख्यानार्थः' इति । एवम् अर्थापयति, वेदापयति, पाशं विमुञ्चति विपाशयति, पाशाद्विमोचयति विपाशयति इत्यपि चोपपद्यते । रूपं पश्यति रूपयति, वीणया उपगायति उपवीणयति, तूलैरनुकुष्णाति अनुतूलयति, श्लोकैरुपस्तौति उपश्लोकयति । सेनयाऽभियाति अभिषेणयति—'उपर्गात्सुनोति' इत्यादिना षत्वम् । अभ्यषेणयत्—'प्राक्सितादड्व्यवायेऽपि' इति षत्वम् । अभिषिषेणयिषति—'स्थादिष्वभ्यासेन' इति साभ्यासस्य षत्वम् । लोमान्यनुमार्ष्टि अनुलोमयति—णाविष्ठवदिति टिलोपः । त्वचं गृह्णाति त्वचयति—अच्प्रत्ययान्तोऽयमकारान्तः, तेनाल्लोपस्य स्थानिवत्त्वात् 'अत उपधायाः' इति वृद्धिर्न भवति । हलन्तस्य तु तत्करोतीति णौ त्वाचयति इति भवति । टिलोपस्तु 'प्रकृत्यैकाच्' इति प्रकृतिवद्भावान्न भवति । वर्मणा सन्नह्यति संवर्मयति, वर्णं गृह्णाति वर्णयति, चूर्णैरवध्वंसयति अवचूर्णयति—अत्रावध्वंसनमेव करणमिति इन्दुश्रीभद्रौ ।

चुरादयो माधवीयां धातुवृत्तौ व्याख्याताः । अत्रार्थविशेषाः, तदनुरूपाः समर्थविभक्तयश्च लोकप्रसिद्धानुसारेण वृत्तिकारेण दर्शिताः इत्यस्माभिरपि तथैव प्रदर्शिताः ।

## अथान्येभ्योऽपि णिच् प्रदर्श्यते—

**प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च ( चु० धा० सू० २९७ )**—प्रातिपदिकाद्धात्वर्थे णिच् भवति, इष्ठनीव चास्मिन्बहुलं कार्यं भवति । अस्यैव धातुसूत्रस्य प्रपञ्चः— 'तत्करोति', 'तदाचष्टे', 'तेनातिक्रामति' 'कर्तृकरणाद्धात्वर्थे' इति सूत्राणि । अत्र कर्तृग्रहणं करणस्य विशेषणम्, करणत्वेन लोके प्रसिद्धानां चक्षुरादीनामेव ग्रहणं मा भूदिति । अन्यथा चक्षुषा पश्यति चक्षयति, श्रोत्रेण शृणोति श्रोत्रयति इत्यादावेव स्यात्; न तु करिभिरवबध्नाति अवकरयति, परशुना छिनत्ति परशयति

इत्यादावपि। एवं च 'तेनातिक्रामति' इत्येतत्कर्तृकरणादित्यस्यैव प्रपञ्चो भवति। अत्र 'तत्करोति' इत्यादौ तदित्यादिप्रकृते कर्मत्वादिमात्रप्रतिपादनार्थम्, न तु द्वितीयाद्यन्ततार्थमपीति कर्मत्वादिविशिष्टात्प्रातिपदिकादेव णेर्विधानात् पटुमाचष्टे इति णेर्विवक्षायां पटोः प्रातिपदिकात् 'णाविष्ठवद्' इति टिलोपे तस्य 'अत उपधायाः' इति वृद्धौ 'अचः परस्मिन्' इति स्थानिवत्त्वात्तदभावे पटयति इति भवति। सुबन्तादुत्पत्तौ 'सुपो धातुप्रातिपदिकयोः' इति सुपो लुकि टेश्च लोपेऽवशिष्टस्य प्रत्ययलक्षणेन सुबन्तत्वात् पदत्वे पडयतीति जश्त्वं स्यात्। न च टिलोपस्य स्थानिवत्त्वेन टकारस्य पदान्तत्वाभावाज्जश्त्वाप्रसङ्गः; यतः 'न पदान्त' इत्यादिना जश्त्वे स्थानिवत्त्वं निषिध्यते। न च णौ कृतया भसंज्ञया पटोः टावघेः पदसंज्ञाबाधः; यदस्यां टिलोपः स्थानिवद्भवति। अयं च प्रातिपदिकाद्विधीयमानो णिच् यथाकथञ्चित् 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति' इति, सिद्धान्तितत्वात् ङ्याबन्तादपि भवति। अत एव 'णाविष्ठवत्' इत्यत्र भाष्ये 'इष्ठवदित्यतिदेशः पुंवद्भावटिलोपयणादिपरविन्मतोर्लुक्नर्थम्' इति दर्शितम्। इदं पुंवद्भादिप्रयोजनकथनं न परिगणनम्; किन्तूदाहरणमात्रमेव। तदुक्तं वृत्तौ-'प्रादयोऽपीष्यन्ते' इति। तत्र पुंवद्भावो यथा—एनीमाचष्टे एतयति, हरिणीमाचष्टे हरितयति, लोहिनीमाचष्टे लोहितयति, कुमारीमाचष्टे कुमारयति इत्यादौ 'भस्याऽढे तद्धिते' इतीष्ठनि विहितः पुंवद्भावो णाविष्ठवदित्यतिदेशादत्रापि भवतीत्येन्यादीनामेतादयः पुंशब्दाः भवन्ति। 'वसिष्ठवदत्र वर्तितव्यम्' इत्यादौ विशेषातिदेशे ब्राह्मणत्वसामान्यनिबन्धनस्याप्यतिदेशादिष्ठवदतिदेशान्नात्र केवलमिष्ठनोऽसाधारणरूपं निबन्धनं तुरिष्ठेमेयःस्वित्यादिकमेव कार्यमतिदिश्यते, किन्तु भसंज्ञानिमित्ततद्धितत्वादिनिबन्धनमपीति पुंवद्भावोऽतिदेशस्य प्रयोजनमुक्तम्। अनेन चेष्ठवद्भावेन नेष्ठनि दृष्टमेवातिदिश्यते, किं तर्हि ? सम्भावितमात्रमपीति कुमारयतीत्याद्युदाहृतम्। अवश्यं चैतदेवं विज्ञेयम्, अन्यथा राजयतीत्यादाविष्ठनोऽनुत्पादाट्टिलोपो न स्यात्। 'टेः' इत्यत्र कैयटे "एतयतीत्यादौ टिलोपेन ङीपि निवृत्ते तत्सन्नियोगशिष्टत्वान्नकारनिवृत्तौ सिद्धायामपि इष्ठवद्भावात् पुंवत्त्वेन रूपसिद्धेर्भाष्ये उक्तत्वात्सन्नियोगशिष्टपरिभाषाया अनित्यत्वज्ञापनात् ऐनेयः, श्यैनेय इत्यत्र 'यस्य' इति लोपेनेकारनिवृत्तावपि नकारो न निवर्तते" इति उक्तम्। पदमञ्जर्यां त्वेवमुक्त्वोक्तम्—"अपर आह 'इडबिडमाचष्टे ऐडबिडयति, दरद्माचष्टे दारदयति इत्यादौ पुंशब्दातिदेशार्थं पुंवद्वचनम्" इति। ननु च इडबिडादीनामिष्ठनि पुंवद्भावो न दृष्टः, इष्टन एव तत्रासम्भवात्। नेष्ठनि दृष्टस्यैवातिदेशः, किं तर्हि ? इष्ठनि सम्भावितस्य; अन्यथा अतिराजयतीत्यादौ टिलोपो न स्यात् इति। अत्रादिशब्देन पृथुमाचष्टे पार्थयति, उशिजमाचष्टे औशिजयति इत्यादि गृह्यते। अत्रेडबिडपृथुशब्दात् क्षत्रियवचनात् 'जनपदशब्दात् क्षत्रियादञ्' इत्यत्रि

तस्य 'ते तद्राजाः' इत्यत्रादीनामापादपरिसमाप्तेः प्रत्ययानां तद्राजत्वात् अतश्च इत्यकारप्रत्ययत्वेन स्त्रियां लुकि इडबिड् स्त्री, ऐडबिडः पुमान्। दरदुशिजोरपि 'द्व्यञ्मगध' इत्यणः पूर्ववल्लुकि दरद् स्त्री, दारदः पुमान्। एवमुशिक् स्त्री, औशिजः पुमान् भवति। नन्वत्रैडबिडादीनां गोत्रवाचित्वात् अपत्याधिकारादन्यत्र लौकिस्य गोत्रस्य ग्रहणाद् 'गोत्रं च चरणैः सह' इति जातिवाचित्वात् 'जातेश्च' इति पुंवद्भावनिषेधः कस्मान्न भवति ? उच्यते; औपसङ्ख्यानिकस्यायं न भवति अनित्यत्वात्। अत एव हस्तिनीनां समूहो हास्तिकम् इत्यत्र लिङ्गविशिष्टपरिभाषया 'अचित्तहस्ति' इति ठकि जातित्वेऽपि पुंवत्त्वं भवति। अनित्यत्वे च ज्ञापकम् 'प्रवाहणस्य ढे' इति प्रवाहणशब्दे पूर्वपदवृद्धि विकल्प्योत्तरपदस्य स्वतः सवृद्धिकस्यापि नित्यं तद्वचनम्। तद्धि प्रवाहणेयीभार्यः इत्यत्र पूर्वपदस्य वृद्ध्यभावेऽपि ढस्योत्तरपदे वृद्धिनिमित्तत्वेन 'वृद्धिनिमित्तस्य' इति पुंवत्त्वनिषेधार्थम्। नित्ये च जातिलक्षणे निषेधे प्रवाहणेयीशब्दस्य गोत्रवाचित्वेन जातित्वादनेनैव पुंवत्त्वनिषेधसिद्धेः किं तदर्थेनोत्तरपदवृद्धिविधानेन ! एवं तर्हि पुंवद्भावस्यैडबिडाद्यर्थत्वात्सन्नियोगशिष्टपरिभाषाया अनित्यत्वे प्रमाणाभावात् कथम् ऐनेयः, श्यैनेय इति सिद्ध्यतः ? तत्रैवं वक्तव्यम्—भाष्यकारेणानन्यथासिद्धम् ऐडबिडयति इत्यनुदाहृत्य ऐतयति श्यैतयति इत्यादेरुदाहरणादनित्यत्वमेवावसास्यते इति पुंवद्भावाभावः।

रभावः—'र ऋतो हलादेः' इति हलादेरङ्गस्य लघोः ऋकारस्येष्ठेमेयस्सु विधीयमानो रभावो णावपि भवति। अत्र परिगण्यते—

'पृथुं मृदुं भृशं चैव कृशं च दृढमेव च। परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत् ॥'

इति। पृथुमाचष्टे प्रथयति। अत्र केचिदाहुः—चङि पृथु इ अत् इति स्थिते टिलोपश्च प्राप्नोति वृद्धिश्च। तत्र पूर्वं टिलोपे वृद्धिर्न प्राप्नोतीत्यनित्या, वृद्धौ तु टिलोपः शब्दान्तरप्राप्त्याऽनित्यः, उभयोरनित्ययोः परत्वात् वृद्धावावादेशात्पूर्वं टिलोपेऽङ्गस्यानग्लोपित्वात् 'सन्वल्लघुनि' इति इत्वे अपिप्रथत् इति भवति। अत एव 'हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थम्' इत्युक्तम्। यदि वृद्धेः पूर्वं टिलोपः स्यात्तर्हि हलिकल्योरिकारलोपेनैवाग्लोपित्वसिद्धेः किमत्वनिपातनेन इति ! 'णौ चङि' इत्यत्र कैयटे तु "'नाग्लोपि' इत्यत्र अल्लोपः इति वक्तव्ये अग्लोपीति प्रत्याहारग्रहणसामर्थ्यात् पट्वादेर्णौ वृद्धेः पूर्वं टिलोपेन भवितव्यमित्यग्लोपित्वेन सन्वदित्त्वाभावात् अपपटत् इत्यादि भवति" इत्युक्तम्। तन्मतेऽत्रापि अपप्रथदिति भवितव्यम्। तथा ह्यवर्णान्तेष्ववर्णोपधेषु च वृद्धावप्यवर्णो लुप्यते। अग्लोपिग्रहणवदल्लोपिग्रहणमपि यत्र केवलस्यावर्णस्य लोपस्तत्र तस्य स्थानिवत्त्वेनोपधात्वविधानादेव ह्रस्वाप्रसङ्गादवर्णानवर्णसमुदायलोपार्थं विज्ञास्यते। इवर्णोवर्णान्तयोस्तु पूर्वं वृद्धावग्लोपित्वासम्भवः। ननु स्वामिनमाख्यत् असस्वामत्,

गोमिनमाख्यत् अजुगोमत्, प्रादुराख्यत् अपप्रादत्, यादृशमाख्यत् अययादत्, तादृशमाख्यत् अततादत् इत्यादौ यत्र वृद्धेरप्रसङ्गादवर्णस्यैको लोपस्तत्रेत्त्वनिवृत्त्यर्थमनग्लोप इति वक्तव्यम्, नैतदस्ति; यदीदृशाण्णिजेव नोत्पद्यते। अत्र च प्रमाणम् 'णौ चङि' इत्यत्र भाष्ये 'नाग्लोपि' इत्यत्र प्रत्याहारग्रहणेन वृद्धेः पूर्वं वा टिलोपज्ञापकस्यावस्थापनम्। स्वामिन्नादेर्णौ तत्कथं सङ्गच्छेत! ननु स्रग्विणमाख्यत् असस्रजत् इत्यत्र विनो लुक्युपधाया वृद्धौ तस्य ह्रस्वनिवृत्त्यर्थमग्लोपिग्रहणं स्यात्, इष्यते च विन्नन्ताण्णिः। इष्ठवद्भावस्य विनो लुकः प्रयोजनस्योक्तत्वात्, नैतदस्ति; यतष्टेरित्यत्र भाष्यकारेण स्रजयति इत्युदाहृतत्वात् 'अङ्गवृत्ते पुनर्वृत्ताविधिनिर्ष्ठितस्य' इति वा वृद्धेरप्रसङ्गात् ह्रस्वभाविन्युपधैव नास्ति। कस्मिंश्चिदङ्गकार्ये वृत्ते पुनरप्याङ्गकार्यवृत्तौ प्राप्तायामविधिस्तस्य कार्यस्य तच्चेदङ्गं परिनिष्ठितं प्रयोगार्हं भवतीति परिभाषार्थः। अस्ति चात्र विन्मतोर्लुकाऽङ्गकार्यस्य वृद्धेः पूर्वं प्रवृत्तिः। तस्मात् ज्ञापकमेव प्रत्याहारग्रहणं वृद्धेः पूर्वं टिलोपप्रवृत्तेः। अत एव वादितवन्तं प्रयोजितवान् अवीवदत् वीणां परिवादकेन इत्यत्र योऽसौ णौ णेर्लोपस्तस्य स्थानिवत्त्वेनाङ्गस्याग्लोपित्वादुपधाह्रस्वत्वनिषेधे प्राप्ते 'उपधाह्रस्वत्वे णेर्णिच्युपसंख्यानं कर्त्तव्यम्' इति वार्त्तिकम्प्रारब्धम्। न च णेः पूर्वं वृद्धौ पश्चाल्लोपेऽङ्गस्यानग्लोपित्वात्तस्य स्थानिवत्त्वेनोकारस्योपधात्वविघाताद् ह्रस्वो न प्राप्नोतीति वार्त्तिकारम्भः स्यादिति वाच्यम्; यतः 'क्विलुगुपधात्वचङ्परणिह्रासकुत्वेषूपसङ्ख्यानम्' इति स्थानिवत्त्वं न्यषेधीत्। किं च—'ण्यल्लोपे' इत्यादिना वृद्धेः पूर्वं णिलोपस्योक्तत्वादनग्लोपित्वशङ्कैव न भवति। अत एव भाष्यकारेणोपधाह्रस्वत्वे 'णेर्णिचि' इति वार्त्तिकमग्लोपित्वाद्ध्रस्वत्वं न प्राप्नोतीत्यारब्धमिति व्याख्यातम्। वृत्तिकारोऽपि वृद्धेः पूर्वं टिलोपमनुमेने, यदाह—'वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन, योऽसौ णौ णिलोपस्तस्य स्थानिवद्भावादग्लोपित्वाद्वाऽङ्गस्य ह्रस्वो न प्राप्नोति' इति। गतमदः।

अपरे हलिकल्योरत्वनिपातनस्य भाष्यवार्त्तिकयोरित्त्वाभावप्रयोजनत्वेन कथनादगिति प्रत्याहारग्रहणाद्, वृद्धेः पूर्वं टिलोप इति भाष्ये व्यवस्थितत्वाच्च वृद्धेरुत्तरकालं पूर्वं वा कामचारेण टिलोप इति अपपटत् अपीपटत् इत्युभयमपीति प्रतिपन्नाः। अत्र मते—अपप्रथत्, अपिप्रथदित्युभयं भवति, एवं म्रदयति इत्यत्रापि। भ्रशयति, कृशयति, द्रढयति। एषां चङि सर्वथाऽग्लोपित्वात् अबभ्रशत्, अचकृशत्, अदद्रढत् इति भवति। परिव्रढयतीत्यत्र सोपसर्गात्संग्रामयतेरेव धातुसंज्ञानिमित्तप्रत्ययो नान्यस्मादिति पृथक्कृतोपसर्गाद् बृढादेरेव प्रत्यय इति 'तिङ्ङतिङः' इति निघातो भवति। पर्यवव्रढयत् इत्यत्र परेः परोऽड् भवति। परिव्रढय्य इत्यत्र परेण्यन्तेन 'कुगतिप्रादयः' इति समासे 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यब् भवति। णेः 'ल्यपि लघुपूर्वात्' इत्ययादेशः। परिबिव्रढयिषति, पर्यबिव्रढत् इत्यत्र संभ्रडो-

ब्रढेरेव द्विर्वचनं भवति। 'सन्यतः' इति सनीत्वम्। सन्वदित्त्वं चङ्यग्लोपित्वान्न भवति इति रभावः।

टिलोपः—पटुमाचष्टे पटयति, टेरिति विहितष्टिलोपो णावपि भवति। तस्य स्थानिवत्त्वादुपधावृद्धिर्न भवति। पटुमाख्यत् अपपटत्—अग्लोपित्वात् सन्वदित्त्वं न भवति। नन्वत्र इष्ठवद्भावेनाङ्गस्य भत्वात् 'यस्य' इति लोपेनापि पटयतीत्यादि-सिद्धेः किं लोपवचनेन? सत्यम्; अत्रैवं सिध्यति, पटुमृदुराजादिभ्यो णौ पटयति म्रदयति, राजयति इत्याद्यर्थमवश्यं टिलोपो वाच्यः। 'सन्वल्लघुनि' इत्यत्र हरदत्तः—'यत्र केवलस्यातो लोपस्तत्र तस्य स्थानिवत्त्वेनाङ्गस्य चङ्परणिपरत्वाभावादेवे-त्वाभावसिद्धेरनग्लोपवचनमज्झल्लोपार्थमपि इति अदद्दषद् अरराजत् इत्यादावपि ईत्वाद्यभावः' इत्याह, तन्न; अनादिष्टादचः पूर्वस्य कस्मिंश्चित्कार्ये विधातव्ये स्थानिवद्भावः, न त्वादिष्टादचः पूर्वस्यापीत्यभ्यासेत्त्वे स्थानिवत्त्वाप्रसङ्गात्। अङ्गस्य चङ्परणिपरत्वं त्वनूद्यते, न विधीयते इति तस्य स्थानिवत्त्वाप्रसक्तेरङ्गं चङ्परणिपरं न स्यादित्याशङ्का नोदेति। सत्यपि वा स्थानिवत्त्वे तत्सहितमेवाङ्गं भविष्यति। चङ्परणिपरं चेति न स्थानिवद्भावेनाङ्गस्य चङ्परणिपरत्वभङ्गः। ननु कथन्तदुक्तमभ्यासोऽनादिष्टादचः पूर्वो न भवतीति, यतः पटादेर्णौ चङि यष्टिलो-पात् पूर्वमनादिष्टादचः पूर्वत्वेन दृष्टः पट इत्यादिः, स एव द्विः प्रयुज्यते इति स्या-देवाभ्यासस्यानादिष्टादचः पूर्वत्वम्? सत्यमेवम्; किंतु यत्कार्यत्वेनाश्रीयतेऽभ्यासा-वस्थं न तदनादिष्टादचः पूर्वं भवति। एवं हलिकल्योरदन्तत्वनिपातनं सङ्गच्छते, अन्यथा यस्य कस्यापि अचष्टिलोपे तस्य स्थानिवद्भावेनाङ्गं चङ्परं न स्यादिति किमत्वनिपातनेन! सत्यपि वा स्थानिवत्त्वे तत्सहितमेव चङ्परणिपरमङ्गं भवि-ष्यति। अभ्यासश्च तस्यैवेति सर्वथा अनग्लोप इत्येवेत्त्वाद्यभावो वाच्यः। अदद्दषत्, अरराजत् इत्यादावनग्लोपेऽभ्यासस्येत्त्वाभावस्त्वनग्लोप इत्याश्रीयमाण-स्याको लोपाभावस्याविद्यमानत्वात्। पटुमाख्यदित्यत्र वृद्धेः पूर्वं टिलोपेऽङ्गस्या-ग्लोपित्वाद् अपपटदित्येके। कृतायां वृद्धौ टिलोपाद् अपीपटदित्यन्ये। कृतायाम-कृतायां वा वृद्धौ कामचारेण टिलोपादुभयमपीत्यपरे। पक्षत्रयमिदं पुंवद्भावे प्रदर्शितम्। पटोरयं मतभेदोऽन्येषामुवर्णान्तानाम्, कव्यादिनामिवर्णान्तानां च द्रष्टव्यः। कुमार्यादीनां तु पुंवद्भावेन कुमाराद्यादेशविधानात् वृद्धावप्यगेव लुप्यत इति अचकुमारत् इत्याद्येव भवति।

इदं चाग्लोपित्वेनेत्त्वाभाववचनं सन्वत्सूत्रस्य 'चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरः' इत्यर्थवादिनां हरदत्तादीनामनुसारेण, न तु 'चङ्परे णौ यल्लघु तस्मिन्परतोऽभ्यासस्य' इतिवादिनां कैयटकारादीनाम्। तेषां यदत्राभ्या-सात्परं लघु न तच्चङ्परणिपरम्, यच्चङ्परं न तल्लघु, अभ्यासस्य वर्णान्तरेण व्यवधानान्न तत्परः इति नास्त्यत्रेत्त्वप्रसङ्गः। तथा हि—तत्र भाष्ये 'अजजागरत्

इत्यत्राभ्यासलघुपरत्वाभावादित्वं न भवति' इति उक्तम्। यदाह—'व्यवहितं चात्र लघु चङ्परम्' इति। यद्येवम् अचीकृतद्, अजीहरदित्यादावपि व्यवधानं प्राप्नोति, न तदस्ति; येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् इत्येकेन वर्णेन व्यवधानमाश्रीयते, न पुनरनेकेनापि। एवमपि अचिक्षणदित्यत्र न प्राप्नोति ? एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति 'भवति संयोगेन व्यवधानेऽपि' इति, यदयम् 'अत्स्मृ-दॄत्वर' इति असस्मरत् इत्यादीनामित्त्वाभावार्थमत्वं शास्ति। अवश्यं चैतदेवं विज्ञेयम्—चङ्परे णौ यल्लघु तल्लोपस्य स्थानिवत्त्वेन चङ्परणिपरत्वस्याभावादित्त्वं न भवतीति वाच्यम्। तदेवं स्थानिवत्त्वं न भवत्यभ्यासस्यादिष्टादचः पूर्वत्वात्सत्यपि वा स्थानिवत्त्वे तत्सहितमेव चङ्परणिपरमङ्गं भवति। अभ्यासत्वं च तस्यैवेतीत्त्वं दुर्वारमितीदानीमेवोक्तम्। अथ कथमत्रेत्त्वादि भवति—वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेनेति, यावता योऽसौ णौ णिलोपस्तस्य स्थानिवत्त्वेनाभ्यासात्परस्य लघोश्चङ्परत्वं विहन्यते ? अत्र वृत्तिकारः परिहरति—'ण्याकृतिनिर्देशात्सिद्धम्' इति। अत एव णिजातेर्निमित्तत्वेनाश्रयणात् गोबलीवर्दन्यायेन 'णिचोऽन्यस्याको लोप इहाग्लोपः' इत्यग्लोपित्वादित्त्वं न प्राप्नोतीत्येदपि परिहृतम्। यत्तु 'सन्वल्लघुनि' इत्यत्र भाष्ये 'णेः परत्वाद् वृद्धौ कृतायां लोप इति अग्लोपित्वाभावादित्त्वं न भवति' इति वचनम्, तत् प्रौढिवादमात्रम्; यत्स्वयमेव णौ चङीत्यत्र नाग्लोपीत्यगितिप्रत्याहारग्रहणसामर्थ्यात्, ण्यल्लोपेत्यादिवचनाच्च वृद्धेः पूर्वं णिलोपमाह। एवमन्यत्रापि णेर्णौ द्रष्टव्यम्। वहेः क्ते यजादित्वात् सम्प्रसारणे परपूर्वत्वे हो ढे 'झषस्तथोः' इति थकारस्य धकारे तस्य ष्टुत्वेन ढकारे ढो ढे लोपे दीर्घे ऊढः तमाचष्टे ऊढयति, चङि अजादित्वात् द्वितीयस्यैकाचश्चङिति द्विर्वचने कर्तव्ये पूर्वत्रासिद्धत्वेन ढत्वादीनामसिद्धत्वे णौ कृतं स्थानिदिति टिलोपस्य च स्थानिवत्त्वे हतशब्दस्य द्विरुक्तौ उत्तरखण्डस्य पूर्ववड्ढत्वादावभ्यासस्य हलादिशेषे 'कुहोश्चुः' इति कुत्वेन हकारस्य झकारे तस्य च 'अभ्यासे चर्च' इति जश्त्वे जकारः। आटि वृद्धौ च औजढत इति भवति। अग्लोपित्वात्सन्वदित्त्वाभावः। औजिढदिति क्तिनि पूर्ववत् सम्प्रसारणाद् ऊढिशब्दाण्णिचि चङि हतशब्दस्य द्विरुक्तौ। ननु कथमिह ढत्वादीनामसिद्धत्वम्, यतः 'पूर्वत्रासिद्धीयमद्विर्वचनम्' इत्युच्यते ? सत्यम्; 'उभौ साभ्यासस्य' इति उपसर्गादुत्तरस्यानितेर्नकारस्य णत्वविधानादनित्यत्वज्ञापनादिह तत्र प्रवर्तते, नित्ये चास्मिन् प्राणितीतिवत् प्राणिणिषतीत्यत्रापि अनितेर्नकारस्योपसर्गस्थान्निमित्तात् परत्वेन 'अनितेः' इति णत्वे कृते तत्सहितस्यैव द्विर्वचनसिद्धेः किमनेन साभ्यासस्य णत्वविधानेन !

कर्तृशब्दाद्वा णाविष्ठवदतिदेशात् छन्दसीति विधीयमाने तृशब्दलोपे करयति इत्येके। एवं हर्त्रादीनामपि हरयतीत्यादि द्रष्टव्यम्। दोग्ध्रादेस्तु णौ घत्वादीनां

पूर्वत्रासिद्धत्वेन तृशब्दलोपे दोहीयसीत्यादिवद् दोहयति इत्यादि भवति। अन्ये त्वयं तृशब्दलोपश्छन्दस्युपदिष्टः कथं भाषायां स्यादिति कर्तयति इत्यादि प्रतिपन्नाः। पित्रयति इत्यादावयं तृशब्दलोपो नाशङ्क्यः; 'उणादयोऽव्युत्पन्नानि' इति पित्रादिषु व्युत्पत्तिकार्यानाश्रयणादवयवप्रविभागो न भवति। अत्र च ज्ञापकम् 'अप्तृन्' इत्यत्र नप्त्रादीनां ग्रहणम्। व्युत्पत्तौ तेषां तृजन्तत्वादेव दीर्घसिद्धेः किं तेषां ग्रहणेन!

त्वमाचष्टे त्वादयति, मामाचष्टे मादयति–'प्रत्ययोत्तरपदयोश्च' इति एकार्थयोर्युष्मदस्मदोर्मपर्यन्तस्य त्वमयोर्वृद्धिः। अत्रान्ये 'अङ्गवृत्त' इति वृद्धिमकृत्वा त्वदयति मदयति इति मन्यन्ते। अपरे पुनस्त्वमयोः परपूर्वत्वात् पूर्वं नित्यत्वाट्टिलोपे वृद्धौ पुकि त्वापयति मापयति इति भवति। त्वदयतीतिवादिनामन्तरङ्गपरपूर्वत्वमित्यभिप्रायः। युवामाचष्टे युष्मयति, आवामाचष्टे अस्मयति— 'युवावौ' इत्यत्र द्विवचने द्व्यर्थवृत्तिताया अभिधानेऽपि णिजुत्पत्तिः प्रातिपदिकादिति विभक्तेरनुत्पादे विभक्तिपरत्वाभावान्न युवावयोः प्रसङ्गः। इह सुबन्तादुत्पत्तावपि विभक्तेर्लुका लुप्तत्वेन विभक्तिपरत्वाभावाद्युवावयोरप्रसङ्ग एव। न च मन्तव्यमन्तरङ्गत्वाल्लुकः पूर्वं युवावयोः 'द्वितीयायां च' इति शेषेलोपापवादे आत्वे पुकि युवापयति, आवापयति इति स्यातामिति; यतः अन्तरङ्गानपि विधीन्बहिरङ्गो लुग् बाधते। उपपादितं चैतत् क्यज्विधौ। 'प्रत्ययोत्तरपदयोश्च' इति त्वमौ युष्मदस्मदोरनेकार्थत्वान्न प्रसजतः। अत एव युष्मानाचष्टे युष्मयति, अस्मानाचष्टे अस्मयति इत्यत्रापि न भवतः। त्वां मामतिक्रान्तः अतिक्रान्तौ अतिक्रान्तान् अतित्वाम्, अतिमाम्; अतित्वान्, अतिमान्—अत्र च युष्मदष्मदोरेकार्थत्वाद्विभक्तिपरत्वाच्च 'त्वमावेकवचने' इति त्वमयोः शेषेलोपापवादे 'द्वितीयायां च' इति पूर्ववदात्वे शसोऽन्यत्र विभक्तेः 'ङे: प्रथमयोः' इत्यमादेशः। शसि तु 'शसो न' इति युष्मदस्मद्भ्यां परस्य शस आदेर्नकारे सकारस्य संयोगान्तलोपः। 'युवावौ द्विवचने' इत्यत्र द्वयोर्वचनं द्विवचनम्, तच्च युस्मदस्मदोर्विशेषणमिति स्थितत्वादौटि युवावयोरप्रसङ्गः। अत्रार्थे णौ युष्मस्मदोरेकार्थत्वेन 'प्रत्ययोत्तरपदयोश्च' इति त्वमयोरन्तङ्गत्वात्परपूर्वत्वे ततष्टिलोपे च अतित्वयति, अतिमयति इति भवतः। अत्रापि 'त्वमयोः पूर्वं नित्यत्वाट्टिलोपः' इतिवादिनाम् अतित्वापयति, अतिमापयति इति स्यात्। युवामतिक्रान्तमतिक्रान्तौ अतियुवाम्, अतिक्रान्तान् अतियुवान्। एवम् अत्यावाम्, अत्यावान्–युष्मदस्मदोर्द्व्यर्थत्वात् विभक्तिपरत्वाच्च 'युवावौ द्विवचने' इति युवावयोः पूर्वत्वाद् 'द्वितीयायां च' इत्यात्वम्, 'ङे: प्रथमयोरम्' इत्यमुभावः, 'शसो न' इति च भवति। युष्मानतिक्रान्तम् अतिक्रान्तौ अतियुष्मान् अतिक्रान्तान् अतियुष्मान्, एवम् अत्यस्मान्—पूर्ववदात्वविभक्तिकार्ये। सर्वत्रार्थे णौ युष्मदस्मदोरनेकार्थत्वात्त्वमयोरभावात् अतियुष्मयति, अत्यस्मयति इति भवतः।

श्वानमाचष्टे शावयति—अत्र श्वानिति स्थिते णाविष्ठवदतिदेशाद् द्वौ टिलोपौ प्राप्नुतः—'टेः' इत्येकः, 'नस्तद्धिते' इति अपरः। तत्र 'प्रकृत्यैकाच्' इति प्रकृतिभावष्टेरित्यस्यैवेति तस्मिन्निवृत्तेऽपि 'नस्तद्धिते' इति भवति। तत्र कृते इष्ठनोऽजादित्वेन तत्र परे पूर्वस्य भत्वं दृष्टमिति णावप्यतिदेशेन तस्य सद्भावाद्वकारस्य सम्प्रसारणे कृते णौ वृद्धावावादेशः। नन्विष्ठवदतिदेशवाक्ये णावित्युपमेये सप्तमीश्रवणात् 'इष्ठवत्' इत्युपमानेऽपि वतिः सप्तम्यन्तात् इति, तत्र परे पूर्वस्य यत्कार्यं दृष्टं तदेवातिदेष्टव्यम्। णावपि परे पुनर्णेरिष्ठनः तद्धितत्वमपि इति। तत्र 'प्रातिपदिकस्य' इति वचनस्य प्रत्ययकार्याणामतिदेशनिवृत्त्यर्थत्वाद्वा णेस्तद्धितत्वस्याभावात्कथं 'नस्तद्धिते' इति टिलोपोऽत्र न स्यात्, अतद्धितत्वादेव त्वयाप्योर्गुणो न कृतः ? उच्यते; असत्यपि तद्धितत्वे ब्रह्मवत्तरो ब्रह्मिष्ठः इत्यादौ विन्मतोर्लुकि इष्ठनि परे प्रकृतौ नान्तलक्षणष्टिलोपो दृष्ट इत्यत्रेष्ठनोऽभावेऽपि सम्भावनया स्यादेव, यथा—पट्वितमा, पटिष्ठा इत्यादौ 'भस्याऽढे तद्धिते' इति पुंवद्भावो भवन् कुमारीमाचष्टे कुमारयति इत्यादौ इष्ठनः सम्भावनया भवति। एवं तर्हि दविष्ठ इत्यादाविष्ठन्योर्गुणः पूर्वस्य दृष्टः इत्यत्राप्यतिदेशेन प्राप्नोति ? नैष दोषः; यदस्मिन्सम्प्रसारणटिलोपौ 'असिद्धवदत्र' इत्यसिद्धौ भविष्यतः। अन्ये तु—'ब्रह्मिष्ठ इत्यादौ नान्तलक्षणाट्टिलोपात् परत्वाट्टेरित्यनेनैव भवितव्यमिति तस्याप्रवृत्तेरिष्ठनि परे पूर्वत्वादर्शनादिहातिदेशो न युक्त इति तदभावात् केवलं सम्प्रसारणपूर्वत्वयोः शुनयतीति भवति' इति मन्यन्ते। नन्वनयोराभीययोष्टिलोपयोः 'असिद्धवदत्र' इत्यन्योऽन्यस्यासिद्धत्वात्कथं विप्रतिषेधः ? नैष दोषः, 'घुमास्था' इत्यत्र हल्ग्रहणेन विप्रतिषेधे इदमसिद्धत्वं नेति ज्ञापनात्। तद्धल्ग्रहणं गोद इत्यादावजादौ क्ङित्यार्धधातुके ईत्वं मा भूदिति। यदि च विप्रतिषेधे इदमसिद्धत्वं स्यात्, कृतेऽपीत्वे तस्यासिद्धत्वादातोलोपे सिद्धं गोद इत्यादीति किं हल्ग्रहणेन ! नन्वेतदीत्वेऽपि 'अचि श्नुधातु' इतीयङ् स्यादिति तन्निवृत्त्यर्थमीत्वमेव मा भूदिति अर्थवदेव ? नैतदस्ति प्रयोजनम्, यदियङोऽप्याभीयत्वेन तस्मिन्नपि तस्यासिद्धत्वात्; मैवम्, युटो यणीवेयङीत्यस्यासिद्धत्वस्याभावो वाच्यः, अन्यथा धियौ पियौ इति न सिध्यतः। यद्धातिपिबत्योः क्वौ कृतं 'घुमास्था' इतीत्वमियङ्यसिद्धं स्यात्, नैतदस्ति; 'ध्यायतेः सम्प्रसारणं च' इति ध्यायतेः प्यायतेश्च क्वौ सम्प्रसारणदीर्घत्वयोर्धीपीशब्दयोर्व्युत्पादनात्। अवश्यं चैतदेवं वाक्यकारस्य मते विज्ञेयम्, अन्यथा तेन वकारे प्रतिषेधः इति क्वावपीत्वाभावस्योक्तत्वाद्धीपीशब्दावेव न स्याताम्। तथा च तत्र भाष्ये 'यदि तर्हि वकारे प्रतिषेध उच्यते कथं धीः' इति नोदयित्वा 'धीरिति चोक्तं, किम्मुक्तम् ? नैतदीत्वं, किं तर्हि ? ध्याप्योः सम्प्रसारणम्' इत्युक्तम्। यदपि मतम्—'ईत्वे वकारस्य निषेध इत्यस्य भाष्येऽनवस्थानात् क्वावप्येतौ शब्दौ भवतः' इति; तदपि क्वावीत्वम्,

विभक्ताविय‌ङिति व्याश्रयत्वान्नास्त्यसिद्धत्वप्रसङ्गः। एवमपि व्यवस्थार्थं हल्ग्रहणं कर्तव्यमेव; अन्यथाभीयानामन्योऽन्यस्मिन्नन्योऽन्यस्यासिद्धत्वादीत्वमाल्लोपे सिद्धम्, आल्लोपश्चेत्वे इति व्यवस्था न प्रकल्पेत। एवं तर्हि 'आतो लोप इटि च' इत्यजादौ क्ङित्यार्धधातुकेऽकारस्य लोपो भवति, ततो घुमास्थागापाजहातिसाञ्च पूर्वोक्ते इडादौ परे आकारस्य लोपो भवति। इदं चेत्त्वबाधनार्थम्। तत ईत्। ईदप्यकारस्य भवति घुमास्थादीनाम्। इदं चाजादिष्वाल्लोपस्योक्तत्वाद्धलादौ क्ङित्यार्धधातुके भवति। ततः 'एर्लिङि', 'वान्यस्य संयोगादेः', 'न ल्यपि', 'मयतेरिदन्यतरस्याम्' ततो यति आत इत्येव। 'यति चात ईद्भवति' एवं लघीयसा न्यासेन सिद्धायां व्यवस्थायामपि यद्गरीयांसं यत्नमास्थाय हल्ग्रहणं करोति तस्यैतत्प्रयोजनं विप्रतिषेधे नेदमसिद्धत्वमिति। एवप्युक्तो विप्रतिषेधः, इष्ठवदतिदेशेनैव द्वावपि टिलोपौ प्राप्येते इत्येकयोगलक्षणत्वेन पौर्वापर्याभावात्। तथा च 'प्रत्ययलोपे' इत्यत्र वार्त्तिकम्—'तुग्दीर्घयोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्षणत्वात् परिवीः' इति ? न; युक्तो विप्रतिषेधः। किमनेनातिदिश्यते ? यत्प्रकृताववस्थितं तत्र च परत्वात् 'नस्तद्धिते' इत्येतं बाधित्वा टेरित्येव व्यवस्थितमिति। 'प्रकृत्यैकाच्' इत्यत्र भाष्यादौ ब्रह्मिष्ठ इत्यत्र 'नस्तद्धिते' इति टिलोपो विहितः। 'विद्वांसमाष्टे इति णौ टिलोपे विद्वयति' इति दौर्गाः। अत्र आत्रेयः—'प्रसारणाभावश्चिन्त्यः' इति, तत्रेष्ठवद्भावेन भत्वात् 'वसोः सम्प्रसारणम्' इति सम्प्रसारणे वृद्धावावादेशे विदावयतीति भवितव्यम् इत्येके। अपरे तु ब्रुवते–'कृतेऽपि टिलोपे प्रसारणं प्राप्नोतीति नित्यत्वात् कृते तस्मिन्नन्तरङ्गत्वात्परपूर्वत्वे पश्चाट्टिलोप इति विदयति' इति। ननु टिलोपोऽपि कृते सम्प्रसारणे प्राप्नोतीति नित्यः, नैतदस्ति; कृते सम्प्रसारणेऽन्तरङ्गत्वात् परपूर्वत्वे शब्दान्तरप्राप्त्याऽयमनित्यो भवति। स्यादेतदेवम्, यदि प्रसारणमात्रेण शब्दान्तरप्राप्तिः स्यात्; नेह तथा, किन्तु परपूर्वत्वेन। यस्य च लक्षणान्तरेण निमित्तं विहन्यते नैतदनित्यं भवति; नैष दोषः; 'यस्य च लक्षणान्तरेण' इति परिभाषा न सार्वत्रिकी। उक्तं चैवम् 'आडजादीनाम्' इत्यत्र हरदत्तादिभिः। अमुमेव पक्षमाश्रित्य अस्माभिर्माधवीयायां धातुवृत्तौ वेत्तौ विदयति इति प्रदर्शितम्।

उदञ्चमाचष्टे उदीचयति—अत्र सोपसर्गात्संग्रामयतेरिति ज्ञापकाद्धातुसंज्ञानिमित्ते प्रत्यये उपसर्गाणां पृथक्करणात् क्विन्नन्ताल्लुप्तनकारान्तादञ्चतेरेव णौ 'प्रकृत्यैकाच्' इति प्रकृतिभावाट्टिलोपाभावे, णाविष्ठवदतिदेशेन भत्वे 'अचः' इति तु लुप्तनकारस्याञ्चतेः प्राप्ताकारलोपापवादः 'उद ईत्' इतीत्त्वं भवति। चङि णिलोपस्य 'द्विर्वचनेऽचि' इति स्थानिवत्त्वात् 'अजादेर्द्वितीयस्य' इति चिशब्दस्य द्विर्वचने अङ्गस्याटि वृद्धौ उदैचिचत् इति भवति। ल्यपि लघुपूर्वत्वाभावेनायादेशाभावाण्णिलोपे, उदीच्य इति भवति। प्रत्यञ्चमाचष्टे प्रतीचयति—

अत्रापि पूर्ववदञ्चतेरेव णौ भत्वात् 'अचः' इत्यकारलोपे 'चौ' इति लुप्तनकारेऽञ्चतौ पूर्वपदस्य दीर्घः। चङि चिशब्दात् पूर्वमाटि यणादेशे प्रत्यचिचत्; 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' इति यदा इकोऽसवर्णेऽचि प्रकृतिभावो दीर्घस्य च ह्रस्वस्तदा प्रतिअचिचत् इति भवति। ल्यपि तु पूर्ववत् प्रतीच्य इति भवति। सम्यञ्चमाचष्टे समीचयति—'समः समि' इत्यञ्चतौ सम्यादेशे 'अचः' इत्यकारलोपे 'चौ' इति दीर्घः। अत्रापि चङ्ल्यपोः पूर्ववत् सम्यचचत्, समीच्य इति भवति। तिरोऽञ्चतीति तिर्यङ्—'तिरसस्तिर्यलोपे' इति तिर्यादेशः, तमाचष्टे तिराययति—इष्ठवद्भावेन चाञ्चतेष्टिलोपे वृद्ध्यायौ। तिरस इत्यत्र 'अतो लोपः' इति अलोपे तिर्यादेशाभावः 'अचः' इत्यञ्चतेर्विधीयमानाकारलोपविषयः। स ह्यनन्तरः, 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा'। अत्र पुनरिष्ठवद्भावप्रवृत्त्या 'टेः' इति तिरेरिकारस्य वृद्ध्यायोः कृतयोरकृतयोर्वा लोपो न भवति, 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' इति। यद्वा—'असिद्धवदत्रा' इति प्राथमिकस्याञ्चतिटिलोपस्य चारमिकेऽन्यस्मिन्नसिद्धत्वात् यथाकारितराम् इत्यत्र तशब्दे पूर्वप्रवृत्तश्चिणो लुक् पुनस्तरपि स्वप्रवृत्तावसिद्धो भवति। अत एव तिरेः स्थानिवत्त्वेनाव्ययत्वात् 'अव्ययानां भमात्रे' इतीष्ठवद्भावेन प्राप्तोऽपि टिलोपो न भवति। एवमपीकारस्य 'यस्य' इति लोपेन भवितव्यमिति चेत्, न; टिलोपस्यासिद्धत्वात्परया वृद्ध्या बाधाद्वा। यत्तु 'कस्येत्' इत्यत्र भाष्ये कायम् इत्यत्रेकारवचनसामर्थ्याद् 'यस्येति च' इति लोपाभाववचनं तदुपायान्तरपरतया[1] कथञ्चिन्नेयम्[1]। अस्याग्लोपित्वेनोपधाह्रस्वत्वाभावात् अतितिरायत् इति भवति। सहाञ्चतीति सध्र्यङ्—'सहस्य सध्रिः' इति सध्र्यादेशः। सध्रिमाचष्टे सध्राययति पूर्ववत्सध्रेरिकारलोपाभावः। चङि असध्रायत. अग्लोपित्वादुपधाह्रस्वत्वाभावः। अभ्यासस्येत्वं तु चङ्परलघुपरत्वाभावादपि न भवति। यदीष्ठवद्भावेन प्राप्तस्याञ्चतेष्टिलोपस्य तिर्यादेरिकारे पुनः प्रवृत्तावसिद्धत्वं तर्हि कुमारयतीत्यादाविष्ठवद्भावेन प्रवृत्तं पुंवत्त्वं तेनैव कुमारादेरकारलोपेऽसिद्धं स्यात्, नैष दोषः; 'इष्ठवद्भावेनातिदिश्यमानानां कार्याणामुत्पत्तिदेश एव देशः' इत्याश्रयणात्, पुंवत्त्वोत्पत्तिश्च 'भस्याऽढे तद्धिते' इति विधीयमाना आभीया न भवति। अत एव भाष्यकारेण लोहिनीमाचष्टे लोहितयतीत्यादिषु इष्ठवद्भावेन लोहिताद्यादेशे पुनष्टिलोपः कृतः। एवमपि सध्रायतीत्यादावङ्गवृत्तपरिभाषया पुनर्वृद्धिर्न प्राप्नोतीति नाशंक्यम्; यस्मादेषा भाष्यकारादिभिर्यत्राश्रिता तत्रैव प्रवर्तते। अत एवात्र परिभाषावाक्ये 'निष्ठितस्य' इत्युक्तम्। निष्ठितत्वं च प्रयोगार्हत्वम्। तच्चाप्तभाषितमन्तरेणावगन्तुं न शक्यते। विषु नाना अञ्चति गच्छतीति विष्वङ्, तमञ्चतीति विष्वद्र्यङ्, देवान् अञ्चतीति देवद्र्यङ् 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' इत्यद्र्यादेशः। विष्वद्र्यञ्चमाचष्टे विष्वद्राययति। एवं देवद्राययति। पूर्ववदञ्चतेर्लोपे 'यस्य' इति

---

१—१. 'तत्प्रौढवादमात्रम्' इति ख. पुस्तके।

लोपात्परत्वादद्रेरिकारस्य वृद्धावायादेशः। विष्वक्शब्दोऽयं धर्मवचनोऽपि दृश्यते, यथा—'घोरस्य सतो विषुणस्य चारुः' इत्यत्र 'विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः' इति लोमादिलक्षणे मत्वर्थीये नकारे उत्तरपदस्याकृतसन्धेर्लोपः। अत्र भट्टभास्करः—'विषुणस्य, नानाविधा या गतिस्तद्वतः'। 'विष्वग्देवयोश्च' इति चशब्दात्सर्वनाम्नोऽद्र्यादेशो सर्वद्रायर्यति इत्यादि।

अदसोऽद्र्यादेशे पक्षत्रयम्—'अदसोसेर्दादुदोमः' इति उत्वमुभाभ्यामपि दकाराभ्यां परयोः, मत्वं च द्वयोरपि दकारयोरित्येकः पक्षः; उत्वमत्वे परयोरेवेति द्वितीयः; नेति तृतीयः। तथा चोक्तम्—

अदसोऽद्रेः पृथङ् मुत्व केचिदिच्छन्ति लत्ववत्। केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते॥

इति। तत्रोत्वमत्वयोः अमुमुआययति, अदमुआययति इति भवतः। उकारस्य तु यणादेशः 'पूर्वत्रासिद्धम्' इत्यसिद्धत्वान्न भवति। उत्वमत्वयोरभावे तु अदद्रायथति इति। चङि सर्वत्र अजादित्वाद् द्वितीयस्यैकाचो द्विर्वचनेऽग्लोपित्वादुपधाह्रस्वत्वाभावात् अमुमुआययत्, अदमुआययत् इति भवतः। उत्वमत्वयोरभावे 'सन्वत्' इतीत्वमग्लोपित्वादभ्यासस्य चङ्परलघुपरत्वाभावाद्वा न भवति। उत्वमत्वयोः 'पूर्वत्रासिद्धीयमद्विर्वचने' इति असिद्धत्वाभावः। त्वामञ्चति त्वद्र्यङ्, मामञ्चति मद्र्यङ्—उत्तरपदत्वात् 'प्रत्ययोत्तरपदयोश्च' इति एकार्थवृत्तयोर्युष्मदस्मदोर्मपर्यन्तस्य त्वमादेशौ। पूर्ववदद्र्यादेशः। तस्माण्णौ त्वद्रायर्यति, मद्रायर्यति इति भवतः। युवामञ्चति आवामञ्चति युष्मद्र्यङ्, अस्मद्र्यङ्—अत्र युष्मदस्मदोरुत्तरपदपरत्वेऽप्यनेकार्थत्वान्न त्वमौ। 'युवावौ द्विर्वचने' इत्यत्र द्विर्वचनेन द्व्यर्थवृत्तिताया अभिधानेऽपि विभक्तेर्लुका लुप्तत्वेन तत्परत्वाभावान्न युवावादेशौ। न च लुकः पूर्वमन्तरङ्गत्वेन भवतः; 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इत्युक्तत्वात्। युष्मानञ्चति युष्मद्र्यङ्, अस्मानञ्चति अस्मद्र्यङ्—सर्वत्रात्र णौ युष्मद्रायर्यति, अस्मद्रायर्यति इति भवतः। एवं त्वामतिक्रान्तमतिक्रान्तौ अतित्वाम्, अतिक्रान्तान् अतित्वान्। एवम् अतिमाम्, अतिमान्। एषु कर्मसूपपदेषु अञ्चेः क्विपि अतित्वदङ्, अतिमदङ्। अत्र टिलोपे जाते अतित्वादयति, अतिमादयति इति भवतः। युवामतिक्रान्तमतिक्रान्तौ वा अतियुवाम्, अतिक्रान्तान् अतियुवान्। एवम् अत्यावाम्, अत्यावान्। एषु कर्मसूपपदेषु क्वौ अतियुष्मदङ् अत्यस्मदङ्। युष्मदस्मदोर्द्व्यर्थत्वेऽपि 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इति पूर्वमेव विभक्तेर्लुका लुप्तत्वात् विभक्तिपरत्वाभावान्न युवावौ, नाप्युत्तरपदनिबन्धनौ त्वमौ, एकार्थत्वाभावात्। अत एव युष्मानतिक्रान्तः अस्मानतिक्रान्तो वा अतियुष्माम्, अतिक्रान्तान् अतियुष्मान्। एवमत्यस्माम्, अत्यस्मानित्यनयोरपि कर्मणोः अञ्चतावप्रत्यये उत्तरपदे त्वमयोरभावाद् अतियुष्मदङ्, अत्यस्मदङ् इति भवतः। सर्वत्रात्र णावञ्चतेष्टिलोपे एकार्थत्वाभावादेव प्रत्ययनिबन्धनावपि त्वमौ न

भवत इति अतियुष्मादयति, अत्यस्मादयति इति भवतः। सर्वत्र अतित्वादयति इत्यादौ युष्मदस्मदोरुपसर्जनत्वात् 'संज्ञोपसर्जनप्रतिषेधः' इति सर्वनामत्वाभावादद्र्यादेशो न प्रदर्शितः।

कमाचष्टे कापयति। अचीकपत्—'प्रकृत्यैकाच्' इति प्रकृतिभावाट्टिलोपाभावे वृद्धौ पुगागमः। अमाचष्टे आपयति। चङि तु मा भवानोणिणदित्यत्र नित्यत्वाद् द्वितीयस्यैकाचो द्विर्वचने ओकारस्यानुपधात्वादेव णौ चङि ह्रस्वाभावसिद्धे ऋदित्करणेन 'नाग्लोपि' इत्यादिना ह्रस्वत्वनिषेधाद् द्वितीयद्विर्वचनात् पूर्वमुपधाह्रस्वत्वस्य ज्ञापनात्। कृते च तस्मिन् 'द्विर्वचनेऽचि' इति णिलोपस्य स्थानिवत्त्वेनाजादित्वात् पिशब्दस्य द्विर्वचने मा भवानपिपत् इति भवति। इमाचष्टे आययति। उमाचष्टे आवयति। अरमाचष्टे आरयति। अलमाचष्टे आलयति—ऋकारऌकारयोः सावर्ण्यात् तयोः 'उरण् रपरः' इति रप्रत्याहारपरा तयोः वृद्धिः। एषां णौ चङ्युपधाह्रस्वे ततो द्वितीयस्यैकाचो द्विर्वचने मा भवानयियत्, मा भवानविवत्, मा भवानरिरत्, मा भवानलिलत् इति तत्र भवति। अत्र 'णौ कृतं स्थानिवत्' इति न वृद्ध्यादेर्द्विर्वचने स्थानिवत्त्वम्, यदयं स्थानिवद्भावः स्थानिरूपस्य द्विर्वचने कर्तव्ये भवति। इह तु स्थानिवद्भावाण्णेरेव द्विर्वचनम्।

पुनातीति पूः। भवतीति भूः। लुनातीति लूः। जवतीति जूः। एभ्यो णौ—पावयति। भावयति। लावयति। जावयति। लुङि 'णौ चङि' इति ह्रस्वत्वे 'णौ कृतं स्थानिवत्' इति पूप्रभृतीनां द्विर्वचने पुनरुत्तरखण्डस्य वृद्ध्यावयोर्ह्रस्वत्वे चाऽभ्यासस्य च ह्रस्वत्वे तस्यावर्णपराः पुयण्जः परा इति सन्वद्भावे 'ओः पुयण्ज्यि' इति सनि विधीयमाने इत्वे दीर्घे च अपीपवत्, अलीलवत्, अजीजवत् इति भवति। नन्वत्र पूप्रभृतीनां द्विर्वचने पुनरुत्तरखण्डस्य वृद्ध्याव्ह्रस्वत्वानीति प्वादेरभ्यासस्यानादिष्टादचः पूर्वत्वात्सन्वद्भावेन पुयण्जिलक्षणे सन्वदित्वे प्राप्ते 'णौ चङि' इति ह्रस्वस्य 'अचः परस्मिन्' इति स्थानिवत्त्वेनालघुपरत्वात् कथमित्वम्? नैष दोषः; 'ओः पुयण्जि' इति इत्वस्य सन्वद्भावेन चङ्यतिदेशस्यानर्थक्यप्रसङ्गात् स्थानिवद्भावस्यात्राप्रवृत्तेः। इदमेव 'ओः पुयण्जि' इति वचनं ज्ञापकं णौ कृतस्य स्थानिवत्त्वे। अन्यथा न क्वचिदपि पुयण्जिपर उवर्णान्तोऽभ्यासः सम्भवति। नन्वत्रास्ति सम्भवः पिपविषते, यियविषतीति, पवतेर्यौतेश्च 'स्मिपूङ्रञ्ज्वशां सनि' 'सनीवन्तर्ध' इतीटि गुणावादेशयोः 'द्विर्वचनेऽचि' इति स्थानिवद्भावेन पूयूशब्दौ द्विरुच्येते? इदमपि 'पु' इत्युदिद्ग्रहणं यणिति प्रत्याहारग्रहणं जिग्रहणं च णौ कृतस्य स्थानिवत्त्वाभावेऽनर्थकमेव स्यादिति ज्ञापकमेव। यद्येवम्, अचिकीर्तदिति 'उपधायाश्च' इत्यृकारस्येत्वम् 'णौ कृतम्' इति स्थानिवद्भावादृकारवत एवैकाचो द्विर्वचनेऽभ्यासस्योरदत्वाद् अचिकीर्तत्

इति प्राप्नोति, नैतदस्ति; यत इदं ज्ञापकं यथाजातीयकाः पुयण्जस्तथाजातीयकानामेवेति इह न प्रवर्तते। कथंजातीयकाः पुयण्जः? अवर्णवदुत्तरखण्डाः। स्पष्टं चैतदेवम् 'उरत्' इत्यत्र रक्षित-पदमञ्जर्यादिषु। 'द्विर्वचनेऽचि' इति सूत्रे भाष्येऽप्येवमेव स्थितम्। यत्तु 'स्तौतिण्योरेव' इत्यत्र न्यासे सिषेचयिषतीत्यत्र सिचेर्हेतुमण्णौ कृते गुणे सनि गुणायादेशयोरुत्तरखण्डस्यावर्णपरत्वाभावेऽप्यस्याः परिभाषायाः सामान्याश्रयेण सिच्शब्दस्य द्विर्वचनकथनम्, तदेवमप्यत्र रूपाभेद इत्येतावन्मात्रतया, न तु सिद्धान्तस्थित्या; अन्यथा पूर्वोक्तन्यासेन भाष्यादिना विरोधः स्यात्। एवं च सीरदेवेन यदस्याः परिभाषायाः विशेषविषयतामुक्त्वा पूर्वोक्तन्यासप्रामाण्यात् 'पूर्वत्रासिद्धम्' इत्यत्र वृत्तौ उत्तरखण्डस्याचोऽभावेऽपि स्थानिवत्त्वाश्रयणादौजिढदिति द्विर्वचनोक्तेः 'लोपः पिबतेरीच्चाभ्यासस्य' इत्यत्र अपीप्यद् इत्युदाहरणे णौ कृतस्योपधालोपस्य स्थानिवत्त्वेन पाशब्दस्य द्विर्वचनाच्च यत् 'पूर्वत्रासिद्धम्' इत्यत्र वृत्तौ उत्तरखण्डस्य अवर्णपरत्वाभावेऽपि सामान्यविषयत्वकथनम्, तदपि प्रत्युक्तम्। कथं तर्हि औजढत् अपीप्यत् इति, यत् द्विर्वचनोत्तरकालमपि टिलोपेन 'लोपः पिबतेः' इत्यनेन चोत्तरखण्डेऽवर्णापहारस्यावश्यम्भावित्वात् प्रयोगगतमवर्णं न पश्याम इति णौकृतपरिभाषानुपस्थानात् अनच्कत्वाद् द्विर्वचनमेव न स्यात्? उच्यते; यद्यपि प्रयोगेऽवर्णवन्तमुत्तरखण्डं न पश्यामः, प्रक्रियायां तु पश्याम एवेति द्विर्वचनेनोत्तरकालं प्रवर्तमानेनावर्णापहारेण न कश्चिद्दोषः। एवं चैतदर्थमवर्णोत्तरखण्डे परिभाषेयं नित्या, अन्यत्र क्वचित्प्रवर्तते इति व्यवस्थाशून्यं सीरदेववचनं नाश्रयणीयं भवति। कथं तर्हि सिषेचयिषति इति, यदिह द्विर्वचने उत्तरखण्डमवर्णं न भवतीति णौ कृतस्य गुणस्य स्थानिवत्त्वं न स्यात्? मास्तु, गुणस्य द्विर्वचनेऽभ्यासह्रस्वत्वेनैवं रूपं सिद्ध्यति। भ्रुवमाख्यत् अबुभ्रवत् इत्यत्र योऽवर्णपरो यण् नासावभ्यासात्परः, यश्च परः पवर्गः नासौ अवर्णपर इतीत्वाभावः। अशिश्रियत् इत्यत्राभ्यासस्येत्वं णौ कृतस्य स्थानिवत्त्वेन श्रीशब्दस्य द्विर्वचनात्। ह्रेशब्दमाख्यत् अजीह्रयत्। गामाख्यत् अजूगवत्। रायमाख्यत् अरीरयत्। नावमाख्यत् अनूनवत्। अत्रापि णौकृतपरिभाषया सन्ध्यक्षरस्य द्विर्वचनेऽभ्यासस्य ह्रस्वत्वे 'दीर्घो लघोः' इति दीर्घो भवति। अत्रोपसर्गग्रहणं प्राद्युपलक्षणम्, अन्यथा स्वश्वमाख्यत् स्वाशश्वयत् इत्यादि न सिद्ध्यति।

स्वराचष्टे स्वयति—'अव्ययानां भमात्रे' इति टिलोपः। 'प्रकृत्यैकाच्' इति प्रकृतिभावस्तु येन नाप्राप्तिन्यायेनानन्तर्याच्च टेरित्यस्यैव चङि टिलोपस्य स्थानिवत्त्वाभावात्स्विशब्दस्य द्विर्वचने असिस्वत् इत्येके। अन्ये तु—णौ कृतस्य टिलोपस्य स्थानिवत्त्वात् स्वरशब्दस्यैव हि द्विर्वचनं युक्तमिति असस्वत् इत्याहुः। अत्राभ्यासस्येत्वमुत्तरखण्डस्य पुनष्टिलोपेन लघुपरत्वाभावान्न भवति। न च

टिलोपात्पूर्वमेवास्ति लघुपरत्वमिति स्यात्; नित्यत्वात्तस्य। न च णिचा लघुपरत्वम्; तस्य निमित्तत्वेन ततोऽन्यस्य लघोस्तत्राश्रयणस्य स्थितत्वात्।

बहु च बहुत्वं वाचष्टे भावयति—अत्र 'इष्ठस्य यिट् च' इतीष्ठनि विहितत्वात् बहोर्भूभावः। यिडागमस्तु णावित्युपमेये सप्तमीश्रवणादिष्ठवदित्युपमानादपि सप्तम्यन्ताद्वतिरितीष्ठनि परे पूर्वस्य यत्कार्यं तदेवातिदिश्यते, न तु इष्ठनोऽपीति 'प्रातिपदिकस्य' इति वचनस्याप्रत्ययकार्यातिदेशानिवृत्त्यर्थत्वाद्वा न भवति। 'टेः' इत्यत्र कैयटे भावयतीत्युदाहृत्य यिट्सन्नियोगशिष्टत्वाद्भूभावस्य यिडभावे भूभावस्याप्यभावात् बहयतीत्येकीयमतेनोपन्यस्तम्। पदमञ्जर्यां तु बहयतीति स्वपक्षमुक्त्वा भावयतीत्येकीयमतेनोक्तम्। अत्र शास्त्राणां कार्यार्थत्वात्कार्यस्यैव प्राधान्यात्तदेवातिदेष्टुं युक्तमितीष्ठवद्वचनमेवेष्ठनि परतः प्रकृतौ दृष्टं कार्यं णावपि विधत्ते इति भूभावस्य सन्नियोगशिष्टत्वाभावाद् भावयति इत्येव युक्तमिति वयमुत्पश्यामः। एवं च यदुक्तं पुरुषकारे 'बहयति' इत्युदाहृत्य 'इष्ठनि यत् फिषः कार्यं तण्णावतिदिश्यते। न चेष्ठनि यिट्, नापि फिषो भूभावश्च; यिट्सन्नियोगशिष्टत्वात्। तेन न्यासे 'भावयतीति चिन्त्या प्राप्तिः' इति, तदेव चिन्त्यं भवति। चान्द्रकौमारशाकटायनेषु पुनः 'इष्ठनि युक्च' इति बहोरेव युक् विधीयते। तत्र मतेऽत्रापि भूयतीति भाव्यम्। सूत्रवार्त्तिकभाष्येषु नायं पक्षः प्रदर्शितः। विरुद्धश्चेति तैरेव न वयं बहु मन्महे॥

अस्त्येव हि विरोधोऽत्र पक्षे युक् प्रकृतेर्भवेत्। तेन णावपि तस्य स्यादतिदेशो युटः पुनः॥
प्रत्ययस्यैव शेषत्वान्नातिदेशो भवेद्यतः॥ टिलोपः॥

यणादिपरलोपः—"स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः" स्थूलादिभ्यः इष्ठेमेयःसु परं यणादि लुप्यते। एतत्पूर्वस्य च गुणो भवतीत्येतण्णौ भवति। 'यणादि' इत्येतावत्युच्यमाने पुनः सर्वस्य लोपादियदादिवत् प्रत्ययस्यैव श्रवणं स्यादिति परवचनम्। अत्र पूर्वस्य गुणवचनं स्थविष्ठ इत्यादावोर्गुणे यणादिपरलोपस्य 'असिद्धवदत्र' इत्यसिद्धत्वादुवर्णान्तस्य भस्याभावात् तस्याप्रसङ्गः। यविष्ठ इत्यादावुवर्णान्तस्य भस्यैवाभावाच्च। अत्रेक्परिभाषोपस्थानादन्त्यस्य गुणो न भवति। ह्रसिष्ठ इत्यादौ त्विकोऽभावान्नैव भवति। अत एवोक्तं वृत्तौ—'पूर्वग्रहणं विस्पष्टार्थम्' इति। नन्वेतदिक्परिभाषाबाधेनानिकोऽप्यन्त्यस्य गुणार्थं स्यात्, नैतत्; 'इको गुणवृद्धी' इत्यत्र भाष्यवार्त्तिकयोः 'दृशिक्षिप्रक्षुद्रेष्विग्ग्रहणम्' इति इक एव गुणस्योक्तत्वात्, स्थवयति, दवयति, ह्रसयति, क्षेपयति, क्षोदयति इति। अत्र स्थवयतीत्यादौ गुणस्य 'अचो ञ्णिति' इति वृद्धिः 'अङ्गवृत्त' इति वा, 'प्रातिपदिकाद्धात्वर्थे बहुलम्' इति बहुलग्रहणाद्वा न भवति। अत्र युवतिशब्दादपि इष्ठेयसुनोर्विहितयोर्लिङ्गविशिष्टपरिभाषया यणादिपरलोपादेर्भावाण्णावपि यणादिपरलोपादौ यवयतीत्येव रूपम्। यद्वा—अत्रेष्ठवद्भावात् पुंवत्त्वेन युवन्शब्दादेशे तस्य यणादिपरलोपे भविष्यति तदेव रूपम्। अत्र प्रक्रियारत्ने—'बाहुलकात् दूरयती-

त्यपि कौमाराश्चिन्त्याः, दवयति इत्येव भाष्ये उदाहृतत्वेन तेषां यत्किञ्चित् प्रयोगमात्रमूलत्वादस्यापि सम्भवाच्च' इति। सुधाकरोऽपि–'शीकरव्यतिकरैर्मरीचिभिर्दूरयत्ययवनते विवस्वति' इति प्रयोगमुपादायेष्ठवद्भावाद् दवयतीति भवितव्यम्' इति ॥ यणादिपरलोपः॥

विन्मतोर्लुक् (५।३।६५)—स्रगस्यास्तीति स्रग्वी—'अस्मायामेधास्रजो विनिः' इति विनिर्मत्वर्थे। तथा गावोऽस्य सन्तीति मतुपि गोमान्। तत्र स्रजिष्ठः, गविष्ठ इत्यादौ भवन्विन्मतोर्लुक् णावपि इष्ठवद्भावाद् भवति स्रजयति, गावयतीत्यादौ। तत्र कृते 'टेः' इति प्रकृतेर्यष्टिलोपः प्राप्तः सः 'प्रकृत्यैकाच्' इति प्रकृतिभावान्न स्यात्। तत्राजन्ते गवादिषु 'अचो ञ्णिति' इति वृद्धिः। स्रगादिषु 'अत उपधायाः' इति 'अङ्गवृत्ते पुनर्वृत्तावविधिः' इति न भवति इति भाष्ये स्थितम्। चङ्यग्लोपित्वात्सन्वदित्वदीर्घत्वयोरभावात् असस्रजत्, अजुगवत् इत्यादि भवति। मायाविनमाचष्टे, मेधाविनमाचष्टे, वसुमन्तमाचष्टे, दृषद्वन्तमाचष्टे इत्यादौ विन्मतोर्लुकि प्रकृतेरनेकाच्त्वाट्टिलोपे माययति, मेधयति, वसयति, दृषदयति इत्यादि भवति। सकारान्तानामपि पयस्विनमाचष्टे, तेजस्विनमाचष्टे, आयुष्मन्तमाचष्टे इत्यादौ णौ विन्मतोर्लुकि टिलोपे पययति, तेजयति, आययति इत्यादि भवतीति 'प्रकृत्यैकाच्' इत्यत्र पदमञ्जर्यां स्थितम्। कैयटे तु तत्र भाष्यकारेणेष्ठेयसुनोर्विधीयमानोऽयं 'प्रकृत्यैकाच्' इति प्रकृतिभावः क्व भवति ? इति विचार्य 'विन्मतोर्लुगर्थमिति विन्मत्वन्तादिष्ठेयसुनोर्विन्मतोश्च लुकि स्रगिष्ठादौ स्रगादेष्टिलोपाभावार्थम्' इत्यभिधाय 'विन्मतोर्लुगयं नाप्राप्ते टिलोपे आरभ्यमाणस्तं बाधिष्यते। स एव हि टिलोपः कृतेऽपि विन्मतोर्लुकि स्रगादौ प्रवर्त्तते' इत्युभयोः प्रकृतिप्रत्ययविषययोष्टिलोपयोरेकत्वमङ्गीकृत्य 'विन्मतोर्लुकि च स्रगादिप्रकृतेष्टिलोपोऽपि बाध्यते' इति कृत्वा प्रकृतिभावस्यानर्थक्यं प्रतिपाद्य 'तत्प्रतिपक्षत्वेन पयस्विच्छब्दादिष्ठनि विनश्च लुक्यनेन स्रगादाविव पयसष्टिलोपस्य बाधात् पयिष्ठ इति न प्राप्नोति' इति आक्षिप्य '''यथालक्षणमप्रयुक्ते' इत्यभिधानान्न भवति टिलोपः। रजस्विनमाचष्टे रजसयति, आयुष्मन्तमाचष्टे आयुषयति इति भवितव्यम्'' इत्युक्तम्। नन्वत्र मतेऽन्येषामप्यनेन न्यायेन लोपो न स्यादिति कथं वृत्तावेकाज्ग्रहणस्य वसयतीति प्रत्युदाहरणम् ? उच्यते; भाष्ये 'प्रकृत्यैकाच्' इदं प्रत्याख्यानमन्तरेणापि सूत्रं भिन्नविषयस्यापि टिलोपस्य शास्त्रद्वारेणैक्यमभ्युपेत्याभावः शक्यते वक्तुमित्येवम्परम्, न त्वर्थसतत्वमित्यवश्यं विन्मतोर्लुका भिन्नविषयस्य प्रकृतेष्टिलोपस्य बाधासम्भवादेकाक्षु तद्बाधनार्थमारम्भणीयमेतत्सूत्रमित्यनेकाक्षु टिलोपो भवत्येव। यत्तु ''पयिष्ठ इति न प्राप्नोति, 'यथालक्षणमप्रयुक्त' इति भाष्यमुपादाय न भवति टिलोपः'' इति कैयटकारवचनम्, तद् भाष्ये पयस्विच्छब्दं ° प्रस्तुत्यानभिधानात्कृतविन्मतुलुगन्तसान्तमात्रविषयम्, न

त्वन्यविषयमपि। अत एव तत्रैव कैयटे 'ततश्च रजस्विनमाचष्टे रजसयति, आयुष्मन्तमाचष्टे आयुषयति इति भवितव्यम्' इति कृतविन्मतुलुगन्तसान्तमेवोदाहृतम्। यत्तु माययतीत्यादाविष्ठवद्भावेन विनो लुकि पुनस्तेनैव टिलोपे चिणोलुङ्न्यायेन विनो लुकः 'असिद्धवदत्र' इत्यसिद्धत्वाट्टिलोपाप्रसङ्ग इति चोद्यम्, तट्टिलोपप्रकरणे तिराययति इत्यत्र परिहृतम्।

कुमुदान्यत्र सन्ति कुमुद्वान् देशः। एवं नड्वान्, वेतस्वान्—'कुमुदनडवेतसेभ्यो ड्मतुप्' इत्यत्र चातुरर्थिको ड्मतुप्। अस्यानजादित्वेन भत्वाभावेऽपि डित्करणसामर्थ्याट्टिलोपे 'झयः' इति मकारस्य वकारः। अत्र टिलोपस्य 'पूर्वस्मादपि विधौ' इति स्थानिवत्त्वम् 'पूर्वत्रासिद्धे न स्थानिवत्' इति न भवति। अत्र सुधाकरः—'कुमुदादिभ्यो णौ विन्मतोर्लुगित्यत्र न केवलं मतुबेव गृह्यते, किन्तु ड्मतुबपीति तस्यापि लुकि कुमुदयति, नडयति, वेतसयति' इत्याह। अन्ये तु '''एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य' इति न्यायेन विन्मतोरित्यत्र द्व्यनुबन्धकस्य मतुप एव ग्रहणं युक्तम्, न त्र्यनुबन्धकस्य ड्मतुपोऽपीति लुगभावाट्टिलोपे कुमुद्वयति, नड्वयति, वेतस्वयति इत्येवं भवितव्यम्'' इत्याहुः। ननु ड्मतुपो लुकि कथं कुमुदयति इत्युदाहृतम्, यावता विन्मतोर्लुकि वसुमत्तरो वसिष्ठ इत्यादिवत् प्रकृतेष्टिलोपेन भाव्यम्? न चेष्ठवद्भावेन प्राप्तत्वाद्विन्मतोर्लुक आभीयत्वेनैव पुनष्टिलोपे कर्त्तव्ये चिणोलुङ्न्यायेनासिद्धत्वम्; यस्मादिष्ठवद्भावेन प्राप्तानां कार्याणामुत्पत्तिदेश एव देशः, तदपेक्षयैव सिद्ध्यसिद्धी इति टिलोपप्रकरणे तिराययतीत्यत्रोपपादितम्। न च ड्मतुपि कृतस्य टिलोपस्य अस्मिंष्टिलोपेऽसिद्धत्वम्; व्याश्रयत्वात्। एवं तर्हि ड्मतुपि कृतस्य टिलोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वात् पुनर्व्याश्रयोऽपि टिलोपो न भविष्यति॥ विन्मतोर्लुक्॥

'युवाल्पयोः कनन्यतरस्याम्' (५।३।६४)—इतीष्ठेयसुनोर्विधीयमानः कनादेशो णावपि भवतीति युवानमल्पं वाचष्टे कनयति इति भवति। अन्यतरस्यांग्रहणात् कनभावे युवयति, अल्पयति इति भवतः। यूनोऽत्र यणादिपरलोपादि। युवत्यादेरपि णौ लिङ्गविशिष्टपरिभाषया कनादेशे कनयति इति भवति। अङ्गवृत्तपरिभाषया बहुलग्रहणाद्वा उपधावृद्ध्यभावः कनः।

इष्ठवद्भावस्य पुंवद्भावरभावेत्यादिना यत्प्रयोजनकथनं तदुपलक्षणमिति यथासम्भवमन्यान्यपि प्रयोजनानि प्रदर्श्यन्ते—

अन्तिकमाचष्टे नेदयति, बाढमाचष्टे साधयति,—'अन्तिकबाढयोर्नेदसाधौ' इतीष्ठनि विहितौ नेदसाधौ णावपि भवतः। प्रशस्यमाचष्टे प्रशस्ययति—'प्रशस्यस्य श्रः' 'ज्य च' इतीष्ठेयसुनोर्विधीयमानौ श्रज्यादेशावत्र न भवतः। सोपसर्गात् संग्रामयतेरेवेति ज्ञापकात् शस्यशब्दादेव णिच्, न तु प्रशस्यशब्दादिति णिच्परत्वाभावाद्यस्मादिष्ठनि परे सम्भाविते वा यत्कार्यं सम्भाव्यते तस्माण्णावपि

तद्भवतीत्यवश्यमतिदेशार्थोऽभ्युपगन्तव्यः; अन्यथाऽनवस्थाप्रसङ्गात्। सुधाकरस्तु श्रापयति ज्यापयतीति श्रज्यावुदाजहार। एवं प्रक्रियारत्नकारोऽपि। पुक् तु मृग्यः। शाकटायनस्तु श्रायति ज्यायतीत्युदाजहार। स हि 'ञिणित्यस्याः' इति धातोरुपान्त्यस्यैवाकारस्याकारमाह, न पुनरन्त्यस्यापीत्यत्राकारस्यैवाभावाद् दूरे पुकः प्रसङ्गः! अत्र मते स्रजयतीत्यादौ वृद्धेरभावोऽङ्गवृत्तपरिभाषया बहुलग्रहणाद्वा न भवतीत्येवं नाभिधानीयो भवति। प्रस्थादींस्तु आकारान्तानेव व्यधादिति प्रापयतीत्यादिर्सिद्धिः। सर्वमिदमनार्षत्वादप्रमाणमिति प्रक्रियारत्ने दूषितम्। अस्माभिस्तु श्रज्यादेशावेवात्र नाभ्युपगतौ।

वृद्धमाचष्टे ज्यापयति—'वृद्धस्य च' इतीष्ठेयसुनोर्विधीयमानो ज्यादेशो णावपि भवति। अकारोच्चारणसामर्थ्यात् 'प्रकृत्यैकाच्' इति लोपाभावे वृद्धौ पुक्। अयं च ज्यादेशः 'प्रियस्थिर' इत्यादिना वर्षादेशस्यापि विधानाद्विकल्पेन भवति। प्रिय-स्थिर-स्फिरोरु-बहुल-गुरु-वृद्ध-तृप्र-दीर्घ-बृन्दारक—इत्येतेभ्यः 'तदाचष्टे' इति णौ 'प्रस्थस्फवबंहिगर्वर्षित्रप्द्राघिबृन्दाः' इतीष्ठनीयसुनोः प्रियादीनां यथासंख्यं विधीयमानाः प्रादयो णावपि भवन्तीति प्रियस्य प्रापयति, स्थिरस्य स्थापयति, उरोः वरयति, बहुलस्य बंहयति, गुरोः गरयति, वृद्धस्य वर्षयति, तृप्रस्य त्रपयति, दीर्घस्य द्राघयति, बृन्दारकस्य बृन्दयति। प्रादीनामदन्तानां वृद्धौ पुक्। टिलोपस्तु 'प्रकृत्यैकाच्' इति प्रकृतिभावान्न भवति। ननु प्रादीनां प्रकृतिभावे 'असिद्धवदत्र' इत्यसिद्धत्वादेकाजेव नास्तीति प्रकृतिभावाप्रसङ्गात् स्यादेव टिलोपः ? एवन्तर्हि प्रादीनामसिद्धत्वादेवायमपि न भविष्यति। ननु मा भूदेवमयं प्राद्याश्रयष्टिलोपः स्थानिवद्भावेन, प्रियाद्याश्रयस्तु प्राप्नोत्येव, नैतत्; प्रियादीनामिष्ठवद्भावेन प्राप्ताट्टिलोपात् परत्वादकृते एव तस्मिन् प्राद्यादेश इति स्थानिनि स एव नास्ति टिलोप आदेशे योऽतिदिश्येत! वरयति इत्यादौ बहुलग्रहणात् 'अङ्गवृत्त' इति वा उपधावृद्धिर्न भवति। अत्र क्षीरस्वामी 'बहुलग्रहणाद् प्रादेशाभावात् प्रिययति इत्यपि' इति। मैत्रेयस्तु 'स्थिरस्य स्थादेशे बहुलग्रहणाद्वृद्धिपुकोरभावाद्गुणायादेशयोः स्थाययति' इति। 'बहुलग्रहणात् स्थिरयति इत्यपि' इति कौमाराः। भाष्ये तु प्रापयति स्थापयति इत्येवोदाहृतत्वात् उद्भाष्यमेतत् सर्वमित्यनादरणीयम्।

व्याकरणस्य सूत्रं करोति व्याकरणं सूत्रयति—'तत्करोतीत्युपसंख्यानं सूत्रयत्याद्यर्थम्' इति णिच्। 'प्रातिपदिकाद्धात्वर्थे' इत्येव सिद्धे वचनमिदं माणवकं मुण्डयतीत्यादौ माणवकादिसापेक्षान्मुण्डादेर्णिजर्थे 'मुण्डमिश्र' इतिवत् व्याकरणादिसापेक्षात् सूत्रादेर्णिजर्थमारभ्यते। तत्र लक्ष्यलक्षणसमुदायस्य व्याकरणशब्दार्थत्वात्सूत्रस्य तदंशत्वेन व्यतिरेकाद्वाक्ये षष्ठी। यदापि सूत्रमेव व्याकरणशब्दार्थस्तदापि व्याकृतिक्रियाकारणत्वविशिष्टं सूत्रं व्याकरणशब्दार्थः। सूत्रशब्दार्थस्तु केवलमिति, राहोः शिर इत्यादिवत् काल्पनिकान्वयव्यतिरेकस्य

सम्भवः। यदा त्वयं व्यतिरेको न विवक्ष्यते तदा व्याकरणं सूत्रं करोतीति विग्रहीतव्यम्। अत्र वृत्तौ वर्त्तिपदार्थानामैकार्थ्येन विभागाभावादन्यान्वया-योगात् सूत्रस्य व्याकरणेन सम्बन्धानुपपादाद्व्यतिरेकाभावाद्व्याकरणात् षष्ठ्य-भावः। अस्य च विशेषकर्मणः सामान्यकर्मणः सूत्रस्य प्रत्ययार्थेऽप्यनन्तरभावात् करोतिना सम्बन्धाच्च भवति द्वितीया। उक्तं चैवं भाष्ये—'वाक्ये षष्ठी, उत्पन्ने प्रत्यये द्वितीया। केनैतदेवं भवति? योऽसौ सूत्रव्याकरणयोरभिसम्बन्ध उत्पन्ने प्रत्यये निवर्त्तते। अस्ति च करोतेर्व्याकरणेन सामर्थ्यमिति द्वितीया' इति। अत्र कैयटे "वाक्ये द्रव्यरूपं सूत्रं सूत्रशब्देनोच्यते, णिचि तूत्पन्ने सत्त्व-भावनिवर्त्तनात्करोत्यर्थाभिधायी सूत्रशब्दः सम्पद्यते। तदुक्तम् 'परार्थाभिधानं वृत्तिः' इति। एतच्च प्रक्रियागतविभागाश्रयेणोक्तम्। परमार्थतस्तु धात्वन्तरं सूत्रविशिष्टक्रियावचनमिति।

## अथान्योऽपि णिच् प्रदर्श्यते—

कंसस्य वधः कंसवधः—'हनश्च वधः' इति वधादेशः। 'कर्तृकर्मणोः कृति' इति कंसात्कर्मणः षष्ठी। 'कृद्योगा च षष्ठी समस्यते' इति समासः। यद्वा—सर्पिषो जानीते, मातुः स्मरतीत्यादौ 'न माषाणामश्नीयात्' इत्यादाविव कारकस्य शेषत्व-विक्षायां षष्ठीसिद्धावपि 'ज्ञोऽविदर्थस्य करणे' 'अधीगर्थदयेशां कर्मणि' इत्यादौ कारकस्य शेषत्वविवक्षायामेव पुनः षष्ठीविधानं 'षष्ठी श्रूयत एव न लुप्यते' इत्यर्थात् समासनिषेधार्थम्। अमुमेवार्थं 'प्रतिपदविधाना षष्ठी न समस्यते' इत्याहेति तस्य 'कर्तृकर्मणोः कृति' इत्यत्र शेषाधिकाराभावादशेषत्वविवक्षायामेव कर्मणः षष्ठी-विधावनुपस्थानात् कृद्योगा चेति वचनं तदपवादो न भवति; किन्तु 'षष्ठी' इति समासवचनस्यानुवाद इति राजपुरुषादिवत् 'षष्ठी' इत्येव समासः। उक्तञ्च—
'साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः। प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये'॥ इति

न चैवं मन्तव्यम्—'प्रतिपदविधाना च' इति वचनं 'कर्तृकर्मणोः कृति' इति षष्ठ्याः समासनिषेधार्थं स्यादिति; यतः 'कृद्योगा च षष्ठी समस्यते' इति तयैव समासोऽभिहितः। कंसवधमाचष्टे कंसं घातयति—'आख्यानात् कृतस्तदाचष्टे' इति णिच्। आख्यायते इत्याख्यानम्—'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युट्। तद्योगाच्छब्दोऽप्याख्यानम्। इहाख्यानमात्रमाख्यानशब्देनोच्यते, न तु संज्ञाभूतं कंसवधबलिबन्धसुभद्राहरणादिकमेवेति राजागमनादेरपि अयं णिज् भवति। अत्र 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति कंसवधादेराख्यानस्य कृदन्तत्वम्। अत्र कंसवध इति स्थिते 'कृल्लुक्' कृत्प्रत्ययस्य लुक् भवति। 'प्रकृतिप्रत्यापत्तिः' इति कृत्प्रकृतेर्धातोः प्रत्यापत्तिर्भवति। प्रत्यापत्तिश्चाविकारस्वरूपेणावस्थानमिति वधादेशनिवृत्तौ हनिरेवावतिष्ठते। ननु प्रत्ययस्य सन्नियोगेन शिष्टोऽयं वधादेशः तस्य लुका निवृत्तौ स्वयमपि सन्नियोगशिष्टपरिभाषया निर्वतिष्यत एव, किं प्रत्या-

पत्तिवचनेनेति चेत्, सत्यम्; अत्रैवं सिद्ध्यति। तत्फलं त्वग्रे दर्शयिष्यते। तत्र कंसहनिति स्थिते 'प्रकृतिवच्च कारकम्' चकारो भिन्नक्रमः कारकमित्यस्यानन्तरं द्रष्टव्यः। कार्यशब्दोऽध्याहार्यः। 'षष्ठीसमर्थाद्वतिः। प्रकृतिशब्देन हेतुमण्णिच्प्रकृतिरुच्यते। तदयमर्थो भवति—वधादेः कृदन्तस्य यत्कारकं कंसादिकं तस्य णिच्प्रकृतेर्हन्त्यादेर्हेतुमण्णौ धातावनन्तर्भूतमकृतनलोपादिकं द्वितीयान्तं यद्रूपं तादृशं भवति। 'हनस्तोऽचिण्णलोः' 'हो हन्तेर्ञ्णिन्नेषु' इत्यादिकं कार्यं हेतुमण्णिचः प्रकृतेरिवात्रापि णौ भवति। ततश्च कंसात् द्वितीयायां हनश्च तत्वघत्वयोः कंसं घातयति इति सिद्धं भवति। अनेन चातिदेशेन कारकस्य धातावन्तर्भावस्यापि प्रतिपादनादर्थात्तद्व्यतिरिक्ताद्वधादेवायं णिजिति तदादेरेव धातुत्वात्तत एव तिङि तदाद्येव तिङन्तं पदं भवति। तथा कंसं घातयतीत्यादौ वधादेरेवाङ्गत्वादडागमस्तस्मादेव पूर्वो भवति। एवं कंसमजीघतत् इत्यत्र हन एव चङ्परणिपरे द्विर्वचनं भवति। नन्वत्रान्तरेणापि कार्यातिदेशं वृद्धिरिवास्यैव णेर्णित्वमाश्रित्य 'हो हन्तेः' इति घत्वं 'हनस्त' इति तत्वं च भविष्यति, किमनेनातिदेशेनेति चेत्, न; 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इति यत्र धातोः स्वरूपोपादानेन किञ्चित्कार्यं विधीयते तत्र धातुनिबन्धनप्रत्यये तत्कार्यमिति विज्ञानात्, अस्य च णेर्धातुनिमित्तत्वाभावात् कंसपरिमृट्काम्यति इत्यत्र मृजेर्वृद्धिरिवात्रापि तत्वघत्वयोरप्रसङ्गात्। न चैवं मन्तव्यम्—कंसपरिमृट्काम्यतीत्यत्र यदङ्गं कंसपरिमृडिति न तन्मृजिर्यश्च मृजिर्नासावङ्गम्। मृजेर्वृद्धिश्च मृजेरङ्गस्य विधीयते इत्यन्तरेणापि धातुस्वरूपपरिभाषायां नास्त्येव वृद्धेः प्रसङ्ग इति; यतः 'अङ्गाधिकारे तस्य च तदन्तस्यापि' इति मृज्यन्तस्यापि प्राप्नोत्येव। एवं बलिबन्धमाचष्टे बलिं बन्धयतीत्यादि। नन्वत्र कृल्लुगिति कृतो लुका लुप्तत्वात् प्रत्ययलक्षणाभावात् कृद्योगाभावान्न षष्ठी प्राप्नोति, प्रत्ययलक्षणं च लुका लुप्तत्वान्न भवितव्यम्, अवस्थितं च हन्त्याद्यपेक्षया कर्मत्वमिति द्वितीयासिद्धेः किं प्रकृतिवत्कारकातिदेशेनेति चेत्, न; असत्यस्मिन्नतिदेशे कंसादेः पृथक्करणमेव न स्यादिति विभक्तेरेवाप्रसङ्गात्कुतः स्याद् द्वितीया! किं च कंसवधशब्दादेव णिच्, न तु विनिष्कृष्टकारकांशाद्वधादिति सकारकस्यैव तिङन्तत्वं स्यात्। तथाऽडागमोऽपि कारकात् पूर्वमेव स्यात्, न तु कंसं घातयतीति हन्तेः। एवं 'चङि' इति द्विर्वचनमपि कंसादेरेव स्यात्, न तु कंसमजीघतदित्यादौ हन्त्यादेः।

नैतानि सन्ति प्रयोजनानि। यदा प्रकृतिवत् कारकमित्यनेन कृत्प्रकृतेर्हन्त्यादेर्णौ दृष्टः कारकाणामन्तर्भावोऽत्रापि णौ प्रतिपद्यते, तदा प्रकृतिवत् कार्यमित्यनेनापि कृत्प्रकृतेर्हन्त्यादेः शुद्धे णौ दृष्टस्यानिष्कृष्टकारकप्रकृतित्वस्यात्राप्यतिदेष्टुं शक्यत्वान्निष्कृष्टकारकाद् हन्त्यादेरेव स्यात्। प्रत्ययस्य या प्रकृतिस्तदाद्येव तिङन्तं भविष्यति। अड्द्विर्वचने च तस्यैव भविष्यतः। सत्यमत्रैव न

दोषो भविष्यति; राज्ञ आगमनं राजागमनं, 'कर्तृकर्मणोः कृति' इति कर्त्तरि षष्ठी, पूर्ववत् 'कृद्योगा च षष्ठीं समस्यते' इति समासः, राजागमनमाचष्टे राजानमागमयतीत्यादौ राजादेर्द्वितीया न स्यात्, किं तु कर्तृलक्षणा तृतीयैव स्यात्; यतः प्रकृतिवत् कारकमित्येतत् प्रकृतेः शुद्धे णौ दृष्टकार्यमेवातिदिशेत्, न पुनरन्यदपि किंचित्। 'प्रकृतिवत् कार्यम्' इत्युच्यमाने तु गमने कर्तृभूतस्य राज्ञः कृत्प्रकृतेर्गमेः शुद्धे णौ 'गतिबुद्धि' इत्यादिनाऽस्ति कर्मत्वमित्यत्रापि णौ कर्मरूपातिदेशाद् राजानमागमयति इति सिद्धं भवति। अत एव शुद्धे णौ दृष्टस्य कर्मरूपस्यात्रापि णावतिदेशाद्राज्ञो नलोपो भवति। न चैवं मन्तव्यम्—'सुप्तिङन्तं पदम्' इति द्वितीयान्तस्यैव राज्ञः पदत्वादत्र नकारान्तस्य प्रातिपदिकान्तत्वेऽपि पदान्तत्वाभावान्नलोपो न भवति। यल्लुप्तप्रत्ययान्तर्वर्त्तिन्या षष्ठ्या प्रत्ययलक्षणेन तदन्तत्वे नान्तं भवत्येव पदम्। न चास्ति 'न लुमता' इति प्रत्ययलक्षणाभावः, यदयं लुमता लुप्ते प्रत्यये यदङ्गं तस्य यत्कार्यं लुप्तप्रत्ययमाश्रित्य प्राप्नोति तत्रैवेतीह नावतरति। एवं च प्रकृतिवत्कारकवचनं कंसादेर्द्वितीयार्थे च भवति; यतः 'कर्तृकर्मणोः कृति' इति षष्ठी अङ्गस्य भवति। न ह्यङ्गं कर्म कर्तृ वा तत्परं सम्भवतीति 'न लुमता' इत्यस्य प्रवृत्तेः प्रत्ययलक्षणेन कृद्योगलक्षणा षष्ठी प्राप्नोति। तदेवं कंसादीनां कारकाणां णिजुत्पत्तौ पृथक्करणस्य सिद्धत्वात् 'आख्यानात् कृतः' इत्याख्यानशब्दोऽर्थात्स्वावयवकृदन्तपरो भवति।

मृगाणां रमणं मृगरमणम्—कर्त्तरि षष्ठ्याः पूर्ववत्समासः। मृगरमणमाचष्टे मृगान् रमयति—'दृश्यर्थायां च प्रवृत्तौ' इति णिच्। अत्राख्यानात्कृत इत्यादि सर्वं सम्बध्यते। तदस्यायमर्थः—मृगरमणस्य या समाख्यानरूपा प्रवृत्तिः सा यदि दृश्यर्था 'एतस्मिन्नवकाशे मृगा रमयन्ते' इति प्रदर्शनार्था भवति, तदा णिज्भवतीति। एवं च मृगान् रमयतीत्यस्यायमर्थो भवति—स्वयं मृगरमणमनुभवन् अन्यस्मै तद्दर्शयितुमाचष्ट इति। इदं 'दृश्यर्थायां च' इति वचनम् 'आख्यानात्कृतस्तदाचष्टे' इत्येवाख्यानप्रवृत्तेर्दृश्यर्थत्वेऽपि सिद्धे णिच्यारभ्यमाणमदृश्यर्थत्वं मा भूदित्येवमर्थम्। तेन यदारण्ये दृष्टं स्वयं मृगरमणं ग्रामस्थोऽन्यस्मा आचष्ट 'एवं मृगास्तत्रागत्य रमन्ते', तदा मृगरमणमाचष्टे इति वाक्यमेव भवति। अत्र कैयटे—'दृश्यर्थायामित्येतच्च मृगरमणादिविषयमेव द्रष्टव्यम्। राजागमनादौ तु दृश्यार्थप्रवृत्त्यभावेऽपि णिज्भवति' इति। अत्र रमणक्रियायां कर्तृभूतानां मृगाणां रमेरकर्मकत्वेऽपि शुद्धे णौ 'गतिबुद्धि' इत्यादिना कर्मत्वादत्रापि णौ कर्मत्वम्।

रात्रेर्विवासो रात्रिविवासः। विवासोऽतिक्रमणम्। कर्त्तरि षष्ठ्याः पूर्ववत्समासः। ततः 'आङ् मर्यादाभिविध्योः' इत्याङोऽव्ययीभावः। आरात्रिविवासमाचष्टे रात्रिं विवासयति—'आलोपश्च कालात्यन्तसंयोगे मर्यादायाम्' इति णिचि मर्यादावचनस्याङो लोपः। 'इहाख्यानादिति न सम्बध्यते' इति

पदमञ्जर्याम् । कृल्लुगादि पूर्ववत् । इह कालस्यात्यन्तसंयोगः सन्निहिताख्यानक्रियायाऽवयवेन सम्बद्धः । ततश्च रात्रिं विवासयतीत्यस्यायमर्थः—यावद्रात्रेरतिक्रमणं तावत्कथाः कथयतीति । इहाख्यानमाख्येयमपेक्षत इति कथा इति । दर्शितवसिक्रियायां कर्तृभूतायां रात्रेर्वसेरकर्मत्वेन शुद्धे णौ 'गतिबुद्धि' इत्यादिना कर्मत्वादत्रापि णौ कर्मत्वम् ।

सूर्यस्योद्गमनं सूर्योद्गमनम्—अत्रापि पूर्ववत् कर्त्तरि षष्ठी, समासश्च । विक्रमसिंहपुर्याः प्रस्थितः काञ्चीपुर्यां सूर्योद्गमनं सम्भावयते सूर्योद्गमनं प्राप्नोतीत्यर्थः । 'भू प्राप्तौ आत्मनेपदी' इति चुरादौ । सूर्यमुद्गमयति । 'चित्रीकरणे प्रापि' इति कृदन्ताच्चित्रीकरणे गम्यमाने प्राप्नोत्यर्थाण्णिच्, कृल्लगादि पूर्ववत् । अत्रोद्गमने कर्तुः सूर्यस्य पूर्ववद्गमेः शुद्धे णौ 'गतिबुद्धि' इत्यादिना कर्मत्वाद् दृशेरपि णौ कर्मत्वम् । विक्रमसिंहपुर्याः काञ्चीपुरी दूरस्थेत्युदयात् पूर्वं तावतो देशस्य गमनमिहाश्चर्यकरणम् । इहाप्यसम्भवादाख्यानादिति न सम्बद्ध्यते । तत्र प्रकृतिवत्कारकातिदेशात्सूर्यस्य णौ पृथग्भावः । सोपसर्गात् संग्रामयतेरेवेति ज्ञापकादुदोऽपीति सूर्यमुद्गमयतीत्यादि भवति ।

पुष्येण योगः पुष्ययोगः । अत्र यथा 'अन्तर्द्धौ येनादर्शनमिच्छति' इत्यात्मनः कर्मणो नियमेन गम्यत्वाद्येनेति कर्तुः षष्ठी 'उभयप्राप्तौ' इति नियमान्न भवति, एवमत्रापि युजिक्रियाकर्मणश्चन्द्रमसो नियमेन गम्यत्वात्तद्योगे कर्तुः पुष्यात्षष्ठी भवति । पुष्यश्चात्र कर्त्ता, चन्द्रमाः कर्म, स हि तं युनक्ति । पुष्ययोगं जानाति पुष्येण योजयति—'नक्षत्रयोगे ज्ञि' इति नक्षत्रयोगवाचिनः कृदन्तादस्माज्जानात्यर्थे णिचि कृल्लुगादि पूर्ववत् । अत्र "प्रकृतिप्रत्यापत्तिवचनेन घञि कृते 'चजोः कु घिण्ण्यतोः' इति कुत्वं निवर्तते" इति कैयटपदमञ्जर्यादिषूक्तम् । 'प्रकृतिवत्कारकम्' इत्यनेन कृत्प्रकृतेः शुद्धे णौ यद्रूपं कारकं तद्रूपमत्रापि णावित्युक्तत्वाद्योगे कर्तुः पुष्यस्य गत्यादिष्वनन्तर्भावेन कर्मत्वाभावादत्रापि णौ न भवति कर्मत्वमित्यात्मनः कर्तृत्वाश्रयेण तृतीया भवति । अत्र न्यासे 'पुष्येण करणभूतेन चन्द्रमसो योग इति करणे तृतीयामुक्त्वा कृत्प्रकृतेर्युजेः शुद्धे णौ पुष्यस्य करणताविपर्यासाभावात्तत्र दृष्टमेवात्रापि णावतिदिश्यते' इति तृतीयामुक्त्वा 'यदा पुष्येण सह योग इत्ययमर्थो विवक्ष्यते तदा कारकातिदेशस्यायं विषयो न भवति । पुष्यस्य करणत्वात्सहार्थएव तृतीया वेदितव्या' इत्युक्तम् । अनयोः पक्षयोः पुष्येण करणभूतेन सह वा तेन चन्द्रमसान्ययोगे इत्यर्थः स्यात् । अत्र कैयटे 'प्रकृतिवत्कारकम्' इत्यनेन 'तेन तुल्यं क्रिया चेद्वतिः' इति तृतीयार्थे वतिमङ्गीकृत्य 'णिचो या प्रकृतिः कंसवधादिराख्यानक्रियापेक्षया प्रतिपन्नकर्मभावस्तया तुल्यं भवति, अप्रतिपन्नकर्मभावं कंसादिकं कंसं घातयति राजानमागमयतीत्यादौ सर्वत्र कंसादेर्द्वितीयासामर्थ्यात् । तदनेनैव न्यायेन पुष्येण योजयतीत्यत्रापि पुष्यस्य कर्मत्वाद् द्वितीया स्यात् इत्याशङ्क्य वत्करणात् स्वाश्रयस्य कर्तृत्वस्यानिवर्त्तनात् तृतीयासिद्धि-

मुक्त्वैवमुक्तम्—'अथ वा प्रकृत्या तुल्यं वर्तते इति प्रकृतिवत्प्रकृतेरिव प्रकृतिवण्ण्यन्तस्य कारकमित्युभयथातिदेशाश्रयणात्किञ्चित्क्वचित्परिगृह्यते' इति ॥

अथान्योऽपि प्रातिपदिकाश्रयः प्रदर्श्यते—

'आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः'। 'कर्तुः क्यङ् सलोपश्च' (३।१।११) इत्यत्रायं पठ्यते इति उपमानात्सन्निहिताचारक्रियायाः कर्तृ प्रातिपदिकादाचारेऽर्थेऽयं क्विब् वा भवति। अत्र वाग्रहणं तक्रकौण्डिन्यन्यायेन कौटिल्ययङा क्रियासमभिहारयङ इवावगल्भादिप्रातिपदिकविषयेणानेन क्रियासुबन्तविषयस्यापि क्यङो बाधो मा विज्ञायीति। नन्विदं गल्भाद्यनुक्रमणं 'कर्तुः क्यङ्' इत्यत्र सुबन्ताधिकारे क्रियते। क्यङपवादश्चायं क्विप्। उत्सर्गसमानदेशत्वं चापवादानां प्राचुर्येण दृष्टमिति सुबन्तादेवानेन क्विपा भवितव्यम्, न चैतदस्ति; यद्गल्भादीननुक्रम्य 'सर्वप्रातिपदिकेभ्य इत्येके' इत्याह। न चेदं प्रातिपदिकग्रहणं सुबन्तोपलक्षणार्थं स्यात्, तर्हि 'सर्वेभ्य इत्येके' इत्येव वक्तव्यत्वात् प्रातिपादिकग्रहणमनर्थकं स्यात्। यत्तु तदुक्तं गल्भादौ वाग्रहणं तदिदानीं न वक्तव्यं भवति, यतः सर्वेभ्यः क्विब् विधीयते क्यङ्वेत्यन्तरेणापि वाग्रहणं वचनद्वयप्रामाण्याद्विकल्पो भविष्यति। यद्येवम्, गल्भादयोऽपि नानुक्रमितव्या इति न मन्तव्यम्, यदेषामनुदात्तत्वप्रतिज्ञानार्थमेवानुक्रमणम्। इदं चानुदात्तेत्त्वप्रतिज्ञानं क्विप्संनियोगत इति अवगल्भ इवाचरति अवगल्भायते इत्यादौ वाक्ये क्यङि चाकारस्य श्रवणं भवति। अवगल्भ इवाचरति अवगल्भते। अवगल्भाञ्चक्रे। अवगल्भिता। अवगल्भिष्यते। अवगल्भताम्। अवागल्भत। अवगल्भेत। अवगल्भिषीष्ट। अवागल्भिष्ट, अवागल्भिष्यत—अनुदात्तेत्त्वात्तङ्, सोपसर्गात्संग्रामयतेरेवेति ज्ञापकान्निष्कृष्टोपसर्गाद्गल्भादेव प्रत्यय इति गल्भस्यैवाडागमो भवति। तथा अवागल्भ्य इत्यत्रावशब्दस्य 'कुगतिप्रादयः' इति समासे तल्लक्षणो ल्यब्भवति॥ क्लीबते। क्लीबाञ्चक्रे। होडते। होडाञ्चके इत्यादौ 'कास्प्रत्ययादाम्' इत्याम्। 'आमः' इति लेर्लुक्। ननु तत्र प्रत्ययग्रहणमपनीय 'कास्यनेकाच इति कर्त्तव्यं चुलुम्पाद्यर्थम्' इति न्यस्यते, एतेऽवगल्भादय एकाच इति कथमाम् स्यात्? नैष दोषः; यद्यपि क्विप्सन्नियोगेनैकाचो भवन्ति तथाप्युपदेशेऽनेकाचो भवन्ति। 'कास्यनेकाचः' इत्यत्र च भूतपूर्वगतिराश्रयिष्यते। इदमेव क्विब्विधानं भूतपूर्वगत्याश्रयणे प्रमाणम्, अन्यथा 'गल्भ धाष्टर्ये' 'क्लीबृ अधाष्टर्ये', 'होडृ अनादरे' इत्येतेभ्योऽनुदात्तेभ्य अवगल्भते इत्यादिसिद्धौ किमनेन क्विब्विधानेन! अत एव धातूनामनेकार्थत्वात् आचारार्थश्च भविष्यति॥ अश्व इवाचरति अश्वति—प्रातिपदिकात् प्रत्ययविधानात् शप्प्रकृत्यकारयोरपदान्ताश्रयम् 'अतो गुणे' इति पररूपत्वं भवति, अन्यथान्तर्वर्त्तिन्या विभक्त्या पदत्वात्पररूपत्वं न स्यात्। अश्वाञ्चकार। अश्विता। अश्विष्यति। अश्वतु। आश्वत्। अश्वेत्। अश्व्यात्। आश्वीत्।

आश्विष्यत्—अतो लोप आर्धधातुके । क इवाचरति कति । चक । चकतुः इत्यादि । अतो लोपः सर्वत्र । अयं 'ण्यल्लोप' इत्यादिना वृद्धिं बाधते । अ इवाचरति अति इत्यादि । लिटि औ । अतुः । उः इत्यादि । सर्वत्रात्र द्विर्वचनेऽतो लोपादन्तरङ्गत्वात् अतो गुणे पररूपत्वे तस्याङ्गग्रहणेन प्राप्तादतो लोपात् परत्वादभ्यासग्रहणेन ग्रहणात् 'अत आदेः' इति दीर्घः । 'आतो लोप इटि च' इत्याल्लोपः किति । णलि तु 'आत औ णल'' इत्यौत्वे वृद्धिः ॥ यथाकथञ्चित् 'प्रातिपदिकग्रहणे लिङ्गविशिष्टं गृह्यते' इति स्थितत्वान्मालेवाचरति मालाति । मालाञ्चकार । मालिता । मालिष्यति । मालातु । अमालात् । मालायात् । मालायास्ताम् । अमालासीत्—'यमरमनमातां सगिटौ' इतीटि क्ङित्यजादावार्धधातुके 'आतो लोप इटि च' इत्याकारलोपः । ज्ञेवाचरति ज्ञाति । जज्ञौ इत्यादि पूर्ववत् । प्रत्ययान्तत्वेऽपि एकाच्त्वादाम्भावः । आ इवाचरति आति इत्यादि ।

कविरिवाचरति कवयति । कवयाञ्चकार । कवयिता इत्यादि । आशीर्लिङि 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घे कवीयात् । लुङ्यतरङ्गमपि गुणं सिचि वृद्धिरपवादत्वात् बाधत इति वृद्धावायादेशे च—अकवायीत् । विरिवाचरति वयति इत्यादि । पूर्ववल्लिटि प्रत्ययान्तत्वेऽप्येकाच्त्वादामभावे—विवाय । विव्यतुः । विव्युः । विवयिथ । विव्यथुः । विव्य । विवाय, विवय । विव्यिव । विव्यिम । णिति वृद्धिः । पिति गुणः । किति 'एरनेकाचः' इति यणादेशः ॥ इरिवाचरति अयति इत्यादि । लिट्येकाच्त्वादामभावः—इयाय । ईयतुः । ईयुः । इययिथ । ईयथुः । ईय । इयाय । इयय । ईयिव । ईयिम । अत्र किति सवर्णदीर्घे 'अचि श्नुधातु' इतीयङ् । यद्वा सवर्णदीर्घत्वात् परत्वेनोत्तरखण्डस्य-'एरनेकाचः' इति यण्यपि नास्त्यत्र रूपभेदः, गुणवृद्धिविषये अयायोः 'द्विर्वचनेऽचि' इति स्थानिवत्त्वादेकारस्यैकारस्य च द्विर्वचनेऽभ्यासह्रस्वत्वे 'अभ्यासस्यासवर्णे' इतीयङ् । यदापि गुणवृद्ध्योरपि स्थानिवद्भावादिकारस्य द्विर्वचनं तदापि सवर्णदीर्घात् परत्वात्पुनरुत्तरखण्डस्य गुणादावस्त्येवाभ्यासस्यावर्णपरत्वमिति इयङ्सिद्धिः । न च पुनः प्रवर्तमानाभ्यां गुणवृद्धिभ्यामन्तरङ्गत्वात्सवर्णदीर्घेण भाव्यमिति वक्तव्यम्; एवं हि 'अभ्यासस्यासवर्णे' इतीयङ्वचनमनर्थकं स्यात् । नन्वयमस्यावकाशः—अर्तेर्लिटि द्विर्वचनेऽभ्यासस्य 'अर्त्तिपिपर्त्योश्च' इतीत्वे इयर्ति, इयृतः इत्यादि भवति, नैतदस्ति; नह्येकमुदाहरणं योगारम्भं प्रयोजयति, इयर्ति हि प्रयोजने 'अभ्यासस्यार्त्तौ' इत्येव ब्रूयात् । इषेः—इयेष, ओणेः—उवोणेत्यादि तु न प्रयोजनम्; यतोऽयं छान्दसः, भाषायान्त्वामा भवितव्यम् । छन्दसि च 'तन्वादीनां छन्दस्युपसंख्यानम्' इति 'त्रियम्बकम्' 'सुवर्गः' इत्यादिवदियङुवङौ सेत्स्यतः ॥ लक्ष्मीरिवाचरति लक्ष्मयति । लक्ष्मयाञ्चकार । लक्ष्मयिता इत्यादि ॥ श्रीरिवाचरति श्रयति । शिश्राय । शिश्रियतुः । शिश्रियुः—'एरनेकाचः' इति यणादेशः संयोगपूर्वत्वान्न भवति, 'अचि

श्नुधातु' इतीयङेव भवति। ईरिवाचरति अयति इत्यादि। लिटि पुनः 'इजादेश्च गुरुमतोऽनृच्छः' इत्यामि-- अयाञ्चकार इति भवति। तत्र व्यपदेशिवद्भावेनेजादित्वगुरुमत्त्वे समाश्रिते॥ विधुरिवाचरति विधवति। विधवाञ्चकार। विधविता। विधविष्यति। विधवतु। अविधवत्। विधवेत्। आशिषि 'अकृत्सार्वधातुकयोः' इति दीर्घे—विधूयात्। अविधावीत्—गुणं सिचि वृद्धिरपवादत्वाद् बाधते॥ कुरिवाचरति कवति। चुकाव इत्यादि। एकाच्त्वादामभावः। उरिवाचरति अवति इत्यादि। पूर्ववल्लिटि गुणवृद्धिविषये अवावौ स्थानिवत्त्वादोकारस्य च द्विर्वचनेऽभ्यासह्रस्वत्वे, 'अभ्यासस्यासवर्णे' इत्युवङि उवाव। उवविथ। उवाव इति भवति। यदापि गुणवृद्ध्योरपि स्थानिवद्भावादुकारस्य द्विर्वचनं तदापि 'अभ्यासस्यासवर्णे' इत्युवङ्विधानसामर्थ्यात् सवर्णदीर्घात् पूर्वमुत्तरखण्डस्य गुणादावभ्यासस्यासवर्णपरत्वादुवङ्सिद्धिः। सामर्थ्यं च इयायेत्यत्र उपपादितम्। किद्वचनेष्वन्तरङ्गत्वात्सवर्णदीर्घे पश्चादुवङ्—उवतुः। उवधुः। उव। उविव। उविम इति भवति। अत्र 'वार्णादाङ्गं बलीयः' इति सवर्णदीर्घात् पूर्वमुत्तरखण्डस्योवङि पश्चात्कृते तस्मिन् ऊवतुरित्यादि स्यादिति न मन्तव्यम्; यत इयं परिभाषाऽऽङ्गवार्णयोः समानाश्रयत्वे प्रवर्त्तते, यथा कारक इति। अत्र हि प्रत्ययमेवाश्रित्य गुणवृद्धी प्राप्नुतः। उवतुरित्यत्र उकारमाश्रित्य सवर्णदीर्घः प्राप्नोति, उवङ् तु प्रत्ययमाश्रित्येति नास्ति समानाश्रयत्वम्॥ वधूरिवाचरति वधवति। वधवाञ्चकार। वधविता इत्यादि॥ भ्रूरिवाचरति भ्रवति। बुभ्राव। बुभ्रुवतुः इत्यादि। 'अचि श्नुधातुभ्रुवाम्' इत्युवङादेशः। अयं च वृद्धिगुणयोर्विषये ताभ्यां परत्वात् बाध्यते॥ उरिवाचरति अवति इत्यादि। लिटि 'इजादेश्च' इत्यामि अवाञ्चकार इति भवति। पितेवाचरति पितरति। पितराञ्चकार। पितरिता। पितरिष्यति। पितरतु। अपितरत्। पितरेत्। पित्रियात्—'रिङ् शयग्लिङ्क्षु' इति रिङादेशः। अपितारीत्—अन्तरङ्गमपि गुणं सिचि वृद्धिर्वचनाद्बाधते इत्युक्तम्। यद्वात्र गुणेऽपि न दोषः; यत्कृतेऽस्मिन् 'अतो लरान्तस्य' इति पुनर्वृद्धिर्भविष्यति॥ नेवाचरति नरति। ननार इत्यादि पूर्ववत्॥ आ इवाचरति अरति—'पाघ्रा' इत्यादावर्त्तिग्रहणेन—

अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः। शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु॥

इति रीत्या दृश्यादिसाहचर्याच्च धातुपाठस्थ एवार्तिर्गृह्यते, न पुनरयमपीति ऋच्छादेशाभावः। अत एव तत्र पदमञ्जर्याम्—ऋ गतिप्रापणयोरिति भौवादिकः, ऋ गताविति क्रैयादिकः, ऋ सृ गताविति जौहोत्यादिक इति त्रीनेवोपादायान्त्ययोरग्रहणे कारणं शिदसम्भवः साहचर्यं चोक्तम्। तथा 'समो गम्यृच्छि' इत्यत्र वृत्तौ 'अर्तीत्युभयत्र पठ्यते; सृ गतिप्रापणयोः इति भूवादौ, ऋ सृ गतौ इति जुहोत्यादौ, विशेषाभावादुभयोरपि ग्रहणम्' इति। यदि च नामधातोरिह ग्रहणमिष्येत,

कथमेवमुच्येत ! एवमन्यत्रापि तत्रतत्र प्रतिपदविधानं धातुग्रहणेष्वभिव्यक्तपदार्थानां धातुपाठपठितानामेवोपादानं क्रियते । 'बाह्वादिभ्यश्च' इत्यत्र भाष्यकैयटयोः 'अनभिव्यक्तपदार्थानां तत्तत्कार्यं न भवति' इति अद्यत्वे बाहोः 'बाह्वादिभ्यश्च' इतीञोऽभावात्समान्येऽणि बाहव इति भवति । तथा संज्ञाश्वशुरस्य 'राजश्वशुराद्यत्' इति यतोऽभावाददन्तलक्षणे इञि श्वाशुरिरित्येव । 'मातृपितृभ्यां स्वसा' इत्याभ्यां परस्य स्वसुर्विधीयमानं षत्वं क्रियाशब्दात् परस्य नेति धान्यमातुः स्वसेत्यत्र न भवतीति प्रतिपादितम् । एवं चास्मादृशब्दाल्लिटि 'ऋच्छत्यॄताम्' इति किति लिटि विधीयमानो गुणो न भवति । तत्र धात्वभ्यासयोः सवर्णदीर्घे धातुग्रहणेन ग्रहणादकारान्तलक्षणे गुणे अरतुरित्यादि भवतीत्येके । अन्ये त्वभ्यासग्रहणेन ग्रहणादुरदत्वे हलादिशेषे 'अत आदेः' इति दीर्घे 'आतो लोपः इत्याकारलोपे सति अतुरित्यादि प्रत्ययमात्रमेवावशिष्टं भवतीति । एवं 'णिश्रिद्रुस्रुभ्यः' इत्यनभिव्यक्तपदार्थत्वेनाचारक्विबन्तस्य दोर्ग्रहणाभावाच्चङभावाद् सिचि अद्रावीदिति भवति । भूरिवाचरति भवतीत्यत्र 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' 'भुवो वुग्लुङ्लिटोः' 'भवतेरः' इति विधीयमानसिज्लुग्वुगभ्यासात्वानामभावात् अभावात् । अभाविष्टाम् । अभाविषुः । बुभाव इत्यादि एव भवति ॥ पिबतेर्विचि पाः, तस्याचारक्विबन्तस्य 'पाघ्रा' इत्यादौ 'गातिस्था' इत्यादौ चाग्रहणात् पिबादेशसिज्लुकोरभावात् पाति, अपासीत् इति भवति । एवमन्यदप्युन्नेयं प्रतिपदोक्तेषु ।

पॄरिवाचरति परति । पपार । पपरतुः । पपरुः इत्यादि । अयं पॄशब्दोऽनुकरणं धात्वन्तरं न पुनः क्र्यादौ जुहोत्यादौ वा पठ्यमान इति पाठाश्रयः श्ना श्लुश्च न भवति । किति लिटि 'ऋच्छत्यॄताम्' इति ऋकारान्तलक्षणो गुणः । 'शॄदॄप्राम्' इति ह्रस्वविकल्पस्त्वनभिव्यक्तपदार्थत्वान्न भवति ॥ गम्लृ इवाचरति गमलयति । गमलाञ्चकार । प्रत्ययान्तत्वादामि ऋकारलृकारयोः सावर्ण्यात् 'उरण्रपरः' इति लपरो गुणः । ऋ इवाचरति अरति । अराञ्चकार । 'इजादेश्च गुरुमतः' इत्याम्प्रत्ययः । लृ इवाचरति अलति—पूर्ववद्गुणः । लिटि द्विर्वचनम्, लृवर्णसवर्णदीर्घाभावादुत्तरखण्डस्य यण्यभ्यासस्योरदत्वादेव लपरम्—आल । अलतुः । इत्यादि । परमहेरिवाचरति परमहयति । परमहयाञ्चकार । केवलात्त्वामभावात् जिहाय । लुङि सिचीट्यवादेशे हलन्तलक्षणा वृद्धिः 'नेटि' इति निषिध्यते । 'अतो हलादेः' इति वृद्धिविकल्पोऽपि ह्म्यन्तक्षणेति यान्तत्वान्निषिद्ध इति अपरमहयीदिति भवति । एकार इवाचरति अयति । लिटीजादिलक्षणे आमि अयाञ्चकार इति भवति । लुङि आटि आयीत् । अन्यदा पूर्ववद्धलन्तलक्षणाया वृद्धेः 'नेटि' इति निषेधात् मा भवानयीत् । गौरिवाचरति गवति । जुगाव । अगवीत्, अगावीत–'अतो हलादेः' इति वा वृद्धिः । ओकारवदाचरति अवति । अवाञ्चकार ।

लुङि हलन्तलक्षणाया वृद्धेः 'नेटि' इति निषेधात् मा भवानवीत् इति। परमरः इवाचरति परमरायति। परमरायाञ्चकार। रायति। रिराय। ऐकार इवाचरति आयति, आयाञ्चकार। परमनौरिवाचरति परमनावति। परमनावाञ्चकार। नावति। नुनाव। केवलादौकारात् आवति, आवाञ्चकार। गोधुगिवाचरति गोदुहति। य इवाचरति ययति। लिट्येकाच्त्वादामभावात् ययाय। लुङि सिचि यान्तत्वाद् वृद्ध्यभावात् आयीत्। द्यौरिवाचरति देवति। स्वरिवाचरति स्वरति। फलतीति फल्, फलिवाचरति फलति। अनयोर्लुङि 'अतो हलादेः' इति विकल्पापवादे 'अतो ल्रान्तस्य' इति नित्यं वृद्धौ अस्वारीत्, अफालीत् इति भवति। 'चरफलोश्च' इत्यत्र न्यासविस्तरयोः 'फलेर्णौ क्विपि फाल्, अयमप्येकदेशविकृतन्यायेन गृह्यत इति यङ्यङ्लुकोरभ्यासस्य नुकि पम्फाल्यते, अपम्फालीत्' इत्युक्तम्। तदेतत् 'उत्परस्यातः' इति तपकरणम् 'अतो हलादेः' इत्यादिवन्न केवलनिर्देशार्थमपि तु सवर्णग्रहणनिवृत्त्यर्थमपीत्याश्रयणेन; अन्यथा प्रतिपदोपादानेष्वभिव्यक्तपदार्थानामेव भाष्यादौ ग्रहणस्य स्थितत्वान्नैतद् युज्यते।

इदमिवाचरति इदामति—'अनुनासिकस्य क्वि' इति दीर्घः। अत्र झलादिक्विप् धातोरेव सम्भवतीति तत्साहचर्यात्क्विबपि धातुविहित एव गृह्यते इति नात्र क्वावयं दीर्घ इति केचित्, तन्न; अस्य क्विपः ककारस्यात्र सामान्यग्रहणमन्तरेण प्रयोजनाभावात्। यङिचरति याङिति। अणिवाचरति आणति। राजानति। ज्ञति। ककुमति। अघति। पढति। योधति। भिषजति। शम्वति। अङ्गति। पण्यति।

त्वदति। मदति—'प्रत्ययोत्तरपदयोश्च' इति त्वमौ। युवामिवाचरति, आवामिवाचरति, यूयमिवाचरति, वयमिवाचरति युष्मदति, अस्मदति—युष्मदस्मदोरनेकार्थत्वान्न त्वमौ, विभक्तिपरत्वाभावान्न युवावौ, नापि यूयवयौ। त्वामतिक्रान्तः अतित्वम्। एवम् अत्यहम्। क्वौ अतित्वदति, अतिमदति—'प्रत्ययोत्तरपदयोः' इति त्वमौ। युवां युष्मानतिक्रान्तः अतित्वम्, अत्यहम्—अत्र द्विवचनत्वे तदाश्रित्य युवावौ न भवतः; पराभ्यां त्वाहाभ्यां बाधात्। अत्र क्वावपि अतित्वदति। अतिमदति। मखति। कफति। तुच्छति। मठति। मन्थति। पटति। त्वचति। अन्तति। कङ्कति। अयति। येशति। षषति। पयसति। अत्र अप्रसिद्धा ये हलन्तास्तेषां कारितणौ टिलोपे 'णेरनिटि' इति णेश्च लोपे तद्धलन्तत्वं द्रष्टव्यम्॥

अथैतत् क्विबन्ताद्धातोः 'क्विप् च' इति कर्तरि क्वौ किञ्चिदुच्यते—

'यू स्त्र्याख्यौ नदी' इतीकारान्तमूकारान्तं च शब्दरूपं स्त्र्याख्यं नदीसंज्ञकमित्युक्तम्। तत्र कुमार्यादेरेतत्क्विबन्तात्कर्तरि क्वौ कुमारी ब्राह्मण इत्यादौ स्त्र्याख्यत्वाभावान्नदीसंज्ञा न प्राप्नोति। तत्रोच्यते—'प्रथमलिङ्गग्रहणं च' इति क्विब्लुक्समासैरन्यलिङ्गत्वेऽपि प्रथमलिङ्गाश्रया नदीसंज्ञा भवतीत्यर्थः। इह

प्रकृतत्वाल्लुप्समासौ न प्रदर्श्यते। एवं च कुमारी ब्राह्मणः इत्यादौ आचरति-वर्तमानस्य कुमार्यादेर्नदीसंज्ञायां 'हे कुमारि ब्राह्मण' इत्यादौ 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वो भवति। कुमार्यै ब्राह्मणाय इत्यादौ ङिद्वचने च 'आण्नद्याः' इत्याडागमः, 'ङेराम्नद्याम्नीभ्यः' इत्यामादेशः। कुमारीणां ब्राह्मणानाम् इत्यादौ 'ह्रस्वनद्यापः' इति नुड् भवति। एवं हे ब्रह्मबन्धु ब्राह्मण, ब्रह्मबन्धवे ब्राह्मणाय इत्यादौ ह्रस्वादि द्रष्टव्यम्। नदीत्वादेव बहवः कुमार्यो ब्राह्मणा यस्मिन् बहुकुमारीको देशः इत्यादौ 'नद्यृतश्च' इति कब् भवति। यत्पुनरिष्वशनिप्रभृतीनां ह्रस्वान्तानां स्त्र्याख्यानां श्रीभ्रूप्रभृतीनामियङुवङ्स्थानानां च 'ङिति ह्रस्वश्च' इति नदीसंज्ञाविकल्पनं तदेषामाचारक्विबन्तानां (पुल्लिङ्गानां) 'प्रथमलिङ्गग्रहणं च' इति न भवति। तथा च वार्त्तिकम्—'ह्रस्वेयङुवङ्स्थानप्रवृत्तौ च'। अत्र भाष्यम्—'ह्रस्वौ च इयङुवङ्स्थानौ प्रवृत्तौ च प्राक् प्रवृत्तेश्च स्त्रीवचनावेव नदीसंज्ञौ भवत इति वक्तव्यम्' इति। प्रवृत्तिः क्विबादीनाम्, तेनार्थान्तरसंक्रान्तिः। इषवे ब्राह्मणाय, अशनये ब्राह्मणाय, धेनवे ब्राह्मणाय, श्रिये ब्राह्मणाय, भ्रुवे ब्राह्मणाय—इत्यादौ नदीसंज्ञानिमित्तकार्यं न भवतीति। यत्र तु स्त्रीवचनं तत्र इष्वै ब्राह्मण्यै, इषवे ब्राह्मण्यै; अशन्यै ब्राह्मण्यै, अशनये ब्राह्मण्यै; धेन्वै ब्राह्मण्यै, धेनवे ब्राह्मण्यै; श्रियै ब्राह्मण्यै, श्रिये ब्राह्मण्यै; भ्रुवै ब्राह्मण्यै, भ्रुवे ब्राह्मण्यै इत्यादौ पक्षे घिसंज्ञानिबन्धनमपि भवति। यस्तु 'अपर आह—ह्रस्वौ चेयङुवङ्स्थानौ च प्रवृत्तौ च प्राक् प्रवृत्तेश्च स्त्रीवचन एव नदीसंज्ञौ भवत इति वक्तव्यम्' इत्यत्र क्वचिद्भाष्यकोशेष्वस्त्रीवचन एव नदीसंज्ञौ भवतः इत्यकारप्रश्लेषेण पाठः, सोऽपपाठ इति कैयटे उक्तम्। एवं कुमारीमिच्छति कुमारीयतीत्यादेः कावल्लोपयोः कुमारी ब्राह्मण इत्यादौ ङिद्वचनेषु कुमार्यै ब्राह्मणायेत्यादि द्रष्टव्यम्।

इदमपरं क्वौ कार्यं विचार्यते—

युष्मदस्मदोर्युष्मानाचष्टे अस्मानाचष्टे इति णौ टिलोपे णेश्च लोपेऽनेकार्थत्वेन 'प्रत्ययोत्तरपदयोश्च' इति त्वमयोरभावाद्युष्म् अस्म् इति मान्ते युष्मदस्मदी भवतः। तत्र तु कृदन्तत्वाद्विभक्तिष्वेकदेशविकृतस्यानन्यत्वाद्युष्मदस्मदाश्रया विभक्त्यादेशाः प्रकृत्यादेशाश्च त्वादयो भवन्तीत्येके। तन्मते 'यूयवयौ [illegible]', 'त्वाहौ सौ' 'तुभ्यमह्यौ ङयि', 'तवममौ ङसि' इति योगचतुष्टयविषये प्रकृतेर्यूयादयो भवन्ति। तथा 'युष्मदस्मद्भ्यां ङसोऽश्', 'ङे प्रथमयोरम्', 'शसो न', 'भ्यसोऽभ्यम्', 'पञ्चम्या अत्', 'एकवचनस्य च', 'साम आकम्' इति योगसप्तकविहिता विभक्त्यादेशाश्च भवन्ति। एवम् 'युष्मदस्मदोरनादेशे', 'द्वितीयायाञ्च' 'प्रथमायाश्च द्विवचने भाषायाम्' इत्यात्वम्, 'योऽचि' इति यत्वम्, 'शेषे लोपः' इत्यन्तलोपश्च यथायोगं भवति। अत्र 'युष्मदस्मदोरनादेशे' इत्यात्वम् 'योऽचि' इत्यजादौ यत्वविधानञ्चापवादोऽवशिष्यते। अथ रूपाणि—

त्वम्, अहम्। युष्माम्, अस्माम्—विभक्तिपरत्वेऽपि युवावौ प्रकृत्योर्द्व्यर्थत्वाभावान्न भवतः। यूयम्, वयम्। युषाम्, असाम्। युष्मान्, अस्मान्। युष्या, अस्या। युषाभ्याम्, असाभ्याम्। युषाभिः, असाभिः। तुभ्यम्, मह्यम्। युषाभ्याम्, असाभ्याम्। युषभ्यम्, असभ्यम्—'भ्यसोऽभ्यम्' इति अभ्यमादेशपक्षे इदं रूपम्। अन्यदा शेषेलोपे पदकार्ये जश्त्वादौ युड्भ्यम् अड्भ्यमिति भाव्यम्। युषत्, असत्। तव, मम। युष्योः, अस्योः। युषाकम्, असाकम्। युष्यि, अस्यि। युष्योः, अस्योः। युषासु, असासु॥ युवामाचष्टे आवामाचष्टे इति णौ क्वौ णेश्च लोपे विभक्तौ पूर्ववत् 'प्रत्ययोत्तरपदयोश्च' इति त्वमयोः युष्मदस्मदोरेकार्थत्वाभावादभावः, अस्ति द्व्यर्थत्वं विभक्तिपरत्वं चेति युवावौ भवतः। तत्र 'यूयवयौ जसि' इत्यादियोगचतुष्टयविषये परत्वाद्यूयवयादयो भवन्ति। अत्र रूपाणि—त्वम्, अहम्। युवाम्, आवाम्। यूयम्, वयम्। युवान्, आवान्। युवया, आवया। युवाभ्याम्, आवाभ्याम्। युवाभिः, आवाभिः। तुभ्यम्, मह्यम्। युवाभ्याम्, आवाभ्याम्। युवत्, आवत्। युवाभ्याम्, आवाभ्याम्। युवद्, आवत्। तव, मम। युवयोः, आवयोः। युवाकम्, आवाकम्। युवयि, आवयि। युवयोः, आवयोः। युवासु, आवासु। विभक्त्यादेशादि पूर्ववत्॥ त्वामाचष्टे मामाचष्टे इति णौ 'प्रत्ययोत्तरपदयोश्च' इति त्वमयोः 'प्रकृत्यैकाच्' इति प्रकृतिभावाट्टिलोपाभावे णेश्च क्वौ लोपे त्वाद् माद् इति भवतः। अङ्गवृत्तपरिभाषया वृद्धिर्नेति वादिनां त्वद् मद् इति भवतः। तत्र विभक्तिषु मपर्यन्तत्वाभावाद्यूयादयो न भवन्ति। तत्र रूपाणि—आदितः पञ्चसु वचनेषु त्वाम् माम् इति। वृद्धिर्नेतिवादिनां सुजसोः शेषेलोपेन दकारलोपे त्वम्, मम् इति भवतः। त्वान्, मान्। त्वाया, माया। अवृद्धिपक्षे—त्वया, मया। त्वाभ्याम्, माभ्याम्। त्वाभिः, माभिः। एवं 'ङे प्रथमयोरम्' इत्यमि शेषेलोपे 'आतो धातोः' इत्याकारलोपः। त्वाम्, माम्। त्वाभ्याम्, मांभ्याम्। भ्यमादेशे पूर्ववच्छेषेलोपे त्वाभ्यम्, माभ्यम् इति भवति। पूर्ववल्लोपे, अभ्यमादेशपक्षे आल्लोपे च त्वभ्यम्, मभ्यम् इति भवति। अवृद्धिपक्षे शेषेलोपे त्वभ्यम्, मभ्यम्। अङ्गवृत्तपरिभाषया 'बहुवचने झल्येत्' इत्येत्वं न भवति। त्वत्, मत्—पूर्ववच्छेषेलोपाल्लोपौ। त्वाभ्याम्, माभ्याम्। त्वत्, मत्। त्व, म—पूर्ववच्छेषेलोपाल्लोपौ। त्वायोः, मायोः। अवृद्धिपक्षे त्वयोः, मयोः। त्वाकम्, माकम्। त्वायि, मायि। त्वायोः, मायोः। अवृद्धिपक्षे—त्वयि, मयि इत्यादि। त्वासु, मासु। अत्र येषां दर्शनम् 'णौ त्वमयोः परपूर्वत्वात् पूर्वमनेकाच्त्वेन टिलोपे वृद्धौ पुकि क्वौ णेर्लोपे त्वापि मापि इति भवतः' इति, तेषामपि पूर्ववत् शेषेलोपादिषु वृद्धिपक्षे यानि रूपाणि तानि द्रष्टव्यानि। ननु युष्मदस्मदोर्मान्तत्वे कथं यूयादयः प्रदर्शिताः, यतस्ते 'मपर्यन्तस्य' इत्यधिकारे विधीयन्ते, 'मपर्यन्तस्य' इति च युष्मदस्मद्भ्यां वैयधिकरण्येन सम्बध्यते,

'व्यपदेशिवद्भावश्चाप्रातिपदिकेन' इति प्रतिषिध्यते; अवश्यं चैतदेवं विज्ञेयम्, सामानाधिकरण्येन सम्बन्धे मान्तयोरादेशप्रसङ्गात्; उच्यते, अत्र मान्तस्येति वचनेनाप्युक्तेऽर्थे सिद्धे परिग्रहणसामर्थ्यात् अप्रातिपदिकेनेत्यस्याप्रवृत्तेः, व्यपदेशिवद्भावसिद्धेः। अपरे पुनराहुः—'सति शेषे पर्यन्तशब्दो वर्तते, तेन मान्तयोः युष्मदस्मदोर्यूयाद्यादेशेन न भवितव्यम्' इति, तन्मते पूर्वं 'यूयवयौ जसि' इत्यादियोगचतुष्टयस्याप्रवृत्तेर्यूयवयाद्यादेशाभावः। तत्र रूपाणि—युषम्, असम्—'ङे प्रथमयोरम्' इत्यमि 'शेषे लोपः' इत्यन्तलोपः। सुजसोर्द्विवचने तु 'प्रथमायाश्च द्विवचने' इत्यात्वम्—युषाम्, असाम्। चतुर्थ्येकवचने तुभ्यमह्यादेशाभावात् 'ङे प्रथमयोरम्' इत्यमि शेषेलोपे—युषम्, असम्। षष्ठ्येकवचने 'युष्मदस्मद्भ्यां ङसोऽश्' इति अशादेशे 'तवममौ ङसि' इति तवममयोरभावे शेषेलोपे युष्, अस् इति भवति। इदं च शेषेलोपप्रदर्शनं 'शेषे लोपः' इत्यस्य शेषे विभक्तौ पर इत्यर्थपक्षे। यदा तु 'मात् परत्वं शेषत्वम्' इति पक्षस्तदा शेषेलोपाभावान्मकारस्य श्रवणं भवतीति युष्मम् अस्मम् इत्यादि भवति।

इति श्रीसायणेन विरचितेयं
प्रत्ययान्तनामधातुवृत्तिः समाप्ता।

❀ शुभं भवतु ❀



❋ समाप्तोऽयं ग्रन्थः ❋

# प्रथमं परिशिष्टम्

## ग्रन्थाश्च ग्रन्थकर्तारः सायणेन स्मृता इमे

—○○○—

# द्वितीयं परिशिष्टम्

इमे सायणव्याख्याता धातवः साक्षरक्रमाः ।
धातुरर्थः पाठभेदः गणः सूत्रं क्रमादिह ॥

१. 'स्थुड' इत्युचितः पाठः ।

---

# तृतीयं परिशिष्टम्

## धातुवृत्ताविमे तावद्व्याख्याताः सौत्रधातवः

# चतुर्थं परिशिष्टम्

## इमे वर्णक्रमेणेह कण्ड्वादिगणधातवः

| | |
|---|---|
| अगद् नीरोगत्वे | ३४ |
| अम्बर् प्रभूतभावे [पा] | ३६ |
| अररु क्रूरकर्मणि | १६ |
| असु उपतापे | ४ |
| इरज् ईर्ष्यायाम् [पा] | ६ |
| इरञ् ईर्ष्यायाम् | ६ |
| इरञ् दीप्तौ [पा] | ६ |
| इरञ् मार्गोपस्थापनार्थे [पा] | ६ |
| इयस् ऐश्वर्ये | ७ |
| इरस् ईर्ष्यायाम् [पा] | ६ |
| इषुध शरधारणे | १६ |
| उरस् बलार्थः | ३६ |
| उषस् प्रभातभावे | ८ |
| एला विलासे | २५ |
| कण्डूय गात्रविघर्षणे | १ |
| कुषुभ क्षेपे | ११ |
| केला विलासे | २५ |
| खेला विलासे | २५ |
| खेला सत्त्वचलने च [पा] | ३५ |
| गद्गद् वाक्स्खलने | २४ |
| चरण गतौ | २० |
| चुरण चौर्ये | २१ |
| तन्तस् दुःखे | १३ |
| तिरस् अन्तर्धौ | ३३ |
| तिषज् उपसेवायाम् | १८ |
| तुरण त्वरायाम् | २२ |
| दुःख तत्क्रियायाम् | १४ |
| द्रवस् परितापपरिचरणयोः | ३१ |
| पम्पस् दुःखे | १३ |
| पूर्व भावे स्वप्ने च [पा] | ५ |
| भिषज् चिकित्सायाम् | १७ |
| भुरण धारणपोषणयोः | २३ |
| मगध नीचदास्ये [पा] | १२ |
| मगध परिवेष्टने | १२ |
| मनस् उपतापे | ४ |
| मन्तु अपराधे | २ |
| महीङ् पूजायाम् | ३० |
| मेधा आशुग्रहणे | १० |
| रेखा श्लाघासादनयोः | ३१ |
| लाट् जीवने | २८ |
| लिट् अल्पार्थे कुत्सायां च | २७ |
| लेख स्खलने च [पा] | २६ |
| लेखा | ३५ |
| लेखा स्खलने च | २६ |
| लेट प्रभूतभावे [पा] | ३६ |
| लेट् धौर्त्ये पूर्वभावे स्वप्ने च | ५ |
| लेला दीप्तौ [पा] | ५ |
| लोट प्रभूतभावे [पा] | ३६ |
| लोट् धौर्त्ये पूर्वभावे स्वप्ने च | ५ |
| वरण गतौ [पा] | २० |
| वल्गु पूजामाधुर्ययोः | ३ |
| वेद धौर्त्ये स्वप्ने प्रभाते च | ९ |
| सपर पूजायाम् | १५ |
| सम्बर् प्रभूतभावे [पा] | ३६ |
| सम्भूयस् प्रभूतभावे | ३६ |
| सुख तत्क्रियायाम् | १४ |
| हृणीङ् रोषणे लज्जायां च | २९ |

# पञ्चमं परिशिष्टम्

## सूचीयं नामधातूनां सहिता पृष्ठसङ्ख्यया

## एवमेव णिजन्तानां धातूनां गणिरुच्यते

सायणाचार्यसम्पुष्टां धातुवृत्तिमिमां शुभाम् ।
स्वामी श्रीद्वारिकादासः पर्यस्कार्षीत् सतां मुदे ॥

